# GOBHILAGṚHYASŪTRAM

with Bhaṭṭanārāyaṇa's commentary

# गोभिलगृह्यसूत्रम्

श्रीचिन्तामणि भट्टाचार्येण

संस्कृतम्

*Critically edited from original manuscripts*

*with notes and indices*

*By*

**Chintamani Bhattacharya**

Kavyatirtha-Sankhyaratna-Nyaya-Sahityacharya

*with an introduction by*

Vanamali Vedantatirtha



**Munshiram Manoharlal**
**Publishers Pvt. Ltd.**

# PREFACE

*Gobhilagṛhyasūtram* has been published more than once with different modern commentaries (e. g., Bengal Editions by Chandrakanta Tarkalankara, Satyavrata Samasramin, Dayalakrishna Tarkatirtha, Sylhet ) but the Bhāṣya of Bhaṭṭa Nārāyaṇa ( or Nārāyaṇa Bhaṭṭa ) was never attempted by anybody for publication. The present edition of the Sūtra is published with the Bhāṣya of Bhaṭṭa Nārāyaṇa, critically edited with exhaustive notes giving a comparative study of all the Gṛhyasūtras, Dharmasūtras, Dharmasaṃhitās, Smṛtinibandhas ( of Raghunandana and others ), etc. The curious reader will find here practically everything ritual and sacramental. Every sūtra has been traced to the text of the *Mantrabrāhmaṇa* with explanation. Almost all the references of the *sūtra* and the *bhāṣya* have been traced out. The editor has, thus, spared no pains to make the work a useful one.

Bhaṭṭa Nārāyaṇa belonged to Bengal. His ancestors came from Sravasti, Kanauj and settled in Bengal (vide, the article, *Kāmarūpaśāsanāvalī* by Mahendrachandra Kavyatirtha-Sankhyarnava, in "Bangasree", Bhādra, 1340 B. E.). He came of a vatsagotrīya brahmin family (p. 918). He found two other commentaries on *Gobhila-Gṛ.*, one by Valgusoma (p. 340) and the other by Ajātaśatru (p. 385). He mentions the name of *Khaṇḍakhādya* and *Brahmasiddhānta* (p. 176), two books on Astronomy by Brahmagupta. Thus, he lived after Brahmagupta, to be sure.

It should be noted in this connection that Bhaṭṭa Nārāyaṇa, the commentator of *Gobhila-Gṛ.* was not the same as the ancestor of the Rāḍhīya and Bārendra Śāṇḍilyagotrīya brahmins of Bengal as he was not a Śāṇḍilya. He might or might not be the author of *Veṇīsaṃhāra*. He lived after Brahmagupta, the famous astronomer, but it is not known whether he lived before or after the author of *Veṇīsaṃhāra*.

The present edition of Bhaṭṭa Nārāyaṇa's Bhāṣya is based on the following manuscripts :

*Ka*—Cat. No. 1297, Govt. Collection, A. S. B.—Sections ( प्रपाठक ) I-II, गोभिलगृह्यभाष्यम्—a commentary on the गोभिलगृह्यसूत्र by Nārāyaṇa, a son of Mahabala.

Substance—country-made paper, 11¼, 10½ × 5 inches, folio 1st part 58 ; 2nd from 21 to 85 written in a different hand and at a different time. Extent of the work—ślokas 4815 as stated at the end of the manuscript. Appearance—old, generally correct, complete (but 2nd प्रपाठक is twice repeated owing to ill-adjustment of the two different Mss.).

For description of the work, C. L. 1967.

*Gha*—Sections II-III of the above.

*Kha*—No. 10587—The same in four batches of leaves, (complete)—

(1) Substance—country-made paper, 8½ × 3¾ in. folio 34, lines 13—15 on a page. Character—Nāgara of the 15th century. Appearance—old and repaired.

(2) Substance—foolscape paper, 9½ × 4 in. folio 61 of which the first is missing—lines 6 on a page. Character—modern Nāgara. Appearance—fresh, folio 2. इति गृह्यभाष्ये प्रथमप्रपाठकस्य नवमी कण्डिका ; folio 69 B. इति द्वितीयप्रपाठकस्य सप्तमी कण्डिका. The Ms. ends abruptly.

(3) Substance—country-made paper, 10×4 in. folio 139—337 of which four are missing—lines 8 on a page. Character—Nāgara of the 14th century. Appearance—very old and repaired from ᵖ/ₖ/₂/₈ to the end. 146 B. इति द्वितीयस्य अष्टमी कण्डिका ।

(4) Substance—country-made paper, 10×4 in. folio 7. 1st 6 leaves are marked both 1—6 and 333—338. The 7th is written in a different hand containing the concluding portion. The 6th ends abruptly. The last leaf, however, begins in the 1st line of 6 B. and goes to the end of the Ms.

Cp. Cat. of Mss. *Govt. Collection*, Asiatic Society of Bengal, Calcutta.

*Ga*—Sections I and II only (bound book), Cat. No. II. B. 33, belonging to the Asiatic Society of Bengal, Calcutta.

We are specially thankful to the Secretary, Asiatic Society of Bengal for his kindly lending us these manuscripts.

The whole work is planned in two volumes :

(1) The complete text of *Gobhila-Gṛ.* with the Bhāṣya of Bhaṭṭa Nārāyaṇa, notes, sūtrapāṭha (including Śraddhakalpa, Sandhyā and Snāna-sūtras) and preface.

(2) Introduction and miscellaneous indices.

Most cordial thanks are due to Prof. Vanamali Vedantatirtha, M. A., late of the Assam Education Service, who has kindly written an excellent Introduction to this important work, which has made this a unique edition.

We shall be failing in our duty, if we do not express our heartiest thanks to Dr. Amareswar Thakur of the Calcutta University and formerly General Editor of the Series, who did much for the publication of this work.

Finally, we may hope that the readers will excuse us for any imperfection, they may notice and specially for misprints that have crept in.

Calcutta
March, 1936 } Narendra Chandra Bhattacharya

# निवेदनम्

परमकारुणिकस्य भगवतः श्रीमतो नारायणस्य चरणारविन्दप्रसादात् तत्रभवतो दिगन्त-विश्रान्तयशसो भट्टनारायणस्य कृतिरिदं श्रीमद्गोभिलाचार्यकृत-गृह्यसूत्र-भाष्यं मुद्रयित्वा प्राकाश्यं नीयते। भाष्यमिदं गभीरभावानुबन्धिशब्दै रचितमिति केषुचित् स्थानेषु व्याख्या दत्ता। निबन्धकारमुख्यै रघुनन्दनादिभिः स्वेषु निबन्धेषु अनेकत्रैव एतद्भाष्यसन्दर्भः प्रमाणत्वेनोद्धृत इत्यपि तत्तद्ग्रन्थसन्दर्भमुद्धृत्यासकृत् प्रमाणीकृतम्। धर्मशास्त्रधुरन्धरेण रघुनन्दनेन पुनरे-तन्मतमवलम्ब्य सरलाभवदेवभट्टयोर्मतं बहुशो निरस्तमिति भाष्यस्यास्य महाजनपरिगृहीतत्व-मसाधारणत्वं च ख्यापयति।

यदपि पण्डितप्रकाण्डेन महामहोपाध्यायेन श्रीमता चन्द्रकान्ततर्कालङ्कारेण भाष्यमिदं त्रिपताककरेणापवार्य भाष्यान्तरं रचितं, भाष्येऽस्मिन्नन्तराऽन्तरा दोषोद्भावनञ्च कृतं, तदपि तादृशानां दीर्घदर्शिनां दोषैकदर्शित्वमेव प्रतिपादयति, भाष्यस्यास्य गुरुत्वमुपादेयत्वञ्चोपपादयति; न पुनरयथा हेयत्वमिति तत्र तत्र भाष्यमतसंरक्षणे कृतः प्रयत्नो भवद्भिः पाण्डित्यनिकष-पाषाणैर्मन्निवेशितटिप्पन्यामनुसन्धेयः। एतदेव प्रायो मुख्यं कारणं भाष्यस्यास्य मुद्रणे यत् सामवेदीय-कौथुम-राणायनीय-शाखाध्यायिनां ब्राह्मणानां गृह्यकर्माणि सत्यपि प्रामाणिके भट्टभाष्ये [ मुद्रापितग्रन्थाभावादेवानुपलभ्यमानतया नवनिर्मिततर्कालङ्कारभाष्यस्य च प्रायशः क्वचिद्-गृहीतभट्टभाष्यमततया ] यदि विकृतानि स्युस्तदा हता वयं हतञ्च गृह्यानुष्ठानमिति खिन्नानां जिज्ञासूनां सविधे ग्रन्थस्यास्योपन्यासेन यदि तेषां लेशतोऽप्युपकारः स्यादिति।

भाष्येऽस्मिन् निबद्धानां शास्त्रप्रमाणानां वेदमन्त्राणाञ्च यथासम्भवमाकरस्थानादिनिर्देश-पूर्वं तेषां व्याख्यानं पाठान्तरादिकञ्च समुपस्थापयितुं कृतः श्रमः। सर्वेष्वेव गृह्यकर्मसु प्रायः सर्वेषामेव गृह्यसूत्राणामुपन्यासः कृतः। प्रायशो वङ्गदेशेष्वप्रसिद्धानां गृह्यकर्मणामनुष्ठानपद्धतिरपि निबन्धान्तरेभ्यः संगृह्य प्रदर्शिता।

विषयेष्वेषु विस्तृतसमालोचनमुपस्थापयितुमीहा वर्त्तते द्वितीयखण्डमुद्रणावसरे—यदि तावत्कालमस्मान् भगवान् भूतभावनो निरुपद्रवानविकलांश्च संरक्षेत्।

ग्रन्थेऽस्मिन् दैवदुर्विपाकादस्मद्दृष्टिविषयवर्तिनी त्रुटिर्वर्त्तते। सा तु द्वितीयखण्डावसरे प्रदर्शयिष्यते। यत् पुनरस्माभिरननुभूतमसंभाव्यं च स्खलनमत्र तद् भवद्भिः क्षन्तव्यं ज्ञापयितव्यं च कृपयेति सविश्रम्भं निवेदयति—

भवतामनूचानानां विधेयः—

श्रीचिन्तामणि-देवशर्मा

# गोभिलीयगृह्यसूत्रपाठः

## प्रथमप्रपाठकस्य

### [ प्रथमकण्डिकायाम् ]

१ । अथातो गृह्यकर्माण्युपदेक्ष्यामः ।

२ । यज्ञोपवीतिनाचान्तोदकेन कृत्यम् ।

३ । उदगयने पूर्वपक्षे पुण्येऽहनि प्रागावर्तनादह्नः कालं विद्यात् ।

४ । यथादेशञ्च ।

५ । सर्वाण्येवान्वाहार्यवन्ति ।

६ । अपवर्गेऽभिरूपभोजनं यथाशक्ति ।

७ । ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन् ।

८ । जायाया वा पाणिं जिघृक्षन् ।

९ । अनुगुप्ता अप आहृत्य, प्रागुदक्प्रवणं देशं समं वा परिसमुह्योपलिप्य मध्यतः प्राचीं लेखामुल्लिख्योदीचीञ्च संहतां पश्चान्मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत् ।

१० । लक्षणावृदेषा सर्वत्र ।

११ । भूर्भुवः स्वरित्यभिमुखमग्निं प्रणयन्ति ।

१२ । प्रेते वा गृहपतौ परमेष्ठिकरणम् ।

१३ । तथा तिथिनक्षत्रपर्वसमवाये ।

१४ । दर्शे वा पौर्णमासे वाऽग्निसमाधानं कुर्वीत ।

१५ । वैश्यकुलाद् वाऽम्बरीषाद् वाऽग्निमाहृत्याभ्यादध्यात् ।

१६ । अपि वा बहुयाजिन एवाऽऽगाराद् ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्य वा ।

१७ । अपि वाऽन्यं मथित्वाऽभ्यादध्यात् ।

१८ । पुण्यस्त्वेवाऽनर्द्धुको भवतीति ।

१९ । यथा कामयेत तथा कुर्यात् ।

२० । स यदेवान्त्यां समिधमभ्यादधाति, जायाया वा पाणिं जिघृक्षन् जुहोति तमभिसंयच्छेत् ।

२१ । स एवास्य गृह्योऽग्निर्भवति ।

२२ । तेन चैवास्य प्रातराहुतिर्हुता भवतीति ।

२३ । सायमाहुत्युपक्रम एवात ऊर्द्ध्वं गृह्येऽग्नौ होमो विधीयते ।

२४ । पुरा प्रादुष्करणवेलायाः सायं प्रातरनुगुप्ता अप आहरेत् परिचरणीयाः ।

२५ । अपि वा सायम् ।

२६ । अपि वा कुम्भाद् वा मणिकाद्वा गृह्णीयात् ।

२७ । पुराऽस्तमयादग्निं प्रादुष्कृत्यास्तमिते सायमाहुतिं जुहुयात् ।

२८ । पुरोदयात् प्रातः प्रादुष्कृत्योदितेऽनुदिते वा प्रातराहुतिं जुहुयात् ।

### [ द्वितीयकण्डिकायाम् ]

१ । यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव ।

२ । दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽंसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति ।

३ । सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणे-

ऽंसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति ।
४ । पितृयज्ञे त्वेव प्राचीनावीती भवति ।
५ । उदङ्मेत्यसुत्य प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेत् द्विः परिमृजीत ।
६ । पादावभ्युक्ष्य शिरोऽभ्युक्षेत् ।
७ । इन्द्रियाण्यद्भिः संस्पृशेत् ।
८ । अक्षिणी नासिके कर्णाविति ।
९ । यद् यद् मीमांस्यं स्यात् तत् तदद्भिः संस्पृशेत् ।
१० । तत्रैतदाहुः ।
११ । नोपस्पृशेद् व्रजन् ।
१२ । न तिष्ठन् ।
१३ । न हसन् ।
१४ । न विलोकयन् ।
१५ । नाऽप्रणतः ।
१६ । नाङ्गुलीभिः ।
१७ । नातीर्थेन ।
१८ । न सशब्दम् ।
१९ । नानवेक्षितम् ।
२० । न बाह्यांशः ।
२१ । नान्तरीयैकदेशस्य कल्पयित्वोत्तरीयताम् ।
२२ । नोष्णाभिः ।
२३ । न सफेनाभिः ।
२४ । न च सोपानत्कः क्वचित् ।
२५ । कासक्तिकः ।
२६ । गले बद्धः ।
२७ । चरणौ न प्रसार्य च ।
२८ । अन्ततः प्रत्युपस्पृश्य शुचिर्भवति ।
२९ । हृदयस्पृशस्त्वेवाप आचामेत् ।
३० । उच्छिष्टो हैवातोऽन्यथा भवतीति ।
३१ । अथ प्रत्युपस्पर्शनानि ।
३२ । सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा विपरिधाय च रथ्यामाक्रम्य श्मशानञ्चाऽऽचान्तः पुनराचामेत् ।

[ तृतीयकण्डिकायाम् ]

१ । अग्निमुपसमाधाय परिसमुह्य दक्षिणजान्वक्तो दक्षिणेनाग्निम् 'अदितेऽनुमन्यस्वे'त्युदकाञ्जलिं प्रसिञ्चेत् ।
२ । 'अनुमतेऽनुमन्यस्वे'ति पश्चात् ।
३ । 'सरस्वत्यनुमन्यस्वे'त्युत्तरतः ।
४ । 'देव सवितः प्रसुवे'ति प्रदक्षिणमग्निं पर्युक्षेत् सकृद् वा त्रिर्वा ।
५ । पर्युक्षणान्तान् व्यतिहरन्नभिपर्युक्षन् होमीयम् ।
६ । अथ हविष्यस्यान्नस्याग्नौ जुहुयात् कृतस्य वाऽकृतस्य वा ।
७ । अकृतं चेत् प्रक्षाल्य जुहुयात् प्रोदकं कृत्वा ।
८ । अथ यदि दधि पयो यवागूं वा ।
९ । कंसेन वा चरुस्थाल्या वा स्रुवेण वैव ।
१० । अग्नये स्वाहेति पूर्वां तूष्णीमुत्तरां मध्ये चापराजितायाञ्च दिशीति सायम् ।
११ । अथ प्रातः सूर्याय स्वाहेति पूर्वां तूष्णीमेवोत्तरां मध्ये चैवापराजितायाञ्चैव दिशि ।
१२ । समिधमाधायानुपर्युक्ष्य तथैवोदकाञ्जलीन् प्रसिञ्चेदन्वमंस्था' इति मन्त्रविशेषः ।
१३ । प्रदक्षिणमग्निं परिक्रम्यापां शेषं निनीय पूरयित्वाचमनं प्रतिष्ठाप्य यथार्थम् ।

१४ । एवमत ऊर्ध्वं गृह्येऽग्नौ जुहुयाद् वा हावयेद् वा आ जीवितावभृथात् ।

१५ । अथाप्युदाहरन्ति ।

१६ । कामं गृह्येऽग्नौ पत्नी जुहुयात् सायंप्रातर्होमौ गृहाः पत्नी गृह्य एषोऽग्निर्भवतीति ।

१७ । निष्ठिते सायमाशप्रातराशे भूतमिति प्रवाचयेत् ।

१८ । ऋते भगया वाचा शुचिर्भूत्वा ।

१९ । प्रतिजपत्योमित्युक्त्वैतस्मै नमस्तन्माक्षा इत्युपांशु ।

[ चतुर्थकण्डिकायाम् ]

१ । अथ वाग्यतो बलीन् हरेत् ।

२ । भाषेतान्नसंसिद्धिमतिथिभिः कामं सम्भाषेत ।

३ । अथ हविष्यस्यान्नस्योद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्याग्नौ जुहुयात् तूष्णीं पाणिनैव ।

४ । प्राजापत्या पूर्वाहुतिर्भवति सौविष्टकृत्युत्तरा ।

५ । अथ बलीन् हरेद् बाह्यतोऽन्तर्वा सभूमिं कृत्वा ।

६ । सकृदपो निनीय चतुरो बलिं निदध्यात् सकृदन्ततः परिषिञ्चेत् ।

७ । एकैकं वाऽनुनिधानमुभयतः परिषिञ्चेत् ।

८ । स यत्र प्रथमं निदधाति स पार्थिवो बलिर्भवत्यथ यद् द्वितीयं स वायव्यो यत् तृतीयं स वैश्वदेवो यच्चतुर्थं स प्राजापत्यः ।

९ । अथापरान् बलीन् हरेत् उदधानस्य मध्यमस्य द्वारस्याग्नेयदैवतः प्रथमो बलिर्भवत्योषधिवनस्पतिभ्यो द्वितीय आकाशाय तृतीयः ।

१० । अथापरं बलिं हरेच्छयनं वाऽधिवर्चं वा स कामाय वा बलिर्भवति मन्यवे वा

११ । अथ संस्तूपे स रक्षोजनेभ्यः ।

१२ । अथैतद् बलिशेषमद्भिरभ्यासिच्यावसलवि दक्षिणा निनयेत् तत् पितृभ्यो भवति ।

१३ । आसीन एवाग्नौ जुहुयात्, आसीनः पितृभ्यो दद्यात् ।

१४ । यथोपपादमितरान् ।

१५ । स्वयं त्वेवैतान् यावद् वसेद् बलीन् हरेत् ।

१६ । अपि वाऽन्यो ब्राह्मणः-।

१७ । दम्पती एव ।

१८ । इति गृहमेधिव्रतम् ।

१९ । स्त्री ह सायं प्रातः पुमानिति ।

२० । सर्वस्य त्वेवान्नस्यैतान् बलीन् हरेत् पित्र्यस्य वा स्वस्त्ययनस्य वाऽर्थार्थस्य वा ।

२१ । यज्ञादेव निवर्तते ।

२२ । यद्येकस्मिन् काले व्रीहियवौ प्रक्रियेतामन्यतरस्य कृत्वा कृतं मन्येत ।

२३ । यद्येकस्मिन् काले पुनः पुनरन्नं पच्येत सकृदेवैतद् बलितन्त्रं कुर्वीत ।

२४ । यद्येकस्मिन् कुले बहुधाऽन्नं पच्येत गृहपतिमहानसादेवैतद् बलितन्त्रं कुर्वीत ।

२५ । यस्य त्वेषामग्रतः सिध्येत्, नियुक्तमग्नौ कृत्वाऽग्रं ब्राह्मणाय दत्त्वा भुञ्जीत ।

२६ । यस्यो जघन्यं भुञ्जीतैवेति ।

२७ । अथाप्युदाहरन्ति । एतस्यैव बलिहरणस्यान्ते कामं प्रब्रुवीत भवति है वास्य ।

११ । बहुलमयुग्मसंहतम् ।

१२ । प्रागग्रैरग्रैर्मूलानि च्छादयन् ।

१३ पश्चात् वास्तीर्य दक्षिणतः प्राञ्चं प्रकर्षति तथोत्तरेण दक्षिणोत्तराण्यग्राणि कुर्यात् ।

१४ । एष परिस्तरणन्यायः सर्वेष्वाहुतिमत्सु ।

१५ । परिधीनप्येके कुर्वन्ति शामीलान् पार्णान् वा ।

१६ । उत्तरतोऽपां पूर्णः स्रुवः प्रणीताः ।

१७ । भावे न वा स्यादित्येके ।

१८ । बर्हिषि स्थालीपाकमासाद्येध्ममभ्याधायाऽऽज्यं संस्कुरुते, सर्पिस्तैलं दधि पयो यवागूं वा ।

१९ । तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते ।

२० । ओषधिमन्तर्धाय छिनत्ति न नखेन 'पवित्रे स्थो वैष्णव्या'विति ।

२१ । अथैने अद्भिरनुमार्ष्टि 'विष्णोर्मनसा पूते स्थः' इति ।

२२ । सम्पूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम् ।

२३ । अङ्गुष्ठाभ्यां चोपकनिष्ठिकाभ्यां चाङ्गुलिभ्यामभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति, 'देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरि'ति सकृद् यजुषा द्विस्तूष्णीम् ।

२४ । अथैनं अद्भिरभ्युक्ष्याग्नावप्यर्जयेत ।

२५ । अथैतदाज्यमधिश्रित्योदगुद्वासयेत् ।

२६ । एवमाज्यस्य संस्करणकल्पो भवतीति ।

[ अष्टमकण्डिकायाम् ]

१ । पूर्वमाज्यमपरः स्थालीपाकः ।

२ । पर्युक्ष्य स्थालीपाक आज्यमानीय मेक्षणेनोपघातं होतुमेवोपक्रमते ।

३ । यद्यु वा उपस्तीर्णाभिघारितं जुहुयात् ।

४ । आज्यभागावेव प्रथमौ जुहुयात् ।

५ । चतुर्गृहीतमाज्यं गृहीत्वा पश्चादस्तन्तु स्रुचा 'मग्नये स्वाहे'त्युत्तरतः 'सोमाय स्वाहे'ति दक्षिणतः प्राक्शो जुहुयात् ।

६ । अथ हविष उपस्तीर्यावद्यति ।

७ । मध्यात् पूर्वार्धात् चतुरवत्ती चेद् भवति मध्यात् पूर्वार्धात् पश्चार्धादिति पञ्चावत्ती चेद् भवति ।

८ । अभिघारयत्यवदानानि प्रत्यनक्त्यवदानस्थानान्ययातयामतायै ।

९ । अग्नये स्वाहेति मध्ये जुहुयात् सकृद् वा त्रिर्वैतेनैव कल्पेन ।

१० । अथ स्विष्टकृत उपस्तीर्यावद्यत्युत्तरार्धपूर्वार्धात् सकृदेव भूयिष्ठं द्विरभिघारयेत् ।

११ । यद्यु पञ्चावत्ती स्याद् द्विरुपस्तीर्यावदाय द्विरभिघारयेत् ।

१२ । न प्रत्यनक्त्यवदानस्थानं यातयामतायै ।

१३ । अग्नये स्विष्टकृते स्वाहेत्युत्तरार्धपूर्वार्धे जुहुयात् ।

१४ । महाव्याहृतिभिराज्येनाभिजुहुयात् ।

१५ । प्राक् स्विष्टकृत आवापः ।

१६ । गणेष्वेकं परिसमूहनमिध्मो बर्हिः पर्युक्षणमाज्यमाज्यभागौ च ।

१७ । सर्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोति ।

१८ । हुत्वैतन्मेक्षणमनुप्रहरेत् ।

१९ । प्रक्षाल्य चैनेनोद्धृत्य भुञ्जीत ।

२० । न स्रुवमनुप्रहरेदित्येक आहुः ।

२१ । आग्नेय एवानाहिताग्नेरुभयोर्दर्शपूर्णमासयोः स्थालीपाकः स्यात् ।

२२ । आग्नेयो वाऽग्नीषोमीयो वाहिताग्नेः पौर्णमास्याम् ।

२३ । ऐन्द्रो वैन्द्राग्नो माहेन्द्रो वा अमावास्यायाम् ।

२४ । अपि वाहिताग्नेरप्युभयोर्दर्शपूर्णमासयोराग्नेय एव स्यात् ।

२५ । समिधमाधायानुपर्युक्ष्य यज्ञवास्तु करोति ।

२६ । तत एव बर्हिषः कुशमुष्टिमादायाऽऽज्ये वा हविषि वा त्रिरवदध्यादग्राणि मध्यानि मूलानी'त्यक्तं रिहाणा व्यन्तु वयः' इति ।

२७ । अथैनमद्भिरभ्युक्ष्याग्नावभ्यर्जयेत्—'यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा, पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा' इति ।

२८ । एतद् यज्ञवास्त्वित्याचक्षते ।

[ नवमकण्डिकायाम् ]

१ । अथैतद्बर्हिरुच्छिष्टमुदगुद्वास्योद्धृत्य ब्रह्मणे प्रयच्छेत् ।

२ । तं नितर्पयिषेत् ।

३ । ब्राह्मणस्य तृप्तिमनुतृप्यामीति ह यज्ञस्य वेदयन्ते ।

४ । अथ यदस्यान्यदन्नमुपसिद्धं स्यात् ।

५ । अथ ब्राह्मणान् भक्तेनोपेप्सेत् ।

६ । पूर्णपात्रो दक्षिणा तं ब्रह्मणे दद्यात् ।

७ । कंसं चमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतं पूर्णपात्रमित्याचक्षते ।

८ । ब्रह्मवैक ऋत्विक् पाकयज्ञेषु स्वयं होता भवति ।

९ । पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा ।

१० । अपरिमितं परार्ध्यम् ।

११ । अपि ह सुदाः पैजवन ऐन्द्राग्नेन स्थालीपाकेनेष्ट्वा शतं सहस्राणि ददौ ।

१२ । अथ यदि गृह्येऽग्नौ सायं प्रातर्होमयोर्वा दर्शपूर्णमासयोर्वा हव्यं वा होतारं वा नाधिगच्छेत् कथं कुर्यादिति ।

१३ । आ सायमाहुतेः प्रातराहुतिर्नात्येत्या प्रातराहुतेः सायमाहुतिरमावास्यायाः पौर्णमासं नात्येत्या पौर्णमास्या आमावास्यम् ।

१४ । एतेनैवावकाशेन हव्यं वा होतारं वा लिप्सेत ।

१५ । अपि वा यज्ञियानामेवौषधिवनस्पतीनां फलानि वा पलाशानि वा श्रपयित्वा जुहुयात् ।

१६ । अप एवान्ततो जुहुयादिति ह स्माह पाकयज्ञ ऐडो हुतं ह्येव ।

१७ । अहुतस्य प्रायश्चित्तं भवतीति ।

१८ । नाव्रतो ब्राह्मणः स्यादिति ।

१९ । अथाप्युदाहरन्ति यावन्न हूयेताभोजनेनैव तावत् मन्तनुयात्, अथ यदाऽधिगच्छेत् प्रतिजुहुयात्, एवमप्यस्य व्रतं सन्ततं भवतीति ।

२० । एषोऽत ऊर्ध्वं हविराहुतिषु न्यायः ।

२१ । मन्त्रान्ते स्वाहाकारः ।

२२। आज्याहुतिष्वाज्यमेव संस्कृत्योपघातं जुहुयात् नाज्यभागौ न स्विष्टकृत्।

२३। आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होमः।

२४। यथा पाणिग्रहणे तथा चूडाकर्मण्युपनयने गोदाने च।

२५। अपवृत्ते कर्मणि वामदेव्यगानं शान्त्यर्थं शान्त्यर्थम्।

---

## द्वितीयप्रपाठकस्य

### [ प्रथमकण्डिकायाम् ]

१। पुण्ये नक्षत्रे दारान् कुर्वीत।

२। लक्षणप्रशस्तान् कुशलेन।

३। तदलाभे पिण्डान्।

४। वेद्याः सीताया ह्रदाद् गोष्ठाच्चतुष्पथाद्देवनादादहनादीरिणात् सर्वेभ्यः सम्भार्यं नवमम्।

५। समान् कृतलक्षणान्।

६। पाणावाधाय कुमार्या उपनामयेद् 'ऋतमेव प्रथममृतं नात्येति कश्चनर्तं इयं पृथिवी श्रिता सर्वमिदमसौ भूयादि'ति तस्य नाम गृहीत्वैषामेकं गृहाणेति ब्रूयात्।

७। पूर्वेषां चतुर्णां गृह्णन्तीमुपयच्छेत्।

८। संभार्यमपि त्वेके।

९। क्लीतकैर्यवैर्माषैर्वाप्लुतां सुहृत् सुरोत्तमेन सशरीरां त्रिर्मूर्धन्यभिषिञ्चेत् 'काम वेद ते नाम मदो नामासीति, समानयामुमि'ति पतिनाम गृह्णीयात् स्वाहाकारान्ताभिरुपस्थम् उत्तराभ्यां प्लावयेत्।

१०। ज्ञातिकर्मैतत्।

११। पाणिग्रहणे पुरस्ताच्छालाया अग्निरुपसमाहितो भवति।

१२। अथ जन्यानामेको ध्रुवाणामपां कलसं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते।

१३। प्राजनेनान्यः।

१४। शमीपलाशमिश्रांश्च लाजांश्चतुरञ्जलिमात्राञ्छूर्पेणोपसादयन्ति पश्चादग्नेः।

१५। दृशत्पुत्रञ्च।

१६। अथ यस्याः पाणिं ग्रहीष्यन् भवति सशिरस्का साप्लुता भवति।

१७। अहतेन वसनेन पतिः परिदध्याद् 'या अकृन्तन्नि'त्येतया ऋचा।

१८। परिधत्त धत्त वाससेति च प्रावृतां यज्ञोपवीतिनीम् अभ्युदानयञ्जपेत् सोमोऽददद् गन्धर्वायेति।

१९। पश्चादग्नेः संवेष्टितं कटमेवं जातीयं वाऽन्यत् पदा प्रवर्तयन्तीं वाचयेत्—प्र मे पतिं या नः पन्थाः कल्पतामिति।

२०। स्वयं जपेदजपन्त्यां प्राप्त्या इति।

२१। बर्हिषोऽन्तं कटान्तं प्रापयेत्।

२२। पूर्वे कटान्ते दक्षिणतः पाणिग्राहस्योपविशति।

२३। दक्षिणेन पाणिना दक्षिणमंसमन्वारब्धायाः षडाज्याहुतीर्जुहोत्यग्निरेतु प्रथम इत्येतत्प्रभृतिभिः।

२४। महाव्याहृतिभिश्च पृथक्।

२५। समस्ताभिश्चतुर्थीम्।

[ द्वितीयकण्डिकायाम् ]

१। हुत्वोपोत्तिष्ठतः।

२। अनुपृष्ठं पतिः परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते वध्वञ्जलिं गृहीत्वा।

३। पूर्वा माता लाजानादाय भ्राता वा वधूमाक्रामयेदश्मानं दक्षिणेन प्रपदेन।

४। पाणिग्राहो जपति इममश्मानमारोहेति।

५। सकृत् संगृहीतं लाजानामञ्जलिं भ्राता वध्वञ्जलावावपति।

६। तं सोपस्तीर्णाभिघारितमग्नौ जुहोत्यविच्छिन्दत्यञ्जलिम्—इयं नार्युपब्रूते इति।

७। अर्यमणं नु देवं पूषणमित्युत्तरयोः।

८। हुते पतिर्यथेतं परिव्रज्य दक्षिणमग्निं परिणयति मन्त्रवान् वा ब्राह्मणः कन्यला पितृभ्य इति।

९। परिणीता तथैवावतिष्ठते तथाक्रामति तथा जपति तथावपति तथा जुहोति एवं त्रिः।

१०। शूर्पेण शेषमग्नावोप्य प्रागुदीचीमभ्युत्क्रामयन्ति—एकमिषे इति।

११। दक्षिणेन प्रक्रम्य सव्येनानुक्रामेत्।

१२। मा सव्येन दक्षिणमतिक्रामेति ब्रयात्।

१३। ईक्षकान् प्रति मन्त्रयेत सुमङ्गलीरियं वधूरिति।

१४। अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्धदेशेऽवसिञ्चति तथेतरां समञ्जन्त्वित्येतयर्चा।

१५। अवसिक्तायाः सव्येन पाणिनाऽञ्जलिमुपोद्‌गृह्य दक्षिणेन पाणिना दक्षिणं पाणिं साङ्गुष्ठमुत्तानं गृहीत्वैताः षट् पाणिग्रहणीया जपति—गृभ्णामि ते इति समाप्ताः।

[ तृतीयकण्डिकायाम् ]

१। उद्वहन्ति प्रागुदीच्यां दिशि यद् ब्राह्मणं कुलमभिरूपम्।

२। तत्राग्निरुपसमाहितो भवति।

३। अपरेणाग्निमानडुहं रोहितं चर्म प्राग्ग्रीवमुत्तरलोमाऽऽस्तीर्णं भवति।

४। तस्मिन्नेनां वाग्यतामुपवेशयन्ति।

५। सा खल्वास्त एव आ नक्षत्रदर्शनात्।

६। प्रोक्ते नक्षत्रे षडाज्याहुतीर्जुहोति 'लेखासन्धिष्वि'त्येतत्प्रभृतिभिः।

७। आहुतेराहुतेस्तु सम्पातं मूर्धनि वध्वा अवनयेत्।

८। हुत्वोपोत्थायोपनिष्क्रम्य ध्रुवं दर्शयति।

९। ध्रुवमसि ध्रुवाऽहं पतिकुले भूयासम् अमुष्यासाविति पतिनाम गृह्णीयादात्मनश्च।

१०। अरुन्धतीं च।

११। रुद्धाऽहमस्मीत्येवमेव।

१२। अथैनामनुमन्त्रयते ध्रुवा द्यौरित्येतयर्चा।

१३। अनुमन्त्रिता गुरुं गोत्रेणाभिवादयते।

१४। सोऽस्या वाग्विसर्गः।

१५। तावुभौ ततप्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम्।

१६। अत्रार्घ्यमित्याहुः।

१७। आगतेष्वित्येके।

१८। हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत।

१९। श्वोभूते वा समशनीयं स्थालीपाकं कुर्वीत।

२०। तस्य देवता अग्निः प्रजापतिर्विश्वेदेवा अनुमतिरिति।

२१। उद्धृत्य स्थालीपाकं व्युह्यैकदेशं पाणिनाऽभिमृशेदन्नपाशेन मणिनेति।

२२। भुक्तोच्छिष्टं वध्वै प्रदाय यथार्थं गौर्दक्षिणा।

[ चतुर्थकण्डिकायाम् ]

१। यानमारोहन्त्यां सु-किंशुकं शाल्मलिमित्येतामृचं जपेत्।

२। अध्वनि चतुष्पथान् प्रतिमन्त्रयेत, नदीश्च विषमाणि च महावृक्षान् श्मशानञ्च— 'मा विदन् परिपन्थिन' इति।

३। अक्षभङ्गे नद्धविमोक्षे यानविपर्यासेऽन्यासु चाऽऽपत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वाऽन्यद् द्रव्यमाहृत्य 'य ऋते चिदभिश्रिष' इत्याज्यशेषेणाभ्यञ्जेत्।

४। वामदेव्यं गीत्वारोहेत्।

५। प्राप्तेषु वामदेव्यम्।

६। गृहागतां पतिपुत्रशीलसम्पन्ना ब्राह्मण्योऽवरोप्याऽऽनडुहे चर्मण्युपवेशयन्ति— इह गावः प्रजायध्वमिति।

७। तस्याः कुमारमुपस्थ आदध्युः।

८। तस्मै शकलोटानञ्जलावावपेयुः फलानि वा।

९। उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोत्यष्टाविह धृतिरिति।

१०। समाप्तासु समिधमाधाय यथावयसं गुरून् गोत्रेणाभिवाद्य यथार्थम्।

[ पञ्चमकण्डिकायाम् ]

१। अथातश्चतुर्थीकर्म।

२। अग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति अग्ने प्रायश्चित्त इति चतुः।

३। अग्नेः स्थाने वायुचन्द्रसूर्याः।

४। समस्य पञ्चमीं बहुवद्भूत्।

५। आहुतेराहुतेस्तु सम्पातमुदपात्रेऽवनयेत्।

६। तेनैनां सकेशनखामभ्यज्य हासयित्वा प्लावयन्ति।

७। ऊर्ध्वं त्रिरात्रात् सम्भव इत्येके।

८। यदर्त्तुमती भवत्युपरतशोणिता तदा सम्भवकालः।

९। दक्षिणेन पाणिनोपस्थमभिमृशेद् विष्णुर्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि सिनीवालीति च।

१०। समाप्यर्चौ सम्भवतः।

[ षष्ठकण्डिकायाम् ]

१। तृतीयस्य गर्भमासस्याऽऽदिमदेशे पुंसवनस्य कालः।

२। प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति।

३। पश्चात् पतिरवस्थाय दक्षिणेन पाणिना दक्षिणमंसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत् पुमांसौ मित्रावरुणावित्येतयर्चा।

४। अथ यथार्थम्।

५। अथापरम्।

६। प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतःफलामस्रामामकृमिपरिसृप्तां त्रिःसप्तैर्यवैर्माषैर्वा परिक्रीयोत्थापयेत।

७। यवसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि, वरुणासि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि, वसुरसि वसुभ्यो

वसुभ्यस्त्वा परिक्रीणामि, वयसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि, वयस्यादित्येभ्य आदित्येभ्यस्त्वा परिक्रीणामि, वयसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि, वयसि विश्वेभ्यो देवेभ्यो विश्वेभ्यो देवेभ्यस्त्वा परिक्रीणामि, ओषधयः समनसो भूत्वाऽस्यां वीर्यं समाधत्तेयं कर्म करिष्यति इत्युत्थाप्य तृणैः परिश्रायाऽऽहृत्य वैहायसीं निदध्यात् ।

८। दृषदं प्रक्षाल्य ब्रह्मचारी व्रतवती वा ब्रह्मबन्धुः कुमारी वाऽप्रत्याहरन्ती पिनष्टि ।

९। प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राक्शिराः संविशति ।

१०। पश्चात् पतिरवस्थाय दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य दक्षिणे नासिकास्रोतस्यवनयेन—पुमानग्निः पुमानिन्द्र इत्येतयर्चा ।

११। अथ यथार्थम् ।

[ सप्तमकण्डिकायाम्

१। अथ सीमन्तकरणम् ।

२। प्रथमगर्भे चतुर्थे मासि षष्ठेऽष्टमे वा ।

३। प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ।

४। पश्चात् पतिरवस्थाय युग्मं सलोदुम्बरं शलाटुग्रप्सुमाबध्नाति—अयमूर्जावतो वृक्ष इति ।

५। अथ सीमन्तमूर्ध्वमुन्नयति भूरिति दर्भपिञ्जूलीभिरेव प्रथमं भुवरिति द्वितीयं स्वरिति तृतीयम् ।

६। अथ वीरतरेण येनादितेरित्येतयर्चा ।

७। अथ पूर्णचात्रेण राकामहमित्येतयर्चा ।

८। त्रिश्वेतया च शलल्या यास्ते राके सुमतय इति ।

९। कृसरः स्थालीपाक उत्तरघृतमन्वेक्षयेत् ।

१०। किं पश्यसीत्युक्त्वा प्रजामिति वाचयेत् ।

११। तं सा स्वयं भुञ्जीत ।

१२। वीरसूर्जीवसूर्जीवपत्नीति ब्राह्मण्यो मङ्गल्याभिर्वाग्भिरुपासीरन् ।

१३। अथ सोष्यन्तीहोमः ।

१४। प्रतिष्ठिते वस्तौ परिस्तीर्याग्निमाज्याहुती जुहोति—या तिरश्चीत्येतयर्चा विपश्चित् पुच्छमभरदिति च ।

१५। पुमानयं जनिष्यतेऽसौ नामेति नामधेयं गृह्णाति यत् तद् गुह्यमेव भवति ।

१६। यदाऽस्मै कुमारं जातमाचक्षीरन्नथ ब्रूयात् काङ्क्षत नाभिकृन्तनेन स्तनप्रतिधानेन चेति ।

१७। व्रीहियवौ पेषयेत् तयैवाऽऽवृता यथा शुङ्गाम् ।

१८। दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य कुमारस्य जिह्वां निर्माष्टि इयमाज्ञेति ।

१९। तथैव मेधाजननं सर्पिः प्राशयेत् जातरूपेण वा आदाय कुमारस्य मुखे जुहोति—मेधां ते मित्रावरुणावित्येतयर्चा सदसस्पतिमद्भुतमिति च ।

२०। कृन्तत नाभिमिति ब्रूयात् स्तनञ्च प्रतिधत्तेति ।

२१। अत ऊर्ध्वमसमालम्भनम् आ दश-रात्रात् ।

[ अष्टमकण्डिकायाम् ]

१। जननाद् यस्तृतीयो ज्यौत्स्नस्तस्य तृतीयायां प्रातः सशिरस्कं कुमार-माप्लाव्यास्तमिते वीते लोहितिम्नि अञ्जलिकृतः पितोपतिष्ठते ।

२। अथ माता शुचिना वसनेन कुमार-माच्छाद्य दक्षिणत उदञ्चं पित्रे प्रयच्छत्युदक्शिरसम् ।

३। अनुपृष्ठं परिक्रम्योत्तरतोऽवतिष्ठते ।

४। अथ जपति—यत्ते सुसीम इति यथाऽयं न प्रमीयेत पुत्रो जनित्र्या अधि इति ।

५। उदञ्चं मात्रे प्रदाय यथार्थम् ।

६। अथ येऽत ऊर्द्ध्वं ज्यौत्स्नाः प्रथमोद्दिष्ट एव तेषु पितोपतिष्ठतेऽपामञ्जलिं पूरयित्वाऽभिमुखश्चन्द्रमसम् ।

७। यददश्चन्द्रमसीति सकृद् यजुषा द्विस्तूष्णीमुत्सृज्य यथार्थम् ।

८। जननाद् दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम् ।

९। अथ यस्तत् करिष्यन् भवति पश्चादग्नेः स्तृणाग्रेषु दर्भेषु प्राङुपविशति ।

१०। अथ माता शुचिना वसनेन कुमार-माच्छाद्य दक्षिणत उदञ्चं कर्त्रे प्रयच्छत्युदक्शिरसम् ।

११। अनुपृष्ठं परिक्रम्योत्तरत उपविशत्युद-गग्रेष्वेव दर्भेषु ।

१२। अथ जुहोति प्रजापतये तिथये नक्षत्राय देवताया इति ।

१३। तस्य मुख्यान् प्राणान् संमृशन् कोऽसि कतमोऽसीत्येतन्मन्त्रं जपति ।

१४। आहस्पत्यं मासं प्रविशासाविल्यन्ते च मन्त्रस्य घोषवदाद्यन्तरन्तस्थं दीर्घाभि-निष्ठानान्तं कृतं नाम दध्यात ।

१५। एतद्तद्धितम् ।

१६। अयुगदान्तं स्त्रीणाम् ।

१७। मात्रे चैव प्रथमं नामधेयमाख्याय यथार्थम् ।

१८। गौर्दक्षिणा ।

१९। कुमारस्य मासि मासि संवत्सरे सांवत्सरिकेषु वा पर्वस्वग्नीन्द्रौ द्यावापृथिवी विश्वान् देवांश्च यजेत ।

२०। दैवतमिष्ट्वा तिथिं नक्षत्रं च यजेत ।

२१। विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत्, यदा वा पिता म इति विद्यादुपेतस्य वा अङ्गादङ्गात् संभ्रवसीति ।

२२। पशूनां त्वा हिङ्कारेणाभिजिघ्रामीत्यभि-जिघ्रेद् यथार्थम् ।

२३। एवमेवावरेषां यथाज्येष्ठं यथोपलम्भं वा ।

२४। स्त्रियास्तूष्णीं मूर्धन्यभिजिघ्रणं मूर्ध-न्यभिजिघ्रणम् ।

[ नवमकण्डिकायाम् ]

१। अथातस्तृतीये वर्षे चूडाकरणम् ।

२। पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमा-हितो भवति ।

३। तत्रैतान्युपक्लृप्तानि भवन्ति ।

४। एकविंशतिर्दर्भपिञ्जुल्य उष्णोदककंस औदुम्बरः क्षुर आदर्शो वा क्षुरपाणि-र्नापित इति दक्षिणतः ।

५। आनडुहो गोमयः कृसरः स्थालीपाको वृथापक्व इत्युत्तरतः ।

६। व्रीहियवैस्तिलमाषैरिति पृथक् पात्राणि पूरयित्वा पुरस्तादुपनिदध्युः ।

७। कृसरो नापिताय सर्वबीजानि चेति ।

८। अथ माता शुचिना वसनेन कुमारमाच्छाद्य पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ।

९। अथ यस्तत् करिष्यन् भवति पश्चात् प्राङ्वतिष्ठते ।

१०। अथ जपत्यायमगात् सविता क्षुरेणेति सवितारं मनसा ध्यायन् नापितं प्रेक्षमाणः ।

११। उष्णेन वाय उदकेनेधीति वायुं मनसा ध्यायन्नुष्णोदककंसं प्रेक्षमाणः ।

१२। दक्षिणेन पाणिनाऽप आदाय दक्षिणां कपुष्णिकाम् उन्दत्याप उन्दन्तु जीवस इति ।

१३। विष्णोर्दंष्ट्रोऽसीत्यौदुम्बरं क्षुरं प्रेक्षत आदर्शं वा ।

१४। ओषधे त्रायस्वैनमिति सह दर्भपिञ्जुलीर्दक्षिणायां कपुष्णिकायामभिशिरोग्रा निदधाति

१५। ता वामेनाभिगृह्य दक्षिणेन पाणिनौदुम्बरं क्षुरं गृहीत्वादर्शं वाऽभिनिदधाति स्वधिते मैनं हिंसीरिति ।

१६। येन पूषा बृहस्पतेरिति त्रिः प्राञ्चं प्रोहत्यप्रच्छिन्दन् सकृद् यजुषा द्विस्तूष्णीम् ।

१७। अथाऽऽयसेन प्रच्छिद्याऽऽनडुहे गोमये निदधाति ।

१८। एतयैवाऽऽवृता कपुच्छलम्, एतयैवोत्तरां कपुष्णिकाम् ।

१९। उन्दनप्रभृति त्वेवाभिनिर्वर्तयेत् ।

२०। उभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत् त्र्यायुषं जमदग्नेरिति ।

२१। एतयैवाऽऽवृता स्त्रियास्तूष्णीम् ।

२२। मन्त्रेण तु होमः ।

२३। उदङ्ङग्नेरुत्सृज्य कुशलीकारयन्ति यथागोत्रकुलकल्पम् ।

२४। आनडुहे गोमये केशान् कृत्वाऽरण्यं हृत्वा निखनन्ति ।

२५। स्तम्बे हैके निदधति

२६। यथार्थं गौर्दक्षिणा ।

[ दशमकण्डिकायाम् ]

१। गर्भाष्टमेषु ब्राह्मणमुपनयेत् ।

२। गर्भैकादशेषु क्षत्रियं गर्भद्वादशेषु वैश्यम् ।

३। आ षोडशाद् वर्षाद् ब्राह्मणस्यानतीतः कालो भवति आ द्वाविंशात् क्षत्रियस्य आ चतुर्विंशाद् वैश्यस्य ।

४। अत ऊर्ध्वं पतितसावित्रीका भवन्ति ।

५। नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्विवहेयुः ।

६। यदहरुपैष्यन्माणवको भवति प्रग एवैनं तदहर्भोजयन्ति कुशलीकारयन्त्याप्लावयन्त्यलङ्कुर्वन्त्यहतेन वाससाऽऽच्छादयन्ति ।

७। क्षौमशाणकार्पासौर्णान्येषां वसनानि ।

८। ऐणेयरौरवाजान्यजिनानि ।

९। मुञ्जकाशताम्बल्यो रशनाः ।

१०। पार्णवैल्वाश्वत्था दण्डाः ।

११। क्षौमं शाणं वा वसनं ब्राह्मणस्य कार्पासं क्षत्रियस्याऽऽविकं वैश्यस्य ।

१२। एतेनैवेतराणि द्रव्याणि व्याख्यातानि ।

१३। अलाभे वा सर्वाणि सर्वेषाम् ।

१४। पुरस्ताच्छालाया उपलिप्ते अग्निरुप-समाहितो भवति ।

१५। अग्ने व्रतपते इति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङाचार्योऽवतिष्ठते ।

१६। अन्तरेणाग्न्याचार्यौ माणवकोऽञ्जलि-कृतोऽभिमुख आचार्यमुदगग्रेषु दर्भेषु ।

१७। तस्य दक्षिणतोऽवस्थाय मन्त्रवान् ब्राह्मणोऽपामञ्जलिं पूरयत्युपरिष्टाद्वा-ऽऽचार्यस्य ।

१८। प्रेक्षमाणो जपत्यागन्त्रा समगन्महीति ।

१९। ब्रह्मचर्यमागामिति वाचयति ।

२०। को नामासीति नामधेयं पृच्छति तस्याऽऽचार्यः ।

२१। अभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं वा नक्षत्राश्रयं वा गोत्राश्रय-मप्येके ।

२२। उत्सृज्यापामञ्जलिमाचार्यो दक्षिणेन पाणिना दक्षिणपाणिं साङ्गुष्ठं गृह्णाति— "देवस्य ते सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसावि"ति ।

२३। अथैनं प्रदक्षिणमावर्तयति "सूर्यस्या-ऽऽवृतमन्वावर्तस्वासौ" इति ।

२४। दक्षिणेन पाणिना दक्षिणमंसम-न्ववमृश्यानन्तर्हितां नाभिमभिमृशेत् "प्राणानां ग्रन्थिरसी"ति ।

२५। उत्सृज्य नाभिदेशमहुर इति ।

२६। उत्सृज्य हृदयदेशं कृशन इति ।

२७। दक्षिणेन पाणिना दक्षिणमंसमन्वालभ्य प्रजापतये त्वा परिददाम्यसाविति ।

२८। सव्येन सव्यं देवाय त्वा सवित्रे परि-ददाम्यसाविति ।

२९। अथैनं सम्प्रेष्यति ब्रह्मचार्यस्य-साविति ।

३०। समिधमाधेह्यपोऽशान कर्म कुरु मा दिवा स्वाप्सीरिति ।

३१। उदङ्ङग्नेरुत्सृप्य प्राङाचार्यं उपविशत्युद-गग्रेषु दर्भेषु ।

३२। प्रत्यङ् माणवको दक्षिणजान्वक्तो-ऽभिमुख आचार्यमुदगग्रेष्वेव दर्भेषु ।

३३। अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलां परि-हरन् वाचयतीयं दुरुक्तात् परिबाध-मानेति, ऋतस्य गोप्त्रीति च ।

३४। अथोपसीदत्यधीहि भोः सावित्रीं मे भवाननुब्रवीत्विति ।

३५। तस्मा अन्वाह—पच्छोऽर्द्धर्चश ऋक्श इति ।

३६। महाव्याहृतीश्च विहृता ओङ्कारान्ताः ।

३७। वार्क्षं वामनं दण्डं प्रयच्छन् वाचयति— सुश्रवः सुश्रवसं मा कुर्विति ।

३८। अथ भैक्षं चरति ।

३९। मातरमेवाग्रे द्वे चान्ये सुहृदौ यावत्यो वा सन्निहिताः स्युः ।

४०। आचार्याय भैक्षं निवेदयते ।

४१। तिष्ठत्यहःशेषं वाग्यतः ।

४२। अस्तमिते समिधमादधात्यग्नये समिध-माहार्षमिति ।

४३। त्रिरात्रमक्षारलवणाशी भवति ।

४४। तस्यान्ते सावित्रश्चरुः ।

४५। यथार्थं गौर्दक्षिणा ।

## तृतीयप्रपाठकस्य

### [ प्रथमकण्डिकायाम् ]

१। अथातः षोडशे वर्षे गोदानम्।

२। चूडाकरणेन केशान्तकरणं व्याख्यातम्।

३। ब्रह्मचारी केशान्तान् कारयते।

४। सर्वाण्यङ्गलोमानि संहारयते।

५। गोमिथुनं दक्षिणा ब्राह्मणस्याश्वमिथुनं क्षत्रियस्याविमिथुनं वैश्यस्य।

६। गौरेव सर्वेषाम्।

७। अजः केशप्रतिग्राहाय।

८। उपनयनेनैवोपनयनं व्याख्यातम्।

९। न त्विहाहतं वासो नियुक्तम्।

१०। नालङ्कारः।

११। नाऽऽचरिष्यन्तं संवत्सरमुपनयेत्।

१२। वार्क्षं चास्मै दण्डं प्रयच्छन्नादिशति।

१३। आचार्याधीनो भवान्यत्राधर्मचरणात्।

१४। क्रोधानृते वर्जय।

१५। मैथुनम्।

१६। उपरि शय्याम्।

१७। कौशीलवगन्धाञ्जनानि।

१८। स्नानम्।

१९। अवलेखनदन्तप्रक्षालनपादप्रक्षालनानि।

२०। क्षुरकृत्यम्।

२१। मधुमांसे।

२२। गोयुक्तारोहणम्।

२३। अन्तर्ग्राम उपानहोर्धारणम्।

२४। स्वयमिन्द्रियमोचनमिति।

२५। मेखलाधारणभैक्षचर्यदण्डधारणसमिदाधानोदकोपस्पर्शनप्रातरभिवाद्या इत्येते नित्यधर्माः।

२६। गोदानिकव्रातिकादित्यव्रतौपनिषदज्यैष्ठसामिकाः संवत्सराः।

२७। तेषु सायं प्रातरुदकोपस्पर्शनम्।

२८। आदित्यव्रतं तु न चरन्त्येके।

२९। ये चरन्त्येकवाससो भवन्ति।

३०। आदित्यञ्च नान्तर्दधतेऽन्यत्र वृक्षशरणाभ्याम्।

३१। नापोऽभ्यवयन्त्यूर्ध्वं जानुभ्यामगुरुप्रयुक्ताः।

### [ द्वितीयकण्डिकायाम् ]

१। द्वादश महानाम्निकाः संवत्सराः।

२। नव षट् त्रय इति विकल्पः।

३। संवत्सरमप्येके।

४। व्रतं तु भूयः।

५। पूर्वश्चेत् श्रुता महानाम्न्यः।

६। अथापि रौहिकिब्राह्मणं भवति, कुमारान् ह स्म वै मातरः पाययमाना आहुः, शक्वरीणां पुत्रका व्रतं पारयिष्णवो भवतेति।

७। तास्वनुसवनमुदकोपस्पर्शनम्।

८। नानुपस्पृश्य भोजनं प्रातः।

९। सायमुपस्पृश्याभोजनमा समिदाधानात्।

१०। कृष्णवस्त्रः कृष्णभक्षः।

११। आचार्याधीनः।

१२। अपथ्यदायी।

१३। तपस्वी।

१४। तिष्ठेद्दिवासीत नक्तम्।

१५। वर्षति च नोपसर्पेच्छरणम्।

१६। वर्षन्तं ब्रूयाद्रापः शक्वर्य इति ।

१७। विद्योतमानं ब्रूयादेवंरूपाः खलु शक्वर्यो भवन्तीति ।

१८। स्तनयन्तं ब्रूयान्महा महान् घोष इति ।

१९। न स्रवन्तीमतिक्रामेदनुपस्पृशन् ।

२०। न नावमारोहेत् ।

२१। प्राणसंशये तूपस्पृश्याऽऽरोहेत् ।

२२। तथा प्रत्यवरुह्य ।

२३। उदकसाधवो हि महानाम्न्य इति ।

२४। एवं खलु चरतः कामवर्षी पर्जन्यो भवति ।

२५। अनियमो वा कृष्णस्थानामनवरुस्त्रभ्रंशेषु ।

२६। तृतीये चरिते स्तोत्रीयामनुगापयेत् ।

२७। एवमितरे स्तोत्रीये ।

२८। सर्वा वाऽन्ते सर्वस्य ।

२९। उपोषिताय संमीलितायानुगापयेत् ।

३०। कंसमपां पूरयित्वा सर्वौषधीः कृत्वा हस्ताववधाय प्रदक्षिणमाचार्योऽहतेन वसनेन परिणह्येत् ।

३१। परिणहनान्ते वाऽनुगापयेत् ।

३२। परिणद्धो वाग्यतो न भुञ्जीत त्रिरात्रमहोरात्रौ वा ।

३३। अपि वाऽरण्ये तिष्ठेदाऽस्तमयात् ।

३४। श्वोभूतेऽरण्येऽग्निमुपसमाधाय व्याहृतिभिर्हुत्वाऽथैनमवेक्षयेद् अग्निमाज्यमादित्यं ब्राह्मणमनड्वाहमन्नमपो दधीति स्वरभिव्यख्यं ज्योतिरभिव्यख्यमिति ।

३५। एवं त्रिः सर्वाणि ।

३६। शान्तिं कृत्वा गुरुमभिवादयते ।

३७। सोऽस्य वाग्विसर्गः ।

३८। अनड्वान् कंसो वासो वर इति दक्षिणाः ।

३९। प्रथमे विकल्पः ।

४०। आच्छादयेद् गुरुमित्येके ।

४१। इन्द्रः स्थालीपाकस्तस्य जुहुयादद्य साम यजामह इत्येतयर्चा सदसस्पतिमद्भुतमिति वोभाभ्यां वा ।

४२। अनुप्रवचनीयेष्वेवं सर्वत्र ।

४३। सर्वत्राप्यत्रिपं तदशक्तं तेनारानमनुगामिति मन्त्रविशेषः ।

४४। आग्नेयेऽज इन्द्रे मेषो गौः पावमाने पर्वदक्षिणाः ।

४५। प्रत्येत्याऽऽचार्यं सपरिषत्कं भोजयेत् ।

४६। सब्रह्मचारिणश्चोपसमेतान् ।

४७। ज्येष्ठसाम्नो महानाम्निकेनैवानुगापनकल्पो व्याख्यातः ।

४८। नत्रैतानि नित्यव्रतानि भवन्ति ।

४९। न शूद्रामुपेयात् ।

५०। न पक्षिमांसं भुञ्जीत ।

५१। एकधान्यमेकशंसकवस्त्र वर्जयेत् ।

५२। उद्धृताभिरद्भिरपस्पृशेत् ।

५३। आदर्शनात् प्रभृति न मृन्मयेऽश्नीयात् ।

५४। न पिबेत् ।

५५। श्रवणादित्येके ।

[ तृतीयकण्डिकायाम् ]

१। प्रौष्ठपद्यां हस्तेनोपाकरणम् ।

२। व्याहृतिभिर्हुत्वा शिष्याणां सावित्र्यनुवचनं यथोपनयने ।

३। साममावित्रीञ्च ।

४। सोमं राजानं वरुणमिति ।

५। आदितश्छन्दसोऽधीत्य यथार्थम् ।

६। अक्षतधाना भक्षयन्ति धानावन्तं करम्भिणमिति ।

७। दध्नः प्राश्नन्ति दधिक्राव्णोऽकारिषमिति।

८। आचान्तोदकाः काण्डिकेभ्योऽनुवाक्या अनुगेयाः कारयेत्।

९। सावित्रमहः काङ्क्षन्ते।

१०। उदगयने च पक्षिणीं रात्रिम्।

११। उभयत एकं त्रिरात्रम्।

१२। आचार्याणाञ्चोदकोत्सेचनमुभयत्र।

१३। श्रवणामेक उपाकृत्यैतमा सावित्रान् कालं काङ्क्षन्ते।

१४। तैषीमुत्सृजन्ति।

१५। प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य या आपोऽनवमेहनीयास्ता अभ्येत्योपस्पृश्य छन्दांस्यृषीनाचार्यांश्च तर्पयेयुः।

१६। तस्मिन् प्रत्युपाकरणेऽनाध्याय आ पुनरुपाकरणाच्छन्दसः।

१७। विद्युत्स्तनयित्नुपृषितेष्वाकालम्।

१८। उल्कापातभूमिचलनज्योतिषोपसर्गेषु।

१९। निर्घाते च।

२०। अष्टकामावास्यासु नाधीयीरन्।

२१। पौर्णमासीषु च।

२२। तिसृषु कार्त्तिक्यां फाल्गुन्यामाषाढ्याञ्चाहोरात्रम्।

२३। सब्रह्मचारिणि च प्रेते।

२४। अन्ये च भूमिपतौ।

२५। त्रिरात्रमाचार्ये।

२६। उपसन्ने त्वहोरात्रम्।

२७। गीतवादित्ररुदितानिवानेषु तत्कालम्।

२८। शिष्टाचारोऽतोऽन्यत्र।

२९। अद्भुते कुलवत्योः प्रायश्चित्तम्।

३०। वंशमध्यमयोर्मणिकं वा भिन्नं स्यादिति भिन्नं हुयात्।

३१। दुःस्वप्नेष्वद्य नो देव सवितरित्येतामृचं जपेत्।

३२। अथापरं चित्त्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु सूर्याभ्युदितः सूर्याभिनिम्लुप्तः इन्द्रियैश्च पापस्पर्शैः पुनर्मामैत्विन्द्रियमित्येताभ्यामाज्याहुती जुहुयात्।

३३। आज्यलिप्ते वा समिधौ।

३४। जपेद् वा लघुषु।

[ चतुर्थकण्डिकायाम् ]

१। ब्रह्मचारी वेदमधीत्य।

२। उपन्याहृत्य गुरवेऽनुज्ञातो दारान् कुर्वीत।

३। असगोत्रान्।

४। मातुरसपिण्डान्।

५। नग्निका तु श्रेष्ठा।

६। अथाऽऽप्लवनम्।

७। उत्तरतः पुरस्ताद् वाचार्यकुलस्य परिवृतं भवति।

८। तत्र प्रागग्रेषु दर्भेषूदङ्ङाचार्य उपविशति।

९। प्राग् ब्रह्मचार्युदगग्रेषु दर्भेषु।

१०। सर्वौषधिविफाण्टाभिरद्भिर्गन्धवतीभिः शीतोष्णाभिराचार्योऽभिषिञ्चेत्।

११। स्वयमिव तु।

१२। मन्त्रवर्णो भवति।

१३। येऽप्स्वन्तरग्नयः प्रविष्टा इत्यपामञ्जलिमवसिञ्चति।

१४। यदपां घोरं यदपां क्रूरं यदपामशान्तमिति च।

१५। यो रोचनस्तमिह गृह्णामीत्यात्मानमभिषिञ्चति।

१६। यशसे तेजस इति च।

१७। येन श्रियमकृणुतमिति च।

१८। तूष्णीं चतुर्थम्।

१९। उपोत्थायाऽऽदित्यमुपतिष्ठत उद्यन् भ्राज-भृष्टिभिरित्येतत्प्रभृतिना मन्त्रेण।

२०। यथालिङ्गं वा।

२१। विहरंश्चक्षुरसीत्यनुबध्नीयात्।

२२। मेखलामवमुञ्चत उदुत्तमं वरुण पाशमिति।

२३। ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा केशश्मश्रुरोमनखानि वापयीत शिखा-वर्जम्।

२४। स्नात्वाऽलङ्कृत्याहते वाससी परिधाय स्रजमाबध्नीत श्रीरसि मयि रमस्वेति।

२५। नेत्र्यौ स्थो नयतं मामित्युपानहौ।

२६। गन्धर्वोऽसीति वैणवं दण्डं गृह्णाति।

२७। आचार्यं सपरिषत्कमभ्येत्याऽऽचार्य-परिषदमीक्षते—यक्षमिव चक्षुषः प्रियो वो भूयासमिति।

२८। उपोपविश्य मुख्यान् प्राणान् संमृशन्नो-ष्ठापिधाना नकुलीति।

२९। अत्रैनमाचार्योऽर्हयेत्।

३०। गोयुक्तं रथमुपसंक्रम्य पक्षसी कूबरबाहू वाऽभिमृशेद् वनस्पते वीड्वङ्गो हि भूया इति।

३१। आस्थाता ते जयतु जेत्वानीत्यातिष्ठति।

३२। प्राङ् वोदङ् वाऽभिप्रयाय प्रदक्षिणमावृ-त्योपयाति।

३३। उपयातायार्घ्यमिति कौहलीयाः

[ पञ्चमकण्डिकायाम् ]

१। अत ऊर्ध्वं वृद्धशीली स्यादिति समस्तोद्देशः।

२। तत्रैतान्याचार्याः परिसञ्चक्षते।

३। नाजातलोम्न्योपहासमिच्छेत्।

४। नायुग्वा।

५। न रजस्वलया।

६। न समानर्ष्या।

७। नापरया द्वारा प्रपन्नमन्नं भुञ्जीत।

८। न द्विः पक्वम्।

९। न पर्युषितम्।

१०। अन्यत्र शाकमांसयवपिष्टविकारेभ्यः।

११। न वर्षति धावेत्।

१२। नोपानहौ स्वयं हरेत्।

१३। नोदपानमवेक्षेत्।

१४। न फलानि स्वयं प्रचिन्वीत।

१५। नागन्धां स्रजं धारयेत्।

१६। अन्यां हिरण्यस्रजः।

१७। न मालोक्ताम्।

१८। स्रगिति वाचयेत्।

१९। भद्रमित्येतां वृथावाचं परिहरेत्।

२०। भद्रमिति ब्रूयात्।

२१। तत्रैते त्रयः स्नातका भवन्ति।

२२। विद्यास्नातको व्रतस्नातको विद्याव्रत-स्नातक इति।

२३। तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्वौ।

२४। नाऽऽर्द्रं परिदधीत।

२५। नैकं परिदधीत।

२६। न मनुष्यस्तुतिं प्रयुञ्जीत।

२७। नादृष्टं दृष्टतो ब्रुवीत।

२८। नाश्रुतं श्रुततः।

२९। स्वाध्यायविरोधिनोऽर्थानुत्सृजेत्।
३०। तैलपात्रमिवाऽऽत्मानं दिधारयिषेत्।
३१। न वृक्षमारोहेत्।
३२। न प्रतिसायं ग्रामान्तरं व्रजेत्।
३३। नैकः।
३४। न वृषलैः सह।
३५। न कासृत्या ग्रामं प्रविशेत्।
३६। न धावनुपरश्चरेत्।
३७। एतानि समावृत्तव्रतानि।
३८। यानि च शिष्टा विदध्युः।

[ नवमकण्डिकायाम् ]

१। गाः प्रकाल्यमाना अनुमन्त्रयेतेमा मे विश्वतो वीर्यं इति।
२। प्रत्यागता इमा मधुमतीर्मह्यमिति।
३। पुष्टिकामः प्रथमजातस्य वत्सस्य प्राङ् मातुः प्रलेहनाज्जिह्वया ललाटमुल्लिह्य निगिरेद् गवां श्लेष्माऽसीति।
४। पुष्टिकाम एव संप्रजातासु निशायां गोष्ठेऽग्निमुपसमाधाय विलयनं जुहुयात् संग्रहण संगृहाणेति।
५। पुष्टिकाम एव सम्प्रजातास्वौदुम्बरेणासिना वत्समिथुनयोर्लक्षणं करोति पुंस एवाग्रेऽथ स्त्रिया भुवनमसि साहस्रमिति।
६। कृत्वा चानुमन्त्रयेत लोहितेन स्वधितिनेति।
७। तन्तीं प्रसार्यमाणां वद्धवत्सां चानुमन्त्रयेतेयं तन्ती गवां मातेति।
८। सत्रेणान्यहरहः कृत्यानि भवन्ति निष्कालनप्रवेशने तन्तीविहरणमिति।

९। गोयज्ञे पायसश्चरुः।
१०। अग्निं यजेत पूषणमिन्द्रमीश्वरम्।
११। ऋषभपूजा।
१२। गोयज्ञेनैवाश्वयज्ञो व्याख्यातः।
१३। यमवरुणौ देवतामात्राधिकौ।
१४। गन्धैरभ्युक्षणं गवां गन्धैरभ्युक्षणं गवाम्।

[ सप्तमकण्डिकायाम् ]

१। अथातः श्रवणाकर्म।
२। पौर्णमास्यां कृत्यम्।
३। पुरस्ताच्छालाया उपलिप्य शालाग्नेरग्निं प्रणयन्ति।
४। अभितस्त्वार्युपलिम्पति।
५। प्रतिदिशम्।
६। साधिकं प्रक्रमं।
७। अग्नौ कपालमाधाय सकृत् संगृहीतं यवमुष्टिं भृज्जत्यनुपदहन्।
८। पश्चाद्ग्नेरुलूखलं दृंहयित्वा बहुस्युद्वचम्।
९। सकृतान् सक्तून् कृत्वा चमस ओप्य शूर्पेणापिधाय निदधाति।
१०। दक्षिणपश्चिमे अन्तरेण सञ्चरः।
११। अस्तमिते चमसदर्व्यावादाय शूर्पं चातिप्रणीतस्यार्धं व्रजति।
१२। शूर्प सक्तूनावपति चमसे चोदकमादत्ते।
१३। सकृत् संगृहीतान् दर्व्या सक्तून् कृत्वा पूर्वं उपलिप्त उदकं निनीय बलिं निवपति यः प्राच्यां दिशि सर्पराज एष ते बलिरिति।
१४। उपनिनयत्येषां शेषं यथा बलिं न प्रवक्ष्यतीति।

१५। सव्यं बाहुमन्वावृत्य चमसदर्व्या-वभ्युक्ष्य प्रताप्यैवं दक्षिणेवं प्रतीच्येव-मुदीची यथालिङ्गमभ्यावर्तमानः।

१६। शूर्पेण शेषमग्नावोप्यानतिप्रणीतस्यार्धं व्रजति।

१७। पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्य नमः पृथिव्या इत्येतं मन्त्रं जपति।

१८। प्रदोषे पायसश्चरुः।

१९। तस्य जुहुयात् श्रवणाय विष्णवेऽग्नये प्रजापतये विश्वेभ्यो देवेभ्यः स्वाहेति।

२०। स्थालीपाकावृताऽन्यत्।

२१। उत्तरतोऽग्नेर्दर्भस्तम्बं समूलं प्रतिष्ठाप्य सोमो राजेत्येतं मन्त्रं जपति यां सन्धां समधत्तेति च।

२२। श्वस्ततोऽक्षतसक्तून् कारयित्वा नवे पात्रे पिधाय निदधाति।

२३। अहरहस्तूष्णीं बलीन् हरेत् सायं प्राग्घोमादाग्रहायण्याः।

## [ अष्टमकण्डिकायाम् ]

१। आश्वयुज्यां पौर्णमास्यां पृषातके पायसश्चरू रौद्रः।

२। तस्य जुहुयाद् आ नो मित्रावरुणेति प्रथमां मानस्तोक इति द्वितीयाम्।

३। गोनामभिश्च पृथक् काम्याऽसीत्येतत्-प्रभृतिभिः।

४। स्थालीपाकावृताऽन्यत्।

५। पृषातकं प्रदक्षिणमग्निं पर्याणीय ब्राह्मणानवेक्षयित्वा स्वयमवेक्षेत— तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतमिति।

६। ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा जातुषान् मणीन् सर्वौषधिमिश्रान् आबध्नीरन् स्वस्त्ययनार्थम्।

७। सायं गाः पृषातकं प्राशयित्वा सह-वत्सा वासयेत्।

८। स्वस्ति ह्याऽऽसां भवति।

९। नवयज्ञे पायसश्चरुरैन्द्राग्नः।

१०। तस्य मुख्यां हविराहुतिं हुत्वा चतसृभि-राज्याहुतिभिरभिजुहोति शतायुधाये-त्येतत्प्रभृतिभिः।

११। स्थालीपाकावृताऽन्यत्।

१२। हविरुच्छिष्टशेषं प्राशयेद् यावन्त उपेताः स्युः।

१३। सकृदपामुपस्तीर्य द्विश्चरोरवद्यति त्रि-र्भृगूणामपां चैवोपरिष्टात्।

१४। असंस्वादं निगिरेद् भद्रान् नः श्रेय इति।

१५। एवं त्रिः।

१६। तूष्णीं चतुर्थम्।

१७। भूय एवावदाय कामं तत्र संस्वाद-येरन्।

१८। आचान्तोदकाः प्रत्यभिमृशेरन् मुखं शिरोऽङ्गानीत्यनुलोममसोऽसीति।

१९। एतयैवाऽऽवृता श्यामाकयवानाम्।

२०। अग्निः प्राश्नातु प्रथम इति श्यामा-कानाम्।

२१। एतमुत्यं मधुना संयुतं यवमिति यवानाम्।

[ नवमकण्डिकायाम् ]

१। आग्रहायण्यां बलिहरणम्।

२। तत् श्रावणेनैव व्याख्यातम्।

३। नमः पृथिव्या इत्येतं मन्त्रं न जपति।

४। अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा दर्भान् शमीं वीरणां फलवतीमपामार्गं शिरीषमेतान्याहारयित्वा तूष्णीमक्षतसक्तूनामग्नौकृत्वा ब्राह्मणान् स्वस्ति वाच्यैतैः सम्भारैः प्रदक्षिणमग्न्यागारात् प्रभृति धूमं शातयन् गृहाननुपरीयात्।

५। उत्सृजेत् कृतार्थान् सम्भारान्।

६। जातशिलासु मणिकं प्रतिष्ठापयति वास्तोष्पत इत्येतेन द्विकेन सर्वेण।

७। द्वावुदकुम्भौ मणिक आसिञ्चेत् समन्या यन्तीत्येतयर्चा।

८। प्रदोषे पायसश्चरुः।

९। तस्य जुहुयात् प्रथमा ह व्युवास सेति।

१०। स्थालीपाकावृताऽन्यत्।

११। पश्चादग्नेर्बर्हिषि न्यञ्चौ पाणी प्रतिष्ठाप्य प्रति क्षत्र इत्येता व्याहृतीर्जपति।

१२। पश्चादग्नेः स्वस्तरमास्तारयेदुदगग्रैस्तृणैरुदक्प्रवणम्।

१३। तस्मिन्नहतान्यास्तरणान्यास्तीर्य दक्षिणतो गृहपतिरुपविशति।

१४। अनन्तरा अवरे यथाज्येष्ठम्।

१५। अनन्तराश्च भार्याः सजाताः।

१६। समुपविष्टेषु गृहपतिः स्वस्तरे न्यञ्चौ पाणी प्रतिष्ठाप्य स्योना पृथिवि नो भवेत्येतामृचं जपति।

१७। समासायां संविशन्ति दक्षिणैः पार्श्वैः।

१८। एवं त्रिरभ्यात्मममावृत्य।

१९। स्वस्त्ययनानि प्रयुज्य यथाज्ञानम्।

२०। अरिष्टं सामसंयोगमेके।

२१। अथ उपस्पृश्य यथार्थम्।

[ दशमकण्डिकायाम् ]

१। अष्टका रात्रिदेवता पुष्टिकर्मा।

२। आग्नेयी पित्र्या वा प्राजापत्यर्तुदेवता वैश्वदेवीति देवताविचाराः।

३। चतुरष्टको हेमन्तः।

४। ताः सर्वाः समांसाश्चिकीर्षेदिति कौत्सः।

५। त्र्यष्टक इत्यौद्गाहमानिः।

६। तथा गौतम-वार्कखण्डी।

७। योर्ध्वमाग्रहायण्यास्तामिस्राऽष्टमी ताम-पूपाष्टकेत्याचक्षते।

८। स्थालीपाकावृता तण्डुलानुपस्कृत्य चरुं श्रपयति।

९। अष्टौ चापूपान्।

१०। कपालेऽपरिवर्तयन्।

११। एककपालानमन्त्रानित्यौद्गाहमानिः।

१२। त्र्यम्बकप्रमाणान्।

१३। शृतानभिघार्योदगुद्वास्य प्रत्यभिघारयेत्।

१४। स्थालीपाकावृताऽवदाय चरोश्चापूपानां चाष्टकायै स्वाहेति जुहोति।

१५। स्थालीपाकावृताऽन्यत्।

१६। मध्या ऊर्ध्वमष्टम्यां गौः।

१७। तां सन्धिवेलासमीपं पुरस्तादग्नेरवस्थाप्योपस्थितायां जुहुयाद् यत् पशवः प्रध्यायतेति।

१८। हुत्वा चानुमन्त्रयेतानु त्वा माता मन्यतामिति।

१९। यवमतीभिरद्भिः प्रोक्षेदिन्द्राय त्वा जुष्टं प्रोक्षामीति।

२०। उल्मुकेन परिहरेत् परि वाजपतिः कविरिति।

२१। अपः पानाय दद्यात्।

२२। पीतशेषमधस्तात् पशोरवसिञ्चेद् आत्तं देवेभ्यो हविरिति।

२३। अथैनामुदगुत्सृज्य संज्ञपयन्ति।

२४। प्राक्शिरसमुदक्पदीं देवदैवत्ये।

२५। दक्षिणाशिरसं प्रत्यक्पदीं पितृदैवत्ये।

२६। संज्ञप्तायां जुहुयाद् यत् पशुर्मायुमकृतेति।

२७। पत्नी चोदकमादाय पशोः सर्वाणि स्रोतांसि प्रक्षालयेत्।

२८। अग्रेण नाभिं पवित्रे अन्तर्धायानुलोममाकृत्य वपामुद्धरन्ति।

२९। तां शाखाविशाखयोः काष्ठयोरवसज्याभ्युक्ष्य श्रपयेत्।

३०। प्रच्युतितायां विशसतेति ब्रूयात्।

३१। यथा न प्रागग्नेर्भूमिं शोणितं गच्छेत्।

३२। शृतामभिघार्योदगुद्वास्य प्रत्यभिघारयेत्।

३३। स्थालीपाकावृता वपामवदाय स्विष्टकृदावृता वाऽष्टकायै स्वाहेति जुहोति।

३४। स्थालीपाकावृताऽन्यत्।

चतुर्थप्रपाठकस्य

[ प्रथमकण्डिकायाम् ]

१। अनुप्रहरति वपाश्रपण्यौ।

२। प्राचीमेकशूलां प्रतीचीमितराम्।

३। अवदानान्यवदानानि सर्वाङ्गेभ्यः।

४। अन्यत्र वामाच्च सक्थ्नः क्लोम्नश्च।

५। वामं सक्थ्यन्वष्टक्याय निदध्यात्।

६। तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च मांसचरुञ्च पृथङ्मेक्षणाभ्यां प्रदक्षिणमुदायुवन्।

७। शृतावभिघार्योदगुद्वास्य प्रत्यभिघारयेत्।

८। कंसे रसमवासिच्य।

९। प्लक्षशाखास्वपि प्रस्तरेऽवदानानि कृत्वा।

१०। स्थालीपाकावृताऽवदानानां कंसेऽवद्यति।

११। स्विष्टकृतश्च पृथक्।

१२। चरोरुद्धृत्य बिल्वमात्रमवदानैः सह यूषेण सन्नयेत्।

१३। चतुर्गृहीतमाज्यं गृहीत्वाऽर्धर्चप्रथमया जुहुयादग्नावग्निरिति।

१४। सन्नीतात् तृतीयमात्रमवदाय द्वितीयातृतीयाभ्यां जुहोति।

१५। उत्तरस्यां स्वाहाकारं दधाति।

१६। एवमेवापरे चतुर्थीपञ्चमीभ्यां षष्ठीसप्तमीभ्याञ्च।

१७। शेषमवदाय सौविष्टकृतमष्टम्या जुहुयात्।

१८। मधु वा अल्पसम्भारतमः स्यादपि पशुनैव कुर्वीत।

१९। अपि वा स्थालीपाकं कुर्वीत।

२०। अपि वा गोर्ग्रासमाहरेत्।

२१। अपि वाऽरण्ये कक्षमुपाधाय ब्रूयादेषा मेऽष्टकेति।

२२। न त्वेव न कुर्वीत न त्वेव न कुर्वीत।

[ द्वितीयकण्डिकायाम् ]

१। श्वस्ततोऽन्वष्टक्यम्।

२। अपरेद्युर्वा।

३। दक्षिणपूर्वेऽष्टमदेशे परिवारयन्ति।

४। तथायतम्।

५। तथामुखैः कृत्यम्।

६। चतुरवरार्द्ध्यान् प्रक्रमान्।

७। पश्चादुपसञ्चारः।

८। उत्तरार्द्धे परिवृतस्य लक्षणं कृत्वाऽग्निं प्रणयन्ति।

९। पश्चादग्नेरुलूखलं दृंहयित्वा सकृत् संगृहीतं व्रीहिमुष्टिमवहन्ति सव्योत्तराभ्यां पाणिभ्याम्।

१०। यदा वितुषाः स्युः।

११। सकृदेव सुफलीकृतान् कुर्वीत।

१२। अथामुष्माच्च सक्थ्नो मांसपेशीमवकृत्य नवायां सूनायामणुशश्छेदयेत्।

१३। यथा मांसाभिघाराः पिण्डा भविष्यन्तीति।

१४। तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च मांसचरुञ्च पृथङ्मेक्षणाभ्यां प्रसव्यमुदायुवन्।

१५। शृतावभिघार्य दक्षिणोद्वास्य न प्रत्यभिघारयेत्।

१६। दक्षिणार्द्धे परिवृतस्य तिस्रः कर्षूः खानयेत् पूर्वोपक्रमाः।

१७। प्रादेशायामाश्चतुरङ्गुलपृथ्वीस्तथाऽवखाताः।

१८। पूर्वस्याः कर्ष्वाः पुरस्ताल्लक्षणं कृत्वाऽग्निं प्रणयन्ति।

१९। अपरेण कर्षूः पर्य्याहृत्य लक्षणे निदध्यात्।

२०। सकृदाच्छिन्नं दर्भमुष्टिं स्तृणोति।

२१। कर्षूश्च।

२२। पूर्वोपक्रमाः।

२३। पश्चात् कर्षूणां स्रस्तरमास्तारयेत् दक्षिणाग्रैः कुशैर्दक्षिणाप्रवणम्।

२४। बृसीञ्चोपदध्यात्।

२५। तत्रास्मा आहरन्त्येकैकशः सव्यं बाहुमनु।

२६। चरुस्थाल्यौ मेक्षणे कंसं दर्वीमुदकमिति।

२७। पत्नी बर्हिषि शिलां निधाय स्थगरं पिनष्टि।

२८। तस्यां चैवाञ्जनं निघृष्य तिस्रो दर्भपिञ्जुलीरञ्जति सान्तराः।

२९। तैलञ्चोपकल्पयेत्।

३०। क्षौमदशाञ्च।

३१। शुचौ देशे ब्राह्मणाननिन्द्यानयुग्मानुदङ्मुखानुपवेश्य।

३२। दर्भान् प्रदाय।

३३। उदकपूर्वं तिलोदकं ददाति पितुर्नाम गृहीत्वाऽसावेतत् ते तिलोदकं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

३४। अप उपस्पृश्यैवमेवेतरयोः।

३५। तथा गन्धान्।

३६। अग्नौ करिष्यामीत्यामन्त्रणं होष्यतः।

३७। कुर्वित्युक्ते कंसे चरुं समवदाय मेक्षणेनोपघातं जुहुयात् स्वाहा सोमाय पितृमत इति पूर्वां स्वाहाऽग्नये कव्यवाहनायेत्युत्तराम्।

[ तृतीयकण्डिकायाम् ]

१। अत ऊर्द्ध्वं प्राचीनावीतिना वाग्यतेन कृत्यम्।

२। सव्येन पाणिना दर्भपिञ्जूलीं गृहीत्वा दक्षिणायां लेखामुल्लिखेदपहता असुरा इति।

३। सव्येनैव पाणिनोल्मुकं गृहीत्वा दक्षिणार्धे कर्षूणां निदध्याद् ये रूपाणि प्रतिमुञ्चमाना इति।

४। अथ पितॄनावाहयत्येत पितरः सोम्यास इति।

५। अथोदपात्रान् कर्षूषु निदध्यात्।

६। सव्येनैव पाणिनोदपात्रं गृहीत्वाऽवसलवि पूर्वस्यां कर्ष्वां दर्भेषु निनयेत् पितुर्नाम गृहीत्वाऽसाववनेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

७। अथ उपस्पृश्यैवमेवेतरयोः।

८। सव्येनैव पाणिना दर्वीं गृहीत्वा सन्नीतात् तृतीयमात्रमवदायावसलवि पूर्वस्यां कर्ष्वां दर्भेषु निदध्यात् पितुर्नाम गृहीत्वाऽसावेष ते पिण्डो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

९। अथ उपस्पृश्यैवमेवेतरयोः।

१०। यदि नामानि न विद्यात् स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात्, स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयम्, स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम्।

११। निधाय जपत्यत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति।

१२। अपपर्यावृत्य पुरोच्छ्वासादभिपर्यावर्त्तमानो जपेदमीमदन्त पितरो यथाभागमावृषायिषतेति।

१३। सव्येनैव पाणिना दर्भपिञ्जूलीं गृहीत्वाऽवसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वाऽसावेतत् ते आञ्जनं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

१४। अथ उपस्पृश्यैवमेवेतरयोः।

१५। तथा तैलम्।

१६। तथा सुरभि।

१७। अथ निह्नुते।

१८। पूर्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणी कृत्वा नमो वः पितरो जीवाय नमो वः पितरः शूषायेति।

१९। मध्यमायां सव्योत्तानौ नमो वः पितरो घोराय नमो वः पितरो रसायेति।

२०। उत्तमायां दक्षिणोत्तानौ नमो वः पितरः स्वधायै नमो वः पितरो मन्यव इति।

२१। अथाञ्जलिकृतो जपति नमो वः पितरः पितरो नमो वः इति।

२२। गृहानवेक्षते गृहान् नः पितरो दत्तेति।

२३। पिण्डानवेक्षते सदो वः पितरो देष्मेति।

२४। सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वाऽवसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात पितुर्नाम गृहीत्वाऽसावेतत् ते वासो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

२५। अथ उपस्पृश्यैवमेवेतरयोः।

२६। सव्येनैव पाणिनोदपात्रं गृहीत्वाऽवसलवि पिण्डान परिषिञ्चत्यूर्जं वहन्तीरिति।

२७। मध्यमं पिण्डं पत्नी पुत्रकामा प्राश्नीयात् आधत्त पितरो गर्भमिति।

२८। यो वा तेषां ब्राह्मणानामुच्छिष्टभाक् स्यात्।

२९। अभून्नो दूतो हविषो जातवेदा इत्युल्मुकमग्निरभ्युक्ष्य।

३०। द्वन्द्वं पात्राणि प्रक्षाल्य प्रत्यतिहारयेत्।

३१। अप्सु पिण्डान् सादयेत्।

३२। प्रणीते वाऽग्नौ।

३३। ब्राह्मणं वा भोजयेद् गवे वा दद्यात्।

३४। वृद्धिपूर्तेषु युग्मानाशयेत्।

३५। प्रदक्षिणमुपचारः।

३६। यवैस्तिलार्थः।

[ चतुर्थकण्डिकायाम् ]

१। अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञो व्याख्यातः।

२। अमावास्यायां तत् श्राद्धम्।

३। इतरदन्वाहार्यम्।

४। मासीनम्।

५। दक्षिणाग्नौ हविषः संस्करणम्।

६। ततश्चैवातिप्रणयः।

७। शालाग्नावनाहिताग्नेः।

८। एका कर्षूः।

९। तस्या दक्षिणतोऽग्नेः स्थानम्।

१०। नात्रोल्मुकनिधानम्।

११। न स्वस्तरः।

१२। नाञ्जनाभ्यञ्जने।

१३। न सुरभि।

१४। न निह्नवनम्।

१५। उदपात्रान्तः।

१६। वासस्तु निदध्यात्।

१७। माघ्या ऊर्ध्वमष्टम्यां स्थालीपाकः।

१८। तस्य जुहुयाद् अष्टकायै स्वाहेति जुहोति।

१९। स्थालीपाकावृताऽन्यत्।

२०। शाकं व्यञ्जनमन्वाहार्यम्।

२१। अथ पितृदैवत्येषु पशुषु—वह वपां जातवेदः पितृभ्य इति वपां जुहुयात्।

२२। देवदैवत्येषु जातवेदो वपया गच्छ देवानिति।

२३। अनाज्ञातेषु तथादेशं यथाऽष्टकायै स्वाहेति जुहोति।

२४। स्थालीपाकावृताऽन्यत्।

२५। ऋणे प्रज्ञायमाने गोलकानां मध्यमपर्णेन जुहुयात्—यत् कुसीदमिति।

२६। अथातो हलाभियोगः।

२७। पुण्ये नक्षत्रे स्थालीपाकं श्रपयित्वैताभ्यो देवताभ्यो जुहुयात् इन्द्राय मरुद्भ्यः पर्जन्यायाशन्यै भगाय।

२८। सीतामाशामरडामनघां च यजेत।

२९। एता एव देवताः सीतायज्ञ-खलयज्ञ-प्रवपण-प्रलवन पर्ययणेषु।

३०। आखुराजं चोत्करेषु यजेत।

३१। इन्द्राण्याः स्थालीपाकः।

३२। तस्य जुहुयादेकाष्टका तपसा तप्यमानेति।

३३। स्थालीपाकावृताऽन्यत् स्थालीपाकावृताऽन्यत्।

[ पञ्चमकण्डिकायाम् ]

१। काम्येष्वत ऊर्ध्वम्।

२। पूर्वेषु चैके।

३। पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्येदं भूमेर्भजामह इति।

४। वस्वन्तं रात्रौ धनमिति दिवा।

५। इमं स्तोममिति तृचेन परिसमूहेत्।

६। वैरूपाक्षः पुरस्ताद्धोमानाम्।

७। काम्येषु च प्रपदः।

८। तपश्च तेजश्चेति जपित्वा प्राणायाममाश्रम्यार्थमना वैरूपाक्षमारभ्योच्छ्वसेत्।

९। काम्येषु त्रिरात्राभोजनम्।

१०। त्रीणि वा भक्तानि।

११। नित्यप्रयुक्तानान्तु प्रथमप्रयोगेषु।

१२। उपोष्य तु यजनीयप्रयोगेषु।

१३। उपरिष्टाद्वैरूपं सान्निपातिकम्।

१४। अरण्ये प्रपदं प्रयुञ्जीत दर्भेष्वासीनः प्राक्कूलेषु ब्रह्मवर्चसकामः।

१५। उदक्कूलेषु पुत्रपशुकामः।

१६। उभयेषूभयकामः।

१७। पशुस्वस्त्ययनकामो व्रीहियवहोमं प्रयुञ्जीत सहस्रबाहुर्गौपत्य इति।

१८। कौतोमतेन महावृक्षफलानि परिजप्य प्रयच्छेत्।

१९। यस्याऽऽत्मनि प्रसादमिच्छेत् तस्मै।

२०। एकभूर्वाल्यात्मनो युग्मानि कुर्यात्।

२१। वृक्ष इवेति पञ्चर्चः।

२२। तस्मिन् प्रथमं पार्थिवं कर्म।

२३। अर्धमासमभुक्त्वा।

२४। अभक्षो वा पेयामन्यतरं कालं यत्राऽऽस्मानं परिपश्येत्।

२५। एतद् व्रतमर्धमासव्रतेषु।

२६। पौर्णमास्यां रात्रावविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षततण्डुलानृगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके।

२७। अथापरम्।

२८। प्रथमयाऽऽदित्यमुपतिष्ठेत भोगकामोऽर्थपतिश्चक्षुर्विषये तिष्ठन्स्वर्थः।

२९। द्वितीययाऽऽदित्ये परिविष्यमाणेऽक्षततण्डुलान् जुहुयाद् गृहपशुस्वस्त्ययनकामः।

३०। तृतीयया चन्द्रमसि तिलतण्डुलान् क्षुद्रपशुस्वस्त्ययनकामः।

३१। चतुर्थ्याऽऽदित्यमुपस्थायार्थान् प्रपद्येत स्वस्त्यर्थवानागच्छति।

३२। पञ्चम्याऽऽदित्यमुपस्थाय गृहान् प्रपद्येत स्वस्ति गृहानागच्छति स्वस्ति गृहानागच्छति।

[ अष्टकापिण्डकायाम् ]

१। भूरित्यन्नकाममार्ग नित्यं प्रयुञ्जीत।

२। न पापरोगान्नाभिचाराद् भयम्।

३। अलक्ष्मीनिर्णोदः।

४। यजनीयप्रयोगः।

५। मूर्धोऽधि म इत्येकैकया।

६। या तिरश्चीति सप्तमी।

७। वामदेव्यर्चः।

८। महाव्याहृतयः।

९। प्रजापत इत्युत्तमा।

१०। यशोऽहं भवामीति यशस्काम आदित्यमुपतिष्ठेत पूर्वाह्णमध्यन्दिनापराह्णेषु प्रातरह्नस्येति सन्नामयन्।

११। सन्धिवेलयोरुपस्थानं स्वस्त्ययनमादित्यनावमित्युद्यन्तं स्वादित्यानूद्यासमिति पूर्वाह्णे प्रतितिष्ठन्तं स्वादित्यानुप्रतितिष्ठासमित्यपराह्णे।

१२। आचितशतकामोऽर्धमासव्रतस्तामिस्रादौ व्रीहिकांसौदनं ब्राह्मणान् भोजयित्वा।

१३। तस्य कणानपरासु सन्धिवेलासु प्रत्यग्ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमा-

धायाऽऽदित्यमभिमुखो जुहुयात् भकाय स्वाहा भल्लाय स्वाहेति ।

१४ । एतयैवाऽऽवृताऽपरौ तामिस्रौ ।

१५ । तामिस्रान्तरेषु ब्रह्मचारी स्याद्वा समापनाद्वा समापनात् ।

[ सप्तमकण्डिकायाम् ]

१ । अवसानं जोषयेत ।

२ । समं लोमशमविभ्रंशि ।

३ । प्राच्य उदीच्यो वा यत्राऽऽपः प्रवर्त्तेरन् ।

४ । अक्षीरिण्योऽकण्टका अकटुका यत्रौषधयः स्युः ।

५ । गौरपांसु ब्राह्मणस्य ।

६ । लोहितपांसु क्षत्रियस्य ।

७ । कृष्णपांसु वैश्यस्य ।

८ । स्थिराघातमेकवर्णमशुष्कमनूषरममरुपरिहितमकिलिनम् ।

९ । दर्भसम्मितं ब्रह्मवर्चसकामस्य ।

१० । बृहत्तृणैर्बलकामस्य ।

११ । मृदुतृणैः पशुकामस्य ।

१२ । शाद्वासम्मितं मण्डलद्वीपसम्मितं वा ।

१३ । यत्र वा श्वभ्राः स्वयं खाताः सर्वतोऽभिमुखाः स्युः ।

१४ । तत्रावसानं प्राग्द्वारं यशस्कामो बलकामः कुर्वीत ।

१५ । उदग्द्वारं पुत्रपशुकामः ।

१६ । दक्षिणद्वारं सर्वकामः ।

१७ । न प्रत्यग्द्वारं कुर्वीत ।

१८ । अनुद्वारं च गृहद्वारम् ।

१९ । यथा न संलोकी स्यात् ।

२० । वर्जयेत् पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा । न्यग्रोधमपराद् देशाद् उत्तराच्चाप्युदुम्बरम् ॥

२१ । अश्वत्थादग्निभयं ब्रूयात् प्लक्षाद् ब्रूयात् प्रमायुकान् । न्यग्रोधाच्छस्त्रसंपीडामक्ष्यामयमुदुम्बरात् ॥

२२ । आदित्यदेवतोऽश्वत्थः प्लक्षो यमदेवतः । न्यग्रोधो वारुणो वृक्षः प्राजापत्य उदुम्बरः ॥

२३ । तानस्वत्थानस्थान् कुर्वीत ।

२४ । एताश्चैव देवता अभियजेत ।

२५ । मध्येऽग्निमुपसमाधाय कृष्णया गवा यजेत ।

२६ । अजेन वा श्वेतेन ।

२७ । सपायसाभ्याम् ।

२८ । पायसेन वा ।

२९ । वसामाज्यं मांसं पायसमिति संयुय ।

३० । अष्टगृहीतं गृहीत्वा जुहुयात् ।

३१ । वास्तोष्पत इति प्रथमा वामदेव्यर्चो महाव्याहृतय इत्युत्तमा ।

३२ । हुत्वा दश बलीन् हरेत् ।

३३ । प्रदक्षिणं प्रतिदिशम् ।

३४ । अवान्तरदेशेषु ।

३५ । आनुपूर्व्येणाव्यतिहरन् ।

३६ । इन्द्रायेति पुरस्ताद् वायव इत्यवान्तरदेशे यमायेति दक्षिणतः पितृभ्य इत्यवान्तरदेशे वरुणायेति पश्चान्महाराजायेत्यवान्तरदेशे सोमायेत्युत्तरतो महेन्द्रायेत्यवान्तरदेशे वासुकय इत्यधस्तादूर्ध्वं नमो ब्रह्मण इति दिवि ।

३७ । प्राक्पूर्वाबाचीभ्योऽहरहर्नित्यप्रयोगः ।

३८ । संवत्सरे संवत्सरे नवयज्ञयोर्वा ।

[ अष्टमकण्डिकायाम् ]

१। श्रवणाग्रहायणीकर्मणोरक्षताञ्छिष्ट्वा ।

२। प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधाय हयं राक इत्येकैकयाऽञ्जलिना जुहुयात् ।

३। प्राङुत्क्रम्य वसुवन एधीत्युच्चैरुदीक्षमाणो देवजनेभ्यः ।

४। तिर्यङ्ङितरजनेभ्योऽर्वाङ्वेक्षमाणः ।

५। अनवेक्षमाणः प्रत्येत्याक्षतान् प्राश्नीयात् ।

६। उपेतैरमात्यैः सह ।

७। स्वस्त्ययनम् ।

८। यशस्कामो शङ्खेति पृथगाहुती व्रीहियवहोमौ प्रयुञ्जीत ।

९। यस्याऽऽत्मनि प्रमादमिच्छेत् तस्य ।

१०। नित्यप्रयोगः ।

११। एकाक्षर्यामर्धमासव्रते द्वे कर्मणी ।

१२। पौर्णमास्यां रात्रौ खदिरशङ्कुशतं जुहुयादायुष्कामः ।

१३। आयसान् वधकामः ।

१४। अथापरम् ।

१५। प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथे पर्वते वारण्यैर्गोमयैः स्थण्डिलं प्रताप्यापोह्याङ्गारान् मन्त्रं मनसाऽनुद्रुत्य सर्पिरास्येन जुहुयात् ।

१६। ज्वलन्त्यां द्वादश ग्रामाः ।

१७। धूमे अवराद्धाः ।

१८। अमोघं कर्मेत्याचक्षते ।

१९। वृत्यविच्छित्तिकामो हरितगोमयान् सायं प्रातर्जुहुयात् ।

२०। त्रिरात्रोपोषितः पण्यहोमं जुहुयादिदमहमिमं विश्वकर्माणमिति ।

२१। वाससस्तन्तून् गोवालान् ।

२२। एवमितरेभ्यः पण्येभ्यः ।

२३। पूर्णहोमो यजनीयप्रयोगः ।

२४। इन्द्रामवदादिति च ।

२५। यशस्कामः पूर्वां सहायकाम उत्तराम् ।

[ नवमकण्डिकायाम् ]

१। पुत्राधिपत्यकामोऽष्टरात्रमभुक्त्वा ।

२। औदुम्बरान् सुवचमसेध्मानुपकल्पयित्वा ।

३। प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधाय ।

४। आज्यमादित्यमभिमुखो जुहुयात्— अन्नं वा एकच्छन्दस्यं श्रीर्वा एषेति च ।

५। अन्नस्य घृतमेवेति ग्रामे तृतीयाम् ।

६। गोष्ठे पशुकामः ।

७। त्रिवृत्यमाने चीवरम् ।

८। प्रतिभयेऽध्वनि वस्त्रदशानां ग्रन्थीन् बध्नीत ।

९। उपेत्य वसनवतः स्वाहाकारान्ताभिः ।

१०। महायानाच्च स्वस्त्ययनम् ।

११। आचितसहस्रकामोऽक्षतसक्त्वाहुतिसहस्रं जुहुयात् ।

१२। पशुकामो वत्समिथुनयोः पुरीषाहुतिसहस्रं जुहुयात् ।

१३। अविमिथुनयोः क्षुद्रपशुकामः ।

१४। वृत्यविच्छित्तिकामः कम्बूकान् सायं प्रातर्जुहुयात् क्षुधे स्वाहा क्षुत्पिपासाभ्यां स्वाहेति ।

५। मा भेषीर्न मरिष्यसीति विषवता दष्टमद्भिरभ्युक्षञ्जपेत् ।

६। तुर गोपायेति स्नातकः संवेशनवेलायां वैणवं दण्डमुपनिदधीत ।

७। स्वस्त्ययनार्थम् ।

८। हतस्ते अत्रिणा क्रिमिरिति क्रिमिमन्तं देशमद्भिरभ्युक्षञ्जपेत् ।

१०। पशूनां चेच्चिकीर्षेदपराह्णे सीतालोष्टमाहृत्य वेहायसं निदध्यात् ।

११। तस्य पूर्वाह्णे पांशुभिः परिकिरञ्जपेत् ।

[ दशमकण्डिकायाम् ]

१। उत्तरतो गां बद्धोपतिष्ठेरन् अर्हणा पुत्रवाससेति ।

२। इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामीति प्रतितिष्ठमानो जपेत् ।

३। यत्रैनमर्हयिष्यन्तः स्युः ।

४। यदा वाऽर्हेयुः ।

५। विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिस्त्रिर्वेदयेरन् ।

६। या ओषधीरित्युदग्रं विष्टरमास्तीर्याऽभ्युपविशेत् ।

७। द्वौ चेत् पृथग्गृभ्याम् ।

८। पादयोरन्यम् ।

९। यतो देवीरित्यपः प्रेक्षेत ।

१०। सव्यं पादमवनेनिज इति सव्यं पादं प्रक्षालयेत् दक्षिणं पादमवनेनिज इति दक्षिणं पादं प्रक्षालयेत् ।

११। पूर्वमन्यमपरमन्यमित्युभौ शेषेण ।

१२। अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात् ।

१३। यशोऽसीत्याचमनीयमाचामेत् ।

१४। यशसो यशोऽसीति मधुपर्कं प्रतिगृह्णीयात् ।

१५। यशसो भक्षोऽसि महसो भक्षोऽसि श्रीर्भक्षोऽसि श्रियं मयि धेहीति त्रिः पिबेत् ।

१६। तूष्णीं चतुर्थम् ।

१७। भूय एवाभिपाय शेषं ब्राह्मणाय दद्यात् ।

१८। आचान्तोदकाय गौरिति नापितस्त्रिब्रूयात् ।

१९। मुञ्च गां वरुणपाशाद् द्विषन्तं मेऽभिधेहीति तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकम् इति ब्रूयात् ।

२०। माता रुद्राणामित्यनुमन्त्रयेत ।

२१। अन्यत्र यज्ञात् ।

२२। कुरुतेत्यधियज्ञम् ।

२३। षडर्घ्यार्हा भवन्ति ।

२४। आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति ।

२५। परिसंवत्सरानर्हयेयुः ।

२६। पुनर्यज्ञविवाहयोश्च पुनर्यज्ञविवाहयोश्च ।

# गोभिलीयश्राद्धकल्प-सूत्रपाठः

[ प्रथमकण्डिकायाम् ]

१। अथ श्राद्धम्।

२। अमावस्यायां पितृभ्यो दद्यात्।

३। पञ्चमीप्रभृति वाऽपरपक्षस्य।

४। यदहरुपपद्येत।

५। तदहर्ब्राह्मणानामन्त्र्य पूर्वेद्युर्वा।

६। अनिन्द्येनाऽऽमन्त्रितो नापक्रामेत्।

७। स्नातकान्।

८। एके यतीन्।

९। गृहस्थसाधून् वा।

१०। श्रोत्रियान्।

११। वृद्धान्।

१२। अनवद्यान्।

१३। स्वकर्मस्थान्।

१४। अभावेऽपि शिष्यान् स्वाचारान्।

१५। द्विर्नग्न-शुक्ल विक्लिध-श्यावदन्त-विद्ध-प्रजनन व्याधिताधिक-व्यङ्गि-श्वित्रि-कुष्ठि कुनखिवर्जम्।

१६। स्नातान् शुचीनाचान्तान् प्राङ्मुखा-नुपवेश्य दैवे युग्मान्।

१७। अयुग्मान् यथाशक्ति पित्र्य एकैकस्योदङ् मुखान्।

१८। द्वौ वा दैवे त्रीन् पित्र्ये।

१९। एकैकमुभयत्र वा।

२०। मातामहानाञ्चैवम्।

२१। तन्त्रं वा वैश्वदेविकम्।

२२। श्वैषपूर्वं श्राद्धं कुर्वीत।

२३। पिण्डपितृयज्ञवदुपचारः।

२४। पित्र्ये द्विगुणांस्तु दर्भान्।

२५। पवित्रपाणिर्दद्यादासीनः।

२६। सर्वत्र प्रश्नेषु पंक्तिमूर्धन्यं पृच्छति।

२७। सर्वान् वा।

[ द्वितीयकण्डिकायाम् ]

१। आसनेषु दर्भानास्तीर्य।

२। यवानादायोङ्कारं कृत्वा विश्वान् देवा-नावाहयिष्ये इति पृच्छति।

३। आवाहयेत्यनुज्ञातः विश्वे देवास आगत। शृणुता म इमं हवमेदं बर्हि-र्निषीदत, विश्वे देवाः शृणुतेमं हवं मे ये अन्तरीक्षे य उप द्यवि ष्ठ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्। ओषधयः संवदन्ते सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मण-स्तं राजन् पारयामसीति।

४। अथ पितॄनावाहयिष्य इति पृच्छति।

५। आवाहयेत्यनुज्ञातः उशन्तस्त्वा निधी-मह्युशन्तः समिधीमहि उशन्नुशत आवह पितॄन् हविषे अत्तवे। एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्वी-णेभिर्दत्तास्मभ्यं द्रविणेह भद्रं रयिञ्च नः सर्ववीरं नियच्छत। आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मानिति।

६। अपहता असुरा रक्षांसि वेदिषद इति तिलैरन्वकीर्णान् उपस्पृशति।

७। यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेषु।

८। एकैकस्मिन्नप आसिञ्चति—शन्नो देवीरिति।

९। एकैकस्मिन्नेव यवानावपति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति।

१०। पितृनेकैकस्मिन्नेव तिलानावपति—तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहेति।

११। सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमेषु वा।

१२। पत्रपुटेषु।

१३। यानि वा विद्यन्ते।

१४। एकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु।

१५। या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः सुहवा भवन्तु असाविनन् ते अर्घ्यं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

१६। अप उपस्पृश्यैवमेवेतरयोः।

१७। प्रथमे पात्रे संस्रवान् समवनीय पात्रं न्युब्जं कृत्वा शुन्धन्तां लोकाः पितृषदनाः पितृषदनमसि पितृभ्यः स्थानमसीति।

अत्र गन्धपुष्पधूपदीपाच्छादनानां प्रदानम्।

उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्यामीति।

कुर्वित्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा।

२१। हुतशेषं ब्राह्मणाय दत्त्वा।

२२। पात्रमालभ्य जपेत्—पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहेति।

२३। वैष्णव्यर्चा यजुषा वाऽङ्गुष्ठमन्नेऽवधाय।

२४। सकृत् सकृदपो दत्त्वा।

२५। मधु वाता इति तृचं जपित्वा मधु च त्रिर्जप्त्वाऽश्नत्सु जपेत्।

२६। व्याहृतिपूर्वां सावित्रीं तस्यादैव गायत्रं पित्र्याञ्च संहितां माधुच्छन्दसीञ्च।

२७। स्वर्गे लोके महीयते दत्तञ्चास्याक्षयं भवति।

२८। तृप्तिं ज्ञात्वाऽन्नं प्रकीर्य ये अग्निदग्धा जीवा येऽप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति।

२९। सकृत् सकृदपो दत्त्वा पुनर्मधुवातां मधु च त्रिर्जप्त्वा तृप्ताः स्थेति पृच्छति।

३०। तृप्ताः स्म इत्युक्ते शेषमन्नमनुज्ञाप्य।

३१। सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवनेनिज्य दद्यात्।

३२। आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकञ्च दद्यात्।

३३। अघोराः पितरः सन्तु, सन्त्वित्युक्ते, गोत्रं नो वर्धताम्, वर्धतामित्युक्ते, स्वधानिनयनीयान् दर्भान् सपवित्रानास्तीर्य, स्वधां वाचयिष्य इति पृच्छति।

३४। वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामिति।

३५ । अस्तु स्वधेत्युक्ते स्वधानिनयनीये धारां दद्यादूर्जं वहन्तीरित्युत्तानं पात्रं कृत्वा ।

३६ । विश्वे देवाः प्रीयन्तामिति दैवे वाचयित्वा पिण्डपात्राणि चालयित्वा यथाशक्ति दक्षिणां दद्यात् ।

३७ । दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद् बहु देयञ्च नो अस्तु, अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि, याचितारश्च नः सन्तु मा च याचिष्म कञ्चनेत्येता एवाऽऽशिषः सन्तु ।

३८ । सन्त्वित्युक्ते स्वस्ति वाच्याऽऽशिषः प्रतिगृह्य ।

३९ । वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः, अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ।

४० । आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे, आमा गन्तां पितरा मातरा चामा सोमो अमृतत्वेन गम्यादित्यासीमान्तमनुव्रज्याभिवाद्य प्रदक्षिणीकृत्य वामदेव्यं गीत्वा प्रविशति ।

[ तृतीयकण्डिकायाम् ]

१ । अथैकोद्दिष्टम् ।

२ । एकं पवित्रम् ।

३ । एकोऽर्घ्यः ।

४ । एकः पिण्डः ।

५ । नाऽऽवाहनम् ।

६ । नाग्नौकरणम् ।

७ । नात्र विश्वे देवाः ।

८ । स्वदितमिति तृप्तिप्रश्नः ।

९ । उपतिष्ठतामित्यक्षय्यस्थाने ।

१० । अभिरम्यतामिति विसर्गः ।

११ । अथ सपिण्डीकरणम् ।

१२ । पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा ।

१३ । यदहर्वा वृद्धिरापद्येत ।

१४ । तदहश्चत्वार्युदकपात्राणि सतिलगन्धोदकानि पूरयित्वा ।

१५ । त्रीणि पितॄणामेकं प्रेतस्य ।

१६ । प्रेतपात्रं पितृपात्रेष्वासिञ्चति—ये समानाः समनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् । ये समानाः समनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समा इति ।

[ चतुर्थकण्डिकायाम् ]

१ । अथाऽऽभ्युदयिके श्राद्धे ।

२ । युग्मानाशयेत् ।

३ । प्रदक्षिणमुपचारः ।

४ । ऋजवो दर्भाः ।

५ । यवैस्तिलार्थः ।

६ । सम्पन्नमिति तृप्तिप्रश्नः ।

७ । दधिबदराक्षतमिश्राः पिण्डाः ।

८ । नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने ।

९ । दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः, पितामहेभ्यः, प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वाहेत्यनाम् ।

१० । न स्वधां प्रयुञ्जीत ।

११ । श्रद्धान्वितः श्राद्धं कुर्वीत ।

शाकेनापि नापरपक्षमतिक्रामेत् ।

मासि मासि वोऽशनमिति श्रुतेरिति श्रुतेरिति ।

[ पञ्चमकण्डिकायाम् ]

अथ धर्माः ।

तद्दहस्तत्परः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यात् ।

अध्व-मैथुन-श्रम-स्वाध्यायान् वर्जयेत् ।

आवाहनादिवर्जं वाग्यतः ।

ओपस्पर्शनात् ।

अपि वान्नोद्धाहरन्ति ।

यश्च व्याकुरुते शब्दान् यश्च मीमांसतेऽध्वरम् । सामस्वरविधिज्ञश्च पंक्तिपावनपावनाः, इति ।

वागीश्वरो याज्ञिकश्च पंक्तिपावनपावनः, इति च ।

नियोज्यानामभावेऽप्येकं वेदविदं पंक्तिमूर्धनि नियुञ्जात कामभितरान् ।

अवेदविद्भिराक्रान्तां पंक्तिं योजनमायताम् । पुनाति वेदविद्येको नियुक्तः पंक्तिमूर्धनि नियुक्तः पंक्तिमूर्धनि ॥

[ षष्ठकण्डिकायाम् ]

अथ तृप्तीः ।

ग्राम्याभिरोषधीभिर्मासं तृप्तिः ।

तदलाभे आरण्याभिः ।

मूलफलैरद्भिर्वा ।

महान्नेनोत्तरांस्तर्पयन्ति ।

छागोस्रमेषा आलभ्याः ।

शेषाणि क्रीत्वा लब्ध्वा वा स्वयं मृतानां वा आहृत्य पचेत् ।

८ । मासद्वयं मत्स्यैः ।

९ । मासत्रयं हारिणेन मृगमांसेन ।

१० । चतुरः शाकुनेन ।

११ । पञ्च रौरवेण ।

१२ । षट् छागेन ।

१३ । सप्त कौर्मेण ।

१४ । अष्टौ वाराहेण ।

१५ । नव मेषमांसेन ।

१६ । दश माहिषेण ।

१७ । एकादश पार्षतेन ।

१८ । संवत्सरन्तु गव्येन पयसा ।

१९ । पायसेन वा ।

२० । वार्ध्रीणसस्य मांसेन द्वादश वर्षाणि ।

[ सप्तमकण्डिकायाम् ]

१ । अथाक्षय्यतृप्तीः ।

२ । खड्गः ।

३ । कालशाकम् ।

४ । लोहितच्छागः ।

५ । मधु ।

६ । महाशल्कः ।

७ । वर्षासु मघाश्राद्धम् ।

८ । हस्तिच्छायायाञ्च ।

९ । मन्त्राध्यायिनः ।

१० । पूताः ।

११ । शाखाध्यायी ।

१२ । षडङ्गवित् ।

१३ । ज्येष्ठसामगः ।

१४ । अपि गायत्रीसारमात्रः ।

१५ । त्रिणाचिकेतः ।

१६ । त्रिमधुः ।

१७। त्रिसुपर्णः।

१८। पञ्चाग्निः।

१९। स्नातकः।

२०। मन्त्रब्राह्मणवित्।

२१। धर्मज्ञः।

२२। ब्राह्मोढापुत्रश्च।

२३। इति पंक्तिपावनाः।

२४। आ सहस्रात् पंक्तिं पुनातीति वचना-दासहस्रात् पंक्तिं पुनातीति वचनात्।

[ अष्टमकण्डिकायाम् ]

१। अथ काम्यानां तिथयः।

२। पुत्रोऽभिरूपः प्रतिपदि।

३। द्वितीयायां स्त्रीजन्मा।

४। अश्वास्तृतीयायाम्।

५। चतुर्थ्यां क्षुद्रपशवः।

६। पञ्चम्यां पुत्रभागी।

७। द्यूतर्द्धिः षष्ठ्याम्।

८। कृषिः सप्तम्याम्।

९। अष्टम्यां वाणिज्यम्।

१०। आरोग्यं नवम्याम्।

११। दशम्यां गावः।

१२। परिचारका एकादश्याम्।

१३। द्वादश्यां धनधान्यं कुप्यं हिरण्यञ्च।

१४। ज्ञातिश्रैष्ठ्यञ्च त्रयोदश्याम्।

१५। युवानस्तत्र म्रियन्ते।

१६। शस्त्रहतस्य चतुर्दश्याम्।

१७। अमावस्यायां सर्वमित्यमावस्यायां सर्वमिति।

---

# गोभिलीयसन्ध्यासूत्रपाठः

[ प्रथमकण्डिकायाम् ]

१। अथातः सन्ध्योपासनविधिं व्याख्यास्यामः।

२। सुप्रक्षालितपाणिपादवदन उपविश्योपस्पृश्य।

३। प्रागग्रेषु दर्भेषु प्राङ्मुख उदङ्मुखो वा बद्धशिखी यज्ञोपवीती।

४। तत ओंपूर्वा भूर्भुवः स्वर्महर्जनस्तपः सत्यमिति सप्त व्याहृतयः सप्रणवा गायत्र्यापोज्योती रसोऽमृतमिति शिरः।

५। दशप्रणवसंयुक्तस्त्रिरभ्यस्तः पूरककुम्भकरेचकाख्यः प्राणायामः।

६। एवं त्रीन् कृत्वा सप्त वा षोडश वा आचामेत्।

७। ततो मार्जनम्।

८। प्रणवेन महाव्याहृतिभिस्तिसृभिर्गायत्र्या आपोहिष्ठाभिस्तिसृभिः।

९। अथोदकं हस्ते कृत्वा तत्र नासिकामवधायाऽऽयतासुरनायतासुर्वा जपेदृतञ्च सत्यञ्चेति।

१०। त्रीनुदकाञ्जलीनादित्यं प्रति क्षिपेत् सावित्र्या।

११। तत उपस्थानम् उदु त्यं चित्रमिति।

१२। ध्यानयुक्तमावर्तयेदोंपूर्वां गायत्रीम्।

१३। अष्टकृत्व एकादशकृत्वो द्वादशकृत्वः पञ्चदशकृत्वः शतकृत्वः सहस्रकृत्वश्चेति।

१४। अष्टकृत्वः प्रयुज्य पृथिवीमभिजयत्येकादशकृत्वोऽन्तरीक्षं द्वादशकृत्वो दिवं

पञ्चदशकृत्वः सर्वा दिशो जयति शतकृत्वः सर्वान् सहस्रकृत्वो यत्किञ्चित् सर्वमिति ।

१५ । अथ य इमां सन्ध्यां नोपास्ते नाऽऽचष्टे न स जयति ।

१६ । ये तूपासते श्रोत्रिया भवन्तीति ।

१७ । उपनीताश्छेदनभेदनभोजनमैथुनस्वप्नस्वाध्यायानाचरन्ति ये सन्ध्याकाले ते श्वशूकरशृगालगर्दभसर्पयोनिष्वभिसम्पद्यमानास्तमोऽभिसम्पद्यन्ते ।

१८ । तस्मात् सायं प्रातः सन्ध्यामुपासीत ।

१९ । उदुत्यं चित्रमुद्वयं तमसस्परि भास्वं प्रागन्यदनुवर्तते । उद्वयं गायत्र्यनुगानं प्रातः प्राङ्मुखस्तिष्ठन् जपेत् ।

२० । एषो उषा अपूर्व्या आतुन्द बृहद्वा वदे ऋजुनीतिनो वरुणः प्रत्यु अदर्श्यायत्युदुत्येद्भिश्रुता इदमिति वर्णमस्तं गते शतशो धारा अवकीर्य गायत्र्यनुविसृज्य प्राङ्मुख उपविश्य जपेत् ।

२१ । मध्यन्दिने चित्राद् बृहदासीनो जपेदासीनो जपेदिति ।

---

# गोभिलीयस्नानसूत्रपाठः

[ प्रथमकण्डिकायाम् ]

१ । अथ स्नानविधिं व्याख्यास्यामः ।

२ । नदीदेवखातगर्तप्रस्रवणादीन् गत्वा ।

३ । शुचौ देशे मृत्तिलकुशगोमयाक्षतानुपकल्प्य ।

४ । पात्र्यनिपाने पञ्च पिण्डानुद्धृत्य ।

५ । नमस्कृत्य तीर्थं पावका नः सरस्वतीति ।

६ । पादावारभ्य मृद्भिर्गात्राणि प्रक्षाल्य उपविशेत ।

७ । बद्धशिखो यज्ञोपवीती प्राङ्मुख उदङ्मुखो वा कुशहस्तः शुचिः समाहितः ।

८ । अथ सप्त व्याहृतीः सावित्रीं च जप्त्वा ।

९ । सप्तकृत्वः सावित्र्याऽनुमन्त्रितं सकृद् उदकमाचामेत् ।

१० । तत आचम्यापो यथा भिन्द्यावम्यापो यथाविधि ।

[ द्वितीयकण्डिकायाम् ]

१ । अथ देवताऽभिसन्धिं कृत्वा ।

२ । सहस्रशीर्षा घृतवत्यश्वक्रान्ताभिश्च भूमिमृत्तिकामादाय ।

३ । इदं विष्णुर्विचक्रमे इति चक्रेण संमृज्य ।

४ । उद्वयं तमसस्परि उदुत्तममिति चोर्ध्वौ पाणी कृत्वादित्यमवेक्षेत ।

५ । उद्धृतासि वराहेणासीति च प्रतिलोमान्यङ्गान्यभिमृशेरन् ।

६ । त्रिरेतयैवाऽऽवृता कृत्वा ।

७ । गायत्र्यृचा समन्यच इत्येतेन गोमयं गात्रेषु मृत्तिकावत् ।

८ । ऋतञ्च सत्यञ्चेति त्रिः शुष्काघमर्षणं जपेत् ।

९ । ततो देवताऽभिसन्धिं कृत्वा ।

१० । नाभिमात्रजले स्थित्वा ।

११ । शन्नोदेव्यापोहिष्ठीयाभिः पावमानीभिस्तरत्समन्दीभिरेतोन्विन्द्रं तमुष्टवाम नकि इन्द्र इत्याभिश्च गूभिः पवित्रवतीभिर्मार्जयित्वा ।

# निवेदनम्

परमकारुणिकस्य भगवतः श्रीमतो नारायणस्य चरणारविन्दप्रसादात् तत्रभवतो दिगन्त-विश्रान्तयशसो भट्टनारायणस्य कृतिरिदं श्रीमद्गोभिलाचार्यकृत-गृह्यसूत्र-भाष्यं मुद्रयित्वा प्राकाश्यं नीयते। भाष्यमिदं गभीरभावानुबन्धिशब्दै रचितमिति केषुचित् स्थानेषु व्याख्या दत्ता। निबन्धकारमुख्यै रघुनन्दनादिभिः स्वेषु निबन्धेषु अनेकत्रैव एतद्भाष्यसन्दर्भः प्रमाणत्वेनोद्धृत इत्यपि तत्तद्ग्रन्थसन्दर्भमुद्धृत्यासकृत् प्रमाणीकृतम्। धर्मशास्त्रधुरन्धरेण रघुनन्दनेन पुनरे-तन्मतमवलम्ब्य सरलाभवदेवभट्टयोर्मतं बहुशो निरस्तमिति भाष्यस्यास्य महाजनपरिगृहीतत्व-मसाधारणत्वं च ख्यापयति।

यदपि पण्डितप्रकाण्डेन महामहोपाध्यायेन श्रीमता चन्द्रकान्ततर्कालङ्कारेण भाष्यमिदं त्रिपताककरेणापवार्य भाष्यान्तरं रचितं, भाष्येऽस्मिन्नन्तराऽन्तरा दोषोद्भावनञ्च कृतं, तदपि तादृशानां दीर्घदर्शिनां दोषैकदर्शित्वमेव प्रतिपादयति, भाष्यस्यास्य गुरुत्वमुपादेयत्वञ्चोपपादयति; न पुनरयथा हेयत्वमिति तत्र तत्र भाष्यमतसंरक्षणे कृतः प्रयत्नो भवद्भिः पाण्डित्यनिकष-पाषाणैर्मन्निवेशितटिप्पन्यामनुसन्धेयः। एतदेव प्रायो मुख्यं कारणं भाष्यस्यास्य मुद्रणे यत् सामवेदीय-कौथुम-राणायनीय-शाखाध्यायिनां ब्राह्मणानां गृह्यकर्माणि सत्यपि प्रामाणिके भट्टभाष्ये [ मुद्रापितग्रन्थाभावादेवानुपलभ्यमानतया नवनिर्मिततर्कालङ्कारभाष्यस्य च प्रायशः क्वचिद्-गृहीतभट्टभाष्यमततया ] यदि विकृतानि स्युस्तदा हता वयं हतञ्च गृह्यानुष्ठानमिति खिन्नानां जिज्ञासूनां सविधे ग्रन्थस्यास्योपन्यासेन यदि तेषां लेशतोऽप्युपकारः स्यादिति।

भाष्येऽस्मिन् निबद्धानां शास्त्रप्रमाणानां वेदमन्त्राणाञ्च यथासम्भवमाकरस्थानादिनिर्देश-पूर्वं तेषां व्याख्यानं पाठान्तरादिकञ्च समुपस्थापयितुं कृतः श्रमः। सर्वेष्वेव गृह्यकर्मसु प्रायः सर्वेषामेव गृह्यसूत्राणामुपन्यासः कृतः। प्रायशो वङ्गदेशेष्वप्रसिद्धानां गृह्यकर्मणामनुष्ठानपद्धतिरपि निबन्धान्तरेभ्यः संगृह्य प्रदर्शिता।

विषयेष्वेषु विस्तृतसमालोचनमुपस्थापयितुमीहा वर्त्तते द्वितीयखण्डमुद्रणावसरे—यदि तावत्कालमस्मान् भगवान् भूतभावनो निरुपद्रवानविकलांश्च संरक्षेत्।

ग्रन्थेऽस्मिन् दैवदुर्विपाकादस्मद्दृष्टिविषयवर्तिनी त्रुटिर्वर्त्तते। सा तु द्वितीयखण्डावसरे प्रदर्शयिष्यते। यत् पुनरस्माभिरननुभूतमसंभाव्यं च स्खलनमत्र तद् भवद्भिः क्षन्तव्यं ज्ञापयितव्यं च कृपयेति सविश्रम्भं निवेदयति—

भवतामनुगतानां विधेयः—

श्रीचिन्तामणि-देवशर्मा

# गोभिलीयगृह्यसूत्रपाठः

## प्रथमप्रपाठकस्य

### [ प्रथमकण्डिकायाम् ]

१। अथातो गृह्यकर्माण्युपदेक्ष्यामः।

२। यज्ञोपवीतिनाचान्तोदकेन कृत्यम्।

३। उदगयने पूर्वपक्षे पुण्येऽहनि प्रागावर्तनादह्नः कालं विद्यात्।

४। यथादेशञ्च।

५। सर्वाण्येवान्वाहार्यवन्ति।

६। अपवर्गेऽभिरूपभोजनं यथाशक्ति।

७। ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन्।

८। जायाया वा पाणिं जिघृक्षन्।

९। अनुगुप्ता अप आहृत्य, प्रागुदक्प्रवणं देशं समं वा परिसमुह्योपलिप्य मध्यतः प्राचीं लेखामुल्लिख्योदीचीञ्च संहतां पश्चान्मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत्।

१०। लक्षणावृदेषा सर्वत्र।

११। भूर्भुवः स्वरित्यभिमुखमग्निं प्रणयन्ति।

१२। प्रेते वा गृहपतौ परमेष्ठिकरणम्।

१३। तथा तिथिनक्षत्रपर्वसमवाये।

१४। दर्शे वा पौर्णमासे वाऽग्निसमाधानं कुर्वीत।

१५। वैश्यकुलाद् वाऽम्बरीषाद् वाऽग्निमाहृत्याभ्यादध्यात्।

१६। अपि वा बहुयाजिन एवाऽऽगाराद् ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्य वा।

१७। अपि वाऽन्यं मथित्वाऽभ्यादध्यात्।

१८। पुण्यस्त्वेवाऽनर्द्धुको भवतीति।

१९। यथा कामयेत तथा कुर्यात्।

२०। स यदेवान्त्यां समिधमभ्यादधाति, जायाया वा पाणिं जिघृक्षन् जुहोति तमभिसंयच्छेत्।

२१। स एवास्य गृह्योऽग्निर्भवति।

२२। तेन चैवास्य प्रातराहुतिर्हुता भवतीति।

२३। सायमाहुत्युपक्रम एवात ऊर्द्ध्वं गृह्येऽग्नौ होमो विधीयते।

२४। पुरा प्रादुष्करणवेलायाः सायं प्रातरनुगुप्ता अप आहरेत् परिचरणीयाः।

२५। अपि वा सायम्।

२६। अपि वा कुम्भाद् वा मणिकाद्वा गृह्णीयात्।

२७। पुराऽस्तमयादग्निं प्रादुष्कृत्यास्तमिते सायमाहुतिं जुहुयात्।

२८। पुरोदयात् प्रातः प्रादुष्कृत्योदितेऽनुदिते वा प्रातराहुतिं जुहुयात्।

### [ द्वितीयकण्डिकायाम् ]

१। यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव।

२। दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽंसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति।

३। सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणे-

ऽंसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति ।
४ । पितृयज्ञे त्वेव प्राचीनावीती भवति ।
५ । उदङ्मुखेऽवमृज्य प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेत् द्विः परिमृजीत ।
६ । पादावभ्युक्ष्य शिरोऽभ्युक्षेत् ।
७ । इन्द्रियाण्यद्भिः संस्पृशेत् ।
८ । अक्षिणी नासिके कर्णाविति ।
९ । यद् यद् मीमांस्यं स्यात् तत् तदद्भिः संस्पृशेत् ।
१० । तत्रैतदाहुः ।
११ । नोपस्पृशेद् व्रजन् ।
१२ । न तिष्ठन् ।
१३ । न हसन् ।
१४ । न विलोकयन् ।
१५ । नाऽप्रणतः ।
१६ । नाङ्गुलीभिः ।
१७ । नातीर्थेन ।
१८ । न सशब्दम् ।
१९ । नानवेक्षितम् ।
२० । न बाह्यांसः ।
२१ । नान्तरीयैकदेशस्य कल्पयित्वोत्तरीयताम् ।
२२ । नोष्णाभिः ।
२३ । न सफेनाभिः ।
२४ । न च सोपानत्कः क्वचित् ।
२५ । कासक्तिकः ।
२६ । गले बद्धः ।
२७ । चरणौ न प्रसार्य च ।
२८ । अन्ततः प्रत्युपस्पृश्य शुचिर्भवति ।
२९ । हृदयस्पृशास्त्वेवाप आचामेत् ।
३० । उच्छिष्टो हैवातोऽन्यथा भवतीति ।
३१ । अथ प्रत्युपस्पर्शनानि ।
३२ । सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा विपरिधाय च रथ्यामाक्रम्य श्मशानञ्चाऽऽचान्तः पुनराचामेत् ।

[ तृतीयकण्डिकायाम् ]

१ । अग्निमुपसमाधाय परिसमुह्य दक्षिणजान्वक्तो दक्षिणेनाग्निम् 'अदितेऽनुमन्यस्वे'त्युदकाञ्जलिं प्रसिञ्चेत् ।
२ । 'अनुमतेऽनुमन्यस्वे'ति पश्चात् ।
३ । 'सरस्वत्यनुमन्यस्वे'त्युत्तरतः ।
४ । 'देव सवितः प्रसुवे'ति प्रदक्षिणमग्निं पर्युक्षेत् सकृद् वा त्रिर्वा ।
५ । पर्युक्षणान्तान् व्यतिहरन्नभिपर्युक्षन् होमीयम् ।
६ । अथ हविष्यस्यान्नस्याग्नौ जुहुयात् कृतस्य वाऽकृतस्य वा ।
७ । अकृतं चेत् प्रक्षाल्य जुहुयात् प्रोदकं कृत्वा ।
८ । अथ यदि दधि पयो यवागूं वा ।
९ । कंसेन वा चरुस्थाल्या वा स्रुवेण वैव ।
१० । अग्नये स्वाहेति पूर्वां तूष्णीमुत्तरां मध्ये चापराजितायाञ्च दिशीति सायम् ।
११ । अथ प्रातः सूर्याय स्वाहेति पूर्वां तूष्णीमेवोत्तरां मध्ये चैवापराजितायाञ्चैव दिशि ।
१२ । समिधमाधायानुपर्युक्ष्य तथैवोदकाञ्जलीन् प्रसिञ्चेदन्वमंस्था' इति मन्त्रविशेषः ।
१३ । प्रदक्षिणमग्निं परिक्रम्यापां शेषं निनीय पूरयित्वाचमनं प्रतिष्ठाप्य यथार्थम् ।

१४। एवमत ऊर्ध्वं गृह्येऽग्नौ जुहुयाद् वा हावयेद् वा आ जीवितावभृथात्।

१५। अथाप्युदाहरन्ति।

१६। कामं गृह्येऽग्नौ पत्नी जुहुयात् सायं-प्रातर्होमौ गृहाः पत्नी गृह्य एषोऽग्नि-र्भवतीति।

१७। निष्ठिते सायमाशप्रातराशे भूतमिति प्रवाचयेत्।

१८। ऋते भगया वाचा शुचिर्भूत्वा।

१९। प्रतिजपत्योमित्युच्चैस्तस्मै नमस्तन्माक्षा इत्युपांशु।

[ चतुर्थकण्डिकायाम् ]

१। अथ वाग्यतो बलीन् हरेत्।

२। भाषेतान्नसंसिद्धिमतिथिभिः कामं सम्भाषेत।

३। अथ हविष्यस्यान्नस्योद्धृत्य हविष्यै-र्व्यञ्जनैरुपसिच्याग्नौ जुहुयात् तूष्णीं पाणिनैव।

४। प्राजापत्या पूर्वाहुतिर्भवति सौविष्ट-कृत्युत्तरा।

५। अथ बलीन् हरेद् बाह्यतोऽन्तर्वा सभूमिं कृत्वा।

६। सकृदपो निनीय चतुरो बलिं निदध्यात् सकृदन्ततः परिषिञ्चेत्।

७। एकैकं वाऽनुनिधानमुभयतः परिषिञ्चेत्।

८। स यत् प्रथमं निदधाति स पार्थिवो बलिर्भवत्यथ यद् द्वितीयं स वायव्यो यत् तृतीयं स वैश्वदेवो यच्चतुर्थं स प्राजापत्यः।

९। अथापरान् बलीन् हरेत् उदधानस्य मध्यमस्य द्वारस्यावृदैवतः प्रथमो बलिर्भवत्योषधिवनस्पतिभ्यो द्वितीय आकाशाय तृतीयः।

१०। अथापरं बलिं हरेच्छयनं वाऽधिवर्चं वा स कामाय त्वा बलिर्भवति मन्यवे वा

११। अथ संस्तूपं स रक्षोजनेभ्यः।

१२। अथैतद् बलिशेषमद्भिरभ्यासिच्यावस-लयि दक्षिणा निनयेत् तत् पितृभ्यो भवति।

१३। आसीन एवाग्नौ जुहुयात्, आसीनः पितृभ्यो दद्यात्।

१४। यथोपपादमितरान्।

१५। स्वयं त्वेवैतान् यावद् वसेद् बलीन् हरेत्।

१६। अपि वाऽन्यो ब्राह्मणः-।

१७। दम्पती एव।

१८। इति गृहमेधिव्रतम्।

१९। स्त्री ह सायं प्रातः पुमानिति।

२०। सर्वस्य त्वेवान्नस्यैतान् बलीन् हरेत् पित्र्यस्य वा स्वस्त्ययनस्य वा-ऽर्थार्थस्य वा।

२१। यज्ञादेव निवर्तते।

२२। यद्येकस्मिन् काले व्रीहियवौ प्रक्रियेता-मन्यतरस्य कृत्वा कृतं मन्येत।

२३। यद्येकस्मिन् काले पुनः पुनरन्नं पच्येत सकृदेवैतद् बलितन्त्रं कुर्वीत।

२४। यद्येकस्मिन् कुले बहुधाऽन्नं पच्येत गृह-पतिमहानसादेवैतद् बलितन्त्रं कुर्वीत।

२५। यस्य त्वेषामग्रतः सिध्येत्, नियुक्तमग्नौ कृत्वाऽग्रं ब्राह्मणाय दत्त्वा भुञ्जीत।

२६। यस्यो जघन्यं भुञ्जीतैवेति।

२७। अथाप्युदाहरन्ति। एतस्यैव बलिहरण-स्यान्ते कामं प्रब्रुवीत भवति हैवास्य।

२८। एवं त्वेवाऽऽशल्यं बलिं हरेद् यवेभ्यो-ऽऽश्यायीहिभ्यः ब्रीहिभ्योऽऽश्यायवेभ्यः स त्वाशल्यो नाम बलिर्भवति ।

२९। दीर्घायुर्हैव भवति ।

३०। विश्राणिते फलीकरणानामाचामस्यापामिति बलिं हरेत् स रौद्रो बलिर्भवति स रौद्रो बलिर्भवति ।

[ पञ्चमकण्डिकायाम् ]

१। अथ दर्शपौर्णमासयोः ।

२। सन्ध्यां पौर्णमासीमुपवसेत् ।

३। उत्तरामित्येके ।

४। अथ यदहश्चन्द्रमा न दृश्येत तामभावास्याम् ।

५। पक्षान्ता उपवस्तव्याः पक्षाद्योऽभियष्टव्याः ।

६। आमावास्येन हविषा पूर्वपक्षमभियजते पौर्णमासेनापरपक्षम् ।

७। यः परमो विकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः सन्निकर्षः साऽमावास्या ।

८। यदहस्त्वेव चन्द्रमा न दृश्येत याममावास्यां कुर्वीत ।

९। दृश्यमानेऽप्येकदा ।

१०। गताध्वा भवतीति ।

११। त्रयः पौर्णमासीकाला भवन्ति सन्ध्या वाऽस्तमितोदिता वोच्चैर्वा ।

१२। अथ यदहः पूर्णो भवति ।

१३। पृथगेवैतस्य ज्ञानस्याध्यायो भवति अधीयीत वा तद्विद्भ्यो वा पर्वाऽऽगमयेत ।

१४। अथ यदहरुपवसथो भवति तदहः पूर्वाह्ण एव प्रातराहुतिं हुत्वैतदग्नेः स्थण्डिलं गोमयेन समन्तं पर्युपलिम्पति ।

१५। अथेध्मानुपकल्पयते खादिरान् वा पालाशान् वा ।

१६। खादिर-पालाशालाभे विभीदक-तिल्वक-बाधक-नीव-निम्ब-राजवृक्ष--शाल्मल्य रलु-दधित्थ--कोविदार--श्लेष्मातकवर्जं सर्ववनस्पतीनामिध्मो यथार्थं स्यात् ।

१७। विशाखानि प्रतिलूनाः कुशा बर्हिः ।

१८। उपमूललूनाः पितृभ्यः ।

१९। तेषामलाभे शूकतृणशरशीर्यबल्वजमुतबलल्लुण्ठवर्जं सर्वतृणानि ।

२०। आज्यं स्थालीपाकीयान् व्रीहीन् वा यवान् वा चरुस्थालीं मेक्षणं स्रुवमनुगुप्ता अप इति ।

२१। यानि चानुकल्पमुदाहरिष्यामः ।

२२। न तदहः प्रसुज्येत ।

२३। दूरादपि गृहानभ्येयात् ।

२४। अन्यतस्तु धनं क्रीणीयान्न विक्रीणीत ।

२५। अबहुवादी स्यात् ।

२६। सत्यं विवदिषेत् ।

२७। अथापराह्ण एवाऽऽप्लुत्यौपवसथिकं दम्पती भुञ्जीयातां यदेनयोः काम्यं स्यात् सर्पिर्मिश्रं स्यात् कुशलेन ।

[ षष्ठकण्डिकायाम् ]

१। मानतन्तव्यो होवाचाहुता वा एतस्य मानुष्याहुतिर्भवति य औपवसथिकं नाश्नाति ।

२। अनीश्वरो ह क्षोधुको भवत्यकाम्यो जनानां पापवसीयसी हाऽस्य प्रजा भवति।

३। य औपवसथिकं भुङ्क्ते ईश्वरो ह भवत्यक्षोधुकः काम्यो जनानां वसीयसी हाऽस्य प्रजा भवति।

४। तस्माद् यत् कामयेतौपवसथिकं भुञ्जीयाताम्।

५। अथ एवैतां रात्रिं शयीयाताम्।

६। तौ खलु जाग्रन्मिश्रावेवैतां रात्रिं विहरेयाताम् इतिहासमिश्रेण वा केनचिद् वा।

७। जुगुप्सेयातां स्वेवाव्रत्येभ्यः कर्मभ्यः।

८। न प्रवसन्नुपवसेदित्याहुः।

९। पत्न्या व्रतं भवतीति।

१०। यथा कामयेत तथा कुर्यात्।

११। एवमेवाऽऽहिताग्नेरप्युपवसथो भवति।

१२। यथाऽऽम्नायो विरुध्यात्।

१३। अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वाऽग्नेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान् दर्भानास्तीर्य।

१४। तेषां पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या ब्रह्म आसनात् तृणमभिसंगृह्य दक्षिणापरमष्टमदेशं निरस्यति—'निरस्तः परावसुरिति'।

१५। अप उपस्पृश्याथ ब्रह्मा आसने उपविश'त्वा वसोः सदने सीदामी'ति।

१६। अग्निमभिमुखो वाग्यतः प्राञ्जलिरास्ते आ कर्मणः पर्यवसानात्।

१७। आर्षेय यज्ञसंसिद्धिम्।

१८। नायज्ञियां वाचं वदेत्।

१९। यद्यज्ञियां वाचं वदेद् वैष्णवीमृचं यजुर्वा जपेत्।

२०। अपि वा 'नमो विष्णवे' इति ब्रूयात्।

२१। यद्यु वा उभयं चिकीर्षेद् हौत्रञ्चैव ब्रह्मत्वं चैवैतेनैव कल्पेन छत्रं वोत्तरासङ्गं वोदकमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्यावज्याथान्यच्चेष्टेत्।

[ सप्तमकण्डिकायाम् ]

१। अथोलूखल-मुषले प्रक्षाल्य सूर्पञ्च पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्योपसादयति।

२। अथ हविर्निर्वपति व्रीहीन् वा यवान् वा कंसेन वा चरुस्थाल्या वा।

३। अमुष्मै त्वा जुष्टं निर्वपामीति देवता नामादेशं सकृद् द्विस्तूष्णीम्।

४। अथ पश्चात् प्राङ्मुखोऽवहन्तुमुपक्रमते दक्षिणोत्तराभ्यां पाणिभ्याम्।

५। त्रिः फलीकृतांस्तण्डुलांस्त्रिर्देवेभ्यः प्रक्षालयेदित्याहुर्द्विर्मनुष्येभ्यः सकृत् पितृभ्य इति।

६। पवित्रान्तर्हितांस्तण्डुलानावपेत्।

७। कुशलश्रृतमिव स्थालीपाकं श्रपयेत् प्रदक्षिणमुदायुवन्।

८। श्रृतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत्।

९। अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयात् पुरस्ताद् दक्षिणत उत्तरतः पश्चादिति।

१०। सर्वतस्त्रिवृतं पञ्चवृतं वा।

११। बहुलमयुग्मसंहतम्।

१२। प्रागग्रैरग्रैर्मूलानि च्छादयन्।

१३। पश्चाद् वास्तीर्य दक्षिणतः प्राञ्चं प्रकर्षति तथोत्तरेण दक्षिणोत्तराण्यग्राणि कुर्यात्।

१४। एष परिस्तरणन्यायः सर्वेष्वाहुतिमत्सु।

१५। परिधीनप्येके कुर्वन्ति शामीलान् पार्णान् वा।

१६। उत्तरतोऽपां पूर्णः स्रुवः प्रणीताः।

१७। भाव्रे न वा स्यादित्येके।

१८। बर्हिषि स्थालीपाकमासाद्येध्ममभ्याधायाऽऽज्यं संस्कुरुते, सर्पिस्तैलं दधि पयो यवागूं वा।

१९। तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते।

२०। ओषधिमन्तर्धाय छिनत्ति न नखेन 'पवित्रे स्थो वैष्णव्या'विति।

२१। अथैने अद्भिरनुमार्ष्टि 'विष्णोर्मनसा पूते स्थः' इति।

२२। सम्पूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम्।

२३। अङ्गुष्ठाभ्यां चोपकनिष्ठिकाभ्यां चाङ्गुलिभ्यामभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति, 'देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरि'ति सकृद् यजुषा द्विस्तूष्णीम्।

२४। अथैने अद्भिरभ्युक्ष्याग्नावप्यर्जयेत।

२५। अथैतदाज्यमधिश्रित्योदगुद्वासयेत्।

२६। एवमाज्यस्य संस्करणकल्पो भवतीति।

[ अष्टमकण्डिकायाम् ]

१। पूर्वमाज्यमपरः स्थालीपाकः।

२। पर्युक्ष्य स्थालीपाक आज्यमानीय मेक्षणेनोपघातं होतुमेवोपक्रमते।

३। यद्यु वा उपस्तीर्णाभिघारितं जुहुयेत्।

४। आज्यभागावेव प्रथमौ जुहुयात्।

५। चतुर्गृहीतमाज्यं गृहीत्वा पञ्चावत्तन्तु भृगूणा'मग्नये स्वाहे'त्युत्तरतः 'सोमाय स्वाहे'ति दक्षिणतः प्राक्शो जुहुयात्।

६। अथ हविष उपस्तीर्यावद्यति।

७। मध्यात् पूर्वार्धात् चतुरवत्ती चेद् भवति मध्यात् पूर्वार्धात् पश्चार्धादिति पञ्चावत्ती चेद् भवति।

८। अभिघारयत्यवदानानि प्रत्यनक्त्यवदानस्थानान्ययातयामतायै।

९। अग्नये स्वाहेति मध्ये जुहुयात् सकृद् वा त्रिर्वैतेनैव कल्पेन।

१०। अथ स्विष्टकृत उपस्तीर्यावद्यत्युत्तरार्धपूर्वार्धात् सकृदेव भूयिष्ठं द्विरभिघारयेत्।

११। यद्यु पञ्चावत्ती स्याद् द्विरुपस्तीर्यावदाय द्विरभिघारयेत्।

१२। न प्रत्यनक्त्यवदानस्थानं यातयामतायै।

१३। अग्नये स्विष्टकृते स्वाहेत्युत्तरार्धपूर्वार्धे जुहुयात्।

१४। महाव्याहृतिभिराज्येनाभिजुहुयात्।

१५। प्राक् स्विष्टकृत आवापः।

१६। गणेष्वेकं परिसमूहनमिध्मो बर्हिः पर्युक्षणमाज्यमाज्यभागौ च।

१७। सर्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोति।

१८। हुत्वैतन्मेक्षणमनुप्रहरेत्।

१९। प्रक्षाल्य चैनेनोद्धृत्य भुञ्जीत।

२०। न स्रुवमनुप्रहरेदित्येक आहुः।

२१। आग्नेय एवानाहिताग्नेरुभयोर्दर्शपूर्णमासयोः स्थालीपाकः स्यात्।

२२। आग्नेयो वाऽग्नीषोमीयो वाहिताग्नेः पौर्णमास्याम्।

२३। ऐन्द्रो वैन्द्राग्नो माहेन्द्रो वा अमावास्यायाम्।

२४। अपि वाहिताग्नेरप्युभयोर्दर्शपूर्णमासयोराग्नेय एव स्यात्।

२५। समिधमाधायानुपर्युक्ष्य यज्ञवास्तु करोति।

२६। तत एव बर्हिषः कुशमुष्टिमादायाऽऽज्ये वा हविषि वा त्रिरवदध्यादग्राणि मध्यानि मूलानी'त्यक्तं रिहाणा व्यन्तु वयः' इति।

२७। अथैनमद्भिरभ्युक्ष्याग्नावपर्जयेत्—'यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा, पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा' इति।

२८। एतद् यज्ञवास्त्वित्याचक्षते।

[ नवमकण्डिकायाम् ]

१। अथैतद्धविरुच्छिष्टमुद्गुदवास्योद्धृत्य ब्रह्मणे प्रयच्छेत्।

२। तं तितर्पयिषेत्।

३। ब्राह्मणस्य तृप्तिमनुतृप्यामीति ह यज्ञस्य वेदयन्ते।

४। अथ यदस्यान्यदन्नमुपसिद्धं स्यात्।

५। अथ ब्राह्मणान् भक्तेनोपेप्सेत्।

६। पूर्णपात्रो दक्षिणा तं ब्रह्मणे दद्यात्।

७। कंसं चमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतं पूर्णपात्रमित्याचक्षते।

८। ब्रह्मवैक ऋत्विक् पाकयज्ञेषु स्वयं होता भवति।

९। पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा।

१०। अपरिमितं परार्ध्यम्।

११। अपि ह सुदाः पैजवन ऐन्द्राग्नेन स्थालीपाकेनेष्ट्वा शतं सहस्राणि ददौ।

१२। अथ यदि गृह्येऽग्नौ सायं प्रातर्होमयोर्वा दर्शपूर्णमासयोर्वा हव्यं वा होतारं वा नाधिगच्छेत् कथं कुर्यादिति।

१३। आ सायमाहुतेः प्रातराहुतिर्नात्येत्या प्रातराहुतेः सायमाहुतिरमावास्यायाः पौर्णमासं नात्येत्या पौर्णमास्या आमावास्यम्।

१४। एतेनैवावकाशेन हव्यं वा होतारं वा लिप्सेत।

१५। अपि वा यज्ञियानामेवौषधिवनस्पतीनां फलानि वा पलाशानि वा श्रपयित्वा जुहुयात्।

१६। अप्यप एवान्ततो जुहुयादिति ह स्माह पाकयज्ञ ऐडो हुतं ह्येव।

१७। अहुतस्य प्रायश्चित्तं भवतीति।

१८। नाव्रतो ब्राह्मणः स्यादिति।

१९। अथाप्युदाहरन्ति यावन्न हूयेताभोजनेनैव तावन्मन्तनुयात्, अथ यदाऽधिगच्छेत् प्रतिजुहुयात्, एवमप्यस्य व्रतं सन्ततं भवतीति।

२०। एषोऽत ऊर्ध्वं हविराहुतिषु न्यायः।

२१। मन्त्रान्ते स्वाहाकारः।

२२। आज्याहुतिष्वाज्यमेव संस्कृत्योपघातं जुहुयात् नाज्यभागौ न स्विष्टकृत्।

२३। आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होमः।

२४। यथा पाणिग्रहणे तथा चूडाकर्मण्युपनयने गोदाने च।

२५। अपवृत्ते कर्मणि वामदेव्यगानं शान्त्यर्थं शान्त्यर्थम्।

---

## द्वितीयप्रपाठकस्य

### [ प्रथमकण्डिकायाम् ]

१। पुण्ये नक्षत्रे दारान् कुर्वीत।

२। लक्षणप्रशस्तान् कुशलेन।

३। तदलाभे पिण्डान्।

४। वेद्याः सीताया ह्रदाद् गोष्ठाच्चतुष्पथादादेवनादादहनादीरिणात् सर्वेभ्यः सम्भार्यं नवमम्।

५। समान् कृतलक्षणान्।

६। पाणावाधाय कुमार्या उपनामयेद् 'ऋतमेव प्रथममृतं नात्येति कश्चनर्त इयं पृथिवी श्रिता सर्वमिदमसौ भूयादि'ति तस्य नाम गृहीत्वैषामेकं गृहाणेति ब्रूयात्।

७। पूर्वेषां चतुर्णां गृह्णन्तीमुपयच्छेत्।

८। संभार्यमपि त्वेके।

९। क्लीतकैर्यवैर्माषैर्वाप्लुतां सुहृत् सुरोत्तमेन सशरीरां त्रिर्मूर्धन्यभिषिञ्चेत् 'काम वेद ते नाम मदो नामासीति, समानयामुमि'ति पतिनाम गृह्णीयात् स्वाहाकारान्ताभिरुपस्थम् उत्तराभ्यां प्लावयेत्।

१०। ज्ञातिकर्मैतत्।

११। पाणिग्रहणे पुरस्ताच्छालाया अग्निरुपसमाहितो भवति।

१२। अथ जन्यानामेको ध्रुवाणामपां कलसं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते।

१३। प्राजनेनान्यः।

१४। शमीपलाशमिश्रांश्च लाजांश्चतुरञ्जलिमात्राञ्छूर्पेणोपसादयन्ति पश्चादग्नेः।

१५। दृषत्पुत्रश्च।

१६। अथ यस्याः पाणिं ग्रहीष्यन् भवति सशिरस्का साप्लुता भवति।

१७। अहतेन वसनेन पतिः परिदध्याद् 'या अकृन्तन्नि'त्येतया ऋचा।

१८। परिधत्त धत्त वाससेति च प्रावृतां यज्ञोपवीतिनीम् अभ्युदानयञ्जपेत् सोमोऽददद् गन्धर्वायेति।

१९। पश्चादग्नेः संवेष्टितं कटमेवं जातीयं वाऽन्यत् पदा प्रवर्तयन्तीं वाचयेत्—प्र मे पतियानः पन्थाः कल्पतामिति।

२०। स्वयं जपेद्जपन्त्यां प्रास्या इति।

२१। बर्हिषोऽन्तं कटान्तं प्रापयेत्।

२२। पूर्वे कटान्ते दक्षिणतः पाणिग्राहस्योपविशति।

२३। दक्षिणेन पाणिना दक्षिणमंसमन्वारब्धायाः षडाज्याहुतीर्जुहोत्यग्निरेतु प्रथम इत्येतत्प्रभृतिभिः।

२४। महाव्याहृतिभिश्च पृथक्।

२५। समस्ताभिश्चतुर्थीम्।

[ द्वितीयकण्डिकायाम् ]

१ । हुत्वोपोत्तिष्ठतः ।

२ । अनुपृष्ठं पतिः परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते वध्वञ्जलिं गृहीत्वा ।

३ । पूर्वा माता लाजानादाय भ्राता वा वधूमाक्रामयेदश्मानं दक्षिणेन प्रपदेन ।

४ । पाणिग्राहो जपति इममश्मानमारोहेति ।

५ । सकृत् संगृहीतं लाजानामञ्जलिं भ्राता वध्वञ्जलावावपति ।

६ । तं सोपस्तीर्णाभिघारितमग्नौ जुहोत्यविच्छिन्दत्यञ्जलिम्—इयं नार्युपब्रूते इति ।

७ । अर्यमणं नु देवं पूषणमित्युत्तरयोः ।

८ । हुते पतिर्यथेतं परिव्रज्य दक्षिणमग्निं परिणयति मन्त्रवान् वा ब्राह्मणः कन्यला पितृभ्य इति ।

९ । परिणीता तथैवावतिष्ठते तथाक्रामति तथा जपति तथावपति तथा जुहोति एवं त्रिः ।

१० । शूर्पेण शेषमग्नावोप्य प्रागुदीचीमभ्युत्क्रामयन्ति—एकमिषे इति ।

११ । दक्षिणेन प्रक्रम्य सव्येनानुक्रामेत् ।

१२ । मा सव्येन दक्षिणमतिक्रामेति ब्रूयात् ।

१३ । ईक्षकान् प्रति मन्त्रयेत सुमङ्गलीरियं वधूरिति ।

१४ । अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्धदेशेऽवसिञ्चति तथेतरां समञ्जन्त्वित्येतयर्चा ।

१५ । अवसिक्तायाः सव्येन पाणिनाऽञ्जलिमुपोद्गृह्य दक्षिणेन पाणिना दक्षिणं पाणिं साङ्गुष्ठमुत्तानं गृहीत्वैताः षट् पाणिग्रहणीया जपति—गृभ्णामि ते इति समाप्तासु ।

[ तृतीयकण्डिकायाम् ]

१ । उद्वहन्ति प्रागुदीच्यां दिशि यद् ब्राह्मणं कुलमभिरूपम् ।

२ । तत्राग्निरुपसमाहितो भवति ।

३ । अपरेणाग्निमानडुहं रोहितं चर्म प्राग्ग्रीवमुत्तरलोमाऽऽस्तीर्णं भवति ।

४ । तस्मिन्नेनां वाग्यतामुपवेशयन्ति ।

५ । सा खल्वास्त एव आ नक्षत्रदर्शनात् ।

६ । प्रोक्ते नक्षत्रे षडाज्याहुतीर्जुहोति 'लेखासन्धिष्वि'त्येतत्प्रभृतिभिः ।

७ । आहुतेराहुतेस्तु सम्पातं मूर्धनि वध्वा अवनयेत् ।

८ । हुत्वोपोत्थायोपनिष्क्रम्य ध्रुवं दर्शयति ।

९ । ध्रुवमसि ध्रुवाऽहं पतिकुले भूयासम् अमुष्यासाविति पतिनाम गृह्णीयादात्मनश्च ।

१० । अरुन्धतीं च ।

११ । रुद्धाऽहमस्मीत्येवमेव ।

१२ । अथैनामनुमन्त्रयते ध्रुवा द्यौरित्येतयर्चा ।

१३ । अनुमन्त्रिता गुरुं गोत्रेणाभिवादयते ।

१४ । सोऽस्या वाग्विसर्गः ।

१५ । तावुभौ ततप्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम् ।

१६ । अत्रार्घ्यमित्याहुः ।

१७ । आगतेष्वित्येके ।

१८ । हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत ।

१९ । श्वोभूते वा समशनीयं स्थालीपाकं कुर्वीत ।

२०। तस्य देवता अग्निः प्रजापतिर्विश्वेदेवा अनुमतिरिति।

२१। उद्धृत्य स्थालीपाकं व्युष्टैकदेशं पाणिनाऽभिमृशेदन्नपाशेन मणिनेति।

२२। भुक्तोच्छिष्टं वध्वै प्रदाय यथार्थं गौर्दक्षिणा।

[ चतुर्थकण्डिकायाम् ]

१। यानमारोहन्त्यां सु-किंशुकं शाल्मलिमित्येतामृचं जपेत्।

२। अध्वनि चतुष्पथान् प्रतिमन्त्रयेत, नदीश्च विषमाणि च महावृक्षान् श्मशानञ्च— 'मा विदन् परिपन्थिन' इति।

३। अक्षभङ्गे नद्धविमोक्षे यानविपर्यासेऽन्यासु चाऽऽपत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वाऽन्यद् द्रव्यमाहृत्य 'य ऋते चिदभिश्रिष' इत्याज्यशेषेणाभ्यञ्जेत्।

४। वामदेव्यं गीत्वारोहेत्।

५। प्राप्तेषु वामदेव्यम्।

६। गृहागतां पतिपुत्रशीलसम्पन्ना ब्राह्मण्योऽवरोप्याऽऽनडुहे चर्मण्युपवेशयन्ति— इह गावः प्रजायध्वमिति।

७। तस्याः कुमारमुपस्थ आदध्युः।

८। तस्मै शकलोटानञ्जलावावपेयुः फलानि वा।

९। उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोत्यष्टाविह धृतिरिति।

१०। समाप्तासु समिधमाधाय यथावयसं गुरून् गोत्रेणाभिवाद्य यथार्थम्।

[ पञ्चमकण्डिकायाम् ]

१। अथातश्चतुर्थीकर्म।

२। अग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति अग्ने प्रायश्चित्त इति चतुः।

३। अग्नेः स्थाने वायुचन्द्रसूर्याः।

४। समस्य पञ्चमीं बहुवद्वूह्य।

५। आहुतेराहुतेस्तु सम्पातमुदपात्रेऽवनयेत्।

६। तेनैनां सकेशनखामभ्यज्य हासयित्वा प्लावयन्ति।

७। ऊर्ध्वं त्रिरात्रात् सम्भव इत्येके।

८। यदर्तुमती भवत्युपरतशोणिता तदा सम्भवकालः।

९। दक्षिणेन पाणिनोपस्थमभिमृशेद् विष्णुर्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि सिनीवालीति च।

१०। समाप्यर्चौ सम्भवतः।

[ षष्ठकण्डिकायाम् ]

१। तृतीयस्य गर्भमासस्याऽऽदिसदेशे पुंसवनस्य कालः।

२। प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति।

३। पश्चात् पतिरवस्थाय दक्षिणेन पाणिना दक्षिणमंसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत् पुमांसौ मित्रावरुणावित्येतयर्चा।

४। अथ यथार्थम्।

५। अथापरम्।

६। प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतःफलामस्रामामकृमिपरिसृप्तां त्रिःसप्तैर्यवैर्माषैर्वा परिक्रीयोत्थापयेत्।

७। यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि, यद्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि, यद्यसि वसुभ्यो

वसुभ्यस्त्वा परिक्रीणामि, वयसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि, वयस्यादित्येभ्य आदित्येभ्यस्त्वा परिक्रीणामि, वयसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि, वयसि विश्वेभ्यो देवेभ्यो विश्वेभ्यो देवेभ्यस्त्वा परिक्रीणामि, ओषधयः सुमनसो भूत्वाऽस्यां वीर्यं समाधत्तेयं कर्म करिष्यति इत्युत्थाप्य तृणैः परिधायाऽऽहृत्य वेहायसीं निदध्यात् ।

८ । दृषदं प्रक्षाल्य ब्रह्मचारी व्रतवती वा ब्रह्मबन्धुः कुमारी वाऽप्रत्याहरन्ती पिनष्टि ।

९ । प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राक्शिराः संविशति ।

१० । पश्चात् पतिरवस्थाय दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य दक्षिणे नासिकास्रोतस्यवनयेत—पुमानग्निः पुमानिन्द्र इत्येतयर्चा ।

११ । अथ यथार्थम् ।

## [ सप्तमकण्डिकायाम् ]

१ । अथ सीमन्तकरणम् ।

२ । प्रथमगर्भे चतुर्थे मासि षष्ठेऽष्टमे वा ।

३ । प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ।

४ । पश्चात् पतिरवस्थाय युग्मं तमोदुम्बरं शलाटुग्रथ्नमाबध्नाति—अयमूर्जावतो वृक्ष इति ।

५ । अथ सीमन्तमूर्ध्वमुन्नयति भूरिति दर्भपिञ्जूलीभिरेव प्रथमं भुवरिति द्वितीयं स्वरिति तृतीयम् ।

६ । अथ वीरतरेण येनादितेरित्येतयर्चा ।

७ । अथ पूर्णचात्रेण राकामहमित्येतयर्चा ।

८ । त्रिश्वेतया च शलल्या यास्ते राके सुमतय इति ।

९ । कृसरः स्थालीपाक उत्तरघृतस्तमवेक्षयेत् ।

१० । किं पश्यसीत्युक्त्वा प्रजामिति वाचयेत् ।

११ । तं सा स्वयं भुञ्जीत ।

१२ । वीरसूर्जीवसूर्जीवपत्नीति ब्राह्मण्यो मङ्गल्याभिर्वाग्भिरुपासीरन् ।

१३ । अथ सोष्यन्तीहोमः ।

१४ । प्रतिष्ठिते वस्तौ परिस्तीर्याग्निमाज्याहुती जुहोति—या तिरश्चीत्येतयर्चा विपश्चित् पुच्छमभरदिति च ।

१५ । पुमानयं जनिष्यतेऽसौ नामेति नामधेयं गृह्णाति यत् तद् गुह्यमेव भवति ।

१६ । यदाऽस्मै कुमारं जातमाचक्षीरन्नथ ब्रूयात् काङ्क्षत नाभिकृन्तनेन स्तनप्रतिधानेन चेति ।

१७ । व्रीहियवौ पेषयेत् तथैवाऽऽवृता यथा शुङ्गाम् ।

१८ । दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य कुमारस्य जिह्वां निर्मार्ष्टि इयमाज्ञेति ।

१९ । तथैव मेधाजननं सर्पिः प्राशयेत् जातरूपेण वा आदाय कुमारस्य मुखे जुहोति—मेधां ते मित्रावरुणावित्येतयर्चा सदसस्पतिमद्भुतमिति च ।

२० । कृन्तत नाभिमिति अथास्य स्तनञ्च प्रतिधत्तेति ।

२१ । अत ऊर्ध्वमसमालम्भनम् आ दश-रात्रात् ।

[ अष्टमकण्डिकायाम् ]

१ । जननाद् यस्तृतीयो ज्यौत्स्नस्तस्य तृतीयायां प्रातः सशिरस्कं कुमार-माप्लाव्यास्तमिते वीते लोहितिम्नि अञ्जलिकृतः पितोपतिष्ठते ।

२ । अथ माता शुचिना वसनेन कुमार-माच्छाद्य दक्षिणत उदञ्चं पित्रे प्रयच्छत्युदक्शिरसम् ।

३ । अनुपृष्ठं परिक्रम्योत्तरतोऽवतिष्ठते ।

४ । अथ जपति—यत्ते सुसीम इति यथाऽयं न प्रमीयेत पुत्रो जनित्र्या अधि इति ।

५ । उदञ्चं मात्रे प्रदाय यथार्थम् ।

६ । अथ येऽत ऊर्ध्व ज्यौत्स्नाः प्रथमोद्दिष्ट एव तेषु पितोपतिष्ठतेऽपामञ्जलिं पूरयित्वाऽभिमुखश्चन्द्रमसम् ।

७ । यददश्चन्द्रमसीति सकृद् यजुषा द्विस्तूष्णीमुत्सृज्य यथार्थम् ।

८ । जननाद् दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम् ।

९ । अथ यस्तत् करिष्यन् भवति पश्चादग्नेः उदगग्रेषु दर्भेषु प्राङुपविशति ।

१० । अथ माता शुचिना वसनेन कुमार-माच्छाद्य दक्षिणत उदञ्चं कर्त्रे प्रयच्छत्युदक्शिरसम् ।

११ । अनुपृष्ठं परिक्रम्योत्तरत उपविशत्युद-गग्रेष्वेव दर्भेषु ।

१२ । अथ जुहोति प्रजापतये तिथये नक्षत्राय देवताया इति ।

१३ । तस्य मुख्यान् प्राणान् संस्पृशन् कोऽसि कतमोऽसीत्येतन्मन्त्रं जपति ।

१४ । आहस्पत्यं मासं प्रविशासावित्यन्ते च मन्त्रस्य घोषवदाद्यन्तरन्तस्थं दीर्घाभि-निष्ठानान्तं कृतं नाम दध्यात ।

१५ । एतद्तद्धितम् ।

१६ । अयुग्दान्तं स्त्रीणाम् ।

१७ । मात्रे चैव प्रथमं नामधेयमाख्याय यथार्थम् ।

१८ । गौर्दक्षिणा ।

१९ । कुमारस्य मासि मासि संवत्सरे सांवत्सरिकेषु वा पर्वस्वग्नीन्द्रौ द्यावापृथिवी विश्वान् देवांश्च यजेत ।

२० । दैवतमिष्ट्वा तिथिं नक्षत्रं च यजेत ।

२१ । विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत्, यदा वा पिता म इति विद्यादुपेतस्य वा अङ्गादङ्गात् संश्रवसीति ।

२२ । पशूनां त्वा हिङ्कारेणाभिजिघ्रामीत्यभि-जिघ्रेय यथार्थम् ।

२३ । एवमेवावरेषां यथाज्येष्ठं यथोपलम्भं वा ।

२४ । स्त्रियास्तूष्णीं मूर्धन्यभिजिघ्रणं मूर्ध-न्यभिजिघ्रणम् ।

[ नवमकण्डिकायाम् ]

१ । अथातस्तृतीये वर्षे चूडाकरणम् ।

२ । पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमा-हितो भवति ।

३ । तत्रैतान्युपकल्पसानि भवन्ति ।

४ । एकविंशतिर्दर्भपिञ्जुल्य उष्णोदककंस औदुम्बरः क्षुर आदर्शो वा क्षुरपाणि-र्नापित इति दक्षिणतः ।

५। आनडुहो गोमयः कृसरः स्थालीपाको वृथापक इत्युत्तरतः।

६। व्रीहियवैस्तिलमाषैरिति पृथक् पात्राणि पूरयित्वा पुरस्तादुपनिदध्युः।

७। कृसरो नापिताय सर्वबीजानि चेति।

८। अथ माता शुचिना वसनेन कुमारमाच्छाद्य पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङुपविशति।

९।. अथ यस्तत् करिष्यन् भवति पश्चात् प्राङवतिष्ठते।

१०। अथ जपत्यायमगात् सविता क्षुरेणेति सवितारं मनसा ध्यायन् नापितं प्रेक्षमाणः।

११। उष्णेन वाय उदकेनैधीति वायुं मनसा ध्यायन्नुष्णोदककंसं प्रेक्षमाणः।

१२। दक्षिणेन पाणिनाऽप आदाय दक्षिणां कपुष्णिकाम् उन्दत्याप उन्दन्तु जीवसे इति।

१३। विष्णोर्दंष्ट्रोऽसीत्यौदुम्बरं क्षुरं प्रेक्षत आदर्शं वा।

१४। ओषधे त्रायस्वैनमिति सप्त दर्भपिञ्जुलीर्दक्षिणायां कपुष्णिकायामभिशिरोग्रा निदधाति।

१५। ता वामेनाभिगृह्य दक्षिणेन पाणिनौदुम्बरं क्षुरं गृहीत्वादर्शं वाऽभिनिदधाति स्वधिते मैनं हिंसीरिति।

१६। येन पूषा बृहस्पतेरिति त्रिः प्राञ्चं प्रोह्यप्रच्छिन्दन् सकृद् यजुषा द्विस्तूष्णीम्।

१७। अथाऽऽयसेन प्रच्छिद्याऽऽनडुहे गोमये निदधाति।

१८। एतयैवाऽऽवृता कपुच्छलम्, एतयैवोत्तरां कपुष्णिकाम्।

१९। उन्दनप्रभृति त्रेधाभिनिर्वर्तयेत्।

२०। उभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत् त्र्यायुषं जमदग्नेरिति।

२१। एतयैवाऽऽवृता स्त्रियास्तूष्णीम्।

२२। मन्त्रेण तु होमः।

२३। उदङ्ङग्नेरुत्सृप्य कुशलीकारयन्ति यथागोत्रकुलकल्पम्।

२४। आनडुहे गोमये केशान् कृत्वाऽरण्यं हृत्वा निखनन्ति।

२५। स्तम्बे हैके निदधति।

२६। यथार्थं गौर्दक्षिणा।

[ दशमकण्डिकायाम् ]

१। गर्भाष्टमेषु ब्राह्मणमुपनयेत्।

२। गर्भैकादशेषु क्षत्रियं गर्भद्वादशेषु वैश्यम्।

३। आ षोडशाद् वर्षाद् ब्राह्मणस्यानतीतः कालो भवति आ द्वाविंशात् क्षत्रियस्य आ चतुर्विंशाद् वैश्यस्य।

४। अत ऊर्ध्वं पतितसावित्रीका भवन्ति।

५। नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्विवहेयुः।

६। यदहरुपैष्यन्माणवको भवति प्रग एवैनं तदहर्भोजयन्ति कुशलीकारयन्त्याप्लावयन्त्यलङ्कुर्वन्त्यहतेन वाससाऽऽच्छादयन्ति।

७। क्षौमशाणकार्पासौर्णान्येषां वसनानि।

८। ऐणेयरौरवाजान्यजिनानि।

९। मुञ्जकाशताम्बल्यो रशनाः।

१०। पार्णवैल्वाश्वत्था दण्डाः।

११। क्षौमं शाणं वा वसनं ब्राह्मणस्य कार्पासं क्षत्रियस्याऽऽविकं वैश्यस्य।

१२। एतेनैवेतराणि द्रव्याणि व्याख्यातानि।

१३। अलाभे वा सर्वाणि सर्वेषाम्।

१४। पुरस्ताच्छालाया उपलिप्त अग्निरुप-समाहितो भवति।

१५। अग्ने व्रतपते इति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङाचार्योऽवतिष्ठते।

१६। अन्तरेणाग्न्याचार्यौ माणवकोऽञ्जलि-कृतोऽभिमुख आचार्यमुदगग्रेषु दर्भेषु।

१७। तस्य दक्षिणतोऽवस्थाय मन्त्रवान् ब्राह्मणोऽपामञ्जलिं पूरयत्युपरिष्टाच्चा-ऽऽचार्यस्य।

१८। प्रेक्षमाणो जपत्यागन्त्रा समगन्महीति।

१९। ब्रह्मचर्यमागामिति वाचयति।

२०। को नामासीति नामधेयं पृच्छति तस्याऽऽचार्यः।

२१। अभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं वा नक्षत्राश्रयं वा गोत्राश्रय-मप्येके।

२२। उत्सृज्यापामञ्जलिमाचार्यो दक्षिणेन पाणिना दक्षिणपाणिं साङ्गुष्ठं गृह्णाति— "देवस्य ते सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसावि"ति।

२३। अथैनं प्रदक्षिणमावर्तयति "सूर्यस्या-ऽऽवृतमन्वावर्तस्वासौ" इति।

२४। दक्षिणेन पाणिना दक्षिणमंसम-न्ववमृश्यानन्तर्हितां नाभिमभिमृशेत् "प्राणानां ग्रन्थिरसी"ति।

२५। उत्सृज्य नाभिदेशमहुर इति।

२६। उत्सृज्य हृदयदेशं कृशन इति।

२७। दक्षिणेन पाणिना दक्षिणमंसमन्वालभ्य प्रजापतये त्वा परिददाम्यसाविति।

२८। सव्येन सव्यं देवाय त्वा सवित्रे परि-ददाम्यसाविति।

२९। अथैनं सम्प्रेष्यति ब्रह्मचार्यस्य-साविति।

३०। समिधमाधेह्यपोऽशान कर्म कुरु मा दिवा स्वाप्सीरिति।

३१। उदङ्ङग्नेरुत्सृप्य प्राङाचार्य उपविशत्युद-गग्रेषु दर्भेषु।

३२। प्रत्यङ् माणवको दक्षिण जान्वक्तो-ऽभिमुख आचार्यमुदगग्रेष्वेव दर्भेषु।

३३। अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलां परि-हरन् वाचयतीयं दुरुक्तात् परिबाध-मानेति, ऋतस्य गोप्त्रीति च।

३४। अथोपसीदत्यधीहि भोः सावित्रीं मे भवाननुब्रवीत्विति।

३५। तस्मा अन्वाह—पच्छोऽर्द्धर्चश ऋकृश इति।

३६। महाव्याहृतीश्च विहृता ओँकारान्ताः।

३७। वार्क्षं चास्मै दण्डं प्रयच्छन् वाचयति— सुश्रवः सुश्रवसं मा कुर्विति।

३८। अथ भैक्षं चरति।

३९। मातरमेवाग्रे द्वे चान्ये सुहृदौ यावत्यो वा सन्निहिताः स्युः।

४०। आचार्याय भैक्षं निवेदयते।

४१। तिष्ठत्यहःशेषं वाग्यतः।

४२। अस्तमिते समिधमादधात्यग्नये समिध-माहार्षमिति।

४३। त्रिरात्रमक्षारलवणाशी भवति।

४४। तस्यान्ते सावित्रश्चरुः।

४५। यथार्थं गौर्दक्षिणा।

---

तृतीयप्रपाठकस्य

[ प्रथमकण्डिकायाम् ]

१। अथातः षोडशे वर्षे गोदानम्।

२। चूडाकरणेन केशान्तकरणं व्याख्यातम्।

३। ब्रह्मचारी केशान्तान् कारयते।

४। सर्वाण्यङ्गलोमानि संहारयते।

५। गोमिथुनं दक्षिणा ब्राह्मणस्याश्वमिथुनं क्षत्रियस्याविमिथुनं वैश्यस्य।

६। गौर्वैव सर्वेषाम्।

७। अजः केशप्रतिग्राहाय।

८। उपनयनेनैवोपनयनं व्याख्यातम्।

९। न त्विहाहतं वासो नियुक्तम्।

१०। नालङ्कारः।

११। नाऽऽचरिष्यन्तं संवत्सरमुपनयेत्।

१२। वार्क्षं चास्मै दण्डं प्रयच्छन्नादिशति।

१३। आचार्याधीनो भवान्यत्राधर्मचरणात्।

१४। क्रोधानृते वर्जय।

१५। मैथुनम्।

१६। उपरि शय्याम्।

१७। कौशीलवगन्धाञ्जनानि।

१८। स्नानम्।

१९। अवलेखनदन्तप्रक्षालनपादप्रक्षालनानि।

२०। क्षुरकृत्यम्।

२१। मधुमांसे।

२२। गोयुक्तारोहणम्।

२३। अन्तर्ग्राम उपानहोर्धारणम्।

२४। स्वयमिन्द्रियमोचनमिति।

२५। मेखलाधारणभैक्षचर्यदण्डधारणसमिदाधानोदकोपस्पर्शनप्रातरभिवादा इत्येते नित्यधर्माः।

२६। गोदानिकव्रातिकादित्यव्रतौपनिषदज्येष्ठसामिकाः संवत्सराः।

२७। तेषु सायं प्रातरुदकोपस्पर्शनम्।

२८। आदित्यव्रतं तु न चरन्त्येके।

२९। ये चरन्त्येकवाससो भवन्ति।

३०। आदित्यश्च नान्तर्धीयतेऽन्यत्र वृक्षशरणाभ्याम्।

३१। नापोऽभ्यवयन्त्यूर्ध्वं जानुभ्यामगुरुप्रयुक्ताः।

[ द्वितीयकण्डिकायाम् ]

१। द्वादश महानाम्निकाः संवत्सराः।

२। नव षट् त्रय इति विकल्पः।

३। संवत्सरमप्येके।

४। व्रतं तु भूयः।

५। पूर्वैश्चेत् श्रुता महानाम्न्यः।

६। अथापि रौरुकिब्राह्मणं भवति, कुमारान् ह स्म वै मातरः पाययमाना आहुः, शक्वर्या पुत्रका व्रतं पारयिष्णवो भवतेति।

७। तास्वनुसवनमुदकोपस्पर्शनम्।

८। नानुपस्पृश्य भोजनं प्रातः।

९। सायमुपस्पृश्याभोजनमा समिदाधानात्।

१०। कृष्णवस्त्रः कृष्णभक्षः।

११। आचार्याधीनः।

१२। अपन्थदायी।

१३। तपस्वी।

१४। तिष्ठेद् दिवासीत नक्तम्।

१५। वर्षति च नोपसपच्छन्नम्।

१६ । वर्षन्तं ब्रूयादापः शाक्वर्य इति ।

१७ । विद्योतमानं ब्रूयादेवंरूपाः खलु शाक्वर्यो भवन्तीति ।

१८ । स्तनयन्तं ब्रूयान्मह्या महान् घोष इति ।

१९ । न स्रवन्तीमतिक्रामेदनुपस्पृशन् ।

२० । न नावमारोहेत् ।

२१ । प्राणसंशये तूपस्पृश्याऽऽरोहेत् ।

२२ । तथा प्रत्यवरोहे ।

२३ । उदकसाधवो हि महानाम्न्य इति ।

२४ । एवं खलु चरतः कामवर्षी पर्जन्यो भवति ।

२५ । अनियमो वा कृष्णस्थानासनपन्थभक्षेषु ।

२६ । तृतीये चरिते स्तोत्रीयामनुगापयेत् ।

२७ । एवमितरे स्तोत्रीये ।

२८ । सर्वा वाऽन्ते सर्वस्य ।

२९ । उपोषिताय संमीलितायानुगापयेत् ।

३० । कंसमपां पूरयित्वा सर्वौषधीः कृत्वा हस्ताववधाय प्रदक्षिणमाचार्योऽहतेन वसनेन परिणह्येत् ।

३१ । परिणहनान्ते वाऽनुगापयेत् ।

३२ । परिणद्धो वाग्यतो न भुञ्जीत त्रिरात्रमहोरात्रौ वा ।

३३ । अपि वाऽरण्ये तिष्ठेदाऽस्तमयात् ।

३४ । श्वोभूतेऽरण्येऽग्निमुपसमाधाय व्याहृतिभिर्हुत्वाऽथैनमवेक्षयेद् अग्निमाज्यमादित्यं ब्राह्मणमनड्वाहमन्नमपो दधीति स्वरभिव्यख्यं ज्योतिरभिव्यख्यमिति ।

३५ । एवं त्रिः सर्वाणि ।

३६ । शान्तिं कृत्वा गुरुमभिवादयते ।

३७ । सोऽस्य वाग्विसर्गः ।

३८ । अनड्वान् कंसो वासो वर इति दक्षिणाः ।

३९ । प्रथमे विकल्पः ।

४० । आच्छादयेद् गुरुमित्येके ।

४१ । ऐन्द्रः स्थालीपाकस्तस्य जुहुयादृचं साम यजामह इत्येतयर्चा सदसस्पतिमद्भुतमिति वोभाभ्यां वा ।

४२ । अनुप्रवचनीयेष्वेवं सर्वत्र ।

४३ । सर्वत्रावाप्यं तच्छकं तेनारातमसुराणामिति मन्त्रविशेषः ।

४४ । आग्नेयेऽज ऐन्द्रे मेषो गौः पावमाने पर्वदक्षिणाः ।

४५ । प्रत्येत्याऽऽचार्यं सपरिषत्कं भोजयेत् ।

४६ । सब्रह्मचारिणश्चोपसमेतान् ।

४७ । ज्यैष्ठसाम्नो महानाम्निकेनैवानुगापनकल्पो व्याख्यातः ।

४८ । सर्वैतानि नित्यव्रतानि भवन्ति ।

४९ । न शूद्रामुपेयात् ।

५० । न पक्षिमांसं भुञ्जीत ।

५१ । एकधान्यमेकदेशमेकवस्त्रञ्च वर्जयेत् ।

५२ । उद्धृताभिरद्भिरुपस्पृशेत् ।

५३ । आदेशनात् प्रभृति न मृन्मयेऽश्नीयात् ।

५४ । न पिबेत् ।

५५ । श्रवणादित्येके ।

[ तृतीयकण्डिकायाम् ]

१ । प्रौष्ठपद्यां हस्तेनोपाकरणम् ।

२ । व्याहृतिभिर्हुत्वा शिष्याणां सावित्र्यनुवचनं यथोपनयने ।

३ । सामसावित्रीञ्च ।

४ । सोमं राजानं वरुणमिति ।

५ । आदितश्छन्दसोऽधीत्य यथार्थम् ।

६ । अक्षतधाना भक्षयन्ति धानावन्तं करम्भिणमिति ।

७। दध्नः प्राश्नन्ति दधिक्राव्णोऽकारिष-मिति।

८। आचान्तोदकाः खाण्डिकेभ्योऽनुवाक्या अनुगेयाः कारयेत्।

९। सावित्रमहः काङ्क्षन्ते।

१०। उदगयने च पक्षिणीं रात्रिम्।

११। उभयत एकं त्रिरात्रम्।

१२। आचार्याणाञ्चोदकोपसेचनमुभयत्र।

१३। श्रवणामेक उपाकृत्यैतमा सावित्रात् कालं काङ्क्षन्ते।

१४। तैषीमुत्सृजन्ति।

१५। प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य या आपोऽनवमेहनीयास्ता अभ्येत्योप-स्पृश्य छन्दांस्यृषीनाचार्यांश्च तर्पयेयुः।

१६। तस्मिन् प्रत्युपाकरणेऽध्यानाध्याय आ पुनरुपाकरणाच्छन्दसः।

१७। विद्युत्स्तनयित्नुपृषितेष्वाकालम्।

१८। उल्कापातभूमिचलज्योतिषोपसर्गेषु।

१९। निर्घाते च।

२०। अष्टकामावास्यासु नाधीयीरन्।

२१। पौर्णमासीषु च।

२२। तिसृषु कार्त्तिक्यां फाल्गुन्यामाषा-ढ्याञ्चाहोरात्रम्।

२३। सब्रह्मचारिणि च प्रेते।

२४। राज्ञे च भूमिपतौ।

२५। त्रिरात्रमाचार्ये।

२६। उपसन्ने त्वहोरात्रम्।

२७। गीतवादितरुदितानिर्वातेषु तत्कालम्।

२८। शिष्टाचारतोऽन्यत्र।

२९। अद्भुते कृत्वैतयोः प्रायश्चित्तम्।

३०। वंशमध्यमयोर्मणिकं वा भित्वा व्याहृति-भिर्जुहुयात्।

३१। दुःस्वप्नेष्वद्य नो देव सवितरित्येतामृचं जपेत्।

३२। अथापरं चित्त्ययूपोपस्पर्शनकर्णक्रोशा-क्षिवेपनेषु सूर्याभ्युदितः सूर्याभिनिम्लुसः इन्द्रियैश्च पापस्पर्शैः पुनर्मामैत्विन्द्रिय-मित्येताभ्यामाज्याहुती जुहुयात्।

३३। आज्यलिप्ते वा समिधौ।

३४। जपेद् वा लघुषु।

### [ चतुर्थकण्डिकायाम् ]

१। ब्रह्मचारी वेदमधीत्य।

२। उपन्याहृत्य गुरवेऽनुज्ञातो दारान् कुर्वीत।

३। असगोत्रान्।

४। मातुरसपिण्डान्।

५। नग्निका तु श्रेष्ठा।

६। अथाऽऽप्लवनम्।

७। उत्तरतः पुरस्ताद् वाचार्यकुलस्य परिवृतं भवति।

८। तत्र प्रागग्रेषु दर्भेषूदङ्ङाचार्य उप-विशति।

९। प्राग् ब्रह्मचार्युदगग्रेषु दर्भेषु।

१०। सर्वौषधिविफाण्टाभिरद्भिर्गन्धवतीभिः शीतोष्णाभिराचार्योऽभिषिञ्चेत्।

११। स्वयमिव तु।

१२। मन्त्रवर्णो भवति।

१३। येऽप्स्वन्तरग्नयः प्रविष्टा इत्यपामञ्जलि-मवसिञ्चति।

१४। यद्पां घोरं यदपां क्रूरं यदपामशान्त-मिति च।

१५। यो रोचनस्तमिह गृह्णामीत्यात्मान-मभिषिञ्चति।

१६। यशसे तेजस इति च।

१७। येन श्रियमकृणुतमिति च।

१८। तूष्णीं चतुर्थम्।

१९। उपोत्थायाऽऽदित्यमुपतिष्ठत उद्यन् भ्राज-भृष्टिभिरित्येतत्प्रभृतिना मन्त्रेण।

२०। यथालिङ्गं वा।

२१। विहरंश्चक्षुरसीत्यनुबध्नीयात्।

२२। मेखलामवमुञ्चत उदुत्तमं वरुण पाशमिति।

२३। ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा केशश्मश्रुरोमनखानि वापयीत शिखा-वर्जम्।

२४। स्नात्वाऽलङ्कृत्याहते वाससी परिधाय स्रजमाबध्नीत श्रीरसि मयि रमस्वेति।

२५। नेत्र्यौ स्थो नयतं मामित्युपानहौ।

२६। गन्धर्वोऽसीति वैणवं दण्डं गृह्णाति।

२७। आचार्यं सपरिषत्कमभ्येत्याऽऽचार्य-परिषदमीक्षते—यक्षमिव चक्षुषः प्रियो वो भूयासमिति।

२८। उपोपविश्य मुख्यान् प्राणान् संमृशन्नो-ष्ठापिधाना नकुलीति।

२९। अत्रैनमाचार्योऽर्हयेत्।

३०। गोयुक्तं रथमुपसंक्रम्य पक्षसी कूबरबाहू वाऽभिमृशेत् वनस्पते वीड्वङ्गो हि भूया इति।

३१। आस्थाता ते जयतु जेत्वानीत्यातिष्ठति।

३२। प्राङ् वोदङ् वाऽभिप्रयाय प्रदक्षिणमावृ-त्योपयाति।

३३। उपयातायार्घ्यमिति कौहलीयाः

[ पञ्चमकण्डिकायाम् ]

१। अत ऊर्ध्वं वृद्धशीली स्यादिति समस्तोद्देशः।

२। तत्रैतान्याचार्याः परिसञ्चक्षते।

३। नाजातलोम्न्योपहासमिच्छेत्।

४। नायुग्वा।

५। न रजस्वलया।

६। न समानर्ष्या।

७। नापरया द्वारा प्रपन्नमन्नं भुञ्जीत।

८। न द्विः पक्वम्।

९। न पर्युषितम्।

१०। अन्यत्र शाकमांसयवपिष्टविकारेभ्यः।

११। न वर्षति धावेत्।

१२। नोपानहौ स्वयं हरेत्।

१३। नोदपानमवेक्षेत्।

१४। न फलानि स्वयं प्रचिन्वीत।

१५। नागन्धां स्रजं धारयेत्।

१६। अन्यां हिरण्यस्रजः।

१७। न मालोक्ताम्।

१८। स्रगिति वाचयेत्।

१९। भद्रमित्येतां वृथावाचं परिहरेत्।

२०। भद्रमिति ब्रूयात्।

२१। तत्रैते त्रयः स्नातका भवन्ति।

२२। विद्यास्नातको व्रतस्नातको विद्याव्रत-स्नातक इति।

२३। तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्वौ।

२४। नाऽऽर्द्रं परिदधीत।

२५। नैकं परिदधीत।

२६। न मनुष्यस्तुतिं प्रयुञ्जीत।

२७। नादृष्टं दृष्टतो ब्रुवीत।

२८। नाश्रुतं श्रुततः।

२९। स्वाध्यायविरोधिनोऽर्थानुत्सृजेत्।

३०। तैलपात्रमिवाऽऽत्मानं दिधारयिषेत्।

३१। न वृक्षमारोहेत्।

३२। न प्रतिसायं ग्रामान्तरं व्रजेत्।

३३। नैकः।

३४। न वृषलैः सह।

३५। न कासृत्या ग्रामं प्रविशेत्।

३६। न चाननुचरश्चरेत्।

३७। एतानि समावृत्तव्रतानि।

३८। यानि च शिष्टा विदध्युः।

[ षष्ठकण्डिकायाम् ]

१। गाः प्रकाल्यमाना अनुमन्त्रयेतेमा मे विश्वतो वीर्य इति।

२। प्रत्यागता इमा मधुमतीर्मह्यमिति।

३। पुष्टिकामः प्रथमजातस्य वत्सस्य प्राङ् मातुः प्रलेहनाज्जिह्वया ललाटमुल्लिख्य निगिरेद् गवां श्लेष्माऽसीति।

४। पुष्टिकाम एव संप्रजातासु निशायां गोष्ठेऽग्निमुपसमाधाय विलयनं जुहुयात् संग्रहण संगृहाणेति।

५। पुष्टिकाम एव सम्प्रजातास्वौदुम्बरेणा-सिना वत्समिथुनयोर्लक्षणं करोति पुंस एवाग्रेऽथ स्त्रिया भुवनमसि साहस्र-मिति।

६। कृत्वा चानुमन्त्रयेत लोहितेन स्वधितिनेति।

७। तन्तीं प्रसार्यमाणां बद्धवत्सां चानु-मन्त्रयेतेयं तन्ती गवां मातेति।

८। तत्रैतान्यहरहः कृत्यानि भवन्ति निष्का-लनप्रवेशने तन्तीविहरणमिति।

९। गोयज्ञे पायसश्चरुः।

१०। अग्निं यजेत पूषणमिन्द्रमीश्वरम्।

११। ऋषभपूजा।

१२। गोयज्ञेनैवाश्वयज्ञो व्याख्यातः।

१३। यमवरुणौ देवतानामत्राधिकौ।

१४। गन्धैरभ्युक्षणं गवां गन्धैरभ्युक्षणं गवाम्।

[ सप्तमकण्डिकायाम् ]

१। अथातः श्रवणाकर्म।

२। पौर्णमास्यां कृत्यम्।

३। पुरस्ताच्छालाया उपलिप्य शालाग्ने-रग्निं प्रणयन्ति।

४। अभितश्चत्वार्युपलिम्पति।

५। प्रतिदिशम्।

६। साधिके प्रक्रमे।

७। अग्नौ कपालमाधाय सकृत् संगृहीतं यवमुष्टिं भृज्जत्यनुपदहन्।

८। पश्चादग्नेरुलूखलं दृंहयित्वा बहुस्त्वु-ष्टचम्।

९। सुकृतान् सक्तून् कृत्वा चमस ओप्य शूर्पेणापिधाय निदधाति।

१०। दक्षिणपश्चिमे अन्तरेण सञ्चरः।

११। अस्तमिते चमसदर्व्यावादाय शूर्पं चाति-प्रणीतस्यार्धं व्रजति।

१२। शूर्प सक्तूनावपति चमसे चोदकमादत्ते।

१३। सकृत् संगृहीतान् दर्व्या सक्तून् कृत्वा पूर्वं उपलिप्त उदकं निनीय बलिं निवपति यः प्राच्यां दिशि सर्पराज एष ते बलिरिति।

१४। उपनिनयत्यपां शेषं यथा बलिं न प्रवक्ष्यतीति।

१५। सव्यं बाहुमन्वावृत्य चमसदर्व्या-वभ्युक्ष्य प्रताप्यैवं दक्षिणैवं प्रतीच्येव-मुदीची यथालिङ्गमन्यावर्तमानः।

१६। शूर्पेण शेषमग्नावोप्यानतिप्रणीतस्यार्धं व्रजति।

१७। पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्य नमः पृथिव्या इत्येतं मन्त्रं जपति।

१८। प्रदोषे पायसश्चरुः।

१९। तस्य जुहुयात् श्रवणाय विष्णवेऽग्नये प्रजापतये विश्वेभ्यो देवेभ्यः स्वाहेति।

२०। स्थालीपाकावृताऽन्यत्।

२१। उत्तरतोऽग्नेर्दर्भस्तम्बं समूलं प्रतिष्ठाप्य सोमो राजेत्येतं मन्त्रं जपति यां सन्धां समधत्तेति च।

२२। श्वस्ततोऽक्षतसक्तून् कारयित्वा नवे पात्रे पिधाय निदधाति।

२३। अहरहस्तूष्णीं बलीन् हरेत् सायं प्राग्घोमादाग्रहायण्याः।

[ अष्टमकण्डिकायाम् ]

१। आश्वयुज्यां पौर्णमास्यां पृषातके पायसश्चरू रौद्रः।

२। तस्य जुहुयाद् आ नो मित्रावरुणेति प्रथमां मानस्तोक इति द्वितीयाम्।

३। गोनामभिश्च पृथक् काम्याऽसीत्येतत्-प्रभृतिभिः।

४। स्थालीपाकावृताऽन्यत्।

५। पृषातकं प्रदक्षिणमग्निं पर्याणीय ब्राह्मणानवेक्षयित्वा स्वयमवेक्षेत— तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतमिति।

६। ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा जातुषान् मणीन् सर्वौषधिमिश्रानाबध्नीरन् स्वस्त्ययनार्थम्।

७। सायं गाः पृषातकं प्राशयित्वा सहवत्सा वासयेत्।

८। स्वस्ति ह्याऽऽसां भवति।

९। नवयज्ञे पायसश्चरुरैन्द्राग्नः।

१०। तस्य मुख्यां हविराहुतिं हुत्वा चतसृभिराज्याहुतिभिरभिजुहोति शतायुधायेत्येतत्प्रभृतिभिः।

११। स्थालीपाकावृताऽन्यत्।

१२। हविरुच्छिष्टशेषं प्राशयेद् यावन्त उपेताः स्युः।

१३। सकृदपामुपस्तीर्य द्विश्चरोरवद्यति त्रिर्भृगूणामपां चैवोपरिष्टात्।

१४। असंस्वादं निगिरेद् भद्रान् नः श्रेय इति।

१५। एवं त्रिः।

१६। तूष्णीं चतुर्थम्।

१७। भूय एवावदाय कामं तत्र संस्वादयेरन्।

१८। आचान्तोदकाः प्रत्यभिमृशेरन् मुखं शिरोऽङ्गानीत्यनुलोममसोऽसीति।

१९। एतयैवाऽऽवृता श्यामाकयवानाम्।

२०। अग्निः प्राश्नातु प्रथम इति श्यामाकानाम्।

२१। एतमुत्यं मधुना संयुतं यवमिति यवानाम्।

[ नवमकण्डिकायाम् ]

१। आग्रहायण्यां बलिहरणम्।

२। तत् श्रावणेनैव व्याख्यातम्।

३। नमः पृथिव्या इत्येतं मन्त्रं न जपति।

४। अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा दर्भान् शमीं वीरणां फलवतीमपामार्गं शिरीषमेतान्याहारयित्वा तूष्णीमक्षतसक्तूनामग्नौकृत्वा ब्राह्मणान् स्वस्ति वाच्यैतैः सम्भारैः प्रदक्षिणमग्न्यागारात् प्रभृति धूमं शातयन् गृहाननुपरीयात्।

५। उत्सृजेत् कृतार्थान् सम्भारान्।

६। जातशिलासु मणिकं प्रतिष्ठापयति वास्तोष्पत इत्येतेन द्विकेन सर्वेन।

७। द्वावुदकुम्भौ मणिक आसिञ्चेत् समन्या यन्तीत्येतयर्चा।

८। प्रदोषे पायसश्चरुः।

९। तस्य जुहुयात् प्रथमा ह व्युवास सेति।

१०। स्थालीपाकावृताऽन्यत्।

११। पश्चादग्नेर्बर्हिषि न्यञ्चौ पाणी प्रतिष्ठाप्य प्रति क्षत्र इत्येता व्याहृतीर्जपति।

१२। पश्चादग्नेः स्वस्तरमास्तारयेदुदगग्रैस्तृणैरुदक्प्रवणम्।

१३। तस्मिन्नहतान्यास्तरणान्यास्तीर्य दक्षिणतो गृहपतिरुपविशति।

१४। अनन्तरा अवरे यथाज्येष्ठम्।

१५। अनन्तराश्च भार्याः सजाताः।

१६। समुपविष्टेषु गृहपतिः स्वस्तरे न्यञ्चौ पाणी प्रतिष्ठाप्य स्योना पृथिवि नो भवेत्येतामृचं जपति।

१७। समाप्तायां संविशन्ति दक्षिणैः पार्श्वैः।

१८। एवं त्रिरभ्यात्ममावृत्य।

१९। स्वस्त्ययनानि प्रयुज्य यथाज्ञानम्।

२०। अरिष्टं सामसंयोगमेके।

२१। अप उपस्पृश्य यथार्थम्।

[ दशमकण्डिकायाम् ]

१। अष्टका रात्रिदेवता पुष्टिकर्मा।

२। आग्नेयी पित्र्या वा प्राजापत्यर्तुदेवता वैश्वदेवीति देवताविचाराः।

३। चतुरष्टको हेमन्तः।

४। ताः सर्वाः समांसाश्चिकीर्षेदिति कौत्सः।

५। त्र्यष्टक इत्यौद्गाहमानिः।

६। तथा गौतम-वार्कखण्डी।

७। योऽर्ध्वमाग्रहायण्यास्तामिस्राऽष्टमी ताम-पूपाष्टकेत्याचक्षते।

८। स्थालीपाकावृता तण्डुलानुपस्कृत्य चरुं श्रपयति।

९। अष्टौ चापूपान्।

१०। कपालेऽपरिवर्तयन्।

११। एककपालानमन्त्रानित्यौद्गाहमानिः।

१२। त्रैयम्बकप्रमाणान्।

१३। श्रृतानभिघार्योदगुद्वास्य प्रत्यभिघारयेत्।

१४। स्थालीपाकावृताऽवदाय चरोश्चापूपानां चाष्टकायै स्वाहेति जुहोति।

१५। स्थालीपाकावृताऽन्यत्।

१६। तस्या ऊर्ध्वमष्टम्यां गौः।

१७। तां सन्धिवेलासमीपं पुरस्तादग्नेरवस्थाप्योपस्थितायां जुहुयाद् यत् पशवः प्रध्यायतेति।

१८। हुत्वा चानुमन्त्रयेतानु त्वा. माता मन्यतामिति।

१९। यवमतीभिरद्भिः प्रोक्षेदुक्षकाय त्वा जुष्टं प्रोक्षामीति।

२०। उल्मुकेन परिहरेत् परि वाजपतिः कविरिति।

२१। अपः पानाय ब्रूयात्।

२२। पीतशेषमधस्तात् पशोरवसिञ्चेद् आत्तं देवेभ्यो हविरिति।

२३। अथैनामुदगुत्सृप्य संज्ञपयन्ति।

२४। प्राक्शिरसमुदक्पदीं देवदैवत्ये।

२५। दक्षिणशिरसं प्रत्यक्पदीं पितृदैवत्ये।

२६। संज्ञप्तायां जुहुयाद् यत् पशुर्मायुमकृतेति।

२७। पत्नी चोदकमादाय पशोः सर्वाणि स्रोतांसि प्रक्षालयेत्।

२८। अग्रेण नाभिं पवित्रे अन्तर्धायानुलोममाकृत्य वपामुद्धरन्ति।

२९। तां शाखाविशाखयोः काष्ठयोरवसज्याभ्युक्ष्य श्रपयेत्।

३०। प्रच्युतितायां विशसथेति ब्रूयात्।

३१। यथा न प्रागग्नेर्भूमिं शोणितं गच्छेत्।

३२। श्रुतामभिघार्योदगुद्वास्य प्रत्यभिघारयेत्।

३३। स्थालीपाकावृता वपामवदाय स्विष्टकृदावृता वाऽष्टकायै स्वाहेति जुहोति।

३४। स्थालीपाकावृताऽन्यत्।

चतुर्थप्रपाठकस्य

[ प्रथमकण्डिकायाम् ]

१। अनुप्रहरति वपाश्रपण्यौ।

२। प्राचीमेकशूलां प्रतीचीमितराम्।

३। अवदानान्यवदानानि सर्वाङ्गेभ्यः।

४। अन्यत्र वामाच्च सक्थ्नः क्लोम्नश्च।

५। वामं सक्थ्यन्वष्टक्याय निदध्यात्।

६। तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च मांसचरुञ्च पृथङ्मेक्षणाभ्यां प्रदक्षिणमुदायुवन्।

७। श्रुतावभिघार्योदगुद्वास्य प्रत्यभिघारयेत्।

८। कंसे रसमवासिच्य।

९। प्लक्षशाखावति प्रस्तरेऽवदानानि कृत्वा।

१०। स्थालीपाकावृताऽवदानानां कंसेऽवद्यति।

११। स्विष्टकृतश्च पृथक्।

१२। चरोरुद्धृत्य बिल्वमात्रमवदानैः सह यूषेण सन्नयेत्।

१३। चतुर्गृहीतमाज्यं गृहीत्वाऽष्टचंप्रथमया जुहुयात्प्रावग्निरिति।

१४। सन्नीतात् तृतीयमात्रमवदाय द्वितीयातृतीयाभ्यां जुहोति।

१५। उत्तरस्यां स्वाहाकारं दधाति।

१६। एवमेवावरे चतुर्थीपञ्चमीभ्यां षष्ठीसप्तमीभ्याञ्च।

१७। शेषमवदाय सौविष्टकृतमष्टम्या जुहुयात्।

१८। यद्यु वा अल्पसम्भारतमः स्यादपि पशुनैव कुर्वीत।

१९। अपि वा स्थालीपाकं कुर्वीत।

२०। अपि वा गोर्ग्रासमाहरेत्।

२१। अपि वाऽरण्ये कक्षमुपाधाय ब्रूयादेषा मेऽष्टकेति।

२२। न त्वेव न कुर्वीत न त्वेव न कुर्वीत।

[ द्वितीयकण्डिकायाम् ]

१। श्वस्ततोऽन्वष्टक्यम्।
२। अपरेद्युर्वा।
३। दक्षिणपूर्वेऽष्टमदेशे परिवारयन्ति।
४। तथायतम्।
५। तथामुखैः कृत्यम्।
६। चतुरवरार्ध्यान् प्रक्रमान्।
७। पश्चादुपसञ्चारः।
८। उत्तरार्धे परिवृतस्य लक्षणं कृत्वाऽग्निं प्रणयन्ति।
९। पश्चादग्नेरुलूखलं दृंहयित्वा सकृत् संगृहीतं व्रीहिमुष्टिमवहन्ति सव्योत्तराभ्यां पाणिभ्याम्।
१०। यदा वितुषाः स्युः।
११। सकृदेव सुफलीकृतान् कुर्वीत।
१२। अथामुष्माच्च सक्थ्नो मांसपेशीमवकृत्य नवायां सूनायामणुशश्छेदयेत्।
१३। यथा मांसाभिघाराः पिण्डा भविष्यन्तीति।
१४। तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च मांसचरुञ्च पृथङ्मेक्षणाभ्यां प्रसव्यमुदायुवन्।
१५। शृतावभिघार्य दक्षिणोद्वास्य न प्रत्यभिघारयेत्।
१६। दक्षिणार्धे परिवृतस्य तिस्रः कर्षूः खानयेत् पूर्वोपक्रमाः।
१७। प्रादेशायामाश्चतुरङ्गुलपृथ्वीस्तथाऽवखाताः।
१८। पूर्वस्याः कर्ष्वाः पुरस्ताल्लक्षणं कृत्वाऽग्निं प्रणयन्ति।
१९। अपरेण कर्षूः पर्याहृत्य लक्षणे निदध्यात्।
२०। सकृदाच्छिन्नं दर्भमुष्टिं स्तृणोति।
२१। कर्षूश्च।
२२। पूर्वोपक्रमाः।
२३। पश्चात् कर्षूणां स्वस्तरमास्तारयेत् दक्षिणाग्रैः कुशैर्दक्षिणाप्रवणम्।
२४। वृषीञ्चोपदध्यात्।
२५। तत्रात्मा आहरन्त्येकैकशः सव्यं बाहुमनु।
२६। चरुस्थाल्यौ मेक्षणे कंसं दर्वीमुदकमिति।
२७। पत्नी बर्हिषि शिलां निधाय स्थगरं पिनष्टि।
२८। तस्यां चैवाञ्जनं निघृष्य तिस्रो दर्भपिञ्जुलीरञ्जयति सव्यन्तराः।
२९। तैलञ्चोपकल्पयेत्।
३०। क्षौमदशाञ्च।
३१। शुचौ देशे ब्राह्मणाननिन्द्यानयुग्मानुदङ्मुखानुपवेश्य।
३२। दर्भान् प्रदाय।
३३। उदकपूर्वं तिलोदकं ददाति पितुर्नाम गृहीत्वाऽसावेतत् ते तिलोदकं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।
३४। अप उपस्पृश्यैवमेवेतरयोः।
३५। तथा गन्धान्।
३६। अग्नौ करिष्यामीत्यामन्त्रणं होष्यतः।
३७। कुर्वित्युक्ते कंसे चरुं समवदाय मेक्षणेनोपघातं जुहुयात् स्वाहा सोमाय पितृमत इति पूर्वां स्वाहाऽग्नये कव्यवाहनायेत्युत्तराम्।

[ तृतीयकण्डिकायाम् ]

१। अत ऊर्ध्वं प्राचीनावीतिना वाग्यतेन कृत्यम्।

२। सव्येन पाणिना दर्भपिञ्जूलीं गृहीत्वा दक्षिणाग्रां लेखामुल्लिखेदपहता असुरा इति।

३। सव्येनैव पाणिनोल्मुकं गृहीत्वा दक्षिणार्धे कर्षूणां निदध्याद् ये रूपाणि प्रतिमुञ्चमाना इति।

४। अथ पितॄनावाहयत्येत पितरः सोम्यास इति।

५। अथोदपात्रान् कर्षूषु निदध्यात्।

६। सव्येनैव पाणिनोदपात्रं गृहीत्वाऽवसलवि पूर्वस्यां कर्ष्वां दर्भेषु निनयेत् पितुर्नाम गृहीत्वाऽसाववनेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

७। अप उपस्पृश्यैवमेवेतरयोः।

८। सव्येनैव पाणिना दर्वीं गृहीत्वा सन्नीतात् तृतीयमात्रमवदायावसलवि पूर्वस्यां कर्ष्वां दर्भेषु निदध्यान् पितुर्नाम गृहीत्वाऽसावेष ते पिण्डो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

९। अप उपस्पृश्यैवमेवेतरयोः।

१०। यदि नामानि न विद्यात् स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात्, स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयम्, स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम्।

११। निधाय जपत्यत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति।

१२। अपपर्यावृत्य पुरोच्छ्वासादभिपर्यावर्त्तमानो जपेदमीमदन्त पितरो यथाभागमावृषायिषतेति।

१३। सव्येनैव पाणिना दर्भपिञ्जूलीं गृहीत्वाऽवसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वाऽसावेतत् ते आञ्जनं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

१४। अप उपस्पृश्यैवमेवेतरयोः।

१५। तथा तैलम्।

१६। तथा सुरभि।

१७। अथ निह्नुते।

१८। पूर्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणी कृत्वा नमो वः पितरो जीवाय नमो वः पितरः शूषायेति।

१९। मध्यमायां सव्योत्तानौ नमो वः पितरो घोराय नमो वः पितरो रसायेति।

२०। उत्तमायां दक्षिणोत्तानौ नमो वः पितरः स्वधायै नमो वः पितरो मन्यव इति।

२१। अथाञ्जलिकृतो जपति नमो वः पितरः पितरो नमो वः इति।

२२। गृहानवेक्षते गृहान् नः पितरो दत्तेति।

२३। पिण्डानवेक्षते सदो वः पितरो देष्मेति।

२४। सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वाऽवसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वाऽसावेतत् ते वासो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

२५। अप उपस्पृश्यैवमेवेतरयोः।

२६। सव्येनैव पाणिनोदपात्रं गृहीत्वाऽवसलवि पिण्डान् परिषिञ्चेदूर्जं वहन्तीरिति।

२७। मध्यमं पिण्डं पत्नी पुत्रकामा प्राश्नीयात् आधत्त पितरो गर्भमिति।

२८। यो वा तेषां ब्राह्मणानामुच्छिष्टभाक् स्यात्।

२९। अभूर्नो दूतो हविषो जातवेदा इत्युल्मुकमद्भिरभ्युक्ष्य।

३०। द्वन्द्वं पात्राणि प्रक्षाल्य प्रत्यतिहारयेत्।

३१। अप्सु पिण्डान् सादयेत्।

३२। प्रणीते वाऽग्नौ।

३३। ब्राह्मणं वा भोजयेद् गवे वा दद्यात्।

३४। वृद्धिपूर्तेषु युग्मानाशयेत्।

३५। प्रदक्षिणमुपचारः।

३६। यवैस्तिलार्थः।

[ चतुर्थकण्डिकायाम् ]

१। अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञो व्याख्यातः।

२। अमावास्यायां तत् श्राद्धम्।

३। इतरदन्वाहार्यम्।

४। मासीनम्।

५। दक्षिणाग्नौ हविषः संस्करणम्।

६। ततश्चैवातिप्रणयः।

७। शालाग्नावनाहिताग्नेः।

८। एका कर्षूः।

९। तस्या दक्षिणतोऽग्नेः स्थानम्।

१०। नात्रोल्मुकनिधानम्।

११। न स्वस्तरः।

१२। नाञ्जनाभ्यञ्जने।

१३। न सुरभि।

१४। न निह्नवनम्।

१५। उदपात्रान्तः।

१६। वासस्तु निदध्यात्।

१७। माघ्या ऊर्ध्वमष्टम्यां स्थालीपाकः।

१८। तस्य जुहुयाद् अष्टकायै स्वाहेति जुहोति।

१९। स्थालीपाकावृताऽन्यत्।

२०। शाकं व्यञ्जनमन्वाहार्यम्।

२१। अथ पितृदेवत्येषु पशुषु—वह वपां जातवेदः पितृभ्य इति वपां जुहुयात्।

२२। देवदेवत्येषु जातवेदो वपया गच्छ देवानिति।

२३। अनाज्ञातेषु तथादेशं यथाऽष्टकायै स्वाहेति जुहोति।

२४। स्थालीपाकावृताऽन्यत्।

२५। ऋणे प्रज्ञायमाने गोलकानां मध्यमपर्णेन जुहुयात्—यत् कुसीदमिति।

२६। अथातो हलाभियोगः।

२७। पुण्ये नक्षत्रे स्थालीपाकं श्रपयित्वैताभ्यो देवताभ्यो जुहुयात् इन्द्राय मरुद्भ्यः पर्जन्यायाशन्यै भगाय।

२८। सीतामाशामरडामनघां च यजेत।

२९। एता एव देवताः सीतायज्ञ-खलयज्ञ-प्रवपण-प्रलवन पर्ययणेषु।

३०। आखुराजं चोत्करेषु यजेत।

३१। इन्द्राण्याः स्थालीपाकः।

३२। तस्य जुहुयादेकाष्टका तपसा तप्यमानेति।

३३। स्थालीपाकावृताऽन्यत् स्थालीपाकावृताऽन्यत्।

[ पञ्चमकण्डिकायाम् ]

१। काम्येष्वत ऊर्ध्वम्।

२। पूर्वेषु चैके।

३। पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्येदं भूमेर्भजामह इति।

४। वस्वन्तं रात्रौ धनमिति दिवा।

५। इमं स्तोममिति तृचेन परिसमूहेत्।

६। वैरूपाक्षः पुरस्ताद्धोमानाम्।

७। काम्येषु च प्रपदः।

८। तपश्च तेजश्चेति जपित्वा प्राणायाममायम्यार्थमना वैरूपाक्षमारभ्योच्छ्वसेत्।

९। काम्येषु त्रिरात्राभोजनम्।

१०। त्रीणि वा भक्तानि।

११। नित्यप्रयुक्तानान्तु प्रथमप्रयोगेषु।

१२। उपोष्य तु यजनीयप्रयोगेषु।

१३। उपरिष्टाद् दैक्षं सान्निपातिकम्।

१४। अरण्ये प्रपदं प्रयुञ्जीत दर्भेष्वासीनः प्राक्कूलेषु ब्रह्मवर्चसकामः।

१५। उदक्कूलेषु पुत्रपशुकामः।

१६। उभयेषूभयकामः।

१७। पशुस्वस्त्ययनकामो व्रीहियवहोमं प्रयुञ्जीत सहस्रबाहुर्गौपत्य इति।

१८। कौतोमतेन महावृक्षफलानि परिजप्य प्रयच्छेत्।

१९। यस्याऽऽत्मनि प्रसादमिच्छेत् तस्मै।

२०। एकभूयांस्यात्मनो युग्मानि कुर्यात्।

२१। वृक्ष इवेति पञ्चर्चः।

२२। तस्मिन् प्रथमं पार्थिवं कर्म।

२३। अर्धमासमभुक्त्वा।

२४। अशक्तौ वा पेयामन्यतरं कालं यत्राऽऽत्मानं परिपद्येत्।

२५। एतद् व्रतमर्धमासव्रतेषु।

२६। पौर्णमास्यां रात्रावविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षततण्डुलानृगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके।

२७। अथापरम्।

२८। प्रथमयादित्यमुपतिष्ठेत भोगकामोऽर्थपतिचक्षुर्विषये सिध्यत्यर्थः।

२९। द्वितीययादित्ये परिविष्यमाणेऽक्षततण्डुलान् जुहुयाद् गृहत्पशुस्वस्त्ययनकामः।

३०। तृतीयया चन्द्रमसि तिलतण्डुलान् क्षुद्रपशुस्वस्त्ययनकामः।

३१। चतुर्थ्यादित्यमुपस्थायार्थान् प्रपद्येत स्वस्त्यर्थवानागच्छति।

३२। पञ्चम्यादित्यमुपस्थाय गृहान् प्रपद्येत स्वस्ति गृहानागच्छति स्वस्ति गृहानागच्छति।

[ षष्ठकण्डिकायाम् ]

१। भूरित्यनकाममर्गं नित्यं प्रयुञ्जीत।

२। न पापरोगान्नाभिचाराद् भयम्।

३। अलक्ष्मीनिर्णोदः।

४। यजनीयप्रयोगः।

५। मूर्धोऽधि म इत्येकैकया।

६। या तिरश्चीति सप्तमी।

७। वामदेव्यर्चः।

८। महाव्याहृतयः।

९। प्रजापत इत्युत्तमा।

१०। यशोऽहं भवामीति यशस्काम आदित्यमुपतिष्ठेत पूर्वाह्णमध्यन्दिनापराह्णेषु प्रातरह्नस्येति सन्नामयन्।

११। सन्धिवेलयोरुपस्थानं स्वस्त्ययनमादित्यनावमित्युद्यन्तं त्वादित्यानूद्यासमिति पूर्वाह्णे प्रतितिष्ठन्तं त्वादित्यानुप्रतितिष्ठासमित्यपराह्णे।

१२। आचितशतकामोऽर्धमासव्रतस्तामिस्राग्नौ व्रीहिकांसौदनं ब्राह्मणान् भोजयित्वा।

१३। तस्य कणानपरासु सन्धिवेलासु प्रत्यग्ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमा-

धायाऽऽदित्यमभिमुखो जुहुयात् भल्लाय स्वाहा भल्लाय स्वाहेति ।

१४ । एतयैवाऽऽवृताऽपरौ तामिस्रौ ।

१५ । तामिस्रान्तरेषु ब्रह्मचारी स्याद्वा समापनाद्वा समापनात् ।

[ सप्तमकण्डिकायाम् ]

१ । अवसानं जोषयेत ।

२ । समं लोमशमविभ्रंशि ।

३ । प्राच्य उदीच्यो वा यत्राऽऽपः प्रवर्तेरन् ।

४ । अक्षीरिण्योऽकण्टका अकटुका यत्रौषधयः स्युः ।

५ । गौरपांसु ब्राह्मणस्य ।

६ । लोहितपांसु क्षत्रियस्य ।

७ । कृष्णपांसु वैश्यस्य ।

८ । स्थिराघातमेकवर्णमशुष्कमनूषरममरुपरिहितमकिलिनम् ।

९ । दर्भसम्मितं ब्रह्मवर्चसकामस्य ।

१० । बृहत्तृणैर्बलकामस्य ।

११ । मृदुतृणैः पशुकामस्य ।

१२ । शाद्वासम्मितं मण्डलद्वीपसम्मितं वा ।

१३ । यत्र वा स्वभ्राः स्वयं खाताः सर्वतोऽभिमुखाः स्युः ।

१४ । तत्रावसानं प्राग्द्वारं यशस्कामो बलकामः कुर्वीत ।

१५ । उदग्द्वारं पुत्रपशुकामः ।

१६ । दक्षिणद्वारं सर्वकामः ।

१७ । न प्रत्यग्द्वारं कुर्वीत ।

१८ । अनुद्वारं च गृहद्वारम् ।

१९ । यथा न संलोकी स्यात् ।

२० । वर्जयेत् पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा । न्यग्रोधमपराद् देशाद् उत्तराच्चाप्युदुम्बरम् ॥

२१ । अश्वत्थादग्निभयं ब्रूयात् प्लक्षाद् ब्रूयात् प्रमायुकान् । न्यग्रोधाच्छस्त्रसंपीडामक्ष्यामयमुदुम्बरात् ॥

२२ । आदित्यदेवतोऽश्वत्थः प्लक्षो यमदेवतः । न्यग्रोधो वारुणो वृक्षः प्राजापत्य उदुम्बरः ॥

२३ । तानस्वस्थानस्थान् कुर्वीत ।

२४ । एताश्चैव देवता अभियजेत ।

२५ । मध्येऽग्निमुपसमाधाय कृष्णया गवा यजेत ।

२६ । अजेन वा श्वेतेन ।

२७ । सपायसाभ्याम् ।

२८ । पायसेन वा ।

२९ । वसामाज्यं मांसं पायसमिति संयूय ।

३० । अष्टगृहीतं गृहीत्वा जुहुयात् ।

३१ । वास्तोष्पत इति प्रथमा वामदेव्यर्चो महाव्याहृतय इत्युत्तमा ।

३२ । हुत्वा दश बलीन् हरेत् ।

३३ । प्रदक्षिणं प्रतिदिशम् ।

३४ । अवान्तरदेशेषु ।

३५ । आनुपूर्व्येणाव्यतिहरन् ।

३६ । इन्द्रायेति पुरस्ताद् वायव इत्यवान्तरदेशे यमायेति दक्षिणतः पितृभ्य इत्यवान्तरदेशे वरुणायेति पश्चान्महाराजायेत्यवान्तरदेशे सोमायेत्युत्तरतो महेन्द्रायेत्यवान्तरदेशे वासुकय इत्यधस्तादूर्ध्वं नमो ब्रह्मण इति दिवि ।

३७ । प्राच्यूर्ध्वावाचीभ्योऽहरहर्नित्यप्रयोगः ।

३८ । संवत्सरे संवत्सरे नवयज्ञयोर्वा ।

[ अष्टमकण्डिकायाम् ]

१। श्रवणाग्रहायणीकर्मणोरक्षताञ्छिद्य ।

२। प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधाय हयं राक इत्येकैकयाऽञ्जलिना जुहुयात् ।

३। प्राङुत्क्रम्य वसुवन एधीत्यूर्ध्वमुदीक्षमाणो देवजनेभ्यः ।

४। तिर्यङ्ङितरजनेभ्योऽवाङवेक्षमाणः ।

५। अनवेक्षमाणः प्रत्येत्याक्षतान् प्राश्नीयात् ।

६। उपेतैरमात्यैः सह ।

७। स्वस्त्ययनम् ।

८। यवाग्रमो शङ्खश्रेति पृथगाहुती व्रीहियवहोमौ प्रयुञ्जीत ।

९। यस्याऽऽत्मनि प्रसादमिच्छेत् तस्मै ।

१०। नित्यप्रयोगः ।

११। एकाक्षर्यामर्धमासव्रते द्वे कर्मणी ।

१२। पौर्णमास्यां रात्रौ खदिरशङ्कुशतं जुहुयादायुष्कामः ।

१३। आयसान् वधकामः ।

१४। अथापरम् ।

१५। प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथे पर्वते वारण्यैर्गोमयैः स्थण्डिलं प्रताप्यापोह्याङ्गारान् मन्त्रं मनसाऽनुद्रुत्य सर्पिरास्येन जुहुयात् ।

१६। ज्वलन्त्यां द्वादश ग्रामाः ।

१७। धूमे त्र्यवराद्ध्याः ।

१८। अमोघं कर्मेत्याचक्षते ।

१९। वृत्त्यविच्छित्तिकामो हरितगोमयान् सायं प्रातर्जुहुयात् ।

२०। त्रिरात्रोपोषितः पण्यहोमं जुहुयादिदमहमिमं विश्वकर्माणमिति ।

२१। वाससस्तन्तून् गोवालान् ।

२२। एवमितरेभ्यः पण्येभ्यः ।

२३। पूर्णहोमो यजनीयप्रयोगः ।

२४। इन्द्रामवदादिति च ।

२५। यशस्कामः पूर्वां सहायकाम उत्तराम् ।

[ नवमकण्डिकायाम् ]

१। पुरुषाधिपत्यकामोऽष्टरात्रमभुक्त्वा ।

२। औदुम्बरान् स्रुवचमसेध्मानुपकल्पयित्वा ।

३। प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधाय ।

४। आज्यमादित्यमभिमुखो जुहुयात्—अन्नं वा एकच्छन्दस्यं श्रीर्वा एषेति च ।

५। अन्नस्य घृतमेवेति ग्रामे तृतीयाम् ।

६। गोष्ठे पशुकामः ।

७। विद्रूयमाने चीवरम् ।

८। प्रतिभयेऽध्वनि वस्त्रदशानां ग्रन्थीन् बध्नीत ।

९। उपेत्य वसनवतः स्वाहाकारान्ताभिः ।

१०। महायानाञ्च स्वस्त्ययनम् ।

११। आचितसहस्रकामोऽक्षतसक्त्वाहुतिसहस्रं जुहुयात् ।

१२। पशुकामो वत्समिथुनयोः पुरीषाहुतिसहस्रं जुहुयात् ।

१३। अविमिथुनयोः क्षुद्रपशुकामः ।

१४। वृत्त्यविच्छित्तिकामः कम्बूकान् सायंप्रातर्जुहुयात् क्षुधे स्वाहा क्षुत्पिपासाभ्यां स्वाहेति ।

१५। मा भेर्षीर्न मरिष्यसीति विषवता दष्टमद्भिरभ्युक्षञ्जपेत्।

१६। तुर गोपायेति स्नातकः संवेशनवेलायां वैणवं दण्डमुपनिदधीत।

१७। स्वस्त्ययनार्थम्।

१८। हतस्ते अग्निना क्रिमिरिति क्रिमिमन्तं देशमद्भिरभ्युक्षञ्जपेत्।

१९। पशूनां चेच्चिकीर्षेदपराह्णे सीतालोष्टमाहृत्य वैहायसं निदध्यात्।

२०। तस्य पूर्वाह्णे पांशुभिः परिकिरञ् जपेत्।

[ दशमकण्डिकायाम् ]

१। उत्तरतो गां बद्धोपतिष्ठेरन् अर्हणा पुत्रवाससेति।

२। इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामीति प्रतितिष्ठमानो जपेत्।

३। यन्नेनमर्हयिष्यन्तः स्युः।

४। यदा वाऽर्हयेयुः।

५। विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिस्त्रिर्वेदयेरन्।

६। या ओषधीरित्युदञ्चं विष्टरमास्तीर्याभ्युपविशेत्।

७। द्वौ चेत् पृथग्गृभ्याम्।

८। पादयोरन्यम्।

९। यतो देवीरित्यपः प्रेक्षेत।

१०। सव्यं पादमवनेनिज इति सव्यं पादं प्रक्षालयेत् दक्षिणं पादमवनेनिज इति दक्षिणं पादं प्रक्षालयेत्।

११। पूर्वमन्यमपरमन्यमित्युभौ शेषेण।

१२। अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात्।

१३। यशोऽसीत्याचमनीयमाचामेत्।

१४। यशसो यशोऽसीति मधुपर्कं प्रतिगृह्णीयात्।

१५। यशसो भक्षोऽसि महसो भक्षोऽसि श्रीर्भक्षोऽसि श्रियं मयि धेहीति त्रिः पिबेत्।

१६। तूष्णीं चतुर्थम्।

१७। भूय एवाभिपाय शेषं ब्राह्मणाय दद्यात्।

१८। आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात्।

१९। मुञ्च गां वरुणपाशाद् द्विषन्तं मेऽभिधेहीति तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकम् इति ब्रूयात्।

२०। माता रुद्राणामित्यनुमन्त्रयेत।

२१। अन्यत्र यज्ञात्।

२२। कुरुतेत्यधियज्ञम्।

२३। षडर्घ्यार्हा भवन्ति।

२४। आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति।

२५। परिसंवत्सरानर्हयेयुः।

२६। पुनर्यज्ञविवाहयोश्च पुनर्यज्ञविवाहयोश्च।

---

# गोभिलीयश्राद्धकल्प-सूत्रपाठः

[ प्रथमकण्डिकायाम् ]

१। अथ श्राद्धम्।

२। अमावस्यायां पितृभ्यो दद्यात्।

३। पञ्चमीप्रभृति वाऽपरपक्षस्य।

४। यदहरुपपद्येत।

५। तदहर्ब्राह्मणानामन्त्र्य पूर्वेद्युर्वा।

६। अनिन्द्येनाऽऽमन्त्रितो नापक्रामेत्।

७। स्नातकान्।

८। एके यतीन्।

९। गृहस्थसाधून् वा।

१०। श्रोत्रियान्।

११। वृद्धान्।

१२। अनवद्यान्।

१३। स्वकर्मस्थान्।

१४। अभावेऽपि शिष्यान् स्वाचारान्।

१५। द्विर्नग्न-शुक्ल विक्लिध-श्यावदन्त-विद्ध-प्रजनन-व्याधिताधिक-व्यङ्गि-श्वित्रि-कुष्ठि-कुनखिवर्जम्।

१६। स्नातान् शुचीनाचान्तान् प्राङ्मुखानुपवेश्य दैवे युग्मान्।

१७। अयुग्मान् यथाशक्ति पित्र्य एकैकस्योदङ्मुखान्।

१८। द्वौ वा दैवे त्रीन् पित्र्ये।

१९। एकैकमुभयत्र वा।

२०। मातामहानाञ्चैवम्।

२१। तन्त्रं वा वैश्वदेविकम्।

२२। दैवपूर्वं श्राद्धं कुर्वीत।

२३। पिण्डपितृयज्ञवदुपचारः।

२४। पित्र्ये द्विगुणांस्तु दर्भान्।

२५। पवित्रपाणिर्दद्यादासीनः।

२६। सर्वत्र प्रश्नेषु पंक्तिमूर्धन्यं पृच्छति।

२७। सर्वान् वा।

[ द्वितीयकण्डिकायाम् ]

१। आसनेषु दर्भानास्तीर्य।

२। यवानादायोङ्कारं कृत्वा विश्वान् देवानावाहयिष्ये इति पृच्छति।

३। आवाहयेत्यनुज्ञातः विश्वे देवास आगत। शृणुता म इमं हवमेदं बर्हिर्निषीदत, विश्वे देवाः शृणुतेमं हवं मे ये अन्तरीक्षे य उप द्यवि ष्ठ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्। ओषधयः संवदन्ते सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसीति।

४। अथ पितॄनावाहयिष्य इति पृच्छति।

५। आवाहयेत्यनुज्ञातः उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नुशत आवह पितॄन् हविषे अत्तवे। एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्व्येभिर्दत्तास्मभ्यं द्रविणेह भद्रं रयिञ्च नः सर्ववीरं नियच्छत। आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मानिति।

६। अपहता असुरा रक्षांसि वेदिषद इति तिलैरन्ववकीर्याप उपस्पृशति।

७। यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेषु।

८। एकैकस्मिन्नप आसिञ्चति—शन्नो देवी-रिति।

९। एकैकस्मिन्नेव यवानावपति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति।

१०। पितॄनेकैकस्मिन्नेव तिलानावपति—तिलोऽसि सोमदेवत्यो गोसवो देव-निर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहेति।

११। सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमेषु वा।

१२। पत्रपुटेषु।

१३। यानि वा विद्यन्ते।

१४। एकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु।

१५। या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः सुहवा भवन्तु असाववनत् ते अर्घ्यं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति।

१६। अप उपस्पृश्यैवमेवेतरयोः।

१७। प्रथमे पात्रे संस्रवान् समवनीय पात्रं न्युब्जं कृत्वा शुन्धन्तां लोकाः पितृ-षदनाः पितृषदनमसि पितृभ्यः स्थानमसीति।

१८। अत्र गन्धपुष्पधूपदीपाच्छादनानां प्रदानम्।

१९। उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्यामीति।

२०। कुर्वित्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा।

२१। हुतशेषं ब्राह्मणाय दत्त्वा।

२२। पात्रमालभ्य जपेत्—पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहेति।

२३। वैष्णव्यर्चा यजुषा वाऽङ्गुष्ठमन्नेऽवधाय।

२४। सकृत् सकृदपो दत्त्वा।

२५। मधु वाता इति तृचं जपित्वा मधु च त्रिर्जप्त्वाऽश्नत्सु जपेत्।

२६। व्याहृतिपूर्वां सावित्रीं तस्याङ्चैव गायत्रं पित्र्याञ्च संहितां माधु-च्छन्दसीञ्च।

२७। स्वर्गे लोके महीयते दत्तञ्चास्याक्षय्यं भवति।

२८। तृप्तिं ज्ञात्वाऽन्नं प्रकीर्य ये अग्निदग्धा जीवा येऽप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति।

२९। सकृत् सकृदपो दत्त्वा पुनर्मधुवातां मधु च त्रिर्जप्त्वा तृप्ताः स्थेति पृच्छति।

३०। तृप्ताः स्म इत्युक्ते शेषमन्नमनुज्ञाप्य।

३१। सर्वमन्नमेकत्रोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवनेनिज्य दद्यात्।

३२। आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्यो-दकञ्च दद्यात्।

३३। अघोराः पितरः सन्तु, सन्त्वित्युक्ते, गोत्रं नो वर्धताम्, वर्धतामित्युक्ते, स्वधानि-नयनीयान् दर्भान् सपवित्रानास्तीर्य, स्वधां वाचयिष्य इति पृच्छति।

३४। वाच्यतामित्यनुज्ञातः पितृभ्यः पिता-महेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामिति।

३५। अस्तु स्वधेत्युक्ते स्वधानिनयनीये धारां दद्यादूर्जं वहन्तीरित्युत्तानं पात्रं कृत्वा।

३६। विश्वे देवाः प्रीयन्तामिति दैवे वाचयित्वा पिण्डपात्राणि चालयित्वा यथाशक्ति दक्षिणां दद्यात्।

३७। दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा व्यगमद् बहु देयञ्च नो अस्तु, अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि, याचितारश्च नः सन्तु मा च याचिष्म कञ्चनेत्येता एवाऽऽशिषः सन्तु।

३८। सन्त्वित्युक्ते स्वस्ति वाच्याऽऽशिषः प्रतिगृह्य।

३९। वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः, अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः।

४०। आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे, आमा गन्तां पितरा मातरा चामा सोमो अमृतत्वेन गम्यादित्यासीमान्तमनुव्रज्याभिवाद्य प्रदक्षिणीकृत्य वामदेव्यं गीत्वा प्रविशति।

[ तृतीयकण्डिकायाम ]

१। अथैकोद्दिष्टम्।

२। एकं पवित्रम्।

३। एकोऽर्घ्यः।

४। एकः पिण्डः।

५। नाऽऽवाहनम्।

६। नाग्नौकरणम्।

७। नात्र विश्वे देवाः।

८। स्वदितमिति तृप्तिप्रश्नः।

९। उपतिष्ठतामित्यक्षय्यदाने।

१०। अभिरम्यतामिति विसर्गः।

११। अथ सपिण्डीकरणम्।

१२। पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा।

१३। यदहर्वा वृद्धिरापद्येत।

१४। तदहश्चत्वार्युदकपात्राणि सतिलगन्धोदकानि पूरयित्वा।

१५। त्रीणि पितृणामेकं प्रेतस्य।

१६। प्रेतपात्रं पितृपात्रेष्वासिञ्चति—ये समानाः समनसः पितरो यमराज्ये। तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्। ये समानाः समनसो जीवा जीवेषु मामकाः। तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समा इति।

[ चतुर्थकण्डिकायाम ]

१। अथाऽऽभ्युदयिके श्राद्धे।

२। युग्मानाशयेत्।

३। प्रदक्षिणमुपचारः।

४। ऋजवो दर्भाः।

५। यवैस्तिलार्थः।

६। सम्पन्नमिति तृप्तिप्रश्नः।

७। दधिबदराक्षतमिश्राः पिण्डाः।

८। नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यदाने।

९। दैवं वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः, पितामहेभ्यः, प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वाहोच्यताम्।

१०। न स्वधां प्रयुञ्जीत।

११। श्रद्धान्वितः श्राद्धं कुर्वीत।

१२ । शाकेनापि नापरपक्षमतिक्रामेत् ।

१३ । मासि मासि वोऽशनमिति श्रुतेरिति श्रुतेरिति ।

[ पञ्चमकण्डिकायाम् ]

१ । अथ धर्माः ।

२ । तद्वहस्ततत्परः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यात् ।

३ । अध्व-मैथुन-श्रम-स्वाध्यायान् वर्जयेत् ।

४ । आवाहनादिवर्जं वाग्यतः ।

५ । ओपस्पर्शनात् ।

६ । अपि चात्रोदाहरन्ति ।

७ । यश्च व्याकुरुते शब्दान् यश्च मीमांसतेऽध्वरम् । सामस्वरविधिज्ञश्च पंक्तिपावनपावनाः, इति ।

८ । वागीश्वरो याज्ञिकश्च पंक्तिपावनपावनः, इति च ।

९ । नियोज्यानामभावेऽप्येकं वेदविदं पंक्तिमूर्धनि नियुञ्जात् काममितरान् ।

१० । अवेदविद्भिराक्रान्तां पंक्तिं योजनमायताम् । पुनाति वेदविद्ध्येको नियुक्तः पंक्तिमूर्धनि नियुक्तः पंक्तिमूर्धनि ॥

[ षष्ठकण्डिकायाम् ]

१ । अथ तृप्तीः ।

२ । ग्राम्याभिरोषधीभिर्मासं तृप्तिः ।

३ । तदलाभे आरण्याभिः ।

४ । मूलफलैरद्भिर्वा ।

५ । सहान्नेनोत्तरास्तर्पयन्ति ।

६ । छागोस्रमेषा आलभ्याः ।

७ । शेषाणि क्रीत्वा लब्ध्वा वा स्वयं मृतानां वा आहृत्य पचेत् ।

८ । मासद्वयं मत्स्यैः ।

९ । मासत्रयं हारिणेन मृगमांसेन ।

१० । चतुरः शाकुनेन ।

११ । पञ्च रौरवेण ।

१२ । षट् छागेन ।

१३ । सप्त कौर्मेण ।

१४ । अष्टौ वाराहेण ।

१५ । नव मेषमांसेन ।

१६ । दश माहिषेण ।

१७ । एकादश पार्षतेन ।

१८ । संवत्सरन्तु गव्येन पयसा ।

१९ । पायसेन वा ।

२० । वार्ध्रीणसस्य मांसेन द्वादश वर्षाणि ।

[ सप्तमकण्डिकायाम् ]

१ । अथाक्षय्यतृप्तीः ।

२ । खड्गः ।

३ । कालशाकम् ।

४ । लोहितच्छागः ।

५ । मधु ।

६ । महाशल्कः ।

७ । वर्षासु मघाश्राद्धम् ।

८ । हस्तिच्छायायाश्च ।

९ । मन्त्राध्यायिनः ।

१० । पूताः ।

११ । शाखाध्यायी ।

१२ । षडङ्गवित् ।

१३ । ज्येष्ठसामगः ।

१४ । अपि गायत्रीसारमात्रः ।

१५ । त्रिणाचिकेतः ।

१६ । त्रिमधुः ।

१७। त्रिसुपर्णः।

१८। पञ्चाग्निः।

१९। स्नातकः।

२०। मन्त्रब्राह्मणवित्।

२१। धर्मज्ञः।

२२। ब्राह्मोढापुत्रश्च।

२३। इति पंक्तिपावनाः।

२४। आ सहस्रात् पंक्तिं पुनातीति वचना-
दासहस्रात् पंक्तिं पुनातीति वचनात्।

[ अष्टमकण्डिकायाम् ]

१। अथ काम्यानां तिथयः।

२। पुत्रोऽभिरूपः प्रतिपदि।

३। द्वितीयायां स्त्रीजन्मा।

४। अश्वास्तृतीयायाम्।

५। चतुर्थ्यां क्षुद्रपशवः।

६। पञ्चम्यां पुत्रभागी।

७। द्यूतर्द्धिः षष्ठ्याम्।

८। कृषिः सप्तम्याम्।

९। अष्टम्यां वाणिज्यम्।

१०। आरोग्यं नवम्याम्।

११। दशम्यां गावः।

१२। परिचारका एकादश्याम्।

१३। द्वादश्यां धनधान्यं कुप्यं हिरण्यञ्च।

१४। ज्ञातिश्रैष्ठ्यञ्च त्रयोदश्याम्।

१५। युवानस्तत्र म्रियन्ते।

१६। शस्त्रहतस्य चतुर्दश्याम्।

१७। अमावस्यायां सर्वमित्यमावस्यायां
सर्वमिति।

---

# गोभिलीयसन्ध्यासूत्रपाठः

[ प्रथमकण्डिकायाम् ]

१। अथातः सन्ध्योपासनविधिं व्याख्या-
स्यामः।

२। सुप्रक्षालितपाणिपादवदन उपविश्यो-
पस्पृश्य।

३। प्रागग्रेषु दर्भेषु प्राङ्मुख उदङ्मुखो वा
बद्धशिखी यज्ञोपवीती।

४। तत ॐपूर्वा भूर्भुवः स्वर्महर्जनस्तपः
सत्यमिति सप्त व्याहृतयः सप्रणवा
गायत्र्यापोज्योती रसोऽमृतमिति शिरः।

५। दशप्रणवसंयुक्तास्त्रिरभ्यस्तः पूरककुम्भक-
रेचकाख्यः प्राणायामः।

६। एवं त्रीन् कृत्वा सप्त वा षोडश वा
आचामेत्।

७। ततो मार्जनम्।

८। प्रणवेन महाव्याहृतिभिस्तिसृभिर्गायत्र्या
आपोहिष्ठाभिस्तिसृभिः।

९। अथोदकं हस्ते कृत्वा तत्र नासिका-
मवधायाऽऽयतासुरनायतासुर्वा जपेदृतञ्च
सत्यञ्चेति।

१०। त्रीनुदकाञ्जलीनादित्यं प्रति क्षिपेत्
सावित्र्या।

११। तत उपस्थानम् उदु त्यं चित्रमिति।

१२। ध्यानयुक्तमावर्तयेदोंपूर्वां गायत्रीम्।

१३। अष्टकृत्व एकादशकृत्वो द्वादशकृत्वः
पञ्चदशकृत्वः शतकृत्वः सहस्रकृत्वश्चेति।

१४। अष्टकृत्वः प्रयुज्य पृथिवीमभिजयत्येका-
दशकृत्वोऽन्तरीक्षं द्वादशकृत्वो दिवं

पञ्च दशकृत्वः सर्वा दिशो जयति शतकृत्वः सर्वान् सहस्रकृत्वो यत्किञ्चित् सर्वमिति।

१५। अथ य इमां सन्ध्यां नोपास्ते नाऽऽचष्टे न स जयति।

१६। ये तूपासते श्रोत्रिया भवन्तीति।

१७। उपनीताश्छर्दनभेदनभोजनमैथुनस्वप्न-स्वाध्यायानाचरन्ति ये सन्ध्याकाले ते श्वशूकरशृगालगर्दभसर्पयोनिष्वभि-सम्पद्यमानास्तमोऽभिसम्पद्यन्ते।

१८। तस्मात् सायं प्रातः सन्ध्यामुपासीत।

१९। उदुत्यं चित्रमुद्वयं तमसस्परि भासं प्रागन्यदनुवर्तते। उभयं गायत्र्यनु-गानं प्रातः प्राङ्मुखस्तिष्ठन् जपेत्।

२०। एषो उषा अपूर्व्या आयुर्न्दं वृत्रहा वदे ऋजुनीतिनो वरुणः प्रत्यु अदर्शा-यत्युदुत्वेदभिश्रुता इयमिति वर्गमस्तं गते शतशो धारा अवकीर्य गायत्र्यनुविसृज्य प्राङ्मुख उपविश्य जपेत्।

२१। मध्यन्दिने विभ्राड् बृहदासीनो जपे-दासीनो जपेदिति।

---

# गोभिलीयस्नानसूत्रपाठः

[ प्रथमकण्डिकायाम् ]

१। अथ स्नानविधिं व्याख्यास्यामः।

२। नदीदेवखातगर्तप्रस्रवणादीन् गत्वा।

३। शुचौ देशे मृत्तिलकुशगोमयाक्षता-नुपकल्प्य।

४। पारक्यनिपाने पञ्च पिण्डानुद्धृत्य।

५। नमस्कृत्य तीर्थं पावका नः सरस्वतीति।

६। पादावारभ्य मृद्भिर्गात्राणि प्रक्षाल्य उपविशेत्।

७। बद्धशिखो यज्ञोपवीती प्राङ्मुख उदङ्-मुखो वा कुशहस्तः शुचिः समाहितः।

८। अथ सप्त व्याहृतीः सावित्रीं च जप्त्वा।

९। सप्तकृत्वः सावित्र्याऽनुमन्त्रितं सकृद् उदकमाचामेत्।

१०। तत आचम्यापो यथा विद्याचम्यापो-यथाविधि।

[ द्वितीयकण्डिकायाम् ]

१। अथ देवताऽभिसन्धिं कृत्वा।

२। सहस्रशीर्षा घृतवत्यश्वक्रान्तामित्यृग्भि-र्मृत्तिकामादाय।

३। इदं विष्णुर्विचक्रमे इति षडृचेन संमृज्य।

४। उद्वयं तमसस्परि उदुत्तममिति चोर्ध्वौ पाणी कृत्वादित्यमवेक्षेत।

५। उद्धृतासि वराहेणामोसीति च प्रति-लोमान्यङ्गान्यभिमृशेरन्।

६। त्रिरेतयैवाऽऽवृता कृत्वा।

७। गावश्चिद्घा समन्यव इत्येतेन गोमयं गाङ्गेषु मृत्तिकावत्।

८। ऋतञ्च सत्यञ्चेति त्रिः शुष्काघमर्षणं जपेत्।

९। ततो देवताऽभिसन्धिं कृत्वा।

१०। नाभिमात्रजले स्थित्वा।

११। शन्नोदेव्यापोहिष्ठीयाभिः पावमानीभि-स्तरत्समन्दीभिरेतोन्विन्द्रं तमुष्टवाम नकि इन्द्र इत्याभिरृग्भिः पवित्र-वतीभिर्मार्जयित्वा।

१२ । त्रिः प्राणायामं कृत्वा त्रिःप्लुत्य ।

१३ । सहस्रशीर्षा इति तृचेनाघमर्षणं जपेत् ।

१४ । ततस्त्रिराप्लुत्य ।

१५ । पुनः शन्नोदेव्यादिभिर्मार्जनञ्च मार्जनञ्च ।

[ तृतीयकण्डिकायाम् ]

१ । अथ नित्यवत् सन्ध्यामुपासीत ।

२ । उदु त्यं चित्रमायं गौरपत्ये तरणिरित्या-
मेष्याभिऋग्भिः सवितुरुपस्थानम् ।

३ । नमो ब्रह्मणे इत्युपजाय चेत्यन्तं ।

४ । अग्निस्तृप्यत्विति च तृप्यतां वा ।

५ । सर्वत्र सव्येनैतांस्तर्पयेत् ।

६ । अथापसव्येन ।

७ । राणायनिशटीति ।

८ । अथ कव्यवालानलो हिरण्या यमाश्च ।

९ । अथाऽऽस्मीयांस्त्रीन् पितृतस्त्रीन् मातृतो
मातामहांश्च तत्पत्नीश्चेति पितृतर्पणम् ।

१० । सनकादयश्च निवीतमिति मनुष्यधर्माः ।

११ । ततः प्रत्युपस्थानं गायत्र्यष्टशतादीन्
जप्त्वा ।

१२ । भासं दशस्तोभमुत्तरं गायत्रीसामोशनं
शुद्धाशुद्धीयं राजनरौहिणके बृहद्रथ-
न्तरं पुरुषगतिर्महानाम्न्यो महादि-
वाकीर्त्य ज्येष्ठसामानि देवव्रतानि
पुरुषव्रतानुगानं तवश्यावीयमादित्य-
व्रतमेकविंशत्यनुगानम् ।

१३ । पर्कादारभ्य यथाशक्त्यहरहर्ब्रह्मयज्ञ
इति गोभिलीया गोभिलीयाः ।

# सभाष्यगोभिलीयगृह्यसूत्राणां विषयानुक्रमणी

## [ प्रथमप्रपाठकस्य प्रथमकण्डिकायाम् ]



## [ द्वितीयकण्डिकायाम् ]



## [ तृतीयकण्डिकायाम् ]



## [ चतुर्थकण्डिकायाम् ]

---

द्वितीयप्रपाठकस्य

[ अष्टमकण्डिकायाम् ]



[ नवमकण्डिकायाम् ]



[ दशमकण्डिकायाम् ]

तृतीयप्रपाठकस्य

[ प्रथमकण्डिकायाम् ]



[ द्वितीयकण्डिकायाम् ]



[ तृतीयकण्डिकायाम् ]

[ चतुर्थकण्डिकायाम् ]



[ पञ्चमकण्डिकायाम् ]



[ षष्ठकण्डिकायाम् ]



[ सप्तमकण्डिकायाम् ]

चतुर्थप्रपाठकस्य

[ प्रथमकण्डिकायाम् ]



[ द्वितीयकण्डिकायाम् ]



[ तृतीयकण्डिकायाम् ]

[ चतुर्थकण्डिकायाम् ]



[ पञ्चमकण्डिकायाम् ]

| विषयाः | पत्राङ्काः |
|---|---|
| अर्धमासव्रतनियमः | ८०३ |
| अन्यत्रार्धमासव्रतं नियमातिदेशः | ,, |
| पार्थिवकर्मणि विशेषावृत् | ८०४ |
| अक्षततण्डुलविचारः (भा०) | ,, |
| पञ्चवं द्वितीयकर्म | ,, |
| अभिप्रेतसिद्धिः | ८०५ |
| वृहत्पत्रस्वस्त्ययनकामस्य होमः | ८०५ |
| क्षुद्रपशुस्वस्त्ययनकामस्य ,, | ,, |
| स्वस्त्यर्थवतो गृहागमनकामस्य | ८०६ |
| प्रवासात् स्वस्तिमतो गृहागमनकामस्य ,, | ,, |
| **[ षष्ठकण्डिकायाम् ]** | |
| अन्नकामस्यारमन्त्रप्रयोगः | ८०८ |
| तत्फलेषु विशेषः, पापरोगाभिचार-भयाभावः | ८०९ |
| अलक्ष्मीनिर्णोदः | ,, |
| तस्य कालः | ,, |
| प्रयोगेषु विशेषः | ,,—१२ |
| यशस्कामस्यादित्योपस्थानम् | ८१३ |
| स्वस्त्ययनार्थमादित्योपस्थानम् | ८१४ |
| आचितशतकामस्य प्रयोगः | ८१६-१७ |
| अत्रेतिकर्तव्यताविचारः | ८१७-१८ |
| **[ सप्तमकण्डिकायाम् ]** | |
| वास्तुकर्मणि भूमिनिरूपणम् | ८२० |
| तत्र ब्राह्मणक्षत्रियविशां विशेषः | ८२१ |
| ब्रह्मवर्चसकामस्य विशेषः | ,, |
| बलकामस्य ,, | ,, |
| पशुकामस्य ,, | ८२२ |
| भूमेराकृतौ विशेषः | ,, |
| गृहद्वारकरणे दिङ्निर्णयः | ८२३ |
| प्रधानद्वारस्य पश्चिमदिश्यकर्तव्यता | ,, |
| अनुद्वारं गृहद्वारस्याकर्तव्यता | ,, |
| गृहाभ्यन्तरस्यादृश्यताकरणम् | ८२३-२४ |
| पूर्वादिषु वर्जनीयवृक्षादि | ८२४ |
| वृक्षाणां देवतानिर्देशः | ८२५ |
| तेषामस्वस्थानस्थीकरणम् | ,, |
| उद्धरणपक्षे देवतापूजनम् | ८२८ |
| गृहमध्ये यागः | ८२९ |
| तत्र पशुपायसादिभेदः | ८३० |
| मिश्रहोमः, तत्रावृच्च | ८३०-३२ |
| होमानन्तरं बलिहरणम् | ८३२ |
| तत्रेतिकर्तव्यता | ८३३ |
| बलिदेवताकथनम् | ८३४ |
| ब्रह्मबलौ मन्त्रविचारः (भा०) | ८३५ |
| केषाञ्चिद् बलीनां नित्यत्वम् | ८३६ |
| तत्रापि विकल्पः | ,, |
| **[ अष्टमकण्डिकायाम् ]** | |
| अथ स्वस्त्ययनकर्म | ८४३-४६ |
| तत्र श्रवणाग्रहायणकर्मोर्वरितयवादिना विशेषहोमादि, अक्षतप्राशनञ्च | ८४३-४६ |
| प्रसादकरकर्म | ८४६-४७ |
| प्रसादप्राप्तिपर्यन्तं नित्यं कर्तव्यम् | ८४८ |
| एकाक्षर्या-प्रयोगाः | ,, |
| आयुष्कामस्य खदिरशङ्कुशतहोमः | ८४९ |
| वधकामस्य लोहशङ्कुहोमः | ,, |
| ग्रामकामस्यामोघनामकं कर्म | ८५०-५१ |
| वृत्त्यविच्छित्तिकामस्य वृत्तिप्रदकर्म | ८५१ |
| वृत्तिविचारः (भा०) | ८५२-५३ |
| पण्यहोमः सम्पदर्थम् | ८५४ |
| पण्यवस्तुप्राप्त्यर्थं तन्तुहोमादि | ,, |
| यशस्कामस्य पूर्णहोमः | ८५४ |
| सहायकामस्य पूर्णहोमः | ८५५-५६ |
| **[ नवमकण्डिकायाम् ]** | |
| पुरुषाधिपत्यकामस्य प्रयोगः | ८५९ |
| तत्र स्रुवचमसेध्मादिकल्पनम् | ,, |
| ,, चतुष्पथे अग्निस्थापनम् | ,, |
| तत्र होमाः मन्त्राश्च | ,,-६१ |
| पशुकामस्य पशुप्रदप्रयोगः | ८६१ |
| गोषु तप्यमानासु तत्तापशान्तये होमः | ८६२ |
| अध्वनि भये प्राप्ते वस्त्रदशासु ग्रन्थिबन्धनम् | ८६३ |
| सहायानाह्वानेन स्वस्त्ययनम् | ८६४ |
| आचितसहस्रकामस्याक्षतसक्त्वाहुतिः | ,, |

सभाष्य-

# गोभिल-गृह्य-सूत्रम्

## प्रथमप्रपाठकस्य प्रथमा कण्डिका

अथाऽतो गृह्यकर्माण्युपदेक्ष्यामः(A) ॥ १ ॥

ॐ श्रीगणेशाय नमः । [1]श्रीसामवेदाय नमः ।

ॐ नमो गोभिलाचार्याय ।

[2]आसीने चन्द्रमौलौ नगपतिसुतया साकमुद्वाहकाले
कर्तुं या मङ्गलार्थं तिलकमुपगता भ्रान्तहस्ता ललाटे ।
नीते शोषं स्मरारेर्नयनहुतभुजा चन्दने जातहासा
सा देवी विश्ववन्द्या दिशतु शुभविधौ मङ्गलं मङ्गला वः ॥
विश्वस्य कारणं विष्णुं प्रणम्य क्रियते मया ।
गृह्याख्यायाः स्मृतेर्भाष्यं विवेकार्थममेधसाम् ॥

अथ कोऽस्य सम्बन्धः ? उच्यते—धर्मार्थकाममोक्षा[3]स्तनुभृताम् इतीहाखिल[4]-पुरुषार्थाः, तेषां धर्मः प्रधानम्, तन्मूलावर्थकामौ । तथाच व्यासः—

(B)कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत् ।
न हि धर्मादपेतोऽर्थः कामो वापि कदाचन ॥ इति ।

मोक्षोऽपि तन्मूल [5]एव । तथा च श्रुतिः—तपसा ब्रह्म [6]जिज्ञासस्व इति(C) । मनुरपि च—

A. 'अथाऽतो गृह्यकर्माणि' इति खादिर-(१।१) द्राह्यायण (१।१।१) गृह्यसूत्रयोः ।

B. प्रमाणमिदं तर्कालङ्कारेणापि स्वभाष्ये धृतम्, 'स्मरति भगवान् व्यास' इत्युपोद्घातेन, किन्तु मुद्रितव्याससंहितायामयं श्लोको नोपलभ्यते ।

C. 'तपसा ब्रह्म विजिज्ञासस्व' श्रुतिस्त्वेवंरूपा मुद्रिततैत्तिरीयोपनिषदि भृगुवल्ल्यां द्वितीयानुवाके प्रथममन्त्रत्वेनोपलभ्यते ।

1. 'नमः सामवेदाय' क । 2. 'नास्त्ययं श्लोकः क-ख-पुस्तकयोः । 3. 'तनुभृताम्' इति नास्ति क-ख-पुस्तकयोः । 4. '-लाः पुरुषार्थाः' क । 5. 'एव चेति' ख । 6. 'जिज्ञासस्व चेति' क-ग-घ ।

(A)अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः ।
तपसश्चरणैश्चोग्रैः साधयन्तीह तत् पदम् ॥ इति ।

स च धर्मः कर्मसाध्यः । [1]कर्म च द्विविधम्, श्रौतं स्मार्त्तञ्चेति । (B) स्मार्त्तकर्मवतश्च[2] [3]श्रौते कर्मण्यधिकारः । अतः स्मार्त्तकर्म[4]व्याचिख्यासयेदं (C)गोभिलाचार्येण शास्त्रमारभ्यत इत्ययमस्य सम्बन्धः । सूत्रमिदानीं विव्रियते ।

[5]तत्रायमथशब्द आदौ (D)मङ्गलार्थः[3]* सर्वारम्भेषु लोके मङ्गलप्रयोगदर्शनात् । (E)आनन्तर्यार्थो वा । [6]सम्यक् साङ्गोऽधीतो वेदः, अथानन्तरं[6]* कर्म कर्त्तव्यमिति । अनधीतवेदस्य [7]चाऽन्यशास्त्राधिगम[7]*-प्रतिषेधात् । तथा च मनुः—

A. मनुसंहिता (६।७५) ।

B. स्मार्त्तकर्माणि च प्रधानतः संस्काराः । तथा च गर्भाधानाद्युपनयनान्तसंस्कारैर्विना वेदेऽनधिकारः । यथाह—मनुः—

न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।
नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते ।
शूद्रेण हि समस्तावद् यावद् वेदे न जायते ॥
कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ॥ इति २।१७१-१७३ ।
एवञ्च स्मार्त्तकर्मणां निरूपणमावश्यकमेवेति ।

C. "स खल्वयमाचार्यो राणायनीयानां सूत्रकार इति हेमाद्रिः । कौथुमा अपि राणायनीयप्रभेदा इति तेषामप्येतदेव गृह्यसूत्रम् । तथाच चरणव्यूहपरिशिष्टम्—"तत्र राणायनीया नाम सप्त भेदा भवन्ति, राणायनीयाः, शाट्यमुग्राः, कालोपाः, महाकालोपाः, लाङ्गलायनाः, शार्दूलाः, कौथुमाश्चेति" इति । सामोदधौ कौथुमिशाखाया द्विपञ्चाशद्ग्रन्थ-गणनायामपि गोभिलगृह्यं परिगणितम्" इति तर्कालङ्कारीये भाष्ये । १।१।१ ।

D. तत्रायमथशब्दो विशिष्टमानन्तर्यं प्रतिपादयति । अनेनाथशब्देन शास्त्रस्यादौ मङ्गलमपि कृतं भवति ।

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥

इति गृ ह्यसंग्रहोक्तेः [ २।९ ] । न चाथशब्दो मङ्गलार्थः । अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति । चः तः ( गोभिलगृह्य—१।१।१ ) ।

E. अथानन्तरम् । कस्मादनन्तरम् । 'देव सवितः' इत्यादिमन्त्रवच्छात्राध्ययनात् ।

1. 'द्विविधं च कर्म' ख । 2. 'च' नास्ति ख । 3. 'श्रौतैः कर्मभिरधिकारः' क । 4. 'विवचयिदं' ख, '-विधित्सयेदं' ग । 5. ओंकारश्चाथशब्दो द्वावेतौ माङ्गलिकाविति । 'अतः शांत' ख । 6. 'सम्यक् साङ्गवेदमधीत्याथानन्तरं' ख । 7. '-चान्यच शास्त्राधिगम-' ख ।

(A)योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ इति ।

अतः (B)शब्दो हेत्वर्थः । 'यस्माद्वेदो[1]ऽधीतोऽतोऽस्मात् कर्म कर्त्तव्यमिति, कर्मार्थत्वाद्वेदस्य । तथा चोक्तम्—

"[3]चरितार्थां न यः कुर्यादधीत्य श्रुतिमादृतः(C) ।
तस्य तद्धारणं व्यर्थमगन्धाया इव स्रजः ॥ इति ।

अथवा '[4]प्रज्ञाबुद्धिमेधातिशयवतामपि पुंसामिग्न्यानिग्न्यासिपरिवर्जनोपायपरिज्ञान-माधानादि-(D) कर्मपरिज्ञानं च स्मृतिशास्त्रमन्तरेण यस्मान्न[5] भवत्यतः स्मृति-शास्त्रं जिज्ञास्य"[6]मिति । गृह्याकर्माणीति । गृह्यशब्देन (E)स्मार्त्तोऽग्निरुच्यते । तस्मिन् यानि कर्माणि तानि गृह्या[7]कर्माणीति । दीर्घत्वं छान्दसम् । अथवा गृह्या स्मृतिः, तस्यां यानि कर्माणि[8] । अथवा (F)गृह्या पत्नी तया सहितस्य[9] यानि

---

यतोऽनधीतवेदस्य मन्त्रापरिज्ञानाद् वक्ष्यमाणेषु वाक्येषु कर्माऽनुष्ठानयोग्यतया प्रतिपत्तुमशक्यम्, अतस्तदनन्तरमिति गम्यते । इति रुद्रस्कन्दव्याख्या (खादिर १।१) ।

A. मनुसंहिता (२।१६८) ।

B. 'अतःशब्दो वक्ष्यमाणं प्रति वृत्तस्याध्ययनस्य पर्यवसानलक्षणं हेतुत्वमाह । अध्ययन-विधिर्हि अर्थावबोधपर्यन्तोऽनुष्ठानयोग्यमवबोधं विना न पर्यवस्यति । 'देव सवितः प्रसुव' इत्यादि मन्त्रोत्पन्नश्चावबोधो न गृह्यशास्त्रोपदेशं विना अनुष्ठानयोग्यो भवति । अत एव सूत्रार्थः—अध्ययनानन्तरं तत्पर्यवसानादेव हेतोः गृह्याणि कर्माण्युपदेक्ष्याम इति । रु: स्क: (द्राह्यायण—१।१।१) । अयमपरोऽतःशब्दार्थः । यतो वृत्तेन वेदाध्ययनादिना कर्मावबोधात् तस्य कर्त्तव्यत्वमिदानीमापतितम्.........यतश्चाश्रमान्तरेषु गार्हस्थ्यस्य प्राथम्यम् 'अतः' एतस्मात् कारणात् । अयमप्यपरोऽतःशब्दार्थः । यस्मात् यथोक्तानन्तरं गृह्यकर्मप्रतिपित्सवोऽन्तेवासिनो यथावदुपसन्नाः, 'अतः' एतस्मात् कारणात् । च: त: (१।१।१) ।

C. 'आदृतः' इत्यत्र 'आद्रित' इति पाठः सर्वालङ्कारीये भाष्ये (१।१।१) ।

D. आधानादिकर्म अग्न्याधानादिकर्मेत्यर्थः ।

E. औपासनाख्योऽग्निर्गृह्यः 'यस्मिन्नग्नौ पाणिं गृह्णीयात् स गृह्यः' इति वचनात् (खादिर गृ० सू० १।५।१) । तत्साध्यानि कर्माणि लक्षणया गृह्याणीत्याह । (रु: स्क:, खादिर १।१।१) ।

F. गृहे साध्वी कुशला योग्या हिता वेति गृह्या पत्नी तया सहितस्य यानि कर्त्तव्यानि कर्माणि तानीमानि गृह्याकर्माण्युपदेक्ष्यामः । (च: त: १।१।१) ।

---

1. 'तस्माद्' क । 2. 'धीत: कर्म कर्त्तव्यमिति' ख । 3. 'चरितार्थाम् यय: कुर्यात्' ग । 4. प्रज्ञामेधातिशय-' ख, 'प्रज्ञाबुद्धिमेधातिशयवतापि' क । 5. '-न सम्भवत्यत:' । 6. 'विज्ञाप्यमिति' ग । 7. '-कर्माणि' ख । 8. 'कर्माणीति' ख । 9. 'तया सहितानि' ख ।

कर्माणि। अथवा गृह्य, आ, [1]कर्माणीति त्रीण्येतानि पदानि। आ[2] इति शब्द-स्योपदेक्ष्याम इत्यनेन सह सम्बन्धः। गृह्यशब्देन गृहस्थस्य भौतिकं [3]व्रतमुच्यते। [4]तथा श्रावण(A) विधावुक्तम्—सामवेदे अष्टौ व्रतानि भवन्ति, उपनयनम्, गोदानम्,[5] व्रातिकम्, आदित्यव्रतम्, औपनिषदम्, ज्येष्ठसामव्रतम्, महा[6]नाम्निकमिति ब्रह्मचारिणः, भौतिकं सार्वभौतिक[7]मष्टमं गृह्यमिति गृहस्थस्य इति। तस्मिन् यानि कर्माणि तानि गृह्यकर्माणीति। आ उपदेक्ष्यामः [8]कथयिष्यामः। उपदेश [9]उपपन्नस्यान्ते-वासिनः स्वर्गापवर्गादिप्राप्तिसाधकपदार्थकथनम् आ उपदेक्ष्यामः[8]*। [10]आ इति(B) शब्द ईषदर्थे, [11]ईषदुपदेक्ष्यामः। ग्रन्थगौरवपरिजिहीर्षया अल्पै[12]रेवाक्षरैरित्यर्थः। [13]क्वचिदतिदेशेन यथा[14] 'पशोऽत ऊर्द्ध्वं हविराहुतिषु[15] न्याय' [१।६।२०] इति। क्वचिद् ग्रन्थान्तरापेक्षया यथा 'पृथगेवैतस्य[16] ज्ञानस्या[17]ध्यायो भवती'ति [१।५।१३] 'अपि वान्यं मथित्वा अभ्यादध्यादि'ति च [१।१।१७]। मन्थनविधिश्च (C)'अश्वत्थो यः शमीगर्भः'

---

* गृह्यासंग्रहे च—

पत्नाः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः।
गृह्या इति समाख्याता यजमानस्य दायकाः॥
तेषां संस्कारयोगेण शान्तिकर्मक्रियासु च।
आचार्यविहितः कल्पस्तस्माद् गृह्या इति स्थितिः॥ (इति गृः सं० १।३९-३६)।

A. श्रावणविधिस्तु सामवेदपरिशिष्टब्राह्मणसूत्रे षडशीतितमाध्यायादारभ्याष्टाशीतितमा-ध्यायपर्यन्तं विवृतः।

B. "आङ् सीमायां परिव्याप्तौ क्रियायोगेषदर्थयोरि"ति विश्वः।

C. अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः।
तस्य या प्राङ्मुखी शाखा वोदीची वोर्द्ध्वगाऽपि वा॥
अरणिस्तन्मयी प्रोक्ता तन्मय्येवोत्तरारणिः।
सारवद्दारवं चाश्मोविली च प्रशस्यते॥
संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते।
अलाभे त्वशमीगर्भादुद्धरेदविलम्बितः॥
चतुर्विंशतिरङ्गुष्ठदैर्घ्यं षडपि पार्थिवम्।
चत्वार उच्छ्रायमानमरण्योः परिकीर्त्तितम्॥

---

1. 'कर्माणीत्येतानि पदानि' ख। 2. 'आङ्शब्दस्यो' ख। 3. 'कर्म उच्यते' ख। 4. 'तथाच श्रावणविधा-' ख। 5. 'गोदानकं' ख। 6. 'महानाम्निव्रत-' ख। 7. '-भौतिकमित्यष्टमं' ख। 8. चिह्न-मध्यस्थो भागः ख-पुस्तके नास्ति। 9. 'उपसन्नस्य' ग। 10. 'आङ्शब्द' ख। 11. 'ईषदित्युप-' ख। 12. 'अल्पैरेवा-' ख। 13. '-क्वचिदतिशयेन' ख। 14. 'यथे'ति नास्ति ख। 15. 'शुक्लन्याय' ख। 16. 'तस्याज्ञानस्या' ग। 17. 'ज्ञानस्याध्यायः' ख।

इत्यादिकः कर्मप्रदीपोक्तो द्रष्टव्यः। क्वचित् प्रधानोक्त्या अङ्गानामनादरेण यथा— 'शुचौ देशे ब्राह्मणान् 'अनिन्द्यान् अयुग्मानुदङ्मुखानुपवेश्ये'ति [४।३।३३]। वैश्वदेवश्राद्धत्वान्नोक्तम्[2]।

## यज्ञोपवीतिनाऽऽचान्तोदकेन कृत्यम् ॥ २ ॥

यज्ञोपवीतं (A)त्रिपुष्करं ब्रह्मसूत्रमित्यर्थः तदस्यास्तीति यज्ञोपवीती।

[3]नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी पतितान्नवर्जी।

ऋतौ प्रगच्छन् विधिवच्च जुह्वन् न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥(B)

चमु भक्षणे। आचान्तं भक्षितमुदकं येनासावाचान्तोदकः, तेन यज्ञोपवीतिना आचान्तोदकेन कृत्यं कर्त्तव्यम्, प्रकृतत्वात् कर्म। यज्ञोपवीतो'दकाचमनयोः स्वरूपमुपरिष्टा[4]*द्वक्ष्यति (C)'यज्ञोपवीतं कुरुत'[5] इत्यत्र।

## उदगयने पूर्वपक्षे पुण्येऽहनि प्रागावर्तनादह्नः कालं विद्यात् ॥ ३ ॥

उदगयनम् उदक्प्रवृत्तिरादित्यस्य तस्मिन्नुदगयने, पूर्वपक्षे शुक्लपक्षे, पुण्ये [6]शोभने (D)विष्ट्यादिरहिते। अहनि दिवसे। अह्नो वासरस्य आवर्तनात् छायापरिवर्तनात् [7]प्राक् पूर्वं पूर्वाह्ण इत्यर्थः। कालं विद्यात् इति सर्वत्र वर्त्तते, प्रकृतत्वात् कर्मणः। ननु

अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद्द्वादशाङ्गुलम्।
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥
... ... ... ... ... ...
अस्यां यो जायते वह्निः स कल्याणकृदुच्यते।
अन्येषु ये तु मथ्नन्ति ते रोगभयमाप्नुयुः ॥
प्रथमे मन्थने त्वेष नियमो नोत्तरेषु च।

इत्यादि कात्यायनसंहितासप्तमाष्टमखण्डयोः।

A. त्रिवृत्तमित्यर्थः।

B. व्याससंहिता ८।९।

C. यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वापि वा कुशरज्जुमेव ( गो० सू० १।२।१ )

D. शुभकार्येषु विष्टि-मासदग्धा-तिथिदग्धा-महादग्धादयो व्यतीपातादयश्च योगा वर्ज्याः, लक्षणन्तु तेषां ज्योतिःशास्त्रादावगन्तव्यम्।

1. 'न निन्द्यानुपवेशयेति' ख। 2. एतदनन्तरं 'यथा' इत्यधिकः पाठः ख-पुस्तके। 3. क-ख पुस्तकयोः श्लोकोऽयं नास्ति। 4, '-दकाचमनमुपरिष्टा-' ख। 5. 'कुरुत सूत्रं इत्यादौ' ख। 6. 'शोभने' इति नास्ति ख। 7. 'प्राक्' इति नास्ति ख-ग।

पूर्वाह्ण इति वक्तव्ये प्रागावर्त्तनादह[1] इति कस्माद् ग्रन्थगौरवं क्रियते। आह—[2]श्राद्ध-पूर्वकत्वात् कर्मणः [3]श्राद्धस्य चोदयसन्निधौ प्रतिषेधात्। तथा च मनुः—

राश्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते॥(A) [4]इति

विसमासकरणमेकैकस्य बाहुगुण्यद्योतनार्थं [5]समुच्चितोपलब्धौ महानभ्युदयः।

## यथाऽऽदेशश्च ॥ ४ ॥

[6]कालं विद्यादिति वर्त्तते। तत्राय[7]मनुदगयनेप्यादेशो यथा। 'अथातः श्रवणाकर्मे'ति [ ३।७।१ ] अपूर्व[8]पक्षे च यथा 'योर्द्ध्वमाग्रहायण्यास्तामिस्राष्टमी'ति[9] [३।१०।७] तथा अपुण्येऽप्यहनि यथा "श्वस्ततोऽन्वष्टक्यम्" [४।२।१] इति। [10]तथा अपूर्वाह्णेऽपि च यथा "अपराह्णे [11]सीतालोष्ट"मिति। [४।६।१६] नन्वेतदवाच्यं यथादेशादेव सिद्धेः। नैष दोषः। [12]यथादिष्टकालक्रियायामाद[13]रार्थमुक्तम्[13]*। [14]यद्वयस्मिन्नहनि[14]* यस्मिश्च काले आदिष्टं तत्तथैव कर्त्तव्यम्। अन्यथा हि [15]कालातिपत्तौ केषाञ्चिल्लोप एव स्यात्, यथा पिण्डपितृयज्ञश्रवणाष्टकादीनाम्, केषाञ्चित् प्रायश्चित्तं कृत्वा पुनः क्रिया स्यात्, यथा सायंप्रातर्होमदर्शपूर्णमासपुंसवनादीनामिति। तथाऽपराह्णे पिण्डपितृयज्ञस्य विधानात् कालातिपत्तौ सन्ध्यासमीपं स्यात् तदनिष्टम्। तथा च शातातपः—

(B)[16]अपराह्णे क्षयक्षीणे क्षीणशेषे दिवाकरे।
स काल आसुरो ज्ञेयो वर्जितः श्राद्धकर्मणि॥ इति।

## सर्वाण्येवान्वाहार्यवन्ति ॥ ५ ॥

सर्वशब्दो[17]ऽयं श्रौतानामप्युपसंग्रहार्थः। एवशब्दः अवधारणार्थः। अन्वाहार्यशब्देन श्राद्धमुच्यते दक्षिणा च। तथा च गृह्यान्तरम्—

---

A. मनुसंहिता ३, २८०।

B. मुद्रितशातातपसंहितायामयं श्लोको नोपलभ्यते।

---

1. '-दक्षः' इति नास्ति ख। 2. 'दक्षिणाद्ध-' ख, 'श्राद्धपूर्वकदक्षिणात्' ग। 3. 'दक्षिणाद्धस्य' ख। 4. 'इति' नास्ति ख। 5. 'समुच्चयोपलब्धौ' ख। 6. 'यथाकालं' ख। 7. '-मुदगयने' ख। 8. पक्षेऽपि च' ख, 'पूर्वपक्षे' ग। 9. 'इति' नास्ति ख। 10. 'अथ पूर्वाह्णे' ख। 11. 'मितालोष्ट' ग। 12. 'यथादिष्टकालस्य क्रियायामादरार्थत्वात्' इति ख। 13. '-रार्थमिदमुक्तम्' ग। 14. 'उक्तमिति यस्मिन्नहनि' ख। 15. 'काललोपोपपत्ती' ख। 16. 'अपराह्ण-' क-ग-घ। 17. अत 'अयं' नास्ति क-ग।

(A)यच्छ्राद्धं कर्मणामादौ या चान्ते दक्षिणा भवेत्।
आमावास्यं द्वितीयं यदन्वाहार्यं तदुच्यते ॥ इति[1]।

तच्च श्राद्धं मातृपूजापूर्वकं स्यात्। तथा चोक्तम्—

कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥(B) इत्यादि[2]।

तस्य च[3] विधिः, (C)"प्रातरामन्त्रितान् विप्रानि"त्येव[4]मादिकः कर्मप्रदीपोक्तो द्रष्टव्यः। तत्र यानि कर्माण्यावृत्त्या क्रियन्ते तेषु प्रथमप्रयोग एव श्राद्धं स्यान्न प्रतिप्रयोग[5]मपीति। तथा चोक्तम्—

A. गृह्यान्तरोक्तत्वेन धृतमपि प्रमाणमिदं कर्मप्रदीपे (२७।१) उपलभ्यते।

B. कात्यायनसंहिता १।१३। मातृणां संज्ञा पूजाप्रकारश्च तत्रैव—

गौरी पद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश ॥ इति।

अत्र रघुनन्दनस्तु बह्वृचगृह्यपरिशिष्टवचनतया "धृतिः पुष्टि"रित्यादिस्थाने

शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह।
आदौ विनायकः पूज्यो अन्ते च कुलदेवता ॥

इति पठति प्रमाणयति च सगणाधिपगौर्यादिषोडशमातृकापूजाम्। तदेतत् सर्ववेदिसाधारणं छन्दोगपरिशिष्टवचनविसंवादात् सामगेतरपरं वेति सुधीभिश्चिन्त्यम्।

आसामर्चायां विशेषमाह तत्रैव—

प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु।
अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥ इति।

C. प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा।
उपवेश्य कुशान् दद्यादृजुनैव हि पाणिना ॥

इत्यादि कात्यायनसंहितायां द्वितीयखण्डे। प्रथमखण्डेऽपि—

कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु।
कारयेत् पञ्चधारां वा नातिनीचां न चोच्छ्रिताम् ॥

---

1. 'इत्यादि' ख। 2. 'इत्यादि' नास्ति ख। 3. 'च' नास्ति ख-ग। 4. '-मादिः' ख। 5. 'प्रयोगेऽपीति' ख।

(A) असकृद् यानि कर्माणि क्रियेरन् कर्मकारिभिः ।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च ॥ इति[1] ॥

तथा केषुचित् [2]कर्मसु प्रथमप्रयोगेऽपि श्राद्धं न स्यात् । [3]केषुचित् प्रतिप्रयोगमपि[3]* स्यात् । तदेतत् कर्मप्रदीपादुपलब्धव्यम् । (B)"आधाने होमयोश्चैवे"त्यादि ।

## अपवर्गेऽभिरूपभोजनं 'यथाशक्ति[4]'* ॥ ६ ॥

अपवृत्तिरपवर्गः । तस्मिन्नपवर्गे कर्मणोऽन्ते इत्यर्थः[5] । (C)अभिरूपो विद्वान् । कृतबुद्धिरनुष्ठाता चेति[6] तस्याभि[7]रूपस्याभिरूपयोरभिरूपाणाञ्चेति । भोजनम् अशनम् । यथाशक्ति यथाविभवम् । सेयं सर्वकर्मपरिभाषा ।

---

आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेत् ॥ इत्यादि ।

A. कात्यायनसंहिता ९।१ । 'यानि' स्थाने 'तानी'ति "वङ्गवासी"मुद्रितः पाठः ।

B. आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥
नवयज्ञे च यज्ञज्ञा वदन्त्येव मनीषिणः ।
एवमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥
नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥
विवाहादिः कर्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते ।
विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नादौ कर्मणः कर्मणः स्यात् ॥
प्रदोषे श्राद्धमेकं स्याद् गोनिष्क्रामप्रवेशयोः ।
न श्राद्धं युज्यते कर्त्तुं प्रथमे पुष्टिकर्मणि ॥
हलाभियोगादिषु तु षट्सु कुर्यात् पृथक् पृथक् ।
प्रतिप्रयोगमप्येषामादावेकन्तु कारयेत् ॥

इति कात्यायन-संहिता ९, २—७ ।

C. अभिरूपलक्षणमुक्तं गृह्यासंग्रहे—
यत्र विद्या च वित्तञ्च सत्यं धर्मः शमो दमः ।
अभिरूपः स विज्ञेयः स्वाश्रमे यो व्यवस्थितः । इति । गृ० स० २।१२ ।

---

1. 'इति' नास्ति ख-ग । 2. 'कर्मसु' नास्ति ख । 3. 'केषु प्रतिप्रयोगेऽपि' इति ख । 4. 'यथाशक्ती'ति नास्ति ख । 5. 'चर्थः' नास्ति ख । 6. 'चेति' नास्ति ख । 7. '-रूपस्याभिरूपाणां' ग ।

# ब्रह्मचारी वेदमधीत्याऽन्त्यां समिधमभ्याधास्यन् ॥७॥

ब्रह्मचारी (A)मैथुनवर्जी प्रसिद्धः[1]। अथवा क्रोधानृतादिविवर्जनेन ब्रह्मणः परमेष्ठिनो वृत्तमनु[2]पूर्वं चरतीति[3]* ब्रह्मचारी। वेदं वेदौ वेदान् वा अधीत्य पठित्वा (B)अन्त्यां पश्चिमां समिधं यथोक्तलक्षणाम्। लक्षणं [3]च तस्याः (C)'नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचिदि'त्यादिकम्। तामेवंलक्षणां समिध'मभ्याधास्यन् आभिमुख्येन 'अग्नये(D)

A. लक्षणमस्य वक्ष्यति स्वयमेव भाष्यकारः १।६।७।

B. अन्त्यायाः समिधो लक्षणमुक्तं गृह्यासंग्रहे—

आचार्येणाभ्यनुज्ञात आचार्याग्नौ विधिर्यथा।
प्रणीतेऽग्नौ समिद्दद्यादन्त्या सा ब्रह्मचारिणाम्॥ इति। गृ० स० २।९८।

C. समिधो लक्षणमुक्तं कर्मप्रदीपे—

नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित्।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता॥
प्रादेशान्नाधिका नोना तथा न स्यात् द्विशाखिका।
न सपर्णा न निर्वीर्या होमेषु च विजानता॥ इति। का-सं ८, १७—१८।

तत्र च वर्जनीयाः समिध आह गृह्यासंग्रहे—

मारणी राक्षसी रौद्री क्रव्यादी ब्रह्मराक्षसी।
स्थूलजङ्घा कराली च वज्रहस्ता तथैव च॥
यमदूती च विज्ञेया इत्येताः समिधो नव।
विशीर्णा विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा॥
क्रिमिदष्टा च दीर्घा च वर्जनीयाः प्रयत्नतः।
विशीर्णायुःक्षयं कुर्याद्द्विदला व्याधिसम्भवा॥
ह्रस्वा मृत्युकरी रौद्री दुर्भगत्वन्तु वक्रया।
विघ्नानि कुरुते स्थूला कृशा च रिपुवर्धिनी॥
द्विधा नाशयते ह्यर्थं भार्यांश्च प्रियबान्धवान्।
कीटदष्टाऽतिभयदा दीर्घा चैव सुतान् हरेत्॥
तस्मात् सर्वप्रयत्नेन वर्जनीयाश्च वर्जयेत्। इति गृ० स० १।२७—३१।

D. अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस्येवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन धनेनान्नाद्येन समेधिषीय। सामवेदीयमन्त्रब्राह्मणे १।६।३२।

1. कृतः प्रसिद्धः' ख। 2. '-कुर्वंश्चरन्निति' ख। 3. 'च' नास्ति ख। 4. '-माधास्यन्' क-ग।

समिधमाहार्षम्', इत्यनेन मन्त्रेण प्रातः आधास्यन् 'आदधदग्नौ'[1] प्रक्षिपन्नित्यर्थः। '(A)अग्निसमाधानं कुर्वीते'त्यनेन वक्ष्यमाणेन "पदचतुष्टये सम्बन्धः[2]। एवं वैश्यकुलाद्दियोनीना(B)मन्यतरस्य अग्निमाहृत्य वक्ष्यमाणञ्च[3] लक्षणं 'कृत्वा ततस्तां समिधमादध्यात्'[4]। इतरथा(C)ऽनुगतेऽग्नौ योन्यभावात् कुतोऽग्निराह्रियते। पाणिग्रहणपक्षेऽप्येवमेव। ब्रह्मचर्यानन्तरमेव गृहस्था"श्रमविधानं कुर्वीत तद्दर्शयति[5]। अनाश्रमित्वमेकमप्यहोरात्रं दोषाय भवतीति। तथाच दक्षः—

अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।

आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते द्विजः(D)॥ इति[6]।

अस्मिंश्च पक्षे तस्याऽऽधानं कर्त्तुं[7] युक्तं यस्य पूर्वमेव[8] केनचित् भार्यार्थं कन्यका प्रतिश्रुता स्यात्। तथा चोक्तम्—

यस्य दत्ता भवेत् कन्या वाचा सत्येन केनचित्।

सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा॥

अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति।

न तथा व्रतलोपोऽस्य तेनैवान्यां समुद्वहेत्॥

अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम्।

तमग्निमात्मसात् कृत्वा क्षिप्रं स्यादुत्तराश्रमी॥(E) इति[9]।

## जायाया वा पाणिं जिघृक्षन्॥ ८॥

जायाया भार्यायाः पाणिं हस्तं जिघृक्षन् ग्रहीतुमिच्छन्। "अग्निसमाधानं कुर्वीते"ति प्रकृतमनुवर्त्तते।

---

A. "दर्शे वा पौर्णमासे वाऽग्निसमाधानं कुर्वीत" गो० सू० १।१।१४।

B. अत्र "अन्यतमस्ये"ति पाठः साधीयान्, किन्तु कुत्राप्यादर्शेऽनुपलम्भान्मूले न निवेशित इति।

C. अनुगते विनष्टे इत्यर्थः। तन्वर्थोऽप्यनुपरिष्टाद् व्यक्तीभविष्यति। ( १।१।१६ )।

D. दक्षसंहिता १।१०। अत्र 'तिष्ठेत' पदस्थाने 'तिष्ठेत्तु' 'तिष्ठेच्च' इति पाठद्वयं तथान्तिम-'द्विज' पदस्थाने 'हि सः' इति पाठश्च मुद्रितपुस्तकेषूपलभ्यते।

E. कात्यायनसंहिता ६।१३—१५।

---

1. 'चाभिमुख्यमादधदग्नौ' क-ग। 2. 'पदचतुष्टयेन सह सम्बन्धः' क-ग। 3. '-माणं' ख। 4. 'कृत्वाऽग्निं प्रणयन् ततस्तां समिधमादध्यात्' ख-ग, 'कृत्वा चाग्निं प्रणीयत इति तस्यां समिध-' ग। 5. '-श्रम कुर्यात् एतद दर्शयति' ख। 6. 'इति' नास्ति ख। 7. 'कर्त्तुं' नास्ति ख। 8. 'पूर्वं' ख। 9. 'इति-' नास्ति ख।

**अनुगुप्ता अप आहृत्य प्रागुदक्प्रवणं देशं समं वा परि-(A)समुह्योपलिप्य मध्यतः प्राचीं [1]लेखामुल्लिख्योदीचीश्च संहतां पश्चात् मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत् ॥ ६ ॥**

अनुगुप्ता आच्छादिताः पतितादिभिरदृष्टाः, [2]अप उदकम् उदकाशयादाहृत्य आनीय ताभिः[2]* सुप्रक्षालितपाणिपादवदन आचम्य प्राक्(B)[3]प्रवणमुदक्प्रवणं वा देशं भूभागं [4]समं वा, परि सर्वतः [5](C)समुह्य पांशूनुत्सार्य (D)उपलिप्य[6] "(E)गोमयेन [7]समन्तं पर्युपलिम्पती"ति लिङ्गात्। मध्यतः मध्य[8]देशात् प्राचीं प्रागग्रतां [9]रेखा-

A. अत्र 'समूह्ये'ति दीर्घोकारयुक्तः पाठः क्वचिन्मुद्रितपुस्तके, स तु प्रामादिक एव, 'उपसर्गाद्ध्रस्व ऊहतेः' [ ७।४।२३ ] इति पाणिनि सूत्रानुशासनात्।

B. प्राङ्नीचादिफलमाह गृह्यासंग्रहे—

प्राङ्नीचं ब्रह्मवर्चस्यमुदङ्नीचं यशोत्तमम्।
पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भकं समम् ॥ इति। गृ० सं० १।४१।

C. समुह्येति, समूहनादिक्रमं स्पष्टयति कात्यायनो गृह्यासंग्रहे—

भूमेः समूहनं कृत्वा गोमयेनोपलिप्य च।
द्रव्याण्युत्तरतः स्थाप्य वृषीं कुर्यादुदङ्मुखीम् ॥
गोचर्ममात्रं कुर्वीत चतुरस्रमनूषरे।
सर्वतोऽरत्निमात्रं स्यात् सायं प्रातस्तु होमयोः ॥
ऋषभैकशतं यत्र गवां तिष्ठति संवृतम्।
बालवत्सप्रसूतानां गोचर्म इति तं विदुः ॥
षट् पञ्च चतुरो वापि त्रयो द्वौ वा शफौ स्मृतौ।
गोचर्म इति शब्दोऽयं विधियोगे निपात्यते ॥ इति। गृ० सं० १।३७—४०।

D. अत्र पूर्वोत्तरपक्षौ गृह्यासंग्रहे—

विष्णुपादपरिक्रान्ता वाराहेणोद्धृता च वा।
शुचिर्मेध्या च पूता च किमर्थमुपलिप्यते ॥
इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः।
मेदसा तस्य संक्लिन्ना तदर्थमुपलिप्यते ॥
मेदमुद्ध्रियमाणस्य शेषं यत् किञ्च तिष्ठति।
अन्तर्धानं मृदा चैव दीयते वेदनिश्चयः ॥ इति गृ० सं० १।५९—६१।

E. "अथ......स्थण्डिलं गोमयेन समन्तं पर्युपलिम्पति" गो० सू० १।५।१४।

1. 'रेखा-' च० त०। 2. 'अप उदकाशयादानीय ताभिः' ख। 3. '-प्रवणं वा देशं' ख। 4. 'समं वा परितः' ख। 5. 'समुह्य' ख। 6. 'उपलिप्य कृतः' ब। 7. 'कृतः, गोमयेन समन्तं' ख। 8. 'मध्यप्रदेशात्' ख-ग। 9. 'लेखा' क-ख-ग।

मुल्लिख्य उदीचीम् उदग्गतां *लेखामुल्लिख्य संहतां [1]प्रागग्रतायाः संलग्नां पश्चात् [2]पश्चिमेऽन्ते। मध्ये अनन्तरोक्तत्वादुदग्गतायाः संलग्नाः प्राचीः प्राग्गताः, तिस्रो (A) रेखा उल्लिख्य अभ्युक्षेत्। उक्ष सेचने, आभिमुख्येन[3] सिञ्चेदित्यर्थः[4]।

---

A. रेखोल्लेखने विशेषमाह गृह्यासंग्रहे—

लक्षणं तत् प्रवक्ष्यामि प्रमाणं दैवतञ्च यत्।
न नखेन न काष्ठेन नाश्मना मृन्मयेन वा॥
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु यो भवेत्।
नखेन कुनखी चैव काष्ठेन व्याधिमृच्छति॥
अश्मना धननाशः स्यान्मृन्मयेन कलिर्ध्रुवम्।
फलेन फलनी चैव पुष्पेण श्रियमृच्छति॥
पर्णेन धनलाभः स्याद् दीर्घमायुः कुशेन तु।
तस्मात् फलेन पुष्पेण पर्णेनाथ कुशेन वा॥
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु कर्मसु।
सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु॥
तावन्नोत्थापयेत् पाणिं यावदग्निं निधापयेत्।
प्राक्कृता पार्थिवी रेखा आग्नेयी चाप्युदक् स्मृता॥
प्राजापत्या तथा चैन्द्री सौमी च प्राक्कृता स्मृता।
उत्करं गृह्य रेखाभ्योऽग्निमाग्रे निधापयेत्॥
द्वारमेवन्तु द्रव्याणां प्रागुदीच्यां दिशि स्मृतम्।
पार्थिवी चैव सौमी च लेखे द्वे द्वादशाङ्गुले॥
एकविंशतिराग्नेयी प्रादेशिन्ये उभे स्मृते।
षडङ्गुलान्तराः कार्या आग्नेयीसंहितास्तु ताः॥
पार्थिवायास्तु रेखायास्तिस्रस्ता उत्तरोत्तराः।
शुक्लवर्णा पार्थिवी स्यादाग्नेयी लोहिता भवेत्॥
प्राजापत्या भवेत् कृष्णा नीलामैन्द्रीं विनिर्दिशेत्।
पीतवर्णेन सौमी स्याद्रेखाणां वर्णलक्षणम्॥
एष लेखविधिः प्रोक्तो गृह्यकर्मसु सर्वसु।
सूक्ष्मास्ता ऋजवः कार्या लेखास्ताः सुसमाहिताः।
एतानि तत्त्वतो ज्ञात्वा गृह्यकर्माणि कारयेत्॥ इति गृ० स० ११४७—६९।

1. 'प्राग्गतायां' ख। 2. 'पश्चिमेन' ख, 'पश्चिमतः' ग। 3. 'आभिमुख्यं' क-ग। 4. 'सिञ्चेदिति' ख।

[1]लेखा-(A)प्रमाणं तु—

लक्षणे प्रागगतायास्तु प्रमाणं (B)द्वादशाङ्गुलम् ।
तन्मूलसक्ता यांदीची तस्या एतन्नवोत्तरम् ॥
उदग्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः ।
सप्त सप्ताङ्गुलास्ताः स्युः कुशेनैव समुल्लिखेत् ॥(C) इति[2] ।

## लक्षणावृदेषा सर्वत्र ॥ १० ॥

परिसमूहनादिपरिषेकान्तं कर्म लक्षणसंज्ञं [3]भवति। तस्य लक्षणस्य आवृत् [4]प्रक्रिया सर्वत्र। [5]यत्र यत्र वचनादर्थयुक्त्या [6]वाऽग्निप्रणयनं क्रियते तत्र तत्रेति। [7]इदानीमेतत् चिन्त्यते—किमेष भूमिसंस्कार उताग्निसंस्कार इति[7]* । तत्रैके आहुः—'अग्निसमाधानं कुर्वीते'त्यग्नेरेव प्रकृतत्वादग्निसंस्कारोऽयमिति। अन्ये त्वाहुः—यद्यग्निसंस्कारो भूमेः किमायातम्, [8]येन परिसमूहनोपलेपनादि क्रियते। अग्निसंस्कारपक्षे तु [9]सकृत्संस्कृतत्वादग्नेः [10]स्थानान्तरप्राप्तौ कस्मात् पुनर्लक्षणविधानं [11]तत्र तत्र क्रियते। 'उत्तरार्द्धे परिवृतस्य लक्षणं कृत्वाऽग्निं प्रणयन्ती'ति [४।२।८]। [12]'पूर्वस्याः कर्ष्वाः पुरस्ताल्लक्षणं कृत्वाऽग्निं प्रणयन्ती'ति च [सू, ४।२।१८][12]* तस्माद् भूसंस्कार इति। वयन्तु उभयसंस्कारं मन्यामहे [13]यत्र यत्राऽग्निप्रणयनं तत्र तत्र भुवः संस्कारविधानाद् भूसंस्कारः[13]* । अनुगते[14] अग्नौ संस्कृताया अपि भूमेः पुनः

A. प्रमाणकर्त्तारमाह छन्दोगपरिशिष्टे—

मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि ।
मानकृद् यजमानः स्याद् विदुषामेष निश्चयः ॥ का० सं० ६।११ ।

B. अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात् सदा ॥
इत्यङ्गुलिप्रमाणमुक्तं कात्यायनसंहितायाम् ७।६ ।

C. कात्यायनसंहिता ६।९—१० ।

1. 'तथाचोक्तम्' ख। 2. 'इति' नास्ति ख। 3. 'भवति' नास्ति क-ग। 4. 'क्रिया एषा' ख-ग। 5. 'यत्र' नास्ति ख। 6. 'वा' नास्ति ख। 7. 'इदानीमित्यादि संस्कार इति' इत्यन्तभागो नास्ति ख। 8. 'येन' नास्ति क। 9. सकृत्स्थाने 'संस्कृत' इति ख। 10. 'स्थापनान्तर'-ख। 11. 'तत्र' नास्ति ख। 12. नास्ति ख। 13. 'परिसमूहनादीनामेव भूसंस्कारः' इति ख। 14. 'अनुगते उपशान्ते' ख।

संस्कारविधानादग्निसंस्कार इति। (A)तथाच गृह्यान्तरम्। "¹संमृज्योपलिप्योल्लिख्योद्धृत्याभ्युक्षेदेव भूसंस्कारोऽग्नावनुगते² भूयोऽग्नावनुगते²* भूय' इति। ³तस्मादुभयसंस्कार³* इति सिद्धम्॥

भूर्भुवः स्वरित्यभिमुखमग्निं प्रणयन्ति ॥ ११ ॥

⁴सृज्वेतत्(B)॥

प्रेते वा गृहपतौ (C)परमेष्ठिकरणम् ॥ १२ ॥

अयश्चापर आधानकालः। प्रेते प्रकर्षेण ⁵इते गते मृते इत्यर्थः⁶। वाशब्दो

---

A. "यद्यग्निस्थापनानन्तरं कर्मकाले वृष्ट्यादिशङ्कया संस्कृताग्निरन्यत्रानीयते तदा पुनरपि भूसंस्कारः कर्त्तव्यः। 'समुह्योपलिप्योल्लिख्य......भूय' इति गृह्यान्तरात्" इति गृह्यान्तरमिदं प्रमाणीकरोति रघुनन्दनः संस्कारतत्त्वे।

B. अग्निमभिमुखं होमाभिमुखम्। प्रणयन्ति रेखोपरि स्थापयन्ति। तत्प्रकारमाह गृह्यासंग्रहे—

शुभं पात्रं तु कांस्यं स्यात् तेनाग्निं प्रणयेद् बुधः।
तस्याभावे शरावेण नवेनाभिमुखञ्च तम्॥ गृ०-सं १।६८।

निषिद्धपात्रमाह तत्रैव—

कपालैर्भिन्नपात्रैर्वा न स्वामैर्गोमयेन वा।
अग्निप्रणयनं कार्यं यजमानभयावहम्॥
अल्पः प्रणीतो विच्छिन्नोऽसमिद्धश्चापरिश्रुतः।
त्वरया पुनरानीतो यजमानभयावहः॥
तस्माच्छुभेन पात्रेण अविच्छिन्नाकृतं बहु।
अग्निप्रणयनं कुर्याद् यजमानसुखावहम्॥ गृ० स० १-६४-६६।

"यत् पुनः— शरावे भिन्नपात्रे वा कपाले वोल्मुकेऽपि वा।
नाग्निप्रणयनं कुर्याद् व्याधिहानिभयावहम्॥

इति स्मृत्यन्तरम् तदुदाहृतगृह्यासंग्रहवचनविरोधाद् राणायनीयकौथुमाद्व्यतिरिक्तविषयम्। कांस्यादिपात्रसद्भावे शरावनिषेधकमिति राघवभट्टप्रभृतयः" इति च, त, १।१।११।

C. अत्र सामश्रमी "परमेष्ठी" इति दीर्घं लिखित्वा 'परमेष्ठिकरणमिति ह्रस्वेकारयुक्तपाठस्तु क्वापि पुस्तकेऽनुपलभ्यत्वान्न युक्तः' इति अल्पति, अस्माभिस्तु सर्वेष्वादर्शपुस्तकेषु ह्रस्वेकारयुक्त एव पाठो लब्ध इति तच्चिन्त्यम्।

---

1. 'परिसमुह्य' ख। 2. चिह्नितांशो नास्ति ख। 3. 'तस्मादुभय इति तस्मादुभयसंस्कार' ग।
4. 'सृज्वेतत्' नास्ति क, 'सृज्वर्थम्' ग। 5. 'इते' नास्ति ख। 6. 'इति' ख।

विकल्पार्थः। गृहपतौ कुलपतौ, परमे स्थाने तिष्ठति इति परमेष्ठी। तस्य परमेष्ठिनः अग्नेः करणं [1]परमेष्ठिकरणम्। [2]अग्निसमाधानकाल इत्यर्थः[2]*। द्रव्यसाध्यत्वात् कर्मणः, मृते च पितरि पुत्राणां गोहिरण्यादिद्रव्यविभागे[3] अधिकृतत्वात्। तथाच मनुः—

ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः [4]समम्।
भजेरन् पैतृकम् ऋक्थमनीशास्ते हि जीवतोः(A)॥ इति।

तच्चैकादशेऽहनि स्यात् प्रागनधिकारात्॥

## तथा तिथिनक्षत्रपर्वसमवाये ॥ १३ ॥

तिथिः प्रतिपदाद्या शोभनैव[5]। [6]नक्षत्रमश्विन्यादि[6]* शोभनमेव। तयोस्तिथिनक्षत्रयोः शोभनयोः[7] समवायः संयोगः [8]तिथिनक्षत्रसमवायः(B) तस्मिन् [9]तिथिनक्षत्र-

A. मनुसंहिता—९।१०४।

B. अत्र चावसथ्याधानकाल उक्तो विशेषेण तिथि-नक्षत्र-योग-लग्नादिमेलनैः पारस्कर-गृह्य-गदाधरभाष्ये तस्मादुद्धृत्य दिङ्मात्रमुपन्यस्यते। कारिकायाम्—

माघादिपञ्चमासेषु श्रावणे वाऽऽश्विनेऽथवा।
कुर्यान्मृगोत्तमाङ्गे वा आधानं शुक्लपक्षतः॥
हस्तद्वये विशाखासु कृत्तिकादित्रये तथा।
पुनर्वसुद्वये तद्वद्रेवतीषूत्तरासु च॥
भौमार्कवर्जिते वारे नाधिमासे क्षये तथा।
चन्द्रेऽनुकूले पूर्वाह्णे रिक्ताविष्टिविवर्जिते॥
सवैधृतिश्च व्यतिपातनामा सर्वोऽप्यनिष्टः परिघस्य चार्धम्।
विष्कम्भे घटिकाः पञ्च नव हर्षण-वज्रयोः।
गण्ड-व्याघातयोः षट् च शूले सप्त न शोभनाः॥

महेश्वरः—

चूडाकर्मनृपाभिषेकनिलयाग्न्याधानपाणिग्रहान्
देवस्थापनमौञ्जिबन्धनविधीन् कुर्यान्न याम्यायने।
देवेज्यास्फुजितोस्तथास्तमितयोर्बाल्ये च वार्धे तयोः
केतावभ्युदिते तथा ग्रहणतो यावत् तिथिश्चाष्टमी॥

1. 'परमेष्ठिकरणम्' नास्ति ख। 2. '-धानमित्यर्थः' ख, '-धानकरणमित्यर्थः' म। 3. '-विभागाधि-' म। 4. 'सह' क-ख-म। 5. '-भता' ख। 6. 'नक्षत्रं नक्षत्रमविरोधस्य-' मित्येवमादि' ख। 7. 'शोभनयोः' नास्ति ख। 8. 'तिथिनक्षत्रसमवायः' नास्ति ख। 9. 'तिथिनक्षत्रसमवाये' नास्ति ख।

समवाये। 'अग्निसमाधानं कुर्वीते'त्यनु'वर्त्तते। नक्षत्रशब्दः काकाक्षिगोलक-न्यायेनोभयत्र सम्बध्यते, नक्षत्रमुक्तलक्षणम्, एवं पौर्णमासी तयोः नक्षत्रपर्वणोः समवायः संयोगो नक्षत्रपर्वसमवायः तस्मिन् "नक्षत्रपर्वसमवाये। वाशब्दो लुप्तवद्द्रष्टव्यः"। 'आधानं कुर्वीते'त्यनु'वर्त्तते। अथवा तिथिना पौर्णमास्या यानि नक्षत्राणि समाख्यायन्ते तानि तिथिनक्षत्राणि "मघादीनि(A) द्वादश। तेषामन्यतमस्य पर्वणा पौर्णमासेन समवायः संयोगः तिथिनक्षत्रपर्वसमवायस्तस्मिन्निति।

## दर्शे वा पौर्णमासे वाऽग्निसमाधानं कुर्वीत ॥ १४ ॥

दर्शः अमावस्या, पौर्णमासः पौर्णमासी। वाशब्दद्वित्वं तुल्यविकल्पार्थम्। यस्मिन् "कस्मिंश्चिद् "दर्शे पौर्णमासे वा आधानं कुर्वीत न" नक्षत्रयोगाद्यपेक्षया"* कालविलम्बी स्यात्। 'न श्वः "समुपासीत को हि मनुष्यस्य श्वो वेदे'ति श्रुतेः।(B)

---

केतुनिर्घातभूकम्पविद्युत्स्तनितदर्शने।
आधानं न हि कर्त्तव्यं सुधिया शुभमिच्छता ॥

रत्नमालायाम्—

राशौ विलग्नेऽम्बुचरे घटे वा तदंशके वाऽप्यथवा शशाङ्के।
आधानकालो द्विजपुङ्गवानां जातोऽपि निर्वाणमुपैति वह्निः ॥
त्रिकोणकेन्द्रोपचयेषु सूर्ये बृहस्पतौ शीतकरे कुजे च।
शेषग्रहेष्वपचयस्थितेषु धमध्वजोत्पादनमामनन्ति ॥
चन्द्रे पक्षी मृत्युगे मृत्युमेति क्षिप्रं वह्न्याधायकः क्ष्मासुते च।
भानोः सूनौ देवपूज्ये रवौ वा रोगैर्जुष्टो दुःखितः स्याद् द्विजेन्द्रः ॥
पापग्रहेषु धनगेषु धनेन हीनः सौम्यग्रहेषु धनवानुडुपेऽब्दः स्यात्।
लग्नस्थिते च सबुधार्कजभार्गवेन्द्रावुनपाग्निनोऽग्निरचिरात् खलु नाशमेति ॥

इति। पा० गृ० ग० भा० १।२।

A. मघा, फाल्गुनी, चित्रा, विशाखा, ज्येष्ठा, आषाढा, श्रवणा, भाद्रपदा, अश्विनी, कृत्तिका, मृगशिरः, पुष्या इति द्वादश। एवञ्च माघादिद्वादशमासीयद्वादशपूर्णिमासु मघादिप्रोक्तनक्षत्रयोगा इति फलितोऽर्थः। प्रमाणमत्र पाणिनीयं सूत्रं 'साऽस्मिन् पौर्णमासी'ति संज्ञायाम् पा० सू० ४।२।२१। रघुनन्दनेनाप्युक्तं मलमासतत्त्वे "एतत् समयप्रकाशकृतापि लिखितम्,—तत्र पुष्ययुक्ता पौर्णमासी साऽस्मिन् मासे इति पौषः एवं माघादिः,

अभिधानञ्च— पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा।
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥ इति।

B. शतपथ-ब्रा० २।१।१।९। प्रमाणीकृतेयं श्रुतिः रघुनन्दनेन संस्कारतत्त्वे तत्र भट्टभाष्ये श्रुतिरित्युपोद्घातेन।

1. '-तेति व-' ख। 2. 'नक्षत्रपर्वसमवाये' नास्ति ख। 3। '-म इव द्र' ख। 4. '-तेति व-' ख। 5. 'मघादीनि' नास्ति ख। 6. '-एकस्मिन्' क-ग। 7. 'दर्शे वा' ख। 8. 'नक्षत्राद्यपेक्षया' ख। 9. 'समुपा-' क, 'म उपा-' ख, 'समुपा-' ग।

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चाऽपराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतमस्य[1] न वाकृतम् ॥(A)

इति स्मरणात् । (B)अग्न्याधानं कुर्वीतेति वक्तव्ये समाधानमित्यवाच्यमिति चेन्न, समित्येकीभावः[2] । दम्पत्योरेकीभूयाऽऽधानं[3] समाधानमिति । तथा चोक्तम्—

नैकयाऽपि विना कार्यमाधानं भार्यया द्विजैः ।
अकृतं तद्विजानीयात् सर्वा[4] नान्वारभन्ति यत्[5](C) ॥ इति ।

## वैश्यकुलाद्वाऽम्बरीषाद्वाऽग्निमाहृत्याऽभ्यादध्यात् ॥ १५ ॥

वैश्यस्तृतीयो वर्णः, तस्य[6] कुलाद् गृहात्, अम्बरीषो भ्राष्ट्रः स च सक्तुकारकः[7] यवभर्ज[8]नार्थश्च सदैव प्रज्वाल्यते[9] न तु तदर्थमुत्पाद्यते, तस्मादम्बरीषादग्निमाहृत्याऽभ्यादध्यात्[10] ॥ १५ ॥

## अपि वा बहुयाजिन एवाऽऽगाराद् ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्य वा ॥ १६ ॥

अथवा बहुभिः सोमैर्येनेष्टं स बहुयाजी तस्य बहुयाजिनो [11]ब्राह्मणस्य वा

A. विष्णुसंहिता २०।४१ ।

(B) सूत्रस्थ'स्याग्निसमाधानं कुर्वीते'ति पदस्य 'पदचतुष्टये सम्बन्धः' इति चतुर्थे १।१।७ सूत्रभाष्ये, तस्यायं निष्कर्षः—'अन्त्यां समिधमभ्याधास्यन्' 'आयाया वा पाणिं जिघृक्षन्' 'निशिनक्षत्रपर्वसमवाये' 'दर्शे वा पौर्णमासे वा' इति पदचतुष्टये प्रातिस्विकरूपेणाऽग्निसमाधानं कुर्वीतेति पदस्य सम्बन्ध इति स्वयमेव भाष्यकारः तेषु तेषु सूत्रेषु 'अग्निसमाधानं कुर्वीते'ति पदमुल्लिख्य प्रदर्शयामास । न च याऽत्र नवमदशमैकादशद्वादशसूत्राणामसम्बन्धिता, तेषामुल्लङ्घनपूर्वकं पूर्वोत्तरसूत्रस्थपदानां सम्बन्धपूर्वकमर्थयोजना च दृश्यते इत्येवमन्वयरीतिः कुत्रापि न दृष्टपूर्वेति वाच्यम्, गौभिलशास्त्रस्यास्यैव वैशिष्ट्यात् । यदुक्तं गृह्यासंग्रहे कात्यायनपादैः—

पुनरुक्तमतिक्रान्तं यच्च सिंहावलोकितम् ।
गोभिले ये न गृह्णन्ति न ते ज्ञास्यन्ति गौभिलम् ॥ इति गृ० स० २।९४ ।

तथा चात्र सिंहावलोकितन्यायेन अतिक्रान्तन्यायेन च सम्बन्ध इति सर्वमवदातम् ॥

C. कात्यायनसंहिता ८।९ ।

1. 'कृतं चाऽस्य' क, 'क्षतं चाऽस्य' ख । 2. 'भावे' ख । 3. '-धानं समाधानं समा' ख 4. '-स्वाम्या' ख । 5. 'च' ख । 6. 'तत्' ख । 7. 'कारिकया' क-ग । 8. 'भृज्जनार्थे' ख । 9. 'यः प्रज्वाल्यति' ख । 10. '-ऽभ्यादध्यात्' नास्ति ग । 11. 'ब्राह्मणस्य वा राजन्यस्य वा' इत्यत्र वाशब्दो नास्ति ख ।

राजन्यस्य वा वैश्यस्य वा। [1]आगाराद् गृहात्। अग्निमाहृत्याऽभ्यादध्यादिति प्रत्येकं सम्बध्यते। ब्राह्मणादयः प्रसिद्धाः। पुनर्वैश्यग्रहणं [2]बहुयाजिविशेषणार्थम्। एवकारकरणं योनिनियमार्थम्। कथं नाम? यद्योनिकः प्रथमाऽऽधाने अग्निराहृतः अनुगतोऽपि पुनस्तस्या एव योनेराहार्य इति(A)। तथा च शाखान्तरम्—"(B)पूर्वैवानुगतेऽग्नौ[3] योनिः पुनराधेये चे"ति॥ १६॥

## अपि [4]वाऽन्यं मथित्वाऽभ्यादध्यात्॥ १७॥

अथवा (C)परिधायाऽहतं(D) वास इत्यादिविधिनाऽन्यं(E) मथित्वा अभ्यादध्यात्॥ १७॥

---

A. अत एव 'ब्रह्मचारी'त्यादि १।१।७ सूत्रे अन्त्यसमिदाधानपक्षेऽपि वैश्यकुलादियोनिभ्योऽग्निराहर्तव्यः, अन्यथा विनष्टेऽग्नौ गुरुकुलादिगमनम्, ततः पुनराधानादिकञ्च नानाविधान्तरायजनितकालविलम्बादिकारणं स्यात् ततश्च महदनिष्टमेव भवेदित्याशयवता भाष्यकृता "एवं वैश्यकुलादि......इतरथाऽनुगतेऽग्नौ योन्यभावात्" इत्याद्युक्तम्। (पृ० १०)

B. प्रमाणीकृतोऽयं भागः पारस्करगृह्यसूत्रभाष्ये द्वितीयकण्डिकायां गदाधरेण 'तथा च छन्दोगभाष्ये शाखान्तरगृह्यमि'त्युपोद्घातेन। कर्मप्रदीपेऽपि—पूर्वैव योनिः पूर्वावृत् पुनराधानकर्मणि। इति का० स० २०।१४।

C. परिधायेत्यादिविधिश्च—

परिधायाऽहतं वासः प्रावृत्य च यथाविधि।
बिभृयात् प्राङ्मुखो यन्त्रमावृता वक्ष्यमाणया॥
चात्त्वुध्नं प्रमन्थाग्रं गाढं कृत्वा विचक्षणः।
कृत्वोत्तराग्रामरणिं तद्बुध्नमुपरि न्यसेत्॥
चात्रोर्ध्वकीलकाग्रस्थामोविलीमुदगग्रकाम्।
विष्टम्भाद्धारयेद् यन्त्रं निष्कम्पं प्रयतः शुचिः॥
त्रिरुद्वेष्ट्याऽथ नेत्रेण चात्रं पत्न्योऽहतांशुकाः।
पूर्वं मध्नन्त्यरण्यां ताः प्राच्यग्नेः स्याद् यथा च्युतिः॥

कात्यायनसंहिता ८।१-४।

D. अहतमिति—

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्।
अहतं तद्विजानीयाद्दैवे पित्र्ये च कर्मणि॥

इति वृद्धहारीतस्मृतिः। ९।१०६। अत्र ईषत् सूक्ष्ममिति संस्कारतत्त्वे रघुनन्दनः।

E. अन्यम् अग्निम्। मथित्वा, अरणिं मथित्वा अभ्यादध्यात् समाधानं कुर्वीतेत्यर्थः।

मन्थनविधावरण्यादिस्वरूपमाह गृह्यासंग्रहे—

---

1. 'अगारगृहा-' क। 2 'बहुयाजी-' ग। 3. 'पूर्वोऽनुगतः पुनराधाने चे'ति ख। 4. '-वाऽ-मनमथित्वादध्यात्' ग।

## पुण्यस्त्वेवाऽनर्द्धुको भवतीति(A) ॥ १८ ॥

पुण्यः पुण्यकृत्। केवलं पुण्यकोशवृद्धिकृदेवायम्[1] आरणेयोऽग्निरिति। अनर्द्धुकः ऋद्धिर्वृद्धिः। ब्रह्मवर्चसादीनाम् ऋद्धिं न करोतीत्यनर्द्धुकः। तथा च गृह्यान्तरम्—(B)"ब्राह्मणकुलाद् ब्रह्मवर्चसकामोऽग्निमाहृत्याऽऽदधीत, राजन्यादोजोवीर्यकामः, वैश्यात्[2] पुत्र[3]पशुकामः, अम्बरीषाद्धनधान्यकामः[4], [5]आरणेयमुरुपुण्यकोशकाम" इति। तुशब्दो विशेषणार्थः। वैश्यकुलादियोन्याहृतादग्नेरारणेयो विशिष्ट इति।

यतश्चात्र "स्वाधीनत्वाद् योनेरनुगतोऽप्यग्निः क्षिप्रमेव पुनर्निर्मथ्योत्पाद्यते। अन्यत्र पराधीनत्वाद् योनेः[7] "बहुयाजि"वैश्याऽम्बरीषयोश्च दुर्लभत्वात् (C)प्रायश्चित्त-

---

आश्वत्थीन्तु शमीगर्भामरणिं कुर्वीत सोत्तराम्।
उरोदीर्घां रत्निदीर्घां चतुर्विंशाङ्गुलां तथा ॥
चतुरङ्गुलोच्छ्रितां कुर्यात् पृथुत्वेन षडङ्गुलाम्।
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद् द्वादशाङ्गुलम् ॥
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम्।
मूलादष्टाङ्गुलमुत्सृज्य त्रीणि त्रीणि च पार्श्वयोः ॥
मूलादष्टाङ्गुलं त्यक्त्वा अग्रात्तु द्वादशाङ्गुलम्।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः ॥ इति गृ० स० १।७८—८१।

मन्थनरज्जुश्च कर्मप्रदीपे—

गोवालैः शणसम्मिश्रैस्त्रिवृत्तममलात्मकम्।
व्यामप्रमाणं नेत्रं स्यात् प्रमथ्यस्तेन पावकः ॥ इति। ७।७।

A. अत्र सूत्रस्थम् इतिपदं न व्याख्यातं भाष्यकृता, परं "इतिरेतावस्य एवाऽग्नियोन्य इति दर्शयति" इति व्याकृतं चन्द्रकान्तेन स्वभाष्ये। १।१-१८।

B. प्रमाणीकृतं गृह्यान्तरमिदं गदाधरेण "तथा गृह्यान्तरं छन्दोगभाष्ये" इत्यादिना पारस्करगृह्यप्रथमकाण्डस्य द्वितीयकण्डिकायां स्वभाष्ये।

C. तदुक्तं पारस्करगृह्यविश्वनाथभाष्यधृतभारद्वाजगृह्ये—

यावत्कालमहोमी स्यात् तावद्द्रव्यमशेषतः।
तदन्नं चैव विप्रेभ्यो यथा होमस्तथैव तत् ॥ इति।

---

1. 'वृद्धिकरः स एवायम' ख। 2. 'वैश्यकुलात्' ख। 3. 'पत्रकाम: पशुकाम:' इत्यत्र 'पुत्र' नास्ति ग। 4. '-कामोऽग्नि' ख। 5. 'आरणेयं पुण्यको' ख। 6. 'स्वाधीनात्' ख। 7. 'योनेः' इति नास्ति क ग। 8. 'बहुयाजिनि' ख। 9. वैश्याऽम्बरीषाभावा' ख।

[1]प्रसङ्गः, (A)पुनराधानप्रसङ्गो वाऽग्नेः[2] स्यात् । अनर्द्धुकत्वाद्[3] विशिष्टताविरोध इति चेन्न, उरुपुण्यकोशवृद्धि[4]कारित्वाद् अनर्द्धुकस्यापि अविरोध एव ।

तथा चोक्तम्—

न हि पुण्यकृतः किञ्चित् त्रिषु लोकेषु दुर्लभम् ।
दुष्प्रापमपि[5] येनाप्तं ब्राह्मण्यं गाधिसूनुना ॥(B) इति ।

"[6]तस्मादारणेय एव विशिष्टोऽग्निरिति"*,

पुण्यमेवाऽऽदधीताऽग्निं स हि सर्वैः प्रशस्यते ।
अनर्द्धुकत्वं यत्तस्य[7] काम्यैस्तन्नीयते शमम् ॥(C)

इति वचनात्[8] ।

## यथा कामयेत तथा कुर्यात् ॥ १६ ॥

य एतेऽन्त्यसमिधामाधानादयः[9] (D)षडाधानकल्पाः[10] सप्त चोक्ताः, यश्चेमा-

---

A. पुनराधाननिमित्तान्यपि तत्रैव विश्वनाथभाष्ये—

अग्नावनुगते यस्य होमकालद्वयं व्रजेत् ।
उभयोर्विप्रवासे वा लौकिकाग्निर्विधीयते ॥
विहायाग्निं सभार्यश्चेत् सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते ॥
कुरुक्षेत्रादितीर्थानां गमने देशविप्लवे ।
समारोपं विनैवाऽग्निं नोद्वहेयुर्द्विजातयः ॥

इत्यादि । पा० गृ० वि० भा० १।२। ( विशेषस्तु १।९।१७ सूत्रे द्रष्टव्यः । )

B. तर्कालङ्कारोऽपि प्रमाणयतीदं "अत एव स्मर्यते" इत्युपोद्घातेन ।

C. कात्यायनसंहिता ६।१२ ।

D. षडाधानेति । अन्त्याधानस्य तु षडवसरा उक्ताः—(१) अन्त्यसमिदाधान (२)-जायापाणिग्रहण (३)-गृहपतिप्रणाश (४)-तिथिनक्षत्रपर्वसमवाय (५)-दर्श (६)-पूर्णमासा इति । एवमपि तिथिनक्षत्रसंयोगत्वेन पूर्णिमानक्षत्रसंयोगत्वेन च प्रकारद्वयेऽङ्गीकृते सप्तत्वमपि तेषां भवितुमर्हतीति 'सप्त चे'त्युक्तम् । अत्र गृह्यासंग्रहे विशेषः—

---

1. 'प्रसङ्गात्' ख । 2. '-ऽग्नेः' नास्ति ख । 3. '-त्वाद् विशिष्टता' इत्यस्य स्थाने 'त्वात् शिष्ट' इति ख । 4. '-कर-' ख । 5. '-मिति' क । 6. 'तस्मादारणेयोऽग्निरेव विशिष्ट इति' ख । 7. 'यन्नासीत्' ग । 8. 'वचनात्' नास्ति ख । 9. '-समिदादयः' क । 10. '-कल्पाः सप्त चोक्ताः' स्थाने '-कल्पाः सर्वोक्ताः' इति ख ।

(A)वैश्यकुलाद्याः '[1]पञ्चाऽग्नियोनयः, तत्र गुणदोषान् विचिन्त्य यथा (B)कामयेत तथा कुर्यादिति ।

---

आधानस्य तु चत्वार उक्ताः कालाः पृथक् पृथक् ।
अन्त्या समिद्विवाहश्च विभागः परमेष्ठिनः ॥ इति गृ० स० १।७६ ।

एवञ्च चत्वारः खल्वमी काला गृह्यकर्मणामग्नेरसाधारणा भवन्ति ; इतरेषां कालानामाश्रमान्तरसाधारण्यं श्रौताग्निसाधारण्यञ्चेति बोध्यम् ।

A. बहुयाजि वैश्यगृहा(१)म्बरीष (२)-बहुयाजिब्राह्मणगृह (३)-बहुयाजिराजन्यगृहा(४)रणय: (५)इति पञ्च । सूत्रे वैश्यस्य द्विधोल्लेखेऽपि अबहुयाजिवैश्यगृहादग्निर्न ग्रहीतव्य इति षोडशसूत्रीय भाष्यादवगन्तव्यम् ।

B. अग्न्याधानाधिकारिणश्च निरूपिता गदाधरेण पारस्करगृह्यभाष्ये—

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रं हित्वाऽनुलोमजाः ।
अधिकुर्वन्ति गार्ह्येषु सह भर्त्रा स्त्रियस्तथा ॥ इत्यादि ।

अथाऽनधिकारिणः—

आवसथ्यं विवाहञ्च प्रयोगे प्रथमे स्थितः ।
न कुर्याज्जनके ज्येष्ठे सोदरे चाऽप्रकुर्वति ॥
ज्येष्ठे श्रद्धाविहीने च सत्याधेयं तदाज्ञया ।
पितृसत्त्वेऽप्यनुज्ञातो नादधीत कदाचन ॥
जीवत्पितरि चादध्यादाहिताग्निः स वै यदि ।
तथैव भ्रातरि ज्येष्ठे यजेच्चैव विवाहयेत् ॥
अनाहिताग्नौ पितरि योऽग्न्याधानं करोति हि ।
अरण्योरग्निमारोप्य तमाधाप्याऽऽदधीत सः॥ इत्यादि पा० गृ० ग०भा० १।२

कर्मप्रदीपेऽपि—

आधानकाला ये प्रोक्तास्तथा याश्चाऽग्नियोनयः ।
तदाश्रयोऽग्निमादध्यदग्निमानग्रजो यदि ॥
दाराधिगमनाधाने यः कुर्यादग्रजाऽग्रिमः ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥
परिवित्तिपरिवेत्तारौ नरकं गच्छतो ध्रुवम् ।
अपि चीर्णप्रायश्चित्तौ पादोनफलभागिनौ ॥
देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वेश्याभिषक्तपतितशूद्रतुल्यातिरोगिणः ॥

---

1. "पञ्च योनयः' ख ।

स यदेवाऽन्त्यां समिधमभ्यादधाति 'जायाया वा पाणिं जिघृक्षन् जुहोति तमभिसंयच्छेत् ॥ २० ॥

यदेव यस्मिन्नेवाऽग्नौ अन्त्यां समिधमभ्यादधाति [2]यस्मिन् वा जायायाः पाणिं [3]हस्तं जिघृक्षन् लाजादि जुहोति तमेवा[4]ग्निमाभिमुख्येन [5]पूर्णाहुत्या संस्कृत्य संयच्छेत् [6]धारयेदित्यर्थः । नान्यामितिकर्त्तव्यता[7]मपेक्षेतेत्यर्थः । कुतः—उत्तरसूत्राभ्यां पुन[8]रनयोर्ग्रहणाच्च [9]आधानं प्रत्यविलम्बित्व[10]ज्ञापनार्थं हि पुनर्वचनम्[9]* ॥

स एवास्य गृह्योऽग्निर्भवति ॥ २१ ॥

अस्याऽऽधातुः गृह्यो गृह्यार्थोऽग्निः स एव भवति नाऽन्यः(A)। [11]ततश्चान्यस्मिन्नग्ना-वस्य हवनप्रतिषेधोऽनेन क्रियते। अथवा [12]स एवास्य गृह्योऽग्निर्भवति नाऽन्यस्येति[11]* एवञ्चाहितेऽग्नावन्येन न होतव्यमिति। तथा च शाखान्तरम्—यस्याऽग्निमिरन्यं[13] याजयेयुर्यो वा यजेतेत्यारभ्य वैश्वानरं [14]चरुं निर्वपेदित्येतत् प्रायश्चित्तविधानम्। कर्मप्रदीपश्च—

न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् ।
स्वगर्भसत्क्रियार्थांश्च यावन्नासौ प्रजायते ॥(B) [15]इति ।
पत्न्याऽग्नावन्यहोमः स्यात् स वैश्वानरदैवतम् ।
चरुं निरूप्य जुहुयात् प्रायश्चित्तन्तु तस्य तत् ॥(C)

---

जडमूकान्धबधिरकुब्जवामनकुण्ठकान् ।
अतिवृद्धानभार्यांश्च कृषिसक्तान् नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।
कुलटोन्मत्तचौरांश्च परिविन्दन् न दुष्यति ॥ इति का० स० ६।१-६ ।

A. उक्तञ्च छन्दोगगृह्यसूत्रे—यस्मिन्नग्नौ पाणिं गृह्णीयात् स गृह्यः, यस्मिन् वान्त्यां समिधमादध्यादग्निर्मथ्यो वा पुण्यः सोऽनर्द्धुकोऽम्बरीषाद्वाऽऽनयेद्बहुयाजिनोवाऽऽगाराच्छूद्रवर्जम् इति ।

B काल्यायनसंहिता १८।१६ । स्वपुत्रोत्पत्तिपर्यन्तं गर्भसंस्कारार्थमित्यर्थः ।

C. कात्यायनसंहिता १८।१८ ।

---

1. 'जायाया वा' नास्ति ग। 2. 'यस्मिन्' नास्ति क। 3. 'हस्तं' नास्ति ख। 4. 'तमेवाग्नि-' नास्ति ख। 5. 'पूर्णाहुत्या संस्कृत्य' नास्ति क-ग। 6. '-धारयेदित्यर्थः' नास्ति ख। 7. '-मपेक्षेदित्यर्थः' ख। 8. '-रेतयोर्'-' ग। 9. चिह्नमध्यस्थो ग्रन्थभागो नास्ति क-पुस्तके। 10. '-त्वविधेयत्वां-' ख। 11. 'चिह्नित ग्रन्थभागो' नास्ति ख। 12. 'स एवास्य' स्थाने 'सोऽस्यैव' क, 'स एव' ग। 13. '-रन्यं याजिनः' ग। 14. 'चरुं' नास्ति क-ग। 15. 'अथवा' ख।

[1]सैव तत्र प्रायश्चित्तिरिति, एका समिदाहुतिश्चाग्नये समिधमाहार्षमिति या ब्रह्मचारिणोऽग्नीन्धनार्था इति ।

## तेन[2] चैवाऽस्य प्रातराहुतिर्हुता भवतीति ॥ २२ ॥

तेनैवान्त्यसमिद्धोमेन पाणिग्रहण[3]पक्षे च[4] लाजादि[5] होमेनैवास्याग्नेः[6] प्रातराहुति-[7]र्हुता भवति(A)। (B)इतिकरणमाधानप्रकरणपरिसमाप्त्यर्थम्। अत्र कश्चिदाह—

A. अत्र किञ्चिन्मतवैषम्यमुपस्थाप्यते—

"अथाऽऽधानमुच्यते,—आधानं द्वि विधम्, अपूर्वाधानं विच्छिन्नाधानं चेति। तत्राऽऽद्यस्य कालमाह सूत्रकारः—ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन् १।१।१७। जायाया वा पाणिं जिघृक्षन् १।१।१८।अत्रेदं तात्पर्यम्—विवाहात् पूर्वं ब्रह्मचारी अन्त्यसमिदाधानं करिष्यन् यदाऽग्निं प्रणयति स एकः कालः, अथवा विवाहहोमार्थं यदाऽग्निं प्रणयति स चापरः कालः। अत्राद्यपक्षस्वीकारे आद्यमेवाग्निं यावज्जीवं धारयेत् तत्रैव विवाहाहुतीः कुर्यात्। द्वितीयपक्षस्वीकारे द्वितीयमेव यावज्जीवं धारयेत्। तदुक्तं सूत्रकृता "यदेवान्त्यां समिधमभ्यादधाति जायाया वा पाणिं जिघृक्षन् जुहोति तमभिसंयच्छेत् १।१।२०। धारयेदित्यर्थः। अत्र केचित्—अत्र समिदाधानाग्निं वा विवाहाग्निं वा पूर्णाहुत्या संस्कृत्य धारयेदिति वदन्ति, तन्न सम्यक्, अध्याहारे प्रमाणाभावात् उत्तरसूत्रद्वयविरोधाच्च। तथा हि सूत्रम्—स एवाऽस्य गृह्योऽग्निर्भवति १।१।२१। अस्यार्थः—अस्याऽन्त्यसमिदाधानाग्निर्विवाहाग्निर्वा गृह्योऽग्निः, गृह्याग्निसंज्ञको भवति। एवकारेण पूर्णाहुत्यादिर्व्यावर्त्यते। सूत्रम्—"तेन चैवास्य प्रातराहुतिर्हुता भवतीति" १।१।२२। अस्यार्थः—तेनैवाद्यपक्षेऽन्त्यसमिदाधानेनैव द्वितीयपक्षे लाजादिहोमेनैव वा, अस्याग्नेर्गृह्याग्नेः प्रातराहुतिः प्रातरौपासनाहुतिर्हुता भवति। अत ऊर्द्ध्वं सायमाहुत्युपक्रमं वक्ष्यति; तस्माद् गृह्याग्नित्वसिद्धये पूर्णाहुतिसंस्कारकरणे विरोधः स्पष्ट एव। कल्पतरुकारादयोऽप्येवमाहुः।" इति गोभिलगृह्यकर्मप्रकाशिकाकाराः छत्रग्राम्याग्निहोत्रिणः कथयन्ति, भाष्यकारा भट्टनारायणपादास्तु 'पूर्णाहुत्या संस्कृत्य...धारयेदिति वदन्ति, चन्द्रकान्तेन तु पूर्णाहुतिविषये किमपि नोक्तमिति। अत्रेतिकर्त्तव्यताविषये भगवन्तोऽनूचानाः प्रमाणमिति।

B. उक्तमाधानविधानं सत्यव्रतसूत्रपाठटीकायां प्रायशः। शिष्टमभिधीयते—

वर्णज्येष्ठेन बह्वीभिः सवर्णाभिश्च जन्मतः।
कार्यमग्निच्युतेराभिः साध्वीभिर्मथनं पुनः॥
नात्र शूद्रीं प्रयुञ्जीत न द्रोहद्वेषकारिणीम्।
नाऽव्रतस्थां नाऽन्येन पुंसा च सह सङ्गताम्॥

1. 'सैव तत्र प्रायश्चित्तिः' नास्ति क-ग। 2. 'तेनैवास्य' क। 3. '-पक्ष-' क। 4. 'च' नास्ति ख। 5. 'लाजा' क, 'आज:' ख। 6.'-स्याग्ने:' स्थाने '-स्याधातुः' ख। 7. 'हुता भिवता' ख।

"इहाऽऽधानविधेरनाम्नानाद् (A)अध्वर्युभ्यो गृह्णीयादि"ति, तदसमीक्षिताभिधानमस्य कुतः स्वशाखायामेव ग्रन्थान्तरे विधानात्। (B)"परिधायाऽहतं वास" इत्यादिना[1] कात्या-

ततः शकलमा पश्चादासामन्यतमाऽपि वा।
उपेतानां वाऽन्यतमा मन्थेदग्निं निकामतः॥
जातस्य लक्षणं कृत्वा तं प्रणीय समिध्य च।
आधाय समिधं चैव ब्रह्माणं चोपवेशयेत्॥
ततः पूर्णाहुतिं हुत्वा सर्वतन्त्रसमन्विताम्।
गां दद्यात् यज्ञवास्त्वन्ते ब्रह्मणे वाससी तथा॥ इति। कां०स० ८।६-१०।

A. अध्वर्यवो यजुर्वेदिन इति। "अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात्" इत्यमरः।

B. भवदेवगुणनन्दनादिनिबन्धकारैरनुक्तत्वादिह गृह्याधानविधिरुल्लिख्यते—"अथाऽऽवसथ्या-धानविधिः, तत्र चाऽरणिपक्षे यो विशेषः सोऽत्र कथ्यते, अरणिस्वरूपं तु कर्मप्रदीपादिपरिशिष्टेषु द्रष्टव्यम्। अत्र चाऽऽमावस्यायां मातृपूजादिश्राद्धं कृत्वा ब्रह्मवरणं कृत्वा अम्बरीषादेरन्यतमाद् योनेरग्निमाहृत्य गृहे लक्षणं कृत्वा प्रणीय पुराऽस्तमयाद् दम्पती व्रताशनं कुरुतः, अस्तमिते ब्रह्मा अधरारणिं पत्न्यै प्रयच्छति, उत्तरारणिं यजमानाय। तदनन्तरं यथास्थानमरणिं धृत्वाऽग्नेराहृतस्य धारणं रात्रौ जागरणं च दम्पती कुर्वीतामिति। व्युष्टायां रात्रौ तमग्निमुपशमय्य स्नानादिकं कृत्वा उदिते मन्थनं च विधाय। (विधिश्च प्राग्ग्रीवमुत्तरलोमकृष्णाजिनमास्तीर्य तत्रोदगग्रामधरारणिं निधाय तत्पूर्वत उत्तरारणिं चाऽधरारण्यामुत्कलश्रगमन्थनप्रदेशे प्रमन्थमूलं निधाय चात्राग्रे चौबिलीमुदगग्रां च नेत्रेण चात्रं त्रिर्वेष्टयित्वा गाढं धृत्वा पश्चिमाभिमुखोपविष्टया पत्न्या मन्थयेद् यावद्वह्नेरुत्पत्तिः। पत्न्या मन्थनासामर्थ्येऽन्ये ब्राह्मणाः शुचयो मन्थयन्ति। एवं यजमानासामर्थ्येऽन्यो यन्त्रं धारयति। ततो जातमग्निं मृन्मये पात्रे शुष्कगोमयपिण्डचूर्णोपरि निहिततूले सपुरीषं परिक्षिप्य सन्धुक्ष्य प्रज्वाल्य पूर्वसंस्कृते देशे आदध्यात् (पारस्करगृह्यहरिहरभाष्य १।२)। जातेऽग्नौ वरं ददाति वरशब्देन गौरुच्यते, गृह्यसंग्रहे—'वरं गान्तु विजानीयाच्चतुर्वर्णामिति स्थितिरि'ति। हिरण्यादि वा यथाशक्ति दद्यादिति। लक्षणं कृत्वाऽग्निं प्रणीय समिधं दत्त्वा भूम्यादिविरूपाक्षान्तं कृत्वा व्याहृतित्रयं हुत्वा च पूर्वोक्तवत् पूर्णाहुतिं जुहोति। ब्रह्माऽपि पूर्ववत् प्रायश्चित्तं जुहोति, अथ ब्राह्मणभोजनान्तं पूर्ववत् समापयेत्। परमेष्ठीकरणे श्राद्धलोपः। सद्योजागरणादि सर्वं कुर्यादेवेति। अमावास्या-धानपक्षे अमावास्यायामेतत् कर्म प्रतिपदि पूर्णाहुतिः, पौर्णमास्याधाने चतुर्दश्यामेतत् कर्म पौर्ण-मास्यां पूर्णाहुतिः। वैवाहिकाऽग्न्याधानपक्षे त्वयं विशेषः। प्रागेव योन्या धारणं कृत्वा तस्माद् योनेरग्निमाहृत्य विवाहं कुर्यात्—

मन्थयित्वा विवाहाग्निं हुत्वा चैव चतुर्थिकम्।
ततोऽस्मिन् बलिकर्मादि कुर्याद् गृह्योक्तमाऽऽवृता॥ इति भूपालेनोक्तम्॥"

1. 'इत्यादि' ख।

यनेन[1] कर्मप्रदीपे पूर्णाहुतिगोदानान्तं सर्वमुक्तम्, (A) स्रुगादीनाञ्च लक्षणमुक्तम्। न चैतद् युक्तं यत् स्वशाखाविहितमनादृत्य परशाखाविहितमनुष्ठीयते "यस्मादक्रियैव सा। तथा चोक्तम्—

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम्।
अक्रिया च परोक्ता च तृतीया चाऽयथा क्रिया॥
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयञ्च यः।
कर्तुमिच्छति दुर्मेधा मोघं तत् तस्य चेष्टितम्(B)॥ इति।

## सायमाहुत्युपक्रम एवाऽत ऊर्द्ध्वं गृह्योऽग्नौ होमो विधीयते ॥२३॥

सायं हूयत इति सायमाहुतिः। सायमाहुत्या उपक्रम्यते प्रारभ्यते सायमाहुत्युपक्रमः; एवशब्दः पक्षान्तरव्यावृत्त्यर्थः, सायमाहुत्युपक्रम एव (C)कौथुमराणायनीयानां "होमो 'न यथा केषाञ्चिच्छाखिनाम्" अग्निहोत्रं प्रातराहुत्या प्रारभ्यते सायमाहुत्या नि"तिष्ठत इति'। अत ऊर्द्ध्वम् अस्मादाधानाद् ऊर्द्ध्वम्, गृह्योऽग्नौ हूयत इति होमः

---

इति अग्निहोत्रिविष्णुकृतच्छन्दोगगृह्यपद्धत्युक्तः। केवलमम्बरीषादियोनेरग्निमाहृत्य सामान्यतः प्रयोगसहितो विधिस्तु तत्रैव द्रष्टव्य इति।

अत्र गृह्याग्निसमाधानविषये खादिरद्राह्यायणगृह्ययोः समानानुपूर्वीकाण्येव सूत्राणि वर्त्तन्ते, तानि च—"यस्मिन्नग्नौ पाणिं गृह्णीयात् स गृह्यः। यस्मिन् वाऽन्त्यां समिधमादध्यात्। निर्मन्थ्यो वा पुण्यः सोऽनर्धुकः। अम्बरीषाद् वाऽऽनयेत्। बहुयाजिनो वाऽऽगाराच्छूद्रवर्जम्। सायमाहुत्युपक्रमं परिचरणम्। प्रागस्तमयोदयाभ्यां प्रादुष्कृत्य। अस्तमिते होमः। उदिते चानुदिते वा"। इति। खा० द्रा० गृ० सू० १।५।१—९।

A. लक्षणं तु १।३।९ सूत्रस्य भाष्ये धृतमिति तत्र द्रष्टव्यम्।

B. कात्यायनसंहिता ३।१-२। अत्र संवादि प्रमाणमुक्तं गृह्यासंग्रहे—

ऊनो वाऽप्यतिरिक्तो वा यः स्वशास्त्रोक्तमाचरेत्।
तेन सन्तनुयाद् यज्ञं न कुर्यात् पारतन्त्रिकम्॥
यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति॥ इति गृ० स० २।९२-९३।

C. तथा च कौथुमराणायनीयानामेवैतद् गृह्यसूत्रं विशेषेणेति भङ्ग्या कथयति भाष्यकारः।

---

1. 'न' नास्ति ख। 2. 'तथा-' ख। 3. 'मोक्षो'? ग। 4. 'न यत् प्राक् केषां-' ख। 5. '-खानां' कं। 6. 'नि' नास्ति क, 'निनिष्ठते' ख। 7. अनन्तरम् 'अत ऊर्ध्वं गृह्योऽग्नौ होमो विधीयते' इत्यधिकः पाठः ख।

देवतोद्देशेन अग्नौ द्रव्यत्यागो विधीयते चोद्यते[1]। (A)एवं चैतत् सायमाहुत्युपक्रमं[2] प्रातराहुत्यन्तमेकं कर्म। तथा चोक्तम्—

A. अन्त्यसमिदाधानजायापाणिग्रहणयोस्तावदग्नेः प्रथमः प्रातराहुतिप्रकारः "तेन चैवाऽस्य प्रातराहुतिर्हुता भवतीति" १।१।२२। सूत्रेणोक्तः साग्निकपितुर्मरणानन्तरं विभागकाले वाऽऽधाने प्रथमप्रातराहुतिप्रकारस्तु सूत्रानुक्तो गृह्यासंग्रहादवगन्तव्यः। स च—

परमेष्ठी विभक्तश्च जुहुयादक्षतान् सकृत्।
प्रातस्तूष्णीं घृतं वापि प्रातराहुत्युपक्रमः॥ इति। गृ० स० १।७७।

तथा च येन केनापि निमित्तेनोक्तान्त्यसमिदाधानजायापाणिग्रहणकालयोरकृताधानस्य ज्येष्ठस्य पितरि मृते यदग्न्याधानं भवति, तेन स 'परमेष्ठी' इत्युच्यते। येन च दायविभागकाले कृतमग्नेराधानं स इह 'विभक्त' इत्युच्यते, तथा च "दायाद्यकाल एकेषाम्" इति पारस्करगृह्यसूत्रम् १।२।२। ; स खल्वयं परमेष्ठी विभक्तश्च प्रातरेकवारं यवान् घृतं वा अमन्त्रकं जुहुयात् तेनैवाऽस्य प्रातराहुतिर्हुता भवति। सोऽयमनयोः परमेष्ठिविभक्तयोरग्न्योः प्रातराहुतौ उपक्रमः। क्रमः प्रकार इति यावत्। यथाऽन्त्यसमिद्धोमो ब्रह्मचारिणः, लाजहोमश्च विवोढुः। तया चाऽनयोरपि सायमाहुतिप्रारम्भ एवाऽत ऊर्द्ध्वमिति विवेचनीयम्, न प्रातराहुतिप्रारम्भ इति। अत्र च "तदनयोः परमेष्ठिविभक्तयोरग्न्योः प्रातराहुतिभ्यां प्रारम्भः। तदनेन "सायमाहुत्युपक्रम एवात ऊर्द्ध्वं गृह्येऽग्नौ होमो विधीयते" इति सूत्रं दायादाग्निव्यतिरिक्तविषयं व्याख्यातम्" इति यदुक्तं तर्कालङ्कारेण गृह्यासंग्रहभाष्ये तन्न सम्यक्, विधिविषये पितापुत्रवचसोर्विरोधे महाऽनर्थपात-प्रसङ्गात्। प्रतिज्ञातमपि गृह्यासंग्रहे श्रीमद्गोभिलाचार्यपुत्रेण—

अनुद्दिष्टपदार्थानि गृह्यवाक्यानि यानि तु।
तेषां वक्ष्यामि सिद्ध्यर्थं श्लोकसंग्रहसंज्ञकैः॥ इति गृ० स० १।३४।

अत एवात्र सूत्रे "एवशब्दः पक्षान्तरव्यावृत्त्यर्थः" इति संशयनिरासाय भट्टनारायण-पादैरुक्तम्।

सुब्रह्मण्याग्निहोत्रिणोऽपि स्वीयायां गोभिलकर्मप्रकाशिकायां सर्वत्रैवाऽऽधाने "प्रथमं सायं-होमस्ततः प्रातर्होमः" इति निर्णीतवन्तः।

कर्मप्रदीपे कात्यायनोऽपि—

वैवाहिकेऽग्नौ कुर्वीत सायं प्रातस्त्वतन्द्रितः।
चतुर्थीकर्म कुर्वीत एतच्छात्यायनेर्मतम्॥
ऊर्द्ध्वं पूर्णाहुतेः प्रातर्हुत्वा तां सायमाहुतिम्।
प्रातर्होमं ततः कुर्यादेव एवोत्तरो विधिः॥ का० स० १८।५-६।

इत्युक्त्वा "सायमादिप्रातरन्तमेकं कर्म प्रचक्षते" इति, चोक्त्वा सर्वत्रैवाऽऽधाने सायमादि-प्रातरन्तं कर्म कर्तव्यमिति प्रमाणीकरोति। एवमेव खादिरद्राह्यायणगृह्ययोः छन्दोगगृह्ये च। इति।

1. 'चीयते' ? क-ग। 2. '-क्रमः' ख।

सायमादिप्रातरन्तमेकं कर्म प्रचक्षते ।

[1]दर्शान्तं[2]पौर्णमासादि[3]ह्येकमेव मनीषिणः ॥ (A) इति

(B)तस्मादेतयोर्मध्ये नान्यत् किञ्चित् कर्म कार्यमिति ।

## पुरा प्रादुष्करणवेलायाः सायं प्रातरनुगुप्ता अप [4]आहरेत् परिचरणीयाः ॥ २४ ॥

पुरा पूर्वं वक्ष्यमाणायाः प्रादुष्करणवेलायाः सायं प्रातरनुगुप्ता अप आहरेदित्यु-क्तार्थम् । (C) परिचरणीयाः परिचरणार्थाः याभिरद्भिराचम्य पर्युक्षणादि [5]परिचर्यते [6]ताः परिचरणीयाः, ता आहरेदिति ।

## अपि वा सायम् ॥ २५ ॥

अथवा सायमाहृताभिरद्भिः सायं प्रातः परिचरेदिति ।

## अपि वा[7] कुम्भाद् वा [8]मणिकाद्वा गृह्णीयात् ॥ २६ ॥

अथवा कुम्भात् घटात् (D)मणिकात्[9] महत[10] उदकभाण्डात् गृह्णीयात् उद्धरेत् । प्रकृतत्वादपः, वाशब्दद्वित्वं तुल्यविकल्पार्थम् । निर्णिक्तकरचरणमुखा पत्नी शिष्यो-वाऽऽचम्य कुम्भादेरप उद्धृत्याऽऽचमनं दद्यात् ताभिः परिचरेदिति ॥

## पुराऽस्तमयादग्निं प्रादुष्कृत्याऽस्तमिते सायमाहुतिं जुहुयात् ॥ २७ ॥

पुरा पूर्वं सवितुरस्तमयात् सार्द्धहस्तमात्रेण न[11] सन्ध्या[12]समीपत इति । कुतः—सूर्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिः सदाङ्गुलैः ।

प्रादुष्करणमग्नीनां प्रातर्भासां च दर्शनात्(E) ॥ इति वचनात् ।

---

A. कात्यायनसंहिता १८।१ ।

B. अत्र छन्दोगगृह्यसूत्रे—सायमाहुत्युपक्रमं परिचरणम् ।
प्रागस्तमयोदयाभ्यां प्रादुष्कृत्याऽस्तमिते होम उदिते चानुदिते वा । इति ।

C. १।१।९ सूत्रभाष्ये ।

D. 'अलिञ्जरः स्यान्मणिकः' इत्यमरः ।

E. कात्यायनसंहिता ९।१ । "षट्त्रिंशद्भिरथाङ्गुलैः" इति सम्प्रकाशद्धृतपुस्तकपाठः ।

---

1. 'दर्शान्तं' क-ख । 2. 'पूर्वमावाय' ख । 3. '-मेव-' ख । 4. 'हारेत्' ग । 5. 'क्रियते' ख । 6. 'ता इमाः' ख । 7. 'वा' नास्ति ख । 8. 'मणी-' ग । 9. 'मणी-' ग । 10. 'महदुदभाण्डात्' ख, 'महदुदकभाण्डात्' ग । 11. 'न' नास्ति ख । 12. 'समीप इति' ख ।

अग्निं प्रादुष्कृत्य प्रकटीकृत्य; अस्तमिते सवितरि सायमाहुतिं जुहुयादिति। कुतः—

यावत् सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः।
न च [1]लौहित्यमापैति तावत् सायं च हूयते ॥(A) इति वचनात्।

## पुरोदयात् प्रातः प्रादुष्कृत्योदितेऽनुदिते वा प्रातराहुतिं जुहुयात् ॥ २८ ॥

पुरा पूर्वं सवितु[2]रुदयात् प्रातररुणकिरणारुणीकृतायां पूर्वस्यां दिशि, कुतः? "प्रातर्भासां च दर्शनात्" इति वचनात्। प्रादुःकृत्य प्रकृतत्वादग्निम्। (B)उदिते उद्गते सर्वस्मिन् दृष्टे नात्युच्चैः स्थिते[3]—

हस्तादूर्ध्वं रविर्यावद् गिरिं हित्वा न गच्छति।
तावद्धोमविधिः पुण्यो [4]नान्योऽभ्युदितहोमिनाम् ॥(C)

---

A. कात्यायनसंहिता ९।३।

B. अत्र गृह्यासंग्रहे—

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥
रात्रेः षोडशमे भागे ग्रहनक्षत्रभूषिते।
अनुदयं विजानीयाद्धोमं तत्र प्रकल्पयेत् ॥
ततः प्रभातसमये नष्टे नक्षत्रमण्डले।
रविबिम्बं न दृश्येत समयाध्युषितं स्मृतम् ॥
रेखामात्रन्तु दृश्येत रश्मिभिश्च समन्वितम्।
उदयं तं विजानीयाद्धोमं कुर्याद्विचक्षणः ॥ गृ० स० १।७२—७५।

इति कालत्रयमुक्तं श्रुत्यनुसारेण। अत्र तु गोभिलेन समयाध्युषितकालमपि अनुदितकाल एवान्तर्भाव्य 'उदितेऽनुदिते वा' इति कालद्वैविध्यमात्रमुक्तम्, अतः पितापुत्रवचसोरविरोध इति।

अत्र च पांशुतुषारादिभिरन्तरिते रवौ यत् कर्तव्यं तदप्युक्तं कर्मप्रदीपे—

रजोनीहारधूमाभ्रवृक्षाग्रान्तरिते रवौ।
सन्ध्यामुद्दिश्य जुहुयाद् व्रतमस्य न लुप्यते ॥ इति। कात्यायनसंहिता ९।४।

C. कात्यायनसंहिता ९।२।

---

1. 'लौहित्ति-' ख। 2. '-तुः पुरोदयात्' ग। 3. 'स्थिते कुतः' ख। 4. 'नान्य तु-' क-ग, 'नाभ्युदित' इति "वङ्गपाठी"मुद्रितः पाठः।

इति वचनात् (A)प्रातराहुतिं जुहुयात्। अनुदिते वा। वाशब्दो विकल्पार्थः। 'आदि-विकल्पश्चायमेकपक्षसमाश्रयः। (B)ततश्चादित एवैकः पक्षः समाश्रयणीयः।

प्रादुष्करणोपदेशाच्च (C) पृथगग्न्यागारं दर्शयति पृथग्[1] महानसम्। "(D)अग्न्यागारात् प्रभृति धूमं शातयन्" इति [2]च लिङ्गात्। अन्यथा सदैव 'प्रादुष्कृतत्वात् प्रादुःकरणमेव न[3] स्यात् यत्राऽर्थयुक्त्या महानसादावग्न्यवयवाः प्रणीयन्ते [4]तत्र तदर्थनिवृत्तौ पुनस्तत्रैवोल्मूकं नयेत्। यत्र तु वचनात् यथा "पुरस्ताच्छालाया उपलिप्य शालाग्नेरग्निं प्रणयन्तीति[6,7]*" [३।७।३] तत्र नेति।

इति श्रीभट्टनारायणकृतौ [8]गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य प्रथमा कण्डिका॥

---

A. सायंप्रातर्होमयोर्विशेषविधिस्तु तृतीयकण्डिकायां वक्ष्यते।

B. ततश्चेति—एवञ्चाग्न्याधानात् प्रभृति, उदितपक्षोऽनुदितपक्षो वाऽऽश्रयणीयः पूर्वमेकपक्षं स्वीकृत्य पश्चादन्यपक्षाश्रयणे "श्यावोऽस्याहुतिमभ्यवहरती"त्यादिनिन्दा श्रूयते। एवमेवाह भगवानक्षपादः "अभ्युपेत्य कालभेदे दोषवचनात्" न्या० सू० २।१।५९। इति।

C. प्रादुष्करणमत्र सन्धुक्ष्य प्रज्वालनम्, न तूत्पादनम्, तेन सायंप्रातरग्न्यागार एव तत् कर्तव्यम् न महानसादौ, तस्य होमाधारतः पार्थक्यात्। अग्न्यागारात् प्रभृति धूमं शातयन्... गृहाननुपरीयादिति च सूत्रे अग्न्यागारात् सर्वेषामेव गृहाणां पृथक्सूचनात्। अन्यथा महानसादावग्नेः सर्वदैव प्रादुष्करणं विनाऽसम्भवात् सायंप्रातःप्रादुष्करणोपदेशमनर्थकं स्यात्, तथा च तृतीयकण्डिकाप्रथमसूत्रं यद् वक्ष्यति इतिकर्तव्यताम् अग्निमुपसमाधायेत्यादि तेन सहैकवाक्यतया प्रादुष्करणशब्दस्य गोमयपिण्डादावसमिद्धभावेन स्थितस्य इन्धनादिना प्रज्वालनमेवार्थः, तच्च सायंप्रातरादिहोमकाल एव कर्तव्यं न सदेति भावः।

यत्र चाऽर्थयुक्त्या पाकाद्यर्थं महानसादौ अग्न्यागारादग्न्यवयवाः संगृह्य स्थाप्यन्ते, तत्र महानसादौ तस्य पाकाद्यर्थस्य परिसमाप्तौ पुनरग्न्यागार एवोल्मूकं नयेत् तत्र स्थापनस्यानावश्यकत्वात्। यत्र त्वानुशासनिकं पृथग्वचनमस्ति पुरस्ताच्छालाया इत्यादौ तत्र वचनबलादेव नोल्मूकमग्न्यागारं पुनर्नयेदिति सर्वमवदातं प्रेक्षावताम्।

D. 'अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वे'त्यादि ३।९।४ सूत्रमध्यस्थोऽयं भाग इति।

---

1. 'चदिति-' न। 2. 'पृथक् च' ख। 3. 'च' नास्ति ख। 4. 'प्राकृतत्वात्' क, 'प्रादुष्कृतत्वात्' नास्ति ख 5 'न' नास्ति ख। 6. चिह्नितांशो नास्ति ख। 7. 'इति' नास्ति क। 8. 'इति नारायणीये [illegible] चन्द्रः' क, 'इति प्रथमस्य प्रथमा कण्डिका' ख, 'इति नारायणीये प्रथमप्रपाठकस्य प्रथमकण्डिका' ग।

# द्वितीयकण्डिका

यज्ञोपवीतिनाऽऽचान्तोदकेन कृत्यमित्युक्तम्[1], अतस्तत्सूत्रविवक्षयेदमाह—

**यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव ॥१॥**

यज्ञोपवीत[2]मुक्तम्, कुरुते कुर्यादित्यर्थः। (A)कीदृशं सूत्रं [3]सूत्रमयं तच्च (B)नवभिस्तन्तुभिस्त्रिवृद् भवति।

कुतः, ऊर्ध्वं तु वृतं कार्यं तन्तुत्रयमधोवृतम्।
[4]त्रिवृतं चोपवीतं स्यात् तस्यैको ग्रन्थिरिष्यते(C) ॥

---

A. कीदृशं सूत्रमिति प्रश्नोत्तराभ्यामाह कात्यायनः—

केनैवोत्पादितं सूत्रं केन वा त्रिगुणीकृतम्।
केन वाऽस्य कृतो ग्रन्थिः केन मन्त्रेण मन्त्रितम् ॥
ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम्।
रुद्रेण तु कृतो ग्रन्थिः सावित्र्या चाभिमन्त्रितम् ॥

इति। गृ० स० २।९२-९३।

B. नवभिस्तन्तुभिरिति, तथा च गृह्यासंग्रहे द्वितीयप्रपाठके—

यज्ञोपवीतं कुर्वीत सूत्रेण नवतान्तवम्।
देवतास्तत्र वक्ष्यामि आनुपूर्व्येण याः स्मृताः ॥
ॐकारः प्रथमस्तन्तुर्द्वितीयश्चाग्निदैवतः।
तृतीयो नागदैवत्यश्चतुर्थः सोमदैवतः ॥
पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः।
सप्तमो वायुदैवत्यो अष्टमो यमदैवतः ॥
नवमः सर्वदैवत्य इत्येते नवतन्तवः।
द्विगुणं त्रिगुणं वाऽपि एकग्रन्थिकृतं विदुः ॥ इति।

गृ० स० २।४८-५१ ॥

C. कात्यायनसंहिता १।२। "ऊर्ध्वं तु त्रिवृतं कार्यमि"ति सप्रकाशमुद्रितपुस्तकपाठः।

---

1. '-क्तम्, अतस्तत्सूत्र-' स्थाने '-क्तत्वात् तत्स्वरूप' इति ख। 2. '-मुक्तलक्षणम्' ख-ग। 3. 'सूत्रमयम्' नास्ति ख। 4. 'त्रिवृतमुपवीत-' ख।

इति वचनात्। (A)मुख्यश्चायं पक्षः, इह "वा" शब्दाभावादुत्तरत्र च "वा" शब्दाऽऽम्नानात्। 'वस्त्रं वा' वाशब्दो विकल्पार्थः। अभावे[1] विकल्पश्चायं [2]अरण्यादा[3]वुपवीतनाशे वस्त्रं वा[4] कुर्यादिति। कुतः? अनुपवीतिनो[5] [6]मेहनादिकरणे प्रायश्चित्तविधानात्।

[7]पिबतोमेहतश्चापि [8]भुञ्जतोऽनुपवीतिनः।
प्राणायामत्रिकं षट्कं [9]नक्तं त्रिकयुतं क्रमात्॥(B) इति

उद्भूतमूत्रपुरीषक्षुत्पिपासावेगस्य च क्षणमपि स्थातुमशक्यत्वात्। "अपि वा" अथवा, कुशरज्जुः[10], दर्भरज्जुः[11], अरण्ये चौरादिभ्यो वस्त्राद्यपहरण[12]स्यापि सम्भवात् अपि वा कुशरज्जुमित्युक्तम्। एवकारकरणं सर्वोपवीतित्वनियमार्थम्। इतरथा कर्माधिकार[13] आम्नानात् कर्माङ्गमेवैतदिति मन्यमानः कर्मण्येवोपवीती स्यान्न सदैवेति, तदनिष्टम्।

तथा चोक्तम्— सदोपवीतिना भाव्यं सदा बद्धशिखेन तु।
विशिखो व्युपवीतश्च यत् करोति न तत् कृतम्॥(C) इति।

[14]मनुना च— [15]वैणवीं धारयेद् यष्टिं सोदकञ्च कमण्डलुम्।
यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले॥(D) इति।

---

A. भाष्यकृता सूत्रे मुख्यत्वेन कथितेऽपि गोभिलाचार्यानुक्तमप्याचार्यपुत्रो गोबालं विशेषयति यज्ञोपवीतकरणे—

गोभिर्वालपवित्रेण धार्यमाणेन नित्यशः।
न स्पृशन्तीह पापानि श्रियं गात्रेषु तिष्ठति॥
गोभिर्वालपवित्रेण यस्तु सन्ध्यामुपासते।
गोधर्मेष्वेव वर्तन्ते न स पापेन लिप्यते॥
गोभिर्वालपवित्रेण यस्तु ह्यग्निमुपासते।
पञ्चाग्नयो हुतास्तेन यावज्जीवं न संशयः॥ इति गृ० स० २।९९-९७॥

(B) नारायणटीकाकृद्भिस्तत्कालङ्कारैरपि प्रमाणीकृतमिदं स्वभाष्ये 'इति स्मरणादि'त्युदाहारेण, परं चतुर्थचरणपाठस्तु "नवकञ्च यथाक्रमम्" इति परिवर्त्तित इति। (गो० च० त० १।२।१)। छन्दोगपरिशिष्टप्रकाशकारस्तु—'प्राणायामत्रयं षट्कम्' इत्यत्र "प्राणायामं त्रिधा चरेत्" इति पठित्वा प्रमाणीकरोति कर्मप्रदीपे।

(C) कात्यायनसंहिता १।४।

(D) मनुसंहिता २।३६।

---

1. '-वरिकल्प:' ख। 2. 'अरण्यादावुपवीतनाशे'स्थाने 'अरण्यादौ यज्ञोपवीतनाशे' ख। 3. '-पवीत-' क। 4. 'वा' नास्ति ख। 5. 'वा' क-ख। 6. 'मेहना'स्थाने 'मैथुना-' ख। 7. 'भुञ्जतो' क। 8. 'मेहनी-' ख। 9. 'त्रिकयुतं क्रमादिति' ख। 10. '-रज्जुः' क-ख। 11. '-रज्जु' क-ख। 12. '-[illegible]-' ख। 13. '-कार एव' क। 14. 'मनुवचनात्' ख। 15. पद्यं [illegible] नास्ति ख।

[1]अनेनोपवीतेन[1]* कथं यज्ञोपवीती भवतीत्यत[2] आह—

**दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽंसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति ॥२॥**

दक्षिणं सव्येतरं बाहुं भुजम्, उद्धृत्योत्क्षिप्य शिरो मूर्द्धानम्, अवधाय प्रोत्य सव्ये वामे, अंसे स्कन्धे, प्रतिष्ठापयति अवस्थापयति। दक्षिणं सव्येतरम्, कक्षं[3] बाहुमूलकोटरप्रदेशम्, अनु[4] [5]अधः, अवलम्बं[6] भवतीति।

[7]लम्बत्वप्रमाणं च—

पृष्ठवंशे च नाभ्यां च धृतं यद् विन्दते कटिम्।
तद् धार्यमुपवीतं स्यान्नाऽतो लम्बं न चोच्छ्रितम् ॥ (A) इति ॥

एवमनेन प्रकारेण यज्ञोपवीतं धारयन् यज्ञोपवीती भवतीति।

**सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽंसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति ॥३॥**

पूर्वसूत्रव्याख्याने[8]नैतद् व्याख्यातमिति। (B)

कस्मिन् काले प्राचीनावीती [9]भवतीत्यत आह—

**पितृयज्ञे त्वेव प्राचीनावीता भवति ॥ ४ ॥**

पितृयज्ञशब्दः पितृकर्मोप[10]लक्षणार्थः। एवकारकरणमन्यदैवतकर्ममध्यपातिन्यपि पित्र्ये, प्राचीनावीतित्वनियमार्थम्। यथा—"अथैतद्बलिशेषमद्भिरभ्यासिच्यावसलवि दक्षिणा निनयेत् तत् पितृभ्यो भवती"ति [सू १।४।१२]। "तु"शब्दः "च"-[11]शब्दस्य स्थाने समुच्चयाऽर्थो द्रष्टव्यः; न केवलं प्राचीनावीती भवति, सव्यजान्वाक्तश्च भवतीत्यर्थः।

---

(A) कात्यायनसंहिता १।३। गृह्यासंग्रहे च—

स्तनादूर्द्ध्वमधो नाभेर्न कर्तव्यं कथञ्चन।
स्तनादूर्द्ध्वं श्रियं हन्ति नाभ्यधस्तात् तपःक्षयः ॥ इति। गृ० सं० २।५४।

(B) उपवीत्यादिलक्षणमुक्तं मनुसंहितायाम्—

उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने ॥ इति। म० सं० २।६३

1. 'अनेनैव यज्ञोपवीतेन' ग। 2. '-त्याह' क। 3. 'कक्षं' नास्ति ख-ग। 4. 'अनु-प्रदेशम्' क। 5. 'अधस्तात्' ख। 6. 'अवलम्बनम्' क। 7. 'लम्बप्रमाणं' ख। 8. 'व्याख्यानेनैतद्-व्याख्यातमिति'स्थाने 'व्याख्यानमेतत्' क-ग। 9. 'भवति' नास्ति ख। 10. 'कर्मोपलक्षणः' ख। 11. 'शब्दस्थाने' ख।

तथा चोक्तम्—

(A)दक्षिणं पातयेज्जानु देवान् परिचरन् सदा ।
पातयेदितरज्जानु पितॄन् परिचरन्नपि ॥ [1]इति (B)

इदानीमाचमनविधिविवक्षयेदमाह—

**(C)उदङ्ग्नेरुत्सृप्य प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेद् द्विः परिमृजीत ॥ ५ ॥**

---

A. कात्यायनसंहिता २ । ९ । रघुनन्दनस्तु श्राद्धतत्त्वे "जानुपातं विशेषयति वशिष्ठ" इत्युक्त्वा प्रमाणमिदमुक्तवान् ।

B. यज्ञोपवीतविषये विशेषमाह गोभिलीयगृह्यकर्मप्रकाशिकायाम्—"शुचौ देशे प्राङ्मुख उदङ्मुखो वा स्वाध्यायदिवसे पूर्वाह्णे सूत्रं निर्माय संहतदक्षिणहस्ताङ्गुलिचतुष्टयमध्यपर्वदेशे षण्णवतिसंख्ययाऽऽवेष्ट्य पुनस्त्रिगुणीकृत्य "आपो हि ष्ठे"त्यादिभिरब्लिङ्गैर्मन्त्रैः प्रक्षाल्य त्रिगुणीकृतं तत् सूत्रं वामकरतले संस्थाप्य दक्षिणकरतलेनोर्द्ध्वं नयेदेतदूर्द्ध्ववृत्तं भवति । पुनस्तत् त्रिगुणीकृत्य दक्षिणकरतलेनाधो नयेदित्यधोवृत्तं भवति । ततः प्रवरानुसारेण ग्रन्थित्रययुतं पञ्चग्रन्थियुतं वा कुर्यात् ।···सूत्रोत्पादनादिकर्मसु तत्तद्देवताप्रतिपादकान् मन्त्रान् जपेद् ध्यायेद् वा तत्तद्देवताः । ताश्च—ॐकारोऽग्निर्नागः सोमः पितरः प्रजापतिर्वसव इति । धारणात् पूर्वं गायत्र्या दशकृत्वोऽभिमन्त्रयेत् । धारणप्रकारः—दक्षिणं बाहुमूर्द्ध्वमुत्तानं कृत्वा तत्र यज्ञोपवीत-ग्रन्थिप्रदेशं संस्थाप्याधःप्रदेशे वामहस्तमवाञ्चं निधाय वक्ष्यमाणमन्त्रेण शिरोद्वारा वामांसे प्रतिष्ठापयति दक्षिणकक्षमन्ववलम्बनं भवति । न नाभेरूर्द्ध्वं नाधः । यज्ञोपवीतधारणमन्त्र उपनयने वक्ष्यते । चौरादिभिरपहृते विनष्टे वा जलादौ शीघ्रमेव वस्त्रं कुशरज्जुं वा यज्ञोपवीतवद् धृत्वा शीघ्रमेव कार्पासतन्तुं यथोक्तलक्षणयज्ञोपवीतं विधिवद् धारयेत् । सदैव यज्ञोपवीतिना भवितव्यम् ।" इति, अत्र प्रवरसंख्यया ग्रन्थिकथनं तु "तस्यैको ग्रन्थिरिष्यते" इति कर्मप्रदीप-वचनविरोधादस्वरसमेव प्रतिभाति ।

यज्ञोपवीतस्य जातिभेदेऽप्युपादानभेदमाह मनुः—

कार्पासमुपवीतं स्याद् विप्रस्योर्द्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ इति म० स० २।४४ ।

यज्ञोपवीतस्य यदृच्छया जीर्णावस्थादौ नाशे किं कर्तव्यमित्याह मनुः—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥ इति । २।६४ ।

C. अत्र तर्कालङ्कारः 'उदगग्नेरि'ति पठति ।

---

1. 'इति' नास्ति ख ।

अग्निसाध्यं कर्म कुर्वतः[1] कर्माङ्गतया शौचार्थतया वा[2] आचमननिमित्तं स्यात्, तदा उदङ् उत्तरतः, अग्नेः उत्सृप्य, उत्क्रम्य गत्वेत्यर्थः। प्रक्षाल्य शोधयित्वा, पाणी हस्तौ, पादौ[3] चरणौ च प्रक्षाल्य[4] उपविश्य। प्राङ्मुख उदङ्मुखो वा, कुतः (A)आचामेत् "प्रागुदङ्मुख इति मनुस्मरणात्[6]। प्राङ्मुखकरणं चानादेश [7]इति सूत्रकारवचनाच्च। त्रिराचामेत्(B) त्रिर्भक्षयेत्। किम् उदकम्?

आचान्तोदकेन [8]कृत्यमिति वचनात्। (C)त्रिः पिबेदम्बु वीक्षितम् इति च[9] द्विः परिमृजीत। [10]द्विःकृत्य संमृज्यात्[10]* ॥ किं [11]मुखं प्रकृतत्वात्। (D)[12]"संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात् ततो मुखम्" इति वचनाच्च।

## पादावभ्युक्ष्य शिरोऽभ्युक्षेत्॥ ६ ॥

ऋज्वर्थं सूत्रम्। विसमासकरणं पादाभ्युक्षणशेषेण शिरसो[13]ऽभ्युक्षणप्रतिषेधार्थम्।

## इन्द्रियाण्यद्भिः संस्पृशेत् ॥ ७ ॥

इन्द्रियाणाम[14]मूर्तत्वादिन्द्रियायतनानि स्पृशेत्, अद्भिः उदकार्द्रेण हस्तेन प्रतीन्द्रियमित्यर्थः, "[15]संस्पृशेत्" [16]इति सम्यक् स्मृत्यन्तरोपदिष्टेन विधिना (E)संहताभि[17]स्तिसृभिः पूर्वमास्यमेव[18]मुपस्पृशेदित्यादिना।

---

A. तथा च मनुः—अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित्।
शौचेप्सुः सर्वदाचामेदेकान्ते प्रागुदङ्मुखः। २।६१।

B. आचमनादौ विशेषमाह—गृह्यासंग्रहे कात्यायनः—
स्नानभ्यसमाहारे भोजनाचमने तथा।
जपे वा होमकाले वा दक्षिणं बाहुमुद्धरेत्॥ इति। गृ० स० १।२४।

C. उक्तञ्च दक्षसंहितायाम्—
प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम्।

D. संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात् ततो मुखम्॥ द० स० २।१४।

E. तथा च दक्षः—
संहत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत्।
ततः पादौ समभ्युक्ष्य अङ्गानि समुपस्पृशेत्॥

1. 'कुर्वंता' ख। 2. 'वा यदावाचमन-' ख, 'वा यदा-' ग। 3. 'च चरणौ' ख। 4. 'प्रक्षाल्य' नास्ति ख। 5. 'उदङ्मुख' क, 'आचामेत् प्राङ्मुख उदङ्मुखो वा' ख। 6. 'वचनात्' ख। 7. 'इति' नास्ति ग। 8. 'कृत्यम्' नास्ति क-ख। 9. 'च' नास्ति क-ख। 10. 'द्विःकृत्य संमृजेत्' ख। 11. 'तत्र खं' ख। 12. 'संवृताङ्गुष्ठ' ख। 13. '-सोऽभ्युक्ष-' क। 14. '-ममूर्तत्वा-' क-ग। 15. 'संस्पृशति' ख। 16. 'इति' नास्ति ख। 17. '-स्तिभिः' क-ग। 18. '-मास्यमेव स्पृशे-' क, '-मास्यमुपस्पृशे-' ख।

कानि पुनस्तानी[1]न्द्रियाणीत्यत आह—

अक्षिणी नासिके कर्णाविति ॥ ८ ॥

अक्षिणी लोचने, नासिके नासाच्छिद्रे[2], कर्णौ(A) श्रवणौ, इतिकरणमन्येषामपि स्मृत्यन्तरोक्तानामुपसंग्रहार्थम्। उपन्यासपरमे[3]वैतत् सूत्रम्, ततश्च[4] नायमेवोपस्पर्शनक्रम[5]इति, "कस्तर्हि[6] क्रमः। उच्यते[7],—

त्रिः प्राश्यापो द्विरुन्मृज्य मुखमेतान्युपस्पृशेत्।
आस्यनासाक्षिकर्णांश्च नाभिं वक्षः शिरोऽंसकान्॥ (B) इति।

यद् यद् मीमांस्यं स्यात् तत् तदद्भिः संस्पृशेत्॥ ९ ॥

यद् यद् इन्द्रियं मीमांस्यं विचार्यं स्यात् भवेत्। मीमांसा विचारः। किमेतत् शुद्धमुता[8]थापि दूषकादि[9] मलयुक्तमिति मनसा वितर्केण यत् यत् सकल्लेख्यं स्यात् (C)तत् तदद्भिः प्रक्षाल्य स्पृशेदित्यर्थः।

तत्रैतदाहुः ॥ १० ॥

(D)परब्राह्मणं चैतदित्यारभ्योच्छिष्टो हैं वातोऽन्यथा भवतीति [ सू० १।२।३० ]

---

अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः।
कनिष्ठाङ्गुष्ठया नाभिं हृदयञ्च तलेन वै।
सर्वाभिस्तु शिरः पश्चाद् बाहू चाग्रेण संस्पृशेत्॥ द० स० २।१९-१७।

A. 'श्रवणे' इति सम्यक्।
B. कात्यायनसंहिता १।९।
C. यथाह कर्मप्रदीपः—

संहताभिस्त्र्यङ्गुलिभिरास्यमेवमुपस्पृशेत्।
अङ्गुष्ठेन प्रदेशिन्या घ्राणञ्चैवमुपस्पृशेत्॥
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः।
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै॥
सर्वाभिस्तु शिरः पश्चाद् बाहू चाग्रेण संस्पृशेत्॥ इति। का० स० १।६-७।

D. विधायकवाक्यं ब्राह्मणमिति, तथा चानन्तरं "नोपस्पृशेदि"त्यादि "हृदयस्पृशस्त्वेवाप आचामेत्" इत्यन्तसूत्रप्रतिपादिता विषया आचमने विशेषरूपेणाङ्गीकर्तव्या इति भावः।

---

1. '-स्तानीत्याह' ख। 2. '-रन्ध्रे' ख 'नासिकाच्छिद्रे' क। 3. '-मेतत्' ख। 4. '-शायमुपस्पर्शन-' ख। 5. 'इति' नास्ति ख। 6. 'क तर्हि' ख। 7. 'उच्यते' नास्ति ख। 8. '-मथापि' ख। 9. 'दूषिकादि' ख।

यावत्, तत्र तस्मिन् आचमनविधौ प्रकृते ब्राह्मण[1]वाक्यान्येतन्याहुः। एतदुक्तं भवति किमित्यत आह[1]* :—

नोपस्पृशेद् व्रजन् ॥ ११ ॥

व्रजन् गच्छन्नोपस्पृशेन्नाचामेत् ॥

न तिष्ठन् ॥ १२ ॥

तिष्ठन् ऊर्द्ध्वः नोपस्पृशेदिति प्रतिपदमनु[2]षज्यते।

न हसन् ॥ १३ ॥

स्मयन्।

न विलोकयन् ॥ १४ ॥

इतश्चेतश्च [3]वीक्षणं कुर्वन्।

नाऽप्रणतः ॥ १५ ॥

अप्रणतस्थोष्ठिकृष्टोदकमङ्गुलु—यतः पतति, अतो नाऽ[4]प्रणत इत्युक्तम्।

नाङ्गुलीभिः ॥ १६ ॥

अङ्गुलीभिरूर्द्ध्वमुदकमुत्क्षिप्य नाचामेत्।

नातीर्थेन ॥ १७ ॥

अतीर्थेन पित्र्यादिना नाचामेत्; [5]तथा च मनुः(A)—

[6]ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्।

[7]कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥[7]* इति।

तीर्थानि तु—

अङ्गुष्ठमूलस्य[8] तले ब्राह्मं तीर्थं प्रचक्षते।

कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः(B) ॥

न सशब्दम् ॥ १८ ॥

अशुर्थ[9]मेतत्।

---

A. मनुसंहिता २।५८।

B. मनुसंहिता २।५९।

---

1. '-न्नात्वाच तदा एतदुक्तं भवति किमित्येतदाह' इति ख। 2. '-वर्त्तते' ख-ग। 3. 'वीक्षयन्' ख। 4. '-नाम प्रणत' ख-ग। 5. 'तथा च मनुः' इति नास्ति ख। 6. 'ब्राह्मणो विप्रतीर्थेन नित्यकाल-' ख। 7. चयमंशो नास्ति ख। 8. '-लं तन्मूलं' क। 9. 'एतत्' नास्ति ख।

## नानवेक्षितम् ॥ १९ ॥

अनवेक्षितमदृष्टमित्यर्थः ।

## न बाह्यांसः ॥ २० ॥

(A)आनुपूर्व्यां बाह्यौ बहिष्कृतौ अंसौ यस्य स बाह्यांसः ।

## नान्तरीयैकदेशस्य कल्पयित्वोत्तरीयताम् ॥ २१ ॥

अन्तरीयमधरीयं वासः, तस्यान्तरीय[1]स्यैकदेशः अन्तरीयैकदेशः परिधानाञ्चल इत्यर्थः । तस्यावयवे[2]नोत्तरीयतां कल्पयित्वा नाचामेत् । अनेनैतद् दर्शयति(B) एकवासा नाचामेदिति ।

## नोष्णाभिः ॥ २२ ॥

उष्णाभिरग्नितप्ताभिर्न घर्मतप्ताभिरपीति । अस्यापवादं[3] स्मृत्यन्तरे वचनमस्ति ।

राजावबीक्षितेनैव शुद्धिरुक्ता मनीषिभिः ।

उदकेनातुराणाञ्च [4]तथोष्मेणोष्मपायिनाम् ॥ (C) इति ।

---

A. यथा चोक्तं गृह्यासंग्रहे—

होमः प्रतिग्रहो दानं भोजनाचमनानि च ।

अबहिर्जानुकर्माणि साङ्गुष्ठान्येवमाचरेत् ॥ इति गृ० स० १।४९ ।

याज्ञवल्क्योऽपि—

अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।

प्राग् वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ इति या० स० १।१८ ।

B. एकवाससो नग्नत्वमेव व्यवस्थापयति—

"विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च ।

एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः ॥

इति हरिशर्मधृतगोभिलादेकवस्त्रस्य सामान्यतो नग्नत्वाभिधानात् तत्परिहाराय द्विवस्त्रोपयोगित्वाच्च" इति शुद्धितत्त्वे व्याहरन् रघुनन्दनः ।

C. प्रमाणमिदं यमवचनत्वेन धृतं रघुनन्दनेनाह्निकाचारतत्त्वे—"वीक्षणानुष्णयोर्भट्टभाष्यमाधवाचार्यकृतपराशरभाष्ययोरपवादमाह यमः" इत्युपोद्घातेन, किन्तु मुद्रितयमसंहितायां यमबृहद्यमस्मृत्योश्च नोपलभ्यते ।

---

1. '-स्यैकदेशः' ख । 2. '-नोत्तरीयतां नाचा-' ख । 3. '-वादकं' क-ख । 4. 'तथोष्णेनोष्णपायिनाम्' इति ख ।

## न सफेनाभिः ॥ २३ ॥

(A)ऋज्वर्थमिदम् ।

## न च सोपानत्कः [1]क्वचित् ॥ २४ ॥

उपानहौ प्रसिद्धे, ताभ्यां सह वर्तत इति सोपानत्कः, (B)क्वचिदपि कस्याञ्चिदप्यवस्थायामित्यर्थः । अस्यापवादकं[2] पुराणे[3] वचनमस्ति—

राज्ञां[4] गुरूणां देवानां न [5]दूष्येदन्तिके चरन् ।
आजानुपत्रचरणस्तथाचमनकर्मणि ॥ इति ।

## कासक्तिकः ॥ २५ ॥

के शिरसि, आसक्तिका आवेष्टिका कृता येन स कासक्तिकः, अथवा [6]के शिरसि [7]आसक्तिर्वाससा आसङ्गः कृता येन स कासक्तिकः, (C)बद्धपरिकर इत्यर्थः । अन्ये तु

A. अत्र संवादि प्रमाणमुक्तं याज्ञवल्क्यसंहितायाम्—

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ इति या० स० १।२० ।

आचमने उदकग्रहणप्रकारं परिमाणञ्चाह भरद्वाजः—

आयतं पर्वणां कृत्वा गोकर्णाकृतिमत् करम् ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ॥
मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत् ।
माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः ॥

इति आह्निकाचारतत्त्वे रघुनन्दनः ।

B. अत्र सूत्रस्य'च'कारोऽन्वयें इति क्वचिदपीति भाष्यम् । अत्र तर्कालङ्कारस्तु राज्ञां गुरूणामित्याद्यपवादकं वचनं स्वहस्तेनोक्तमुक्त्वा तद्बाधकोऽयं कौशुमादीनां विशेषविधिरिति व्युत्पादयति ।

C. अत्र संवादि प्रमाणमुक्तं रघुनन्दनेनाह्निकाचारतत्त्वे—

"व्यासः— शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥" इति ।

1. 'क्वचित्' नास्ति ख । 2. '-वादं' ग । 3. 'पुराणवचन-' ख । 4. 'प्राज्ञो' क, 'राज्ञो' ग
5. 'दूषति वदाचम' ख । 6. 'के शरीरे' ख-ग । 7. 'आसक्तिरासङ्गः' ख ।

[1]मुक्तकञ्चुकं कासक्तिकं मन्यन्ते, तदयुक्तं (A)न स्यात् कर्मणि कञ्चुकीति वचनात्, कर्मण्येव सकञ्चुकस्याचमनप्रतिषेधो[2] नान्यत्रेति ।

## गले बद्धः ॥ २६ ॥

गलावलम्बितवासाः [3]प्रावृतोत्तरासङ्ग इत्यर्थः(B) ।

## चरणौ न प्रसार्य च ॥ २७ ॥

चरणौ [4]न प्रसार्य वितत्य ; च-शब्दादासनस्थौ [5]च कृत्वा । [6]तथा चोक्तम्—

(C)नासनारूढचरणा आचामेन्न जपेत् क्वचित् । इति ।

## अन्ततः प्रत्युपस्पृश्य शुचिर्भवति ॥ २८ ॥

अन्ततो मध्यतः, इन्द्रियायतनान्युपस्पृश्य शुचिर्भवति न पार्श्वत इति । अथवा अन्ततः उपस्पर्शनान्ते, [7]एवमेव पाणिनोदको[8]पस्पर्शनं कृत्वा[9]शुचिर्भवति ।

## हृदयस्पृशस्त्वेवाप आचामेत् ॥ २९ ॥

हृदयं याः[10] स्पृशन्ति ता इमा[11] हृदयस्पृशः, एवं[12] यथा भवन्ति तथा आचामेत्

---

A. "इति स्मृति"रिति कृत्वा प्रमाणमिदमुपन्यस्तं रघुनन्दनेनाह्निकाचारतत्त्वे ।

B. तथा च यज्ञोपवीतवदुत्तरीयवस्त्रं सन्धार्याचामेन्नान्यथेति भावः ।

C. प्रमाणीकृतमिदं तर्कालङ्कारेणापि स्वभाष्ये । अत्र चोक्तं रघुनन्दनेनाह्निकाचारतत्त्वे—"कात्यायनः—

आसनमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा ।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते ॥

आसनारूढपाद आसनारोपितपादतलः । जानुनोर्जङ्घयोः कृतावसक्थिको वस्त्रादिना कृतपृष्ठजानुजङ्घाबन्धः, 'तु'द्वयेन भेदप्रतीतेः प्रौढपादस्य द्विविधत्वं प्रतीयते । अत्र च "अनेकोह्यशे दाहशिले भूमिसमे इष्टकाश्च संकीर्णीभूताः" इति बौधायनवचनात् तथाविधेष्वारूढपादोऽपि कुर्यात्" इति ।

---

1. 'प्रमत्त-' ख, 'मत्तप्रमत्त-' ग । 2. '-षेधात्' ख । 3. 'प्रकृतोत्तरा-' ख । 4. 'न' नास्ति क-ग । 5. 'च' क-ग । 6. 'तथा चोक्तम्-' नास्ति ख । 7. 'एव' ख । 8. '-दकस्पर्शनं' ख । 9. 'हृदयः शुचि-' ग । 10. '-यं या इमाः स्पृ-' ख । 11. 'इमाः' नास्ति ख । 12. 'हृदयं स्पृश एव' ख, '-स्पृश एव'ग ।

नान्यथेति। ततश्च त्रिः प्राशिता [1]यदि हृदयं [2]गमा न भवन्ति ततश्चतुः प्राशयेत्।

तथा च गौतमः, "(A)त्रिश्चतुर्वाऽप आचामेदि"ति। तु-शब्दात् क्षत्रियस्तु[3] [4]कण्ठगाभिरेव शुध्येयत् वैश्यो भक्षितमात्राभिरेव। शूद्रो मुखं[5]प्रविष्टाभि[6]रेवेति। तथा च मनुः—

हृद्गाभिः शुध्यते विप्रः कण्ठगाभिस्तु भूमिपः।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः॥ इति(B)।

## उच्छिष्टो हैवातोऽन्यथा भवतीति ॥ ३० ॥

अतः अस्माद्विधेः अन्यथा आचान्त उच्छिष्ट एव भवतीति[7](C)। इति-करणं [8]ब्राह्मणवाक्यपरिसमाप्त्यर्थम्।

---

A. शुचौ देश आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्या मणिबन्धनात् पाणी प्रक्षाल्य वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वाऽप आचामेद् द्विः प्रमृज्यात्, पादौ चाभ्युक्षेत्, खानि चोपस्पृशेच्छीर्षण्यानि, मूर्धनि च दद्यात्। इति गौतमसंहिता-प्रथमाध्याये।

B. मनुसंहिता २।६२। 'शुध्यते' इत्यत्र 'पूयते' इति मुद्रितपुस्तकपाठः।

C. अत्राचमनप्रकरणे यत् संवादि प्रमाणमुक्तं रघुनन्दनेनाह्निकाचारतत्त्वे तस्मात् किञ्चिदुदाह्रियते "आचमनानुवृत्तौ देवलः—

न गच्छन् न शयानश्च न चलन् न परान् स्पृशन्।
न हसन् नैव संजल्पन् नात्मानञ्चैव वीक्षयन्॥
केशान् नीवीमधःकायमस्पृशन् धरणीमपि।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत् करम्॥

मरीचिः—

न बहिर्जानुस्त्वरया नासनस्थो न चोत्थितः।
न पादुकास्थो नाचितः शुचिः प्रयतमानसः॥
उपस्पृश्य द्विजो नित्यं शुद्धः पूतो भवेन्नरः।
भुक्त्वाऽऽसनस्थोऽप्याचामेन्नान्यकाले कदाचन॥

पैठीनसिः—अन्तरुदकेनाचान्तोऽन्तरेव पूतो भवति बहिरुदकेनाचान्तो बहिरेव शुद्धः स्यात् तस्मादन्तरेकं बहिरेकञ्च पादं कृत्वा आचामेत् सर्वत्र शुद्धो भवतीति।

---

1. 'यदि' नास्ति ख। 2. 'गता' ख। 3. 'तु' नास्ति ख। 4. 'कण्ठगताभिः' ख। 5. 'मुख-प्रवि-' ख। 6. '...प्रविष्टाद्भिरिति' ख। 7. 'इति' नास्ति क ग। 8. 'ब्राह्मणाक-' क ग।

## अथ प्रत्युपस्पर्शनानि ॥ ३१ ॥

[1]अथशब्दः पूर्वसूत्रापादनार्थः। कृतोपस्पर्शनस्य पुनरुपस्पर्शनं प्रत्युपस्पर्शनं येषु निमित्तेषु भवति तानि[1]* [2]प्रत्युपस्पर्शननिमित्तानि। निमित्तशब्दः सूत्रे लुप्तवद् द्रष्टव्यः।

जले तु आनूपर्व्युत्तिष्ठन्नेवाचामेत्—

जानोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात्।
अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुध्यति ॥ इति विष्णूक्तेः।

हारीतः—

आर्द्रवासा जले कुर्यात् तर्पणाचमनं जपम्।
शुष्कवासाः स्थले कुर्यात् तर्पणाचमनं जपम् ॥
अपः पाणिनखाग्रेण आचामेद् यस्तु वै द्विजः।
सुरापानेन तत् तुल्यमित्येवमृषिरब्रवीत् ॥

वशिष्ठः—

आचान्तः पुनराचामेद् वासो विपरिधाय च।
ओष्ठौ संस्पृश्य च तथा यत्र स्यातामलोमकौ ॥
तर्जन्यनामामध्याभिर्मुखं पूर्वन्तु संस्पृशेत्। इति।
तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम्।

एवं "चक्षुःश्रोत्रे पुनः पुनः" [द० स० २।१९-१७] इति चक्षुर्द्वयश्रोत्रद्वयाभिप्रायेण श्रीदत्तोऽप्येवम्। तेन दक्षिणं स्पृष्ट्वा वामं स्पृशेत्।

व्यक्तं कामधेनावाचारचिन्तामणौ चापस्तम्बः—

"चक्षुषी नासिके कर्णौ सकृत् सकृदुपस्पृशेत्।

द्विरित्येके। द्विरिति शाखिविशेषे।

सर्वत्राङ्गुष्ठयोगेन करणमाह पैठीनसिः—

अग्निरङ्गुष्ठस्तस्मात्तेनैव सर्वाणि स्थानानि स्पृशेत् ।

नाभिस्पर्शानन्तरं जलस्पर्शमाह व्यासः—

ततः स्पृशेन्नाभिदेशं पुनरपश्च संस्पृशेत्।

इन्द्रियस्पर्शानन्तरं भविष्ये—

यद् भूमावुदकं वीर समुत्सृजति मानवः।
वासुकिप्रमुखान् नागांस्तेन प्रीणाति मानवः ॥

पैठीनसिः—

स्पृष्ट्वा प्राणान् यथासंख्यं पादौ प्रोक्ष्य ततः शुचिः।
सव्ये पाणौ ततः क्षेप्या अपो वै निनयेदिति" ॥

---

1. चिह्नितभागो नास्ति ख। 2. चिह्नितभागो नास्ति ग।

अथवा निमित्तं* प्रति उपस्पर्शनानि। बहुवचनं निमित्तबहुत्वापेक्षम्।

कानि पुनस्तानीत्यत आह—

**सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा विपरिधाय च रथ्यामाक्रम्य श्मशानञ्चाक्रान्तः पुनराचामेत्॥ ३२॥**

सुप्त्वा निद्रामासेव्य, भुक्त्वा किञ्चिद्भक्ष्यं[1] भक्षयित्वा, क्षुत्वा छिक्कां[2] कृत्वेत्यर्थः,[3] स्नात्वा आप्लुत्य, पीत्वा पेयं पानीयादि, विपरिधाय वासः परिधायेत्यर्थः। चशब्दः समुच्चयार्थः। [4]रथ्यामाक्रम्य रथ्या प्रसिद्धा, तामाक्रम्य पद्भ्याम्, श्मशानञ्चाक्रम्येति वर्त्तते। [5]श्मशानं प्रसिद्धम्। एतानि स्वापादीनि निमित्तानि कृत्वा आचान्तः (A)पुनराचामेद् द्विराचामेदित्यर्थः। अन्ये तु वर्णयन्ति—आचम्य स्वापादीनामन्य-

---

A. पुनराचमनादौ विशेषमाह आह्निकाचारतत्त्वे रघुनन्दनः —

"वायुपुराणे— निष्ठीवने तथाऽभ्यङ्गे तथा पादावसेचने।
उच्छिष्टस्य च संभाषादशुच्युपहतस्य च॥
सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत्॥
उष्ट्रवायससंस्पर्शे दर्शने चान्त्यवासिनाम्।

हारीतः—शौचक्रोच्छिष्टसंभाषणे मूत्रपुरीषोत्सर्गदर्शने देवमभिगन्तुकाम आचामेदिति

देवलः— उच्छिष्टं मानवं स्पृष्ट्वा भोज्यञ्चापि तथाविधम्।
तथैव हस्तौ पादौ च प्रक्षाल्याऽऽचम्य शुध्यति॥

याज्ञवल्क्यः—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे।
आचान्तः पुनराचामेद् वासो विपरिधाय च॥ ( १।१९६ )

ब्रह्मपुराणम्—

होमे भोजनकाले च सन्ध्ययोरुभयोरपि।
आचान्तः पुनराचामेदन्यत्रापि सकृत् सकृत्॥
द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम्॥

---

1. 'भक्ष्य' नास्ति ख। 2. 'छिं कृत्वा' ख। 3. 'इत्यर्थः' नास्ति ख। 4. 'रथ्यामाक्रम्य' नास्ति क-ख। 5. 'श्मशानं प्रसिद्धम्' नास्ति ख।

तमं कृत्वा पुनराचामेत् । तदेतदयुक्तम्, (A)क्षुते [1]विरोधात् । अन्ये त्वाहुः, [2]आचान्तोऽप्येतानि निमित्तानि आसेव्य पुनराचामेत्; एतदप्ययुक्तं [3]भवति, अपिशब्दाध्याहारदोषात् । तस्माद् यथोक्त एवार्थः । ननु यूपचिति[4]श्मशानरजस्वलासूतिकाशुचींश्च स्पृष्ट्वा सशिरस्कोऽ[5]भ्युपेयादप इति श्मशानाक्रमणे वशिष्ठेन(B) स्नानं विहितम्,

स्मृतिः— क्षुते निष्ठीवने छन्ने परिधानेऽश्रुपातने ।
कर्मस्थ एषु नाचामेद् दक्षिणं श्रवणं स्पृशेत् ॥

सांख्यायनः—

आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट् ।
विप्रस्य दक्षिणे कर्णे वसन्ति मनुरब्रवीत् ॥

मार्कण्डेयपुराणम्—

कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् ।
कुर्वीताऽऽलम्भनञ्चापि दक्षिणश्रवणस्य च ॥
यथाविभवतो ह्येतत् पूर्वाभावे ततः परम् ।
न पूर्वस्मिन् विद्यमान उत्तरप्राप्तिरिष्यते ॥

पुराणसारवायुपुराणयोः—

यः कर्म कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः" ॥ इति ।

A. क्षुतादौ विशेषविधिमाह गृह्यासंग्रहे कात्यायनः—

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥ इति । ( २।८९ )

एवञ्च सूत्रस्थ'छन्ना'दिपदानां कर्मकालादन्यत्रावकाश इति वक्तव्यम्, कर्मकाले तु कात्यायनस्येति अन्यथा पूर्वोक्तस्मृत्यन्तरेण गृह्यासंग्रहवचनेन च विरोधः स्यादिति भावः । दक्षिणकर्णस्पर्शे हेतुविवक्षयेदमाह तत्रैव कात्यायनः—

मरुतः सोम इन्द्राग्नी मित्रावरुणौ तथैव च ।
एते सर्वे च विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे ॥ गृ० स० २।९० ।

B. वशिष्ठसंहिताचतुर्थखण्डे । अत्र 'अशुचींश्च स्पृष्ट्वे'त्यत्र 'शुचीनुपस्पृश्य' 'सशिरस्कः' इत्यस्य स्थाने 'सशिराः' इति आनन्दाश्रमसंस्कृतग्रन्थावलिमुद्रितपुस्तकस्य 'बङ्गवासी'मुद्रितपुस्तकस्य च पाठः ।

1. 'विरोध:' ख । 2. 'प्रागाचान्तो' ख । 3. 'भवति' नास्ति ख । 4. 'रजस्वला श्मशानयूप-' ख । 5. '-भ्येयात् । अप' ख ।

अत्र[1] द्विराचमनमिति(A)नैव दोषः, अनतिक्रान्तवर्णाश्रुतुश्मशानाक्रमणे स्नान [2]विहितम्, अन्यत्र द्विराचमनमिति ।

इति[3] श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य

द्वितीया कण्डिका ॥ २ ॥

---

A. मनुना चोक्तम्—

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतानि च ।

पीत्वाऽपोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन् ॥ इति (मनुसंहिता ५।१४५)

वशिष्ठेनाप्युक्तं स्वसंहितायाम् "सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा रुदित्वा चाऽऽचान्तः पुनराचामेत्" इति व० स० ३ ।

एवञ्च श्मशानाक्रमण एव वशिष्ठगोभिलाचार्ययोर्मतद्वैधम्, तदेतन्निराकरोति भाष्यकारः स्वयमेव "अनतिक्रान्ते"त्याद्युक्त्वेति विभावनीयम् ।

---

1. 'अथ तु' ख । 2. 'विहितम्' नास्ति क-ग । 3. 'इति प्रथमस्य-द्वितीया कण्डिका' ख ।

# तृतीयकण्डिका

सायंप्रातर्होमयोः काल उक्तः, कथं होतव्यमित्येतदवशिष्यते 'तद्[1] वक्तव्यमित्यत आह'* ।

**अग्निमुपसमाधाय परिसमुह्य दक्षिण[2]जान्वक्तो दक्षिणेनाग्निम्(A) "अदितेऽनुमन्यस्व" इत्युदकाञ्जलिं प्रसिञ्चेत् ॥ १ ॥**

अग्निं यथोक्त[3]काल(B)प्रादुष्कृतम्, उप समीपे; कस्य? होमकालस्य,

A. मन्त्रः—"अदितेऽनुमन्यस्व" इति तैत्तिरीयसंहिता २।३।१।२ ।

B. तथा च अरणिमन्थनादिनाऽग्निं प्रज्वाल्य होमकाले कथं कर्तव्यमित्यपेक्षायाम्—कांस्यादिपात्रे स्थापयित्वा ततः "ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः । इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् (ऋक्० स० १०।१६।९)। अनेन मन्त्रेण क्रव्यादाग्निं परित्यज्य संस्कृतस्थाने अनुष्ठातृ-परम्परानुष्ठानप्रामाण्यात् महाव्याहृतिभिरग्न्यारोपणं करणीयम् ।" इति गुणविष्णुराह । भवदेवभट्टस्तु—"तत्रोभयतश्चतुर्हस्तप्रमाणं देशं शर्कराङ्गारास्थिकेशतुषादिरहितं पूर्वोत्तरप्लवं समं वा छायामण्डपसहितं स्थण्डिलादिकं विधाय गोमयेनोपलिप्य स्नातः शुचिराचान्तः प्राङ्मुखः कर्ता कुशयुक्तासनोपविष्ट उत्तरस्यां दिश्यभ्युक्षणार्थं कुशाकुशमसहितं जलपूर्णं पात्रं भूमौ निधाय दक्षिणं जानु भूमौ पातयित्वा सव्यहस्तप्रादेशमुत्तराग्रकुशोपरि वह्निस्थापनपर्यन्तं भूमौ निधाय दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां गृहीतकुशमूलेन स्थण्डिलदक्षिणप्रान्ते स्वाङ्गुष्ठपरिमितद्वादशा-ङ्गुलप्रमाणां प्राङ्मुखीं पृथ्वीदेवताकां रेखामुल्लिख्य पीतवर्णां ध्यायेत्—'ॐ रेखेयं पृथ्वीदेवताका पीतवर्णा' । ततस्तन्मूलतः प्रभृत्येकविंशत्यङ्गुलप्रमाणाम् उत्तराभिमुखीमग्निदेवताकां रेखामुल्लिख्य लोहितवर्णां ध्यायेत् 'ॐ रेखेयमग्निदेवताका लोहितवर्णा' । ततः प्रथमरेखातः सप्ताङ्गुलान्तरितां प्रादेशप्रमाणां पूर्वाभिमुखीं प्रजापतिदेवताकां रेखामुल्लिख्य कृष्णवर्णां ध्यायेत् 'ॐ रेखेयं प्रजापति-देवताका कृष्णवर्णा' । ततोऽपि सप्ताङ्गुलान्तरितां प्रादेशप्रमाणां पूर्वाभिमुखीम् इन्द्रदेवताकां रेखामुल्लिख्य नीलवर्णां ध्यायेत् 'ॐ रेखेयमिन्द्रदेवताका नीलवर्णा' । ततोऽपि सप्ताङ्गुलान्तरितां प्रादेशप्रमाणां पूर्वाभिमुखीं सोमदेवताकां रेखामुल्लिख्य शुक्लवर्णां ध्यायेत् 'ॐ रेखेयं सोमदेवताका शुक्लवर्णा' । ततो दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां क्रमेण रेखासूत्करं गृहीत्वा,प्रजापतिर्ऋषिरग्निर्देवता

1. 'तद् विषयमिदमारभते इति' ख । 2. 'जान्वक्तो' क । 3. 'काले' ग ।

(A)समाधाय सम्यक् काष्ठादिभिः समिध्य,परिसमुह्य(B) अङ्गोर्विदितानवयवानेकीकृत्य।

---

उत्करनिरसने विनियोगः। ॐ निरस्तः परावसुः इत्यनेन ऐशान्यां दिशि अरत्निमात्रान्तरिते देशे निक्षिप्य पूर्वस्थापितजलेन रेखाभ्युक्षणं कृत्वा सन्निधापिताग्नेर्ज्वलदिन्धनं गृहीत्वा, प्रजापतिऋर्षि-त्रिष्टुप्छन्दोऽग्निर्देवता अग्निसंस्कारे विनियोगः। 'ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः'। इत्यनेन दक्षिणपश्चिमकोणे निक्षिप्य, अपराग्निं गृहीत्वा, प्रजापतिऋर्षि-र्बृहतीच्छन्दः प्रजापतिर्देवता अग्निस्थापने विनियोगः। 'ॐ भूर्भुवः स्वरोम्' इत्यनेनाग्निं दक्षिणावर्तेन भ्रामयित्वा आत्माभिमुखं तृतीयरेखोपरि स्थापयेत्। ततो वामहस्तमुत्तोल्याञ्जलिं बद्ध्वा पठेत्—

ॐ सर्वतःपाणिपादान्तः सर्वतोऽक्षिशिरोमुखः।
विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु॥
ॐ इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्॥ इति।

इत्यग्निस्थापनम्" इत्युक्ताग्निप्रादुष्करणमाह स्वीयच्छन्दोगकर्मानुष्ठानपद्धतौ।

रघुनन्दनस्तु "तमग्निं 'क्रव्यादमग्निं...रिप्रवाह' इति मन्त्रेण तस्याग्नेः क्रव्यादंशं मन्त्रलिङ्गाद् दक्षिणस्यां दिशि क्षिप्त्वा प्रणीय उक्तप्रकारेण स्थापयित्वा......समिध्य ज्वालयित्वा समिधं तत्र तूष्णीं दत्त्वा वक्ष्यमाणक्रमेण ब्रह्माणमुपवेशयेत्" इति वदन् "इहैवायमि"त्यादिमन्त्रान्तिमभागस्य प्रयोगं न प्रमाणयति। तदत्र मूलकारगोभिलाचार्यप्रभृतीनां सर्वेषामेव मतमुपस्थितं विविच्य भगवन्तोऽनूचानाः प्रमाणयन्तु कर्तव्यमिति।

A. अत्राऽऽवसथ्याधाने भवो नामाग्निर्ज्ञातव्यः।

तथा चाग्नेर्नामानि गृह्यसंग्रहे—

लौकिकः पावको ह्यग्निः प्रथमः परिकीर्तितः।
अग्निस्तु मारुतो नाम गर्भाधाने विधीयते॥
पुंसवने चान्द्रमसः शुङ्गाकर्मणि शोभनः।
सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि॥
नाम्नि स्यात् पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा।
सत्यनामाऽथ चूडे तु व्रतादेशे समुद्भवः॥
गोदाने सूर्यनामा तु केशान्ते ह्यग्निरुच्यते।
वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः॥
चतुर्थ्यान्तु शिखी नाम धृतिरग्निस्तथाऽपरे।
आवसथ्ये भवो ज्ञेयो वैश्वदेवे तु पावकः॥
ब्रह्मा वै गार्हपत्ये स्यादीश्वरो दक्षिणे तथा।
विष्णुराहवनीये तु अग्निहोत्रे त्रयोऽग्नयः॥

यत्तु समन्त्रकं परिसमूहनं वक्ष्यति इमं स्तोममिति त्र्यृचेन परिसमूहेदिति [ सू ४।५।५ ] तदत्र न भवति[1]। कुतः, क्षिप्रहोमत्वादस्य, क्षिप्रहोमे च[2] परिसमूहनप्रतिषेधात्। तथा चोक्तम्—

लक्षहोमे तु वह्निः स्यात् कोटिहोमे हुताशनः ।
प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः ॥
देवानां हव्यवाहस्तु पितॄणां कव्यवाहनः ।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा ॥
पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारके ।
वश्यार्थे कामदो नाम वनदाहे तु दूतकः ।
कोष्ठे तु जठराग्निश्च क्रव्यादो मृतभक्षणे ।
समुद्रे वाडवो ज्ञेयः क्षये संवर्त्तको भवेत् ॥
एतेऽग्नयः समाख्याताः श्रावयेद् ब्राह्मणः सदा ।
सप्तत्रिंशति विख्याता ज्ञातव्याश्च द्विजेन तु ॥ ( गृ० स० १।२-१२ )

अत्र 'लौकिके' इति पठित्वा 'लौकिके गृहप्रवेशे' इति वर्णयाञ्चकार रघुनन्दनः। तथा 'चान्द्रमसः' इत्यस्य स्थाने 'चन्द्रनामे'ति, 'सभ्य'स्थाने सत्येति च पठति स एव। 'अपरे' 'घृतिहोमा'दाविति रघुनन्दनः। 'विधि'स्थाने 'विधु'रिति भवदेवरघुनन्दनादयः प्रायशो वङ्गदेशीयनिबन्धकर्त्तारः। 'पाकयज्ञे' पाकाङ्गकयज्ञे वृषोत्सर्गदेवप्रतिष्ठाहोमादाविति रघुनन्दनः।

विशेषनामासम्भवे च विश्वरूपो नामाग्निः सर्वत्र भवति। तदुक्तं तत्रैव—

सर्वतःपाणिपादान्तः सर्वतोऽक्षिशिरोमुखः ।
विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥ इति गृ० स० १।६९ ।

प्रसङ्गतोऽग्नेः सप्त जिह्वाश्चोच्यन्ते गृह्यासंग्रहोक्ताः—

काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा ।
स्फुलिङ्गिनी चैव शुचिस्मिता च लेलायमाना इति सप्त जिह्वाः ॥
सप्त जिह्वाः स्फुरन्त्येता हुताशनमुखे स्थिताः ।
याभिर्हव्यं समश्नन्ति हुतं सम्यग् द्विजोत्तमैः ॥

आसां खलु जिह्वानाम्—

द्वे शान्तिके पौष्टिके द्वे च तिस्रोऽभिचारिण्यः ।
एताश्चोक्ता विशेषेण ज्ञातव्याश्च द्विजेन तु ॥ इति गृ० स० १।१३-१९ ।

B. तत्र क्रममाह गृह्यासंग्रहे—

लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद् वदन् ।
ततो भूमिग्रहं कृत्वा कुर्यात् परिसमूहनम् ॥ इति गृ० स० १।८१ ।

1. 'इति' इत्यधिकम् क-ग। 2. 'च' नास्ति क।

न कुर्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम्।
वैरूपाक्षं च न जपेत् प्रपदञ्च विवर्जयेत्(A)॥ इति।

गृह्यान्तरवचनाच्च—

एकसाध्येष्वबर्हिःषु न स्यात् परिसमूहनम्।
नोदगासादनञ्चैव क्षिप्रहोमा हि ते स्मृताः॥ (B) इति।

अबर्हिःष्विति वचनात्, (C)स्तरणमपि [1]न स्यात्। [2]तथा चोक्तम्—

याम्यधः स्तरणाम्नानात्र तेषु स्तरणं भवेत्।
एककार्यस्य साध्यत्वात् परिधीनपि वर्जयेत्[2]* (D)॥ [3]इति।

---

A. कात्यायनसंहिता ९।५, विरूपाक्षमिति 'बङ्गवासी'मुद्रितपाठः।

B. कात्यायनसंहिता २७।२। एकसाध्यत्वं होतृमात्रसाध्यत्वम्, यत्र त एव क्षिप्रहोमाः। तत्र ब्रह्मस्थापनमपि न भवति यदुक्तं गृह्यासंग्रहे—

राकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत्।
सायं प्रातश्च होमेषु तथैव बलिकर्मसु॥ इति गृ० स० १।९१।

तथा च 'पौर्णमास्यां रात्रा'वित्यादिसूत्रोक्तपूर्णमासयागे, पितृयज्ञे, सायंप्रातर्होमे, चशब्द अन्येष्वपि एवंविधेषु ब्रह्माणं नोपकल्पयेत्, तेषां क्षिप्रहोमत्वात्। तथा कर्मप्रदीपेऽपि—

बर्हिः पर्युक्षणञ्चैव वामदेव्यजपस्तथा।
कृत्याहुतिषु सर्वासु त्रिकमेतन्न विद्यते॥ इति का०, स० ९।९।

तथा च यत्र यत्र क्षिप्रहोमः तत्र तत्र परिसमूहनास्तरणब्रह्मस्थापनादीनां न कर्त्तव्यतेति भावः।

C. अत्र क्षिप्रहोमे स्तरणमपि न स्यात्, इतः परमेव "अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयादित्यादि" [ १।७।९ ] सूत्रे स्तरणस्योक्तत्वात्। तथा च स्तरणविधायकसूत्रोक्तेः पूर्वं यानि कार्याण्युक्तानि तेषु स्तरणं नास्तीति प्रमाणीकरोति "तथा चोक्तम्" इत्युक्त्वा भाष्यकारोऽधःस्थ-कर्मप्रदीपवचनोपन्यासेनेति निष्कर्षः।

D. कात्यायनसंहिता ९।२। क्षिप्रहोमे वर्जनीयमाह गृह्यासंग्रहेऽपि—

विहितप्रतिषिद्धाञ्च प्रणीतां नोपकल्पयेत्।
वैरूपाक्षं जपेन्मन्त्रं प्रपदञ्चैव यज्ञवित्॥
परिधींस्तु न कुर्वीत गृह्यकर्मसु याज्ञिकः।
उदकाञ्जल्यसिक्तास्ते वै परिधयः स्मृताः॥ इति गृ० स० १। ९५-९६।

---

1. 'वर्जयेत्' ग। 2. 'चिह्नितो भागो' नास्ति ग। 3. 'इति' नास्ति ख।

तस्मादेवममे(A)वाऽ[1]मन्त्रक(B)परिसमूहनं कुर्यात्। यदि त्वविच्छिन्नावयवो नैव कुर्यादिति[2]। न्यञ्चकरणं कुर्यात् "इदं(C) भूमेर्भजामह" इति। [3]कुतः? "पूर्वेषु चैके" (गो० सू० ४।५।२] इति [4]तस्य पक्षे प्राप्तत्वाद्प्रतिषेधाच्च[4]*॥ तस्य च स्वरूपम्।

दक्षिणं वामतो बाह्यमात्माभिमुखमेव [5]तु।
करं करस्य कुर्वीत [6]करणे न्यञ्चकर्मणः॥ (D)इति

दक्षिणं जानु [7]अक्तं भूमौ गतं यस्य[7]* स दक्षिणजान्वक्तः। [8]अञ्चतिर्गतिकर्मा, दक्षिणेनाग्निं[9] पर्युक्षेदिति दक्षिणत इत्यर्थः। (E)"अदितेऽनुमन्यस्व" इत्यनेन मन्त्रेण उदकाञ्जलिं, हस्तद्वय[10]मञ्जलिः उदकपूरितोऽञ्जलिरुदकाञ्जलिः, तमुदकाञ्जलिं प्रसिञ्चेत् प्रकर्षेण प्राक्संस्थं सिञ्चेत्॥ [11]इति।

---

A. अमन्त्रकं परिसमूहनमिति। ननु—

यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत्।
मन्त्राणामेव चादेशे मन्त्रात् कर्म समाचरेत्॥ गृ० स० २।६।

इति गृह्यासंग्रहोक्तेर्व्याहृतिप्रयोग एत्र कथं न भवतीति चेत्—न भवति।

"सायं प्रातर्वैश्वदेवे पितृयज्ञे तथैव च।
कम्बुके गोमये नित्यं व्रतानां समिधासु च॥
चैत्ये यूपे व्रीहियवे भूम्यावप्सु च याज्ञिकैः।
व्याहृतीर्न प्रयोक्तव्या यज्ञवास्तुक्रिया तथा"॥ गृ० स० २।३-४।

इति तत्रैवास्मिन् कर्मणि तन्निषेधात्। ('व्याहृतीः' इति छान्दसः पूर्वसवर्णो द्रष्टव्यः इति च-स-भा)।

B. परिसमूहनं कथं कुर्यादित्युक्तं कर्मप्रदीपे—

कृत्वाऽग्न्यभिमुखौ पाणी स्वस्थानस्थौ सुसंयतौ।
प्रदक्षिणं तथाऽऽसीनः कुर्यात् परिसमूहनम्॥ इति। का० स० १९।१८।

C. इदं भूमेरिति मन्त्रस्तु ४।९।३ सूत्रे धृत इति तत्र तस्योल्लेखो भविष्यति।

D. कात्यायनसंहिता १९।१७। अत्र 'करस्य' स्थाने करेणेति पठित्वा 'करेणेति षष्ठ्यर्थे तृतीया इति व्याचष्टे प्रकाशकारः।

E. मन्त्रस्यास्याकरस्थानम्—तैत्तिरीयसंहिता २।३।१।२; विनियोगप्रमाणन्तु खादिरगृह्यसूत्रेऽपि १।२।१७।

---

1. '-मन्त्रकं' ख। 2. 'इति' नास्ति ख। 3. 'कुतः' नास्ति ख। 4. 'तस्यापेक्षया प्राप्तत्वाद-विधपाच्च' ख। 5. 'तु' स्थाने 'च' ख। 6. 'करणो' क-ख। 7. 'भूमौ चक्तं पातितं यस्य' ख। 8. 'चक्तीति' ख 9. 'दक्षिणे नाग्नं दक्षिणतः' ख, 'दक्षिणाग्नि' मग्नं दक्षिणत इत्यर्थः' ग। 10. 'मञ्जलि-पूरितोऽञ्जलि' ख। 11. 'इति' नास्ति क-ग।

"अनुमतेऽनुमन्यस्वे"ति पश्चात् ॥ २ ॥

(A)"अनुमतेऽनुमन्यस्वे"त्यनेन मन्त्रेण पश्चात् प्रकृतत्वादग्नेः उदक्संस्थम् उदकाञ्जलिं प्रसिञ्चेदिति वर्त्तते।

"सरस्वत्यनुमन्यस्वे"(B)त्युत्तरतः ॥ ३ ॥

[1]पूर्वसूत्रे व्याख्यातमेवैतत्, अत्रापि प्राक्संस्थमेव।

"देव सवितः प्रसुवे"ति प्रदक्षिणमग्निं पर्युक्षेत् सकृद् वा त्रिर्वा ॥ ४ ॥

"(C)देव सवितः प्रसुवे"त्यनेन [2]मन्त्रसमाम्नायादिमन्त्रेण [3]प्रदक्षिणमग्निं पर्युक्षेत्, परिषिञ्चेत्। सकृद्वा त्रिर्वा। वाशब्दद्वित्यमिच्छाविकल्पार्थम्। ततश्च सकृदेव पर्युक्षिते [4]शास्त्रार्थस्य कृतत्वात् को हि त्रिः पर्युक्षेद् इति[5]।

कथं पर्युक्षेदित्यत आह—

पर्युक्षणान्तान् [6]व्यतिहरन्नभिपर्युक्षन् होमीयम् ॥ ५ ॥

दण्डरज्जूदकधारादिष्वादिरप्यन्तशब्दवाच्यो [7] भवति। पर्युक्षणान्तानिति[8] बहुवचनं [9]त्रित्वपक्षापेक्षम्। व्यतिहरन् व्यतिषजन्[10] प्रतिलोमीकुर्वन्नित्यर्थः। यथा अग्निष्टोमे द्वितीयायां धुरि तस्या द्वे अक्षरे सशयनी [11]व्यतिषजनीति। किमुक्तं भवति? पर्युक्षणारम्भकोटिमभ्यन्तरतः कुर्याद् अवसानकोटिं बहिरिति। अथवा व्यतिहारो

A. मन्त्रः "अनुमतेऽनुमन्यस्व"। विनियोगस्थानमस्य खादिरगृह्य-सूत्रे १।२।१८। हिरण्यकेशिगृह्य-सूत्रे १।२।९। आपस्तम्बगृह्य-सूत्रे च १।२।३।

B. मन्त्रः "सरस्वत्यनुमन्यस्व"। विनियोगप्रमाणमस्य खादिरगृह्यसूत्रेऽपि १।२।१८।

C. ॐ "देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय।
दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदतु"।
इति सामवेदीयमन्त्रब्राह्मणप्रथमप्रपाठकस्य प्रथमखण्डीयप्रथममन्त्रः।

1. 'पूर्वं व्याख्यातमेतत्' ख 'पूर्वमत्र व्याख्यातमेतत्' क। 2. 'मन्त्रसमाम्नायादि' नास्ति ख-ग। 3. 'प्रकृतत्वादग्नि' ख, 'दक्षिणमग्नि' क। 4. 'शास्त्रार्थस्य' नास्ति क-ख। 5. 'इति' नास्ति ख, 'इति फल भूयास्त्वनीयः' इत्यधिकः पाठः ग। 6. 'व्यतिहरन्' नास्ति ग। 7. 'न भवति' क। 8. 'इति' नास्ति ख। 9. 'त्रिपक्षापेक्षम्' ख, 'त्रित्वपक्षा-' ग। 10. '-षजन' ख ग। 11. 'व्यतिषजनी' ग, 'व्यतिषजतीति' ख

विकर्षः[1], व्यतिहरन् विकृष्टान्तरान् कुर्वन्, एकत्रासंलग्नानित्यर्थः। एकसूत्रस्याऽनेकार्थताविरोध इति चेत्, न, यावन्तोऽर्थास्तावन्ति सूत्राणि इति।

[2]तथा चोक्तम्—

यावतामेव धातूनां लिङ्गं रूढिगतं भवेत्।
अर्थस्याऽप्यभिधेयस्य तावद्भिर्गुणविग्रहः॥(A) इति।

होमार्थमुपक्लृप्तं होमीयं व्रीह्यादि, तदभिपर्युक्षन् पर्युक्षणधारया अभ्यन्तरतः कुर्वन् इत्यर्थः।

**अथ [3]हविष्यस्यान्नस्याग्नौ जुहुयात् कृतस्य वाऽकृतस्य वा॥६॥**

अथेत्यानन्तर्यार्थः। पर्युक्ष्य तूष्णीं(B) समिधमाधायाऽथ जुहुयात्।

तथा चोक्तम्—

समिदादिषु होमेषु मन्त्रदैवतवर्जिता।
पुरस्ताच्चापरिष्टाच्च इन्धनार्थं समिद् भवेत्(C)॥ [4]इति।

वक्ष्यति चायम् "(D)समिधमाधायानुपर्युक्ष्ये"ति[5]। हविष्यं व्रीह्यादि। माषकोद्रववरटवर्जम्। तथा चोक्तम्—

हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः।
माषकोद्रवगौरादीन्[6] सर्वालाभेऽपि वर्जयेत्(E)॥

---

A. महाभाष्यीयश्लोकवार्तिके।

B. उत्कृष्टाः समिध आह गृह्यासंग्रहे—

अकृशा चैव न स्थूला अशाखा चाऽपलाशिनी।
सक्षीरा नाधिका न्यूनाः समिधः सर्वकामदाः॥ इति (गृ० स० १।३२)

C. कात्यायनसंहिता—८।२१। अत्र संवादि प्रमाणमुक्तं गृह्यासंग्रहे—

सर्वेषामेव होमानां समिदादौ विधीयते।
कर्मान्ते चैवमेव स्यात् स्वाहां तत्र न कारयेत्॥ इति (गृ० स० १।९७)

D. "समिधमाधायानुपर्युक्ष्य तथैवोदकाञ्जलीन् प्रसिञ्चेदन्वमंस्था इति मन्त्रविशेषः।" (गो० सू० १।३।१२)

E. कर्मप्रदीपः १।१०। अत्र प्रकाशकारः "गोभिलभाष्यकृता तु 'कोरादीन्' इति पठितं व्याख्यातञ्च कोरो बर्बट इति" एवं व्याचष्टे। हविष्यस्वरूपमुक्तं कात्यायनेन च गृह्यासंग्रहे—

अयुक्तममूलवर्णैरपर्युषितमेव च। हविष्यमेतदन्नाद्यमसुरैश्चाप्यसंयुतम्॥ इति गृ० स० २।७७।

अत्र व्याख्यायां तर्कालङ्कारमहाशयाः—

"असुरः—इति नैघण्टुककाण्डे मेघनामसु पठितम्। तच्च तत्रोनत्रिंशत्तमं नाम। तथा च, असुरैर्मेघैर्मेघजलैर्न मिश्रितमित्येतत्, मेघोदकस्यापवित्रत्वात्, तथा च स्मरणम्—

1. 'वा विकर्षः' इति क। 2. 'तथोक्तम' ख। 3. 'हविष्यान्नस्य' क ग। 4. 'इति' नास्ति ख। 5. '-पर्युक्ष्य तथैवोदकाञ्जलीन् प्रसिञ्चेदिति' ख। 6. 'गौरादिः' ख।

हविष्यस्वरूपं(A) श्रीविष्णुपुराणेऽभिहितम् ।

व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।
प्रियङ्गवो ह्युदाराश्च कोरदूषाः सबीजकाः ॥
माषा मुद्गा मसूराश्च निष्पावाः सकुलच्छकाः (B)
आढक्यश्चणकाश्चैव शाणाः सप्तदश स्मृताः ॥
इत्येता ओषधीनान्तु ग्राम्याणां जातयो मुने ।
ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश ॥
व्रीहयः सयवा मुद्गा गोधूमाश्चणकास्तिलाः ।
प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलच्छकाः (B) ॥
श्यामाकास्तु सनीवारा जर्तिलाः सगवेधुकाः ।
तथा वेणुयवाः प्रोक्तास्तद्वन्मर्कटका मुने ॥
ग्राम्यारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्दश ।
यज्ञनिष्पत्तये यज्ञस्तथासां हेतुरुत्तमः[1]* ॥ इति ।

[2]तस्य [3]हविष्यस्य, अन्नस्य अदनीयस्य, [4]अद् भक्षणे, भक्षणयोग्यस्य, न [5]पुराणतया कीटादिदोषदुष्टस्येति । षष्ठी अवयवार्था । ततश्च हविष्यान्नस्यावयवं[6] गृहीत्वा जुहुयात् । [7]केन जुहुयात् ? पाणिना । कुतः—

---

स्नानमाचमनं दानं देवतापितृतर्पणम् ।
शूद्रोदकैर्न कुर्वीत तथा मेघाद् विनिःसृतैः ॥ इति ।

अथवा अक्षारैः क्षारविद्गादिभिरमिश्रितमित्यर्थः । ...अक्षारैरिति लिङ्गव्यत्ययाद् वा पदं द्रष्टव्यम्, अक्षाराभिरित्यर्थः । अक्षरा रजनी हरिद्रेत्यनर्थान्तरम् । बहुवचनादन्यैरप्येवं विधैरमिश्रितमिति । ...तदत्र लवणमात्रप्रतिषेधात् 'क्षारमृत्तिकादिकृतलवणभिन्नं लवणमक्षारलवणम्' इति रघुनन्दनव्याख्यानं नादरणीयम् । यच्च "लवणे सैन्धवसामुद्रे" इति हविष्यान्नविषयं स्मरणान्तरम्, तदप्येतद्व्यतिरिक्तविषयं बोद्धव्यम् । कस्मात् कारणात् ? स्वशाखपरिभाषायाः शीघ्रमुपस्थितत्वात् । सामान्यस्य विशेषेतरपरत्वोपपत्तेश्च" एवं कथयन्तीति ।

A. 'बङ्गवासी'मुद्रितविष्णुपुराणे नोपलभ्यते ।

B. उभयत्रैव 'कुलत्थकाः' इति पाठः समीचीनतया प्रतिभाति । 'ताम्रवृन्तः कुलत्थः स्यात्' इति त्रिकाण्डशेषकोशात् कुलच्छपदस्य च कुत्रापि कोशेऽदर्शनादिति । मूलपाठस्तु आदर्शपुस्तकस्थो यथावत् सन्निवेशित इति ।

---

1. चिह्नितभागो नास्ति क-ग । 2. 'तस्य' नास्ति ख । 3. 'हविष्यस्य' नास्ति ख, 'अथ हविष्यस्य' ग । 4. 'अदभ्रा भक्षणे' ख । 5. 'पुराणस्य तथा' ख । 6. 'अवयवं' नास्ति क-ग 7. 'केन जुहुयात्' नास्ति ख ।

होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः ।
पाणिरेवेतरस्मिंस्तु स्रुचा[1] चात्र न हूयते(A) ॥

इति वचनात् । आहुतिप्रमाणं च द्वादशपर्वपूरणमात्रम् ।

तथा चोक्तम्—

पाण्याहुतिर्द्वादशपर्वपूरिका [2]कंसादिना चेत् [3]स्रुवमात्रपूरिका ।
दैवेन तीर्थेन च हूयते हविः स्व[4]ङ्गारिणि स्वर्चिषि तच्च पावके(B) ॥ इति ।

अग्नौ जुहुयादिति पुनरग्निग्रहणं (C)सुसमिद्धे होतव्य[5]मिति ज्ञापनार्थम्[*] ।

तथा चोक्तम्—

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च [6]दरिद्रश्च स जायते ॥

---

A. छन्दोगपरिशिष्टम्—८।११ । प्रमाणमिदमेवं विवृणोति प्रकाशकारः—

"कृताधानस्य नानाविधहोमप्रसक्तौ प्रथमं तत्परिभाषामाह—द्रवद्रव्याहुतौ आहुत्याधारपात्रानुपदेशे मुनिभिः स्रुवः स्मृतः । द्रवेतराहुतौ पात्रान्तरानुपदेशे पाणिनैव होतव्यम् । उभयत्रैवानुपदेशे जुह्वा होमो न कार्य इति । जुहूरिति समाख्याबलाद् जुह्वा अपि वैकल्पिकहोमसाधनत्वशङ्कानिरासार्थं 'स्रुचा चात्र न हूयते' इत्युक्तम्" ॥ इति । 'स्रुक् जुहूरित्यनर्थान्तरम्' इति स्वप्रभायां चन्द्रकान्तः । अत्र चतुर्थचरणे "स्रुचैवात्र तु हूयते" इति पाठो मुद्रित( "बङ्गवासी", "आनन्दाश्रमसंस्कृत सिरीज्" ) पुस्तकयोः ॥

B. कात्यायनसंहिता ९।११ । अत्र स्रुवपूरमात्रिकेति प्रकाशकारसम्मतः पाठः । अत्र संवदति तर्कालङ्कारधृतगोभिलपरिशिष्टवचनम्—

उत्तानेनैव हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥ इति ॥

C. सुसमिद्धमधिकृत्याह गृह्यासंग्रहे कात्यायनः—

पावकस्य मुखं वक्ष्ये यदुक्तं पद्मयोनिना ।
सप्तजिह्वाप्रमाणन्तु प्रादेशं परिकीर्त्तितम् ॥
प्रमाणं चतुरस्रञ्च वर्त्तुलं मुखमण्डलम् ।
यदर्थं हूयते वह्नौ तां जिह्वां परिकल्पयेत् ॥
कराली धूमिनी श्वेता लोहिता महालोहिता ।
सुपर्णी पद्मरागी च सप्तैताः परिकीर्त्तिताः ॥

---

1. 'स्रुचैवात्र न हूयते' क ; 'स्रुचैवात्र न' ख-ग । 2. 'रमादिना' क-ग । 3. 'स्रुवपूरमात्रिक' क-ख । 4. 'व्यङ्गारिणि' क-ग । 5. '-मित्यर्थः' क-ग । 6. 'दरिद्रश्चोप-' क-ग ।

तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं तथा(A) ॥ [1]इति ।

कृतस्य वा ओदनादेः, अकृतस्य व्रीह्यादेः ।

तथा चोक्तम्—

कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा [2]मतम् ॥(B) [3]इति ।

[4]वाशब्दौ विकल्पार्थौ ।

---

करालीं राक्षसाघ्नन्ति धूमिनीमसुरास्तथा ।
श्वेतां नागाः समश्नन्ति पिशाचा लोहितां तथा ॥
महालोहितां गन्धर्वाः सुपर्णीञ्च यमस्तथा ।
पद्मरागी च विख्याता दिव्या जिह्वा हुताशने ॥
तस्यान्तु होमयेन्नित्यं सुसमिद्धे हुताशने ॥
विधूमे लेलिहाने च होतव्यं तन्त्रसिद्धये ।
न धूमो न तथा ज्वाला विशुद्धो शुचि चक्षुषः ॥
प्रभया याति यत्रैव भगवांस्तत्र तिष्ठति ।
तत्र पूर्णाहुतिं दद्यात् सर्वकामप्रसिद्धये ॥ इति गृ० स० १।१९-२६ ।

A. कर्मप्रदीपः—९।१२-१३ । अग्निः कथमुद्दीपयितव्य इत्यपेक्षायामुक्तं तत्रैव—

जुहूपंश्च हुते चैव पाणि-सूर्प-स्फ्य-दारुभिः ।
न कुर्यादग्निधमनं कुर्याद्वा व्यजनादिना ॥
मुखेनैव धमेदग्निं मुखाद्ध्येषोऽभ्यजायत ।
"नाग्निं मुखेने"ति च यल्लौकिके योजयन्ति तत् ॥
इति का० स० ९।१४-१५ ।

गृह्यासंग्रहेऽपि—

न वस्त्रेण धमेदग्निं न सूर्पेण न पाणिना ।
मुखेनोपधमेदग्निं मुखाद्ध्येषोऽभ्यजायत ॥
वस्त्रेण तु भवेद् व्याधिः सूर्पेण धननाशनम् ।
पाणिना मृत्युमाप्नोति मुखेन सिद्धिभाग् भवेत् ॥ इति गृ० स० १।७०-७१ ।

B. कात्यायनसंहिता—२४।३ । अत्र संवादिप्रमाणमुक्तं गृह्यासंग्रहे—

यवव्रीह्यकृतं ज्ञेयं तण्डुलादि कृताकृतम् ।
ओदनन्तु कृतं विद्यान्न तस्य करणं पुनः ॥ गृ० स० १।९२ ।

---

1. 'इति' नास्ति ख । 2. 'बुधैः' ख । 3. 'इति' नास्ति क-ग । 4. 'वाशब्दो विकल्पार्थः' ख ।

## अकृतं चेत् प्रक्षाल्य जुहुयात् प्रोदकं कृत्वा ॥ ७ ॥

अकृतं चेत् [1]यदि प्रक्षाल्य प्रोदकं [2]गतोदकं कृत्वा जुहुयात्, एवञ्च पूर्वमेव प्रक्षाल्य प्रगतोदकं कृत्वा [3]कुम्भादौ स्थापयेत्। 'तत उद्धृत्योद्धृत्य जुहुयात्'*। तत्कालप्रक्षालिते तस्य[5] सोदकत्वादंशस्य विनाशः स्यात्। प्रक्षालनं च[6] त्रिः कर्त्तव्यम्; कुतः, देवतार्थत्वात्। वक्ष्यति च[7] "त्रिर्देवेभ्यः प्रक्षालयेदिति[8]"(A)।

व्रीहियवाभावे किं[9] जुहुयादित्यत आह—

## अथ (B)यदि दधि पयो यवागूं वा ॥ ८ ॥

अथ-यदि-शब्दौ [10]प्रश्नव्याहारार्थौ, अथ यदि व्रीहियवयोरभावः स्यात् किं जुहुयादिति प्रश्नोऽध्याहार्यः। एवं [11]पृष्ट आह दधि जुहुयात्। [12]पयो जुहुयात्[12]* दधिपयसोर्वाशब्द[13]भावस्तुल्यविकल्पार्थः। तयोरप्यभावे यवागूं वा[14], जुहुयादिति वर्त्तते। यवागूर्यव[15]पृष्टकः। [16]अश्रुतस्य प्रश्नस्याध्याहार्यत्वमनुपपन्नमिति चेत्, नैष दोषः, अपरिपूर्णं हि[17] वाक्य[18]मध्याहारेणानुषङ्गेण वा निराकाङ्क्षीक्रियते। स्मृत्यन्तरे चास्य सूत्रस्यैव[19] एवार्थो दृष्टः।

तथा चोक्तम्—

अभावे व्रीहियवयोर्दध्ना वा पयसाऽपि वा।
तदभावे [20]यवाग्वा वा जुहुयादुदकेन वा॥ इति।(C)

---

A. "त्रिः फलीकृतांस्तण्डुलान् त्रिर्देवेभ्यः प्रक्षालयेद इत्याहुः, द्विर्मनुष्येभ्यः, सकृत् पितृभ्य इति" गो० सू० १।७।९।

B. "अथ यदी"त्यादि, "कंसेने"त्यादि च सूत्रद्वयमेकीकृत्य पठतः सामश्रमी तर्कालङ्कारश्च, कटाक्षश्चात्र विक्षिपति तर्कालङ्कारः—"केचिदत्र सूत्रद्वयं कल्पयन्ति...यथाश्रुतसूत्रपाठेनैवोपपत्तौ किमर्थमयं प्रयास इति नाधिगच्छामी"त्युद्गिरन्।

C. कर्मप्रदीपः २।७।३।

---

1. 'यदि' नास्ति ख। 2. 'च प्रगतोदकं' क-ग। 3. 'कुम्भादौ स्थापयेत्' स्थाने 'स्थापयेत् कुम्भादौ' इति ख। 4. चिह्नितांशो नास्ति ग। 5. तस्यार्द्रस्य क-ग। 6. 'चात्र' ख। 7. 'च' नास्ति ख। 8. 'दित्याहुरिति' ख-ग। 9. 'किं तु' ग। 10. 'प्रश्नाध्याहारार्थौ' ख-ग। 11. 'पृष्टे सति' ख। 12. 'पयो जुहुयात्' नास्ति ग। 13. 'श्चभाव' नास्ति ख। 14. 'वा' नास्ति ख। 15. 'स्पृष्टकः' क। 16. 'प्रश्नतस्य' क। 17. 'हि' नास्ति ख। 18. 'वाक्यमध्या' क; 'वाममध्याहारेण' ग। 19. 'स्यैव' क-ग। 20. 'यवागू' क।

ब्रीह्यादेस्तावत् पाणिना होमः सिद्धः, दध्यादि केन जुहुयादित्यत आह—

कंसेन वा चरुस्थाल्या वा स्रुवेण [1]वैव(A) ॥ ६ ॥

कंसं कंसभाजनम्। चरुस्थाली, चरुः [2]यस्यां श्रप्यते सा [3]च मृन्मयी ताम्रमयी वा [4]प्रादेशमात्रा स्यात्।

तथा चोक्तम्—

तिर्यगूर्द्ध्वं समिन्मात्रा दृढा नातिबृहन्मुखी।
मृन्मय्यौडुम्बरी वापि चरुस्थाली प्रशस्यते। (B)इति ॥

"[5]स्रुवेण वैव एवकारकरणं [6]स्रुवेण" द्रवद्रव्य[7]होमनियमार्थम्।

उक्तं च—

"होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः।" इति।

ततश्चाभावविकल्पोऽयं स्रुवाभावे कंसचरुस्थाल्योरन्यतरेण जुहुयादिति।

स्रुक्स्रुवलक्षणं च कात्यायनेनोक्तम्—

खादिरो वाऽथ [8]पार्णो वा द्विवितस्तिः स्रुवः स्मृतः।
स्रुग् बाहुमात्री[9] विज्ञेया वृत्तस्तु प्रग्रहस्तयोः ॥
स्रुवाग्रे घ्राणवत् खातं [10]द्व्यङ्गुलं परिमण्डलम्।
जुह्वाः[11] शरावबत् खातं सनिर्वाहं षडङ्गुलम्। (C) कुर्यादिति।

---

A. 'वैव' इति भाष्यकारसम्मतः पाठः। तर्कालङ्कार-सामश्रमिणौ तु 'वै वा' इति पठतः।

B. कात्यायनसंहिता १९।१२।

C. छन्दोगपरिशिष्टम् ८।१२-१३। द्व्यङ्गुलमित्यत्र द्व्यङ्गुष्ठम् इति पठति प्रकाशकारः। श्लोकद्वयं विवृणोति चेत्थम्—"खदिरमयः पलाशमयो वा वितस्तिद्वयमानः स्रुवः स्मृतः। जुहूर्बाहुप्रमाणा बोद्धव्या। प्रगृह्यतेऽस्मिन्निति व्युत्पत्त्या प्रग्रहो दण्डः स च स्रुवस्रुचोर्वर्तुलो बोद्धव्यः। स्रुवाग्रे नासारन्ध्रवन्मध्यस्थितमर्यादम् अङ्गुष्ठद्वयमितं वर्तुलं बिलं ज्ञेयम्। जुह्वास्तु खातं शरावाकृति निःशेषहवनसाधनतया निर्वाहपदवाच्यप्रणालीसहितं षडङ्गुलं जानीयात्" ॥ इति।

स्रुवस्रुचोः स्वरूपमाह गृह्यसंग्रहेऽपि—

खादिरोऽरत्निदीर्घः स्यात् स्रुवोऽङ्गुष्ठपर्ववृत्तः।
पार्णीं स्रुचं बाहुमात्रीं पाणितलाकारपुष्कलाम्।
त्वग्बिलां त्वग्रे कुर्वीत मेक्षणं स्रुक्स्रुवादिवत् ॥ इति गृ० सं० १।८३।

---

1. 'वैवा' क। 2. 'यस्यां चरुः' ख। 3. 'च' नास्ति ख। 4 'प्रदेश-' क; 'प्रादेशमात्री' क-ग। 5. 'स्रुवेण वैव' नास्ति ख, 'स्रुवेणैव' क। 6. 'स्रुवेण' नास्ति ग। 7. 'द्रव्यस्य होमनियमार्थम्' ख। 8. 'पालाशो' ख। 9. 'बाहुमात्रा' "सोमाइटी"मुद्रितपाठः। 10. 'द्व्यङ्गुष्ठं' ख। 11. 'सर्वखातं सनिर्वाहं। स्रुवबाहुं षडङ्गुलम्' क-ग; 'सनिर्वाहं' ख।

**अग्नये स्वाहेति पूर्वां(A)तूष्णीमुत्तरां मध्ये चापराजितायां च दिशीति सायम् ॥ १० ॥**

'अग्नये स्वाहेत्यनेन मन्त्रेण पूर्वामाहुतिं जुहुयात्'[1]। तां च[2] मध्ये। तूष्णीमुत्तरामाहुतिं जुहुयात्। तां चापराजितायां दिशि। अपराजिता पूर्वोत्तरो[3]ऽग्नेर्भागः(B)। तूष्णीमिति वचनात् 'मन्त्रदेवतयोरनादेशाच्च'[4] "किमेवमेव जुहुयात्, [6]न हि प्रधानं हविरदैवत'ममन्त्रकञ्च भवितुमर्हति ; तस्मात् 'प्रजापतये स्वाहे'त्यनेन मन्त्रेणोत्तरामाहुतिं जुहुयात्। कुत एतत्—

आज्यं हव्यमनादेशे जुहोतिषु विधीयते।
मन्त्रस्य देवतायाश्च [8]प्रजापतिरिति स्थितिः(C) ॥

---

A. "तूष्णीमेवोत्तरां मध्ये चैवापराजितायाम्" इति तर्कालङ्कारधृतः सामश्रमिधृतश्च पाठः।

B. ऐशानी दिक्। तथा चाग्नेरीशानभागे जुहुयादित्यर्थः। तदत्र गृह्यासंग्रहः प्रमाणम्—

प्रक्रमणे तथोद्वाहे होमे स्विष्टकृते तथा।
यस्यां दिशि विधिं प्राहुस्तामाहुरपराजिताम् ॥ गृ० स० २।७६।

तथा च प्रक्रमणे गोभिलसूत्रम्—

सूर्पेण शेषमग्नावोप्य प्रागुदीचीमभ्युत्क्रामयत्येकमिषे इति सू० २।२।१०।

तथोत्तरविवाहे—

उद्वहन्ति प्रागुदीच्यां दिशि यद्ब्राह्मणकुलमभिरूपम्। सू० २।३।१।

तथा स्विष्टकृद्धोमे—

अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धपूर्वार्द्धे जुहुयात्। सू० १।८।१३। इति।

C. कात्यायनसंहिता ८।१६। अत्र 'हव्य'स्थाने 'द्रव्य'पाठमादृत्य व्याकरोति प्रकाशकारः—होमेषु होतव्यानुपदेशे आज्यं द्रव्यं होतव्यं विधीयते। आज्यं गव्यमिति पाठान्तरम्। मन्त्रदेवतयोश्चानुपदेशे प्रजापतिर्देवता मन्त्रोऽपि प्रजापतिः, 'प्रजापतये स्वाहे'त्यर्थः। अन्ये तु समस्तां व्याहृतिं प्राजापत्यं मन्त्रमाहुः। तत्र च मन्त्रे प्रजापतिशब्दप्रयोगात् मन्त्रमयी देवतेति व्यक्तम्।

तथा योगियाज्ञवल्क्यः—

यस्य यस्य तु मन्त्रस्य उद्दिष्टा या तु देवता।
तदाकारं भवेत् तस्य देवत्वं देवतोच्यते ॥ इति।

आनन्दाश्रममुद्रितपुस्तके तु "मन्त्रस्य"स्थाने 'तन्त्रस्ये'ति पाठः।

---

1. 'अग्नये स्वाहेति मन्त्रेण पूर्वां सायं जुहुयात्' ख। 2. 'च' नास्ति ख। 3. '-ऽहन-' ख। 4. 'मन्त्रश्चानादेशात्' ख। 5. 'किमिदं' ग। 6. 'न, नहि' ख। 7. 'ममन्त्रकं' नास्ति ख। 8. 'प्रजापतिः पतिरिति' ग।

इति वचनात् । "तूष्णीमिति कस्मादुच्यते[1]* "वागुच्चारणप्रतिषेधार्थमिदमुक्तम् । न हि "वाग्व्यापारे प्रतिषिद्धे "मानसो व्यापारः प्रतिषिध्यते । तस्मात् 'प्रजापतये स्वाहे'ति मनसा मन्त्रमुच्चार्य जुहुयात् इति[5] । तथा च श्रुतिः—

"तस्मात् प्राजापत्यां मनसा जुह्वति मनो हि प्रजापतिरिति"(A) ।

'इति सायम्' "इत्यन्तेन प्रकारेण सायं जुहुयादिति ।

**अथ प्रातः सूर्याय स्वाहेति पूर्वां तूष्णी[7]मेवोत्तरां मध्ये चैवापराजितायाञ्चैव दिशि ॥ ११ ॥**

अथ-शब्दः "पूर्वप्रकृतार्थः, येन हविषा सायं होमः कृतस्तेन प्रातरपि जुहुयादिति"(B) तदभावे तत्प्रतिनिधिना, न विकल्पोक्तानामन्य[10]तमेनेति । [11]तथा चोक्तम्—

यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।

यवानामिव गोधूमा व्रीहीणामिव शालयः ॥ (C) [12]इति ।

प्रातः उक्ते काले (D)सूर्याय स्वाहेत्यनेन मन्त्रेण "[13]पूर्वामाहुतिं[13]* जुहुयात् ।

---

A. प्रमाणीकृतोऽयं भागः स्वभाष्ये तर्कालङ्कारेणाऽपि 'इति च ब्राह्मणम्' इत्युपोद्घातेन ।

B. सूत्रस्थाथशब्द एवमर्थं प्रकाशयतीति भाष्यकृतामाशयः ।

C. कात्यायनसंहिता १९।२१ ।

D. "पुरोदयादि"त्यादि १।१।२८ सूत्रेणेति भावः । ननु प्रातराहुतेः पूर्वम्—

"अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृतः" । इति कर्मप्रदीप-

वचनबलात्, प्रातःसन्ध्याया अवश्यकर्त्तव्यत्वम् । तत् पूर्वञ्च—

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।

दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत् तदमन्त्रवत् ॥ (कात्यायनसंहिता १०।१)

इत्यादिना प्रातःस्नानस्य विधानात् प्रातराहुतिकालकोपस्यैव सर्वदा सम्भव इति चेत, अत्रोच्यते कर्मप्रदीपे—

अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्मणः ।

प्रातर्न तनुयात् स्नानं होमलोपो हि गर्हितः ॥ इति क० प्र० २।२।११ ।

अत्र प्रकाशकारः—"यथाऽहनि तथा प्रातरित्यनेन मध्याह्नस्नानवत् विस्तरेण प्रातःस्नानं

---

1. चिह्नितांशो नास्ति ग । 2. 'प्रागुच्चारण-' ख । 3. 'वाच्या यदि प्रतिषिद्धे' ग, 'वाग्व्यापारेऽनिषिद्धे' ख । 4. 'मनसो' ख । 5. 'इति' नास्ति क-ख । 6. 'यनेन' ख । 7. 'एव' नास्ति ख । 8. 'पूर्व' नास्ति ख । 9. 'इति' नास्ति ख । 10. '-तरेणेति' ख । 11. 'तथोक्तम्' ख । 12. 'इति' नास्ति ख । 13. 'पूर्वामाहुतिं' नास्ति ख ।

शेषमुक्तार्थम्। एव-कारकरणं पूर्वविध्यनुकर्षणार्थम्। उपदेशक्रमादेव [1]पूर्वोत्तरत्वसिद्धे [2]पूर्वामुत्तरामित्यवाच्यमिति चेत्, न। प्राक् स्विष्टकृत आवापः [ सू १।८।१५ ] इति वचनात्, उत्तरस्या आहुतेः स्विष्टकृत्स्थानीयत्वाच्च कम्बूकहरितगो[3]मयादीनामेककालत्वादन्तरा होमो मा भूदित्यतः पूर्वामुत्तरामित्युक्तम्। (A)

यदुक्तं तन्निरग्नेरेव, साग्निस्तु प्रातःस्नानं न विस्तारयेत् किन्तु संक्षेपेण कुर्यात्। संक्षेपश्च योगियाज्ञवल्क्येनोक्तः—तीर्थपरिकल्पन-जलाभिमन्त्रणाचमन-मार्जनान्तर्जलजप-स्नानान्यघमर्षण-सूक्तेन त्रिरावृत्तेनेत्येवंरूपः।

तथा च—　　स्नानमन्तर्जले चैव मार्जनाचमने तथा।
जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम्॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः।
स्नानाचरणमित्येतत् समुद्दिष्टं महात्मभिः॥ इति।

हेतुमाह—होमकालस्याल्पत्वात् स्नानकर्मणो बहुत्वाद् विस्तारे होमकालातिक्रमात् यस्माद्धोमलोपो भवेत् स च गर्हितः, तस्माद्धोमार्थं संक्षेपं कुर्यात्। ननु प्रातःस्नानं प्रातःकाले कर्त्तव्यं होमस्तूदितहोमिनामुदयानन्तरमिति स्नानविस्तारेऽपि न होमकालातिक्रमः; तस्मादनुदितहोमविषयमेवेदं वचनमिति युक्तम्? नैवम्—उदितहोमिनामप्युदयात् पूर्वमग्निविहरणं विहितम्। तथा च गोभिलः "पुरोदयात् प्रातः...जुहुयादिति" तथा 'हस्तादूर्ध्वं रविर्यावदि'त्यनेनाल्प एव होमकाल उक्तः, विस्तरेण तु यद्यादौ स्नानं विहितम्। ततश्च स्नानविस्तरेण यद्यादित आगमनेन च सर्वमिदं लुप्येदिति तस्यापि स्नानसंक्षेपः।

एवम्—　　पूर्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि।
गायत्रीमभ्यसेत् तावद् यावदादित्यदर्शनम्॥
पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमाऽर्कदर्शनात्।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात्॥ ( मनुसंहिता २।१०१ )

सज्योतिर्ज्योतिर्षो दर्शनादित्यादि नरसिंहपुराण-मनु-गौतमादिभिर्यदुक्तं तन्निरग्निविषयं मन्तव्यम्" इति निर्णीतवान्॥

A. अत्र भाष्यकृतामयमाशयः—'यदि प्राक् स्विष्टकृत आवाप' इति सूत्रेण प्रधानहोमस्यान्ते स्विष्टकृद्धोमविधेः प्रसक्तिः स्यात्, यदि वा 'वृत्त्यविच्छित्तिकामो हरितगोमयान् सायंप्रातर्जुहुयात् (४।८।१९) वृत्त्यविच्छित्तिकामः कम्बूकान् सायंप्रातर्जुहुयात्...(४।९।१४) इति सूत्रद्वयोक्तसायंप्रातःकर्त्तव्यकाम्यहोमयोर्नित्यहोमेनानेन सममेव व्यतिकरेण प्रसक्तिः स्यात्;

1. नं'पूर्वोत्तरत्वं सिद्धेः' क-ख। 2. 'पूर्वोत्तरा-' ख। 3. '-मयाना-' क।

**समिधमाधायाऽनुपर्युक्ष्य तथैवोदकाञ्जलीन् प्रसिञ्चेदन्वमंस्था इति मन्त्रविशेषः ॥ १२ ॥**

समिधमाधायेत्युक्तार्थम्। (A) देव सवितः [1]प्रसुवेत्यनेन। मन्त्रेणानुपर्युक्ष्य तथैव तेन प्रकारेणोदकाञ्जलीन् प्रसिञ्चेत्। [2]अनुमन्यस्वेत्येतस्मिन् स्थानेऽन्वमंस्थाः (B) इति मन्त्रविशेषः, [3]कर्त्तव्य इति वाक्यशेषः।

**प्रदक्षिणमग्निं परिक्रम्याऽपां शेषं निनीय पूरयित्वा(C)ऽऽचमनं[4] प्रतिष्ठाप्य यथार्थम्॥ १३ ॥**

प्रदक्षिणमग्निं परिक्रम्येति। [5]ऋजून्येतानि[5]*पदानि। पर्युक्षणार्थमासादितानाम् अपां शेषम् [6]उर्वरितं, निनीय निक्षिप्य [7]अन्याभिरद्भिः पूरयित्वा, आचमनं पात्रम्; आचम्यते अनेनेत्याचमनं [8]पात्रमभिधीयते। प्रतिष्ठाप्य आत्मनोऽन्तिकेऽवस्थाप्य यथार्थं यथाविहितमन्यद् वामदेव्यगानादि कुर्यादिति। वक्ष्यति चायमपवृत्ते कर्मणि वामदेव्यगान(D)मिति। [9]प्रातराहुत्यन्ते ब्रह्मयज्ञस्य विधानाद् ब्रह्मयज्ञादि वा कुर्यात्। उक्तं च—

स चाऽर्वाक् तर्पणात् कार्यः पश्चाद् वा[9]* प्रातराहुतेः।
वैश्वदेवावसाने वा नान्यत्र[10]र्ते निमित्तकात्। (E) इति।

---

तन्निराकरणार्थमेवात्र सूत्रे पूर्वमित्यादिपदस्य पुनर्वचनमिति। पुनरुक्तिश्च गौभिले न पर्यनुयोज्येत्येतदपि न प्रस्मर्तव्यम्—यदुक्तं 'पुनरुक्तमि'त्यादि [पश्यन्तु १७ पृ० पाद-टी०]।

A. "देव सवितः प्रसुवे"ति मन्त्रमुक्तं प्राक्।

B. अदिते अन्वमंस्थाः।
अनुमते अन्वमंस्थाः।
सरस्वत्यन्वमंस्थाः॥ इति पर्युक्षणमन्त्राः।

C. "आचमनं" स्थाने "चमसं" पठतः सामश्रमी तर्कालङ्कारश्च। "चमसं पात्रविशेषम्। आचमनमिति पाठेऽपि आचम्यतेऽनेनेत्याचमनं पात्रमेवार्थः" इति तर्कालङ्कारीये भाष्ये॥

D. "अपवृत्ते कर्मणि वामदेव्यगानं शान्त्यर्थं शान्त्यर्थम्' इति गो० सू० १।९।२९।

E. कात्यायनसंहिता १३।९।

अत्र चतुर्थचरणं तु प्रकाशकारो "नान्यत्रेति निमित्तकात्" इत्येवं पठति, विशदीकरोति चेत्थं

---

1. 'प्रसुव यज्ञमि-' ख। 2. 'अनुमतेऽनुमन्यस्व·' ख-ग। 3. 'कर्त्तव्यमिति' क। 4. 'चमसं' क। 5. 'एतानि ऋजूनि' ख। 6. 'उद्धरितं' क। 7. 'अन्याभिः' नास्ति क। 8. 'पात्रं विधीयते' क। 9. 'चिह्नमध्यस्थः' प्रातराहुत्यन्त इत्यादिपदाद् वा इत्यन्तग्रन्थभागो नास्ति ख-पुस्तके। 10. 'नान्यतर्तौ' इति 'वङ्गवासी'मुद्रितः पाठः।

तदेतत् पुन'रुदकपात्रपूरणमुदकालम्भनार्थम्। अन्यथा अदृष्टार्थतैव स्यात्। उदकालम्भननिमित्तानि चोक्तानि—

"यः श्रुतिजपरूपो ब्रह्मयज्ञः स पितृयज्ञात् पूर्वं कार्यः। अत एव तदनन्तरं "यदेव तर्पयत्यद्भिः" इत्यादिना तर्पणमुक्तम्। पश्चाद् वा प्रातराहुतेरिति। अष्टधा विभक्तदिनस्य द्वितीयभागे दक्षोक्तेऽध्यापनात्मको ब्रह्मयज्ञः कार्यः।

तथा च दक्षः— द्वितीये तु ततो भागे वेदाभ्यासो विधीयते।
वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः॥
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा।

वैश्वदेवावसाने वा वामदेव्यजपरूपो ब्रह्मयज्ञः कार्यः। न च वामदेव्यजपस्य कर्माङ्गत्वात् न प्रधानब्रह्मयज्ञरूपतेति वाच्यम्? तर्पणवत् सम्भवात्। अत एव दधिखदिरादेः क्रत्वर्थस्यापि पुरुषार्थतयाऽप्राधान्यम्। अत एव वक्ष्यन्ते वामदेव्यगानान्तिको यो जपः स ब्रह्मयज्ञ इति भट्टभाष्यम्। वाकारश्च व्यवस्थितविकल्पपरः। ब्रह्मयज्ञस्यैते वैकल्पिकाः काला विभिन्नविषया इत्यर्थः इति कालरूपनिमित्तत्रयं विना न ब्रह्मयज्ञः कार्यः। अत्र च कालोपदेशादेव नियमे सिद्धे यत्नान्यत्रेति नियमाभिधानं तस्यायमभिप्रायः—ब्रह्मयज्ञस्य नित्यत्वात् कालस्य च तदङ्गत्वात्, नित्ये च किञ्चित् त्यागेनाप्यनुष्ठानात् अनियमे प्राप्ते निमित्तत्वेन कालस्याधिकारिविशेषणत्वादितराङ्गवैलक्षण्यात् तद्व्यतिरेकेणानधिकारप्रत्यभिज्ञानात् न नित्यप्रयोगाक्षेप इति"। अत्र प्रभाकारस्यापि "किञ्चिद् वक्तव्यमस्ति-'पितृयज्ञस्तु तर्पणम्' इति स्वोक्तमेव तर्पणं गृह्यते...'स चार्वाक् तर्पणात् कार्य' इत्यत्रापि स्वोक्तस्यैव पितृयज्ञरूपस्य तर्पणस्य परिग्रहः। प्रकृतप्रत्ययश्च न्याय्य इति शास्त्रतात्पर्यविदां वचनात्। सन्निहिते बुद्धिरन्तरङ्गेति न्यायात्...ब्रह्मयज्ञादिसाहचर्याच्चैवं प्रतिपत्तव्यम्। तच्चैतदन्यादृशमेव तर्पणं प्रधानं पितृयज्ञरूपं ब्रह्मयज्ञानन्तरं कर्तव्यमत्रोक्तम्। स्नानग्रन्थे त्वन्यादृशमेव तर्पणं स्नानाङ्गं सूर्योपस्थानादनन्तरं करणीयमुक्तम्। तदनन्तरं गायत्रीजपो ब्रह्मयज्ञश्च तत्रोक्तः। उभयत्रैव प्रकरणात् प्राधान्यमङ्गत्वञ्च तर्पणस्य प्रतिपत्तव्यम्।

तथा स्नानसूत्रपरिशिष्टम्—

आप्लवने तु संप्राप्ते तर्पणं तदनन्तरम्।
गायत्रीञ्च जपेत् पश्चात् स्वाध्यायञ्चैव शक्तितः॥
आप्लवने तु संप्राप्ते गायत्रीं जपतः पुरा।
तर्पणं कुर्वतः पश्चात् स्नानमेव वृथा भवेत्॥

तदत्राऽऽप्लवने त्वित्युपक्रमात् स्नानमेव वृथा भवेदित्युपसंहाराच्च स्नानाङ्गतर्पणादनन्तरमेव गायत्रीजपो ब्रह्मयज्ञश्चेति क्लिप्यते। तस्मात् स्नानाङ्गं तर्पणं ब्रह्मयज्ञात् पूर्वं, पितृयज्ञरूपं प्रधानतर्पणन्तु ब्रह्मयज्ञात् परं करणीयमित्यविरोधः।

1. '-हदपात्र-' ख।

पित्र्यमन्त्रानु[1]द्रवणे आत्मालम्भेऽधमेक्षणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ।
मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसम्भवे
निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत् । (A) इति ।

[2]गृह्यान्तरं च—

रौद्रं तु राक्षसं पित्र्यमासुरं चाभिचारिकम् ।
उक्त्वा मन्त्रं स्पृशेदाप आलभ्याऽऽत्मानमेव च ॥ (B) इति ।

सकृत् कृते कृतः शास्त्रार्थ (C) इति मा भूदित्यतः सायंप्रातर्होमयोरहरहरा[3]वृत्यर्थमिद[3]*मारभ्यते ।

---

एतेनैतद्विषयभेदमपर्यालोचयता नारायणोपाध्यायेन तत्त्वकारेण (रघुनन्दनेन) च ब्रह्मयज्ञादनन्तरं तर्पणं वाजसनेयिनामिति यदुक्तं तदसङ्गतं वेदितव्यम् छन्दोगपरिशिष्टस्य छन्दोगेतरपरत्वकल्पनस्यान्याय्यत्वात् । यच्चापरमुक्तं तत्त्वकारेण स्नानाङ्गतर्पणं प्रधानतर्पणस्य प्रकृतीभूतं तेन तस्यापि स्नानाङ्गतर्पणकालतैवेति,तदप्ययुक्तम् , द्वयोः सपरिकराभिहितयोः प्रकृतिविकारभावकल्पनानुपपत्तेः । 'स चाऽर्वाक् तर्पणात् कार्यः' इति कालविधानेन कालान्तरकल्पनानुपपत्तेश्च ।

अत्र तावत् श्रुतिजपरूपो ब्रह्मयज्ञस्तर्पणादर्वाक् कार्य इत्युक्तम् , स्नानग्रन्थे तु स्नानाङ्गतर्पणात् परतः सामजपरूपो ब्रह्मयज्ञ उक्त इति कस्य केनाभिसम्बन्ध इत्यप्यनुसन्धेयम् इति ।

A. कर्मप्रदीपः २।१३-१४ । अत्र ('अधमेक्षणं' इत्यत्र 'अवेक्षणे' इति पठित्वा) परिशिष्टप्रकाशकारो व्याचष्टे—

"पित्र्यमन्त्रोच्चारणे यज्ञार्थे विहिते हृदयस्पर्शे अवेक्षणे तस्यैव यज्ञार्थे विहिते, अधोवायुसमुत्सर्गे नोर्ध्वमुद्गारे, महति हासे न तु स्मिते, आक्रुष्टे परुषभाषणे, क्रोधोत्पत्तौ भाषणं विनाऽपि मनसा, एतेषु निमित्तेषु सर्वत्र कर्मकरणकाले जलं स्पृशेत् न त्वाचामेत् । अन्यत्रि गतव्याख्यातम् । पित्र्यमन्त्रानुद्रवणे इत्युपलक्षणम् , अत एव योगियाज्ञवल्क्यः—

रौद्रपित्र्यासुरान्मन्त्रांस्तथा चैवाऽऽभिचारिकान् ।
व्याहृत्याऽऽलभ्य चाऽऽत्मानम् अपः स्पृष्ट्वाऽन्यदाचरेत्" ॥ इति ।

प्रभावान्तु अधमेक्षणे चण्डालादिदर्शने इति । अत्र केचित् "आत्मालम्भे" आत्मन उपालम्भे स्वनिन्दायामिति व्याकुर्वन्ति ।

B. प्रमाणमिदं छन्दोगपरिशिष्टेऽपि २७।४ उपलभ्यते ।

C. इति न्यायादिति भावः ।

---

1. '-द्रवणः' ख । 2. 'गृह्यान्तरवचनम्' ख । 3. '-राहरणार्थं प्रारभ्यते' क-ख ।

एवमत ऊर्द्ध्वं गृह्येऽग्नौ जुहुयाद् वा हावयेद् वा आ जीविता-वभृथात् ॥ १४ ॥

एवमनेन प्रकारेण (A)अत ऊर्द्ध्वमस्माद् होमद्वयादूर्द्ध्वम्। एवञ्चानेन 'आद्ये होमद्वये

A. सायंप्रातर्होमयोः प्रकारस्तु "अथ सायमारभ्यौपासनहोमः। तदुक्तं गोभिलेन सूत्रम्—"सायमाहुत्युपक्रम एवात ऊर्ध्वं गृह्येऽग्नौ होमो विधीयते" (१।१।२३) अत ऊर्ध्वमाधानादूर्ध्वम्। स्पष्टमन्यत्। तस्य प्रयोगः—सायं येन हविषा हूयते तेनैव हविषा प्रातर्होमो निर्वर्तनीयः। अथ यजमानः शुचिः प्रक्षालितपाणिपाद आचान्तः पत्न्या सह सूर्यास्तमयात् पूर्वमधिवृक्षसूर्ये सूर्योदयात् पूर्वमाविःसूर्ये सायमौपासनहोमं होष्यामीति सायं, प्रातरौपासनहोमं होष्यामीति प्रातः सङ्कल्प्य, होमसमाप्तिपर्यन्तमाचमनपर्युक्षणाद्यग्निपरिचर्योपयुक्ता अपः परिकल्पयेत्। समिद्द्वयं होमद्रव्यं जलपूर्णं चमसं चाग्नेः पश्चादासादयेत्, अथ वा सायमेवापः परिगृह्य ताभिरेव प्रातरग्निपरिचर्या कर्त्तव्या, अथवा महतो जलभाण्डादेवाग्निपरिचर्यार्थमुदकं ग्राह्यम्। ततः सूर्यास्तमयात् पूर्वमग्नेः प्रज्वलनं कृत्वाऽस्तमिते सायमाहुतिम्, उदयात् पूर्वं प्रज्वलनं कृत्वा सूर्योदयात् पूर्वं सूर्योदये जाते वा प्रातराहुतिं जुहुयात्। व्यवस्थितोऽयं विकल्पो यथारम्भं गोभिलसूत्रिणाम्। ततस्तूष्णीमग्नौ समिधं प्रक्षिप्याग्निं प्रज्वाल्य तत्र तत्र विक्षिप्ताग्निकणान् तूष्णीं कुशैरेकीकुर्यात्। तदेव परिसमूहनम्। दक्षिणं जानु भूमौ संस्थाप्य चमसोदकमादायाग्नेर्दक्षिणतो निर्ऋतिमारभ्याग्निदिक्पर्यन्तं सन्तता-मुदकधारामञ्जलिना कुर्याद् "अदितेऽनुमन्यस्वे"ति मन्त्रेण। एवमग्नेः पश्चान्निर्ऋतिमारभ्य वायुदिक्-पर्यन्तमञ्जलिना सिञ्चेद् "अनुमतेऽनुमन्यस्वे"ति मन्त्रेण। अग्नेरुत्तरतो वायुदिशमारभ्यैशानपर्यन्त-मञ्जलिनोदकधारां कुर्यात् "सरस्वत्यनुमन्यस्वे"ति मन्त्रेण। एषां मन्त्राणां प्रजापतिर्ऋषिरेक-पदा गायत्री छन्दोऽदित्यनुमतिसरस्वत्यो देवता उदकाञ्जलिसेचने विनियोगः। ततोऽञ्जलिनोदक-मादाय "देव सवितरि"त्यनेन मन्त्रेण सकृत् त्रिर्वाऽग्निं प्रदक्षिणं परिषिञ्चति। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः सविता देवताऽनुपर्युक्षणे विनियोगः। ॐ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदतु॥ पर्युक्षणे विशेषः। पर्युक्षणारम्भकोटिमभ्यन्तरतोऽवसानकोटिञ्च बहिः कुर्वन् होमीयद्रव्यं पर्युक्षणधारया अभ्यन्तरतः कुर्वन् परिषिञ्चेत्। एवं सर्वत्र स्थालीपाकादिषु उदकाञ्जलित्रयं पर्युक्षणञ्च कार्यम्। भवनामानमग्निं ध्यायेत्, तदुक्तं गृह्यासंग्रहे "आवसथ्ये भवो ज्ञेयो वैश्वदेवे तु पावकः" आवसथ्यस्यैव गृह्याग्नि-रौपासनाग्निरिति च नामान्तरमिति व्याख्यातारः।

अथ तूष्णीं समिधमाधाय त्रिः प्रक्षालितान् प्रगतोदकान् पात्रस्थान् तण्डुलान् यवान् व्रीहीन् वा गृहीत्वा 'अग्नये स्वाहे'ति दक्षिणहस्तेन मध्येऽग्नौ जुहोति। 'इदमग्नये न मम'। पुनरवशिष्टं

1. 'आद्ये' नास्ति क।

स्वयं¹कर्तृकता नियम्यते। गृह्येऽग्नाविति। "अतोऽन्यान्यपि यानि नित्यनैमित्तिक-काम्यानि कर्माणि गृह्येऽग्नौ विधीयन्ते तेष्वप्ययं वक्ष्यमाणविकल्पः स्यात्, "जुहुयाद् वा स्वयं"* हावयेद् वा पुत्रशिष्यादिना।

"स्वयं होमे फलं यत्तु तदन्येन न जायते (A)।"

---

हविरादाय 'प्रजापतये स्वाहे'ति मनसोक्त्वा उत्तरार्द्ध-पूर्वार्धे जुहोति। 'इदं प्रजापतये न मम'। इति सायम्। प्रातःकाले 'सूर्याय स्वाहा' 'इदं सूर्याय न मम'। 'प्रजापतये स्वाहा' इदं प्रजापतये न मम'। इति विशेषः। अथवा दध्ना पयसा यवाग्वा अन्नेन वा जुहुयात्। यवाग्वा अन्नस्य पक्वस्य गृह्याग्नावेव श्रपणम्। द्रवद्रव्ये स्रुवपूरितेन जुहुयात्। तदभावे कांस्यपात्रेण चमस्याख्या वा। कठिनद्रव्यं तु दक्षिणपाणिना जुहुयात्। व्रीह्यादिप्रमाणं द्वादशपर्वपूरणमात्रम्। अथ तूष्णीं समिधमाधाय देव सवितरिति पूर्ववत् पर्युक्षणमुदकाञ्जलिसेचनं च कुर्यात्। तत्र मन्त्रविशेषः—अदितेऽन्वमंस्थाः। अनुमतेऽन्वमंस्थाः। सरस्वत्यन्वमंस्थाः। अन्यत् पूर्ववत्।

अथ प्रदक्षिणमग्निं परिक्रम्याग्निपरिचर्यार्थं यस्मिन्नमसे पात्रे वा जलं स्थापितं तदगाराद् बहिरानीय अन्येनोदकेन चमसं प्रक्षाल्य पूरयित्वा स्वस्थाने निधाय नमस्कारान् विधाय वामदेव्यं गीत्वा आचम्य ब्रह्मार्पणं कुर्यात्। एवं सायंप्रातर्होमो यावज्जीवं कर्त्तव्यः।

अथोक्तप्रयोगक्रमः सुबोधाय लिख्यते—

तत्रादौ संकल्पः, प्रादुष्करणम्, परिचर्यार्थोदकाहरणम्, तण्डुलादिहोमद्रव्यक्षालनम्, अग्नौ चतुष्काष्ठप्रक्षेपणम्। परिसमूहनम्। उदकाञ्जलिसेचनम्। पर्युक्षणम्। एकसमित्प्रक्षेपणम्। प्रधानहोमः। पुनरेकसमित्प्रक्षेपणम्। अनुपर्युक्षणम्। उदकाञ्जलिसेचनम्। प्रदक्षिणादि। शेषजलनिनयनम्। चमसपूरणम्। चमसस्थापनम्। वामदेव्यगानम्। ब्रह्मार्पणम्। इति प्रयोगक्रमः। इति सत्यव्रताग्निहोत्रिविरचितायां गोभिलीयगृह्यकर्मप्रकाशिकायाम्।

A. दक्षसंहितायाम्—

सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते।
स्वयं होमे फलं यत्तु तदन्येन न जायते॥ २।२०

इत्युक्तत्वात्, अकृतसन्ध्यस्य कर्मानर्हत्वाच्च कर्मप्रदीपोक्तः सन्ध्याविधिरिहाभिधीयते—

अत ऊर्ध्वं प्रवक्ष्यामि सन्ध्योपासनिकं विधिम्।
अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृतः॥
सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम्।
ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घाश्च बर्हिषः॥

---

1. 'कर्त्तृता' ख-ग। 2. 'यती' नास्ति क। 3. जयीमंत्री नास्ति ग।

इति वचनात् नायं तुल्यविकल्पः। [1]श्रुतेश्च—

[2]अन्यैः शतहुतान् होमानेकः शिष्यहुतो वरः ।
शिष्यैः शतहुतान् होमानेकः पुत्रहुतो वरः ॥

---

दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्मणि ।
सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥
रक्षेत वारिणाऽऽत्मानं परिक्षिप्य समन्ततः ।
शिरसो मार्जनं कुर्यात् कुशैः सोदकबिन्दुभिः ॥
प्रणवो भूर्भुवः स्वश्च सावित्री च तृतीयिका ।
अब्दैवतस्त्र्यृचश्चैव चतुर्थ इति मार्जनम् ॥
भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।
महर्जनस्तपःसत्यं गायत्री शिरसा सह ॥
आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरिति शिरः ।
प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ॥
एता एतां सहानेन तथैभिर्दशभिः सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥
करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ।
जपेदनायतासुर्वा त्रिः सकृद् वाऽघमर्षणम् ॥
उत्थायार्कं प्रतिप्रोहेत् त्रिकेणाञ्जलिमम्भसः ।
उचित्रमित्यृग्द्वयेन चोपतिष्ठेदनन्तरम् ॥
सन्ध्याद्वयेऽप्युपस्थानमेतदाहुर्मनीषिणः ।
मध्ये त्वह्न उपर्यस्य विभ्राडादीच्छया जपेत् ॥
तदसंसक्तपार्ष्णिर्वा एकपादर्धपादपि ।
कुर्यात् कृताञ्जलिर्वाऽपि ऊर्ध्वबाहुरथाऽपि वा ॥
तिष्ठेदोदयनात् पूर्वां मध्यमामपि शक्तितः ।
आसीतोडुदयाच्चान्त्यां सन्ध्यां पूर्वत्रिकं जपन् ॥
एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥

इति कर्मप्रदीपे द्वितीयप्रपाठके प्रथमखण्डे ।

---

1. 'ततश्च तदुक्तम्, कुतः? श्रुतेः' क-ग। 2. 'अन्यैः शतहुतान् होमानिति षड्विंशे' इति क-ग।

पुत्रैः शतहुताम् होमानेको ह्यात्महुतो वरः ।
स्वयं होता स्वयं दोही स्वयमेवोपतिष्ठते ॥

इति षड्विंशे(A) । ततो यदुक्तं—हावयेद् वेति तत् प्रवासादि'निमित्त'[1]विषयम् । तथा चोक्तम्—

सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ।
एवमादिनिमित्तेषु हावयेद् वेति योजयेत् ॥ (B) इति ।

कियन्तं कालं यावज्जुहुयादित्युच्यते—आजीवितावभृथात् जीवितस्यावभृथः अन्तः "जीवितावभृथः "तस्माज्जीवितावभृथात्, आ अर्वाक्, आ जीवितस्य क्षया"[2]-दित्यर्थः । तथा च श्रुतिः 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं 'जरया वा ह्येवास्मान्मु'[3]-च्यते मृत्युना वे'ति(C) ।

## अथाऽप्युदाहरन्ति ॥ १५ ॥

ब्राह्मणोदाहरणसूचनार्थमिदं सूत्रम् । अथशब्दः पूर्वप्रकृतानुसन्धानार्थः । अथ यदेतत् पूर्वसूत्र[6] उक्तं हावयेद् वेति, "एतस्यार्थदृढीकरणार्थं"[7] ब्राह्मणवाक्यमप्युदाहरन्ति अभिवदन्ति शिष्टाः ।

---

A. जीवानन्दमुद्रित-षड्विंशब्राह्मणे नोपलभ्यते । पद्यमप्यर्थे ह्रितीयाऽत्र कथञ्चित् समाधातव्या ।

B. कात्यायनसंहिता २४।४, ब्रह्मचारिणोऽस्य विधेरपवादमाह—

तत्रैव— न त्यजेत् सूतके कर्म ब्रह्मचारी स्वकं क्वचित् ।
न दीक्षणात् परं यज्ञे न कृच्छ्रादितपश्चरन् ॥
पितर्यपि मृते नैषां दोषो भवति कर्हिचित् ।
आशौचं कर्मणोऽन्ते स्यात् त्र्यहं वा ब्रह्मचारिणः ॥ का० स० २४।५-६ ।

यदा पुनरसमर्थो व्याध्यादिना हावयति तदा यत् कर्तव्यं तदप्याह कर्मप्रदीपः—

स्वयं होमासमर्थस्य समीपमुपसर्पणम् ।
तत्राप्यशक्तस्य ततः शयनाच्चोपवेशनम् ॥ इति कात्यायनसंहिता २१।१ ।

C. प्रमाणत्वेनोपन्यस्तेयं श्रुतिः स्वभाष्ये तर्कालङ्कारेणापि मृत्युना वेति पाठान्तरं कल्पयित्वा 'तथा च श्रूयते' इत्युपोद्घातेनेति ।

---

1. चिह्नितांशो नास्ति ख । 2. 'जीवितावभृथः' स्थाने 'स तथा', ख । 3. 'तस्मादर्वाग् जीवितक्षया-' इति ख । 4. 'जरया वा ह्यवास्मान्मु-' इति ग । 5. 'अथवाप्यु-' ग । 6. '-सूत्रम्' ख । 7. 'एतस्यार्थस्य दृढत्वं' इति क-ग ।

कीदृशं तदित्याह :—

**कामं गृह्येऽग्नौ पत्नी जुहुयात् सायंप्रातर्होमौ गृहाः पत्नी गृह्य एषोऽग्निर्भवतीति ॥१६॥**

कामम् इच्छया गृह्ये 'आवसथ्ये अग्नौ पत्नी जुहुयात् सायंप्रात'[2]र्होमौ नान्यदपीति। कस्मात्, समाख्यानात्, गृहाः पत्नी [3]"गृह्य एषोऽग्निर्भवतीति"[*]।

तथा च स्मरणम्—

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।
तया हि सहितः सर्वान् पुरुषार्थान् समश्नुते(A) ॥ इति।

अग्निरप्येष गृह्यो भवति '[4]एतस्मात् समाख्यानात् [5]'पत्नी जुहुयादिति। (B)सा चान्यस्य होतुरभावे। ततश्च तावन्मात्रं तामध्यापयेत्। इति-करणं ब्राह्मणवाक्य-परिसमाप्त्यर्थं सायं-प्रातर्होमप्रकरणपरिसमाप्त्यर्थं वा।

इदानीं (C)पञ्चसूनादोषनिष्क्रयणार्थम् अभ्युदयार्थं च (D)पञ्च महायज्ञा (E)गृहस्थस्य प्रत्यहं विहिताः, तेषां स्वरूपदर्शनार्थमिदमाह :—

A. 'तथा च भट्टभाष्ये स्मृतिः' इत्युपोद्घातेन प्रमाणीकृतं पद्यमिदं रघुनन्दनेनोद्वाहतत्त्वे। प्रजापतिस्मृतौ तु शेषार्द्धस्य 'गृहे तिष्ठति सा यावत् तावत्तीर्थसमं गृहम्' इति पाठ उपलभ्यते।

B. तथा च— निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा।
प्रवसेत् कार्यवान् विप्रो वृथैव न चिरं क्वचित् ॥ इति कर्मप्रदीप-(२।१।१)

वाक्ये ऋत्विक्परिकल्पनस्यान्यथा वैयर्थ्यापत्तेः,

असमक्षन्तु दम्पत्योर्होतव्यं नर्त्विगादिना
द्वयोरप्यसमक्षन्तु भवेद्धुतमनर्थकम् ॥

इति कर्मप्रदीप-(२०।१) वाक्यान् पत्न्याः समक्षमेवर्त्विगादिना होमानुज्ञानाच्च। न च रजोरोगादिना पत्न्या अप्यशक्तौ ऋत्विक्कल्पनमित्युचितम्, कर्मप्रदीपवाक्यार्थसङ्कोचापत्तेः। तस्माच्च पत्न्या होमे सूत्रकृतामतिनिर्भर इति ज्ञायते, अथाप्युदाहरन्तीत्युक्त्वा स्वमतमन्येषाञ्च प्रामाणिकानां मतमनुपन्यस्य केवलं सूत्रस्यास्योपन्यासात्। तदत्र कात्यायनः प्रमाणम्—

आचार्यानुमतं वाक्यमेकीयं गृह्यते क्वचित्।
शेषाणि चैव वाक्यानि आचार्यो न प्रशंसति। इति (गृ० स० १।१०२)।

भाष्यकारोऽपि 'तावन्मात्रम्' इत्युक्त्वा एतदेव सूचयतीति।

C. पञ्चसूनाश्चाह मनुः—

1. 'आवसथ्ये' नास्ति ख। 2. '-होमौ' ख। 3. अयमंशो नास्ति ख। 4. 'तस्मात्' ख। 5. 'गृहाः पत्नी' ख।

पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥ इति म० स० ३।३८ ।

D. तथैवाह मनुः—

तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः ।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥
देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ म० स० ३।६९-७२ ।

नामभेदेऽपि वाक्यभेद इति दर्शयितुं पञ्चमहायज्ञानां मुन्यन्तरकृतान्यहुतादीनि संज्ञान्तराण्यपि व्याचष्टे स एव—

अहुतं च हुतं चैव तथा प्रहुतमेव च ।
ब्राह्म्यं हुतं प्राशितं च पञ्च यज्ञान् प्रचक्षते ॥
जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः ।
ब्राह्म्यं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् ॥ इति म० स० ३।७३-७४ ।

E. गृहस्थस्य कर्त्तव्यमुत्कर्षञ्चाह मनुः—

स्वाध्याये नित्ययुक्तः स्याद् दैवे चैवेह कर्मणि ।
दैवकर्मणि युक्तो हि बिभर्त्तीदं चराचरम् ॥
अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥
यथा वायुं समाश्रित्य वर्त्तन्ते सर्वजन्तवः ।
तथा गृहस्थमाश्रित्य वर्त्तन्ते सर्व आश्रमाः ॥
यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥
स संधार्यः प्रयत्नेन स्वर्गमक्षयमिच्छता ।
सुखं चेहेच्छता नित्यं योऽधार्यो दुर्बलेन्द्रियैः ॥
ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।
आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता ॥
स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि ॥
पितॄन् श्राद्धैश्च नन्नैर्भूतानि बलिकर्मणा ।

इति म० स० ३।७५-८१ ।

## निष्ठिते सायमाशप्रातराशे भूतमिति प्रवाचयेत् ॥१७॥

निः[1]शेषं व्यञ्जनोपसेचनादिसहिते स्थिते [2]सिद्धे। कस्मिन्? सायमाशप्रातराशे। सायम[3]श्यते इति सायमाशः, प्रातर[4]श्यत इति प्रातराशः, तस्मिन् सायमाशप्रातराशे(A)। द्वन्द्वैकवद्भावोऽयम्। भूतमिति प्रवाचयेत्। भूतमिति ब्रूहीत्युक्त्वा प्रकर्षेण [5]वाचयेत्। [6]"कः प्रवाचयेत्"* ? प्रकृतत्वाद् गृहपतिः। [7]काम्? अन्नपक्त्रीम्, पत्न्या एवाधिकारात् पत्नीम् इति[8]"। तथा च मनुः—

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्।
शौचे धर्मेऽन्नपक्त्याञ्च [9]पारिणाह्यस्य वेक्षणे(B) ॥ इति।

कस्मिन् काले कथं [10]च प्रवाचयेदित्यत आह :—

## ऋते भगया वाचा शुचिर्भूत्वा ॥१८॥

ऋते गते ऋ-गतौ। [11]कस्मिन्? प्रकृतत्वात् अन्ने, होमार्थमग्निसन्निधावासादित इत्यर्थः। एतस्मिन् काले प्रवाचयेत्। भगया भजनीयया वाचा; भज सेवायां सेवनीययेत्यर्थः। शुचिर्भूत्वेत्येतस्य पत्न्या सह सम्बन्धः। (C)इतरस्या'ऽऽचान्तोदकेन कृत्यमि'ति सिद्धत्वात्। गृहपतिना भगया वाचा 'भूतमिति ब्रूही'त्युक्ते पत्नी शुचिर्भूत्वा भूतमिति ब्रूयादिति[12]।

A. अत्र सायं-प्रातःशब्दौ दिवारात्रिपरौ। भवति चात्र प्रमाणं कर्मप्रदीपः—

मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्।
अहनि च तथा तमस्विन्यां सार्धप्रथमयामान्तः ॥ इति २।३।९।

'मुनिभिर्मन्वादिभिर्यत् सायंप्रातर्मनुष्याणां द्विरशनमुक्तं तन्मर्त्यवासिनां विप्राणां न दिव्यानां सनकादीनाम्। अहनि च तथेत्युत्तरार्धेन सायं-प्रातःशब्दौ रात्रिदिनपरावित्युक्तम्। अत्र दिवसस्य पञ्चमभागो भोजनकालत्वेन दक्षोक्त एव। रात्रेस्तु भागव्यवस्थामाह सार्धप्रथमयामान्तः न तदूर्ध्व'मिति' इति प्रकाशकारो व्याचष्टे।

B. मनुसंहिता ९।११।

C. इतरस्य गृहपतेरित्यर्थः।

1. 'निःशेषव्यञ्जनोप-' ख। 2. 'सिद्धे' नास्ति ख। 3. '-मश्नातीति' ग। 4. '-रश्नातीति' ग। 5. 'प्रवाचयेत्' ख। 6. चिह्नितांशो नास्ति ख। 7. 'काम्, अन्नपक्त्रीं पत्न्या एवाधि-' ख। 8. 'इति' नास्ति क-ग। 9. 'परीणाह्यस्य' ख। 10. 'च' नास्ति क-ख। 11. 'तस्मिन्' ग। 12. 'इति' नास्ति ख।

पत्न्या चैवमुक्ते गृहपतिः किं कुर्यादित्यत आह—

प्रतिजपत्योमित्युच्चैस्तस्मै नम(A)स्तन्माद्या इत्युपांशु ॥१६॥

ओमित्युच्चैः प्रतिजपति। 'तस्मै नमस्तन्माद्या' इत्युपांशु जपति। उपांशुलक्षणं च—(B)यच्छ्वासवद्[1]मन्त्रवदनुपलक्षितो ध्वनिस्तदुपांशु "इति(C)। आतुरत्वादना-लम्भुकत्वाद्(D) वा पत्न्यसन्निहिता चेत्; "अन्यां प्रवाचयेत् काञ्चित् सवर्णां याऽन्न-पक्ति[3]* कुर्यात्, अपि वा प्रणवादि कुर्यादिति। तथा चोक्तम्—

भूतप्रवाचने पत्नी यद्यसन्निहिता भवेत्।
रजोरोगादिना तत्र कथं कुर्वन्ति याज्ञिकाः॥
महानसेऽन्नं या कुर्यात् सवर्णां तां प्रवाचयेत्।
प्रणवाद्यपि वा कुर्यात् कात्यायनवचो यथा(E)॥ इति।

इति [4]श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य तृतीया कण्डिका[4]* ॥

A. '-स्तन्माख्या' इति तर्कालङ्कारः।

B. जिह्वौष्ठौ चालयेत् किञ्चिद् देवतागतमानसः।
निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः॥
इत्यागम इति शब्दकल्पद्रुमे।

C. उपांशुजपस्य फलमाह मनुः—
विधियज्ञाज् जपयज्ञो विशिष्टो दशभिर्गुणैः।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः॥ म० सं० २।८५।

D. अस्पृश्यत्वादिति व्यक्तमुत्तरत्र कात्यायनवचसा।

E. कात्यायनसंहिता १८।२२-२३।

1. '-मन्त्रवदनुप-' क। 2. 'इति' नास्ति ख। 3. 'अन्यां तत्सदृशीं काञ्चित् प्रवाचयेत् याऽन्नपक्ति' इति ख। 4. 'गृह्यभाष्ये प्रथमस्य तृतीया कण्डिका' इति ख।

# चतुर्थी कण्डिका

[1]इदानीं तेनोपक्षिप्तेनान्नेन (A)यज्ञद्वयनिवृत्त्यर्थं "(B)पित्र्यो बलिरथापि वे"ति वचनाद् यज्ञत्रयनिवृत्त्यर्थं वेदमारभ्यते।

## अथ वाग्यतो बलीन् हरेत् ॥ १ ॥

अथशब्द आनन्तर्यार्थः; वक्ष्यमाणं (C)होमं निर्वर्त्याऽथानन्तरं बलीन् हरेदिति। उपदेश[2]क्रमादेवानन्तर्यसिद्धेः कथमानन्तर्यं [3]व्याख्यातमिति चेत्, उच्यते—अन्नयज्ञस्य [4]विकल्पेन त्रयः काला विहिताः[4]*,

---

A. दैवं मानुष्यञ्चेति यज्ञद्वयम्।

B. तथा च कर्मप्रदीपः—

पञ्चानामथ सत्राणां महतामुच्यते विधिः।
यैरिष्ट्वा सततं विप्रः प्राप्नुयात् सद्म शाश्वतम् ॥
देवभूतपितृब्रह्ममनुष्याणामनुक्रमात्।
महासत्राणि जानीयात् त एव हि महामखाः ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथाऽपि वा।
यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते ॥ इति २।३।१-४।

अनेन अन्ननिष्पाद्यानि चत्वारि सत्राण्युक्तानि परमन्ननिष्पाद्यौ देवमनुष्यसम्बन्धिनौ द्वावेव यज्ञौ यदि स्यातां यदि वा पित्र्यो बलिरथाऽपि वेति निरुक्तकर्मप्रदीपवचनात्,

देवानृषीन् मनुष्यांश्च पितॄन् गृह्याश्च देवताः।
पूजयित्वा ततः पश्चाद् गृहस्थः शेषभुग्भवेत् ॥ ३।११७।

इति मनुवचने भूतयज्ञस्य शब्दतोऽनुल्लेखाद्याऽऽपाततः केवलं देव-मनुष्य-पितृसम्बन्धि यज्ञत्रयमेव मन्येरन् तेषां मतनिराकरणायैव भाष्यकारः सूत्रोत्थापकं वाक्यमिदमुपन्यस्यतीति।

C. होममिति वैश्वदेविकम्, देवयज्ञरूपमित्यर्थः।

---

1. 'इदानीं तनोप...' ख। 2. '-क्रमानन्तर्यं' ग। 3. 'व्याख्यातं' नास्ति ख। 4. 'विकल्पेन त्रयः काला उक्ताः' ख।

स चार्वाक् तर्पणात् कार्यः पश्चाद् वा प्रातराहुतेः ।
वैश्वदेवावसाने वा [1]नान्यः काल इति श्रुतः[1]* ॥(A) इति ।

विश्वे देवाः सर्वे देवाः ते येन होमकर्मणेज्यन्ते तद् वैश्वदेवम्, [2]तस्य वैश्वदेवस्य अवसानम् अन्तः, वैश्वदेवावसानम्, तस्मिन् वैश्वदेवावसाने ब्रह्मयज्ञः[2]* कार्य इति वचनात् इहैव स(B) मा भूदित्यत आनन्तर्यार्थोऽथशब्दः [3]प्रयुक्तः । वैश्वदेवं [4]कुर्यात् कृत्वा अथानन्तरं [5]बलीन् हरेत्[5]* । ततो वामदेव्यादिकं कृत्वा ब्रह्मयज्ञं कुर्यात् इति[6] ।

अहोमिकेष्वपि भवेद् यथोक्तं चन्द्रदर्शने ।
[7]वामदेव्यं गणेष्वन्ते बल्यन्ते वैश्वदेविके ॥(C) इति ।

अथवा— प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
संप्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥(D)

इति वचनाद् वैश्व[8]देवान्त एव(E)नृयज्ञनिवृत्त्यर्थम् अतिथिभोजनं मा भूदित्यत

A. कर्मप्रदीपः १।३।९ । 'नान्यत्रेति निमित्तकात्' इति सप्रकाशमुद्रितपुस्तकपाठः, "नान्यत्रर्तौ निमित्तकात्" इति 'बङ्गवासी'मुद्रितः पाठः ।

B. मा भूदित्यस्य 'स्यात्' इत्यापत्त्यनन्तरं 'न स्यात्' इत्युत्तरार्थकत्वं बोद्धव्यम्, एवमुत्तरत्रापि ।

C. कर्मप्रदीपः ९।७। चन्द्रदर्शनम् इति 'बङ्गवासी'मुद्रितः पाठः । अत्र प्रकाशकारः "होमरहितेष्वपि कर्मसु वामदेव्यं भवेत् । यथा चन्द्रदर्शने निष्क्रमणे उक्तम् । तथा समुदायेन क्रियमाणेषु कर्मसु गणान्ते वामदेव्यं न त्वेकैककर्मान्ते, पञ्चयज्ञान्तर्गतवैश्वदेविकहोमे च यद् वामदेव्यं तद् बल्यन्ते, न तु होमानन्तरमेव भवेदिति" ।

D. पराशरसंहिता १।३९। वैश्वदेवे तु सम्प्राप्तः इति 'बङ्गवासी'मुद्रितः पाठः ।

E. 'नृयज्ञनिवृत्त्यर्थम्' नृयज्ञस्य प्रसक्तिः स्यात् तन्निवृत्त्यर्थमितिभावकोऽयं भाष्यग्रन्थः, स च भाष्यकारेणैव 'अतिथिभोजनं मा भूत्' इति ग्रन्थेन स्वयं व्याकृत इति । इयञ्च शैली भाष्यकाराणाम् ।

तथा च भाष्यलक्षणम्—
सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ पराशरोपपुराण० १८ अ० ।

1. अयमंशो नास्ति क-म । 2. 'तस्य वैश्वदेवावसाने यज्ञे तद् वैश्वदेवावसानम्, तस्मिन् ब्रह्मयज्ञः' इति ख । 3. 'उक्तः' ख । 4. 'कुर्यात्' नास्ति क । 5. 'बलिहरणं कार्यं कर्त्तव्यमिति' ख । 6. 'इति' नास्ति ख । 7. 'वामदेवं' क । 8. '-देवावसान' ख ।

आनन्तर्यार्थोऽथशब्दः प्रयुक्तः(A)। वाग्यतः संयतवाक् वक्ष्यमाणान् बलीन् हरेत् निदध्यादित्यर्थः।

वाग्यत इत्यस्यापवादार्थमिदमाह—

**भाषेताऽन्नसंसिद्धिमतिथिभिः कामं संभाषेत ॥ २ ॥**

[1]संभाषेत वदेत्। अन्नसंसिद्धिम्, अन्नसिद्ध्यर्थम्। [2]किमेतदुपसिक्तमन्नमुत ने"*त्येवमादि भाषेत। [3]अभ्येति कुतो गृहान् प्रत्येति तिथिषु परकुलानीति वेत्येवं-लक्षणोऽतिथिः इति[3]*। तथा च मनुः

एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः।
अनित्यं हि स्थितो यस्मात् तस्मादतिथिरुच्यते ॥(B) इति।

बहुवचनं बहवोऽप्यतिथयो [4]भवन्त्येवमर्थम्, तैरतिथिभिः सह कामम् इच्छया सम्भाषेत। अतिथिगुणविशेषं ज्ञात्वा भाषेत। न [5]चाभाषेतेति ॥ [6]किञ्च—

**अथ हविष्यस्यान्नस्योद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्याग्नौ जुहुयात् तूष्णीं पाणिनैव ॥ ३ ॥**

(C)अथशब्दः पूर्वप्रकृतम्यन्वकरणादि समिदाधानान्तं [7]कर्म स्मारयति। [8]तत् कृत्वा जुहुयादिति।

---

A. वैश्वदेवात् पूर्वमतिथावुपस्थिते किं कर्तव्यं तदाह्निकाचारतत्त्वे रघुनन्दनः—

"व्यासः—अकृते वैश्वदेवे तु भिक्षुके गृहमागते।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् ॥ इति।

B. मनुसंहिता ३।१०२।

C. अथेत्यादिना सूत्रकारो वैश्वदेवापरनामानं देवयज्ञं वक्तुमुपक्रमते तत्र वैश्वदेवविषये यदुक्तं रघुनन्दनेन तस्मात् किञ्चिदुदाह्रियते—

दक्षः— पञ्चमे च तथा भागे संविभागो यथार्हतः।
पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते ॥
संविभागं ततः कृत्वा गृहस्थः शेषभुग् भवेत्। इति।

पञ्चमे भागे अष्टधा विभक्तदिनस्य, संविभागो विभज्यान्नस्य प्रतिपादनमेव मुख्यः कल्पः। देवो वैश्वदेवसम्बन्धी। तथा च देवपूजानन्तरं वैश्वदेवमाह नृसिंहपुराणम्—

---

1. 'न भाषेतेति' ख, 'भाषेत' ख। 2. 'किमेतदन्नमुपसिक्तमुत मे-' ख। 3 'अतिथि-रापाततो ऽभ्यागान् भवत्यभ्येति, तिथिषु परकुलानीत्येवंलक्षण:' क। 4. 'भवन्तीत्येव-' ख। 5. 'च' स्थाने 'वा' ग, 'चा' नास्ति ख। 6. 'किञ्च' नास्ति ख। 7. 'कर्म' नास्ति क-ख। 8. 'तत्' ख।

[1]तदुक्तम्—

पर्युक्षणं तु सर्वत्र कर्त्तव्यमदितेऽन्विति ।
अन्ते च वामदेव्यस्य गानं कुर्या[2]दृचस्त्रिधा(A) ॥ इति ।

हविष्यस्यान्नस्येत्युक्तार्थम् । उद्धृत्य गृहीत्वा हविष्यैर्घृतदधिदुग्धा[3]दिभिर्व्यञ्जनै-

पौरुषेण तु सूक्तेन तत्र विष्णुं समर्चयेत् ।
वैश्वदेवं ततः कुर्यात्तु बलिकर्म तथैव च ॥
स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात् तां परिवर्जयेत् ॥

इति शातातपीये दिवा वैश्वदेवस्य पर्युदस्तरात्रीतरकालो गौण उक्तः । अत एव—

सायं-प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च ।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत् ॥

सायं-प्रातरिति दिवारात्रिपरम्, अनश्नता आतिथ्याद्यनुरोधेन पाकसम्भव एव सायमिति बोध्यम् । विष्णुपुराणे—

पुनःपाकमुपादाय सायमप्यवनीपते ।
वैश्वदेवनिमित्तं वै पत्न्या सार्द्धं बलिं हरेत् ॥

इत्यत्र पुनःपाकमुपादायेत्यभिधानात् । तेन स्वीयभोजनसम्भवे पाकं विनापि तदसम्भवे पाकसत्त्व एव रात्रौ वैश्वदेवबलिकर्मणी दिवा तु सर्वथैवेति । एवमेव श्रीदत्तोपाध्यायाः । यत्तु मदनपारिजाते—

धर्मविन्नाचरेत् स्नानमाह्निकन्तु पुनः पुनः ।
तर्पणं महायज्ञञ्च वैश्वदेवं न चाचरेत् ॥

इति दिवा पुनःकरणं रात्रौ पुनःकरणञ्च निषेधयति । पार्वणादिश्राद्धकरणे तदनन्तरं वैश्वदेव-विधिमाह भविष्यपुराणम्—

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च ।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप ॥......

पार्वणादिपूर्वकरणे निन्दामप्याह गौतमः—

पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ।
अकृतं तद् भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥ इति ।......

तयोरारम्भे वृद्धिश्राद्धं कर्त्तव्यं वैश्वदेवार्थं कृते श्राद्धे बलिकर्मणि न पृथक् श्राद्धं कर्त्तव्यम् ।" इति ।

A. कात्यायनसंहिता १।९।६ "गानमित्यथवा त्रिधा" इति सप्रकाशमुद्रितपुस्तकपाठः ।

1. 'तथा चोक्तं' ख । 2. 'मिधेर्विं'ना' क-ख-ग । 3. '-दिना' इति ख ।

रुपसिच्य संनीय अग्नौ जुहुयादित्युक्तार्थम्। तूष्णीमिति वाग्यतो बलीन् हरेदिति वचनाद्‌ बलिहरणे एव वाग्यतः स्यादिहानियमो मा भूदित्यतस्तूष्णीमित्युक्तम्। पाणिनैवेति स्रुवादिहोमपात्रान्तरनिवृत्त्यर्थम्।

किञ्च—

## प्राजापत्या पूर्वाहुतिर्भवति सौविष्टकृत्युत्तरा ॥४॥

प्रजापतेरियं प्राजापत्या प्रजापतिदेवताका पूर्वा प्रथमाहुतिर्भवतीति। एवञ्च प्रजापतये स्वाहेति चतुर्थी[1]करणं भवति। कुतः, (A)नमःस्वस्तिस्वाहास्वधाऽलंवषड्‌[2]योगाच्चेति वचनात्। तस्मात् प्राजापत्यां मनसा जुहोतीति वचनात् मनसा [3]जुहुयात्। सु इष्टं करोतीति स्विष्टकृत् तस्य स्विष्टकृतः[4] इयं सौविष्टकृती; उत्तरा द्वितीया; आहुतिर्भवतीति [5]वर्त्तते। [6]स्विष्टकृदिति विशेषणपदत्वादस्य विशेष्येण भवितव्यम्। अथ कोऽयं तर्हि स्विष्टकृदिति? उच्यते, अग्निः, कुतः? "[7]अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्ध[7]पूर्वार्द्धे जुहुयात्" इति लिङ्गात्(B)। तथा च श्रुतिः— "[8]देवा वै अग्निं स्विष्टकृतमब्रुवन् हव्यं नो वहेति; सोऽब्रवीत् किं मे ततः स्यादिति, यत् कामयसे, इत्यब्रुवन्, "[9]सोऽब्रवीत्" सर्वमेष्टिषु केवला सौविष्टकृतीति; तथेति सोऽवहत् हवींषी"ति(C)। तस्मादग्नये स्विष्टकृते स्वाहेत्यत्रापि चतुर्थी कर्त्तव्या। "होमो[10] दैव"(D) इति वचनादयं [11]तावद्‌ देवयज्ञ(E) इति। नन्विदानीमेतच्चिन्त्यते; मन्वादिभिरपि वैश्वदेव उक्तः,—

---

A. पाणिनिसूत्रम् २।३।१३।

B. गो० सू० १।८।१६।

C. प्रमाणीकृतेयं श्रुतिः स्वभाष्ये तर्कालङ्कारेण "इति च ब्राह्मणं भवती"त्युपोद्घातेन।

D. वचनमिदं १।४।१ सूत्रपादटीकायां द्रष्टव्यम्।

E. देवयज्ञप्रयोगस्तु—

"मध्याह्ने पत्न्या अन्यया वा पाके कृते दर्भेष्वासीनः प्राङ्मुखो गृहपतिर्देशकालौ सङ्कीर्त्य पञ्चसूनाघनिर्हरणद्वारा आत्मसंस्कारार्थं प्रातर्वैश्वदेवं करिष्ये इति सङ्कल्प्य लौकिकाग्निमेव विधिवत् स्थण्डिले प्रतिष्ठापयेत्। गृह्याग्निश्चेन्न संस्कारः। ततः शुचिभूतां पत्नीमन्यां वा

---

1. 'करणं भवतीत्यस्य स्थाने कर्त्तव्या' ख, 'करणं' नास्ति ग। 2. 'योगाच्चेति' स्थाने 'योगे चतुर्थीति' ख। 3. 'जुहोति' ख। 4. 'स्विष्टकृतः' नास्ति ख। 5. 'चानुवर्त्तते' ख। 6. नास्ति ख। 7.…'-र्द्ध-पूर्वार्द्धे' स्थाने 'उत्तरार्द्धे' इति ग। 8. 'देवा वा' ख। 9. 'सोऽब्रवीत्' नास्ति ग। 10. 'दैवः' ख। 11. 'तावद्देवाख्य यज्ञ इति' ख।

अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः ।
विश्वेषां चैव देवानां धन्वन्तरय एव चा(A) ॥

इत्यादिदशाहुतय उक्ताः ।

तथा

एवं सम्यग् हविर्हुत्वा सर्वदिक्षु प्रदक्षिणम् ।
इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्यो बलिं हरेत्(B) ॥

---

भूतमिति वाचयित्वा, तदर्धं समिद्वयं चमसं चाग्नेः पश्चात् संस्थाप्य गृहपतिरोमित्युच्चैरुच्चार्य "तस्मै नमस्तन्माख्या" इत्युपांशु प्रातर्जपति । ततोऽग्निमुपसमाधाय तूष्णीं परिसमुह्योदकाञ्जलित्रयसेचनं पर्युक्षणं च कृत्वा समिधमाधायान्नं प्रोक्ष्य हविष्यैर्व्यञ्जनैरुपसिच्य 'प्रजापतये स्वाहे'ति मनसोच्चार्य मध्ये जुहोति । इदं प्रजापतये नमः । एवम् 'अग्नये स्विष्टकृते स्वाहा' इति मध्ये जुहोति इदमग्नये स्विष्टकृते नमः । ततस्तूष्णीं समिधमाधाय पर्युक्षणादिचमसपूरणान्तं कर्म क्षिप्रहोमविधिना कुर्यात्" इति छान्दोग्योक्तनित्याह्निकप्रयोगे ।

A. मनुसंहिता ३।८५ । (मुद्रितपुस्तके 'एव च' इति पाठः) ।

कुह्वै चैवानुमत्यै च प्रजापतय एव च ।
सहद्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्ततः ॥ इति मनुसंहिता ३।८६ ।

तथा च—अग्नये स्वाहा (१) सोमाय स्वाहा (२) अग्नीषोमाभ्यां स्वाहा (३) विश्वेभ्यो देवेभ्यः स्वाहा (४) धन्वन्तरये स्वाहा (५) कुह्वै स्वाहा (६) अनुमत्यै स्वाहा (७) प्रजापतये स्वाहा (८) द्यावापृथिवीभ्यां स्वाहा (९) अग्नये स्विष्टकृते स्वाहा (१०) इति दशाहुतयो वैश्वदेवे भवन्ति मन्वादीनां सम्मताः ।

B. मनुसंहिता ३।८७।

इन्द्रादिभ्यः सपुरुषेभ्यो बलिं हरेत् । यथा—प्राच्याम् इन्द्राय नमः,
इन्द्रपुरुषेभ्यो नमः । दक्षिणस्यां यमाय नमः, यमपुरुषेभ्यो नमः ।
पश्चिमायां वरुणाय नमः, वरुणपुरुषेभ्यो नमः । उत्तरस्यां सोमाय नमः,
सोमपुरुषेभ्यो नमः । इत्यस्य कुल्लूकभट्टकृता व्याख्या ।

ततश्च—

मरुद्भ्य इति तु द्वारि क्षिपेदप्स्वद्भ्य इत्यपि । वनस्पतिभ्य इत्येवं मुषलोलूखले हरेत् ॥
उच्छीर्षके श्रियै कुर्याद् भद्रकाल्यै च पादतः । ब्रह्मवास्तोष्पतिभ्यान्तु वास्तुमध्ये बलिं हरेत् ॥
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत् । दिवाचरेभ्यो भूतेभ्यो नक्तंचारिभ्य एव च ॥
पृष्ठवास्तुनि कुर्वीत बलिं सर्वात्मभूतये । पितृभ्यो बलिशेषं तु सर्वं दक्षिणतो हरेत् ॥
शुनां च पतितानाञ्च श्वपचां पापरोगिणाम् । वायसानां कृमीणाञ्च शनकैर्निर्वपेद् भुवि ॥

[1]इति बलिहरणमुक्तम्[1]*। [2]तथा च गौतमेनाप्य[3]-ग्न'यग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजा-[4]पतिः स्विष्टकृदिति(A) होमा" इति पञ्चाहुतय उक्ताः। "दिग्देवताभ्यश्च यथास्वमि"-त्यादि बलिहरणमुक्तम्। तत् किं समुच्चयेन[5] सर्वस्मृत्युक्तहोमकरणात् वैश्वदेवनिवृत्ति-र्भवतीति युक्तम्, उतेच्छयाऽन्यत[6]मानुष्ठानादेव [7]कृता स्यादि[8]तीच्छाविकल्पो युक्तः [9]आहोस्वित् कश्चिदत्रोपादेयोऽन्यश्च हेय इति हेयोपादेयतया काचित् व्यवस्थाऽस्तीति। अत्रोच्यते—समुच्चयस्तावन्न भवति। पृथग्ग्रन्थेषु पाठादितरेतरनिरपेक्षत्वाच्च। एकार्थ-त्वाच्च [10]केन कृतता[10]*युक्ता। विकल्पोऽपि न भवति। कुतः? मन्वादीनां सामान्य-स्मृतित्वात् गृह्यस्य च वि[11]शेषत्वात्। सामान्यविशेषयोर्विशेषस्य बलीयस्त्वात् तस्मात् गृह्योक्तेनैवाहुतिद्वयेन वैश्वदेवनिवृत्तिर्भवतीति युक्तम्(B)। अत एव पूर्वशब्दोपादानं ग्रन्थकारः कृतवान् [12]प्राजापत्या [13]पूर्वाहुतिर्भवतीति इयमेव पूर्वा नान्येति। अनेनैवास्या आहुतेः पूर्वत्वं मत्वा स्रुक्होमप्रतिषेधं दर्शयति। "(C)प्राक् स्विष्टकृत आवाप" इति वचनात् मध्ये मत्वा स्रुक्होमप्रसङ्गो मा भूदित्यतः सौविष्टकृत्युत्तरेत्युक्तम्। इयमेवो-त्तरा नान्येति। (D)एवञ्च गृह्योक्तहोमबलिकर्मणोरन्ते [14]कामं मन्वाद्युक्तोऽपि [15]स्यात्,

---

एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति।
स गच्छति परं स्थानं तेजोमूर्त्तिं पथर्जुना॥

इति बलिहरणविधिरुक्तो मनुसंहितायाम् ३।८८—९३।

A. तथा च गौतमसंहितायां पञ्चमाध्याये—"बलिकर्माग्न्यग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजा-पतिः स्विष्टकृदिति होमः, दिग्देवताभ्यश्च यथास्वं द्वारेषु मरुद्भ्यो गृहदेवताभ्यः प्रविश्य ब्रह्मणे मध्य अद्भ्य उदकुम्भे आकाशायेत्यन्तरिक्षे नक्तञ्चरेभ्यश्च सायम्"। इति॥

B. प्रमाणमत्र गोभिलगृह्यपरिशिष्टम्—

प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः।
प्रयोगशास्त्रताहानादनारम्भविधानतः॥
बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥ इति।

C. गो० सू० १।८।१९।

D. मन्वमी मनुगौतमाद्युक्तसामान्यहोमाः स्वशाखाहोमानामन्ते नित्यतया मा सन्निवि-शन्तां काम्यतयैव सन्निविशन्तामित्याशङ्क्योत्तरयति—एवञ्चेति।

---

1. नास्ति ग। 2. 'तथा च' नास्ति ख। 3. '-प्यसा-' ख-ग। 4. '-पतः' क-ग। 5. '-न' नास्ति ख। 6. 'तमस्यानुष्ठाना-' ख। 7. 'कृतं स्यादि-' ख। 8. '-दित्यादीतीच्छा-' ग। 9. '-यश्चो नस्वित्' ख। 10. '-चैकेन कृतता-' स्थाने 'चैकेनैव कृत्यता' इति ख। 11. 'विशेषस्मृतित्वात्' ख-ग। 12. 'प्रजापत्या' ख। 13. 'पूर्वेति' ख। 14. 'कामं' नास्ति ख। 15. 'स्यादिति' ख।

न तु नियमेन ततश्चाकुर्वतः प्रत्यवायो [1]नास्ति

यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः।
भूयस्त्वं ब्रुवते तत्र कृच्छ्राच् श्रेयो ह्यवाप्यते (A)।

इति वचनात्। कुर्वतश्चाभ्यु[2]दय इति। यत्तु काम्या[3]धिकारे श्रुतावुक्तं "(B)सदा भोजनस्योपनीतस्याग्रमग्नौ जुहुयादग्ने विवस्वदुषस इति [4]पूर्वेण बलिं वोत्तरेण कुर्याद् बहुपशुधनधान्यो भवतीति। अस्याप्ययमेव न्यायः। [5]तथा च कात्यायनः।

न स्यातां कर्मसामान्ये जुहोतिबलिकर्मणी।
पूर्वं नित्यविशेषोक्तं जुहोतिबलिकर्मणोः॥
काममन्ते भवेयातां न तु मध्ये कदाचन।
नैकस्मिन् कर्मणि [6]तते कर्मान्य[7]त्तायते यतः (C)॥ इति[8]।

यस्य तु स्वशाखायां हो[9]मविधानमेव नास्ति स मन्वाद्युक्तहोमेनाधिक्रियते इति[10]। अनाहिताग्नेश्च [11]तथोक्तम्—

अग्न्यादिर्गौतमाद्युक्तो होमः शाकल एव च।
अनाहिताग्नेरप्येष युज्यते बलिभिः सह॥(D) इति।

---

A. छन्दोगपरिशिष्टम् ११।१३। व्याख्या चास्येत्थम्भवति—गुरुलघुप्रयाससाध्यानां कर्मणां विकल्पमुपपादयति, यत्र प्रयासभूयस्त्वं तत्र श्रेयसोऽपि भूयस्त्वं मनीषिणो ब्रुवते यस्मात् प्रयासात् श्रेयः प्राप्यते इति।

B. 'सदा भोजने'त्यादिभागस्तु प्रमाणीकृतः परिशिष्टप्रकाशकृताऽपि 'काम्याधिकारे श्रुतावुक्तः' इत्युपोद्घातेन। क० प्र० वै०।

C. कर्मप्रदीपे वैश्वदेवप्रकरणे—१४।२३। अत्र कर्मसामान्ये इत्यत्र काम्यसामान्ये इति पठति प्रकाशकारः, विवृणोति चेत्थम्—"द्विविधं बलिकर्म, काम्यम् आशस्यादि, नित्यं च पार्थिवादि चतुर्दशकम्, तथा होमोऽपि नित्यः प्राजापत्यः स्विष्टकृदादिरूपः काम्यः काम्याधिकारे श्रुतावुक्तः। ...तथा विशेषोपदिष्टे शाखिविशेषनियते होमबलिकर्मणी संहितापुराणोक्तं च सामान्यधर्मरूपे। तत्र काम्यसामान्यविहिते होमबलिकर्मणी न नित्यविशेषविहितयोर्होमबलि-कर्मणोः पूर्वं कर्त्तव्ये। परन्तु नित्यविशेषविहितयोरन्ते सामान्यकाम्ये कर्त्तव्ये मध्ये तु न कदाचन कर्त्तव्ये। अत्र हेतुमाह 'नैकस्मिन्निति' निगदव्याख्यातम्" इति।

D. कर्मप्रदीपद्वितीयप्रपाठकवैश्वदेवप्रकरणे। अत्र प्रकाशकारः—"अग्न्याद्रिरग्निर्धन्वन्तरि-र्विश्वेदेवाः प्रजापतिः स्विष्टकृदिति गौतमेन योऽग्न्यादिदेवताको होम उक्तः, ये च 'दिग्-

---

1. 'न स्यात्' ख। 2. '-भ्यु दय' क-ग। 3. 'कार्याधि-' ख। 4. 'पूर्व बलिं' ग। 5. 'तथा चोक्तं' ख। 6. 'क्रते' ख। 7. '-न्यत् क्रियते' ख। 8. 'इति कात्यायनः' ख। 9. 'होमविधिर्नास्ति' ख। 10. 'इति' नास्ति ख। 11. 'तथोक्तम्' नास्ति क-ग।

देवताभ्यश्च यथास्वमि'ति बलय उक्ताः यच्चाश्वलायनसूत्रकारेणा'ष्टावष्टौ शकलान्याहवनीये प्रहरेयुर्देवकृतस्यैनसः' इति यूपस्य शकलाष्टकेन देवकृतस्येत्यादिमन्त्रैः शकलहोम उक्तः सोऽनाहिताग्नेरेव ; तथा प्रणवपरिशिष्टे—

अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैश्च शाकलैः ।
भूतेभ्यश्च बलिं दत्त्वा ततोऽश्नीयादनग्निकः ॥ इति ।

तथाऽग्निपुराणेऽप्युक्तम्—

अन्नं व्याहृतिभिः पूर्वं हुत्वा मन्त्रैश्च शाकलैः ।
भूतेभ्यश्च बलिं दत्त्वा ततोऽश्नीयादनग्निमान् ॥ इति ।

आहिताग्नेश्च प्राजापत्या पूर्वाहुतिर्भवति स्विष्टकृदुत्तरेति गोभिलोक्तमाहुतिद्वयं चतुर्दश बलय इत्येतावन्मात्रं न तु गौतमोक्तदिग्देवताबलय इति" इति व्याचष्टे ।

अनाहिताग्नेर्वैश्वदेवबलिहरणमाह व्याससंहितायाम्—

अनाहितावसथ्याग्निरादायान्नं घृतप्लुतम् ।
शाकलेन विधानेन जुहुयाल्लौकिकेऽनले ॥
व्यस्ताभिर्व्याहृतीभिश्च समस्ताभिस्ततः परम् ।
षड्भिर्देवकृतस्येति मन्त्रवद्भिर्यथाक्रमम् ॥
प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाऽऽहुतीः ।
ॐकारपूर्वः स्वाहान्तस्त्यागः स्विष्टविधानतः ॥ इति ।

व्या० सं० ३।२८-३० ।

अत्र शाकलहोमे लाट्यायनश्रौतसूत्रम् "अप उपस्पृश्याष्टावष्टौ शकलान्याहवनीये प्रहरेयुर्देवकृतस्येत्येतत्प्रभृतिभिरिकारान्तैः" २।११।१४ । अस्य च अग्निस्वाम्यादिभाष्यकारसम्मतोऽर्थः—उपधानाद्यनन्तरम् अप उपस्पृश्य आचम्य एकैकमष्टावष्टौ शकलानि खण्डानि आहवनीये प्रहरेयुः प्रक्षिपेयुः । देवकृतस्येतत्प्रभृतिभिः । इकारान्तैरिति मन्त्रान्तज्ञापनार्थम् । तेन नात्र स्वाहाकारः पाठाभावात् इति । केचित्तु बौधायनसूत्रे पाठात् स्वाहाकारं कुर्वन्ति । तदेवाह तर्कालङ्कारः—"इदन्त्विह वक्तव्यम्, "मन्त्रान्ते स्वाहाकारः" गो० सू० १।९।२१ । इति वचनात् मन्त्रस्यावसाने स्वाहाकारः प्रयोक्तव्यो भवति ; सोऽयं समासे मन्त्रे तदन्तिके प्रयुज्यते न त्वसौ मन्त्रस्यान्तोऽवयवो भवति । तस्मात् प्रयुक्तेऽपि स्वाहाकारे मन्त्रस्येकारान्तत्वं न व्याहन्यते । समस्तस्य यजुष एकैकस्यामाहुतौ प्रयोगेऽपि मन्त्रलिङ्गं सङ्गच्छत एव । तस्मादत्रापि मन्त्रान्ते स्वाहाकारः प्रयोक्तव्यः । विहिताविहितत्वसन्देहे चाविहितकरणमेव न्याय्यमिति चावोचाम ।

तथा चाभाणकः—

'सन्दिग्धेऽपि परे लोके त्याज्यमेवाशुभं नरैः ।
यदि नास्ति ततः किं स्यादस्ति चेन्नास्ति दूषणम् ॥' इति ।

...बलयस्तु तस्यापि गृह्योक्ता एव भवन्ति। कथं ज्ञायते? 'बलिभिः सह' इत्युक्ते तथाऽवगतेः। विशेषानुक्तौ हि गृह्योक्तमेवान्तरङ्गत्वात् शीघ्रमागच्छति हृदयम्। आगच्छति चेन्न युज्यते विना कारणमुत्स्रष्टुम्, विशेषस्य चानुपदेशात्। होमविशेषवत् बलिविशेषो नैवानाहिताग्नेरुपदिश्यते। तस्मादाचार्योक्ता एव बलयस्तस्यापि भवन्ति। न चैते तस्य प्रतिषिद्धाः। न चाप्रतिषिद्धस्य स्वशाखोक्तस्य परित्यागो युक्तः। तत्परित्यागेन शाखान्तरोक्तबलिपरिग्रहेऽपि न किञ्चित् प्रमाणम्। स्वशाखोक्तन्तु बुद्धयारोहमेवेति तदेव ग्रहीतव्यं भवति।" इति। च० त० गो० भा० १।४।४।

रघुनन्दनस्तु—

"स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत्" इति कात्यायनोक्तम्,

'वैश्वदेवन्तु कुर्वीत स्वशाखाविहितन्तु यत्'

इति व्यासोक्तञ्च साग्निकपरम्, निरग्निकर्तृकशाकलहोमबलिविशेषाभ्यां सामान्यविशेषन्यायेन सङ्कोचात्। तथा च छन्दोगपरिशिष्टम्—अन्नादि......अन्नावग्निर्धन्वन्तरि......यथास्वमित्यादि तदुक्तबलिभिः सहितो यश्च शाकलहोमो देवकृतस्यैनस इत्याद्यष्टाहुत्यात्मकः सामवेदपठितः स चाग्निपुराणाद्युक्तभूतादिबलिसहितोऽनाहिताग्नेरेवेत्यर्थः। शाकलपदव्युत्पत्तिमाह आश्वलायनः—अष्टावष्टौ शाकलान्याहवनीयेऽनु प्रहरेयुर्देवकृतस्यैनसः इति ज्योतिष्टोमीययूपकाष्ठशकलाष्टकेन देवकृतस्येत्यादिमन्त्रेण होमविधानात्। यत्तु पितृदयितायामेकस्मिन् प्रयोगे गोतमोक्तप्रयादिहोमदेवकृतस्येत्यादिशाकलहोमौ समुच्चितौ लिखिताविति तच्चिन्त्यम्। शाकल एवेति एव-कारेण पूर्वकल्पसमुच्चयनिरासात्। एष इति सर्वनाम्नः सकृन्निरपेक्षकल्पद्वयावाचित्वात्। साहित्यवाचिद्विवचनान्तौ तावेवेत्यनुक्तेः। अग्निपुराणादिभिः केवलशाकलहोमविधानाच्च। ततश्च 'शाकल एव चे'ति च-कारस्य विकल्पार्थकत्वमिति। मनुः—

अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैश्च शाकलैः।

भूतेभ्यश्च बलिं दत्त्वा ततोऽश्नीयादनग्निमान्॥

अन्नानग्निक इति पाठः प्रामाणिकः प्रणवपरिशिष्टे; आचारमाधवीयमदनपारिजातयोरनग्निकस्य विशेषमाह वशिष्ठः—

अनग्निकश्च यो विप्रो ह्यन्नं व्याहृतिभिः स्वयम्।

हुत्वा शाकलहोमैश्च शिष्टाद् भूतबलिं हरेत्॥

शिष्टाद् हुतशिष्टात्। तथा च याज्ञवल्क्यः—देवेभ्यश्च हुतादन्नाच्छेषं भूतबलिं हरेत्। शेषनाशे त्वन्यदादाय कर्त्तव्यम्। एवमेव भट्टभाष्यम्। गोतमकल्पे अन्नाविति पदम्—

लौकिके वैदिके वापि हुतोच्छिष्टे जले क्षितौ।

वैश्वदेवञ्च कुर्वीत पञ्चसूनापनुत्तये॥

इति शातातपोक्तञ्चकक्षित्याधारतानिवृत्त्यर्थम्। ततश्चान्यभावे जलक्षित्याधारता शाकलकल्पे

अलमतिप्रसङ्गेन प्रकृत[1]मेवेदानीमुच्यते ।

**अथ बलीन् हरेद् बाह्यतोऽन्तर्वा सुभूमिं कृत्वा ॥ ५ ॥**

अथेति पूर्वप्रकृतार्थः । [2]तेनैव पूर्वप्रकृतेन हुतशेषेणान्नेन बलीन् हरेदिति । [3]यदि

---

अवतिष्ठते । अक्षिस्योः संस्कारोऽपि नास्तीति श्रीदत्तप्रभृतयः । सतश्च बहुवादिसम्मतः सामान्याधारकः शाकलकल्पोऽत्राभिधीयते । शाकलकल्पेऽप्यन्ते स्विष्टकृद्धोमः, भूतेभ्यश्चेति चकारादादौ देवबलिरन्ते च पितृबलिः ; तथा च स्कन्दपुराणे काशीखण्डम्—

भूराद्या व्याहृतीस्तिस्रः स्वाहान्ताः प्रणवादिकाः ॥
ॐ भूर्भुवः स्वः स्वाहेति विप्रो दद्यात् तथाहुतिम् ॥
तथा देवकृतस्याद्या जुहुयादष्टकाहुतीः ।
यमाय तूष्णीमेकाञ्च तथा स्विष्टकृतेऽग्नये ॥
विश्वेभ्यश्चापि देवेभ्यो भूमौ दद्यात् तथा बलिम् ।
सर्वेभ्यश्चापि भूतेभ्यो नमो दद्यात् तदुत्तरे ॥
दक्षिणेऽपि पितृभ्यश्च प्राचीनावीतिको ददेत् ।
निर्णेजनोदकाद्येन ऐशान्यां यक्ष्मणेऽर्पयेत् ॥

जुहुयात्तु षडाहुतिरिति पाठश्चेत् तदा शाखिभेदाद् व्यवस्थितः । षडाहुतिपक्षस्तु ब्राह्मण-सर्वस्वे हलायुधेन लिखितः एवं यमाहुतिरपि" इति । अत्र 'एव च' इति च-शब्दस्य समुच्चय-वाचित्वस्यैव प्रसिद्धत्वात् नारायणोपाध्यायैस्तथा व्याख्यातत्वाच्च पितृपितामहमतमेव ज्याय इति प्रतिभाति ।

अत्रोच्यते निरग्निकवैश्वदेवबलिहरणप्रयोगः, यमाह सुब्रह्मण्याग्निहोत्री—"अथानाहिताग्निश्चेद् व्याहृतिभिर्गौतमोक्ताग्न्यादिभिर्मन्त्रैः शाकलमन्त्रैश्च वैश्वदेवं कुर्यात् । प्राङ्मुखो देशकालौ सङ्कीर्त्य पूर्ववत् सङ्कल्प्य पञ्चभूसंस्कारान् कृत्वा तत्र पचनाग्निं यथाविधि संस्थाप्य त्रिरुदका-ञ्जलिसेचनं पर्युक्षणं समिदाधानं च कृत्वाऽन्नमभ्युक्ष्य जुहुयात् । ॐ भूः स्वाहा, इदमग्नये । ॐ भुवः स्वाहा, इदं वायवे । ॐ स्वः स्वाहा, इदं सूर्याय । ॐ अग्नये स्वाहा, इदमग्नये । ॐ धन्वन्तरये स्वाहा, इदं धन्वन्तरये । ॐ विश्वेभ्यो देवेभ्यः स्वाहा, इदं विश्वेभ्यो देवेभ्यः । ॐ प्रजापतये स्वाहा, इदं प्रजापतये । ॐ देवकृतस्यैनसोऽवयजनमसि । नात्र स्वाहाकारः । सर्वत्र इदमग्नये न ममेति त्यागः । ॐ पितृकृतस्यैनसोऽवयजनमसि । ॐ मनुष्यकृतस्यैनसोऽवयजनमसि । ॐ अस्मत्कृतस्यैनसोऽवयजनमसि । ॐ यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि । ॐ यत् स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि । ॐ यद् विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयजनमसि । ॐ एनस एनसोऽवयजनमसि । इति हुत्वा तूष्णीं समिदाधानादि

1. '·मधुनीयनं' ख । 2. 'तेन हुत-' ख । 3. 'यदि तदनन्तरं वार्वाक्कन्यादन्य-' क-ग ।

तदन्तरेणावच्छिद्यैतान्यनुपादध्यादिति(A)। बाह्यतो वा अग्न्यागाराद् बहिर्निष्क्रम्य या यस्मिन् प्रदेशे बलिकर्म्मं तत्रैव निदध्यादिति। अन्तर्वा अग्न्यागारमध्ये चैकस्मिन् प्रदेशे सर्वान् बलीन् हरेदिति। सुभूमिं कृत्वेति उपघातविशेषापेक्षया संमार्जनप्रोक्षणोपलेपनादीनामन्यतमेन प्रकारेण शोभनां भूमिं कृत्वेति[1]।

## सकृदपो निनीय चतुर्धा बलिं निदध्यात् सकृदन्ततः परिषिञ्चेत् ॥ ६ ॥

सकृदेकवारम् अप उदकं निनीय निषिच्य, समाचारात् प्राञ्चं[2] बलिचतुष्टयमात्रं सकृद् गृहीत्वा 'चतुर्धा[3] चतुर्षु स्थानेषु निदध्यात्, [4]कुतः? बलिमित्येकवचनाच्चतुर्धेति वचनाच्च। तान् यथा[5]निहितान् बलीन् सकृदेवान्ततो मध्यत उपरिष्टादित्यर्थः, परिषिञ्चेदिति।

## एकैकं वाऽनुनिधानमुभयतः परिषिञ्चेत् ॥ ७ ॥

एकैकं वा बलिमुभयतः पुरस्तादुपरि[6]ष्टाच्च परिषिञ्चेदिति[7]। कथं परिषिञ्चेदित्युच्यते। अनुनिधानम्, निधानं निधानमनु, अनुनिधानम्। प्रत्येकं विहितान् बलीन् प्रत्येकमेवोभयतः परिषिञ्चेदित्यर्थः। प्राक्संस्थाश्चैव बलयो भवन्ति। कुतः? (B)अथ तद्विन्यासो वृद्धिपिण्डानिवोत्तरोत्तरान् चतुरो बलीन् निदध्यादिति [9]वचनात्।

---

कृत्वा, साग्निकवद् गृह्योक्तबलिहरणं कृत्वा वामदेव्यं गायेत्" इति। अनिरुद्धभट्टेन तु शाकलहोमप्रयोगेऽपि स्वाहाकारान्ता मन्त्राः प्रयुक्ताः पितृदयितायाम् त्यागमन्त्रोऽपि तेन न धृत इत्यपि द्रष्टव्यम्।

A. तत्र हुतशेषान्नं यदि बलिहरणात् प्रागेवापचीयेत तदाऽन्यदन्नमुपादाय बलयो हर्तव्या इत्यर्थः।

B. ग्रन्थश्चायं कर्मप्रदीपे द्वितीयप्रपाठके "अथ तद्विन्यासो वृद्धिपिण्डानिवोत्तरोत्तरांश्चतुरो बलीन् निदध्यात् पृथिव्यै, वायवे, विश्वेभ्यो देवेभ्यः, प्रजापतय इति। सव्यत एतेषामेकैकस्यैकैकमग्नयः ओषधिवनस्पतिभ्य आकाशाय कामायेति। एतेषामपि मन्यवे, इन्द्राय, वासुकये, ब्रह्मण इति। एतेषामपि रक्षोजनेभ्य इति। सर्वेषां दक्षिणतः पितृभ्य इति चतुर्दश नित्याः आद्यास्त्रयप्रभृतयः काम्याः।" इति वैश्वदेवप्रकरणे।

1. '-मन्यतरेण' क-ख। 2. 'इति' नास्ति क-ग। 3. 'बलिं' ख। 4. 'चतुर्धा' नास्ति क-ग। 5. 'कुतः' नास्ति ख। 6. '-निर्हितान्' ग। 7. '-ष्टाच्च परि-' नास्ति ग। 8. 'इति' नास्ति ख। 9. 'वचनात्' नास्ति क।

किंदैवत्या एते इत्यत आह

स यत् प्रथमं निदधाति स पार्थिवो बलिर्भवत्यथ यद् द्वितीयं स वायव्यो यत् तृतीयं स वैश्वदेवो(A) यच्चतुर्थं स प्राजापत्यः ॥ ८ ॥

स यजमानः यत् प्रथम[1]मवदानं निदधाति स पार्थिवः पृथिवीदेवताको [2]बलिर्भवति। अनेनैव सूत्रशेषो व्याख्यातः। [3]एवं च पृथिव्यै नम इति नमस्कारान्तो बलिमन्त्रः सर्वत्र कर्त्तव्य इति। कुतः? वक्ष्यति चायं 'नमो ब्रह्मणे इति दिवी'ति (B)।
तथा चोक्तम्—

अमुष्मै नम इत्येवं बलिदानं विधीयते।
बलिदानप्रदानार्थं नमस्कारः कृतो यतः(C) ॥ इति।

प्रयोगस्तु—पृथिव्यै नमः। वायवे नमः। विश्वेभ्यो देवेभ्यो नमः। प्रजापतये नमः। "अनिरुक्तं हि[5] प्राजापत्यमि"ति वचनात् मानसः प्राजापत्यो बलि[6]रिति। [7]बलिप्रमाणम् (D)अवदानप्रमाणं* चाङ्गुष्ठपर्वमात्रम्।
तथा चोक्तम्—

नावराद्ध्या बलयो भवन्ति महामार्जारश्रवणप्रमाणात्।
एकत्र चेद्दविकृता भवन्ति इतरेतरमसंसक्ताश्चेति ॥ (E)

---

A. अत्र सत्यव्रत-सामश्रमिणौ 'वैश्वदेव' इति पठतः।

B. "इन्द्रायेति पुरस्ताद् वायव इत्यवान्तरदेशे...वासुकय इत्यधस्तादूर्द्ध्वं नमो ब्रह्मणे इति दिवि"। गो० सू० ४।७।३४।

C. कर्मप्रदीपः २।३।११। अत्र प्रकाशकारः—अमुष्मै इत्यनेन पृथिव्यादीनामुपादानम्, तेन पृथिव्यै नम इत्यादिपदद्वयात्मकमन्त्रप्रयोग उक्तो भवति। 'नमो ब्रह्मणे' इति वास्तुबलौ यतो गोभिलेन नमस्कारः कृतः। प्रमाणार्थमिति पाठे प्रमाणपदं मन्त्रपरम्" इति व्याचष्टे।

D. अत्रावदानं नाम स्थाल्यादितो होमार्थमन्नादीनां दर्वीमेक्षणादिना खण्डनम्। तथा च 'अतिवृत्तेऽवदानं स्यात् कर्मखण्डनयोरपि' इति त्रिकाण्डशेषः।

E. कात्यायनसंहिता, १३।१४। अत्र "महामार्जारकर्णपरिमाणादपकृष्टा अल्पपरिमाणा बलयो न भवन्ती"ति प्रकाशकारव्याख्या। रघुनन्दनस्तु—"परिमाणमाह व्यासः—

---

1. '-देव्यो' क-ग। 2. '-मेव तावन्निद-' ख। 3. 'बलिः' नास्ति ख। 4. 'एवमेव' ख। 5. 'हि' नास्ति क-ग। 6. '-र्भवति' ख। 7. 'बलिदानप्रमाणम्' ख।

**अथापरान् बलीन् हरेत् उदधानस्य मध्यमस्य द्वारस्याब्दैवतः प्रथमो बलिर्भवत्योषधिवनस्पतिभ्यो द्वितीय आकाशाय तृतीयः ॥ ९ ॥**

अथशब्दः पूर्वविध्यनु[1]करणार्थः। यथा पूर्वबलिषूभयतः परिषेकः, एवं सर्वबलिष्विति।

तथा चोक्तम् :—

(A)सर्वेषामुभयतोऽद्भिः परिषेकः पिण्डवच्च पश्चिमा प्रतिपत्तिरिति।

अपरानन्यान् बलीन् हरेदित्युक्तार्थम्। उदकं यस्मिन् धीयते तदुदधानं मणिक इत्यर्थः। षष्ठी समीपार्था। तस्योदधानस्य समीपे चोदधान एव। मध्यमस्य द्वारस्य, मध्यमं गृहमध्ये ब्राह्ममूर्द्ध द्वारं पठ्यते, तस्य समीपे सुभूमिं कृत्वेति। उदधानसमीपे यः सोऽब्दैवतः, आपो यस्मिन् देवताः सोऽयमब्दैवतः। प्रथमः प्रकृतानामाद्यः। अद्भ्यो नमः इति प्रयोगः। मध्यमद्वारस्य[2] समीपे यः स "ओषधिवनस्पतिभ्यो भवति, प्रयोगे नमस्कारोऽधिकः। आकाशाय तृतीयः। अयमनिर्दिष्ट[4]स्थानो यत्र क्वचन निधेयः।

**अथापरं बलिं हरेच्छयनं वाऽधिवर्च(B)वा स कामाय वा बलिर्भवति मन्यवे वा ॥ १० ॥**

अथशब्दः पूर्ववत्। वा-शब्दचतुष्टयं च-शब्दार्थे द्रष्टव्यम्। अपरं बलिमित्येकवचनात् स्थानद्वयनिर्देशाच्च बलिद्वयमात्रं सकृद् गृहीतं द्वेधा निदध्यादिति। द्वितीया

---

आर्द्रामलकमानेन कुर्याद्धोमे हविर्बलीन्।
प्राणाहुतिबलिश्चैव एवं गात्रविशोधनीम् ॥"

इति परिमाणं विशेषयति ॥

A. कात्यायनसंहिता १४।१।

तर्कालङ्कारस्तु गौतमसंहितायाम् 'आकाशायेत्यन्तरिक्षे' इति दृष्ट्वा "स खल्वयमाकाशदैवतो बलिरन्तरिक्षे निधातव्यो भवति' इति व्याचष्टे। परन्तु अन्तरिक्षाधारकबलिनिधानं कथं सम्भवतीति जानाति स एव। एवं बलिस्थापनस्य सर्वथाऽसम्भवादेव भाष्यकारेण यत्र क्वचनेत्याद्युक्तमिति।

B. अधिवर्चो वा इति तर्कालङ्कारः पठति विवृणोति चेत्थं पादटीकायाम्—"'अधिवर्चं वा' इति क्वचित् पाठः, तत्र च सान्ता अन्यदन्ता इति गतिः" इति।

---

1. '-करणार्थः' ख-ग। 2. '-स्य' नास्ति ख। 3. 'चौषधि-' ख। 4. '-स्थानत्वाद् यत्र क च निधेयः' ख।

प्रति-शब्दाध्याहारार्थो, शयनं प्रतीति। शयनं प्रसिद्धम्। [1]अधिवर्चं [2]मूत्रोच्चारप्रदेशः तं प्रति। शयनं प्रति कामाय भवति। कामो[3]मन्मथः। [4]अधिवर्चं प्रति मन्यवे। मन्युः क्रोधः। अन्ये तु वा-शब्दान् विकल्पार्थानाहुः। एक एवायं बलिः शयनं प्रति देयोऽधिवर्चं वा, स च काम[5]दैवत्यो भवति मन्युदैवत्यो वा। [6]अन्ये तु विनिवेशविकल्पमाहुः—शयनं प्रति कामाय रात्रौ, अधिवर्चं प्रति अहनि मन्यव इति। [7]तदेतदुभयमपि न युक्तम्। कुतः 'अथ तद्विन्यास' इत्यारभ्य बलिद्वयस्यापि सायं[8]-प्रातर्विधानात्। सर्वेषां दक्षिणतः पितृभ्य इति चतुर्दश नित्या इति संख्यावचनस्यार्थवत्त्वात्। तस्माद् यथोक्त एवार्थः।

## अथ [9]संस्तूपं स रक्षोजनेभ्यः ॥ ११ ॥

अथशब्दो विशिष्टमानन्तर्यं द्योतयति। कथं "प्राक्पूर्वाचीभ्योऽहरहर्नित्यप्रयोगः"(A) इति [10]अतिदेशप्राप्तं बलित्रयं कृत्वा, अथानन्तरं रक्षोजनेभ्यो दद्यादिति। कुतः? ग्रन्थान्तरेऽप्ये[11]तस्मिन्नेव क्रम एतेषां विधानात्। एतेषामपि मन्यवे इन्द्राय वासुकये ब्रह्मणे इति। एवञ्च तत्रोक्त एव क्रमो द्रष्टव्यः। तत्रैकत्र प्राक्संस्थाश्चैते[12] बलयो भवन्ति। एतस्मादेव वचनात्। प्रयोगस्तु—इन्द्राय नमः [13]वासुकये नमः। ब्रह्मणे नमः [14]इति। नमो ब्रह्मणे इति वा (B)।

---

A. इति गोभिलगृह्यसूत्रम् ४।७।३९।

B. अत्र च वाशब्दः पक्षान्तरद्योतकः। स च पक्षः प्रकाशकारसम्मतः, तथा च तेनोक्तम् "अत्र च 'नमः पृथिव्यै' इत्यादिर्नमस्कारादिर्मन्त्रो न तु तदन्तः 'नमो ब्रह्मणे' इति वास्तुबलौ विकृतौ तथा दर्शनात् वैकृतवचनेनाप्य'ग्निो दीक्षयन्ती'त्याविना प्रकृतौ भागव्यवस्थाया दृष्टत्वात् अमुष्मै नमः इति न तु क्रमपरं किन्तु अमुष्मै नमः इति पदद्वयमुक्त्वा बलिदानं विधत्ते। अन्यथा परिशिष्टसूत्रविरोधापत्तेः" इति वैश्वदेवप्रकरणे। अत्र तर्कालङ्कारः "यत्तु बलिमन्त्राणामन्येषां नमःपदान्तत्वमभ्युपगम्य ब्रह्मबलौ नमःपदादित्व-नमःपदान्तत्वयोर्विकल्पमाहुः, तत्र प्रमाणं नास्ति, विकल्पस्य चान्याय्यत्वात् नैषा साध्वी कल्पना। क्रमपरत्वे स्वस्याचार्यसूत्रस्य कात्यायनवाक्येन समं तस्य विकल्पप्रयोगाच्च अनुचितैषा कल्पना। न खल्वष्टदोषदुष्टो विकल्पः सम्भवन्त्यामपि गतौ समाश्रयितुमुचितः। पक्षेऽपि प्रामाण्यान्मा भूद् वचनस्य प्रमत्तगीतता इति यथाऽसावगत्या समाश्रीयते तथा चाभियुक्तानां वचनम्—

---

1. 'चधिवर्चो' क-ख। 2. मूत्रोत्सारप्रदेशः' ख-ग। 3. '-मः कन्दर्पः' ख। 4. 'चवर्चं' क। 5. '-दैवत्यो' ख। 6. 'चपरे तु' ग। 7. 'तदुभयमपि' ख। 8. 'प्रातः' नास्ति ग। 9. 'संस्तपं' क। 10. 'चति' नास्ति ख। 11. 'चपि' नास्ति ख। 12. '-श्चैते' नास्ति क-ग। 13. 'वासुकये नमः' नास्ति ख। 14. 'इति' नास्ति क-ग।

संस्तूपः संमार्जनरेणु[1]पुञ्जादि[2]प्रक्षेपस्थानम्। उत्कर[3]पिण्डकेति या लोकैरभिधीयते। तं प्रति [4]बलिर्यो निधीयते स रक्षोजनेभ्यो भवति। रक्षोजनेभ्यो नमः इति प्रयोगः।

## अथैतद् [5]बलिशेषमद्भिरभ्यासिच्याऽवसलवि(A) दक्षिणा निनयेत् तत् पितृभ्यो भवति ॥ १२ ॥

अथ-शब्दः प्राचीनावीतित्वसव्यजानु[6]पात-दक्षिणाभिमुख्यस्मरणार्थः। [7]एतद् [8]बलिशेषं* बलिदानावशिष्टम् अद्भिरभ्यासिच्य उदकेनाप्लाव्य रक्षोजनभुक्तशिष्टत्वा[9]दपां सेकोपदेशः[9]* संस्कारार्थः। 'अवसलवि'शब्देन पितृतीर्थमुच्यते। तथा च गृह्यान्तरम्—[10]प्रदेशिन्यङ्गुष्ठयोरन्तराऽवसल[11]व्यपसव्यं वा तेन पितृभ्यो [12]निदधातीति(B)। [13]अपसव्य-शब्देन च पितृतीर्थमेवोच्यते; तस्मादेव वचनात्। तथा च मनुः—

"एवमेवाष्टदोषोऽपि यद् व्रीहियवपाकयोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥ इति।

अतुल्यबलत्वाच्च। न ह्याचार्यसूत्रस्य क्रमपरत्वमभ्युपेत्य पुनः कात्यायनवाक्यात् तद्विरुद्धं नमःपदान्तत्वं ब्रह्मबलौ शक्यमभ्युपगन्तुम्। न खल्वनयोस्तुल्यबलत्वमस्ति वचनयोः। सेयं निरङ्कुशत्वात् पुरुषबुद्धीनां कल्पनासमुल्लसिता न शास्त्रबलादित्यनादरणीया। तस्माद् वास्तुबलौ आचार्यनिर्देशबलाद् ब्रह्मबलौ नमःपदादित्वमन्यत्र तु नमःपदान्तत्वं मन्त्राणामास्थेयम्" इति।

गुरुचरणास्तु—यथा आचमनप्रकरणे 'अक्षिणी नासिके कर्णावि'ति सूत्रं केवलमुपस्पर्शनपरं न क्रमपरमपि तथा वास्तुबलावपि चतुर्थप्रपाठकसूत्रमिदं 'नमो ब्रह्मणे' इति पदद्वयात्मकपरं न क्रमपरमिति न 'अमुष्मै नम इत्येवं बलिदानं विधीयते' इति कात्यायनवचनस्यानुपपत्तिः, न वा भट्टनारायण-कुल्लूकभट्ट-शूलपाणि-वाचस्पतिमिश्र-रघुनन्दनादिनिबन्धकाराणां नमस्कारान्तस्यैव बलिमन्त्राभिधानस्य काचिदनुपपत्तिः। अत्र वा-शब्देन पक्षान्तरस्याभिधानं भाष्यकारस्य तु नास्थापरं किन्तूपेक्षापरमिति न कश्चिद् दोषलेशोऽपि। अथवा ब्रह्मबलावेव विशेषविधानात् 'नमो ब्रह्मणे' इति तत्र प्रयोग इत्याहुः।

A. 'अपसलवीति' पठति सामश्रमी। 'तत् पितृभ्य' इत्यत्र तत्-पदमपि त्यजतीति।

B. प्रमाणीकृतमिदं रघुनन्दनेन मुद्रितस्ये 'तथा च भट्टभाष्ये गृह्यान्तरमि'त्युपोद्घातेन।

1. '-रेणुः पुञ्ज-' क-ग। 2. '-निक्षेप' ख। 3. 'उत्करटिकेति प्राप्तौ कैं-' क; 'उत्करटिकेति या लोकैं-' ग। 4. 'यो बलिरभिधी-' ख। 5. 'बलिविशेष-' क-ग। 6. '-पातनदक्षिणाभिमुखत्व-' ख। 7. अनन्तरं 'प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा। पित्र्यमानिधनात् कार्यं विधिवद्दर्भपाणिना ॥ इति' इत्यधिकं ख। 8. 'बलिविशेषं' क-ग। 9. '-दम्भचक्षोपदेशः' ख। 10. 'प्रदेश-' ख। 11. '-व्यपसव्यं-' ख। 12. 'निदध्यात्' ख। 13. चिह्नितांशो नास्ति क।

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात् कार्यं विधिवद् दर्भपाणिना ॥ (A)इति[13]* ।

अवसलवि[1] पितृतीर्थेनेत्यर्थः । दक्षिणा दक्षिणस्यां दिशि । तथा चोक्तम्—सर्वेषां दक्षिणतः पितृभ्य इति ; निनयेत् [2]निदध्यादित्यर्थः । सोदकत्वात् [3]तत् पितृभ्यो भवतीति । एवञ्च पित्र्यत्वादन्ते स्वधाकारः स्यान्न नमस्कार इति ।

तथा चोक्तम्—

[4]स्वाहाकार-वषट्कार-नमस्कारा दिवौकसाम् ।
स्वधाकारः पितणाञ्च हन्तकारो नृणां [5]मतः ॥
स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा ।
तदप्येके[6] नमस्कारं [7]कुर्वते नेति गौतमः(B) ॥ इति ।

तस्मात् पितृभ्यः [8]स्वधेति प्रयोगः । एकस्मिन् प्रदेशे सर्वबलिदानपक्षे कथं क्रम इति ? उच्यते, कर्मप्रदीपोक्तमेव [9]तत्र उदाह्रियते, [10]तेन हि बलिदानक्रमः स्पष्टीकृतः । "अथ तद्विन्यासो वृद्धिपिण्डानिवोत्तरोत्तरांश्चतुरो बलीन् निदध्यात् । पृथिव्यै, वायवे, विश्वेभ्यो देवेभ्यः, प्रजापतये इति सव्यत एतेषामेवैकैक[11]स्यैकैकमद्भ्य ओषधिवनस्पतिभ्य आकाशाय कामायेत्येतेषामपि मन्यवे, इन्द्राय वासुकये ब्रह्मणे इत्येतेषामपि रक्षोजनेभ्यः इति सर्वेषां दक्षिणतः पितृभ्य इति चतुर्दश नित्या (C)आशस्यप्रभृतयः काम्याः । सर्वेषामुभयतोऽद्भिः परिषेकः । पिण्डवच्च पश्चिमा[12] प्रतिपत्तिरिति(D) ।

---

A. मनुसंहिता ३।२७९ ।

B. कर्मप्रदीपः २।३।१२-१३ । अत्र प्रकाशकारः 'तमप्येके नमस्कारैः' इति पठित्वा इति 'पूर्वपक्षो न तु विकल्पार्थः' इति व्याचष्टे ।

C. 'स्वयं त्वेवाशस्यं बलिमि'त्यादि [१।४।१९] सूत्रोक्त-यवशस्यपाकादारभ्य व्रीहिशस्य-पाकपर्यन्तं व्रीहिशस्यपाकादारभ्य यवशस्यपाकपर्यन्तं बलिद्वयम् "आशस्य"पदवाच्यम्, प्रभृति-पदेन च रौद्रयक्षादिबलीनां ग्रहणम् इति ते चानियता इत्यर्थः ।

D. कर्मप्रदीपे द्वितीयप्रपाठके वैश्वदेवप्रकरणे । अत्र प्रकाशकारः—"पिण्डवच्च पश्चिमा प्रतिपत्तिः" इत्यस्यायमर्थः—देवतोद्देशेन त्यक्तानां कृतोपयोगानां भूमौ निधानं प्रथमा प्रति-

---

1. '-वि-शब्देन पितृ-' ख । 2. 'निदध्यादित्यर्थः' नास्ति क-ग । 3. 'यद् यत्' ग ; 'स यत् पितृभ्यो' क । 4. 'स्वधाकार-' क । 5. 'यतः' ग, 'कृता' ख । 6. 'तदप्येके' ख । 7. 'कुर्वीत' ख । 8. 'स्वधा-' क । 9. 'ततमुदा-' क । 10. 'तेनायमुदाहरणक्रमः' ख । 11. '-स्यैकैक-' नास्ति क-ग । 12. '-श्चिमात् प्रति-' ख ।

[1]बलिर्भौत इति वचनात्(A) अयञ्च भूतयज्ञः(B)। अस्यान्ते वामदेव्यगानादियों जपः

पत्तिः। "यदाहवनीये जुहोति" इत्यादौ देवतोद्देशेन स्वकस्याग्नौ प्रक्षेपवत् पिण्डानामपि पितृ-द्देशेन स्वकार्या स्तरणनिधानेन प्रथमा प्रतिपत्तिः। पश्चिमा तु—

एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम्।

गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत्॥ ( म० स० ३।२६० )

इति मन्वायुक्त्या एतद्बलीनामपीति। अत्र यद्यपि गोभिलेन नित्यबलिस्थाने मन्युदेवतान्तर-बलीनुक्त्वा रक्षोबलिः पितृबलिश्चोक्तः, इन्द्रादिबलित्रयं तु नोक्तम्, तथापि वास्तुबलौ दशदिक्षु इन्द्रा-दिभ्यो दशबलिदानमुक्त्वा "प्राच्यूर्द्ध्वावाचीभ्योऽहरहर्नित्यप्रयोगः" सू० ४।७।३९। इत्यनेन सूत्रेण प्राच्यूर्द्ध्वाधो दिक्षु ये वास्तुकर्मणि बलिदशकमध्ये इन्द्रब्रह्मवासुकिदैवत्या बलय उक्ताः तेऽहरहर्नित्यबलिमध्ये देया इत्युक्तम्। ततश्च...मन्युबलेरनन्तरमिन्द्रवासुकिब्रह्मदैवत्या बलयो देयास्ततो रक्षःपितृबली" इति।

A. तथा च कात्यायनसंहितायां त्रयोदशखण्डे—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।

होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥ इति। ३।

ग्रन्थभागोऽयमेतदनुसारेणेति भावः॥

B. भूतयज्ञप्रमाणमाह सायणाचार्योऽपि पराशरसंहिताटीकायाम्—

"भूतयज्ञः' कूर्मपुराणे दर्शितः—

देवेभ्यस्तु हुतादन्नाच्छेषाद् भूतबलिं हरेत्।

भूतयज्ञः स वै प्रोक्तो भूतिदः सर्वदेहिनाम्॥

इति (कू० पु० २।१८।१०८)

हारीतोऽपि— 'वास्तुपालभूतेभ्यो बलिहरणं भूतयज्ञः'। इति (हा० स० १९-३)

कात्यायनोऽपि—

उद्धृत्य हविरासिच्य हविष्येण घृतादिना।

स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत्॥ इति

मार्कण्डेयपुराणेऽपि—

एवं गृहबलिं कृत्वा गृहे गृहपतिः शुचिः।

आप्यायनाय भूतानां कुर्यादुत्सर्गमादरात्॥ इति।

कूर्मपुराणे च—

श्वभ्यश्च श्वपचेभ्यश्च पतितेभ्यस्तथैव च।

दद्याद् भूमौ बहिश्चान्नं पक्षिभ्योऽथ द्विजोत्तमाः॥ इति।

---

1. 'बलिर्भूत' ख।

मनुरपि—

शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम्।
वायसानां कृमीणाञ्च शनकैर्निर्वपेद् भुवि॥ (३।९२) इति।

अन्नमिति शेषः। अन्नोत्सर्गमन्त्रो विष्णुपुराणे दर्शितः।

देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरग-दैत्यसङ्घाः।
प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मयाऽत्र दत्तम्॥
पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्मनिबन्धबद्धाः।
प्रयान्तु ते तृप्तिमिदं मयाऽन्नं तेभ्यो विसृष्टं सुखिनो भवन्तु॥
येषां न माता न पिता न बन्धुर्नैवान्नसिद्धिर्न तथाऽन्नमस्ति।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत् प्रयान्तु तृप्तिं मुदिता भवन्तु॥
भूतानि सर्वाणि तथाऽन्नमेतदहञ्च विष्णुर्न ततोऽन्यदस्ति।
तस्मादिदं भूतहिताय भूमावन्नं प्रयच्छामि भवाय तेषाम्॥
चतुर्दशो लोकगणो य एष तत्र स्थिता ये किल भूतसङ्घाः।
तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदं ते मुदिता भवन्तु॥
इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः।
भुवि भूतोपकाराय गृही सर्वाश्रयो यतः॥ इति।

अत्र भूतयज्ञे विशेषमाह रघुनन्दन आह्निकाचारतत्त्वे—
यक्ष्मबल्यनन्तरं काम्यबलिमाह विष्णुपुराणम्—

ततोऽन्यदन्नमादाय भूमिभागे शुचौ पुनः।
दद्यादशेषभूतेभ्यः स्वेच्छया तत् समाहितः॥

वायसबलिदानमन्त्रे तु—

ऐन्द्रवारुणवायव्याः सौम्या वै नैरृतास्तथा।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयाऽर्पितम्॥
श्यामौ द्वौ श्यामशबलौ वैवस्वतकुलोद्भवौ।
ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ॥
दत्त्वाऽनेन विधानेन बलिं पश्चादुपस्पृशेत्॥

इति व्यासो'क्तानेन विधानेने'त्यनेन शाब्दक्रम इहाद्रियते। शूद्रस्याप्यत्राधिकारः।

'दानं दद्याच्च शूद्रोऽपि पाकयज्ञैर्यजेत च' इति विष्णुपुराणात्।
भार्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्॥

इति याज्ञवल्क्याच्च पञ्चयज्ञाधिकारस्य स्फुटमवगमादिति।

स ब्रह्मयज्ञः। [1]पूर्वं वा तर्पणात्, प्रातराहुत्यन्ते [2]वा, वैश्वदेवान्ते वा[2]*। तथा चोक्तम्—
"वेदमादित आरभ्य शक्तितोऽहरहर्जपेत्"। (A)[3]इति।

बलिवैश्वदेवावशिष्टानां भोज्यतामाह भगवद्गीता—

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥ इति।

वैश्वदेवादियज्ञावशिष्टं येऽश्नन्ति ते पञ्चसूनाकृतैः सर्वैः पापैर्मुच्यन्ते, ये चात्मभोजनार्थमेव पचन्ति न तु वैश्वदेवाद्यर्थं ते पापात्मानोऽघमेव भुञ्जते इति।

भूतयज्ञप्रयोगस्तु—वैश्वदेवहोमानन्तरं "हुतशेषेणाग्नेः पश्चाद्भागे बलिहरणं कुर्यात्। पश्चिमभागे प्रागपवर्गमपो निनीय बलिचतुष्टयपर्याप्तमन्नं सकृदेव गृहीत्वा प्रागपवर्गांश्चतुरो बलीन् निदध्यात्। यथा—पृथिव्यै नमः, इदं पृथिव्यै न मम। वायवे नमः, इदं वायवे न मम। विश्वेभ्यो देवेभ्यो नमः, इदं विश्वेभ्यो देवेभ्यो न मम। प्रजापतये नमः, इदं प्रजापतये न मम। चतुर्षु जलप्रक्षेपः। ततः स्थापितबलिचतुष्टयस्योत्तरतः अपो निनीय पूर्ववदन्नमादाय अद्भ्यो नमः, इदमद्भ्यो न मम। ओषधिवनस्पतिभ्यो नमः, इदमोषधिवनस्पतिभ्यो न मम। आकाशाय नमः, इदमाकाशाय न मम। कामाय नमः, इदं कामाय न मम। इति बलिचतुष्टयं दत्त्वा पूर्ववदुपरि जलं प्रक्षिपेत्। ततस्तेषामुत्तरतः अपो निनीय पूर्ववदन्नमादाय मन्यवे नमः, इदं मन्यवे न मम। इन्द्राय नमः, इदमिन्द्राय न मम। वासुकये नमः, इदं वासुकये न मम। ब्रह्मणे नमः, इदं ब्रह्मणे न मम। इति बलिचतुष्टयं दत्त्वा तदुपरि पूर्ववज्जलं प्रक्षिपेत्। तेषामुत्तरतः अपो निनीय रक्षोजनेभ्यो नमः, इदं रक्षोजनेभ्यो न मम। इति बलिं दत्त्वा पूर्ववज्जलं क्षिपेत्। अप उपस्पृश्य पूर्ववत् सर्वबलीनां दक्षिणतः पितृतीर्थेनापो निनीय बलिशेषमुदकेनाऽऽप्लाव्य प्राचीनावीती पातितवामजानुः पितृतीर्थेन पितृभ्यः स्वधा, इदं पितृभ्यो न मम। इति बलिं दद्यात्, तदुपरि जलं निक्षिप्याप उपस्पृश्य कृताञ्जलिपुटोऽग्निं प्रार्थयेत्"। इति छन्दोग्याग्निहोत्रिसङ्कलितः।

प्रार्थनमन्त्रस्तु १।४।२७ सूत्रभाष्ये द्रष्टव्यः।

A. कर्मप्रदीपे—

वेदमादित आरभ्य शक्तितोऽहरहर्जपेत्।
उपतिष्ठेत् ततो रुद्रमर्वाग् वा वैदिकाज्जपात्॥ इति २।२।१।

अत्र प्रकाशकारः—क्रमप्राप्तं जपयज्ञमाह—ऋगादिरूपं वेदं प्रथमकण्डिकाया आरभ्य अध्यायं तदर्धादिरूपं यथाशक्ति प्रत्यहं जपेत् ततो रुद्रमन्त्रे रुद्रं प्रकाशयेत्। जपयज्ञात् पूर्वं वा रुद्रमुपतिष्ठेत। रुद्रोपस्थानमन्त्रश्च—

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
ऊर्ध्वलिङ्गं विरूपाक्षं विश्वरूपं नमो नमः॥ इति व्याचष्टे।

1. 'पूर्वमथोत् तर्पणात्' ख। 2. नास्ति क-ग। 3. 'इति' नास्ति ख।

[1]यथा वै ब्रह्मयज्ञस्य कालस्त्रिविकल्पः एवं ब्रह्मयज्ञोऽपि त्रिविकल्प एव। (A)'अध्यापनं ब्रह्मयज्ञ' [2]इति वचनात् शिष्याणामध्यापनं यत् क्रियते स ब्रह्मयज्ञः[2]* [3]इति।

गुरावध्ययनं कुर्वन् शुश्रूषादि यदाचरेत्।
स सर्वो ब्रह्मयज्ञः स्यात् तत्तपः परमुच्यते॥ (B)

इति वचनाद् 'यद् गुरोरध्ययनं'[4]* स ब्रह्मयज्ञः।

'यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स चोच्यते' (C)

इति वचनादयं ब्रह्मयज्ञः। एवं

'ब्रह्मयज्ञादपि ब्रह्मदानमेवातिरिच्यते' (D)

---

A. कर्मप्रदीप—( १३।३ ) श्लोकस्यांशोऽयम्।

B. प्रमाणीकृतमिदं परिशिष्टप्रकाशकृतापि "भट्टभाष्ये तु ... ... इति वचनाद् ग्रहणार्थाध्ययनमपि ब्रह्मयज्ञ इत्यभिहितम्" इत्युपोद्घातेन।

C. शेषार्द्धोऽयं कर्मप्रदीपस्य द्वितीयप्रपाठकतृतीयखण्डीयचतुर्थश्लोकस्य। गायत्रीरूपश्रुतिजपे विशेषमाह गोभिलः स्नानसूत्रपरिशिष्टे—

कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत्।
गायत्र्यग्निमुखी यस्मात् तस्मादुत्थाय तां जपेत्॥
यजले शुष्कवस्त्रेण स्थले चैवाऽऽर्द्रवाससा।
जपहोमौ तथा दानं सर्वं तन्निष्फलं भवेत्॥
गृहेषु तत् समं जप्यं गोष्ठे शतगुणं भवेत्।
नद्यां शतसहस्रञ्च अनन्तं देवसन्निधौ॥
दशभिर्जन्मजनितं शतेन तु पुराकृतम्।
त्रियुगन्तु सहस्रेण गायत्री हन्ति दुष्कृतम्॥
सहस्रपरमां देवीं शतमध्यां दशावराम्।
गायत्रीन्तु जपन् विप्रो न स पापेन लिप्यते॥
व्याहृतिभिः प्रतिप्रणवां गायत्रीञ्च प्रतिप्रति।
षट्प्रणवसंयुक्तां गायत्रीजपलक्षणम्॥ इति।
"यदि स्यात् क्लिन्नवासा वै गायत्रीमुदके जपेत्।
अन्यथा तु शुचौ भूम्यां कुशोपरि समाहितः॥"

इति वृद्धमनुवचनन्तु गोभिलीयेतरपरं वा न वेति सुधीभिश्चिन्त्यमिति।

D. कर्मप्रदीपीयब्रह्मयज्ञप्रकरणस्यान्तिमश्लोकस्योत्तरार्द्धमिदम्।

---

1. 'तथा च' क-ग। 2. नास्ति ग। 3. 'इति' नास्ति क-ग। 4. 'गुरौ यदध्ययनं' ख।

इति वचनात् नायं तुल्यविकल्पः। अयं च ब्रह्मयज्ञः (A)। अनन्तरं च मनुष्ययज्ञार्थमतिथिं भोजयेत्।

---

A. ब्रह्मयज्ञस्य फलमाह कर्मप्रदीपे—

"न ब्रह्मयज्ञादधिकोऽस्ति यज्ञो न तत्प्रदानात् परमस्ति दानम्।
सर्वेऽन्तवन्तः क्रतवः स-दाना नान्तो दृष्टः कैश्चिदस्य श्रुतस्य॥

वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः।
तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते॥
वेदाभ्यासेन सततं दानेन तपसैव च।
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम्॥
संस्मरन् पूर्वजातिं च ब्रह्मैवापद्यते अजः।
ऋचः पठन् मधुपयःकुल्याभिस्तर्पयेत् सुरान्॥
घृतामृतायकुल्याभिर्यजूंषि पठने सदा।
कुल्या अस्या नदीश्चैव ऋचमेषा हि च स्तुतिः॥
सामान्यपि पठन् सोम-घृतकुल्याभिरन्वहम्।
मेदःकुल्याभिरपि च अथर्वाङ्गिरसः पठन्॥
मांसक्षीरौदनमधुकुल्याभिस्तर्पयेत् पठन्।
वाकोवाक्यं पुराणानि सेतिहासानि चान्वहम्॥
ऋगादीनामन्यतममेतेषां शक्तितोऽन्वहम्।
पठन् मध्वाज्यकुल्याभिः स्वपितॄनपि तर्पयेत्॥
ये तृप्तास्तर्पयन्त्येनं जीवन्तं प्रेतमेव च।
कामचारी स भवति सर्वेषु सुरसद्मसु॥
गुर्वभ्येनो न स्पृशति पङ्क्तिं चैव पुनाति सः।
यं यं क्रतुं च पठति फलभाक् तस्य तस्य च॥
वसुपूर्णवसुमती त्रिदानफलमाप्नुयात्।
ब्रह्मयज्ञादपि ब्रह्मदानमेवातिरिच्यते॥" इति।

द्वितीयप्रपाठके ब्रह्मयज्ञप्रकरणम्।

ब्रह्मयज्ञमधिकृत्याह च रघुनन्दनः—"तत्र याज्ञवल्क्यः—

वेदार्थवत्पुराणानि सेतिहासानि शक्तितः।
जपयज्ञार्थसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत्॥ इति।

छन्दोगपरिशिष्टेऽपि— ब्रह्मयज्ञार्थसिद्ध्यर्थं विद्यामाध्यात्मिकीं जपेत्।
ब्रह्माञ्ज प्रणवं वापि ततस्तर्पणमाचरेत्॥

सन्ध्योपासनानन्तरं ब्रह्मपुराणम्—

कृत्वा प्रदक्षिणं सूर्यं नमस्कृत्योपविश्य च ।
स्वाध्यायं प्राङ्मुखः कृत्वा तर्पयेद् देवतामृषीन् ॥ इति ।

ब्रह्मयज्ञानन्तरं तर्पणं सामगेतरपरम् । अत एव—

"कुर्वीत देवतापूजां जपयज्ञादनन्तरम्" ।

इति हारीतवचनं सामगस्य मध्याह्नपूजापरम् । जपयज्ञो ब्रह्मयज्ञः ।

श्रुतिः—'दक्षिणोत्तरपाणिपादौ कृत्वा सपवित्रपाणिरोमिति प्रतिपद्येत इति च त्रीनेव प्राङ्मुखः प्रयुङ्क्ते ॐ भूर्भुवः स्वरिति च अथ सावित्रीमिति । गोतमापस्तम्बौ—एकामृचमेकं वा यजुरेकं वा सामाभिव्याहरेदिति । एतदनुसारेणैवानिरुद्धभट्टेन प्रणवव्याहृतिगायत्रीपाठानन्तरं चतुर्वेदादिमन्त्रचतुष्टयं लिखितमिति । स ब्रह्मयज्ञः तर्पणादर्वागिति नित्यरूप उक्तः । 'अथ सहतवासा उदकान्तं कृत्वा प्रयतः शुचौ देशे विधीयते' इत्यापस्तम्बेन सामान्यतः स्थल एव ब्रह्मयज्ञविधानात् सामगेतरैरपि तर्पणानन्तरं वेदाध्ययनरूपो ब्रह्मयज्ञः कार्य इत्यर्थः ।

योगियाज्ञवल्क्यः—

दर्भेषु दर्भपाणिः स्यात् प्राङ्मुखस्तु कृताञ्जलिः ।
स्वाध्यायञ्च यथाशक्ति ब्रह्मयज्ञार्थमाचरेत्" ॥ इति ।

अत्र रघुनन्दनसन्दर्भे कर्मप्रदीपीय'पितृयज्ञस्तु तर्पणम्' इतिवचनस्यैकवाक्यतया बृहस्पत्युक्ततर्पणपदस्य ब्रह्मपुराणोक्ततर्पणपदस्य च पितृयज्ञार्थत्वस्वीकारे न काचिदनुपपत्तिः ॥

'यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः ।'

इति मनुवचनादन्यदेव स्नानाङ्गतर्पणात् पितृयज्ञरूपं तर्पणम् इति । तेनापि "अत्र तु यद्धि यदुपक्रम्य श्रुतं यत्र येन सह समभिव्याहृतं तदेव तत्रैवाङ्गं नान्यदिति बोध्यम् 'तदङ्गमितरत् समभिव्याहारप्रकरणाभ्यामि'ति कात्यायनसूत्रात्, तेन पद्मपुराणीयस्नाने तदुक्तमेव तर्पणम्" इत्युक्त्वा पद्मपुराणीयस्नानाङ्गं तर्पणमुक्तम्, तच्च कर्मप्रदीपोक्तपितृयज्ञरूपतर्पणादत्यन्तं पृथगिति प्रयोगे प्रदर्शयिष्यते । अन्यत्रापि तेनैव "देवपितृमनुष्यभूतर्षिपूजामभिधाय गौतमः—'नित्यं स्वाध्यायं पितृतर्पणञ्च यथोत्साहमन्यत्' इति तर्पण-ब्रह्मयज्ञयोः पूर्वमुक्तयोरपि नित्यमित्यादिना पुनरभिधानं यज्ञत्रयानुष्ठानाशक्तावङ्गत्वैकल्पेनाप्यनयोरवश्यानुष्ठेयत्वमिति कल्पतरुप्रभृतयः" इत्युक्त्वा द्वैविध्यं तर्पणस्य द्विधा कर्त्तव्यत्वञ्च भङ्ग्या स्वीकृतम् । एवमपि कृतं तस्य—

आप्लवने तु संप्राप्ते गायत्रीं जपतः पुरा ।
तर्पणं कुर्वतः पश्चात् स्नानमेव वृथा भवेत् ॥

इति गोभिलस्नानसूत्रपरिशिष्टवचनभिया ब्रह्मयज्ञानन्तरं तर्पणं सामगेतरपरमिति कुसृष्टिकल्पनया 'आप्लवने तु संप्राप्ते' इति वचनेन स्नानाङ्गतर्पणस्यैव गायत्रीजपरूपब्रह्मयज्ञात् प्राक् कर्त्तव्यता निर्णीतेति । प्रमाणमत्राऽऽह पराशरटीकायां सायणमाधवाचार्यः—

तथा च मनुः

कृत्वैतद् बलिकर्मैवमतिथिं पूर्वमाशयेत् ।
[1]भिक्षाञ्च भिक्षवे दद्याद् [2]विधिवद् ब्रह्मचारिणे ॥ (A)इति ।

अतिथिभिः कामं सम्भाषेत [ सू १।४।२ ] इति यद्यप्ययं विधिर्न भवति तथापि लिङ्गाद् विधिरेवायं मन्तव्यः । तथा चोक्तम्—

"तत्र वशिष्ठः— ऋक्सामाथर्ववेदोक्ताञ्जपमन्त्रान् यजूंषि च ।
जप्त्वा चैवं ततः कुर्याद्देवर्षिपितृतर्पणम् ॥" इति ।

अन्यथा 'स चार्वाक् तर्पणात् कार्यः' इति छन्दोगपरिशिष्टवचनस्य छन्दोगेतरपरत्वकल्पनायां महानर्थपातः प्रेक्षावदुपेक्षणीयत्वञ्चापद्येतेति, प्रतिपादितमेतत् सर्वाऽलङ्कारीयप्रमोपन्यासेन तृतीयकण्डिकायामपि ।

अथात्र छन्दोगब्राह्मणोक्तब्रह्मयज्ञप्रयोगः—"ग्रामाद् बहिर्जलादौ गत्वा पादौ हस्तौ च प्रक्षाल्य द्विराचम्य प्रागग्रेषूदगग्रेषु वा दर्भेषु प्राङ्मुख आसीनः पवित्रपाणिर्देशकालौ सङ्कीर्त्य परमेश्वरप्रीत्यर्थं ब्रह्मयज्ञेन यक्ष्ये, इति संकल्प्य जान्वोरुपरि प्रसृताङ्गुलिकौ गोकर्णाकृतिबद्धहस्तौ संस्थाप्य शिरःकम्पनादिकमकुर्वन् ऋषिच्छन्दो-दैवत-ब्राह्मणानि स्मृत्वा प्रणवव्याहृतीश्चोच्चार्य, गायत्रीं पादं पादमर्धर्चशः समग्रां च पठित्वा सामपठनसमये दक्षिणहस्ताङ्गुलिमध्यपर्वसु अङ्गुष्ठेन स्वरानारोपयन् दीर्घाक्षरं सव्यहस्ताङ्गुलिना प्रदर्शयन् सामस्तु यवान्तरम्, ऋक्षु तिलान्तरं कुर्वन् हस्ताग्रदृष्टिर्मध्यमस्वरेण प्रथमदिने यथाशक्ति वेदादिमारभ्य किञ्चित् पठित्वा पुनः प्रणवं व्याहृतीः पूर्ववत् सावित्रीं त्रिः पठित्वा नमो ब्रह्मणे इति त्रिवारं पठित्वा समापयेत् । एवं विधिना वेदजपो ब्रह्मयज्ञः । एते च नियमा नारदशिक्षायां द्रष्टव्याः । द्वितीयदिने ब्रह्मयज्ञे प्रथमदिनपठितवेदभागोपरितनग्रन्थमारभ्य पाठः । वेदसमाप्तौ पुनर्वेदादिमारभ्य पाठः ॥" इति ।

A. मनुसंहिता ३।९४ । कुल्लूकभट्टव्याख्या चात्रेत्थम् "एवमुक्तप्रकारेणैतद् बलिकर्म कृत्वा गृहभोक्तृभ्यः पूर्वमतिथिं भोजयेत् । भिक्षवे परिव्राजे ब्रह्मचारिणे प्रथमाश्रमिणे च विधिवत् स्वस्तिवाच्य 'भिक्षादानमप्पूर्वमि'ति गौतमाद्युक्तविधिना भिक्षां दद्यात् । ग्रासप्रमाणा च भिक्षा भवति 'ग्रासमात्रा भवेद् भिक्षा' इति शातातपवचनात् । सम्भवे त्वधिकमपि देयम् ।" इति ।

भिक्षादानस्य फलमप्याह मनुः—

यत् पुण्यफलमाप्नोति गां दत्त्वा विधिवद् गुरोः ।
तत् पुण्यफलमाप्नोति भिक्षां दत्त्वा द्विजो गृही ॥ इति ३।९५

रघुनन्दनस्तु भिक्षुकानाहाऽऽह्निकाचारतत्त्वे—

1. 'भिक्षां वा' क । 2. 'यथावद् ब्रह्मचारिणे' क ।

लिङ्गादपि विधिर्ज्ञेयो दर्भेषु विकरो यथा। (A)

इति। 'अतिथावनागच्छति भोजनासम्भवे वा कथमिति'[1] उच्यते—हन्तकारपुष्कलभिक्षोदपात्राणां यथासम्भवमेकतमं दद्यादिति।

तथा च शातातपः—

भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा।
असम्भवे सदा दद्यादुदपात्रमथापि वा॥ (B) इति।

हन्तकारादीनां प्रमाणं शातातपोक्तमेव द्रष्टव्यम्।

[2]ग्रासमात्रा भवेद् भिक्षा पुष्कलं [3]तु चतुर्गुणम्।
पुष्कलानि तु चत्वारि हन्तकारं विदुर्बुधाः (C)। [4]इति।

---

ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः॥ इति।

A. प्रमाणमिदमुपन्यस्तं तत्त्वकारेणापि।

B. शातातपोक्तत्वेनोदाहृतं वचनमिदं नारायणोपाध्यायेनापि परिशिष्टप्रकाशे २।३।७। अत्र संवादि प्रमाणमुक्तं मनुसंहितायाम्—

भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्वकम्।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत्॥ ३।९६।
विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु।
निस्तारयति दुर्गाच्च महतश्चैव किल्बिषात्॥ ३।९८।
संप्राप्ताय त्वतिथये प्रदद्यादासनोदके।
अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम्॥ ३।९९।
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥ ३।१०१।
अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना।
काले प्राप्तस्त्वकाले वा नास्याऽनश्नन् गृहे वसेत्॥ ३।१०५।
न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत्।
धन्यं यशस्यमायुष्यं स्वर्ग्यं वाऽतिथिपूजनम्॥ ३।१०६।
आसनावसथौ शय्यामनुव्रज्यामुपासनाम्।
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम्॥ ३।१०७। इति

C. प्रमाणमिदमुपन्यस्तं मिताक्षरायां शातातपोक्तत्वेन पाठान्तरं कल्पयित्वा, स च पाठः—

---

1. 'तथा च नाभोजनासम्भवे च कथमिति' ख। 2. 'ग्रासमात्र' ख। 3. 'तच्च-' ख।
4. 'इति' नास्ति ख।

एवमयं मनुष्ययज्ञोऽपि त्रिविकल्पः। मुख्यस्तावदतिथिभोजनम्, तदभावे हन्तकारादिदानम्, तदभा[1]वेऽप्युदकपात्रदानमिति। ननु कां देवतामुद्दिश्याऽतिथिं भोजयेदिति? उच्यते—मनुष्ययज्ञ इति समाख्यानात् मनुष्यानिति। "मनुष्येभ्य इदं हन्ते"त्युद्धृतदानमन्त्रलिङ्गाच्च (A)। सर्वदेवमयोऽतिथिरिति वचनाच्च (B) काचिदिष्टदेवता स्यात् तां चोद्दिश्य [2]दीयते। तथा च [3]गृह्यान्तरम्—असौ प्रीयतामिति आत्मीयामभीष्टां देवतामुद्दिश्य प्राङ्मुखमतिथिं भोजयेत् मनुष्यान् वा, तेन देवगणाः प्रीता भवन्तीति[4](C)। अस्यानन्तरं पितृयज्ञः। स [5]चतुर्विकल्पः, मुख्यस्तावत् पित्रर्थं

---

ग्रासमात्रा भवेद् भिक्षा पुष्कलं तच्चतुर्गुणम्।
हन्तस्तु तैश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेत्॥ इति मि० १।९।१०८।

A. उक्तञ्च व्याससंहितायाम्—
इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत्।
गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः॥ इति ३।३४।

B. तथा च पराशरसंहितायामुक्तम्—
न पृच्छेद् गोत्रचरणं न स्वाध्यायव्रतानि च।
हृदये कल्पयेत् तस्मिन् सर्वदेवमयो हि सः॥ इति १।४१।

C. प्रमाणीकृतमिदं गृह्यान्तरं परिशिष्टप्रकाशकृताऽपि 'मनुष्यान्वा' इत्यत्र 'मनुष्यार्थे' इति पाठान्तरेण कर्मप्रदीपद्वितीयप्रपाठके तृतीयखण्डीयसप्तमश्लोकव्याख्यानावसरे। मनुष्ययज्ञमधिकृत्य सायणाचार्योऽप्याह पराशरसंहिताटीकायाम्—अथातिथ्यापरनामको मनुष्ययज्ञो निरूप्यते आतिथ्यस्य मनुष्ययज्ञत्वं कात्यायनेनोक्तम्, श्रुतिरपि 'यद् ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः सन्तिष्ठते' इति। बौधायनोऽपि—अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादामूलफलशाकेभ्यस्तथैतं मनुष्ययज्ञं समाप्नोति इति। कार्ष्णाजिनिरपि—

भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा।
असम्भवे तथा दद्यादुदपात्रमथापि वा॥ इति।

कूर्मपुराणेऽपि— हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः।
दद्यादतिथये नित्यं बुद्ध्येत परमेश्वरम्॥ इति।

भिक्षादिलक्षणं मनुराह—
ग्रासमात्रं भवेद् भिक्षा अग्रं ग्रासचतुष्टयम्।
अग्रं चतुर्गुणीकृत्य हन्तकारो विधीयते॥ इति।

अतिथिनिरीक्षणाय गृहाङ्गणे कञ्चित् कालं तिष्ठेदित्युक्तं मार्कण्डेयपुराणे—

---

1. '-वेऽपि पुष्कलकपात्र-' ख। 2. 'दीयते' नास्ति क-ग। 3. 'गृह्यान्तरम्' नास्ति क। 4. 'इति' नास्ति ख। 5. 'चतुर्विधः' ख।

देवकर्मवर्जमयुग्मब्राह्मणभोजनम्। (A)वक्ष्यति चायम् "अग्रं ब्राह्मणाय दत्त्वा भुञ्जीते"ति(B)

तथा च मनुः—

एकमप्याशयेद् विप्रं पित्र्यर्थं पाञ्चयज्ञिके।
न चैवात्राशयेत् कञ्चिद् वैश्वदेवं प्रति द्विजम् (C) इति।

---

आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम्।
मुहूर्तस्याष्टमं भागमुदीक्ष्यो ह्यतिथिर्भवेत्॥　इति।

विष्णुपुराणेऽपि—

ततो गोदोहमात्रं वै कालं तिष्ठेद् गृहाङ्गने।
अतिथिग्रहणार्थाय तदर्धं वा यथेच्छया॥ इति मनुष्ययज्ञः"।　इति।

मनुष्ययज्ञप्रयोगस्तु—मनुष्ययज्ञं करिष्ये इति सङ्कल्प्य यथोक्तानतिथीन् संपूज्यान्नपरिवेशनं कृत्वा अन्नसङ्कल्पं कुर्यात्, यथा—'इदमन्नादि आतृप्तेर्दत्तं दास्यमानं च सनकादिमनुष्येभ्यो हन्त' इति जलमुत्सृजेत्। उक्तविधिना मनुष्ययज्ञकरणासमर्थश्चेन्निवीती किञ्चिदन्नमुद्धृत्य 'मनुष्येभ्यो हन्त' इत्यन्नमुत्सृजेदिति॥

A. अत्र गृह्यासंग्रहः प्रश्नोत्तराभ्यां कर्तव्यमाह—

श्राद्धे ब्राह्मण एकश्चेत् स्वल्पन्न प्रकृतं यदि।
वैश्वदेवं कथं तत्र इति मे संशयो महान्॥
प्रणीताज्ञात्रमुद्धृत्य सर्वस्य प्रकृतस्य तु।
ब्राह्मणाय प्रदातव्यम् एवं भवति सम्पदि॥
यद्येकं भोजयेच् श्राद्धे छन्दोगं तत्र भोजयेत्।
ऋचो यजूंषि सामानि त्रैविद्यं तत्र तिष्ठति॥
ऋग्भिस्तु पितरः प्रीता यजुर्भिस्तु पितामहाः।
सामभिः प्रपितामहास्तस्मात् तं तत्र भोजयेत्॥
अटेत पृथिवीं कृत्स्नां सशैलवनकाननाम्।
लभेत यदि पित्रर्थे साम्नामक्षरचिन्तकम्॥ इति, गृ० स० २।८०-८४।

B. "यस्य त्वेषामग्रतः सिध्येत् नियुक्तमग्नौ कृत्वाऽग्रं ब्राह्मणाय दत्त्वा भुञ्जीत" इति गो० सू० १।४।२९।

C. मनुसंहिता ३।८३ अस्य पूर्वश्लोकस्तु—

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन्॥ इति ३।८२।

श्लोकद्वयं विवृणोति चेत्थं मेधातिथिः—"कुर्यात् दद्यात्। अहरहः प्रतिदिवसम्। श्राद्धं

कर्मप्रदीपश्च—

अप्येकमाशयेद् विप्रं [1]पितृयज्ञार्थसिद्धये ।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा (A) । इति[1]*

नाम्ना धर्मातिदेशः । श्राद्धं नाम पित्र्यं कर्म, अमावास्यायां विहितम् । तदीयेतिकर्त्तव्यता श्राद्धमित्यनेन नाम्नाऽतिदिश्यते । अन्नाद्येनेति तिलैर्व्रीहियवैरित्यादेरनुवादोऽयम् । उत्तरत्र विवक्षितार्थं उदकेनेति । पयः क्षीरम् (८२) श्राद्धशब्देन विधानात् सर्वस्मिंस्तद्विधानप्राप्ते कश्चिदितिकर्त्तव्यताभागो निवर्त्तते न वैवाग्राऽऽशयेत् कश्चित् नाग्रान्वाहिके श्राद्धे वैश्वदेवं प्रति विश्वान् देवानुद्दिश्य द्विजभोजनम् अत्र केचिदाहुः प्राप्ते भोजने आशयेदिति पुनर्वचनमपूर्वत्वमस्य दर्शयति तेनैतावदेवैतच्छ्राद्धं यत् पितृनुद्दिश्य ब्राह्मण एको भोज्यते न तदन्या काचिदर्घ्यपात्राग्नि-होमाद्येतिकर्त्तव्यताऽस्ति । ब्रह्मचर्यं स्वाध्यायनिषेध इत्येवमादि न भवति । 'एकमप्याशयेद् विप्रम्' त्रयाणां नियमादेकैकमुभयत्रेत्यस्याविधित्वादप्राप्त एको विधीयते । एकमपि भोजयेत् सति सम्भवे बहूनपि । पित्रर्थं पितृतृप्त्यर्थम् । 'पाञ्चयज्ञिकम्' पञ्चयज्ञभवं पाञ्चयज्ञिकं तदन्त-र्गतम् । पाञ्चयज्ञिकशब्दः श्राद्धे प्रयुक्तः । पाञ्चयज्ञिकं तर्पणम्, तेन तर्पणभोजनयोः समुच्चयः । अस्य तु विकल्पो भविष्यति यदेव तर्पयत्यद्भिरिति ।

A. कर्मप्रदीपः २।३।६ । अत्र प्रकाशकारः—"नित्यश्राद्धे ब्राह्मणत्रयासम्भवे यत् कार्यं तदाह—एकमपि विप्रं बहूनामसम्भवे अदैवं वैश्वदेवश्राद्धरहितं भोजयेत् । पितृतृप्तिसिद्धये । न तु तर्पणवलिभ्यामेव पितृयज्ञो निष्पन्न इति कृतकृत्यः स्यात् । स चातिथेरन्यो भोजयितव्यः । तथा बलिदानानन्तरं विष्णुपुराणम्—

ततो गोदोहमात्रं हि कालं तिष्ठेद् गृहाङ्गने ।
अतिथिग्रहणार्थाय तदूर्द्ध्वं वा यथेच्छया ॥
अतिथिं तत्र संप्राप्तं पूजयेत् स्वागतादिना ।
हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही ॥

एतदनन्तरं चोक्तं तत्रैव—

पित्रर्थं चापरं विप्रमेकमप्याशयेन्नृप ।
तद्देश्यं विदिताचारसम्भूतिं पाञ्चयज्ञिकम् ॥

अपरमतिथेरन्यम् । अतिथेरविदिताचारसम्भूतित्वात् श्राद्धे पात्रत्वाभावात् । अत एवा-तिथ्याधिकारे देवलः—

न पृच्छेद् गोत्रचरणं स्वाध्यायं देशजन्मनी ।
भिक्षितो ब्राह्मणैरन्नं दद्यादेवाविचारयन् ॥ इति ।

---

1. पितृयज्ञार्थसिद्धये 'इत्यादि' इति क-ग ।

[1]यथा च नित्यश्राद्धे दैवं [2]न भवत्येवमावाहनाद्यपीति (A)। तथा च गृह्यान्तरम्—"[3]नैत्यके बर्हिर्दत्त्वोदकञ्च पितर एतद् वोऽर्घ्यमिति पाणिनैवाङ्गिरस्तिलमिश्राभिरर्घ्यं

---

पराशरः— न पृच्छेद् गोत्रचरणं स्वाध्यायं जन्म चैव हि।
स्वचित्तं भावयेत् तस्मिन् व्यासः स्वयमुपागतः॥

तथा यमः— देशं गोत्रं कुलं विद्यामन्नार्थं यो निवेदयेत्।
वैवस्वतेषु धर्मेषु वान्ताशी स निगद्यते॥

यदि त्वप्येकोऽप्यन्यस्तद्देशयो नास्ति श्राद्धभोक्ता भोज्यं वा ब्राह्मणद्वयतृप्तये पर्याप्तं नास्ति।" इति व्याचष्टे।

A. नित्यश्राद्धमधिकृत्याह पराशरसंहिताटीकायां माधवाचार्यः—

"नित्यश्राद्धप्रकारो मत्स्यपुराणे दर्शितः—

नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितम्।
अदैवं तद् विजानीयात् पार्वणं पर्वसु स्मृतम्॥ इति।

प्रचेताः— 'नावाहनाग्नौकरणं न पिण्डो न विसर्जनम्'। इति।

व्यासोऽपि— नित्यश्राद्धेऽर्घ्यगन्धाद्यैर्द्विजानभ्यर्च्य शक्तितः।
सर्वान् पितृगणान् सम्यक् सहैवोद्दिश्य भोजयेत्॥
आवाहनस्वधाकारपिण्डाग्नौकरणादिकम्।
ब्रह्मचर्यादिनियमो विश्वे देवास्तथैव च॥
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत्।
दत्त्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत्॥
एकमप्याशयेन्नित्यं षण्णामप्यन्वहं गृही॥" इति।

तर्काङ्कुरोऽपि स्वभाष्ये—"शातातपः—

पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते।
स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते॥
अक्षय्य-दक्षिणा-स्वस्ति-सौमनस्यं तथाऽस्त्विति॥ इति।

एवञ्च— नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्।
दक्षिणारहितं ह्येतद्दातृभोक्तृव्रतोज्झितम्॥ इति।

दक्षिणानिषेधोऽशक्तविषय इति तत्त्वकृतः। अत एव शक्त्या दक्षिणादानं व्यासः स्मरति। तदिदं नित्यश्राद्धं सम्भवे बहुब्राह्मणकमसम्भवे त्वेकब्राह्मणकमपि भवती"ति।

---

1. 'तथा च' क-ख। 2. 'न भवति' नास्ति ख। 3. 'नैमि-' ख।

दद्या'दन्यदेवमाचान्तेषु पितृभ्यः स्वधेति पितृणामक्षय्यमस्त्विति च सह चे'दश्नीयात् पूर्वमेव स्वधाऽक्षय्य'स्वस्तीरभिदध्यादिति(A)। एवञ्चैतस्मादेव वचनाद् विकल्पः। सह वाऽश्नीयात् पश्चाद् वेति।

मनुस्तु पश्चाद् भोजनमेवाह—

देवान् ऋषीन् मनुष्यांश्च पितॄन् गृह्याश्च[4] देवताः।
[5]पूजयित्वा ततः पश्चाद् गृहस्थः शेषभुग् भवेत् ॥(B) [6]इति।

'अत्रापि भोक्तृभोजनयो'[7]रभावे कथमिति? उच्यते—[8]अन्नाग्रमुद्धृत्य यथासम्भवं दद्यादिति।

---

A. प्रमाणमिदमुपन्यस्तं सर्वालङ्कारेणापि स्वभाष्ये गृह्यान्तरवचनत्वेन (१।४।१२।सूत्रे)।

B. मनुसंहिता ३।११७। अस्य च मेधातिथिकृताद् भाष्यात् किञ्चिदुदाह्रियते। "अनुवादमात्रमिदं पूर्वस्य पञ्चयज्ञानुष्ठानविधेर्गृहस्थभोजनकालस्य च। अन्ये त्वर्थान्तरविधानमपि वर्णयन्ति—'पूर्वत्र जायापत्योरेककालमविशिष्टं भोजनं विहितम्, अनेन स्त्रिया अपोह्य पुंस एव विधीयते; ततश्च पूर्वं भृत्येभ्यः प्राक् पत्युर्भार्या न भुञ्जीत। एवञ्च कृत्वा भोजयेत्' इति। एतदप्यनुपपन्नं भवति इतरथा तैः सह भार्या न भुञ्जीतेत्यर्थकल्पनायां यथाश्रुतपदान्वयभङ्गः स्यात्। न च गृहस्थ इत्येकवचनविरोधः सहाधिकाराज्जायापत्योः। तत्र च सहार्थस्य प्राधान्यान्न द्विवचनापत्तिः यथा ब्राह्मणोऽग्नीनादधीतेति सत्यपि भार्यया सहाधिकारे नैकवचनं विरुध्यते। तत् कस्य हेतोः? एको हि तत्र प्रधानमपरो गुणभूतः, न च गुणः संख्यामुपजनयितुं शक्नोति। तस्मान्न पत्न्याः प्राक् पुंसो भोजनम्" इति। एवञ्चानेन पत्नीभोजनानन्तरमेव पत्युर्भोजनं सिध्यतीति भावः। "गृह्याश्च देवताः" इत्यस्य व्याख्यामाह कुल्लूकभट्टः— "गृह्याश्च देवता इत्यनेन भूतयज्ञ उक्तः—अथवा 'देवान्' इत्यनेनैव भूतयज्ञस्यापि संग्रहः, गृहे भवा गृह्या देवताः पूजयित्वेति वासुदेवादिप्रतिकृतिपूजाविधानार्थत्वमस्य।" इति।

देवतार्चनविधिस्तु—

सन्ध्या स्नानं जपो होमो देवतातिथिपूजनम्।
आतिथ्यं वैश्वदेवञ्च षट् कर्माणि दिने दिने॥ इति।

पराशरसंहिता१।३९टीकायां सायणमाधवाचार्यैर्विस्तरेण प्रतिपादितः, स च तस्मादेवावगन्तव्यः, अत्र भाष्ये लेशतोऽपि तस्यानुल्लेखाद् न निरूपणे यत्नः कृत इति।

---

1. '-दद्य' नास्ति ख। 2. 'वाश्नीयात्' ख। 3. 'स्वस्तिभिर्दद्यादिति' ख। 4. 'गृह्यांश्च' ख। 5. 'भोजयित्वा' ख। 6. 'इति' नास्ति क-ग। 7. 'अत्राभिभोक्तृभोजनयो-' ग। 8. 'अन्नादग्र-' ख।

तथा च[1] पुराणे—

यथाशक्त्यन्नमुद्धृत्य पित्र्येण विधिना सदा ।
आहूय ब्राह्मणं[2] दद्यात् तत्कुले वा समर्पयेत् (A) । इति ।

अत्राप्युद्धृत्य दाने पूर्वोक्त[3]मेव प्रमाणं [4]तुल्यत्वात् करणस्य । पूर्वश्लोके यथाशक्ति-[5]शब्दश्रवणाच्च ।

तथा च कर्म[6]प्रदीपः—

[7]अप्युद्धृत्य यथाशक्त्या किञ्चिदन्नं यथाविधि ।
पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजः[7]* । (B) इति ।

---

A. कूर्मपुराणेऽपि—

उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ।
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत् ॥ इति उ० १८।११२ ।

B. कर्मप्रदीपः २।३।७ । अत्र द्विजे इति पाठमाहृत्य प्रकाशकारेणैवं व्याख्यातम् । "अथ स्थाल्या अन्नमुद्धृत्य पितृभ्यो मनुष्येभ्यश्च सनकादिभ्योऽतिथिद्विजे दद्यात् । उभयोः श्राद्धं कुर्यादित्यर्थः । एतेन मनुष्याणां नित्यश्राद्धं नास्तीति महार्णवप्रकाशोक्तं निरस्तम् । अत एव कार्ष्णाजिनिः—

दर्भांश्चैवासने दद्यान्न तु पाणौ कदाचन ।
पितृदेवमनुष्याणामेवं तृप्तिर्हि शाश्वती ॥
नित्यश्राद्धं पितॄणाञ्च मनुष्यैः सह गीयते ।

मनुष्यश्राद्धे ब्राह्मणस्य प्राङ्मुखत्वे यजमानस्य श्राद्धभोक्तृब्राह्मणसम्मुखावस्थानस्य औत्सर्गिकत्वात् न्यायप्राप्तमेव पश्चिमाभिमुखत्वम् । तथा च सामवेदीयषड्विंशब्राह्मणम्—मनुष्याणां वा एषा दिक् या प्रतीचीति । तथा ज्योतिष्टोमे श्रूयते—प्राचीं देवा अभजन्त, दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीम् असुराः, अपरेषामुदीचीं मनुष्या इति । अतिथ्यभावे भोज्यासम्भवे वा भिक्षादिकं दद्यात् तेनापि पितृयज्ञनिष्पत्तिर्भवति । तथा च शातातपः—भिक्षां वा...... ।

विष्णुपुराणञ्च— दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणे ।
इच्छया च नरो दद्यात् विभवे सत्यवारितम् ॥
इत्येतेऽतिथयः प्रोक्ताः प्रागुक्ता भिक्षवश्च ये ।
चतुरः पूजयेदेतान् नृयज्ञर्णात् प्रमुच्यते ॥" इति ।

---

1. 'च' नास्ति ख । 2. 'ब्राह्मणं' ख । 3. 'पूर्वमेव' ख । 4. 'तुल्यं कारणम्' ख । 5. 'शब्द' नास्ति क-ग । 6. '-प्रदीपे' ख । 7. चिह्नितांशस्थाने 'चाप्य कृत्येति पूर्वमेवोक्तम्' ख ।

ननु[1]द्धृत्य दाने कः पुनरुभयत्र विधिरिति ? उच्यते—'पितृभ्यः इदं स्वधे'ति मन्त्रेणाग्निसमीप उदकं निनयेत्। ब्राह्मणः सन्निहितश्चेत् पाणा[2]विति। 'मनुष्येभ्य इदं हन्ते'ति मनुष्ययज्ञे [3]इति। तथा चोक्तम्—

पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयन्।
हन्तकारं मनुष्येभ्यस्तदर्द्धे निनयेदपः। (A) इति

अथोद्धृत्य दानाशक्तौ कथमिति ? उच्यते। योऽयं प्रकृतः पित्र्यो बलिस्तेनैव पितृयज्ञनिवृत्तिर्भवतीति। [4]तथा चोक्तम्—

श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा(B) इति।

पितृयज्ञस्तु[5] तर्पणमिति वचनादुदकतर्पणमपि कस्याञ्चिदवस्थायां पितृयज्ञनिष्पत्तये भवतीति[6]। [7]तथा च मनुः[7]*—

A. कर्मप्रदीपः २।३।८। अत्र 'तदन्ते' इति पठित्वा श्लोकमिममित्थं विवृणोति प्रकाशकारः—"पितृभ्य इदम् इत्युक्त्वा तदन्ते स्वधाशब्दमुच्चारयेत्। मनुष्येभ्य इदमन्नमित्युक्त्वाऽन्ते हन्तशब्दम्। तदन्ते चापः क्षिपेदन्नोत्सर्गार्थमिति। यदा त्वतिथेरन्यो ब्राह्मणोऽस्ति तदा पार्वणेतिकर्त्तव्यतयैव बाधितेतरया श्राद्धं कर्त्तव्यम्। तथा च मत्स्यपुराणम्—

नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितम्।
अदैवं तद्धि विजानीयात् पार्वणं पर्वसु स्मृतम्॥ इति।

लघुहारीतः— नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डादिवर्जितम्।

एतच्च नित्यश्राद्धं षण्णाम्। 'अप्येकं···' इति वचनात् तथा सपिण्डीकरणोत्तरश्राद्धाधिकारेऽनेनाप्युक्तम्—'कर्षूसमन्वितम्' इत्यादि। (क-प्र० २४।१४)।

B. कर्मप्रदीपः २।३।४। प्रधानतर्पणमपि विशिनष्टि तत्रैव कात्यायनः—

यवाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄनथ।
नामान्ते तर्पयामीति आदावोमिति च ब्रुवन्॥

ब्रह्माणं, विष्णुं, रुद्रं, प्रजापतिं, वेदान्, छन्दांसि, देवान्, ऋषीन्, पुराणाचार्यान्, संवत्सरं, सावयवम्। देवीरप्सरसो, देवानुगान् नागान्, सागरान्, पर्वतान्, नगान्, सरितो, दिव्यान्, मनुष्यान्, इतरान्, यक्षान्, रक्षांसि, सुपर्णान्, पिशाचान्, पृथिवीम्, ओषधिम्, पशून्, वनस्पतीन् भूतग्रामं चतुर्विधमित्युपवीती। अथ प्राचीनावीती—यमं, यमपुरुषं, कव्यवालं, नलं, सोमं, यमम्, अर्यमणं, तथा अग्निष्वात्तान्, सोमपान्, बर्हिषदः, सकृत् सकृत्। अथ स्वान् पितॄन् मातामहादीनिति प्रतिपुरुषमभ्यसेत् ज्येष्ठभ्रातृ-श्वशुर-पितृव्य-मातुलांश्च मातामहपितृवंशौ च। ये चान्ये मत्त उदकमर्हन्ति तांस्तर्पयामीत्ययमवसानाञ्जलिः।

1. '-द्धृतदानेषु' ख। 2. '-वेव' ख। 3. 'इति' नास्ति ख। 4. 'तथा चोक्तम्' नास्ति ख। 5. 'तु' नास्ति क-ग। 6. 'इति' नास्ति ख। 7. चिह्नितांशो नास्ति ख।

छायां यथेच्छेच्छरदातपार्तः पयः पिपासुः क्षुधितोऽन्नमन्नम् ।
बालो जनित्रीं जननी च बालं योषित् पुमांसं पुरुषश्च योषाम् ॥
तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
विप्रादुदकमिच्छन्ति सर्वेऽभ्युदयकाङ्क्षिणः ॥
तस्मात् सदैव कर्त्तव्यमकुर्वन् महतैनसा ।
युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्बिभर्त्ति हि ॥ इति । क० प्र० ८-१० ॥

स्नानाङ्गतर्पणन्तु अस्मात् पृथगेव, तदुक्तं श्रीमद्गोभिलाचार्यैः—"ॐ नमो ब्रह्मणे इत्युपजाय चेत्यन्ते अग्निस्तृप्यत्विति च तृप्यतां वा । सर्वत्र सव्येनैतांस्तर्पयेत् । अथापसव्येन । राणायनि-शटीति । अथ कव्यवालादयो द्विधा यमाश्च । अथात्मीयांस्त्रीन् पितृंस्त्रीन् मातृंस्त्रो मातामहांश्च तत्पत्नीश्चेति पितृतर्पणम् । सनकादयश्च निवीतमिति मनुष्यधर्माः ।" इति छन्दोगस्नानसूत्रे तृतीयकण्डिकायाम् । रघुनन्दनेनाप्युक्तं स्नानाङ्गतर्पणम् "तेन पद्मपुराणीयस्नाने तदुक्तमेव तर्पणम्, तद् यथा—

ब्रह्माणं तर्पयेत् पूर्वं विष्णुं रुद्रं प्रजापतिम् ।
देवा यक्षास्तथा नागा गन्धर्वाप्सरसोऽसुराः ॥
क्रूराः सर्पाः सुपर्णाश्च तरवो जिह्मगाः खगाः ।
विद्याधरा जलाधारास्तथैवाऽऽकाशगामिनः ॥
निराहाराश्च ये जीवाः पापे धर्मे रताश्च ये ।
तेषामाप्यायनायैतद् दीयते सलिलं मया ॥

एतेनैकाञ्जलिरिति सर्वेषां मतम् ।

कृतोपवीती देवेभ्यो निवीती च भवेत् ततः ।
मनुष्यांस्तर्पयेद् भक्त्या ऋषिपुत्रानृषींस्तथा ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च ॥
देवान् सर्वानृषीन् सर्वांस्तर्पयेदक्षतोदकैः ।
अपसव्यं ततः कृत्वा सव्यं जानु च भूतले ॥
अग्निष्वात्तांस्तथा सौम्यान् हविष्मन्तस्तथोष्मपान् ।
सुकालिनो बर्हिषद आज्यपांस्तर्पयेत् ततः ॥

यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा ¹द्विजोत्तमः ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥ (A) इति ।

ननु पितृप्रभृती²नुद्दिश्य नित्यश्राद्धं देयमुत मातामहप्रभृती³निति ? ⁴षडप्युद्दिश्येति ब्रूमः । कुतः उदक⁵तर्पणेऽपि षण्णामेव ग्रहणात् ।

तथा च⁶ पुराणे—

अप्येकं भोजयेद् विप्रं षण्णामप्यन्वहं गृही ।
अतृप्ताः प्रहरन्त्यस्मै वज्रं पीते ⁷षडग्निणा(B) ॥ इति ।

---

तर्पयेच्च पितॄन् भक्त्या सतिलोदकचन्दनैः ।
दर्भपाणिस्तु विधिना हस्ताभ्यां तर्पयेत् ततः ॥
... ... ... ...
पित्रादीन् नामगोत्रेण तथा मातामहानपि ।
सन्तर्प्य भक्त्या विधिवदिमं मन्त्रमुदीरयेत् ॥
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः ॥
... ... ... ...

भीष्माय त्वसवर्णाय भीष्माहन्यां तर्पणं कार्यम् । तत्र मन्त्रः —

वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च ।
अपुत्राय ददाम्येतत् सलिलं भीष्मवर्मणे ॥

योगियाज्ञवल्क्यः—वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले ॥

अत्र मन्त्रमाह गोभिलः—

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥

अशक्तौ शङ्खः— आब्रह्मस्तम्बपर्यन्तं जगत् तृप्यत्विति ब्रुवन् ।
अञ्जलित्रितयं दद्यादेतत् संक्षेपतर्पणम् ॥" इति ।

A. मनुसंहिता ३।२८३ । अस्य कुल्लूकभट्टकृता व्याख्या—"पाञ्चयज्ञिकश्राद्धासम्भवे विधिरयम् । यच्च स्नानानन्तरमुदकतर्पणं द्विजः करोति तेनैव सर्वं नित्यश्राद्धफलं प्राप्नोति । द्विजोत्तमपदं द्विजपरम्" इति ।

B. प्रमाणत्वेनोपन्यस्तं वचनमिदं परिशिष्टप्रकाशकारेणाऽपि 'इति वचनात्' इत्युपोद्घातेन कर्मप्रदीपे (२।३।८) ।

---

1. 'समाहितः' क-ग, 'यथाविधि' ख । 2. 'प्रभृति मीन्' क-ग । 3. '-नपिची-निति' क-ग । 4. 'उच्यते षड-' क-ग । 5. '-तर्पणेऽपि' स्थाने '-यज्ञे' ख । 6. 'च' नास्ति ख । 7. 'षडग्नी' ख-ग ।

[1]तस्मात् षडपीति सिद्धम्। एवमयं (A) [2]चतुर्विधः पितृयज्ञः।

उक्ताः पञ्च महायज्ञाः, प्रकृतमधुनोच्यते।

---

A. चतुर्विध इति। तथा च—श्राद्धम्, पितॄनुद्दिश्य ब्राह्मणायान्नदानम्, पिण्डबलिः, तर्पणञ्चेति। तदिदं तर्पणं सर्वस्यामेव दशायामावश्यकं यथाशक्ति चान्यत्। इयान् परं विशेषो यदशक्तस्य तर्पणेनापि प्रत्यवायः परिहृतो भवति, समुच्चयेन सर्वेषां पक्षाणामुपदेशस्तु शक्तमस्येति। अत्र माधवाचार्यः "तत्र ते देवयज्ञ-भूतयज्ञ-पितृयज्ञास्त्रयोऽपि वैश्वदेवशब्देनोच्यन्ते यत्र विश्वे-देवा इज्यन्ते तद् वैश्वदेविकं कर्म। देवयज्ञे च 'विश्वेभ्यो देवेभ्यः स्वाहा' इति पठितत्वात् तत्रैतन्नाम मुख्यम्, येषान्तु शाखायां भूतयज्ञेऽप्ययं मन्त्रोऽस्ति तेषां तत्राप्येतन्मुख्यम्। पितृयज्ञे तु छत्रिन्यायेन तन्नामप्रवृत्तिः।" इति व्याचष्टे।

अथ पितृयज्ञस्थानीयनित्यश्राद्धप्रयोगः—

आचान्तः प्राणानायम्य प्राङ्मुखो देशकालौ सङ्कीर्त्य प्राचीनावीती...गोत्राणां पितृपितामह-प्रपितामहशर्मणां...गोत्राणां मातामह-प्रमातामह-वृद्धप्रमातामहानां शर्मणां च तृप्त्यर्थं पितृ-यज्ञभूतनित्यश्राद्धं करिष्ये इति संकल्प्योदङ्मुखं ब्राह्मणमेकं बहून् वोपवेश्य, एकब्राह्मणपक्षे 'वर्गद्वयपितृभ्यो नमः' इत्यर्चयेत्, अथवा तत्तन्नामगोत्रे उच्चार्य पित्रादिषड्भ्यः प्रत्येकेन दद्यात्। तत आचान्तमाचान्तान् वोपवेशयेत्, यथा 'वर्गद्वयपितृभ्य इदमासनं स्वधा'। अथवा चतु-र्थ्यन्तं तत्तन्नामगोत्रोच्चारणं पित्रे, पितामहायेत्यादि कृत्वा 'इदमासनं स्वधा' एवं दद्यात्, एवं गन्धाद्युपचारान् दत्त्वा भोजनपात्रमास्तीर्याऽन्नादिपरिवेषणं कृत्वा वक्ष्यमाणमासश्राद्धवत् परिषिच्य भोजनपात्रमालभ्यान्नदानं कुर्यात्। एतदन्तमेव नित्यश्राद्धं नोर्द्धम् इति।

अथ पितृदयितोक्तनित्यश्राद्धप्रयोगः—

शुचिं योग्यं ब्राह्मणं दक्षिणजङ्घायां गृहीत्वा ओमद्यामुकसगोत्रस्य पितुरमुकदेवशर्मणः... प्रपितामह...शर्मणो नित्यश्राद्धं कर्तुं त्वामहमामन्त्रये तत् प्रसीद। ॐ आमन्त्रितोऽस्मि प्रसन्नोऽस्मीत्युत्तरम्। एवं मातामहादीनामपि। ततः सनकादिमनुष्याणां चामन्त्रणं कर्तव्यम्। ततः स्वागतप्रश्नपाद्यार्घ्याचमनीयानि दत्त्वा गृहं प्रवेश्य 'ॐ सिद्धमिदमासनमत्रासत्वमि'ति बाहौ गृहीत्वा उत्तरामुखमुपवेशयेत्। प्राङ्मुखं मनुष्यश्राद्धार्थम्। ततः 'ॐ अमुकसगोत्रस्य पितुः... प्रपितामहस्यामुकदेवशर्मणो नित्यश्राद्धं युष्मास्वहं करिष्ये' इति पृच्छेत्। 'ॐ कुरुष्वे'त्युत्तरम्। एवमेव मातामहादीनां कुर्यात्। सनकादिपक्षे तु 'ॐ सनक-सनन्द-सनातन-कपिलासुरि-वोढु-पञ्च-शिखानां मनुष्याणां युष्मास्वहं करिष्ये' इति निवीती पश्चिमाभिमुखः प्रश्नं कुर्यात्। 'ॐ कुरुष्वे'त्युत्तरम्। ततो मूजलेन आद्दीयद्रव्यप्रोक्षणम्। रक्षार्थमुदकपात्रमेकस्मिन् स्थापयेत्। ततः—

---

1. 'एतस्मात्षडपीति सिद्धम्' ख। 2. 'चतुर्विधश्चः' ख।

ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति ॥

इति त्रिः पठेत् गायत्रीञ्च पठेत् । ततो ब्राह्मणहस्ते अर्घं दत्त्वा 'ॐ अमुकसगोत्र पितः...प्रपितामहामुकशर्मन्नेतत्ते कुशासनं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा' इति कुशासनमुत्सृज्य तत्र ब्राह्मणमुपवेशयेत् । पादयोश्च कुशान् दत्त्वा पुनर्हस्ते अर्घं दद्यात् । एवमेव मातामहादीनां कुशासनदानम् । ततः 'ॐ सनक...मनुष्याणामेतत्ते कुशासनं हन्त' इति मनुष्याणाम् । ततः 'ॐ अपहता' इत्यादिना तिलान् विकीर्य 'ॐ अमुकसगोत्र पितरमुकदेवशर्मन्नेष ते गन्धो ये चात्र त्वा... स्वधा' इति संकल्प्य 'एष वो गन्ध' इत्युपनीय ब्राह्मणार्चनम्, ततः प्रत्येकमेव पितामहादीनां पञ्चानां मनुष्याणाञ्च गन्धं सङ्कल्प्य 'एष वो गन्ध' इति प्रत्येकमुपनीय ब्राह्मणान् गन्धेनालभ्य तथैव 'एतत्ते पुष्पम्, एष ते धूपः, एष ते दीपः, एतत्ते यज्ञोपवीतम्, एतत्ते आच्छादनम्, ये चात्र...स्वधे'ति संकल्प्य मनुष्याणाञ्च हन्तकारेणोत्सृज्य यथासम्भवं प्रत्येकमुपनीय ततो 'गन्धादिदानमिदमच्छिद्रमस्त्वि'त्यवधारयेत् । ततोऽन्नमुपकल्प्य 'ॐ इदं विष्णुरि'त्यादिना द्विजाङ्गुष्ठमन्ने निवेशयेत् । 'ॐ अपहता' इति तिलान् विकीर्याऽऽचमनार्थं अर्घं दत्त्वा गायत्रीञ्च जपेत् । ततः 'ॐ मधुवाता' इत्यादिना ऋक्त्रयेणान्ने मधु दत्त्वा 'ॐ मधु मधु मध्वि'ति च जपेत् । ततः 'ॐ अमुकसगोत्र पितः...प्रपितामहामुकशर्मन्नेतत् तेऽन्नं सोपकरणं ये चात्र...स्वधा' इति संकल्प्य एवमेव मातामहादीनां कुर्यात् । ततः 'ॐ सनक..... पञ्चशिखानां मनुष्याणामेतत् तेऽन्नं हन्त' इत्युत्सृज्य 'यथासुखं वाग्यताः स्वदत' इति प्रत्येकं ब्रूयात् । ब्राह्मणाश्च वामहस्तविधृतभोजनपात्रा आजानुमध्ये बाहू कृत्वा कटिमङ्गमकृत्वा भुञ्जीरन् ।

ततो भुञ्जानेषु ब्राह्मणेषु स्तोत्रादीनि पठित्वा तृप्तिं ज्ञात्वा अन्नं हस्ते कृत्वा 'ॐ तृप्ताः स्थ' इति पृच्छेत् । 'ॐ तृप्ताः स्म' इति तैरुक्ते—

ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥
ॐ येषां न माता न पिता न बन्धुर्नैवान्नसिद्धिर्न तथाऽन्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत् प्रयान्तु लोकाय सुखाय तद्वत् ॥

इति मन्त्राभ्यां हस्तस्थमन्नं भूमौ विकिरेत् । 'शेषमन्नमप्यस्ती'ति पृच्छेत् । 'इष्टेभ्यो यथासुखं विनियुज्यताम्' इत्युत्तरम् । ततो ब्राह्मणानाचम्य 'ॐ सुप्रोक्षितमस्त्वि'ति भूमिं सिञ्चेत् । आचान्तेषु हस्ते पित्रादिक्रमेण 'ॐ शिवा आपः सन्तु, ॐ सौमनस्यमस्तु, ॐ अक्षतञ्चारिष्टञ्चास्तु' इति मन्त्रेण जलपुष्पयवान् दद्यात् । 'सन्तु, अस्त्वि'ति यथाक्रमं प्रत्युत्तरम् । ततः 'ॐ अमुकसगोत्रस्य पितुरमुकदेवशर्मणो दत्तमिदमन्नपानादिकमक्षय्यमस्तु' इति ब्राह्मणहस्ते अर्घं दद्यात् । 'अक्षय्यमस्त्वि'त्युत्तरम् । एवमेव पितामहादिपञ्चानां प्रत्येकं दद्यात् । सनकादीनाञ्च । ततः 'ॐ अघोराः पितरः सन्तु' इति पृच्छेत्, 'ॐ सन्त्वि'त्युत्तरम् । 'ॐ गोत्रं नो

## आसीन एवाग्नौ जुहुयात्, (A)आसीनः पितृभ्यो दद्यात् ॥१३॥

निगदव्याख्यातं सूत्रम् ॥

## यथोपपादमितरान् ॥ १४ ॥

इतरान् बलीन् यथोपपादं दद्यात्। यत्र यथोपपद्यते दातुं युज्यते तत्र तथैव दद्यात्, यथाऽधिवर्चादिप्रदेशस्याशुचित्वात् दूरस्थ एवोर्ध्वः प्रक्षिपेत्। एवं 'क्वचित् प्रह्वः'[1] क्वचिदासीन इति। एकत्र बलिहरणपक्षे च[2] सर्वानासीन एव दद्यादिति'[3] ॥ किञ्च—

## स्वयं त्वेवैतान् यावद् वसेद् बलीन् हरेत् ॥ १५ ॥

एतान् बलीन् यावद् गृहेषु वसेत् तावत् स्वयमेव हरेत्। बलिग्रहणं सर्वत्र

---

वर्धताम्' इति वदेत्। 'ॐ वर्धतामि'त्युत्तरम्। ततः 'ॐ अद्यामुकसगोत्रायामुकदेवशर्मणे ब्राह्मणाय तुभ्यम्, अमुकसगोत्राणां पितृपितामहप्रपितामहानाममुकदेवशर्मणां कृतैतन्नित्यश्राद्धप्रतिष्ठार्थं दक्षिणामिदं रजतं मूल्यं वा दातुमहमुत्सृज्ये'। 'ॐ स्वस्ती'त्युत्तरम्। एवमेव मातामहादीनां जनकादिमनुष्याणाञ्च दक्षिणादानम्।

ततः—

ॐ दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो मा विगमद् बहु देयञ्च नो अस्तु।
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन। (गो० श्रा० २।३७)

इति पठेत् 'सन्त्वि'त्युत्तरम्। ततः 'ॐ देवताभ्य' इति त्रिः पठेत्। ततः—

ॐ वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः। (गो० श्रा० २।३९)

इति विसर्जयेत्। ततोऽभ्यस्थान् ब्राह्मणान्,

ॐ आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे।
आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥

इत्यासीमान्तमनुव्रज्य प्रदक्षिणीकृत्य (गो० श्रा० २।४०) अवजिघ्र कृतार्थीकृत इत्यनेन प्रियवचनमुक्त्वा प्रस्थापयेत्। ततो वामदेव्यं गीत्वा गृहं प्रविशेत्। इति।

A. सत्यव्रतसामश्रमिणो तु 'आसीन एवाग्नौ जुहुयात्'—इत्येकं सूत्रं ततः, 'आसीनः पितृभ्यो दद्यात्, यथोपपादमितरान्' इति च सूत्रान्तरम् ॥ इति।

---

1. 'क्वचित् प्रह्वः' नास्ति ख। 2. 'च' नास्ति ख। 3. 'इति' नास्ति ख।

होमादीनामपि प्रदर्शनार्थं द्रष्टव्यम्। तु-शब्दः स्वयंकृते कर्मणि फलविशेष-प्रदर्शनार्थः। किञ्च—

## अपि वाऽन्यो ब्राह्मणः ॥ १६ ॥

अपि वा, [1]अथवा अन्यः कश्चिद् ब्राह्मणो बलिहरणादि कुर्यात्(A)। एतच्च प्रोषितस्याऽऽतुरस्य वा द्रष्टव्यम्। इतरथा पूर्वसू[2]त्रस्यानर्थक्यं स्यात्। अथवा क्षत्रिय-विषयमेतत्। तथा च मनुः—

पुरोहितञ्च कुर्वीत वृणुयादेव [3]च द्विजम्।
[4]तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च ॥ (B) इति।

किञ्च—

## दम्पती एव ॥ १७ ॥

दम्पती स्त्रीपुंसौ, [5]तावेव बलीन् [6]हरेतामिति। किञ्च—

## इति गृहमेधिव्रतम् ॥ १८ ॥

[7]इत्येतदहरहः पञ्चमहायज्ञानुष्ठानं[7]* गृहमेधिनोर्दम्पत्योर्व्रतं कर्म "गृहमेधि-व्रतम्[8]*। [9]मेधो यज्ञः, गृहेषु वसतोर्मेधाः पञ्च महायज्ञाः ययोर्दम्पत्योर्विधीयन्ते ताविमौ गृहमेधिनौ। एवं व्रतभङ्गदोषसङ्गान्महायज्ञनिवृत्तेः पूर्वं दम्पत्योर्भोक्तुं न युक्तम्। तथा च मनुः— भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि।

भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्पती ॥(C)

इति[10]।

---

A. गौणकर्त्तॄनाहाऽत्रिः—

पुत्रो भ्राताऽथवा ऋत्विक् शिष्य-श्वशुर-मातुलाः।
पत्नी-श्रोत्रिय-याज्याश्च दृष्टास्तु बलिकर्मणि ॥ इति।

गृहे कर्त्रन्तराभावे प्रवसता स्वयमेव कर्तव्यमित्याह बौधायनः—

प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते।
पञ्चानां महतामेषां स यज्ञैः सह गच्छति ॥

इति पराशरसंहिताटीकायां माधवाचार्यैरुक्तम्।

B. मनुसंहिता ७।७८। अत्र 'चर्त्विजः' इति निर्णयसागरमुद्रितः पाठः।

C. मनुसंहिता ३।११६ मुद्रितपुस्तके 'भुक्तवत्स्वथ' इति पाठः। अस्य कुल्लूकभट्टोक्ता

---

1. 'अथवा' नास्ति ख। 2. '-स्यानर्थ-' क-ग। 3. 'ऋत्विजः' ख। 4. 'तस्य' ख। 5. 'तावेतान्' ख। 6. 'हरेयाताम्' ख। 7. चिह्नितांशस्थाने 'इत्येतत् पञ्चमहायज्ञानामहरह-रनुष्ठान'' ख। 8. नास्ति ख। 9. 'मेधा यज्ञाः' ख। 10. 'वचनात्' इत्यधिकम् ख।

व्याख्या 'विप्रेष्वतिथिषु स्वेषु ज्ञातिषु भृत्येषु दासादिषु कृतभोजनेषु ततोऽन्नादवशिष्टं भार्यापती पश्चादश्नीयाताम्' इति। प्रसङ्गतो भोजनविषये किञ्चिदुदाह्रियते सायणमाधवाचार्यकृतपराशर-संहिताटीकातः—

"भोजने इतिकर्तव्यतामाह बौधायनः—

उपलिप्ते समे स्थाने शुचौ श्लक्ष्णासनान्विते।
चतुरस्रं त्रिकोणं वा वर्तुलं वाऽर्द्धचन्द्रकम्।
कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्॥ इति।

शङ्खोऽपि—

आदित्या वसवो रुद्रा ब्रह्मा चैव पितामहः।
मण्डलान्युपजीवन्ति तस्मात् कुर्वीत मण्डलम्॥ इति।

व्यासोऽपि—

पञ्चार्द्रो भोजनं कुर्यात् प्राङ्मुखो मौनमास्थितः।
हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता॥ इति।

आश्वमेधिकेऽपि—

आर्द्रपादस्तु भुञ्जीयात् प्राङ्मुखश्चाऽऽसने शुचौ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः। इति।

तच्च भोजनं शुद्धपात्रे कर्तव्यम्। तदुक्तं कूर्मपुराणे—

प्रशस्तशुद्धपात्रेषु भुञ्जीताऽकुपितो द्विजः। इति।

प्रशस्तानि च पात्राणि पैठीनसिना दर्शितानि—

सौवर्णे राजते ताम्रे पद्मपत्रपलाशयोः।
भाजने भोजने चैवाऽतिरात्रफलमश्नुते॥
एक एव तु यो भुङ्क्ते विमले कांस्यभाजने।
चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम्॥ इति।

तत्र पद्मपत्र-पलाशपत्रभोजनं गृहिव्यतिरिक्तविषयम्—

पलाश-पद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत्।
ब्रह्मचारियतीनाञ्च चान्द्रायणफलं लभेत्। इति व्यासस्मरणात्।

कांस्यपात्रं तु गृहस्थैकविषयम्, यत्यादीनां तन्निषेधात्। तदाह प्रचेताः—

ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम्।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्॥ इति।

तच्च पात्रं भूमौ स्थापनीयम्, यदुक्तं कूर्मपुराणे—

पञ्चार्द्रो भोजनं कुर्याद् भूमौ पात्रं निधाय तु।
उपवासेन तत्तुल्यं मनुराह प्रजापतिः॥ इति।

तत्र स्नात्वा प्राणाहुतिर्वक्तव्या, पश्चात् तु पत्निकमारोप्य भोक्तव्यम्।

तदाह व्यासः—

न्यस्य पात्रं तु भुञ्जीत पञ्चग्रासान् महामुने।
शेषमुद्धृत्य भोक्तव्यं श्रूयतामत्र कारणम्॥
पितॄणां पात्रसंस्पर्शः पादचैकजलस्तथा।
छलेन भुङ्क्ते विप्रो हि पितरं तु न मुच्यते॥ इति।

पैतृकभोजने भूमिपात्रप्रतिष्ठापनं न दोषणीयमित्यर्थः।

उक्तपात्रनिहितमन्नं नमस्कुर्यात्, तदुक्तं महापुराणे—

अन्नं दृष्ट्वा प्रणम्याऽऽदौ प्राञ्जलिः कथयेत् ततः।
अस्माकं नित्यमस्त्वेतदिति भक्त्याऽथ वन्दयेत्॥ इति।

वन्दनानन्तरं कृत्यमाह गोभिलः—

अथातः प्राणाहुतिकल्पो व्याहृतिभिर्गायत्र्याऽभिमन्त्र्य 'ऋतं त्वा सत्येन परिषिञ्चामि' इति सायं 'सत्यं त्वर्तेन परिषिञ्चामि' इति प्रातः।

अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम्।

'त्वं ब्रह्मा त्वं प्रजापतिर्ब्रह्म भूर्भुवः स्वरोम् अमृतोपस्तरणमसि स्वाहा' इत्यपः पीत्वा दशहोतारं मनसा'ऽनुद्रुत्य' तद्वत् पञ्च ग्रासान् गृह्णीयात्—

'प्राणाय स्वाहा' इति गार्हपत्यमेव तेन जुहोति।
'अपानाय स्वाहा' इत्यन्वाहार्यपचनमेव तेन जुहोति।
'व्यानाय स्वाहा' इत्याहवनीयमेव तेन जुहोति।
'उदानाय स्वाहा' इति सभ्यमेव तेन जुहोति।
'समानाय स्वाहा' इत्यावसथ्यमेव तेन जुहोति।

एते पञ्च मन्त्राः प्रणवाद्याः कर्तव्याः। तथा च शौनकः—

स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्रास्तु वायवः।
जिह्वयैव ग्रसेदन्नं दशनैस्तु न संस्पृशेत्॥ इति।

जिह्वाग्रसने विशेष आश्वमेधिके दर्शितः—

यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप।
तथा समाहितः कुर्यात् प्राणाहुतिमतन्द्रितः॥ इति।

प्राणाहुतिष्वङ्गुलिनियममाह शौनकः—

तर्जनीमध्यमाऽङ्गुष्ठैः प्राणाहुतिर्भवेत्।
मध्यमाऽनामिकाङ्गुष्ठैरपाने जुहुयात् ततः।

कनिष्ठाऽनामिकाऽङ्गुष्ठैर्व्याने तु जुहुयाद्धविः।
तर्जनीं तु बहिः कृत्वा उदाने जुहुयात् ततः॥
समाने सर्वहस्तेन समुदायाहुतिर्भवेत्।

परिषेचनानन्तरभाविविशेषो भविष्यपुराणे दर्शितः—

भोजनात् किञ्चिदन्नाग्रं धर्मराजाय वै बलिम्।
दत्त्वाऽथ चित्रगुप्ताय प्रेतेभ्यश्चेदमुच्चरेत्॥
यत्र क्वच संस्थानां क्षुत्तृष्णोपहतात्मनाम्।
प्रेतानां तृप्तयेऽक्षय्यमिदमस्तु यथासुखम्॥ इति।

कूर्मपुराणेऽपि—

महाव्याहृतिभिस्त्वन्नं परिधायोदकेन तु।
अमृतोपस्तरणमसीत्यापोशानक्रियां चरेत्॥ इति।

बौधायनस्तु सर्वमेतत् संगृह्याह—

सर्वावश्यकावसानेषु प्रक्षालितपाणिपादोऽप आचम्य शुचौ संवृते देशे प्राङ्मुख उपविश्य उद्धृतमाह्रियमाणं भूर्भुवः स्वरोमित्युपस्थाय वाचं यच्छेत्। न्यस्तमन्नं महाव्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य सव्येन पाणिनाऽविमुञ्चन् अमृतोपस्तरणमसि इति पुरस्तादपः पीत्वा पञ्चान्नेन प्राणाहुतीर्जुहोति। श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि, शिवो मा विशाप्रदाहाय प्राणाय स्वाहेति। अपाने व्याने उदाने समाने निविष्ट इत्यादिना यथालिङ्गमनुषङ्गः। एवं पञ्चान्नेन प्राणाहुतीर्हुत्वा तूष्णीं भूयो व्रतयेत्। प्रजापतिं मनसा ध्यायन् नान्तरा वाचं विसृजेत्।

अथाप्युदाहरन्ति—

आसीनः प्राङ्मुखोऽश्नीयाद् वाग्यतोऽन्नमकुत्सयन्।
अस्कन्दयंस्तन्मनाश्च भुक्त्वाऽग्निं समुपस्पृशेत्॥ इति।

सर्वभक्ष्यापूपकन्दमूलफलमांसानि दन्तैर्नावद्येत्। नातिसुहितः। 'अमृतापिधानमसि' इत्युपरिष्टादपः पीत्वाऽऽचान्तो हृदयदेशमभिमृशति 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्वेति। पुनराचम्य दक्षिणपादाङ्गुष्ठे पाणिं निःस्रावयति—

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्॥ इति।

हुतानुमन्त्रणमूर्ध्वहस्तः समाचरेत्। श्रद्धायां प्राणे निविश्यामृतं हुतं प्राणमन्नेनाऽऽप्यायस्वेति पञ्च। ब्रह्मणि आत्माऽमृतत्वायेत्यात्मानमक्षरेण योजयेत्। सर्वक्रतुयाजिनामात्मयाजी विशिष्यते। (बौ० सू० २।७।१२।२-१९) इति।

विष्णुपुराणे—

अश्नीयात् तन्मना भूत्वा पूर्वं तु मधुरं रसम्।
लवणाम्लौ तथा मध्ये कटुतिक्तांस्ततः तु।

प्राग् द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः ।
अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥ इति । (वि० ३।११।८३-८४)।

भोजने कवलसंख्यामाहाऽऽपस्तम्बः—

अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।
द्वात्रिंशत् तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥ इति ।

आश्वमेधिकेऽपि—

वक्त्रप्रमाणपिण्डांश्च ग्रसेदेकैकशः पुनः ।
वक्त्राधिकं तु यत् पिण्डमात्मोच्छिष्टं तदुच्यते ॥
पिण्डावशिष्टमन्नं च वक्त्रनिःसृतमेव च ।
अभोज्यं तद्विजानीयाद् भुक्त्वा चान्द्रायणं चरेत् ॥
सदा चात्यशनं नाद्याद् नातिहीनं च कर्हिचित् ।
यथाऽन्नेन व्यथा न स्यात् तथा भुञ्जीत नित्यशः ॥ इति ।

वृद्धमनुः—

पीत्वाऽपोऽशनमश्नीयात् पात्रदत्तमगर्हितम् ।
भार्या-भृतक-दासेभ्य उच्छिष्टं शेषयेद् द्विजः ॥ इति ।

उच्छिष्टशेषणं तु घृतादिव्यतिरिक्तविषयम् ।

तदाह पुलस्त्यः—

भोजनं तु न निःशेषं कुर्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दधि-सक्त्वाज्य-पलल-क्षीर-मध्वपः ॥ इति ।

एतच्च भोजनं सायंप्रातश्च कर्त्तव्यम् ।

तदुक्तं मनुना—

सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ इति ।

गौतमः—

सायंप्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत ॥ इति (गौ० स्मृ० ९।४) ।

ब्रह्मपुराणे—

नाजीर्णे भोजनं कुर्यात् कुर्यान्नातिबुभुक्षितः ।
हस्त्यश्व-रथ-यानोष्ट्रमास्थितो नैव भक्षयेत ॥
श्मशानाभ्यन्तरस्थो वा देवालयगतोऽथवा ।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ॥
नार्द्रवासा नार्द्रशिरा न चायज्ञोपवीतवान् ।
न प्रसारितपादस्तु पादारोपितपाणिमान् ॥

न बाहुसक्थिसंस्थश्च न च पर्यङ्कमास्थितः ।
न वेष्टितशिराश्चापि नोत्सङ्गकृतभाजनः ।
नैकवस्त्रो दुष्टमध्यो नोपानत्कः सपादुकः ॥
न चर्मोपरिसंस्थश्च चर्मावेष्टितपार्श्ववान् ।
ग्रासशेषं न चाश्नीयात् पीतशेषं पिबेन्न च ॥
शाकमूलफलेक्षूणां दन्तच्छेदैर्न भक्षयेत् ।
बहूनां भुञ्जतां मध्ये न चाश्नीयात् त्वरान्वितः ॥
वृथा न विसृजेदन्नं नोच्छिष्टः कुत्रचिद् व्रजेत् ॥ इति ।

बृहस्पतिः—

न स्पृशेद् वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥ इति ।

उशना—

नादत्त्वा मिष्टमश्नीयाद् बहूनां चैव पश्यताम् ।
नाश्नीयुर्बहवश्चैव तथा नैकस्य पश्यतः ॥ इति ।

आदित्यपुराणे—

नोच्छिष्टो ग्राहयेदाज्यं यच्चोच्छिष्टं च सन्त्यजेत् ।
शूद्रभुक्तावशिष्टन्तु नाद्याद् भाण्डस्थितं त्वपि ॥ इति ।

कूर्मपुराणेऽपि—

नार्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् ।
न भिन्नभाजने चैव न भूम्यां न च पाणिषु ।
नोच्छिष्टो घृतमादद्यान्न मूर्धानं स्पृशन्नपि ॥
न ब्रह्म कीर्तयित्वाऽपि न निःशेषं न भार्यया ।
नान्धकारे न सन्ध्यायां न च देवालयादिषु ॥ इति (कू० २।१९।२०-२२)

याज्ञवल्क्योऽपि—

न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ इति ।

यत्तु— ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन ।
न तस्य दोषमिच्छन्ति नित्यमेव मनीषिणः ॥
उच्छिष्टमितरस्त्रीणां योऽश्नीयाद् ब्राह्मणः क्वचित् ।
प्रायश्चित्ती स विज्ञेयः संकीर्णो मूढचेतनः ॥ इति ।

न तत् सर्वथा दोषाभावप्रतिपादनपरम् । कदाचनेति वचनात् ।

अत एवाऽऽदित्यपुराणम्—

ब्राह्मण्या भार्यया सार्धं क्वचिद् भुञ्जीत चाध्वनि ।
असवर्णस्त्रिया सार्धं भुक्त्वा पतति तत्क्षणात् ॥ इति ।

वृद्धमनुरपि—

न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना ।
नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत् ॥
पिबतो यत् पतेत् तोयं भाजने मुखनिःसृतम् ।
अभोज्यं तद् भवेदन्नं भोक्ता भुञ्जीत किल्बिषम् ॥
पीतावशेषितं तोयं ब्राह्मणो न पुनः पिबेत् ।
पिबेद् यदि हि सम्मोहाद् द्विजश्चान्द्रायणं चरेत् ॥ इति ।

अत्रिः—

तोयं पाणिनखस्पृष्टं ब्राह्मणो न पिबेत् क्वचित् ।
सुरापानेन तत् तुल्यमित्येवं मनुरब्रवीत् ॥ इति ।

शातातपः—

अकृत्य वामहस्तेन यत्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥ इति ।

आश्वमेधिकेऽपि—

पानीयानि पिबेद् येन तत् पात्रं द्विजसत्तमः ।
अनुच्छिष्टं भवेत् तावद् यावद् भूमौ न निक्षिपेत् ॥ इति ।

* * * * * *

गोभिलः—

एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने ।
यद्येकोऽपि त्यजेत् पात्रं नाश्नीयुरितरेऽप्यनु ॥
मोहात्तु भुङ्क्ते यस्तत्र तस्तसान्तपनं चरेत् ।
भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत् ॥
भोजने विघ्नकर्ताऽसौ ब्रह्महाऽपि तथोच्यते ॥ इति ।

वाग्यमनं प्रक्रम्य पुराणे—

आस्यतो वरुणः शक्तिं जुह्वतोऽग्निः श्रियं हरेत् ।
भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम् ॥ इति ।

यमत्रिणोक्तम्—

मौनव्रतं महाकष्टं हुङ्कारेणापि नश्यति ।
तथा सति महान् दोषस्तस्मात् तन्नियतश्चरेत् ॥ इति ।

तदेतत् काम्यमौनाभिप्रायम् । एतच्च पञ्चग्रासावधीगृधिषयम् ।

तथा च बृहन्मनुः—

अनिन्दन् भक्षयेन्नित्यं वाग्यतोऽन्नमकुत्सयन् ।
पञ्चग्रासान्महामौनं प्राणाद्याप्यायनं महत् ॥ इति ।

आश्वमेधिकेऽपि—

मौनी वाऽप्यथवाऽमौनी प्रहृष्टः संयतेन्द्रियः ।
भुञ्जीत विधिवद् विप्रो न चोच्छिष्टानि चर्वयेत् ॥ इति ।

बृहस्पतिरपि—

अप्येकपङ्क्त्यां नाश्नीयाद् ब्राह्मणैः स्वजनैरपि ।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥
एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम् ।
सर्वेषां तत् समं तावद् यावत् पङ्क्तिर्न भिद्यते ॥ इति ।

पङ्क्तिभेदप्रकारमाह स एव—

अग्निना भस्मना चैव स्तम्भेन सलिलेन च ।
द्वारेण चैव मार्गेण पङ्क्तिभेदो बुधैः स्मृतः ॥ इति ।

यमोऽपि—

उदकं च तृणं भस्म द्वारं पन्थास्तथैव च ।
एभिरन्तरितं कृत्वा पङ्क्तिदोषो न विद्यते ॥ इति ।

तथा च मनुः—

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥ इति (२।५२) ।

गोभिलस्तु दक्षिणामुखत्वं प्रतिषेधति—

प्राङ्मुखोऽवस्थितो विप्रः प्रतीच्यां वा यथासुखम् ।
उत्तरं पितृकार्ये तु दक्षिणां तु विवर्जयेत् ॥ इति ।

कूर्मपुराणेऽपि—

अमृतापिधानमसीत्युपरिष्टादपः पिबेत् ।
आचान्तः पुनराचामेदयं गौरिति मन्त्रतः ॥
द्रुपदां वा त्रिरावृत्य सर्वपापप्रणाशिनीम् ।
प्राणानां ग्रन्थिरसीत्यालभेद् हृदयं ततः ॥
आचम्याङ्गुष्ठमात्रेण पादाङ्गुष्ठे तु दक्षिणे ।
निःस्रावयेद्धस्तजलमूर्ध्वहस्तः समाहितः ॥

या तु 'बालापत्या रोगिणी गर्भिणी वा स्त्री स्यात्[1]* तस्याः पूर्वभोजने[2]ऽपि न दोषः। तथा च मनुः—

सुवासिनीः कुमारांश्च रोगिणो गर्भिणीः [3]स्त्रियः।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन्(A) ॥ इति।

---

हुतानुमन्त्रणं कुर्यात् श्रद्धायामिति मन्त्रतः।
अथाक्षरेण स्वात्मानं योजयेद् ब्रह्मणेति हि ॥
सर्वेषामेव यागानामात्मयागः परः स्मृतः।
योऽनेन विधिना कुर्यात् स याति ब्रह्मणः पदम् ॥" इति कू० २।१९।

विशेषमाहाह्निकाचारतत्त्वे रघुनन्दनः—

"विष्णुपुराणे—

नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः।
बहिःस्था वायवः पञ्च तेषां भूमौ प्रदीयते ॥
अदत्त्वा बाह्यवायुभ्यः प्राणादिभ्यो न होमयेत्।

इति शिष्टपठितवचनान्नागादिभ्यो बलिदानमिति प्राचीनाचारः" इति।

अथ सुब्रह्मण्याग्निहोत्रिप्रोक्तो भोजनप्रयोगः—

पाणी पादौ मुखञ्च प्रक्षाल्याऽऽचम्य प्राङ्मुखोऽन्नानि भुञ्जीत। गोमयाद्युपलिप्ते शुचौ देशे मण्डलिकां विधाय भोजनपात्रं संस्थाप्यान्नपरिवेशने जाते गायत्र्याऽन्नं प्रोक्ष्य 'सत्यं त्वर्तेन परिषिञ्चामी'ति प्रातः, 'ऋतं त्वा परिषिञ्चामी'ति सायं परिषिञ्चेत्। ततोऽमृतोपस्तरणमसि स्वाहेति जलं पीत्वा प्राणाहुतीः कुर्यात्। अङ्गुष्ठतर्जनीमध्यमाभिः अन्नं मुखे जुहुयात् ॐ प्राणाय स्वाहा। अङ्गुष्ठमध्यमानामिकाभिः ॐ व्यानाय स्वाहा। अङ्गुष्ठानामिकाकनिष्ठाभिः ॐ अपानाय स्वाहा। सर्वाभिः ॐ समानाय स्वाहा। तर्जनीं विनाऽन्याभिः ॐ उदानाय स्वाहा। ततो वाग्यतो यथासुखमन्नमश्नीयात्। ततोऽमृतापिधानमसि स्वाहा इत्यपः पीत्वाऽवशिष्टजलं पितृतीर्थेन भूमौ दद्यात्। ततो मृज्जलाभ्यां मुखहस्तपादप्रक्षालनं कृत्वा द्विराचम्य, "प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः। तेनान्नेनाप्यायस्व" इति हृदयं स्पृष्ट्वा परमात्मानं ध्यायेत् ॥ इति।

A. मनुसंहिता ३।११४। अत्र 'कुमारीश्च' इति कुल्लूकभट्टसम्मतः पाठः। 'अतिथिभ्योऽन्वगेवैतान्' इति च मेधातिथिसम्मतः पाठः।

---

1. 'बालाऽपत्यरोगेण गर्भेण वाऽशक्ता स्यात्' क। 2. 'अपि' नास्ति ख। 3. '-तथा' क-ग।

गौतमश्च—

भोजयेत् पूर्वमतिथिभ्यः[1] कुमारव्याधितगर्भिणीसुवासिनीस्थविरान् [2]चैव कर्मकरान् [3]जघन्यांश्च(A) ॥ इति ।

दम्पत्योर्बलिहरणमुक्तम्, तत्र कस्मिन् काले पत्नी बलिं हरेत् कस्मिंश्च पुमानित्यत[4] आह—

## स्त्री ह सायं प्रातः पुमानिति ॥ १६ ॥

[5]सालिङ्गाद्(?) विनिवेशः । सायं रात्रौ स्त्री बलिं हरेत्, प्रातः अहनि पुमानिति । [6]ह इति निपातः । एवञ्च तावन्मात्रं [7]पत्नीमध्यापयेत् । अथवा—

निरिन्द्रिया [8]ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः । (B)

इति वचनात् अमन्त्र[9]कमेव पत्नी बलिं हरेदिति ।

तथा च मनुः—

सायन्त्वन्नस्य [10]सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् । (C) इति ।

---

A. गौतमसंहितापञ्चमाध्याये । अत्र संवादि प्रमाणमुक्तं विष्णुपुराणेऽपि—

ततः सुवासिनी-दुःखि-गर्भिणी-वृद्ध-बालकान् ।
भोजयेत् संस्कृतान्नेन प्रथमं तु परं गृही ॥
अभुक्तवत्सु चैतेषु भुञ्जन् भुङ्क्ते सुदुष्कृतम् ।
मृतश्च गत्वा नरकं श्लेष्मभुग् जायते नृप ॥ इति वि० पु० ३।११।६८-६९ ।

मार्कण्डेयपुराणेऽपि—

पूजयित्वाऽतिथीनिष्टाञ् ज्ञातीन् बन्धूंस्तथाऽर्थिनः ।
विकलान् बालवृद्धांश्च भोजयेदातुरांस्ततः ॥
वाञ्छेत् क्षुत्तृट्परीतात्मा यश्चान्योऽन्नमकिञ्चनः ।

मा० पु० २९।३७-३८ इति ।

B. वचनमिदं बौधायनस्मृतौ द्वितीयप्रश्नस्य द्वितीयाध्याये (५३) उपलभ्यते पाठभेदेन । स च पाठः "निरिन्द्रिया ह्यदायाश्च स्त्रियो मता इति श्रुतिः ।" इति ।

C. मनुसंहिता ३।१२१ श्लोकस्य पूर्वार्धमेतत्, उत्तरार्धन्तु "वैश्वदेवं हि नामैतत् सायंप्रातर्विधीयते" इति ।

---

1. 'भ्यः' नास्ति क-ग । 2. 'चैव कर्मकरान्' नास्ति क-ग । 3. 'जघन्यांश्चेति' ग । 4. 'यत आह' नास्ति क-ग । 5. 'सा व्याख्याद विनिवेशः' ख । 'सायंव्याद' ग । 6. 'ह इति' नास्ति ख-ग । 7. 'पत्न्यध्यापनं कार्यम्' इति ख । 8. '-ह्यमन्त्राश्च' ख । 9. '-क एव' ख । 10. 'सिद्धार्थे' ख ।

अत्र कश्चिद् भाष्य[1]कार आह। पाकसंस्कार एवायं वैश्वदेवहोम इति, तदयुक्तम् ; कुतः ? गौतमेन पुरुष[2]संस्कारमध्ये पठितत्वात्। (A)"सहधर्मचारिणीसंयोगः पञ्चानां यज्ञाना-मनुष्ठानम् "देव-पितृ-मनुष्य-भूत-ब्रह्मणाम्" इति। तस्मादुभयसंस्कार इति युक्तम् (B)।

---

A. यदुक्तं गौतमसंहितायामष्टमाध्याये—

"गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरणान्नप्राशन-चौडोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषा अष्टका-पार्वणश्राद्ध-श्रावण्याग्रहायणी-चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्र-दर्शपौर्णमासावाग्रहणं चातुर्मास्यनिरूढपशुबन्ध-सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टो-मोऽत्यग्निष्टोम उक्थः षोडशि-वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत संस्कारा इति।

B. विषयमिममधिकृत्याह पराशरसंहिताटीकायां माधवाचार्यः—

"यद्यपि सायंप्रातः सिद्धस्य हविष्यस्य जुहुयात्" ( आश्व० गृ० सू० १।२।१ ) इति वचनेन वैश्वदेवस्यान्नसंस्कारता प्रतीयते तथापि पुरुषार्थत्वमेवाभ्युपेयम्, 'तानेतान् यज्ञानहरहः कुर्वीत ( आश्व० गृ० सू० ३।१।४ ) इति वाक्यशेषे तदवगमात्। न चोभयार्थत्वं शङ्कनीयम्, परस्परविरोधात्। अन्नसंस्कारत्वे ह्यन्नस्य प्राधान्यं वैश्वदेवस्य गुणता, पुरुषार्थत्वे तु तद्विपर्ययः, तथा च सति एकस्यैव युगपत् प्राधान्यं गुणत्वं च विरुध्येयाताम् ; तर्ह्यस्तु अन्नसंस्कारतैव, मा भूत् पुरुषार्थत्वमिति चेत्, तन्न 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इति मनुना पुरुषार्थत्व-स्मरणात्। यत्तु 'सिद्धस्य हविष्यस्य जुहुयात्' इत्युदाहृतं तदन्यथाऽप्युपपद्यते ; तत्र जुहुयादित्युत्-पत्तिविधिः, सिद्धस्य हविष्यस्येति विनियोगः तानेतानहरहः कुर्वीतेत्यधिकारः। किञ्च अन्नसंस्कार-पक्षे प्रतिपाकमावृत्तिः प्रसज्येत 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायात्, तस्मात् पुरुषार्थत्वमेव न्याय्यम्। अत एव गृह्यपरिशिष्टेऽभिहितम्—'प्रोषितोऽप्यात्मसंस्कारं कुर्यादेवाविचारयन्' इति। गोभिलोऽपि यद्येकस्मिन्...बलिं कुर्वीत" इति। अयमर्थः नानाद्रव्यकान्नपाके पुनः पुनरन्न-पाकेऽपि बहूनामविभक्तानां भ्रात्रादीनां पृथक् पृथक् पाकेऽपि एकस्मादेव द्रव्यात् सकृदेव गृहपति-पाकादेव होतव्यमिति" तदनेनायं केवलं पुरुषसंस्कारतैवास्य व्यवस्थापयतीति। कुल्लूकभट्टोऽपि मनुसंहितोक्त-'वैश्वदेवे त्वि'त्यादिकारिकाव्याख्यायाम्—"बलिनिषेधादन्नसंस्काराभावो वैश्व-देवस्यावगम्यते। अन्नसंस्कारपक्षे कथमसंस्कृतान्नभोजनमनुजानीयात्" इति॥ तर्कालङ्कारो-ऽपि "तस्माद् वैश्वदेवादिकमन्नार्थमुभयार्थं वेत्यसङ्गता कल्पना" इति निर्णीतवान्। वस्तु-तस्तु वैश्वदेवादिनाऽन्नस्य गुणभावेनापि संस्कार्यत्वमस्त्येवेति नायं भाष्यभागोऽनुपपन्न इति सुधीभिरवगन्तव्यमिति॥

---

1. '-कदाह' क-ग। 2. '-संस्काराणां' ख। 3. 'तद देव-' ख।

[1]यथैतदुक्तम्—

प्रातः पाकेनैव यदि सायमश्नीयात् ततो रात्रौ न पुनर्वैश्वदेवं कुर्यादिति।

[2]एतदप्ययुक्तमेव [3]तेनोक्तम्। कुतः? उभयत्रा[4]वश्यत्वेन वैश्वदेवस्य विधानात्।

तथा च कर्मप्रदीपः—

सायंप्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत्। (A) इति।

---

A. कात्यायनसंहिता १३।१०। अस्य व्याख्यायां प्रकाशकारः—"भुञ्जानेन सकृद् वैश्वदेवबलिकर्मणी कर्तव्ये इत्याशङ्कानिरासार्थं सायंप्रातरनश्नताऽपीत्युक्तम्। किन्त्वयान् विशेषः—अश्नतोऽकरणे प्रत्यवायद्वयम्, भोजनकृतमकरणकृतञ्च, अनश्नतस्त्वकरणमात्रकृतम्। अत एवान्यथा किल्बिषी भवेदित्याह" इत्युक्तवान्॥ यत्तु "अनश्नता आतिथ्याद्यनुरोधेन पाकसम्भव एव सायमिति बोध्यम्।

पुनः पाकमुपादाय सायमप्यवनीपते!
वैश्वदेवनिमित्तं वै पत्न्या सार्धं बलिं हरेत्॥

इति विष्णुपुराणे पुनः पाकमुपादाय सायमित्यभिधानात्। तेन स्वीयभोजनसम्भवे पाकं विनापि तदसम्भवे पाकसत्त्व एव रात्रौ वैश्वदेवबलिकर्मणी दिवा तु सर्वथैवेति" तत्त्वकृदुभी रघुनन्दनैरुक्तम्, तन्न मनोरमम्, उपादायेत्यस्य कृत्वेत्यर्थस्य नवीनस्य वर्णनीयत्वात्। ईदृशकल्पनायां प्रमाणाभावाच्च। किञ्च स्वीयभोजनसम्भवे पाकं विनापीत्यस्यां कल्पनायां पुनः पाकमुपादायेत्यस्य स्वीयभोजनासम्भवे त्वतिथ्याद्यनुरोधेन पाकसत्त्व एवेत्यस्याञ्च कल्पनायां 'अनश्नताऽपि सततमि'त्यस्योपरोधः स्यात्, तदेवं तदुक्तकल्पनायां वचनद्वयमपि कदर्थितं भवेत्। तस्मात् 'पुनः पाकमुपादाये'ति मुख्यकल्पाभिप्रायेण वचनं वर्णनीयम्; सर्वसामञ्जस्यात् न त्वितरपरिसंख्यानार्थम्, वाक्यभेदापत्तेः। वैश्वदेवबलिकर्मणोः पुरुषार्थतया तदर्थं पाकस्य सर्वथैव न्याय्यत्वाच्च। मुख्यकल्पासम्भवे त्वनुकल्पः स्थित एव। स्मरन्ति च—

'सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्' इति।

वस्तुतस्तु पाकं पक्वमन्नमुपादाय गृहीत्वा सायमपि पुनर्बलिं हरेदिति विष्णुपुराणवचनार्थः। प्रधानक्रियान्वयस्याभ्यर्हितत्वात्। अथवा सायमपि वैश्वदेवनिमित्तं पाकमुपादायेति निरुक्तवचनस्यार्थोऽकामेनापि वाच्यः, अन्यथा वैश्वदेवनिमित्तमित्यस्यान्यत्रान्वयासम्भवादनर्थकत्वापत्तेः। तस्माद् वैश्वदेवनिमित्तं पाकस्य सुव्यक्तमुपदेशात् तत्त्वकृतां कल्पना सर्वथैवा-

---

1. 'यथैतदुक्तम्' ख। 2. 'तदप्य-' ख। 3. 'तेनोक्तम्' नास्ति ख। 4. '-वश्यकत्वेन विधानात्'। ख

मनुरपि च(A)—

वैश्वदेवं हि नामैतत् सायंप्रातर्विधीयते ।

तस्मात् सायंप्रातर्वैश्वदेवः कर्त्तव्य इति सिद्धान्तः ।

किञ्च—

**सर्वस्य त्वेवान्नस्यैतान् बलीन् हरेत् पित्र्यस्य वा स्वस्त्ययनस्य वाऽर्थार्थस्य वा ॥२०॥**

सर्वस्य सर्वार्थं शृतस्यान्नस्य,[1]एतान् बलीन् हरेत् । (B)पित्र्यस्य पित्रर्थं शृतस्यान्नस्य, यथाऽमावास्याया(C)मन्वाहार्यार्थम्[2]*, स्वस्त्ययनस्य(D) स्वस्त्ययनार्थं शृतस्य, यथा "स्नेहवदमांसमन्नं ब्राह्मणान् भोजयित्वा "स्वस्ति वाचयित्वा"* स्वस्ति हैषां भवती"ति । (E)

अर्थार्थस्य अर्थो यस्मात् पुरुषादाशास्यते तदर्थं शृतस्य । एवकारकरणमवधारणार्थम् । सर्वस्यैव सर्वार्थमेव शृतस्यान्नस्यैतान् बलीन् हरेदिति । तु-शब्दोऽस्यैव बलिहरणस्य कालविशेष[3]ज्ञापनार्थः । कथं नाम पूर्वं तु तावद् बलिहरणं कुर्यात्, पश्चात् समीचीना । तदत्र वैश्वदेवनिमित्तमित्युपादानात् वैश्वदेवादनन्तरं बलिहरणोपदेशाच्च वैश्वदेवोऽपि सायं कर्तव्य एव इत्युक्तं भवति । प्रमाणमत्र नारायणोपाध्यायकृता निरुक्तव्याख्येति निपुणमतिभिरवगन्तव्यम् ।

A. मनुसंहिता ३।१२१ श्लोकस्योत्तरार्द्धमेतत्, पूर्वार्धन्तु—

"सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्" । इति ।

B. न च

चरवे यो विधिः प्रोक्तः स यज्ञ इति निश्चयः ।

बलिं तेभ्यो न कुर्वीतोपसिद्धार्थैर्बलीन् हरेत् ॥

इति गृह्यासंग्रह(२।९)-वचनबलात् चरुणा बलिकर्म न कर्तव्यमिति कथं 'सर्वस्ये'ति पदं सङ्गच्छते इति वाच्यम्, बलिमात्रकरणार्थमेव चरुर्न पक्तव्य इत्यत्रैवास्य कात्यायनवचनस्य तात्पर्यात्, एवञ्च यत्र कारणान्तरात् चरुः पच्यते तत्र तस्मादपि बलिहरणमविरुद्धमिति सूत्रबलात् कल्पनीयमतो न विरोध इति ध्येयम् ।

C. अन्वाहार्यमाह मनुः—

पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः ।

तच्चामिषेण कर्तव्यं प्रशस्तेन प्रयत्नतः ॥ इति (३।१२३)

D. स्वस्ति अभिप्रेतार्थसिद्धिः, तस्या अयनं प्रापकं यत् कर्म तत् स्वस्त्ययनमिति ।

E. प्रमाणीकृतोऽयं भागः स्वभाष्ये सर्कालङ्कारेणापि 'इत्येवमादिवचनात्' इत्युपोद्घातेन ।

1. चिह्नितांशो नास्ति ख । 2. नास्ति ख । 3. '-द्योतनार्थम्' ख ।

ब्राह्मणभोजनमिति। अविशेषोपदेशाद् भोजनोत्तरकालमिति चेन्न; कुतः? [1]अहुतस्य नाश्नीयान्न चान्नमाशयेदिति (A)गृह्यान्तरवचनात्। (B)भोजनोत्तरकालं तु तदर्थतैव पाकस्य "न स्यात्"* यस्मात् सर्वः सर्वस्य हि परद्रव्यस्य यावन्मात्रदत्तस्यैवेष्टे नान्यस्येति। एवञ्च सति सूत्रारम्भवैयर्थ्यमेव स्यात् तदर्थत्वात् पाकस्य। तस्माद् भोजनात् पूर्वं बलिहरण"मेव कुर्यादिति युक्तम्।

निरूप्य हविरन्यस्मा अन्यस्मै न हि हूयते(C) इति वचनात्,

"अगस्त्य इन्द्राय हविर्निरूप्य मरुद्भ्यः संप्रदित्साञ्चकार, स इन्द्र एत्य परिदेवयाञ्चक्रे" (D) इति च लिङ्गादयुक्तमेतदिति चेन्न। कुतः? अनयोर्वचनलिङ्गयोर्निरुक्तहविर्विषयत्वात् महानसपाकस्य सर्वार्थत्वाच्च। यस्माद् वैश्वदेव इति पाकस्यैतन्नाम,

तथा च गृह्यान्तरम्—"वैश्वदेवादन्नात् पर्युक्ष्य 'जुहोती"ति (E)

मनुरपि च—

वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम्।
आभ्यः कुर्याद् देवताभ्यो ब्राह्मणो होममन्वहम्। (F)

इति। तस्माद् यथोक्त एवार्थः। तदस्मादेव सूत्रादसर्वार्थतेति चेत् न, कुतः।

---

A. प्रमाणीकृतमिदं गृह्यान्तरवचनं स्वभाष्ये तर्कालङ्कारेणापि 'इति गृह्यान्तरवचनादि'-त्युदाहारेण।

B. तदन्न तावदर्थार्थं स्वस्त्ययनार्थं च यत् पच्यते तेन पूर्वमेव बलिहरणं कुर्यादित्यत्र नास्ति कश्चिन्मतविरोधः। न खलु पुरुषभोजनावशिष्टेनान्नेन बलिहरणं भवितुमर्हति यज्ञावशिष्टान्नेनैव तत्कर्तव्यतोपदेशात्।

'यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्' इत्यादिभिरिति।

C. कात्यायनसंहिता १७।१३।

D. प्रमाणीकृतोऽयं भागस्तर्कालङ्कारेणापि 'तथा च निरुक्ते नैगमकाण्डे' इत्युपोद्घातेन।

E. प्रमाणीकरोतीमं चन्द्रकान्तोऽपि स्वभाष्ये "इति च गृह्यान्तरम्" इत्युपोद्घातेन।

F. मनुसंहिता ३।८४। अस्य व्याख्यायां मेधातिथिराह—"विश्वदेवार्थे, वैश्वदेवः पाक उच्यते। सर्वार्थो वैश्वदेवशब्दोऽपि संप्रदानमात्रोपलक्षणार्थः तेनाऽऽतिथ्याद्यर्थता युक्ता भवती"ति।

1. 'अहुतस्य' क। 2. 'तस्माद्' इति ख। 3. 'एव' नास्ति ख। 4. 'गुह्या-दि'ति ख।

सर्वार्थत्वे सति पाकविशेषस्य[1] तत्र तन्निमित्तत्वादुपन्यासात् पितृयज्ञे[2]दमुच्यते। ननु श्राद्धप्रकरणे मनुना तत्र[3] तत्रैकार्थत्वात् पाकस्य पराधीनता दर्शिता। [4]यथा—

ब्राह्मणं भिक्षुकं वापि भोजनार्थमुपस्थितम्।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः [5]परिपूजयेत् ॥(A) इति।

तथा च[6]—

अग्नौ कुर्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सदा[7] ॥(B) इति।

तथा—

ततो भुक्तवतां तेषां शेषमन्नं निवेदयेत्।
यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु तैर्द्विजैः ॥(C) इति।

एवञ्च कथं सर्वार्थः पाकः तत्र च भिक्षादिदानमात्रेऽप्यनुज्ञाकाङ्क्षा, तत्र कथं भोजनात् पूर्वं बलिहरणमिति? उच्यते—वैश्वदेवादन्नात् पर्युक्ष्य जुहोतीति वैश्वदेवस्य सिद्धस्येति वचनसामर्थ्यात् को हि नाम सर्वार्थतां पाकस्य[8] हन्तुं शक्नोति। सर्वार्थत्वे च सति देवभूतमनुष्याणां यथाशास्त्रं यस्य यावद् देयं तस्य तावद् दत्तम्। अथ पितॄणां दानावसरः तस्मिन् प्रकृते तदधीनत्वमपि [9]पाकस्य युक्तम्। तदधीनत्वे च सति तदनुज्ञाकाङ्क्षाऽपि सर्वत्र युक्ता [10]तस्मान्नात्र विरोधः। तस्मात् पूर्वं बलिहरणं पश्चाद्[11] भोजनमिति। ननु श्राद्धप्रकरण एव ब्राह्मणभोजनस्य पश्चान्मनुनेदमुक्तम्—

उच्छेषणं तु तत् तिष्ठेद् यावद् विप्रा विसर्जिताः।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥(D) इति।

---

A. मनुसंहिता ३।२४३। अस्य मेधातिथिकृता व्याख्या चेत्थम्—"अतिथित्वेनाऽऽगतं ब्राह्मणं भिक्षुकं भिक्षार्थिनं ब्राह्मणमपि भोजनप्रवृत्तैर्ब्राह्मणैरनुज्ञातः शक्त्या पूजयेत् भोजनेन भिक्षा-दानेन वा युक्तार्थतयाऽर्चयेत्। यतः स पाकस्तदर्हस्तदर्थ एव।" इति।

B. मनुसंहिता ३।२१०। श्लोकस्य शेषार्द्धमेतत्, पूर्वार्द्धन्तु

'तेषामुदकमानीय सपवित्रांस्तिलानपि' इति।

C. मनुसंहिता ३।२५३। अत्र मेधातिथिः—'यथा ब्रूयुस्तथा कुर्यादनुज्ञातः, अननुज्ञातेन नान्यत्र विनियोक्तव्यम्' इति भाष्यमाह।

D. मनुसंहिता ३।२६५। अत्र कुल्लूकभट्टव्याख्या—तद् ब्राह्मणोच्छिष्टं तावत्कालं तिष्ठेत्

---

1. '-स्य तत्र' स्थाने '-स्यात्र' इति ख। 2. '-स्येत्येव-' ख। 3. 'तत्र' नास्ति ग। 4. 'यथा' नास्ति ख। 5. 'प्रति-' ख-ग। 6. 'च' नास्ति ख। 7. 'सदे'ति ख। 8. '-स्यापहन्तुं' ख। 9. 'कस्य' ख। 10. 'ततश्च नात्र' ख। 11. '-स्याद् ब्राह्मणभो-' ख।

अत्र भवतः किमुत्तरम् ? उच्यते—ततो गृहबलिं कुर्यादिति वचनाद् गृहबलिविषयमेतत्। [1]ननु कीदृशोऽयं गृहबलिः, उच्यते—[2]गृहे वसतः स्वयंकर्तृत्वेन यः काम्यो बलिर्विधीयते प्रवासादौ तु यस्य लोप [3]एव स्यात् स 'काम्यो' 'गृहबलिरुच्यते'[2]। वक्ष्यति चायमुपरिष्टात् "आयुःकामस्य" स्वयं त्वेवाशस्यं बलिं हरेद् यवेभ्य इति श्रुतौ च सदा भोजन[4]स्योपनीतस्येत्यादि[5]। (A)

तथा च गृह्यान्तरम्—

स्वयमेव हरेत् काम्यान् बलीन् यावद् गृहे वसेत्।
आतुरत्वे प्रवासे च लोपो गृहबलेर्भवेत्॥ (B)इति।

तस्मात् पूर्वमेव बलिहरणं पश्चाद्भोजनमिति सिद्धान्तः(C)। अलमतिप्रसङ्गेन प्रकृतमधुनोच्यते—

---

यावद् ब्राह्मणानां विसर्जनम्, ब्राह्मणेषु तु निर्गतेषु मार्ष्टव्यमित्यर्थः। ततः संपन्ने श्राद्धकर्मणि वैश्वदेवबलिहोमकर्मनित्यश्राद्धातिथिभोजनानि कर्तव्यानि, बलिशब्दस्य प्रदर्शनार्थत्वात्। अत एव मत्स्यपुराणे—

निर्वर्त्त्य प्रतिपत्त्यर्थं पर्युक्ष्याग्निं च धर्मवित्।
वैश्वदेवं प्रकुर्वीत नैत्यकं विधिमेव च॥ इति।

मेधातिथिरपि......अत्रोच्यते यदि प्रागग्नौ वैश्वदेवहोमः क्रियते ततः श्राद्धानन्तरं बलिहरणं तथा सति देवयज्ञ-भूतयज्ञौ व्यवधीयेताम्। ततश्च क्रमोपरोधः। न च वैश्वदेवस्य कालबाधः क्रियते पितृश्राद्धकालहानेः। तस्मात् सर्वं महायज्ञानुष्ठानं श्राद्धादौत्तरकालिकम् इति। एवञ्च द्वाभ्यामपि मनुवचनस्यास्य व्याख्यायां नास्मद्भाष्यकारसम्मतोऽर्थः परिगृहीत इति।

A. प्रमाणीकृतेयं श्रुतिः ७८-पृष्ठे।

B. प्रमाणीकृतं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये 'इति गृह्यान्तरदर्शनात्' इत्युदाहारेण।

C. अत्र तर्कालङ्कारः—"पित्रर्थञ्चेदन्नं पच्यते, तर्हि पूर्वमेव श्राद्धं पश्चाद् बलिहरणमिति ब्रूमः, तत् कस्य हेतोः ? तथैव स्मरणात्, तथा च मनोः स्मरणम्—'उच्छेषणन्तु......' इति। न चेदं गृहबलिपदं 'स्वयमेव......' इति गृह्यान्तरदर्शनात् काम्यबलिमात्रपरम् इति वाच्यम्, तन्मात्रपरत्वे प्रमाणाभावात्। तस्माद् गृहे यो बलिर्दीयते गृहमेधिना यः क्रियते सोऽयं गृहबलिरुच्यते। गृहबलिपदस्य काम्यबलिमात्रपरत्वेऽपि काम्यानां बलीनां श्राद्धोत्तरकालत्वमिदं वचनं शक्नोति विधातुं न तु नित्यानामेतन्निषेद्धुमपि। ततश्च तेषामपि शास्त्रान्तरात् तथात्वमविरुद्धमेव। तथा च गौतमस्मरणम्—

---

1. 'ननु' स्थाने 'तत' ख। 2. चिह्नितांशो नास्ति क। 3. 'एव' नास्ति ख। 4. 'स्य' नास्ति ख। 5. '-सन्यादौ' ख।

पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ।
अकृतं तद्भवेच् श्राद्धं पितॄणां नोपतिष्ठते ॥ इति ।
पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः ।
अकृतं तद्भवेच् श्राद्धं पितॄणां नोपतिष्ठते ॥

इति च स्मृत्यन्तरम् । तथा कार्ष्णाजिनिस्मरणम्—

यदा श्राद्धं पितृभ्यश्च कर्तुमिच्छति मानवः ।
वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणि ॥ इति ।

अत्र वैश्वदेवस्य श्राद्धोत्तरत्ववचनात् ततः पराचीनस्य बलेः सुतरां तथात्वम् । तथा मत्स्य-पुराणम्—'निर्वर्त्य......' इति । भविष्यपुराणञ्च—

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च ।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप ॥ इति ।
विसर्जयेत् प्रियाण्युक्त्वा प्रणिपत्य च भक्तितः ।
आद्वारमनुगच्छेच्चाऽऽगच्छेच्चानुप्रमोदितः ॥
ततो नित्यक्रियां कुर्याद् भोजयेच्च तथाऽतिथीन् ।
नित्यक्रियां पितॄणाञ्च केचिदिच्छन्ति सत्तमाः ॥
न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत् ।
पृथक् पाकेन वेत्यन्ये केचित् सर्वञ्च पूर्ववत् ॥

इति च मार्कण्डेयपुराणम् । न चैवं नित्यश्राद्धमपि बलिहरणात् पूर्वमेव प्राप्नोतीति वाच्यम्, नित्यपाकस्य पितृपाकत्वाभावात् । व्यपदेशाः खल्वसाधारणतया भवन्ति इत्यवोचाम ।...... सर्वासु स्मृतिषु बलिहरणात् परत एव नित्यश्राद्धमुच्यते । अमीषाञ्च वचनानां पार्वणश्राद्ध-प्रकरणे पाठात् नान्यत्र सन्निवेशः ।......

नित्यश्राद्धं गयाश्राद्धं तीर्थश्राद्धं तथैव च ।
वैश्वदेवं हुनेदादौ ततः श्राद्धं समाचरेत् ॥

इति च स्मरणान्तरम् । अपि च निर्वर्त्य इति, कृत्वा श्राद्धम् इति विसर्जयेत् इति च प्रकृतमेव निर्वर्तनं प्रकृतमेव श्राद्धं प्रकृतमेव च विसर्जनमर्थोऽवगम्यते ; व्यक्तिवचनानां खल्वमीषा-माग्नेयीन्यायेन सन्निहितव्यक्तिपरतैव न्याय्या इत्यदोषः । परमार्थतस्तु विश्वदेवहोमात् परतो नित्यश्राद्धविधानात् कोऽयमस्थाने संरम्भ इति न खल्वधिगच्छामः । तस्मात् पूर्वं श्राद्धं पश्चाद् बलिहरणमित्यवगन्तव्यम् इत्युक्त्वा भाष्यकारवचनं प्रतिबध्नाति, रघुनन्दनोऽप्येवमेव, मेधातिथि-कुल्लूकभट्टावपि पूर्वमेव श्राद्धं कर्तव्यमिति निर्णीतवन्तौ 'उच्छेषणमि'त्यादिमनुसंहिता-व्याख्यायाम्, गृहबलिशब्दस्यापि नित्यबलित्वमेव व्याख्यातवन्ताविति । छन्दोगपरिशिष्टप्रकाश-कृता नारायणोपाध्यायेन तु स्वीकृतोऽस्मद्भाष्यकाराणां सम्मतोऽर्थ इति, व्यक्तीभविष्यति चैतत् पञ्चमकण्डिकायां 'पिण्डान्वाहार्यकमि'ति वचनस्य व्याख्यायाम् । तदत्र विरोधे व्याख्याकर्तॄणां गोभिलाचार्यस्याभिप्रायविज्ञाने भगवन्तोऽनूचानाः प्रमाणमिति ।

किञ्च—

## यज्ञादेव निवर्त्तेत ॥ २१ ॥

यज्ञोऽग्निष्टोमादिः। यज्ञादिति पञ्चमी सप्तम्यर्थे यज्ञ एव निवर्त्तेते। 'न क्रियते [1]व्यावर्त्तत इत्यर्थः'* । किं प्रकृतत्वाद् बलिहरणं 'दीक्षितो न जुहोती'ति(A) सिद्धे पुनर्वचनं परिसंख्यानार्थम्(B)। कथं नाम। [2]'यज्ञ एव बलिहरणं निवर्त्तते नान्यत्रेति'*(C)। एवं चाशौचादावपि सिद्धस्य पाकस्य किञ्चिदन्नं [3]तूष्णीं प्रक्षिप्याग्नौ 'तच्छेषं खण्डशः कृत्वा तूष्णीमेव भूमौ प्रक्षिपेत्। (D)

यदि बहुप्रकारमन्नं श्रृतं तत्र किं सर्वस्यैवोद्धृत्य बलिहरणं कुर्यादुतान्यतरस्यैवेति सन्देहव्युदासार्थमिदमाह—

## यद्येकस्मिन् काले व्रीहियवौ प्रक्रियेता[5]मन्यतरस्य [6]कृत्वा कृतं मन्येत ॥ २२ ॥

यदि एकस्मिन् [7]काले भोजनकाले, व्रीहियवग्रहणं सर्वधान्योपलक्षणार्थम्, व्रीहियवौ प्रकर्षेण क्रियेतां [8]भक्त-करम्भ[9]क-पायस*-सक्तु-संयाव-[10]घृतपूर-पूरक-पूरिकापूप-[11]मोदकादिभेदैः क्रियेतां, श्रृतौ स्याताम्, तत्रान्यतरस्यैकतरस्य [12]हविष्यस्य पायसादेर्हृत्वा बलिहरणं कृतं मन्येत [13]अवगच्छेदिति।

A. प्रमाणयतीमं चन्द्रकान्तोऽपि स्वभाष्ये 'तस्माद् दीक्षितो न ददाति, न पचति, न जुहोती'ति च ब्राह्मणं भवती'त्युक्त्वा।

B. परिसंख्यालक्षणञ्चोक्तमभियुक्तैः—

अन्यार्थश्रूयमाणा च याऽन्यार्थप्रतिषेधिका।
परिसंख्या तु सा ज्ञेया यथा प्रोक्षितभक्षणम् ॥ इति।

C. तथा च स्मृतिः—

आपद्यपि हि कष्टायां पञ्चयज्ञान् न हापयेत्।
स्वर्गापवर्गयोः प्राप्तिं महायज्ञैः प्रचक्षते ॥ इति।

D. तथा च— सन्ध्यां पञ्चमहायज्ञान् नैत्यिकं स्मृतिकर्म च।
तन्मध्ये हापयेत् तेषां दशाहान्ते पुनः क्रिया ॥ इति।
पञ्चयज्ञविधानञ्च न कुर्यान्मृत्युजन्मनोः ॥

इति चैवमादिस्मरणात् अशौचकाले किं कर्तव्यं तदाह—'एवञ्चेत्यादिना' भाष्यकार इति।

1. 'व्यावर्त्तत् न क्रियन्ते इत्यर्थः' ख। 2. 'यज्ञ एव निवर्त्तते बलिहरणं नान्यत्रेति' ख। 3. 'तूष्णीमग्नौ प्रक्षिप्य' ख। 4. 'शेषं' ख। 5. '-येयाताम्' क-ग-च०त०। 6. 'हृत्वा' क-ग। 7. 'काले' नास्ति क। 8. 'भक्तकांग्वभाकनायस-' क। 9. '-कपासकुमंयाव-' ग। 10. '-घृतपूरकपूरिका-' ख। 11. '-पानिकादि-' ख। 12. 'हविषः' ख। 13. 'मवच्छे-' क।

यदि भुक्तवतां बलिहरणोत्तरकालमन्ये ब्राह्मणा आगच्छेयुस्तदर्थं च पाके कृते किं पुनर्बलिहरणं कुर्यादुत नेति सन्देहापगमायेदमाह—

**यद्येकस्मिन् काले पुनः पुनरन्नं पच्येत सकृदेवैतद् बलितन्त्रं कुर्वीत ॥ २३ ॥**

यद्येकस्मिन् काले [1]पुनः पुनर्भूयो भूयः अभ्यागतवशेनान्नं पच्येत तत्र सकृदेव एतद् बलितन्त्रं कुर्वीत न प्रतिपाकमिति ।

तथा च मनुः—

वैश्वदेवे तु निर्वृत्ते [2]यद्यन्योऽतिथिराव्रजेत् ।
अन्नं तस्मै यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥ (A)इति ।

किञ्च—

**यद्येकस्मिन् कुले बहुधाऽन्नं पच्येत गृहपतिमहानसादेवैतद् बलितन्त्रं [3]कुर्वीत ॥ २४ ॥**

यदि एकस्मिन् कुले [4]गृहे एकपाकोपजीविनां भ्रातृपुत्रादीनां भोजनार्थं बहुधा बहुषु महानसेषु अन्नं पच्येत तत्र यो गृहपतिः [5]तस्य यो महानसः तस्मादेव [6]गृहीत्वा एतद् बलितन्त्रं कुर्वीत । न [7]स्वस्वपाकात्(B) । एवं च गर्भ[8]युक्त-भृत्याद्यर्थं पाकं कृत्वा पूर्व[9]मपि बलिहरणाद् भोजनदाने न दोषः ।

किञ्च—

**यस्य त्वेषामग्रतः सिध्येत् नियुक्तमग्नौ कृत्वाऽग्रं ब्राह्मणाय दत्त्वा भुञ्जीत ॥ २५ ॥**

A. मनुसंहिता ३।१०८ । अत्र तस्याप्यन्नमिति कुल्लूकभट्टधृतः पाठः । तेन कृता व्याख्या चेत्थम्—अन्यशब्दनिर्देशादतिथिभोजनपर्यन्तं वैश्वदेवे कृते यद्यपरोऽतिथिरागच्छेत् तदा पुनः पाकं कृत्वा तस्यान्नं दद्यात् । बलिहरणं ततो नात्र कुर्यात् इति ।

B. अत्र प्रमाणमाह तर्कालङ्कारः—“स्मरति च बृहस्पतिः—

एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद् विभक्तानां तदेव स्याद् गृहे गृहे ॥” इति ।

---

1. 'पुनः पुनः' नास्ति ख । 2. 'यद्यान्यो-' ख । 3. 'कुर्वीतेति' ग । 4. 'गृहे' नास्ति । 5. 'तस्य महानस' क, 'गृहपतिश्चैव महानसः' ख-ग । 6. 'गृहीत्वा' नास्ति ख । 7. 'स्वपाकात्' क । 8. '-रूप-' क-ख । 9. '-मेव' ख ।

तु-शब्दो 'वा-शब्दार्थः । यस्य "वा एतेषाम् एकपाकोपजीविनां भ्रातृपुत्रादीनामग्रतः" अग्रिमः 'पाकः गृहपतिपाकात् सिध्येत् स "एव नियुक्तं नियमेन अवश्यकर्त्तव्यतया, अग्नौ होमं कृत्वा, होमविधानं बलिहरणातिथ्ययोरप्युपलक्षणार्थम्, बलिहरणातिथ्ये च कृत्वेत्यर्थः । पितृर्थं "च अग्रं पूर्वं (A) ब्राह्मणाय दत्त्वा भुञ्जीत अश्नीयादिति (B) ।

"अथ यदि गृहपतिपाकोऽग्रिमः सिध्येत् तस्माच्च गृहीत्वा पुत्रादिना बलि"हरणे कृते कथमित्यत आह"* :—

## यस्यो जघन्यं भुञ्जीतैवेति(C) ॥ २६ ॥

यस्य गृह"पति""पाकाद् गृहीत्वा""* पुत्रादिना बलिहरणादौ कृते, जघन्यं पश्चात्

A. एवञ्च होमादिब्राह्मणभोजनान्तं कर्म कृत्वा स्वयं भुञ्जीतेति प्रमाणयतीदं कर्मप्रदीपे कात्यायनः—

ब्राह्मणान् भोजयेत् पश्चादभिरूपान् स्वशक्तितः ।
यजमानस्ततोऽश्नीयादिति कात्यायनोऽब्रवीत् ॥ इति का० स० १८।४

एवञ्च कर्मणोऽन्ते स्वभोजनात् प्रागेव ब्राह्मणान् भोजयेदिति "अपवर्गेऽभी"त्यादि-१।१।६-सूत्रस्य भावो बोध्य इति ।

B. एवञ्चात्र सूत्रद्वयव्याख्याने भाष्यकारेणैतन्निर्णीतम्, यत् न केवलं गृहपतिरेव प्रत्यहं नियमेन बलिवैश्वदेवं कुर्यात् अपि तु यस्य प्रथमं पाकः सिद्धः सोऽपि कुर्यात् । प्रथमसिद्धपाकेनैव बलिहरणस्यावश्यकतेति । तर्कालङ्कारस्तु द्वितीयं सूत्रमेवं विवृणोति—"एषामेकपाकोपजीविनां मध्ये यस्य तु अग्रतो गृहपतिपाकात् सिध्यति पाकः स किञ्चिदन्नमग्नौ नियुक्तं कृत्वा किञ्चिच्चाग्रं ब्राह्मणाय दत्त्वा भुञ्जीत । तुशब्दो विशेषणार्थः, अनावश्यकत्वेऽपि वैश्वदेवादीनामिदमस्य विशिष्यते यदग्नौ नियोज्यं ब्राह्मणाय दातव्यम्"—इति । सामश्रमी तु—"एषामेकगृहस्थितानां पृथगन्नानां भ्रात्रादीनां मध्ये यस्य तु अग्रतः सिध्येत् अन्नमिति यावत् स किञ्चिदन्नम् अग्नौ नियुक्तं कृत्वा अनन्तरमग्रं पक्वान्नस्याग्रभागं ब्राह्मणायातिथये दत्त्वा ततः स्वयं भुञ्जीत" इति । एवमुभयोरप्यनयोर्मते पूर्वसूत्रोक्तगृहपतिमहानसादेव बलितन्त्रकरणसिद्धान्तस्थितिः । नास्मद्भाष्यकाराणामिव तुशब्दस्य वाशब्दार्थं परिकल्प्य कल्पद्वयकल्पनेति सुधीभिर्ध्येयम् ।

C. अस्य तर्कालङ्कारकृता व्याख्या—"यस्य पुनर्जघन्यं परस्तात् गृहपतिपाकात् सिध्यति पाकः स भुञ्जीतैव, न पुनरग्नौ वा नियुञ्जीत ब्राह्मणाय वा दद्यात् बलिं वा हरेत्" इति । 'जघन्यमरुचिकरम्' इति सामश्रमिव्याख्यानन्त्वरुचिकरमेवेति ॥

1. 'विशेषार्थः' क-ग । 2. 'न एषां' क-ग । 3. 'अग्रतः' नास्ति ख । 4. 'पाकः' नास्ति ख । 5. 'एव' नास्ति ख । 6. 'च' नास्ति ख । 7. 'एवं पुत्रादिबलिहरणादौ सर्वस्मिन्नेव कृते गृहपतिर्यदाश्नीयात् तदा कथं कुर्यादित्यत आह' इति ख । 8. '-हरणादौ' ग । 9. '-पतेः' ख । 10. नास्ति ख ।

सिध्येत् स भुञ्जीतैव 'न पुनर्बलिहरणं कुर्या'[1]*दिति। उ इति निपातः। अन्ये तु 'यः सो'[2] जघन्यं भुञ्जीतैवे'ति पठन्ति। तत्र केनचिद्[3] भाष्यकृता व्याख्यानमेवं कृतम्। "अस्ति 'यः जघन्यं पश्चाद् भुञ्जीत स भुञ्जीतैव, एतस्मिन् व्याख्याने यः स उ जघन्यं भुञ्जीतैवेति पाठो युक्तः स इत्यस्यो"[4]द्धारपरत्वात्। तस्मात् छान्दसोऽयं प्रयोगः प्रमादपाठो वा; मम तु"[5] पूर्वपाठ एव प्रतिभाति।

किञ्च—

## अथाप्युदाहरन्ति(A)। एतस्यैव बलिहरणस्यान्ते कामं [7]प्रब्रुवीत भवति हैवास्य ॥ २७ ॥

अथाप्युदा"[8]हरन्त्येतद् ब्राह्मणवाक्योपादानार्थम्। स्मृतिकाराणां "[9]काचिदियं शैली येन 'तदाहुः' 'तत्रैके आहु'र'थाप्युदाहरन्ती'त्येवमादीनि पदानि ब्राह्मणवाक्या"[10]दीनामादौ निपातयन्ति। एतस्यैवेति नित्यस्यैव बलिहरणस्य न काम्यस्यापि (B)। अन्ते अवसाने [11]कामम् अभीष्टं [12]वस्तु प्रब्रुवीत प्रकर्षेण ब्रुवीत [13]वाचा प्रार्थयेत् [14]न मनसा एवेति। "मनो ह वै देवा [15]मनुष्यस्य जानन्तीति श्रुतेः(C): मनसैव [16]कामस्य प्रार्थनं मा भूदित्यतः प्रब्रुवीतेत्युक्तम्। काममित्येकवचनादायुरादीनाम अन्यतमं यं यमिच्छेत् तं तमेवं प्रार्थयेत् नैकस्मिन्[16]* काले बहूनिति। दीर्घायुष्य[17]मस्तु। [18]ऐश्वर्यमस्तु। पुत्रा मे सन्त्वित्येवमादीना[19]मेकमिति। भवति हैवास्येति[20]। अस्य प्रार्थयितुः। प्रतिदिनं प्रार्थयतः कतिपयदिवसैः [21]स कामो भवतीति[22] हैव ननं सम्पद्यत एवेति।

A. अयमंशः पृथगेवैकं सूत्रमिति तर्कालङ्कारसामश्रमिणौ।

B. तर्कालङ्कारस्तु एव-पदेन काम्यानामपि बलीनामनन्तरमित्यर्थं इत्याह—तन्न मनोरमम्, काम्यबलिहरणस्यान्ते स्वयमेव केवलं दीर्घायुष्फलस्य सूत्रे निरूपितत्वात्; अत्र तु नानाफलानि कात्यायनेनोक्तानीति। एवमपि—यदा प्रवासादौ काम्यबलिलोपस्तदापि मन्त्रस्यास्य पाठस्यावश्यकत्वमुपपन्नमिति ॥

C. प्रमाणत्वेनोपन्यस्तेयं श्रुतिस्तर्कालङ्कारेणापि १।४।८-भाष्ये।

1. 'पुनः पुनर्बलिहरणादि न कुर्या-' इति ख। 2. 'सोप-' क। 3. 'श्चित्' नास्ति क ग। 4. 'यः' नास्ति ग। 5. '-स्योद्धार-' स्थाने '-स्योकार-' ख ग। 6. 'तु' नास्ति क ग। 7. 'प्रब्रवीत' क। 8. '-हरन्तीत्येतद्' ख। 9. 'काचित्' नास्ति ख। 10. '-दीनामा-' नास्ति' ग, 'वाक्यानामादौ' ख। 11. 'कामम् इच्छा' ख। 12. 'वस्तु' नास्ति ख। 13. नास्ति ख। 14. 'नास्ति' ख। 15. 'मनुष्यस्या-' ग। 16. 'कामं च प्रार्थयेऽस्मिन् नैकस्मिन्' ख। 17. '-ष्यं मेऽस्तु' ख। 18. 'आरोग्यं मेऽस्तु' ख। 19. '-मां त्वेकमिति' ख। 20. 'इति' नास्ति ख। 21. 'स' नास्ति ख। 22. 'इति' नास्ति ख।

ह इति[1] निपातः। भवतीत्येकवचनाच्च एकमेव कामं प्रार्थयेत् नैककाले एव बहूनिति[2]। तच्च प्रार्थनं वामदेव्यजपात् पूर्वमेव[3] भवति। कुतः? कर्मप्रदीपोक्तमन्त्रजपस्यापि अत्रैव विधानात्—

स्पृष्ट्वाऽपो वीक्षमाणोऽग्निं कृताञ्जलिपुटस्ततः।
वामदेव्यजपात् पूर्वं प्रार्थयेद् द्रविणोदसम्॥
आरोग्यमायुरैश्वर्यं धीर्धृतिः शं बलं यशः।
ओजो वर्चः पशून् वीर्यं ब्रह्म ब्राह्मण्यमेव च॥
सौभाग्यं कर्मसिद्धिं च कुलज्यैष्ठ्यं सुकर्तृताम्।
सर्वमेतत् सर्वसाक्षिन् द्रविणोदरिरीहि नः॥ (A) इति।

एतच्चोभय[4]मपि प्रार्थनं काम्यत्वादिच्छया स्यान्न नियमेन। यत्तु काम्यप्रकरणाधिकारे[5] पुरश्चरणमुक्तम्—'काम्येषु त्रिरात्राभोजनम्' [सू. ४।५।१६] 'त्रीणि वा [6]भक्तानि' [सू. ४।५।१७] इति, 'काम्येषु च [7]प्रपदः' [सू. ४।५।७] इति च; तदत्र न भवति। कुतः? (B)अतत्प्रकरण एवाभिधानात्. एवमन्येष्वपि काम्येषु अतत्प्रकरणेषु द्रष्टव्यम्।

किञ्च—

**स्वयं त्वेवाशस्यं बलिं हरेद् यवेभ्योऽध्याव्रीहिभ्यः व्रीहिभ्यो-[12]ऽध्यायवेभ्यः स त्वाशस्यो नाम बलिर्भवति[13] ॥ २८ ॥**

A. कर्मप्रदीपे वैश्वदेवप्रकरणम्। अस्य सप्रकाशमुद्रितपुस्तके ईदृशः पाठः—

आयुरारोग्यमैश्वर्यं धृतिं सत्यं बलं यशः।
तेजो वर्चः पशून् बीजं ब्रह्म ब्राह्मण्यमेव च॥
सौभाग्यं कर्मसिद्धिञ्च कुलज्यैष्ठ्यं स्वकर्तृताम्।
सर्वमेतत् सर्वसाक्षिन् द्रविणोदो विधेहि नः॥ इति।

प्रकाशकारव्याख्या चेत्थम्—"वसुमिच्छेद्धुताशनादि"ति श्रुतेः द्रविणोदसमग्निं याचेत। यशः ख्यातिः, तेजोऽधृष्यता। वर्चः शरीरकान्तिः, बीजं धान्यादिर्धातुविशेषो वा, ब्रह्म वेदः, ब्राह्मण्यं ब्राह्मणकर्म, स्वकर्तृता निर्विघ्नकर्तृता" इति।

B. अतत्प्रकरण इति, बलिहरणभिन्नप्रकरणे इत्यर्थः।

1. 'इति' नास्ति ग। 2. 'नि' नास्ति ख। 3. 'एव' नास्ति ख। 4. '-मात्र्य' ख। 5. '-रीणः'? ख। 6. '-मेव' ख। 7. 'मं' क-ख। 8. 'पुनश्चरण' क। 9. 'नक्तानि' क-ग। 10. 'प्रतिपदः' क। 11. '-रणीकेषु' ख। 12. '-ध्यायवेभ्यः' ख। 13. अनन्तरं 'दीर्घायुर्भव भवति' इति क-ग।

[1]स्वयमेव आशस्यनामानं बलिं हरेत्। प्रवासादावपि नान्येन हारयेत्। तदेतदुक्तमधस्तादेव[1]* 'स्वयमेव हरेत् काम्यानि'त्यत्र श्लोके। [2]तुशब्दश्चशब्दस्य स्थाने[2]* समुच्चयार्थो द्रष्टव्यः। [3]आशस्यनामानं च बलिं[3]* स्वयमेव हरेदिति।(A) यवेभ्य इति चतुर्थीनिर्देशाद् देवतान्तरानुपदेशाच्च यवदैवत्य एवायं बलिः। अनिर्दिष्टं प्राजापत्य'मिति चेत्, न ; कुतः—यवैर्यवेभ्य आवापो व्रीह्युत्पत्तेरधो बलेः[5]।

व्रीहिभ्यो व्रीहिभिः पूर्वं यवोत्पत्तेर्जिजीविषोः।(B)

इति गृह्यान्तरवचनात्, एवं यवान्नेन यवेभ्यो नमः इति बलिं हरेत्। "कियत्कालं[6] यावत्? उच्यते—अधि उपरि आ व्रीहिभ्यः व्रीह्युत्पत्तेरर्वागित्यर्थः। 'व्रीहिभ्यो नमः' इति व्रीह्यन्नेन बलिं हरेत्, अधि आयवेभ्यः यवोत्पत्तेरर्वागित्यर्थः। स च बलिः आशस्यो नाम भवति। आशस्य [7]इत्यन्वर्थसंज्ञा आ शरच्छस्याद् वासन्तेन "यस्य हरणम्, आ वसन्तात्" शारदेनेति सोऽयमाशस्यो नाम, तुशब्दः सुभूमि[10]करणोभयतःपरिषेकस्मारणार्थ[11] च। अनेन[12] च बलिना—

[13]दीर्घायुर्हैव भवति[13]* ॥ २९ ॥

ह—इति निपातः। [14]तथा च नूनं दीर्घायुरेव[15] भवति[16] नाल्पायुरिति। किञ्च—

विश्राणिते फलीकरणानामा[17]चामस्यापामिति बलिं हरेत् स रौद्रो बलि[18]र्भवति स रौद्रो [18]बलिर्भवति ॥ ३० ॥

A. तथा च यथा नित्यबलिं हरेत् तथा आशस्यनामानं च बलिं हरेत्, परमियान् विशेषो यन्नित्यबलौ प्रवासादौ प्रतिनिधिसद्भावः काम्यबलिष्वाशस्यप्रभृतिषु तु प्रतिनिधिर्नास्तीति 'स्वयमेव'पदेन सूत्रकारो विशिनष्टि इति भाष्यकाराणामाशयः। अत्र यत् तर्कालङ्कारेण तु-शब्दस्य च-शब्दार्थसमुच्चयार्थत्वे आशस्य इव नित्येऽपि बलौ प्रतिनिधिर्निरस्येत इत्यापत्तिर्दत्ता सा न समीचीना यतः समुच्चयोऽयं गृहवासकाल एव सम्भवति, तथाच यथा गृही गृहे वसन् नित्यबलिं स्वयमेव हरेत् तथा गृहे वसन्नेवाशस्यनामानं बलिं स्वयमेव हरेदिति। गृहे वासकाले नित्यस्य काम्यस्य च बलेः स्वयं कर्त्तृत्वमेव सूत्रकारो निर्दिदेशेति कृतं प्रवासादिकालमधिकृत्य नित्यबलौ प्रतिनिधिसद्भावनिरासभिया भाष्यकाराणां भट्टपादानामुपरि व्यर्थदोषदानायासेनेति निपुणमतिभिर्ध्येयम्।

B. प्रमाणीकृतमिदं तर्कालङ्कारेणापि स्वभाष्ये 'तथा च गृह्यान्तरमि'त्युपोद्घातेन।

1. नास्ति ग। 2. 'तु' शब्दस्य स्थाने 'च' शब्दः' इति ख। 3. 'इदं वक्ष्यमाणकं' ख। 4. '-मपि' क। 5. 'बलिः' ख। 6. 'कियन्तं' ख। 7. 'इत्यर्थसंज्ञा' ख। 8. 'यस्य बलि-' ग। 'यस्य' स्थाने 'बलि-' ख। 9. '-न्नाश शरच्छस्येनेति' ख। 10. '-करणस्योभयतः सुभूमिकरणार्थं' ख। 11. '-त्र्याः' क-ग। 12. '-मेव' ख। 13. इदं नास्ति क-ग। 14. 'तथा च' नास्ति क-ग। 15. 'एव' नास्ति ख। 16. '-तीति' ख। 17. '-वापस्यापामिति' ख। 18. 'बलिः' इति नास्ति ख।

(A)श्राण दाने विविधं श्राणितं दत्ते सर्वस्मिन् पाके क्षीणप्राये इत्यर्थः। एवञ्च रात्रावयं बलिर्भवतीति[1]। तत्र हि सर्वमन्नं श्राणितं दत्तं क्षीणप्रायं भवतीति[2]। तथा च गृह्यान्तरम्—

"यक्ष्मणे चोदकं दद्याद् यक्ष्मैतत्ते इति ब्रुवन्।
आरोग्यमस्य तेन स्यात् सायं रौद्राद् यथेप्सितम्॥(B)

इति वचनादत्रापि य [3]एव कश्चिदभीष्टः कामोऽभिध्येयः। फलीकरणानां(C) कम्बूकानां [5]कुक्कुसानामित्यर्थः। षष्ठी त्रयाणा[6]मप्यवयवार्थाः"[4]। [7]आचामस्य ओदनावश्रावणस्य(D) अपाम् उदकस्य [8]इत्येतानि[4] कम्बूका[9]वश्रावणोदकानि त्रीण्येकीकृत्य बलिं हरेत्। स च[10] रौद्रः रुद्रदेवताको भवति, 'रुद्राय नमः' इति प्रयोगः(E)। अभ्यासो महायज्ञप्रकरण[11]समाप्त्यर्थः।

इति [12]श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये
प्रथमप्रपाठकस्य चतुर्थी कण्डिका[12]*।

A. 'श्रण दाने, प्रायेणायं विपूर्व' इति सिद्धान्तकौमुदी।

B. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये 'इति गृह्यान्तरदर्शनाद्' इत्युपोद्घातेन।

C. उक्तञ्च छन्दोगपरिशिष्टप्रकाशकृता नारायणोपाध्यायेन—
"तथा च परिशिष्टम्—आचितं शकटं प्राहुर्द्रोणः स्यात् कांसमानकः।
कम्बूकाश्च कणाश्चैव फलीकरणकुक्कुशाः॥ इति।

D. भक्तमण्डस्येत्यर्थः।

E. अत्र वैश्वदेवप्रकरणे छन्दोगगृह्यसूत्राण्युपस्थाप्यन्ते—सिद्धे सायं प्रातर्भूतमित्युक्ते ओं इत्युच्चैर्ब्रूयात् 'माक्षानमस्त' इत्युपांशु। हविष्यस्यान्नस्य जुहुयात् प्राजापत्यं सौविष्टकृतञ्च बलिं नयेत् बहिरन्तर्वा चतुर्निधाय मणिकदेशे मध्ये द्वारि शय्यामनु वर्चे वा अथ संस्तूपमेकैकमुभयतः परिषिञ्चन् शेषमद्भिः सार्धं दक्षिणा निनयेत्। फलीकरणानामपामाचामस्येति विश्राणिते पृथिवी वायुः प्रजापतिर्विश्वेदेवाः आप ओषधिवनस्पतय आकाशः कामो मन्युर्वा रक्षोगणः पितर इत्येतावन्ति देवतानि तूष्णीं तु कुर्यात् सर्वस्यान्नस्यैतत् कुर्यात् असकृच्चैकस्मिन् काले सिद्धे सकृदेव कुर्यात्। बहुधा चेद् गृहपतौ सर्वस्य त्वन्नस्याग्नौ कृत्वा अग्रं ब्राह्मणाय दत्त्वा स्वयं कुर्यात्। व्रीहिप्रभृत्यायवेभ्यो वा व्रीहिभ्यः स्वयं हरेत्। इति।

1. 'इति' नास्ति ख। 2. 'इति' नास्ति ख। 3. 'यक्ष्मणो मोदकी' क-ग। 4. 'एष' क-ग। 5. 'कुकुसाना-' क, 'कुमसाना-' ग। 6. 'मित्यर्थम्' ख। 7. 'आचापस्य' ख। 8. 'तानि' ख। 9. '-वस्त्राणोदकानि' ग। 10. 'च' नास्ति ख। 11. '-समाप्तये' ख। 12. 'गृह्यभाष्ये प्रथमस्य चतुर्थी कण्डिका' ख।

भवन्ति चात्र खादिरद्राह्यायणगृह्ययोः समानानुपूर्वीकाणि सूत्राणि—सिद्धं सायंप्रातर्भूतमित्युक्ते ओं इत्युच्चैर्ब्रूयात्। माक्षानमस्त इत्युपांशु। हविष्यस्यान्नस्य जुहुयात् प्राजापत्यं सौविष्टकृतं च। बलीन् निनयेत्। बहिरन्तर्वा चतुर्निधाय। मणिकदेशे। मध्ये। द्वारि। शय्यामनु। वर्चं वा। अथ सस्तूपम्। एकैकमुभयतः परिषिञ्चेत्। शेषमद्भिः सार्धं दक्षिणा निनयेत्। फलीकरणानामपामाचामस्येति विश्राणितं। पृथिवी वायुः प्रजापतिः विश्वेदेवाः आप ओषधिवनस्पतय आकाशः कामो मन्युर्वा रक्षोगणः पितरो रुद्र इति बलिदेवतानि। तूष्णीं तु कुर्यात्। सर्वस्य त्वन्नस्यैतत् कुर्यात्। असकृच्चेदेकस्मिन् काले सिद्धं सकृदेव कुर्यात्। बहुधा चेद् यद् गृहपतेः। सर्वस्य त्वन्नस्याग्नौ कृत्वाऽग्रं ब्राह्मणाय दत्त्वा स्वयं कुर्यात्। व्रीहिप्रभृत्यायवेभ्यो यवेभ्यो वाव्रीहिभ्यः स्वयं हरेत् स्वयं हरेत्। इति।

जैमिनिगृह्यसूत्रे चेत्थम्—सायंप्रातरशनस्य बली वर्धयित्वा पूर्वस्मादग्नौ जुहोत्यग्नये स्वाहा सोमाय स्वाहा धन्वन्तरये स्वाहा द्यावा-पृथिवीभ्यां स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सर्वाभ्यो देवताभ्यः स्वाहा प्रजापतये स्वाहेति मनसोत्तरां तत्र एवोत्तरतोऽग्नेर्बलिं हरति 'ये हर्पणा वेपना स्फातिमाहरा वातस्य भ्राजमनुसंचरन्ति। तेभ्यो बलिमन्नकामो हराम्यन्नं पयस्वद्बहुलं मे अस्तु' इत्येवमशनायत्यायस्थाने मृत्योरधिष्ठानाय स्वाहेति शेषस्य बलिहरणं प्रदक्षिणं गृह्याभ्यो देवताभ्यो बलिं नयामि तन्मे जुषन्तां ता मा पान्तु ता मा गोपायन्तु, ता मा रक्षन्तु, ताभ्यो नमस्ताभ्यः स्वाहेत्युदधाने मध्ये अगारस्योत्तरपूर्वार्धे शयने देहल्यां संवरणे ब्रह्मायतन एतेष्वायतनेषु शेषं धन्वन्तरये निनयेत् सदा गृहेषु स्वस्त्ययनं सा महाशान्तिरित्याचक्षते। नवेन यक्ष्यमाणः पुराणेनाग्रे यजेताग्निधन्वन्तरी प्रजापतिमिन्द्रं तिस्रश्च नवाहुतीर्नवेन यजेत शरदि व्रीहिणां वसन्ते यवानां वर्षासु श्यामाकानामैन्द्राग्नो वैश्वदेवो द्यावापृथिव्यश्चरव एकवदुक्तं एवोपस्तरणाभिघारणे द्विर्हविषोऽवद्यति। इति।

आश्वलायनगृह्यसूत्रे च—अथ सायंप्रातःसिद्धस्य हविष्यस्य जुहुयात्। अग्निहोत्रदेवताभ्यः सोमाय वनस्पतये अग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरये इन्द्राय विश्वेभ्यो ब्रह्मणे स्वाहेत्यथ बलिहरणम्। एताभ्यश्चैव देवताभ्योऽद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः। इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्य इति प्रतिदिशाम्। ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये। विश्वेभ्यो देवेभ्यः। सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा। नक्तञ्चारिभ्य इति नक्तम्। रक्षोभ्य इत्युत्तरतः। स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत्। अथातः पञ्च यज्ञाः, देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञ इति। तद् यदग्नौ जुहोति स देवयज्ञः, यद् बलिङ्करोति स भूतयज्ञः, यत् पितृभ्यो ददाति स पितृयज्ञः, यत् स्वाध्यायमधीते स ब्रह्मयज्ञः, यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञ इति। तानेतान् यज्ञानहरहः कुर्वीत। अथ स्वाध्यायविधिः। प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य

प्राक्कूलानामन्तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तौ विज्ञायते, अपां वा एष ओषधीनां रसो यद् दर्भाः सरसमेव तद् ब्रह्म करोति द्यावापृथिव्योः सन्धिमीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायम्। ॐपूर्वा व्याहृतीः। सावित्रीमन्वाह पच्छोऽर्द्धर्चशः सर्वामिति तृतीयम्। अथ स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीति। यदृचोऽधीते पय आहुतिभिरेव तद्देवतास्तर्पयति यद् यजूंषि घृताहुतिभिः, यत् सामानि मध्वाहुतिभिः, यदथर्वाङ्गिरसः सोमाहुतिभिः, यद् ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृताहुतिभिः। यदृचोऽधीते पयसः कुल्या अस्य पितॄन् स्वधा उपक्षरन्ति, यद् यजूंषि घृतस्य कुल्याः, यत् सामानि मध्वः कुल्याः यदथर्वाङ्गिरसः सोमस्य कुल्याः यद् ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृतस्य कुल्याः। स यावन्मन्येत तावदधीत्यैतया परिदधाति नमो ब्रह्मणे नमोऽस्त्वग्नये नमः पृथिव्यै नम ओषधिभ्यः नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमीति। इत्यादि।

मानवगृह्यसूत्रे तु वैश्वदेवस्य सिद्धस्य सायंप्रातर्बलिं हरेत्। अग्नीषोमौ, धन्वन्तरिम्, विश्वान् देवान्, प्रजापतिमग्निं स्विष्टकृतमित्येवं होमो विधीयते। अथ बलिं हरत्यग्नये नमः। सोमाय, धन्वन्तरये, विश्वेभ्यो देवेभ्यः, प्रजापतये, अग्नये स्विष्टकृत इत्यग्न्यागार उत्तरामुत्तराम्। अद्भ्य इत्युदकुम्भसकाशे। ओषधिभ्य इत्योषधिभ्यो वनस्पतिभ्य इति मध्यमायां स्थूणायाम्। गृह्याभ्यो देवताभ्य इति गृहमध्ये। धर्मायाधर्मायेति द्वारे। मृत्यवे आकाशायेत्याकाशे। अन्तर्गोष्ठायेत्यन्तर्गोष्ठे। बहिर्वैश्रवणायेति बहिः प्राचीम्। विश्वेभ्यो देवेभ्य इति वेश्मनि। इन्द्रायेन्द्रपुरुषेभ्य इति पुरस्तात्। यमाय यमपुरुषेभ्य इति दक्षिणतः। वरुणाय वरुणपुरुषेभ्य इति पश्चात्। सोमाय सोमपुरुषेभ्य इत्युत्तरतः। ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये। प्राचीमापातिकेभ्यः सम्पातिकेभ्य ऋक्षेभ्यो यक्षेभ्यः पिपीलिकाभ्यः पिशाचेभ्योऽप्सरोभ्यो गन्धर्वेभ्यो गुह्यकेभ्यः शैलेभ्यः पन्नगेभ्यः। दिवाचारिभ्यो भूतेभ्य इति दिवा। नक्तञ्चारिभ्यो भूतेभ्य इति नक्तम्। धन्वन्तरये धन्वन्तरितर्पणम् अद्भिः संसृज्य पितृभ्यः स्वधेति शेषं दक्षिणा भूमौ निनयेत्। पाणी प्रक्षाल्याऽऽचम्यातिथिं भोजयित्वाऽवशिष्टस्याश्नीयात्। इति।

बौधायनगृह्यसूत्रे तु—अथ बलिहरणम्। सायंप्रातर्यदशनीयस्य क्रियेतौपासने पचने वा होमः। एतावदेव नाना। क्षारलवणावरान्नसंसृष्टस्य तु होमं परिचक्षते। काममितरेष्वायतनेषु। अथ यद्येतदेव स्यादुत्तरतो भस्ममिश्रानङ्गारान् निरुह्य तेषु जुहुयात्। सर्वेष्वायतनेषु पाणिना परिसमुह्योभयतः परिषेके निदध्यात्। देशाभ्यासे मन्त्राभ्यासः कामं समानस्थानेषु। अवग्राहशो हस्तेन होमः। अग्नये स्वाहा, सोमाय स्वाहा, ध्रुवाय स्वाहा, ध्रुवाय भूमाय स्वाहा, ध्रुवक्षितये स्वाहा, अच्युतक्षितये स्वाहा, ईशानाय स्वाहा, जयन्ताय स्वाहा, धर्मरुचये स्वाहा, धन्वन्तरये स्वाहा, विद्यायै स्वाहा, अम्बिकायै स्वाहा, हरये, गणेभ्यः, गणपतिभ्यः,

परिषद्‌भ्यः, विश्वेभ्यो देवेभ्यः, साध्येभ्यो देवेभ्यः, सर्वेभ्यो देवेभ्यः, सर्वाभ्यो देवताभ्यः, भूः, भुवः, स्वः, भूर्भुवःस्वः सर्वत्र 'स्वाहा'योगः। अग्नये स्विष्टकृते स्वाहा इत्युत्तरार्द्धपूर्वार्धे। अपरेणाग्निं धर्माय, अधर्माय, स्वाहा इति। अग्रेणाग्निं कन्नवे नागमात्रे स्वाहा, सर्पेभ्यः स्वाहा। इति। अग्निणायावकाशे अचलायै देव्यै स्वाहा वास्तुपाल्यै सगणायै स्वाहा। अग्निणदेशे अग्नयः, वरुणाय स्वाहा। स्थाल्यां प्रजापतये, परमेष्ठिने, देवतावकाशे ऋषभाय, रुद्राय, रुद्राण्यै। मध्येऽगारस्य ओषधिवनस्पतिभ्यः, रक्षोदेवजनेभ्यः। उच्छिरसि—कामाय, भगाय, श्रियै, विष्णवे। स्थूणादेशे गृहाय, गृहराजाय। धनधान्यावकाशे—धनधान्याभ्यां वैश्रवणाय। गोष्ठे वा पल्वले वा—श्रियै, पुष्ट्यै। उलूखलमुसलावकाशे—उलखलमुसलाभ्याम् दृषदुपलावकाशे—दृषदुपलाभ्याम्। समूहन्यवकाशे समूहन्यै देव्यै। उत्तरपूर्वदेशेऽगारस्य—गृह्याभ्यः, अवसानेभ्यः, अवसानपतिभ्यः, सर्वदेवजनेभ्यः, सर्वभूतेभ्यः। द्वारमध्ये अन्तरिक्षाय, अवान्तरिक्षाय। पार्श्वयोः—धात्रे, विधात्रे। उपपार्श्वयोः—भूत्यै, प्रभूत्यै। संवरणदेशे—यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने। अथोपनिष्क्रम्य ज्येष्ठावकाशे ज्येष्ठाभ्यां, करस्करावकाशे—करस्कराभ्याम्। अनसि वा रथे वा श्रियै, विष्णवे। गोष्ठे—रुद्राय, पशुभ्यः, पशुपतये। वास्तुमध्ये—वास्तोष्पतये, पृथिव्यै, अन्तरिक्षाय, दिवे, सूर्याय, चन्द्रमसे, नक्षत्रेभ्यः, अद्‌भ्यः, ओषधिभ्यः, वनस्पतिभ्यः, चराचरेभ्यः, परिप्लवेभ्यः, सरीसृपेभ्यः, देशेभ्यः, कालेभ्यः, लोकेभ्यः, देवेभ्यः, ऋषिभ्यः, वसुभ्यः, रुद्रेभ्यः, आदित्येभ्यः, इन्द्राय, बृहस्पतये, प्रजापतये, ब्रह्मणे इति। (सर्वत्र स्वाहासंयोगः)। अथ दक्षिणतः प्राचीनावीती—पितृभ्यः स्वधा नमः स्वाहा, पितामहेभ्यः स्वधा नमः स्वाहा, प्रपितामहेभ्यः स्वधा नमः स्वाहा। अथाप उपस्पृश्योत्तरतो यज्ञोपवीती—नमो रुद्राय भगवते। अथ दिक्षु—प्राच्यै दिशे, दक्षिणायै दिशे, प्रतीच्यै दिशे, उदीच्यै दिशे, ऊर्ध्वायै दिशे, अधरायै दिशे। अथावान्तरदिक्षु—यमाय, निऋत्यै, रक्षोभ्यः ईशानाय (सर्वत्र स्वाहा-योगः)। अथाकाश उत्क्षिपति—ये भूताः प्रचरन्ति दिवा बलिमिच्छन्तो वितुदस्य प्रेष्याः। तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा। इति दिवा। ये भूताः प्रचरन्ति नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः। तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा, इति नक्तम्। संक्षालनं प्रागुदीच्यां दिशि निनयति—नमो रुद्राय भौमाय स्वाहा इति॥

अथ वैश्वदेवं हुत्वाऽतिथिमाकाङ्क्षेदा गोदोहकालम्। अग्रं वोद्धृत्य दद्यात्। विज्ञायते यज्ञो वा एष पञ्चमो यदतिथिः। जघनेन गार्हपत्यमुपविश्यौपासनस्य वा 'अधीहि भोः' इति गार्हपत्यमुक्त्वा प्राणायामैस्त्रिरायम्य सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरम्। वेदादयश्छन्दांसि कुष्माण्डानि चाधीयीत। 'अग्निमीळे पुरोहितम्' इति ऋग्वेदस्य, 'इषे त्वोर्जे त्वा' इति यजुर्वेदस्य। 'अग्न आयाहि वीतये' इति सामवेदस्य, 'शं नो देवीरभीष्टये' इत्यथर्ववेदस्य 'अग्निर्मूर्धा भुवः' इति छन्दांसि, 'यद्देवा देवहेलनम्' इति कुष्माण्ड्यः। यदधीते

स ब्रह्मयज्ञः, यज्जुहोति स देवयज्ञः, यत् पितृभ्यः स्वधा करोति स पितृयज्ञः, यद् भूतेभ्यो बलिं हरति स भूतयज्ञः, यद् ब्राह्मणेभ्योऽन्नं ददाति स मनुष्ययज्ञ इति ।

एते पञ्चमहायज्ञाः.................. ।
सततं सुप्रयुक्ता नयन्ति परमां गतिम् ॥
एतेभ्यो यस्य पञ्चभ्यो यज्ञ एकोऽपि हीयते ॥
मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते ।
द्व्यहं त्र्यहं वापि प्रमादादकृतेषु तु ॥
तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत् ।
दशाहं द्वादशाहं वा विच्छिन्नेषु तु सर्वशः ॥
चतस्रोऽभ्यावर्तिनीर्हुत्वा कार्यस्तान्तुमतश्चरुः ।
यस्य स्त्री वाऽनुपेतो वा गृहेष्वेतान् बलीन् हरेत् ॥
कुष्माण्ड्यस्तत्र होतव्यो हुत्वा यज्ञसमृद्धये ।
प्रवासं गच्छतो यस्य गृहे कर्त्ता न विद्यते ॥
पञ्चानां महतामेषां स यज्ञैः सह गच्छति ।
प्रवासे कुरुते चैनान् यदन्नमुपपद्यते ॥
न चेदुत्पद्यते चान्नमद्भिरेनान् समापयेत् ।
अद्भिरेव व्रतं कुर्याद् यथालाभमनुव्रतम् ॥
देवानां देवयज्ञेन द्विजा गच्छन्ति साम्यताम् ।
पितॄणां पितृयज्ञेन भूतयज्ञेन भूतिनः ॥
मनोर्मनुष्ययज्ञेन ब्रह्मयज्ञेन ब्रह्मणः ॥
एतासां साम्यतां गत्वा देवतानां शतं समाः ।
आनन्दं ब्रह्म गच्छन्ति ध्रुवं शाश्वतमव्ययम् ॥ इति ।

अथास्मा अतिथिर्भवति गुरोः समानवृत्तिर्वैखानसो वा गृहस्थो वानप्रस्थः परिव्राजको गतश्रीः स्नातको राजा वा धर्मयुक्तः । तेषामभ्युत्थायाऽऽसनं पाद्यमर्हणमर्घ्यं वा प्रयुञ्जीत । यास्तत्रौषधयः सन्ति ता देयाः । अन्यां वा प्रक्रियां प्रकुर्वीत । सर्वेभ्योऽभ्यागतेभ्य आ श्वचाण्डालेभ्यः स्वागतं कार्यम् । औषधिविभागस्तु विभववता कार्योऽभावे भूमिरुदकं तृणानि कल्याणी वागिति । एतानि वै सतोऽगारे न क्षीयन्ते कदाचन । इति तानेतान् परं ब्रह्मेत्याचक्षते । तेषां ग्रहणे तु द्वादशरात्रमक्षारलवणभोजनमधःशयनं ब्रह्मचर्यम् । त्रिरात्रोपोषित उत्क्षेपणौ परौ गृह्णीयात् । बलिहरणं व्याख्यातम्" इति ॥

पारस्करगृह्यसूत्रे च—अथातः पञ्च महायज्ञाः । वैश्वदेवादन्नात् पर्युक्ष्य स्वाहाकारैर्जुहुयाद् ब्रह्मणे, प्रजापतये, गृह्याभ्यः, कश्यपायानुमतय इति । भूतगृह्येभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः

पृथिव्यै। धात्रे विधात्रे च द्वार्ययोः। प्रतिदिशं वायवे दिशां च। मध्ये त्रीन् ब्रह्मणे, अन्तरिक्षाय, सूर्याय। विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्तेषामुत्तरतः। उषसे भूतानां च पतये परम्। पितृभ्यः स्वधा नम इति दक्षिणतः। पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेत् यक्ष्मैतत्त इति। उद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्त त इति। यथार्हं भिक्षुकानतिथींश्च सम्भजेरन्। बालज्येष्ठा गृह्या यथार्हमश्नीयुः। पश्चाद् गृहपतिः पत्नी च। पूर्वो वा गृहपतिः। तस्मादु स्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुतेः। अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद् देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात्। इति।

अत्र तावद् गृह्यसूत्राणां विशेषोन्नयने भगवन्तोऽनूचानाः प्रमाणम्, विस्तरभयान्नास्माभिरिह प्रयत्नः कृत इति दिक्।

---

# प्रथमप्रपाठकस्य पञ्चमी कण्डिका

महायज्ञानभिधायेदानीं दर्शपौर्णमासविवक्षयेदमाह :—

## अथ दर्शपौर्णमासयोः ॥१॥

अथेत्यपूर्वप्रकरणोपन्यासार्थः[1]। पूर्वप्रकृतापेक्षो वा। कथम्? यथा सायंप्रातर्होमबलिहरणानि नित्यान्येवं[2] दर्शपूर्णमासावपीति(A)। ततश्च [3]यथा पूर्वत्र विकल्पो जुहुयाद् वा हावयेद् वेति एवमिहापीति। दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ, तयोर्दर्शपूर्णमासयोः(B)। अधिकारो वर्तिष्यत इति [4]सम्बन्धः। किञ्च—

## सन्ध्यां पौर्णमासीमुपवसेत् ॥२॥

रात्र्यह्नोः सन्धिः सन्ध्या, तस्यां सन्ध्यायां या पौर्णमास्यव[5]च्छिद्यते [6]सा सन्ध्येत्युच्यते। अविशेषात् सन्ध्याद्वयमपि गृह्यते। कथं नाम चन्द्रचारवशात् समस्तमहोरात्रं या व्याप्योदय[7]सन्ध्यायामवच्छिद्यते, या वा अह्नेव केवलं व्याप्यास्तमयसन्ध्यायामवच्छिद्यते सा सन्ध्या पौर्णमासी[8]त्युच्यते। तामेवंलक्षणां पौर्णमासीमुपवसेत्। न चायमुपवास आहारत्यागेन। कुतः? "[9]औपवसथिकं दम्पती भुञ्जीयाताम्" इति

A. नित्ययज्ञानाह माधवाचार्यः पराशरसंहिताटीकायाम्—

"तत्र यज्ञानां नित्यत्वं कुथुमशाखायां श्रूयते—मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि। तान्याचरथ नियतम्। ( मु० उ० १-२-१ ) इति। वाजसनेयिशाखायामपि—कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। ( ई० उ० २ ) इति। एतद् जरामर्यमग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना च। ( म० ना० उ० २५-१ ) इति च। विधिवाक्येषु जीवनाद्युपबन्धस्तु नित्यत्वलक्षकः। तद् यथा—"यावज्जीवमग्निहोत्रं जुहुयात्" "यावज्जीवं दर्शपौर्णमासाभ्यां यजेत" "वसन्ते वसन्ते ज्योतिषा यजेत" इति।

अकरणे प्रत्यवायश्च नित्यत्वगमकः। तथा चाऽऽथर्वणे श्रूयते—

यस्याग्निहोत्रमदर्शपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं वाऽहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति। ( मु० उ० १-२-३ ) इति।

B. यद्यपि सूत्रानुरोधाद् विग्रहे पौर्णमासश्चेत्यादिपाठो युक्तस्तथापि आदर्शपुस्तकानां पाठ एव मूले सन्निवेशित इति।

1. '-र्थम्' ख। 2. 'एवं' स्थाने 'तथा' ख। 3. 'यथा' नास्ति क। 4. 'सूत्रशेषः' ख। 5. '-विद्यते' क। 6. 'सा' नास्ति ख। 7. '-सन्ध्यामवच्छिद्यते' ख-ग। 8. 'इति' नास्ति ख। 9. 'उपवसथिकं' ख-ग।

[ सू १।५।२७ ] वक्ष्यमाणत्वात्, तस्मात् प्रवासादिविहितयमनियम[1]कलापसेवने-नैवायमुपवासः स्यात्। तथा च स्मरणम् :—

उपा[2]वृत्तस्य पापेभ्यो [3]यस्तु वासो गुणैः सह।
उपवासः स विज्ञेयो न शरीरस्य शोषणम्॥ (A)इति।

## उत्तरामित्येके ॥३॥

उत्तरा प्रतिपत्। तथा च रौरुकीयाणां श्रुतिः—द्वे ह वै पौर्णमास्यौ द्वे अमावास्ये तस्मात् प्रतिपद्युपवसेन्नैव यजेतापरेद्युर्वेति(B)। तामुत्तरां प्रतिपदमुपवसेत् इति वर्त्तते। इत्येवमेके शाखिन आहुः। एक इति स्वमतव्युदासार्थं परशाखाप्रदर्शनार्थं [4]वा, एवमेके मन्यन्ते न गोभिल इत्यर्थः॥(C)

## अथ यदहश्चन्द्रमा न [5]दृश्येतताममा[6]वास्याम्॥ ४॥

अथेति पूर्वप्रकृतापेक्षः। यत् पौर्णमास्यां यागार्थं हविरुपक्लृप्तं तदमावास्याया-

A. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये 'इति च स्मरणादि'त्युपोद्घातेन। हेमाद्रिस्तु चतुर्वर्गचिन्तामणौ परिशेषखण्डे—"तत्रोपवासस्वरूपं वृद्धवसिष्ठ-कात्यायन-विष्णुधर्मोत्तरेषु—

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः॥ इति" इत्याह।

एके पुनः 'उपास्मिन् श्वो यक्ष्यमाणा देवा वसन्ति एवं विद्वानग्निमुपस्तृणाति' इति तैत्तिरीय-ब्राह्मणं पश्यन्त उपवासोऽग्न्याधानमिति वर्णयन्ति, 'पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्देवतां यजते" इत्येवमादिशाखान्तरमप्युदाहरन्ति। इति पुनस्तर्कालङ्कार आह स्वभाष्ये।

B. अत्र स्थितं 'नैवे'ति पदं विहाय पठति प्रमाणीकरोति च तर्कालङ्कारः 'तथा च रौरुकीयाणां ब्राह्मण'मित्युपोद्घातेन। रघुनन्दनस्तु "द्वे ह वै पौर्णमास्यौ द्वे अमावास्ये तस्मात् प्रतिपद्युपवसन् यजेतापरेद्युः" इति श्रुत्या ऐन्द्राग्नेययागादितिथिधर्मयोगेनाजहत्स्वार्थलक्षणया अमावास्या-पदस्य शुक्लप्रतिपदमावास्यापरत्वम्" इत्याह।

C. अत्र तु पौर्णमासीकथाऽसम्पूर्णाऽपि स्थिता पुनरुद्भविष्यति 'अथः पौर्णमासीकाला भवन्ती'ति सूत्रे, अथेत्यादिना त्विदानीं व्यवस्थोच्यतेऽमावास्याया इति।

1. '-कालाप-' क। 2. '-वृत्तस्तु' ख। 3. 'यस्य' ख। 4. 'च' ग। 5. 'दृश्यते' क-ग। 6. '-वासायाम्' ख।

मप्युपकल्पनीयमित्यर्थः। कुतः? [1]'दर्शान्तं पौर्णमास्याद्यमेकमेवेति'[1]* वचनात्(A)। येन हविषा कर्म प्रक्रान्तं तेनैव समापनीयमिति "च न्यायात्[2]*। यदहः यस्मिन्नहनि, चन्द्रमाः सोमः, न दृश्येत आगमद्वारेण क्षीण इत्युपलभ्यते, ताममावास्या[3]मुपवसेदिति वर्त्तते(B)॥

---

A. तदुक्तम्—

सायमादि प्रातरन्तमेकं कर्म प्रचक्षते।
दर्शान्तं पौर्णमासाद्यमेकमेव मनीषिणः॥ इति कर्मप्रदीपे १८।१।

B. अमावास्यां निरूपयति हेमाद्रिः—

पद्मपुराणे—

अग्निष्वात्ता इति ख्याता यज्वानो यज्ञसंस्थिताः।
अच्छाऽमा नाम तेषान्तु मानसी कन्यका मता॥
तमथामा वसुं नाम पितरं वीक्ष्य साऽङ्गना।
वव्रे वरार्थिनी सङ्गं कुसुमायुधपीडनात्॥
योगाद् भ्रष्टा तु तेनासौ व्यभिचारेण भामिनी।
धरां न स्पृशते पूर्वं पपाताथ भुवस्तले॥
पिता चामां वसुर्यस्माद्विच्छां चक्रे न तां प्रति।
धैर्येण तस्य सा लोके अमावास्येति विश्रुता॥
पितॄणां वल्लभा यस्माद् दत्तस्याक्षयकारिणी॥

परमसंयमिपितृगणाभिमतब्रह्मचर्याप्रच्युतिहेतुभूताऽमा वसुधैर्यनिर्वहणप्रतीतमहिमत्वादमावास्येत्युच्यते इत्येतदितिहासतात्पर्यम्। स्कान्दे नागरखण्डे—

अमा नाम कलारश्मिः सहस्रप्रमुखस्थितः।
यस्याश्च तेजसा सूर्यः प्रोक्तस्त्रैलोक्यदीपकः॥
तस्मिन् विशति येनेन्दुरमावास्या ततः स्मृता।
अक्षया धर्मकृत्ये सा पितृकृत्ये विशेषतः॥

ब्रह्माण्डपुराणे—

अमा नाम कलारश्मिः सहस्रप्रमुखस्थितः।
त्रैलोक्यदीपकः प्रोक्तश्चन्द्रलोके प्रतिष्ठितः॥
यस्मात् सोमो विशत्यस्याममावास्या ततः स्मृता॥

---

1. 'दर्शान्तं पौर्णमासाद्येकं कर्मेति' क-ग। 2. 'च न्यायात्' नास्ति ख। 3. '-वास्या-' ख।

मत्स्यवायुपुराणयोः—

अमा वसेतामृक्षे तु यदा चन्द्रदिवाकरौ ।
एषा पञ्चदशी रात्रिरमावास्या ततस्तु सा ॥
आश्रित्यताममावास्यां पश्यतस्तु समागतौ ।
अन्योन्यं चन्द्रसूर्यौ तौ यदा तद् दर्श उच्यते ॥

सा च द्विविधा । तथा च स्कन्दपुराणे—

राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता ।
सिनीवाली कुहूश्चैव अमावास्या द्विधैव तु ॥

तयोश्च लक्षणं श्रुतौ—

या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका, या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूरिति विज्ञायते । अत्र चतुर्दशीमिश्रा सिनीवालीत्युक्तं भवति । अस्याञ्च त्रिमुहूर्ताधिक-चतुर्दशीमिश्रायां चन्द्रो भवतीति ज्योतिर्विद्वचनात् प्रायिकं चन्द्रोदयोपलक्षितेयमित्यभिप्रेत्याह व्यासः—

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूः स्मृता ।
सिनीवाली सदा पित्र्ये कुहूर्दैवे तु कर्मणि ॥ इति ।

अथानयोर्निर्वचनं पर्वसन्धि प्रकृत्य—

सिनीवाली प्रमाणन्तु क्षीणशेषो निशाकरः ।
अमावास्यां विशत्यर्कं सिनीवाली तथा स्मृता ॥
कुहूरिति पिकेनोक्तं यावत्कालः समाप्यते ।
तत्कालसम्मिता ह्येषा अमावास्या कुहूः स्मृता ॥" इति ।

चतुर्वर्गचिन्तामणौ श्राद्धकल्पे । श्राद्धे नित्यत्वमस्य निरूपयति स एव, नित्यश्चायं श्राद्ध-कालः—तथा च विष्णुधर्मोत्तरे—

श्राद्धकालममावास्यां नित्यं पार्थिवसत्तम ।
पौर्णमासीं तथा माघीं श्रावणीञ्च प्रचक्षते ॥ इति ।

मार्कण्डेये—

कार्यं श्राद्धममावास्यां मासि मास्युडुपक्षये ।
तथाऽष्टकास्वप्यवश्यमिष्टं कालं निबोध मे ॥ इति ।

ब्रह्मपुराणे—

श्राद्धं देयमुशन्तीह मासि मास्युडुपक्षये ।
पौर्णमासीषु च श्राद्धं कर्तव्यम् ऋक्षगोचरे ॥ इति ।

विष्णुपुराणे च—

मासि मास्यसिते पक्षे पञ्चदश्यां नरेश्वर ।
तथाऽष्टकासु कुर्वीत काम्यान् कालाञ् शृणुष्व मे ॥ इति ।

अत्र काम्यान् कालानिति वक्ष्यमाणानां काम्यत्वं वदन् पूर्वोक्तानां नित्यत्वमनुसन्धत्ते ।

नागरखण्डे—

श्राद्धं चन्द्रक्षयेऽवश्यं सदा कार्यं विपश्चिता ।
यदि वेच्छति च स्वर्गं सन्तानञ्च तथा नृप ॥
शीतार्ता यद्वदिच्छन्ति वह्निं प्रावरणानि च ।
पितरस्तद्वदिच्छन्ति क्षुत्क्षामाश्चन्द्रसंक्षयम् ॥
दारिद्र्योपहता यद्वद्धनं वाञ्छन्ति मानवाः ।
पितरस्तद्वदिच्छन्ति क्षुत्क्षामाश्चन्द्रसंक्षयम् ॥
यथा वृष्टिं प्रवाञ्छन्ति कर्षकाः शस्यवृद्धये ।
तथात्मतृप्तये प्रीताः प्रवाञ्छन्तीन्दुसंक्षयम् ॥
यथोपश्चक्रवाकाश्च वाञ्छन्ति रविदर्शनम् ।
पितरस्तद्वदिच्छन्ति श्राद्धं दर्शसमुद्भवम् ॥
जलेनापि च यः श्राद्धं शाकेनापि करोति न ।
दर्शाहे पितरस्तस्य यान्ति शापप्रदायिनः ॥

तथा—

अमावास्यादिने प्राप्ते गृहद्वारं समाश्रिताः ।
वायुभूताः प्रवाञ्छन्ति श्राद्धं पितृगणा नृणाम् ॥
यावदस्तमयं भानोः क्षुत्पिपासासमाकुलाः ।
ततश्चास्तं गते भानौ निराशा दुःखसंयुताः ॥
निःश्वस्य सुचिरं यान्ति गर्हयन्तः स्ववंशजम् ॥ इति ।

विष्णुधर्मोत्तरे—

राज्यकामः स्वर्गकामः पुष्टिकामस्तथैव च ।
पितॄन् सन्तर्पयेच् श्राद्धे चन्द्रसूर्यसमागमे ॥
वसन्ति सततं राजन् पितरश्चन्द्रमण्डले ।
तेषां मासमहोरात्रविभागं तत्र मे शृणु ॥
कृष्णपक्षाष्टमीमध्ये तेषान्तूदयते रविः ।
शुक्लाष्टम्यां तथैवास्तं तेषां याति दिवाकरः ॥
अमावास्या सदा तेषां मध्याह्नो जायते नृप ।
तस्माच श्राद्धानि देयानि तस्मिन् काले प्रयत्नतः ॥" इति ।

पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः ॥ ५ ॥

पक्षाऽर्द्धमासः, पूर्वपक्षोऽपरपक्षश्च। बहुवचनमावृत्त्यपेक्षम्। पक्षाणामन्ताः अवसानतिथयः पक्षान्ताः, ते वक्ष्यमाणेन विधिना उपवस्तव्याः। पक्षाणामादयः पक्षादयः प्रतिपदः, ताश्चा[1]भियष्टव्याः आभिमुख्येन पूर्वाह्णादिसम्पादनेन यष्टव्या इति(A)। एतस्माच्च पूर्वां पौर्णमासीमुपवसेत् नोत्तरामिति सिद्धम्।

---

A. अत्र कालमाधवे यदुक्तं तस्मात् किञ्चिदुदाह्रियते—"अथेष्टिकालो निर्णीयते—न चेष्टेः प्रतिपदि कर्त्तव्यतया पूर्वप्रकरण एव कुतोऽयं नाभिहित इति शङ्कनीयम् पर्वचतुर्थांशस्यापि प्रतिपद एवेष्टिकालत्वात् पर्वप्रतिपत्सन्धिसापेक्षत्वाच्च, अतः पर्वनिर्णयानन्तरमस्य निर्णयस्यावसर इतीदानीं निर्णीयते। अत्रेदं चिन्त्यते—किं पर्वप्रतिपदोः सन्धिरिष्टिकालः किं वा सन्धेरुभौ पार्श्वाविति, तदर्थं प्रथमं सन्धिस्वरूपं निरूपणीयम्, तन्निरूपणञ्च पर्वभेदाधीनम्, अतः पर्व-भेदो निरूप्यते, पर्व च द्विविधम्, पौर्णमास्यमावास्या चेति ; ननु प्रतिपदमारभ्य चतुर्दश्यन्तानां तिथीनां शुक्लकृष्णपक्षयोर्नास्ति नामभेदः पञ्चदश्यां तु किमर्थोऽयं नामभेद इति चेत, तयोर्विशेष-स्वभावज्ञापनायेति ब्रूमः। प्रथमद्वितीयादीनां चन्द्रकलानां मध्ये यत्संख्याका कला वर्धते तत्संख्याका शुक्लपक्षे तिथिर्व्यवह्रियते, कृष्णपक्षेऽपि क्षीयमाणायास्तस्याः कलाया नाम्ना तत्-तिथिव्यवहारः, तेन न्यायेनान्त्यतिथेरपि पक्षद्वये पञ्चदशीत्येव व्यवहारः, तत्र शुक्लायां पञ्चदश्यां चन्द्रमण्डलं स्वकलाभिः सर्वात्मना पूर्यते। सेयं मण्डलपरिपूर्त्तिः पूर्णिमेत्यनेन नाम्ना ज्ञायते। तदुक्तं ब्रह्माण्डमत्स्यपुराणयोः—

कलाक्षये व्यतिक्रान्ते दिवापूर्णौ परस्परम्।
चन्द्रादित्यौ पराह्णे तु पूर्णत्वात् पूर्णिमा स्मृता॥ इति।

अह्नः परो भागः पराह्णः सूर्यास्तमयकाल इत्यर्थः। तत्र यथा आदित्यः संपूर्णमण्डलः सन्नस्त-मेति तथोत्तरक्षणे चन्द्रः सम्पूर्णमण्डलः सन्नुदेतीति दृष्टान्तदार्ष्टान्तिकभावं विवक्षित्वा द्वयोरादित्य-चन्द्रयोरुपन्यासः। यथा मण्डलपूर्णत्वविवक्षया पूर्णिमाशब्दः प्रयुज्यते तथा मासपूर्णत्वविवक्षया पौर्णमासीशब्दः प्रयुज्यते।

तदुक्तं भविष्योत्तरे—

पौर्णमासी महाराज सोमस्य दयिता तिथिः।
पूर्णो मासो भवेद् यस्मात् पौर्णमासी ततः स्मृता॥ इति।

पूर्णिमामावास्ययोर्विकल्पेन मासान्तत्वं मासप्रस्तावे दर्शितम्। अमावास्येत्यनेन नाम्ना बहवोऽर्थाः कथ्यन्ते—तत्र अमाशब्दस्य चत्वारोऽर्थाः—सहभावः, कम्या, सूर्यरश्मिः, चन्द्रकला

---

1. 'चाभि' स्थाने 'तिथयो' ख।

चेति। वसुशब्दस्य च चत्वारोऽर्थाः इन्द्रः, चन्द्रः, पितृविशेषः, निवासश्चेति। तत्र सह-भाववाचिनममाशब्दमिन्द्रवाचिनं वसुशब्दञ्चोररीकृत्य निर्वचनमेवं प्रवर्तते—अमा वसुरस्या-मित्यमावास्येति। अयमर्थः—वृत्रवधानन्तरं प्रोषितेन्द्रसमागमे सन्तुष्टा देवाः परस्परमवोचन्त अमाऽस्माभिः सहायमिन्द्रो निवसतीति सोऽयमर्थः शतपथब्राह्मणे दर्शपूर्णमासप्रकरणे श्रूयते—ते देवा अब्रुवन् अमा वै नोऽद्य वसुर्वसति यो नः प्रावात्सीदिति। तैत्तिरीयब्राह्मणेऽपि स्पष्टमय-मेवार्थः, इन्द्रो वृत्रं हत्वा परांपरावतमगच्छदपराधमिति मन्यमानस्तं देवाः प्रैषमैच्छन्नित्यारभ्य पठ्यते सोऽमावास्यां प्रत्यागच्छत् तं देवाभिसमगच्छन्तामा वै नोऽद्य वसुर्वसतीतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यात्वमिति। परांपरावतम् अत्यन्तदूरदेशमित्यर्थः। यदा वसु-शब्दश्चन्द्रवाची तदाप्यमाशब्दस्य वाच्यं सहभावमेवोररीकृत्य एवं निर्वक्तव्यम्—ओषधीभिः सह चन्द्रो वसत्यस्यां रात्रावित्यमावास्या। तथा बृहदारण्यकेऽपि चन्द्रं प्रकृत्य पठ्यते, सोऽमा-वास्यां रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते इति। अमा-वसुशब्दौ यदा कन्यापितृवाचिनौ तदानीमेवं निर्वक्तव्यम्। अमा वसुमैच्छदस्यां रात्रावित्यमा-वास्या। अमाशब्दाभिधेया काचित् कन्या तस्यां रात्रौ वसुनामानं पितरं वव्रे, स च पिता धर्मलोपाद् भीतस्तां कन्यां नैच्छत्। तदुक्तं पद्मपुराणे। अमावसुशब्दौ यदा सूर्यरश्मि-निवासवाचिनौ तदा तदनुसारेण निर्वचनं स्कान्दे नागरखण्डे पठ्यते।

ब्रह्माण्डपुराणेऽपि—

अमा नाम रवे रश्मिश्चन्द्रलोके प्रतिष्ठिता।
यस्मात् सोमो वसेत् तस्याममावास्या ततः स्मृता॥ इति।

अमावसुशब्दयोः सहभावनिवासवाचित्वमाश्रित्य मत्स्य-वायुपुराणे ब्रह्माण्डपुराणेऽपि निर्वचनं कृतम्—

अमा वसेतामृक्षे तु यदा चन्द्रदिवाकरौ।
एषा पञ्चदशी रात्रिरमावास्या ततः स्मृता॥ इति।

अमाशब्दस्य चन्द्रकलावाचित्वं स्कान्दे दर्शितम्—

अमा षोडशभागेन देवि प्रोक्ता महाकला। इति।

तां कलामुपजीव्य निर्वचनं भगवतीपुराणे दर्शितम्—

कलावशेषो निष्क्रान्तः प्रविष्टः सूर्यमण्डलम्।
अमायां विशते यस्मादमावास्या ततः स्मृता॥ इति।

अमावास्याशब्दपर्यायो दर्शशब्दोऽपि द्विधा निरुच्यते—सूर्याचन्द्रमसौ परस्परं पश्यतो-ऽत्रेति दर्शः।

तदुक्तं मत्स्यपुराणे—

आश्रित्यताममावास्यां पश्यतः सुसमागतौ।
अन्योऽन्यं चन्द्रसूर्यौ तौ यदा तद् दर्श उच्यते॥ इति।

न दृश्यते चन्द्रोऽत्रेति निर्वचनम्। यद्यपि तदानीमदर्श इति वक्तव्यम, तथापि विपरीत-लक्षणया दर्श इत्युच्यते। तदेतद् भट्टपादैरुक्तम् "शूरे कातरशब्दवत्" इति। अदर्शने च कारणं सूर्याचन्द्रमसोरत्यन्तसन्निकर्षः। सति च तस्मिन् सन्निकर्षे महता सौरेण तेजसा चान्द्रं तेजोऽभिभूयते, अत एव पौर्णमास्यामत्यन्तविप्रकर्षे सति अनभिभूतत्वाच्चन्द्रमण्डलं सम्पूर्णं दृश्यते। ते च पूर्णमास्यमावास्ये प्रत्येकं द्विविधे तच्च पुराणे दर्शितम्—

राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता।
सिनीवाली कुहूश्चैवममावास्या द्विधैव तु॥ इति।

तदेवं चत्वारः पर्वभेदाः, तेषु कुहूव्यतिरिक्तानां त्रयाणां भेदानां लघ्वक्षरोच्चारणपरिमितः कालः सन्धिरित्युच्यते, कुहूस्त्वक्षरद्वयपरिमितः कालः।

तदेतदुक्तं भगवतीपुराणे—

अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना।
एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता॥ इति।

तत्र लवस्वरूपं स्मृत्यन्तरे दर्शितम्—

लघ्वक्षरचतुर्भागस्त्रुटिरित्यभिधीयते।
त्रुटिद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम्॥ इति।

एवञ्च सति त्रुटिशब्दाभिधेयानां भागानां चतुष्टयं लवद्वयरूपं लघ्वक्षरसमं भवति। तस्मिन् लघ्वक्षरपरिमिते काले एकः पर्वणो भागो द्वितीयः प्रतिपदः, तदुभयं मिलित्वा सन्धिर्भवति, कुहू-प्रतिपदोः सन्धिस्तु पूर्वस्माद् द्विगुणः, अक्षरद्वयपरिमितत्वात्।

मत्स्यब्रह्माण्डपुराणयोः—

राका चानुमतिश्चैव सिनीवाली कुहूस्तथा।
एतासां द्विलवः कालः कुहूमात्रा कुहूस्तथा॥
कुहूरिति कोकिलेनोक्ते यावान् कालः समाप्यते।
तत्कालसंज्ञिता चैषा अमावास्या कुहूः स्मृता॥
इत्येष पर्वसन्धीनां कालो वा द्विविधः स्मृतः। इति।

एवं सन्धौ निरूपिते सति योऽयं प्रक्रान्तो विचारस्तत्र सन्धिरेवेष्टिकाल इति तावत् प्राप्तम्, 'सन्धौ यजेते'ति श्रुतेः। नैवम्, सन्धेः सूक्ष्मत्वात् तत्र यागानुष्ठानानुपपत्तेः। का तर्हि श्रुतेर्गतिः? पार्श्वद्वयलक्षणेति ब्रूमः। यथा गङ्गायां घोष इत्यत्र गङ्गाशब्दः प्रवाहेऽनुपपन्नस्तत्-समीपं तीरं लक्षयति, तथा सन्धिशब्दोऽपि पार्श्वद्वयं लक्षयतु। अत एव श्रुत्यन्तरम् 'सन्धि-मभितो यजेते'ति।

बौधायनोऽपि—

सूक्ष्मत्वात् सन्धिकालस्य सन्धेर्विषय उच्यते।
सामीप्यं विषयं प्राहुः पूर्वेणाह्नाऽपरेण च॥ इति।

अत्र पूर्वापरशब्दाभ्यां सन्धेः प्राचीनं पर्वदिनं प्रतीचीनं प्रतिपद्दिनं चाभिधीयते। तत्र पूर्वस्मिन् पर्वदिने यागप्रारम्भः, उत्तरस्मिन् प्रतिपद्दिने यागसमाप्तिः। अन्वाधानमिध्माबर्हिःसम्पादनमग्निपरिग्रह उपस्तरणं चेत्येवमादिः प्रयोगप्रारम्भः। स पूर्वेद्युरनुष्ठेयः। तथा च तैत्तिरीयब्राह्मणे श्रूयते—पूर्वेद्युरिध्माबर्हिः करोति यज्ञमेवारभ्य गृहीत्वोपवसतीति। शतपथब्राह्मणेऽपि—पूर्वेद्युरग्निं गृह्णाति उत्तममहर्यजतीति। तत्राग्निग्रहणं नाम अध्वर्युणाहवनीयगार्हपत्य-दक्षिणाग्निषु 'ममाग्ने वर्च' इत्यादिभिर्ऋग्भिः समिदाधानलक्षणेऽन्वाधाने क्रियमाणे पार्श्ववर्तिना यजमानेनाग्निं गृह्णामीत्यादीनां मन्त्राणां पठनम्। तदिदं पर्वदिने क्रियते, प्रतिपद्दिने तु 'कर्मणे वां देवेभ्य' इत्यादिभिरध्वर्युर्हस्तप्रक्षालनं तण्डुलनिर्वाप-पुरोडाशप्रदानादिलक्षणं प्रयोगं करोति। तदिदं यजनम्। एतदेवाभिप्रेत्याह गोभिलः सूत्रम् पक्षान्ता... । इति। अत्रोपवासशब्देनाग्न्युपस्तरणादिर्विवक्षितः। तस्मिन् क्रियमाणे यजमानसमीपे देवतानां निवासात्। तदेतत् तैत्तिरीयब्राह्मणे दर्शितम् 'उपास्मिन् श्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाती'ति। उपवासशब्दाभिधेयस्य पर्वदिने कर्त्तव्यस्यान्वाधानादेः पर्वणि चतुरंशवस्त्वाद्यास्त्रयोंऽशा विहितः कालः, न तु चतुर्थांशः। यागस्य तु पर्वचतुर्थांशः प्रतिपदंशास्त्रयश्च विहितः कालः, न तु प्रतिपदश्चतुर्थांशः।

तदेतदाह लौगाक्षिः—

> त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः।
> द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणि॥ इति।

तमेतं यज्ञकालं यज्ञपार्श्वोऽप्याह—

> पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः।
> कालः पार्वणयागे स्यादथान्त्ये तु न विद्यते॥ इति।

वृद्धशातातपोऽपि—

> पर्वणो यश्चतुर्थोंऽश आद्याः प्रतिपदस्त्रयः।
> यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः॥ इति।

अत्र प्रातरिति विशेषणात् सूर्योदयस्योपरि मुहूर्त्तत्रयं यागकाल इत्युक्तं भवति।

प्रतिपदश्चतुर्थांशं निषेधति कात्यायनः—

> न यष्टव्यं चतुर्थांऽशे यागैः प्रतिपदः क्वचित्।
> रक्षांसि तद् विलुम्पन्ति श्रुतिरेषा सनातनी॥ इति।

तदेवं पर्वण्यन्वाधानादिकं प्रतिपदि चेष्टिरिति सन्धि-पार्श्वयोः प्रारम्भपरिसमाप्ती व्यवस्थिते। यदा पर्वप्रतिपदावुदयमारभ्य पूर्णतिथी भवतस्तदा न सन्देह एव, यदा तु खण्डतिथी तदा तु निर्णयोऽभिधीयते—

तत्र गोभिलः—

आवर्त्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत् परेऽहनि ॥ इति ।
पर्वप्रतिपदोः सन्धिरर्वागावर्त्तनाद् यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ॥
आवर्त्तनात् परः सन्धिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येष पर्वद्वयविनिश्चयः ॥ इति ।

आवर्त्तनमह्नो मध्यभागः । लौगाक्षिरपि—

पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥
अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ॥ इति ।

एषु वचनेषु मध्याह्नादिशब्दा यौगिकाः, न तु पञ्चधाविभागमाश्रित्य प्रवृत्ताः, तथा सत्यह्नो मध्यो मध्याह्न इति व्युत्पत्तेरावर्त्तनं मध्याह्नशब्देनाभिधीयते, अत एवावर्त्तनशब्दः प्रयुक्तः । शातातपेनापि मध्यमशब्दः प्रयुक्तः—

पूर्वाह्णे मध्यमे वापि यदि पर्व समाप्यते ।
तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते ॥ इति ।

अह्नः पूर्वो भागः पूर्वाह्णः, अह्नोऽपरो भागोऽपराह्णः । अतस्ताभ्यां शब्दाभ्यामावर्त्तनात् पूर्वोत्तरभागावभिधीयेते । वाजसनेयिनां तु विशेषमाह—भाष्यार्थसंग्रहकारः—

मध्यन्दिनात् स्यादहनीह यस्मिन् प्राक् पर्वणः सन्धिरियं तृतीया ।
सा खर्विका वाजसनेयिमत्या तस्यामुपोष्याऽथ परेद्युरिष्टिः ॥ इति ।

आवर्त्तनादूर्ध्वमस्तमयादर्वाग् यदा सन्धिर्भवति तदाऽहःसन्धिमती तिथिः प्रथमा । रात्रौ सन्धिश्चेत् सा तिथिर्द्वितीया । उभे अपेक्ष्य पूर्वाह्णे सन्धिमती पर्वतिथिस्तृतीया भवति, तस्यां तृतीयतिथौ पर्वकालस्याल्पत्वात् सा खर्विकेत्युच्यते ।

शाखान्तराध्यायिनामीदृशे विषये पूर्वेद्युरन्वाधानादिकं सन्धितिथाविष्टिः, वाजसनेयिनां तु सन्धितिथावन्वाधानमुत्तरतिथाविष्टिः, एवं सति वाजसनेयिनां न क्वापि सन्धिदिनात् पूर्वेद्युरन्वाधानादिकमस्ति, सोऽयं विशेष आवर्त्तने, ततः पुरा वा यदि सन्धिर्भवति तदा वाजसनेयिव्यतिरिक्तानां पर्वचतुर्थांशे इष्टिः प्राप्नोति । तत्र विशेषमाह—गार्ग्यः—

प्रतिपत्प्रविष्टायां यदि चेष्टिः समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः ॥ इति ।

पर्वणश्चतुर्थोऽंशः प्रतिपदश्चाद्योऽंशाश्च यागकालत्वेन विहिताः, तत्र पर्वचतुर्थांशस्य विषय उदाहृतः, प्रतिपदंशानां विषय उदाह्रियते—

उषःकाले सन्धौ प्रतिपदः प्रथमांशो यागकालः, निशीथे सन्धौ द्वितीयोऽंशः, रात्रिप्रारम्भे सन्धौ तृतीयोऽंशः। नन्वनेन न्यायेनापराह्णे सन्धौ प्रतिपच्चतुर्थांशस्य प्रयोगकालत्वं प्राप्नोति, तच्च प्रतिषिद्धं 'न यष्टव्यं चतुर्थेऽंशे' इति श्रुतेः, अतस्तादृशे विषये याग एव लुप्यते इति चेद्, नैवम्, वृद्धशातातपेन प्रतिप्रसवाभिधानात्—

सन्धिर्यत्रापराह्णे स्याद् यागं प्रातः परेऽहनि।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति॥ इति।

एवं तर्हि प्रतिषेधो निर्विषयः स्यादिति चेत्? नैवम्, सद्यस्कालविषये चरितार्थत्वात्। तं च विषयं दर्शयति कात्यायनः—

सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक् चेदावर्त्तनाद् रवेः।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः॥ इति।

भाष्यार्थसंग्रहकारोऽपि—

अन्वाहितिश्चास्तरणोपवासाः पूर्वेद्युरेते खलु पौर्णमास्याम्।
आवर्तनात् प्राग् यदि पर्वसन्धिस्तदैव यागः क्रियते समस्तः॥ इति।

आपस्तम्बोऽपि—

पौर्णमास्यामन्वाधानपरिस्तरणोपवासाः सद्यो वा सायंकालाय सर्वं क्रियते इति।

सङ्गवावर्तनयोर्मध्ये पौर्णमासीप्रतिपदोः सन्धौ सति पूर्वोदाहृतैर्वचनैः सन्धिदिनात् पूर्वेद्युरन्वाधानादिकं प्राप्तम्, तच्च सद्यस्कालवाक्यैः सन्धिदिन उत्कृष्यते।

नन्वीदृशे विषये सन्धिदिनात् परदिने याग उत्कृष्यताम्, तथा सत्यपराह्णादिसन्धिष्विवान्वाधानयागयोर्दिनभेदो भविष्यति। अस्ति च दृष्टान्तः, वाजसनेयिनामीदृशे विषयेऽन्वाधानोत्कर्षे सति यागस्याप्युत्कृष्टत्वात्। नैवम्, अन्वयव्यतिरेकरूपाभ्यां विधिनिषेधाभ्यामस्याः शङ्काया निवारितत्वात्। तत्र सद्यस्कालविधयोऽन्वयरूपाः, प्रतिपच्चतुर्थांशप्रतिषेधा व्यतिरेकरूपाः। एवञ्च सति प्रतिषेधवाक्यं सावकाशं भवति।

अमावास्यायां विशेषमाह वृद्धशातातपः—

द्वितीया त्रिमुहूर्ता चेत् प्रतिपच्चापराह्णिकी।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात्॥
चतुर्दशी चतुर्यामा अमावास्या न दृश्यते।
श्वोभूते प्रतिपच्चेत् स्यात् पूर्वां तत्रैव कारयेत्॥
चतुर्दशी च संपूर्णा द्वितीया क्षयकारिणी।
चतुरिष्टिरमायां स्याद् भूते कव्यादिकी क्रिया॥ इति।

एतेषां वचनानामयमर्थः—अह्नि चतुर्दशी संपूर्णा, अस्तमयादर्वागमावस्या स्वल्पा, तत एवापराह्णव्याप्त्यभावाच् श्राद्धायान्वाधानाय पूर्वोक्तरीत्या यद्यपि निमित्तभावं भजते तथापि प्रतिपदि द्वितीयायां सत्यां चन्द्रस्य दृश्यमानत्वात् तद्दर्शने चेष्टेर्निषिद्धत्वात् प्रतिपद्युतायाममावस्यायामिष्टिः। स्वल्पामावास्योपेतायां चतुर्दश्यां श्राद्धान्वाधानादिकं कर्तव्यमिति।

एतदेवाभिप्रेत्य स्मृत्यन्तरे—

आदित्येऽस्तमिते चन्द्रः प्रतीच्यामुदियाद् यदा।
प्रतिपत्प्रतिपत्तिः स्यात् पञ्चदश्यां यजेत् तदा॥ इति।

वृद्धवशिष्ठोऽपि—

इन्दौ निरुप्ते पयसि पुरस्तादुदिते विधेः।
यद् वैगुण्यं हुते तस्मिन् पश्चादपि हि तद् भवेत्॥ इति।

अस्यायमर्थः—यदा संपूर्णचतुर्दश्यामविचारेणामावास्याबुद्धिं कृत्वाऽन्वाधानादिकं कृत्वा हविर्निर्वापं करोति कृते तस्मिन्नुषःकाले पूर्वस्यां दिशि चन्द्रमा उदेति, तदा न दर्शकर्म भवितुमर्हति, दर्शकालस्याप्राप्तत्वात्। किन्तु कालापराधं निमित्तीकृत्य दर्शदेवता अपनीय दात्रादिगुणविशिष्टान्यग्न्यादिदेवतान्तराण्युद्दिश्य हविःप्रक्षेपो विहितः। तदेतत् तैत्तिरीयब्राह्मणे श्रूयते—

'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति तण्डुलान् विभजेद् ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दध्नश्चरुं ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमि'ति। सोऽयं दृष्टान्तः—'हविषि निरुप्ते सति तत ऊर्द्ध्वं पूर्वस्यां दिशीन्दावुदिते सति दर्शकर्मविधेर्यद् वैगुण्यमुक्तरीत्या व्यवस्थितम्, तदेव वैगुण्यं होमदिने पश्चिमदिशि चन्द्रोदये भवतीति। एतदेव बौधायनमतमुपोद्बलयति श्रुतिः—'यस्मिन्नहनि पुरस्तात् पश्चात् सोमो न दृश्यते तदहर्यजेते'ति। अयमर्थः—सिनीवाल्यां पुरस्ताच्चन्द्रदर्शनं भवति, द्वितीयाप्रतिपदि पश्चाच्चन्द्रो दृश्यते तयोरुभयोर्मध्यवर्त्तिन्यां कुह्वां द्विविधमपि चन्द्रदर्शनं नास्ति, अतस्तस्मिन् दिने यष्टव्यमिति। चन्द्रदर्शनराहित्यमेवाभिप्रेत्य बौधायनकारिकासु पठ्यते—

इष्टेरलं प्रतिपदादिनाड्यः सप्ताष्ट वा यत्र भवन्ति तत् स्यात्।
क्षीणासु नाडीषु दिनस्य पूर्वः कल्पोऽथ वृद्धौ च भवेद् द्वितीयः॥ इति।

अयमर्थः---अमावास्यातिथेः सम्बन्धिनीषु नाडीषु क्षीणासु सतीषु तस्मिन् दिने अस्तमयात् पूर्वं प्रतिपत्सम्बन्धिन्यो नाड्यः सप्ताष्ट वा यदि भवन्ति तदा तद्दिनमिष्टेरलं योग्यम्। सोऽयमेकः पक्षः। अमावास्याप्रतिपदौ तु यदा वर्धेते तदा द्वितीयः कल्पो भवेत्। अमावास्यायामन्वाधाय सोमदर्शनरहिते प्रतिपद्दिने यागः कर्तव्य इति। तदेवं प्रकृतिरूपाया इष्टेः कालो निरूपितः, विकृतेस्तु कालो निरूप्यते—

तत्र कात्यायनः—

आवर्तनात् प्राग् यदि पर्वसन्धिः कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः ।
तत्रैव यागः परतो यदि स्यात् तस्मिन् विकृत्याः प्रकृतेः परेद्युः ॥ इति ।

आवर्तने ततः पुरा वा पर्वसन्धौ तस्मिन् सन्धिदिने प्रकृतियागं कृत्वा पश्चाद् विकृतिसम्बन्धियागः कर्तव्यः । यद्यावर्तनात् परतः सन्धिस्तदा विकृतियागः सन्धिदिने कर्तव्यः । प्रकृतियागस्तु सन्धिदिनात् परेद्युरनुष्ठेय इत्यर्थः । आवर्तने ततः पूर्वकाले परकाले वा सन्धिरित्येतेषु त्रिष्वपि पक्षेषु सन्धिदिन एव विकृतेरनुष्ठानम् । प्रकृतेस्तु पूर्वोक्तरीत्या सन्धिदिने पूर्वेद्युरेवानुष्ठानं व्यवतिष्ठते । इष्टीनां सर्वासां प्रकृतिर्दर्शपूर्णमासौ । 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादयः काम्येष्ट्यो विकृतयः । विकृतीनां पर्वैव काल इति स्थितम् ।

ननु प्रकृतेर्यथोक्तकालात् कालान्तरं क्वचित् स्मर्यते—

षोडशेऽहन्यभीष्टेष्टिर्मध्या पञ्चदशेऽहनि ।
चतुर्दशे जघन्येष्टिः पापा सप्तदशेऽहनि ॥ इति ।

अयमर्थः—पूर्वं प्रतिपद्दिनमारभ्य गणनायामागामि प्रतिपद्दिनं षोडशं भवति, तत्रेष्टिरभीष्टोत्तमा । ततः पूर्वस्मिन् पञ्चदशे दिने मध्यमा । ततः पूर्वस्मिंश्चतुर्दशेऽहनि जघन्या । तदेवं कालत्रयं विहितम् । उत्तमकालात् षोडशदिनादूर्ध्ववर्तिनि सप्तदशे दिने प्रतिषिद्धा । वाढम्, तत्रोत्तम-मध्यमपक्षौ शास्त्रीयौ, तिथीनां वृद्धिक्षयाभावे सत्युत्तमः पक्षः प्राप्नोति । एकस्मिन् दिने क्षीणे सति मध्यमः पक्षः प्राप्नोति, जघन्यपक्षस्तु न शास्त्रीयः, दिनद्वयक्षयाभावात्, अतो जघन्यशब्दो निषेधविवक्षया प्रयुक्तो न तु पक्षान्तरविवक्षया । ननु तिथिवृद्धाविष्टेः सप्तदशी तिथिः कदाचिद् भवति, तत् कथं 'पापा सप्तदशेऽहनी'ति प्रतिषेधः? नायं दोषः, अल्पतिथिवृद्धौ यदा षोडशदिनेऽमावास्या दशघटि[illegible], सप्तदशदिने प्रतिपद् वर्धते, तदानीं प्रतिपच्चतुर्थांशस्येष्टिकालत्वभ्रान्त्याऽनुष्ठानं प्रसक्तं वचनेन निवार्यते । तच्च न्याय्यम्, पूर्वाह्णसन्ध्युपेतदिने इष्टेः कर्तव्यत्वेन निर्णीतत्वात् । यदा तु महत्या वृद्ध्या षोडशदिने अमावास्या सम्पूर्णा सप्तदशे दिने प्रतिपत् संपूर्णा तदा न प्रतिषिध्यते ।

ननु बौधायनेन त्रयोदश-सप्तदशदिनयोरन्वाधानं प्रतिषिध्यते—

यत्रौपवसथं कर्म यजनीयात् त्रयोदशम् ।
भवेत् सप्तदशं वापि तत् प्रयत्नेन वर्जयेत् ॥ इति ।

अत्र यजनीयं प्रतिपद्दिनमारभ्य पञ्चदशदिनमौपवसथस्य मुख्यः कालः । तिथिक्षये चतुर्दशं दिनम्, तिथिवृद्धौ षोडशं दिनम्, तथा सति त्रयोदश-सप्तदशयोः प्रसक्तिरेव नास्ति तत् कथं प्रतिषिध्यते इति चेत्, एवं तर्हि अप्रसक्तप्रतिषेधे नित्यानुवादोऽस्तु । अस्ति चाप्रसक्तप्रतिषेधरूपो नित्यानुवादो वेदे—'न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्यः' इति ।

किञ्च[1]—

**आमावास्येन हविषा पूर्वपक्षमभियजते [2]पौर्णमासेनाऽपर-पक्षम् ॥६॥**

अमावास्यायामुपक्लृप्तमामावास्यं हविः, तेनाऽऽमावास्येन हविषा पूर्वपक्षं शुक्लपक्ष-मभियजते। कथं नाम? पूर्वपक्षप्रतिपदिष्ट्या कृत्स्नः पूर्वपक्ष इष्टो भवतीति। पूर्णमासे उपक्लृप्तं हविः पौर्णमासं तेन पौर्णमासेन हविषा अपरपक्षं कृष्णपक्षमभियजते। कृष्णपक्षप्रतिपदिष्ट्या च कृत्स्नः कृष्णपक्ष इष्टो भवति।

दर्शपूर्णमासावपवसेदित्युक्तम्। किंलक्षणौ च दर्शपूर्णमासावित्यत आह—

**यः परमो विकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः सन्निकर्षः साऽमावास्या(A) ॥७॥**

यः परमो महान् विकर्षः व्यवधानम्, महदन्तरमित्यर्थः। सूर्याचन्द्रमसौ

---

पूर्वत्र पर्वप्रतिपदोः सन्धिमुपजीव्याधानेष्टिकालौ व्यवस्थापितौ, तत्र तिथिक्षय-वृद्ध्योः सन्धि-विषये किञ्चिद् विशेषमाह कात्यायनः—

परेऽह्नि घटिकान्यूनास्तथैवाऽभ्यधिकाश्च याः।
तदर्धक्लृप्त्या पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेत्॥ इति।

लौगाक्षिरपि—

तिथेः परस्या घटिकास्तु याः स्युर्न्यूनास्तथा चाभ्यधिकास्तु तासाम्।
अर्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने तत्॥ इति।

पूर्वेद्युरमावास्या पञ्चदशघटिका परेद्युः प्रतिपदपि तावती, तदा यथास्थितत्वमेवोपजीव्य सन्धिर्विज्ञेयः। यदा प्रतिपदः षड् घटिकाः क्षीयन्ते तदा घटिकात्रयह्रासोऽमावास्यायां योजनीयः, तस्मिन् योजिते द्वादशघटिका अमावास्या भवति। तदा वर्तमानात् पूर्वं सन्धिः सम्पद्यते। अनेनैव न्यायेन घटिकात्रयवृद्धौ योजितायामष्टादशघटिकाऽमावास्या भवति। तथा सत्या-वर्तमानादूर्ध्वं सन्धिर्भवति। इत्येवं सन्धिं विज्ञाय तदनुसारेणाऽन्वाधानेष्टी अनुष्ठातव्ये इति।

A. अस्य पाठान्तरं कल्पयित्वा व्याकरोति रघुनन्दनः—"तथा हि गोभिलः—'सूर्याचन्द्र-मसोर्यः परः सन्निकर्षः साऽमावास्या' इति; परः सन्निकर्षश्च उपर्यधोभावापन्नसमसूत्रपात-न्यायेन राश्येकांशावच्छेदेन सहावस्थानरूपः। तथा च अमावास्याघटकतादृशसहावस्थान-युक्तार्कमण्डलाच्चन्द्रमण्डलस्य--

---

1. 'किञ्च' नास्ति ग। 2. 'अत्र 'पौर्णमासेने'ति पठति सामश्रमी।

प्रसिद्धौ, तयोः सूर्याचन्द्रमसोः। सा पौर्णमासी तामुपवसेत्। यः परमः महान् [1]संकर्षः अव्यवधानम्, एकीभाव इत्यर्थः। कयोः ? सूर्याचन्द्रमसोः, साऽमावास्या, तामुपवसेत्। अन्यच्च यद् विहितम्, "अमावास्यायां तत् श्राद्धम्" [ सू ४।४।२ ] "इतरदन्वाहार्यम्", [ सू ४।४।३ ] इत्यादि तच्च कुर्यादिति ॥

किञ्च—

## यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्वीत ॥८॥

[a]यदहः यस्मिन्नहनि चन्द्रमा न दृश्येत आगम[3]बलात् क्षीण [4]इत्यवगम्यते ताममावास्यां कुर्वीत[2]*। तामुपवसेत् [5]इति। तु [6]शब्दश्चशब्दार्थः[6]*। एवशब्दोऽवधारणे। पिण्डपितृयज्ञञ्च तस्यामेव कुर्यादित्यर्थः(A)। ननु अधस्तादेवायमर्थ उक्तः "[7]अथ यदहश्चन्द्रमा न दृश्येत ताममावास्यामि"ति। "पक्षान्ता उपवस्तव्या" इति च, कस्मादिह पुनर्वचनम् ? उच्यते—चतुर्दशीमिश्रामावास्याविषयमिदं सूत्रम्। कथं नाम यदि

---

अर्काद् विनिःसृतः प्राचीं यद् यात्यहरहः शशी।
भागैर्द्वादशभिस्तत् स्यात् तिथिश्चान्द्रमसं दिनम् ॥ इति

सूर्यसिद्धान्तोक्तेन,

त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते।
आदित्याद् विप्रकृष्टस्तु भागं द्वादशकं यदा।
चन्द्रमाः स्यात् तदा राम तिथिरित्यभिधीयते ॥

इति विष्णुधर्मोत्तरवचनाद् राशिद्वादशांश-द्वादशांशभोगात्मकनिर्गमरूपवियोगेन शुक्लायाः प्रतिपदादितत्तत्तिथेरुत्पत्तिः। एवं 'सूर्याचन्द्रमसोर्यः परो विप्रकर्षः सा पौर्णमासी' इति गोभिलोक्तेन पौर्णमासीघटकसहमराभ्यवस्थानरूपपरमवियोगानन्तरमर्कमण्डलप्रवेशाय चन्द्र-मण्डलस्य राशिद्वादशांश-द्वादशांशभोगात्मकप्रवेशरूपसन्निकर्षेण कृष्णायास्तत्तत्तिथेश्चोत्पत्तिः" इति।

A. 'पिण्डैरेव केवलैर्यत्र पितर इज्यन्ते' सोऽयं पिण्डपितृयज्ञः। वक्ष्यति च चतुर्थप्रपाठके चतुर्थकण्डिकायामिति।

अमावास्याश्राद्धकालमधिकृत्योक्तं कालमाधवे—"अमावास्याश्राद्धस्य च पार्वणरूपत्वम्, अपराह्णस्य च तत्कर्मकालत्वम्, कुतपस्य च प्रारम्भकालत्वमित्येतत् त्रितयं प्रतिपत्प्रकरणे

---

1. 'सन्निकर्षः' ग। 2.* नास्ति ग। 3. '-गमात् क्षीण' ग। 4. 'इव गम्यते' क-ग। 5. 'इति' नास्ति क-ग। 6. 'तु शब्दश्चार्थे' ख। 7. 'अथ' नास्ति क-ग।

प्रत्याब्दिकनिर्णये प्रपञ्चितम्, तथा सति अपराह्णस्य कर्मकालत्वात् पूर्वेद्युरेव वा परेद्युरेव वाऽपराह्ण-व्यापिनी अमावास्या ग्रहीतव्या। तत्रापराह्णव्यापिन्याः पूर्वतिथेर्ग्राह्यतामाह हारीतः—

यस्यां सन्ध्यागतः सोमो मृणालमिव दृश्यते।
अपराह्णे तु या तस्यां पिण्डानां करणं ध्रुवम्॥ इति।

यत्तु कार्ष्णाजिनिनोक्तम्—

भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा।
श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते।

इति तद् अपराह्णव्याप्त्यभावविषयं द्रष्टव्यम्। अपराह्णव्यापिन्या उत्तरतिथेर्ग्राह्यतामाह हारीतः—

अपराह्णः पितृणान्तु याऽपराह्णानुयायिनी।
सा ग्राह्या पितृकार्ये तु न पूर्वास्तानुयायिनी॥ इति।

उभयत्रापराह्णव्यापित्वं द्वेधा भिद्यते एकदेशेन कार्त्स्न्येन चेति। एकदेशव्याप्तिश्च द्वेधा भिद्यते वैषम्येण साम्येन चेति। तत्र वैषम्येणैकदेशव्याप्तौ महत्त्वेन निर्णेतव्यम्। तथा च स्मृतिः—

अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत्।
तत्राल्पत्वमहत्त्वाभ्यां निर्णयः पितृकर्मणि॥ इति।

महत्येव ग्राह्येत्यभिप्रायः, स च शिवराघवसंवादे स्पष्टमभिहितः—

'अल्पापराह्णे त्याज्याऽमा ग्राह्या स्याद् याऽधिका भवेत्'॥ इति।

साम्येनैकदेशव्याप्तौ खर्वादिशास्त्रेण निर्णयः। साम्येनोभयत्रैकदेशव्याप्तिश्च तत्तिथि-गतैर्वृद्धिक्षयसाम्यैस्त्रेधा भिद्यते। तथा हि पूर्वेद्युरपराह्णस्य द्वितीयघटिकामारभ्य परेद्युरपराह्णस्य पञ्चमघटिकापर्यन्तं यदा तिथिर्वर्तते तदा पूर्वापराह्णस्य प्रथमघटिकां द्वितीयापराह्णस्य च चरमघटिकां विहाय शिष्टासु पञ्चसु वर्तमानत्वात् साम्येनैकदेशव्याप्तिर्भवति। तिथिश्च तदा घटिकाचतुष्टयेन वर्धते। यदा च पूर्वापराह्णस्य चरमघटिकायामुत्तरापराह्णस्य च प्रथमघटिकायां तिथिर्वर्तते तदाऽपि साम्येनैकदेशव्याप्तिर्भवति। घटिकाचतुष्टयेन तिथिः क्षीयते। यदा पूर्वापराह्णस्य चरम-घटिकात्रये द्वितीयापराह्णस्य च प्रथमघटिकात्रये तिथिर्वर्तते तदा साम्येनैकदेशव्याप्तिस्तदवस्था। तिथिस्तु न वर्धते नापि क्षीयते किन्तु समैव। ईदृशे विषये खर्वदर्पवाक्यान्निर्णयः। तच्च खर्वादिवाक्यं सर्वतिथिसाधारण्येन प्रवृत्तत्वादमावास्यायामपि प्रवर्तते, तथाऽमावास्यायामेव विशेषेण शिवराघवसंवादे स एवार्थो दर्शितः—

अमावास्या तु या हि स्यादपराह्णद्वयेऽपि सा।
क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृता॥ इति।

स्मृत्यन्तरेऽपि—

तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः॥ इति।

चतुर्दशीमिश्रा सिनीवाली प्रतिपन्मिश्रा कुहूः ।

तथा च व्यासः—

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता ॥ इति ।

कार्त्स्न्येनोभयत्रापराह्णव्याप्तावपि तिथिवृद्धित्वात् कुहूरेव ग्राह्या, यदा दिनद्वयेऽप्यपराह्णं न स्पृशति तदा साग्न्यनग्निकभेदेन व्यवस्था द्रष्टव्या । तदाह जाबालिः—

अपराह्णद्वयव्यापी यदि दर्शास्तिथिक्षये ।

आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ॥ इति ।

आदिशब्दात् स्त्रीशूद्रयोरपि ग्रहणम् । तदाह लौगाक्षिः—

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।

स्त्रीभिः शूद्रैः कुहूः कार्या तथा चानग्निकैर्द्विजैः ॥ इति ।

एवं शास्त्रार्थे व्यवस्थिते सति यानि बहुविधानि वाक्यानि तानि सर्वाणि प्रोक्तेष्वमावास्या-भेदेष्वन्यतमविषयत्वेन यथायोगं योजनीयानि ; तथाहि—तत्र तावद् बौधायन आह—

मध्याह्नात् परतो यत्र चतुर्दश्यनुवर्तते ।

सिनीवाली तु सा ज्ञेया पितृकार्ये तु निष्फला ॥ इति ।

बृहस्पतिरपि—

मध्याह्नाद्या त्वमावास्या परस्तात् सम्प्रवर्तते ।

भूतविद्धा तु सा ज्ञेया न सा पञ्चदशी भवेत् ॥ इति ।

मध्याह्नादूर्ध्वमपराह्णमतिक्रम्य परस्तादमावास्या प्रवर्तत इति व्याख्येयम् । तदेतद् वचन-द्वयं परेद्युरेवापराह्णव्याप्तौ योजनीयम् ।

यत्तु जाबालिनोक्तम्—

प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि ।

भूतविद्धैव सा कार्या पित्र्ये कर्मणि सर्वदा ॥ इति ।

अत्र पूर्वाह्णव्यापिनी तिथिरिति विशेषकथनादपराह्णव्यापित्वं नास्तीत्यवगम्यते । तादृशी च द्विविधा—पूर्वेद्युरपराह्णव्यापिनी तद्रहिता च । आद्यपक्षे सर्वैरेव भूतविद्धैव कार्या, द्वितीयपक्षे साग्निकैरेव भूतविद्धा कार्या । यत्तु हारीतेनोक्तम्—

पूर्वाह्णे चेदमावास्या अपराह्णे न चेत्तु सा ।

प्रतिपद्यपि कर्तव्यं श्राद्धं श्राद्धविदो विदुः ॥ इति ।

तद् दिवसद्वयेऽप्यपराह्णव्यापित्वाभावे सति निरग्निकविषयम् । यदपि हारीतेनोक्तम्—

भूतविद्धाऽप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।

पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी ॥ इति ।

तद् एकोद्दिष्टविषयम्, एकोद्दिष्टस्य कुतपप्राधान्यं प्रतिपत्प्रकरणे प्रपञ्चितम् । यद्वा प्रति-

चतुर्दशी दिनस्य प्रहरत्रयादूर्द्ध्वममावास्या स्यात् न प्रागस्तमयादपीति। अमावास्या च क्षीयमाणा प्रहरोद्देशमनु[1]प्रविशेत् ततस्तामुपवसेदिति।

तथा चाह—

यदा चतुर्दशीयामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते। (A) इति।

पन्मिश्राया अप्यपराह्णव्यापित्वाभावे निरग्निकैरपि हेयत्वाशङ्कायां ग्राह्यत्वे कुतपव्याप्तिरनुकल्पत्वेनाभिधीयते। अपराह्णव्याप्तिः पार्वणे मुख्यः कल्पः, कुतपव्याप्तिरनुकल्पः। तथा च मुख्यासम्भवेऽनुकल्पस्योपादेयत्वान्निरग्निकैः प्रतिपन्मिश्रिता ग्रहीतुं शक्यते। भूतविद्धायां कुतपकालिकत्वे सत्यापराह्णिकत्वमर्थसिद्धम्। तथा सति मुख्यानुकल्पयोरुभयोरपि सद्भावात् कुतपस्य प्रारम्भकालत्वाच्च प्रत्याब्दिकप्रकरणोदाहृत-देवस्वामि-वचनानुसारेणोपक्रमोपसंहारे कालव्याप्तिर्दर्शिता भवति। तच्चात्र दृष्टान्तेनोपन्यस्यते, यथा कुतपव्यापिनी भूतविद्धोपादेया। तथा प्रतिपद्विद्धाऽपि कुतपव्याप्तोपादेया भवति।

तच्च बौधायन आह—

घटिकैकाऽप्यमावास्या प्रतिपत्सु न चेत् तदा।
भूतविद्धैव सा ग्राह्या दैवे पित्र्ये च कर्मणि॥ इति।

प्रतिपत्सु घटिकैकापि कर्मकालसम्बन्धिनी यदि न स्यादित्यर्थः। तदेतद् वचनं पूर्वेद्युरेवापराह्णव्याप्तौ द्रष्टव्यम्।

अस्मिन्नेव विषये जाबालिराह—

प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि।
भूतविद्धैव सा ग्राह्या पित्र्ये कर्मणि सर्वदा॥ इति।

यत्तु हारीतवचनम्—

कन्या-मकर-मीनेषु तुलायां मिथुने तथा।
भूतविद्धैव सर्वेषां पूज्या भवति यत्नतः॥ इति।

तद् व्रतविषयम्, तथा च जाबालिः—

तुलायां मिथुने मीने कन्यायां मकरेऽप्यमा।
भूतविद्धा व्रते ग्राह्या शेषे तु प्रतिपद्युता॥ इति।

A. कर्मप्रदीपः १६।२। अत्र प्रकाशकारः—"दिनद्वये विहिततृतीयांशेऽमावास्याया अप्राप्तौ श्राद्धलोपप्रसक्तावाह यदेति, चतुर्दश्याः प्रहरचतुर्थं यदाऽमावास्या व्याप्नोति अपरदिने च क्षीयमाणा तृतीयांशव्यापिनी तदा चतुर्दशीदिन एव श्राद्धमिष्यते। एवं तद्दिने विहिततृतीयांशेऽमावास्याऽप्राप्तावपि तद्दिन एव श्राद्धम्, अपरदिने तृतीयांशप्राप्तेः।" इति व्याचष्टे।

1. 'प्रहरेत्' ख।

नन्वत्र प्रागर्कोदयात् चन्द्रमसो दर्शनेन भवितव्यम्, ततश्चैतद् विरुध्यते। [1]'यदहस्त्वेव चन्द्रमा न दृश्येतेति।

---

अत्र संवादि प्रमाणमुक्तं कालमाधवे—"बौधायनमतानुसारिणामन्वाधानवद् दर्शश्राद्धमपि स्वल्पामावास्योपेतायां चतुर्दश्यां कर्तव्यम्।

तथा च बौधायनेनोक्तम्—

यदा चतुर्दशीयामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमाचरेत्॥
चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते।
श्वो भूते प्रतिपद् यत्र भूते कव्यादिकी क्रिया॥ इति।

चतुर्थे यामे अमावास्या सम्पूर्णा न दृश्यते किन्त्ववसाने स्वल्पा, सा च परदिने क्षीयते तदानीं चतुर्दश्यां श्राद्धमाचरेत्" इति।

अत्र रघुनन्दनः—"दर्शद्वैधे कुत्र श्राद्धमित्याह छन्दोगपरिशिष्टे कात्यायनः—यदेति चतुर्दशीयामं चतुर्दशीसम्बन्धिदिनयाममिति, तद्दिनस्यामावास्यासम्बन्धेऽपि चतुर्दशीनिर्देशो'ऽधिकेन व्यपदेशा भवन्ती'ति न्यायात्। तेन यदा अमावास्या चतुर्दशीसम्बन्धिदिनस्य चतुर्थप्रहरं कृत्स्नं किञ्चिन्न्यूनं वाऽनुपूरयेत्। तत्रानुपूरयेदित्यभिधानात् तुरीययामस्य पादोनदण्डद्वयान्यून-प्रथममुहूर्तस्य बहुकालत्वं प्रतीयते। एतेन प्रहरत्रयाभ्यन्तरे किञ्चिदधिकप्रहरत्रये वा चतुर्दशी प्रतीयते, ततश्चोभयवासरीयतृतीयांशसम्बन्धिपञ्चधाविभक्तापराह्णमुहूर्तयोर्मुहूर्तान्यूनदर्शलाभे द्वैधं न त्वेकदिनमात्रे तल्लाभे। तत्र पूर्वोक्तेन वासरस्य तृतीयांश इत्यनेनैव द्वैधानुदयात्। अतो यद्दिने वासरतृतीयांशो तादृशदर्शलाभस्तत्रैव श्राद्धम्। मुहूर्तोनतिथेस्तु कर्मानर्हत्वान्न द्वैधावसरः। तथा च भविष्ये—

व्रतोपवासनियमे घटिकैका यदा भवेत्।
सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी॥ इति।

अत्र च प्रागुक्तजाबालिवचनोक्ता मुहूर्तात्मिका घटिका ग्राह्या योग्यत्वात्, न त्वेकदण्डात्मिका, वक्ष्यमाणरौहिणादिग्रहणे तथा दृष्टत्वाच्च। ततश्च पूर्वोक्तद्वैधे तद्दिवसीयचतुर्दश्यपेक्षया परदिने अमावास्या क्षीयमाणा न्यूनकालव्यापिनी न तु पूर्वापरदिवसीययावच्चतुर्दश्यपेक्षया, अनुपस्थितेः; एवं स्तम्भितावर्धमानयोरपि तदैव पूर्वदर्श एव श्राद्धम्। श्वोक्तचन्द्रक्षयानुरोधात्। यदा त्रिंशद्दण्डात्मकदिवसे चतुर्दश्यधिकचतुर्थयामपूरणे मुख्यापराह्णीयकिञ्चिन्न्यूनमुहूर्तलाभस्तदाऽपि तदैवेत्यनेन चन्द्रक्षयानुरोधात् पूर्वदिने श्राद्धं न तु मुख्यापराह्णीयमुहूर्तलाभेऽपि परदिने। अत्र चन्द्रक्षयश्चतुर्दश्यष्टमयामात् प्रभृत्यमावास्यासप्तमयामपर्यन्तमिति वक्ष्यते। 'तदैव'

---

1. 'यदस्त्वेव' क, 'यदहश्चन्द्रमा' ग।

श्रुतिश्च—

यत्रहरेव पुरस्तान्न पश्चात् 'ददृशे (A) इति।

उच्यते—यद्यपि तत्र प्रागर्कोदयाच्चन्द्रमा दृष्टस्तथाऽपि चतुर्दश्यन्ते अमावास्यायामपराह्णे क्षीणः स्यात्। अपराह्णे क्षीणे च[2] चन्द्रमसि पिण्डपितृयज्ञो विहितः।

तथा चोक्तम्—

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य [3]तृतीयेऽशे नातिसन्ध्यासमीपतः॥ (B) इति[4]।

---

इत्येवकारश्रवणात् तिथिद्वैधे खण्डविशेषो नियम्यते कर्मणि खण्डान्तरव्युदासाय। एवञ्च यत्र पूर्वापरदिने वासरतृतीयांशीयमुख्यापराह्णे मुहूर्तानदर्शलाभस्तत्रापि पूर्वदिन एव श्राद्धं वासरतृतीयांशचन्द्रक्षयादिशब्दस्वरसात् त्रिमुहूर्ताऽपीत्यनुरोधाच्च। यत्र तु पूर्वदिने त्रिमुहूर्तमात्रव्यापिन्यमावास्या परदिने च तृतीयांशमुहूर्तव्यापिनी सती क्षीयमाणा तत्र परदिने चन्द्रक्षयाभावेऽपि मुख्यापराह्णलाभात् श्राद्धम्, अन्यथा 'यदा चतुर्दशीयामं तुरीयमनुपूरयेत्' इति विशेषाभिधानं व्यर्थं स्यात्" इति व्याचष्टे।

A. अत्र हेमाद्रिः—अमावास्याशब्दनिर्वचनं शतपथश्रुतौ "ते देवा अब्रुवन्नमा वै नोऽद्य वसुर्भवति यो नः प्रावात्सीदित्युपक्रम्य ते देवा अब्रुवन् न वा इममन्यत् सोमाद्विनुयात् सोममेवास्मै सम्भरामेति तस्मै सोमं समभरन्नेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः, स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद् ददृशे तदिमं लोकमागच्छति स इहैवापश्चौषधीश्च प्रविशति स वै देवानां वस्वन्नं ह्येषां तद् यदेष एतां रात्रिमिहामा वसति तस्मादमावास्या नामेति। (प्रथमकाण्डस्य पञ्चमप्रपाठके षष्ठाध्याये, ४।९)। अत्र प्रथमवाक्ये वृत्रवधानन्तरप्रोषितेन्द्रसमागमाद्देवानामुक्तौ वसुनेन्द्रेण अमा सहनिवासादमावास्येति, द्वितीयवाक्ये तु वसोश्चन्द्रमसोऽस्यां रात्रावस्मिन् लोके निवासादमावास्येति द्विधा निर्वचनम्" इत्युदाजहार॥

B. कर्मप्रदीपः १६।१। अस्य व्याख्यायां प्रकाशकारः—

पिण्डपितृयज्ञीयपिण्डानाम् अनु आहार्यं पश्चादनुष्ठीयमानं श्राद्धं दर्शश्राद्धमिति यावत्, तत् क्षीणे राजनि चन्द्रे प्रशस्तम्। दिवसस्य पञ्चदशमुहूर्तात्मकस्य तृतीये मुहूर्तपञ्चके स्मृत्युक्तापराह्णे। तथाहि—'पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितृणामि'ति तत्रापि त्रिविधो विभागोऽवगम्यते। अतिसन्ध्यासमीपं पञ्चदशमुहूर्तरूपं वर्जयित्वा। पिण्डपितृयज्ञानन्तर्यादस्य श्राद्धस्यान्वाहार्यसंज्ञा। अत एव पिण्डपितृयज्ञानन्तरमेव दर्शश्राद्धम्। अन्यथा कल्पिकल्पनापत्तेरिति न वाच्यम्, अन्यथाऽन्वाहार्यताया वक्ष्यमाणत्वात्। क्लृप्तयोग-

---

1. 'ददृशे' ख-ग। 2. 'च' नास्ति ख। 3. 'तुरीये-' क। 4. 'इति' स्थाने 'च' ख।

स्यैव पङ्कजादौ रूढ्युपपादकता दृष्टा न तु कल्प्यस्य, ततश्च न योगबलेनैव दर्शस्य पिण्डपितृयज्ञोत्तरत्वम्, किन्तु मनुवचनादेव। तथा हि वचनम्—

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्॥ इति (३।१२२)

नन्वत्र पितृयज्ञशब्देन न पिण्डपितृयज्ञोऽभिधीयते किन्तु पितृतर्पणम्—

पितृयज्ञं तु निर्वर्त्य तर्पणाख्यं द्विजोऽग्निमान्।
पिण्डान्वाहार्यकं श्राद्धं कुर्यादिन्दुक्षये सदा॥

इति मत्स्यपुराणवचनात्। न च स्नातस्य श्राद्धविधानात् तर्पणानन्तर्यं न विधेयमिति वाच्यम्? सत्यम्, किन्तु पार्वणश्राद्धे कर्तव्ये साग्निना तर्पणेनैव पञ्चयज्ञान्तर्गतपितृयज्ञस्य निर्वर्तितत्वान्न श्राद्धानन्तरं पित्र्यबलि-नित्यश्राद्धयोरनुष्ठानमिति वचनार्थः। अन्यथा तूभयोरपि पितृयज्ञरूपत्वाद् अनुष्ठानं प्रसज्येत। तथा हि 'पितृयज्ञस्तु तर्पणम्' इति छन्दोगपरिशिष्टकृतोक्तम्। 'श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वे'ति च। वाशब्दश्चार्थे। अग्निमानिति विशेषणोपादानान्निरग्निना पार्वणदिनेऽपि तदनन्तरं पित्र्यबलि-नित्यश्राद्धे कर्तव्ये। अत एव श्राद्धोत्तरकर्माधिकारे मार्कण्डेयपुराणम्—

नित्यक्रियां पितॄणान्तु केचिदिच्छन्ति सत्तमाः।
न पितॄणां तथैवान्ये पृथक् पूर्ववदाचरेत्।
पृथक्पाकेन चेत्यन्ये केचित् सर्वं च पूर्ववत्॥ इति।

अयं हि विकल्प उक्तन्यायात् साग्निनिरग्निव्यवस्थितः। अत एव मत्स्यपुराणे श्राद्धोत्तरकर्माधिकारे—

निर्वर्त्य प्रणिपत्याथ पर्युक्ष्याग्निं स मन्त्रवित्।
वैश्वदेवं प्रकुर्वीत नैत्यकं बलिमेव च॥

इति नित्यश्राद्धं मोक्तमेव। तथा साग्नेरन्वाहार्यश्राद्धानन्तरम्—

यदा श्राद्धं पितृभ्यश्च कर्तुमिच्छति मानवः।
वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणि॥

इत्युक्तम्। मनुनापि साग्निककर्तव्यश्राद्धोत्तरकर्मणि उच्छेषणं...(३।२६५)
इति काम्या गृहबलय एवोक्ता न पित्र्यो बलिर्न वा नित्यश्राद्धमिति। ततश्च मनुवचनान्न पिण्डपितृयज्ञानन्तरं नित्यश्राद्धं कुर्यादिति।

अत्रोच्यते—मनुवचनेऽपि पितृयज्ञशब्दस्य तर्पणपरत्वे मत्स्यपुराणवचन इवानन्तर्यार्थस्य प्राप्ततया विध्यसम्भवे नित्यश्राद्धादिपितृयज्ञनिवृत्त्यर्थता वाच्या। तथा च श्रुतहानिरश्रुतकल्पना च स्यात् मत्स्यपुराणवचनेऽनन्यगतेस्तु तथा। तस्मान्मनुवचने श्रुतहान्यश्रुतकल्पनापरिहाराय पिण्डपितृयज्ञानन्तर्यमेव विधेयम्। अस्तु वा 'पितृयज्ञं त्वि'त्यस्य मनुवचनस्य तर्पणपरता तथापि—

पिण्डानां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः ।

इत्यस्मात् पिण्डपितृयज्ञानन्तर्यमस्तु मासिकाख्यदर्शश्राद्धस्य । यदि वाऽस्यापि मनुवचनस्य—

तत्र ते पितरः पूर्वं पिण्डसंज्ञां तु लेभिरे ।

एषा तस्याः स्थितिर्विप्र पितरः पिण्डसंज्ञिताः ।

लभन्ते सततं पूजां वृषाकपिवचो यथा ॥

इति मत्स्यपुराण-महाभारतवचनद्वयात् पिण्डानां मासिकं मासैकतृप्तिजनकं श्राद्धम्, 'अन्वाहार्यं मासिकं स्यात्' इत्यभिधानात् । ततश्च पिण्डानां पितृणामन्वाहार्यं मासैकतृप्तिजनकम् अन्नमस्मिन्निति पिण्डान्वाहार्यकं श्राद्धमित्यर्थः । एतस्मिंश्चार्थे निरग्निपक्षेऽपि संज्ञाप्रवृत्तिरित्यालोच्यते, तथाऽन्यदपि मत्स्यपुराणे प्रवृत्तिनिमित्तमुक्तम्—

यस्माद्धुत्वाऽल्पतोमात्रा भक्षयन्ति द्विजातयः ।

अन्वाहार्यकमित्युक्तं तस्माच्चन्द्रपरिक्षये ॥ इति ।

( बह्वृचानां पिण्डदानादनन्तरं ब्राह्मणभोजनार्थं पिण्डानां स्वल्पभागोऽन्वाहार्यं क्रियते )

......तस्मात् पिण्डदानादनन्तरं पश्चादन्वाहार्यमनुष्ठेयं श्राद्धं ब्राह्मणभोजनात्मकं पिण्डान्वाहार्यकमित्यपि प्रवृत्तिनिमित्तं सम्भवति । तथा च दशममुहूर्तस्यापराह्णत्वेऽपि तस्य तृतीयांशे एकादशमुहूर्तांशे यत् श्राद्धविधानं तद्दशममुहूर्तेऽपराह्णे पिण्डपितृयज्ञं सूचयति । तथा च श्रुतिः— 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति ।

अत्र हि पारिभाषिकापराह्णस्यैव ग्रहणम् ।......पारिभाषिकश्चापराह्णो मत्स्यपुराणे उक्तः—

प्रातःकालो मुहूर्तांस्त्रीन् सङ्गवस्तावदेव तु ।

मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम् ॥

सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत् ।

राक्षसी नाम सा ज्ञेया गर्हिता सर्वकर्मसु ॥ इति ।

एवञ्च साग्नेर्निरग्नेश्चायमेवापराह्णोऽमावास्याश्राद्धे मुख्यः कालः । तथा च यमः—

पक्षान्ते निर्वपेत् तेभ्यो ह्यपराह्णे च धर्मवित् ।

अपां समीपे दूर्वासु दर्भेषु सिकतासु च ॥

तथा श्रुतिरपि—"पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणाम् अपराह्णः पितृणाम्" इति ।

तथा च—

पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम् ।

एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥

इति ब्रह्मपुराणेऽपि स एवापराह्णो विधीयते । मातृकमन्वष्टकाश्राद्धम्, पैतृकं पार्वणं कृष्णपक्षविहितम् । शुक्लपक्षे च पार्वणं पूर्वाह्ण एव । तथा च वायुपुराणम्—

शुक्लपक्षस्य पूर्वाह्ने श्राद्धं कुर्याद् विचक्षणः ।
कृष्णपक्षेऽपराह्ने तु रौहिणं तु न लङ्घयेत् ॥

रौहिणं रोहिणीनक्षत्रसम्बन्धिनं मुहूर्त्तं पूर्वाह्णश्राद्धकर्त्ता न लङ्घयेत् नातिक्रामेत्, अत ऊर्द्ध्वं न कुर्यादित्यर्थः । एवमपराह्णश्राद्धकर्त्ताऽपि न लङ्घयेत् अतः पूर्वं श्राद्धं न कुर्यादित्यर्थः । एतेनेदमुक्तम्—रौहिणे पूर्वाह्णे समाप्तिरपराह्णे उपक्रमः, ततश्च द्व्यात्मको रौहिणः । न तु रौहिण-मित्यस्यैकोद्दिष्टविषयता एतद्वचनानुपात्तत्वेनाप्रकृतत्वादेकोद्दिष्टस्येति । ततश्चायं शास्त्रार्थो व्यवस्थितः, कृष्णपक्षविहितं सर्वमेव पार्वणं निरग्निना रौहिणादारभ्य पञ्च मुहूर्त्तान् यावत् कर्त्तव्यम् । तथा च मत्स्यपुराणम्—

ऊर्द्ध्वं मुहूर्त्तात् कुतपाद् यन्मुहूर्त्तचतुष्टयम् ।
मुहूर्त्तपञ्चकं वापि स्वधाकरणमिष्यते ॥ इति ।

इयान् विशेषः—निरग्नेरपि 'अपराह्णे पितृणाम्' इति श्रुत्या यमवचनेन च पूर्वोपन्यस्तेन पारिभाषिकापराह्ण एव मुख्यः कालः, कुतश्चिन्निमित्तात् त्वरया विलम्बेन वा रौहिणतत्पञ्चम-मुहूर्त्तयोरनुकल्पता स्यात् रौहिणस्याव्यापकत्वात् पञ्चमस्य सायाह्नत्वेन निन्दाश्रवणात् । कुतश्चि-न्निमित्तादनुकल्पासम्भवे रात्र्यादिपर्युदस्तभागे श्राद्धानुष्ठानमापत्कल्पः ।

तथा च मनुः—

रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा ।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते ॥ इति (३।२८०) ।

न च नायं पर्युदासः, किन्तु नञो मुख्यनिषेधविधिरिति वाच्यम् ? कुत्रायं निषेधविधिः, न तावद्रात्रौ—

तीर्थे द्रव्योपपत्तौ च न कालमवधारयेत् ।

इत्यत्र विकल्पापत्तेः ।..........

एतेन विहितवृद्धिश्राद्धेऽचिरोदितसूर्यनिषेध इत्यपि निरस्तम्, यतः सर्वेष्वेव वैधैकोद्दिष्ट-पार्वणनिमित्ततीर्थश्राद्धादिषु रात्र्यादिविशेषविहितेषु "रात्रौ श्राद्धं न कुर्वीते"ति पर्युदासः । यद्यपीदं मनुवचनं दर्शश्राद्धप्रकरणपठितम्, तथापि—

अदैवं भोजयेच् श्राद्धं पिण्डमेकञ्च निर्वपेत् ।
सहपिण्डक्रियायां तु कृतायामस्य धर्मतः ।
अनयैवाऽऽवृता कार्यं पिण्डनिर्वपणं सुतैः ॥

इति सपार्वणमेकोद्दिष्टस्य च प्रकृतत्वात् सर्वत्र पर्युदासो युक्तः । न च एकोद्दिष्टपार्वणादेर्नियत-माध्याह्नादिकत्वात् तत्र न रात्र्यादिपर्युदस्तभागमात्रविधिः, किन्तु तीर्थादाविति वाच्यम् ? विहिततिथौ मध्याह्नाद्यप्राप्तौ श्राद्धलोपापत्तेः ।

तथा च—

मृताहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम् ।
प्रति संवत्सरञ्चैवमाद्यमेकादशेऽहनि ॥ इति याज्ञवल्क्यवचनम्—

मासि मास्यसिते पक्षे पञ्चदश्यां नरेश्वर ।
तथाऽष्टकासु कुर्वीत काम्यानपि शृणुष्व मे ॥ ( वि-पु, ३।१४।३ )

इति विष्णुपुराणवचनाद्यनेकवचनविरोधः स्याद् वीप्साबाधापत्तेः । तस्मान्मध्याह्नादे राज्यादि-पर्युदस्तभागान्तरस्य च मुख्यकल्पानुकल्पभावेन व्यवस्था । अथवा राज्यादिपर्युदस्तः सर्व एव कालो मुख्यः कल्पः । अपराह्णादिकं तु प्रशस्तमात्रम् । अत एव मनुः—

यथा चैवापरः पक्षः पूर्वपक्षाद् विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥ इति (३।२७८)

मत्स्यपुराणञ्च—

अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥

मध्याह्ने सर्वदा यस्मान्मन्दी भवति भास्करः ।
तस्मात् तदत्र फलदस्तत्राऽऽरम्भो विशिष्यते ॥ इति ।

मुख्ये कल्पेऽसितपक्षे ह्यपराह्णादिसम्भवे न कालान्तरे श्राद्धम्, प्राशस्त्यपक्षे तत्सम्भवेऽपि कालान्तरे श्राद्धे न कश्चिद् विरोधः । अपराह्णादिवैशिष्ट्यवचनं मुख्यकल्पत्वेऽप्यविरुद्धम् । यस्मात् पूर्वाह्णे शुक्लपक्षे च श्राद्धं तत्र प्रशस्तम्, अपराह्णे कृष्णपक्षे च विहितं श्राद्धं तत्र प्रशस्तमिति वचनार्थः । एवं च साग्निना दर्शं विना यत् श्राद्धं क्रियते तत्र निरग्नितुल्यतैव, तत्करणानन्तरं दर्शश्राद्धं तु रौहिणे न साग्निना कर्तव्यम्, नापि दशममुहूर्तेऽपि पिण्डपितृयज्ञा-वरुद्धत्वात्, किन्तु तदनन्तरमुहूर्तद्वये पारिभाषिकापराह्णान्तर्गते इति मुख्यः कल्पः । निमित्तार्थैस्तु पिण्डपितृयज्ञानुरोधाद् वा तदनन्तरमुहूर्तद्वये कर्तव्यम् । एवं चत्वारो मुहूर्ता वासरतृतीयां-शस्य श्राद्धकालः पञ्चमस्त्वतिसन्ध्यासमीपत्वात् त्याज्यः ।" इत्येवं विवृतवान् ।

अत्र यदुक्तं प्रकाशकारेण 'अथवा राज्यादिपर्युदस्तः सर्व एव कालो मुख्यः कल्पः' तत्र रघुनन्दनस्य किञ्चिन्मतवैषम्यमुपस्थाप्यते—

"यद्यपि पर्युदस्तरात्र्यादिषु श्राद्धादिकरणे विधेरौदासीन्यान्न फलं न वा प्रत्यवायः" इति सिद्धान्तस्तथाऽपि तद्विषये यत्र दोषप्रायश्चित्तयोः श्रुतिस्तत्र तत्तच्छास्त्रानुरोधाद् द्वयोरपि कल्पनम् । यथा सगोत्रादिविवाह-ससमचन्द्राद्युपरागदर्शनादौ । ततश्च तथाविधविषये नञः पर्युदासप्रसज्यप्रतिषेधोभयपरत्वाद् वाक्यभेदकल्पनमपि प्रामाणिकम् । अत एव—

'ऋतुकालाभिगमनं कुर्यात् पर्वणि वर्जयेत्' ।

स्मृतिश्च—

अपराह्णे ददाति तस्मिन् क्षीणे ¹ददातीति ।(A)

यच्चैतदुक्तं—यदहस्त्वेव चन्द्रमा न दृश्येतेति । यदहरेव² "पुरस्तात् न पश्चाद् ददृशे इति च"³ तच्चन्द्रमसः क्षयमवेक्ष्योक्तम् ।

तथा ⁴चोक्तम्—

यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः ।
"तत् क्षयापेक्षया⁵ ज्ञेयं क्षीणे राजनि चेत्यपि । (B) इति⁶ ।

---

इति बृहस्पतिना ऋत्वभिगमननियमे पर्वणः पर्युदासे कृतेऽपि,

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
स्त्री-तैल-मांससम्भोगी पर्वस्वेतेषु यो नरः ।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः ॥

इति विष्णुपुराणे निन्दया,

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ (११।२०३१)

इति मनूक्तेन च यथाक्रमं रागप्राप्तगमननिषेधः प्रायश्चित्तञ्च सङ्गच्छते । अन्यथा तदुभयं न स्यात् । अत एव भोजराजः—

पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद् बुधः ।
भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते ॥

इति रोगीति निन्दाश्रवणात् प्रसज्यता, नोपतिष्ठते इति श्रवणात् पर्युदासतेति । यत्तु ज्योतिषे—

कर्म कुर्यात् फलावाप्त्यै चन्द्रादिशोभने बुधः ।
तुल्यकाले त्विदं सर्वं नार्तः कालमपेक्षते ॥
चन्द्रे च शङ्खं लवणञ्च तारे तिथावभद्रे सिततण्डुलांश्च ।
धान्यञ्च दद्यात् करणर्क्षवारे योगे तिलान् हेममणिञ्च लग्ने ॥

इति देवलवचनात् प्रायश्चित्तानन्तरं कर्मोपदिष्टम् । अत एव—

न सकलगुणसम्पल्लभ्यतेऽल्पैरहोभिर्बहुतरगुणयुक्तं योजयेन्मङ्गलेषु ।
प्रभवति हि न दोषो भूरिभावे गुणानां सलिललव इवाग्नेः संप्रदीप्तेन्धनस्य ॥ इत्यनेन,
कष्टाभीष्टे तुल्यसंख्ये फले चेत् स्यातां नाशः फलयोस्तत्र वाच्यः ।
वाच्या पङ्क्तिर्योऽतिरिक्तस्तयोः स्यात् सर्वस्थाने कल्पनैवं प्रदिष्टा ॥

इति बादरायणवचनेन च प्रवर्तते, न तत्र पर्युदास इति । अतो विहितेतरवारादौ विवाहादिः प्रवर्तते, अन्यत् सुधीभिर्भाव्यम् ।" इति ।

A. अत्र तर्कालङ्कारः—"तथा च श्रूयते" 'अपराह्णे ददाति तस्मिन् क्षीणे ददाति' इति । 'एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः, स एतां रात्रिं क्षीयते अस्मिन् क्षीणे ददाति' इति च शातपथीये ब्राह्मणे" इति प्रमाणमुदाजहार ।

B. कर्मप्रदीपः १६।३ । सोपष्टम्भं विवृणोतीत्थमिदं प्रकाशकारः—ननु चैवं 'यदहस्त्वेव

---

1. 'ददाति च' ख । 2. 'एव' ख । 3. 'न पुरस्ताद् ददृशेऽन्यादिति च' इति ख । 4. 'चाह' ख । 5. 'मनयापेक्षया' क । 6. 'इति' नास्ति ख ।

तस्मान्नात्र विरोधः।

एवं चतुर्दशीमिश्रायाममावास्यायामुपोष्यमाणायां किमपराह्णे चतुर्दश्यामेव वर्त्तमानायां श्राद्धमारभेतोतामावास्यामागामिनीं प्रतीक्षेतेत्यत आह—

दृश्यमानेऽप्येकदा(A) ॥ ६ ॥

दृश्यमानेऽपीति चतु[1]र्दशीमपेक्ष्यैतदुक्तम्[1]*। तत्र हि किल चन्द्रमा दृश्यते, [2]दृश्यमानेऽपीति चतुर्दश्यामपि क्षीणशेषायामपराह्णे श्राद्धमारभेत, नावश्यममावास्यां प्रतीक्षेतेति[2]*। एकदा न सर्वदा। यदा[3]ऽतिविप्रकृष्टत्वादमावास्यायाः प्रतीक्षणे सन्ध्या समीपे[4] स्यात् तदा न प्रतीक्षेत। [5]अन्यदा प्रतीक्षेतेति।

तथा चोक्तम्—

यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया।
अमावास्यां प्रती[6]क्षेत तदन्ते वापि निर्वपेत्। (B)इति।

---

चन्द्रमा न दृश्येतताममावास्यां कुर्वीते'ति श्रुतिविरोधः स्यात्, तदहोरात्रशेषे सिनीवालीये चन्द्रदर्शनात्। 'न च दृश्यमानेऽप्येकदा' इति गोभिलसूत्रात् सोऽपि वैकल्पिकः काल इति वाच्यम्, अतुल्यबलत्वेन श्रुतिस्मृत्योर्विकल्पासम्भवात्। अत एव यदहस्त्वेवेति न सूत्रविरोध आशङ्कितः, तद्विरोधस्य दृश्यमानेऽप्येकदेति विकल्पपरिहृतत्वाद् इत्यतस्तं विरोधं परिहरति यदुक्तमिति। यत् श्रुतावदर्शनं तत् क्षयाभिप्रायम्, यस्मिन्नहनि क्षयो भवतीति तस्यार्थः। अस्माभिरपि यत् 'क्षीणे शस्यते' इत्युक्तं तदपि नादर्शनाभिप्रायेण येन स्वोक्तविरोधः स्यात् किन्तु क्षयाभिप्रायेण।" इति।

रघुनन्दनस्तु—"अथ यत्र पूर्वाह्णे श्राद्धं तत्र 'यदहस्त्वेव चन्द्रमा न दृश्येते'ति गोभिलविरोधः, तथाविधचतुर्दशीयुक्तामावास्यायाः सिनीवालीत्वेन प्रातश्चन्द्रदर्शनात्। तत्राह—यदुक्तमिति। 'यदहस्त्वेवे'ति यद् गोभिलसूत्रं तच्चन्द्रक्षयाभिप्रायकम्, अन्यथा गोभिलीयतादृशसूत्रान्तरेण सह पौनरुक्त्यापत्तेः। तस्मात् प्रथमसूत्रं कुहूपरं तच्च वर्धमानापक्षे नियतम्, क्षीणास्तम्भितयोस्तु यथायोग्यमनुसरणीयम्। एवञ्च 'यदहस्त्वेव चन्द्रमा न दृश्येत ताममावास्यां कुर्वीते'ति श्रुतिः, एतत्समानार्थकं श्रुत्यन्तरं वा ; तदपि वर्धमानादिपरम्, न तु कात्यायनवचनात् तत्र क्षयलक्षणा कल्पतरुप्रभृतिभिरुक्ता युक्ता।

'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी' इति विरोधात्।

क्षीणे इति कात्यायनेन मया यत् क्षीणे राजनीत्युक्तं तदपि क्षयाभिप्रायकम्।" एवं व्याजहार।

A. अत्र तर्कालङ्कार-सामश्रमिणौ 'दृश्यमानेऽप्येकदा' 'गताध्वा भवतीति' सूत्रद्वयम् एकीकृत्य पठतः।

B. कर्मप्रदीपः १६।४। सोपष्टम्भं विवृणोतीदमित्थं प्रकाशकारः—"चन्द्रक्षयश्चतुर्दश्यष्टमयामे इति वक्ष्यति, अतस्तद्दिने चन्द्रक्षये श्राद्धकरणात् सूत्रविरोधः स्यादित्याशङ्क्याह—'यच्चोक्तमि'ति। चन्द्रदर्शने यच्छ्राद्धं गोभिलेनोक्तं तच्चतुर्दशीदिनाभिप्रायम्, तद्दिने चन्द्रमा

---

1. '-र्दश्यपेक्षयैतदुक्तं' ख। 2. 'नेति' ख। 3. 'तिथि-प्रकृष्टत्वा-' ख। 4. '-पं' ख। 5. 'अन्यथा' ग। 6. '-क्षेद् वा' ख।

इदानीं चतुर्दशीं प्रति अमावास्याया [1]नामविवक्षयेदम् आह—

**गताध्वा भवतीति ॥ १० ॥**

[2]गतः अध्वा [3]स्वीयं स्थानं परिपाटिगणनमार्गो यस्या अमावास्यायाः सेयं गताध्वा नाम भवतीति । चतुर्दश्यामेव तस्याः क्षीणत्वात् [4]स्वं नाम सम्पन्नमित्यर्थः ।

तथा चोक्तम्—

संमिश्रा या चतुर्दश्या अमावास्या भवेत् क्वचित् ।
खर्विकां तां विदुः [5]केचिद् गताध्वामिति चापरे ॥ (A) इति ।

---

दृश्यमान इति दर्शनार्थमेव न तु क्षयाभावार्थमतो न विरोधः । तद्दिने श्राद्धं किममावास्याकाले चतुर्दश्यन्तिमयामकाले वा उभयतश्चन्द्रक्षयलाभादिति सन्देहे आह 'अमावास्यामि'ति । यद्य-मावास्या श्राद्धयोग्यतृतीयांशे तुरीयप्रहरे प्राप्नोति तदा श्राद्धार्थं तां प्रतीक्षेत । अथ तुरीय-प्रहरे सन्ध्यासमीपमुहूर्तेऽमावास्या तदा चतुर्दश्यन्तयाम एव श्राद्धं कुर्यात् । न च 'अमावास्यायां पितृभ्यो दद्यात्' इति श्रुतिर्बाध्येत चन्द्रक्षयपरत्वादमावास्यापदस्य । अत एव पिण्डपितृयज्ञोऽपि तद्दिन एव, चतुर्दशीकाले अपराह्णचन्द्रक्षययोर्लाभात् । अत एव मनुः—

'पितृयज्ञन्तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्' इति ।

अत्र रघुनन्दनः—अथैवं 'दृश्यमानेऽप्येकदा' इति यद् गोभिलस्य सूत्रान्तरं तद् व्यर्थम्, यदहस्त्वे-वेत्यादिद्वितीयसूत्रप्राप्ततिथेः सिनीवालीत्वेनैव चन्द्रदर्शनप्राप्तेरित्यत आह—यच्चोक्तमिति । दृश्य-मानेऽप्येकदेति यदुक्तं तच्चतुर्दश्यां श्राद्धाय, पूर्वसूत्रं तु अमावास्यापदोपादानाच्चन्द्रक्षये सत्यमावास्या-विषयम् । इदं पुनरित्थम्भूतचतुर्दशीविषयमिति श्राद्धविवेकः । तत् किममावास्यावच्चतुर्दशी-त्यत्राह—अमावास्यां प्रतीक्षेतेति । उभयतिथिप्राप्तौ श्राद्धायामावास्या प्रतीक्षणीया । यत्र पूर्वदिने दिवसार्द्धमुहूर्तमात्रं अमावास्या परदिने च सार्द्धदशममुहूर्तमात्रं, तत्र चोभयदिने श्राद्धयोग्यामावास्या न प्राप्यते तत्र तदन्ते चतुर्दश्यन्ते निर्वपेत् दद्यात् । अत्रैव विषये साग्नि-निरग्न्योर्विशेषमाह कालमाधवीये जाबालिः—

अपराह्णद्वयव्यापी यदि दर्शस्तितिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ॥ इति ।

आदिशब्दादनुपनीतशूद्रयोर्ग्रहणम्" इत्युक्तवांस्तिथितत्त्वे ।

A. कर्मप्रदीपः २६।९ । श्लोकस्यास्य शेषार्द्धमेवं पठति प्रकाशकारः 'खर्वितां तां विदुः केचिदुपेध्वमिति चापरे' इति । व्याकरोति चेत्थम्—"या चतुर्दशीयुक्ताऽमावास्या तां केचित् खर्वितां नीचां निन्दितामाचक्षते, तत्कर्मानर्हत्वात् । अपरे च तामेवोपेध्वमनुष्ठानात् तामुप-गच्छतेति मन्यन्ते ।" इति ।

1. 'नाम' नास्ति ग । 2. 'गताध्वा' ख । 3. 'भवतीयं' ग । 4. 'स्वनाम' ख । 5. 'प्राज्ञा' ख ।

ननु कस्माच्चतुर्दशीमिश्रायाममावास्यायामहःपर्यन्त[1]वर्त्तिन्यामपि महता प्रयत्नेनोपवासः श्राद्धदानञ्च नियम्यते नोत्तरस्यामिति ? उच्यते—ज्योतिःशास्त्रज्ञाः किलैवं वदन्ति—अष्टमे भागे [2]चतुर्दश्याः किल सोमः क्षीयते, अमावास्यायाश्चाष्टमे भागे पुनः सूक्ष्मः [3]सम्भवति।

तथा चोक्तम्—

अष्टमेऽंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।
अमावास्याऽष्टमांशे च पुनः किल भवेदणुः। (A) इति।

---

रघुनन्दनस्तु—"स्तम्भितायां व्यवस्थामाह—संमिश्रेति, क्षीणायाः पूर्वमुक्तत्वात् वर्धमानायाश्च वक्ष्यमाणत्वाद् अस्य वचनस्य स्तम्भितापरत्वम्। खर्वितां नीचाम्, पितृलोकप्रापणामर्हाम्, केचिद् यजुर्वेदिनः, अपरे ऋग्वेदिनः, तामेव उपेक्ष्यमुपगच्छत श्राद्धायेति शेषः। उपेक्ष्यमित्यत्र गताध्वामिति पाठे, गतः प्राप्तः पितृलोकप्रापणायाध्वाऽनयेति गताध्वा प्रशस्तेत्यर्थः। तस्माच्छन्दोगा उभयानुरोधाविच्छात उभयादरं कुर्वन्तीति कात्यायनस्वरसः। व्यक्तमाह लघुहारीतः—

त्रिमुहूर्त्ताऽपि कर्तव्या पूर्वा दर्शा च बह्वृचैः।
कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः॥

अत्र त्रिमुहूर्तेत्युपादानात् स्तम्भितायाः पूर्वदिने त्रिमुहूर्तमात्रलाभेऽपि बह्वृचानां श्राद्धं मुख्यापराह्णलाभादपि परदिने, सामगानां तत्राप्यनियमः। एतादृग्विषय एव उभयत्रापराह्णालाभेऽपीयं व्यवस्थेति श्राद्धविवेकः। मुख्यापराह्णस्य एकदिनमात्रलाभेऽप्युभयदिनालाभात्।" इति व्याजहार तिथितत्त्वे।

A. कर्मप्रदीपः २।६।४। अत्र प्रकाशकारः—"चन्द्रक्षयकालमाह 'अष्टमेऽंशे' इति। चतुर्दशीशेषप्रहरादारभ्यामावास्याष्टमयामं यावत् क्षयकाल इत्यर्थः। ननु क्षयो विनाशः सूक्ष्मता वा ? नाद्यः, सिनीवाल्यां तदभावात्, नापि द्वितीयः, केवलायाममावास्यायां तदभावे क्षयाभावात् श्राद्धलोपापत्तेः। उच्यते—तुरीयोनकलावशिष्टता सर्वविनाशश्च द्वयं क्षयपदवाच्यम्। द्विविधो हि क्षयः कृत्स्नक्षयोऽकृत्स्नक्षयश्च। अकृत्स्नक्षयस्तुरीयोनकलावशिष्टता सा चतुर्दशीशेषयामे भवति। कृत्स्नक्षयः सप्तमेऽमावास्यायामे, अष्टमे च पुनस्तुरीयोनकलावशिष्टता, एवं नवमयामः क्षयकालः। अन्यथा 'पुनः किल भवेदणुः' 'चतुर्थभागोनकलावशिष्टः' इत्यभिधानं निरर्थकं स्यात्। पुनःशब्दप्रयोगात्तु यादृशमणुत्वं चतुर्दशीशेषयामे तादृशमित्याह।"

पौर्णमास्यन्तापह्रायणज्यैष्ठसम्बन्धिन्या अमावास्यायाश्चन्द्रगतिवैलक्षण्याच्च चतुर्दश्यष्टमयामे क्षय इत्याह—

---

1. '-व्यापिन्या-' ख। 2. 'चतुर्दश्याः' नास्ति ख। 3. 'पुनः सम्भ-' ख।

आग्रहायण्यमावास्या तथा ज्यैष्ठस्य या भवेत् ।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः ॥
अत्रेन्दुराद्यप्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः ।
तदन्त एव क्षयमेति कृत्स्नमेवं ज्योतिश्चक्रविदो वदन्ति ॥ (क०प्र०,२।६।६-७)

इति वचनात् । किन्तु अमावास्याप्रथमयामे । तदन्ते अमावास्यान्तयामे एवं भाद्रप्रतिपत्-प्रथमयामेऽनुरूपत्वात् सोऽपि क्षयकालः ।

यस्मिन्नब्दे द्वादशैकश्च यव्यास्तस्मिंस्तृतीया परिदृश्या न जायते ।
एवं चारं चन्द्रमसो विदित्वा क्षीणे तस्मिन्नपराह्णे च दद्यात् ॥ (क०प्र०२।६।८१)

पूर्वार्धं व्याख्यायते—यव्या मासाः द्वादशैकश्च त्रयोदश यस्मिन्नब्दे त्रयोदशमासास्तस्मिन्नब्दे तृतीया मात्रा न दृश्यते तुरीयोनकलावशिष्टो न भवतीत्यर्थः, अत्र कृत्स्नक्षयो नास्तीति यावत् । 'तृतीययामपरिदृश्यो न जायते' इति पाठान्तरम् । यदाऽमावास्या क्षीयमाणा श्राद्धयोग्यमुहूर्ते तदा अमावास्याक्षणे चन्द्रक्षयापराह्णयोर्लाभात् श्राद्धं दद्यात् । यदा तु सन्ध्यासमीपमुहूर्तमात्रे अमावस्या परदिने च वासरतृतीयांशं न व्याप्नोति तदा परदिन एव वासरतृतीयांशे प्रतिपत्प्रथम-यामे चन्द्रक्षयापराह्णयोर्लाभाद् दद्यात् । न त्वितरामावास्यायामिव पूर्वदिने, चतुर्दश्यन्तयामे चन्द्र-क्षयाभावात् । इतरास्वमावास्यासु हि चतुर्दश्यादिसन्ध्यासमीपमुहूर्तमात्रव्यापिनीषु परदिने तृतीयांशव्यापिनीषु पूर्वदिन एव चतुर्दश्यन्तयामे चन्द्रक्षयवासरतृतीयांशलाभेन, अपरप्रतिपत्काले चन्द्रक्षयाभावात् पूर्वदिन एव श्राद्धं नोत्तरत्रेति ।

अत्र रघुनन्दनः—"चतुर्दश्यष्टमयामे चन्द्रमाः क्षीणः, चतुर्थभागोनकलावशिष्टो भवति । 'अत्रेन्दु-राद्यप्रहरेऽवतिष्ठते' इत्यादिस्वरसात् । अमावास्याष्टमे यामे चाणुर्भवति पुनरुत्पद्यते किलेत्यागम-वार्तायाम्, तेनामावास्यायाः सप्तमे यामे कृत्स्नक्षय इत्यवगम्यते । ततश्चान्त्यकलावयवनाशोत्पत्ति-रेव क्षयः, सा च सूक्ष्मतायां विनाशेऽप्यस्तीति श्राद्धविवेकः । उत्पत्तिराद्यक्षणसम्बन्धः तेन विनाशस्यानन्तत्वेऽपि नातिव्याप्तिः । अत्र विशेषमाह—आग्रहायण्येत्यादि, आभ्यामिति ल्यब्-लोपे पञ्चमी । इमे प्राप्येत्यर्थः, चन्द्रचारविदो ज्योतिर्विदः । अत्र पौर्णमास्यन्तमास इति परिशिष्ट-प्रकाशः । अत्र बीजं ब्रह्मपुराणीयतिथिकृत्यम्—तथा च श्राद्धमधिकृत्य ब्रह्मपुराणम्—

'पयोमूलफलैः शाकैः कृष्णपक्षे च सर्वदा ।'

अत्र कृष्णपक्षे चतुर्दशीव्यतिरिक्तायां यस्यां कस्याञ्चित् तिथौ श्राद्धविधानादमावास्याऽपि लभ्यते इति को विशेष इत्यत्राह—अत्रेन्दुराद्ये इति । अत्र मासद्वयेऽमावास्यायां चतुर्थभागोनकलावशिष्टः चतुर्थभागोना या कला तयाऽवशिष्टः कलाभागत्रयमात्रः सन्नाद्ये प्रहरेऽवतिष्ठते । अर्थात् चतुर्दश्यष्टम-यामे क्षयारम्भ इति तदन्त एव अमावास्यान्तयाम एव क्षयं कृत्स्नमेति । अन्यत्रामावास्यासप्तम-याम इति विशेषः । तेन मार्गशीर्षज्यैष्ठयोरुभयदिने चन्द्रक्षयलाभे यद्यपि यदा चतुर्दशीयाममिति वचनात् पूर्वदिन एव श्राद्धं प्राप्नोति तथापि तद् वचनं चन्द्रक्षयानुरोधमूलमिति कृत्स्नक्षयानु-रोधात् क्षीणायामपि परत्रापराह्णलाभे श्राद्धम्, अन्यथैतद्विशेषाभिधानं व्यर्थं स्यात् । अत्रापि विशेषान्तरमाह—यस्मिन्नब्दे इत्यादि । यव्यो मासः, तृतीयया मात्रया चतुर्थभागोनकलया

एवं सोमत्तयोऽपराह्णश्च पूर्वामावास्यायामेव संपद्यते नोत्तरस्यामित्यतः पूर्वैव नियम्यते। 'उत्तरस्या[1] श्चोपोषणे यजनीयतिथौ पश्चाच्चन्द्रमसो दर्शनेन भवितव्यम्। [2]तच्चानिष्टम्।

तथा च [3]गृह्यान्तरम्—

यजनीयेऽह्नि सोमश्चेद् वारुण्यां दिशि दृश्यते।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद् द्विजातये। (A) इति।

एवंरूपैव यदि वर्धमानोपलभ्यते तदोत्तरामुपवसेत्।

'तथा चोक्तम्'[4]—

वर्द्धमानाममावास्यां लभेच्चेदपरेऽहनि।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत्। (B)[5] इति।

---

परिदृश्यश्चन्द्रो न भवति किन्तु तदधिकन्यूनकलयेति। तेन मलमासयुताब्दे अन्यमासवदनयोरपि चतुर्दश्यन्तयामादिदर्शसप्तमयामपर्यन्तं क्षय इति। मलमासयुताब्दस्तु एकस्मान्मलमासादब्दद्वया-नन्तराब्दस्तृतीयेऽब्दे मलमासस्यावश्यम्भावादिति। चन्द्रक्षयानुरुद्धं क्षीणापक्षमुपसंहरति एवं चारमित्यादि। चारं गतिविशेषम्॥" इति व्याजहार। अत्र 'पुनः' स्थाने 'ततः' इति पठित्वा व्याचकार तर्कालङ्कारः, पुनरिति पाठेऽस्वारस्यमपि ददौ स्वभाष्ये ; म० म० अनन्तकृष्ण-शास्त्रिणस्तु च्छन्दोगपरिशिष्टप्रकाशव्याख्यायां 'ततः' शब्दपाठात् 'पुनः' शब्दपाठ एव साधीयानिति निर्णीतवन्तः ; तदनयोर्वादप्रतिवादौ तत्र तत्र द्रष्टव्यौ। वयं पुनरस्मद्भाष्यकारसम्मत'पुनः' शब्दयुक्तपाठमेव समीचीनं मन्यामहे इति।

A. कर्मप्रदीपः २।७।९। एतदेव वचनं प्रमाणीकरोति कालमाधवे 'चन्द्रदर्शनोपेतायां शुक्लप्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह कात्यायनः' इत्युपोद्घातेन माधवाचार्यः। संवादिप्रमाण-मप्युक्तं तत्रैव—स्मृत्यन्तरेऽपि—

'अर्वागस्तमयाद् यत्र द्वितीया तु प्रदृश्यते।
तत्र यागं न कुर्वीत श्वो देवास्तु पराङ्मुखाः॥' इति।
पर्वणोऽंशे चतुर्थे तु कर्त्तव्येष्टिर्द्विजोत्तमैः।
द्वितीयासहितं यस्माद् दूषयन्त्याश्वलायनाः॥

तदेतदावर्त्तनात् पूर्वकालयोः सन्धौ सति द्रष्टव्यम् अपराह्णादिसन्धिषु चतुर्थस्येष्टाव-प्राप्तत्वात्।" इति च।

ननु चन्द्रदर्शनोपेतायां प्रतिपदीष्टिः समाम्नाता, तथा च शतपथब्राह्मणम्—'यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्निमाँल्लोकानभ्युदेती'ति। तैत्तिरीयब्राह्मणमपि—'एषा वै सुमनो नामेष्टिर्यमभि-यज्वानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोके धृत्रं भवती'ति। अयमर्थः—येयमिष्टिश्चन्द्रदर्शनो-पेते दिने क्रियते सेयमिष्टिः सुमनःशब्दवाच्या ; तादृशीमिष्टिं कृतवन्तं यजमानमभिलक्ष्य तस्मिन्नेव दिने पश्चाच्चन्द्रमा उदेति, तस्मै यजमानायास्मिँल्लोके समृद्धिर्भवतीति। सत्यम्, तदेतच्छ्रुतिद्वयं गोभिलीयमतानुसारिव्यतिरिक्तविषयमित्यवगन्तव्यमित्यास्तिकाः॥

B. कर्मप्रदीपः २।६।१०। लभेच्चेदित्यत्र लक्षयेदिति सप्रकाशमुद्रितपुस्तकपाठः।

---

1. 'उत्तरस्य चोपो-' ग, 'नोत्तरस्या-' क। 2. 'तच्चानिष्टं' नास्ति क। 3. 'कर्मप्रदीपे' ख। 4. नास्ति ख। 5. 'इति' नास्ति ख।

अस्य च प्रकाशकारोक्ता व्याख्या—कस्मिन् तर्हि अविकल्प इत्याह वर्धमानामिति ।

"चतुर्दशीक्षीयमाणापेक्षया वर्धमानां वासरतृतीयांशव्यापिनीम् । चन्द्रक्षयापराह्णलाभाभावेऽपि तस्यामेव श्राद्धं भवेत् । एवं स्तम्भितायां विकल्पः ।

तथा च लघुहारीतः—

त्रिमुहूर्त्ताऽपि कर्त्तव्या पूर्वा दर्शा च बह्वृचैः ।
कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः ॥ इति ।

अध्वर्युभिर्यजुर्वेदिभिः, सामवेदिनां यथेष्टाचरणम् ।" इति ।

अत्र रघुनन्दनः—"वर्धमानायां व्यवस्थामाह कात्यायनः—वर्धमानामिति । यामांस्त्रीनिति पूर्वदिवसीययामत्रयन्यूनचतुर्दश्यपेक्षया । अथैवं वासरतृतीयांशानुरोधेन श्राद्धविधानात् कथममावास्याश्राद्धे पर्युदस्तराञ्यादीतरकालपरिग्रहः ? सत्यम् , तिथिद्वैधे क्षीणादिभेदेन खण्डविशेषपरिग्रहाय वासरतृतीयांशापेक्षा, अन्यथोभयदिने वासरतृतीयांशाप्राप्तौ श्राद्धलोपापत्तेः, प्रागुक्त-'निरग्न्यादेः कुहूर्मता' इत्यस्य निर्विषयतापत्तेश्च । अतः पर्युदस्तेतरकालस्यापि परिग्रहः । यदा तु पूर्वापरखण्डयोरन्यतरस्यैव परिग्रहस्तदा यथायोग्यं तत्रैव सायाह्नमुहूर्तद्वयपर्युदस्तेतरकाल-कुतपादिमुहूर्तपञ्चकरौहिणादिमुहूर्तचतुष्टयवासरतृतीयांशीयापराह्णमुहूर्तद्वयकाला यथाक्रममापत्-सामान्य-प्रशस्त-प्रशस्ततर-प्रशस्तमत्वेन ज्ञेयाः । एवमखण्डतिथावपि नातिसन्ध्यासमीपत इति पूर्वोक्तत्वात् ।

'सायाह्नस्त्रिमुहूर्तः स्याच् श्राद्धं तत्र न कारयेत्' इति मत्स्यपुराणात् , 'रात्रौ श्राद्धमि'ति मनुवचनात् , 'ऊर्ध्वं मुहूर्तादि'त्यादिमत्स्यपुराणवचनाच्च । मुहूर्तपञ्चकमित्यत्र कुतपादिति ल्यब्लोपे पञ्चमी, कुतपमारभ्येत्यर्थः । ततस्तेनैव—

अपराह्णे तु संप्राप्ते अभिजिद्रौहिणोदये ।
यदत्र दीयते जन्तोस्तदक्षयमुदाहृतम् ॥ इत्युक्तम् ।

"पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितॄणाम्"इति श्रुतेः, वासरस्य तृतीयांश इति कात्यायनवचनम् । 'सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेदि'त्येषामेकवाक्यत्वाद् वासरतृतीयांशीयापराह्णमुहूर्तद्वयस्य लाभ इति । अत्र—

दर्शश्राद्धं तु यत् प्रोक्तं पार्वणं तत् प्रकीर्तितम् ।
अपराह्णः पितृणान्तु तत्र दानं प्रशस्यते ॥ इति ।

शातातपीयवचने प्रशस्यते इत्यभिधानात् 'मासि मास्यपरपक्षस्यापराह्णः श्रेयान्' इत्यापस्तम्बवचने श्रेयानित्यभिधानाच्च प्राशस्त्यतारतम्यं कल्प्यते, न तु मुख्यकल्पानुकल्पत्वमिति । अपरपक्षस्य कृष्णपक्षमात्रस्य । तथा च श्रुतिः, 'पूर्वः पक्षो देवानामपरः पक्षः पितॄणाम्' इति । एवञ्चामावास्या न निमित्तान्तरं किन्तु कृष्णपक्षनिमित्तकश्राद्धस्य प्रशस्तकालपरा । अत एव शक्तेस्तारतम्येन बहून् कल्पानाह गोतमः—'अथ श्राद्धममावास्यायां पितृभ्यो दद्यात् पञ्चमीप्रभृति-

ननु चतुर्दशीमिश्रामावास्योपोषणे यजनीयतिथौ किं पूर्वाह्ण एव पत्न्यादियज्ञं कुर्यादुत प्रतिपदं प्रतीक्षेदिति। [1]उच्यते—"अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा, अग्रेणाग्निं परिक्रम्ये"ति [ सू १।६।१३ ] वचनात् [2]पूर्वाह्ण एव कुर्यात्। "पश्चान्ता उपवस्तव्याः"* पश्चाद्योऽभियष्टव्याः"। [ सू १।५।५ ] इति वचना[3]च्चेति। प्रतिपदं प्रतीक्षेदिति। सोऽयं तुल्यविकल्पः।

---

वाऽपरपक्षस्य यथा श्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मणसन्निधौ वा कालनियमः शक्तित' इति। ( गौ० स० १५ ) योऽयममावास्यादिकालनियमः स शक्तस्य सद्द्रव्यस्यारोगिणो बोद्धव्य इति श्राद्धविवेकः। अत एवामावास्यायामतिप्राशस्त्यमाह निगमः—'अपरपक्षे यदहः सम्पद्यते अमावास्यायान्तु विशेषेण'।

तथा च मनुः—

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः॥ (३।२७६)

अत्र चतुर्दशीवर्जनं 'तदन्ते वापि निर्वपेदि'त्युक्तविषयेतरविषयम् अन्यथा तद् वचनं व्यर्थं स्यात्, न चेदं शस्त्रहतपितृमात्रविषयम्, तस्य प्रकरणभेदादनुपस्थितेः। अमावास्यायाः प्रतीक्षाया असम्भवे चतुर्दशीविधानाच्च। यत्तु—'कार्यं श्राद्धममावास्यां मासि मास्युडुपक्षये' इति मार्कण्डेयपुराणेऽभिहितं तन्मासि मासि यत् कार्यं श्राद्धं तच्चन्द्रक्षयेऽमावास्यां प्राप्यातिप्रशस्तं गौतमादिवचनैकमूलत्वात्, चन्द्रक्षयाभावेऽपि वर्धमानादौ श्राद्धविधानेनामावास्याया अलाभेऽपि चतुर्दश्यन्तलाभे श्राद्धविधानेन च विशिष्टविध्यनुपपत्तेश्च। यत्तु—

अमावास्याष्टका-कृष्णपक्ष-पञ्चदशीषु च। इत्यभिधाय
एतच्चानुपनीतोऽपि कुर्यात् सर्वेषु पर्वसु।
श्राद्धं साधारणं नाम सर्वकामफलप्रदम्॥
भार्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः।
शूद्रोऽप्यमन्त्रवत् कुर्यादनेन विधिना बुधः॥ इति मत्स्यपुराणम्, (१७।६३—६४)

तत्रानुपनीतोऽपीत्यपिशब्देनोपनीतः समुच्चीयते। तत्रानुपनीतस्य जातमात्राहिताग्नेरुपनीतस्य च साग्नेः सम्भवात्, तयोः—

'न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः'

इति मनुना कृष्णपक्षीयश्राद्धस्यामावास्यायां विधानात्। तदेकवाक्यतया मत्स्यपुराणे नित्यश इत्यनेनामावास्याया यन्नित्यत्वाभिधानं तत् साग्निकपरम्, कृष्णपक्षे यन्नित्याभिधानं तत् साग्निकभिन्नस्य, योग्यत्वात्। एवमन्यानि वचनानि व्याख्येयानी"ति व्याजहार।

---

1. 'उच्यते' नास्ति क-ग। 2. नास्ति ख। 3. 'इति' नास्ति क-ग।

तथा चोक्तम्—

पक्षादावेव कुर्वीत सदा पक्षादिकं चरुम् ।
पूर्वाह्ण एव 'कुर्वीत विद्वेऽप्यन्ये मनीषिणः ॥ (A)इति ।

A. कर्मप्रदीपः २।६।११ । 'अत्रान्ये इत्यकरणपक्षोऽपि सूचितः' इति प्रकाशः । तदत्र गोभिलसूत्राणि भाष्यादिधृतकर्मप्रदीपादिवचनानि मन्वादिस्मृति-पुराणवचनानि च यथायथमुपजीव्य यदुक्तममावास्याश्राद्धविषये शूलपाणिना श्राद्धविवेके तस्मात् किञ्चिदुपस्थाप्यते— 'अथामावास्या, मनुः—'पितृयज्ञन्तु...' । चन्द्रक्षये अमावास्यायाम् । एतेनाऽमावास्यायां प्रतिमासं पिण्डान्वाहार्यकसंज्ञकं श्राद्धं साग्निना पिण्डपितृयज्ञानन्तरं कर्त्तव्यम् । ननु पितृयज्ञपदं तर्पणपरमस्तु ?

पितृयज्ञन्तु निर्वर्त्य तर्पणाख्यन्तु योऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यादिन्दुक्षये सदा ॥ (१६।२१)

इति मत्स्यपुराणवचनात् स्नानोत्तरभावित्वात् श्राद्धस्य तर्पणानन्तर्यार्थप्राप्तत्वेन विधातुमयोग्यत्वात् । अतो विधायकत्वानुरोधेन पिण्डपितृयज्ञपरता, मत्स्यपुराणवचने तु पितृतर्पणानन्तर्यानुवादस्तर्पणपार्वणयोर्मध्ये पितृयज्ञाख्यनित्यश्राद्धव्युदासार्थः । न च मत्स्यपुराणे पितृबलिदानवच्च श्राद्धोत्तरकर्मणि नित्यश्राद्धं विहितम्, पिण्डान्वाहार्यकसमाख्याविवेचनव्याजेनापि पिण्डपितृयज्ञानन्तर्यमाह मनुः—'पिण्डानामि'ति । यतो मासिकं श्राद्धं पिण्डानां पिण्डपितृयज्ञानामनु आद्रियते अतः पिण्डान्वाहार्यकं विदुः । मत्स्यपुराणे तु अन्यथाऽन्वयो दर्शितः—

यस्मादन्वाहृता मात्रा भक्षयन्ति द्विजातयः ।
अन्वाहार्यकमित्युक्तं तस्माच्चन्द्रक्षये सति ॥ (१६।४३)

अन्वाहृता पिण्डेभ्यो मात्रा भागः । बह्वृचानां ब्राह्मणभोजनात् प्राक् पिण्डदानपिण्डमात्राभक्षणं ब्राह्मणानामुक्तं मनुना—

पिण्डेभ्यस्त्वल्पिकां मात्रां समादायानुपूर्वशः ।
तानेव विप्रानासीनान् विधिवत् पूर्वमाशयेत् ॥ (३।२१९)

अथवा—

ततः प्रभृति पितरः पिण्डसंज्ञां प्रलेभिरे ।

इति मत्स्यपुराणवचनात् पिण्डानां पितृणां मासिकं श्राद्धमन्वाहार्यं मासैकतृप्तिजनकम्, अतः पिण्डान्वाहार्यकम् । छन्दोगपरिशिष्टे कात्यायनः—'पिण्डान्वाहार्यकमि'ति । राजनि चन्द्रे, तृतीयांशे त्रिधाविभक्तदिनतृतीयभागे, दशममुहूर्तादूर्द्ध्वमिति यावत् । अत एव श्रुतिः 'पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितृणामि'ति । 'नातिसन्ध्यासमीपत' इति सन्ध्यासमीपमुहूर्तमेकम् आपद्यपि वर्जनीयमित्यर्थः । यद्यपि—

1. 'कुर्वन्ति' क ।

'सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत्' (२२।८३)

इति मत्स्यपुराणे सन्ध्यासन्निहितमुहूर्तत्रयं निषिद्धम्, तथाऽप्यापत्काले मुहूर्तद्वयं निषिद्धमप्यनुज्ञातम् अतिशब्दस्वरसात् 'त्रिमुहूर्त्ताऽपि कर्त्तव्या' इति वक्ष्यमाणलघुहारीतवचनाच्च। दर्शद्वैधे कथं श्राद्धमिति तत्राऽऽह स एव—'यदा चतुर्दशी...मनीषिणः' इति ( क प्रः १६।२-११ )। यदा चतुर्दशीयाममिति तिथिद्वैधे परदिने तिथिः प्रकारत्रितयान्यतमप्रकारो भवति क्षीणा, स्तम्भिता, वर्धिता च। तत्र क्षीणामावास्याविषयमिदम्। यदा पूर्वचतुर्दशीदिनस्य चतुर्थं प्रहरममावास्या पूरयेत् प्रहरत्रयव्यापिनी चतुर्दशी भवतीत्यर्थः, अपरदिने पूर्वतिथ्यपेक्षया क्षीयमाणा भवति तदा पूर्वदिन एवामावास्यावेलायां श्राद्धम्। एतच्चोभयत्र तृतीयांशलाभे न तु क्षीयमाणेत्यस्य तृतीयांशव्यापिनीति व्याख्यानं युक्तम्, वासरस्य तृतीयांश इत्यनेनैव प्राप्तत्वाद् वैयर्थ्यापत्तेः। अत्र हेतुमाह—यथोक्तं 'यदहस्त्वेव चन्द्रमे'ति यद् गोभिलसूत्रं तत् क्षयाभिप्रायेण ज्ञेयम्, यस्मिन्नहनि चन्द्रक्षयो भवतीति तस्य सूत्रस्यार्थः। कुतः क्षयलक्षणेति चेत्? न, 'यदहश्चन्द्रमा न दृश्येते'ति पूर्वसूत्रेण सह पुनरुक्तिरेव लक्षणाबीजमिति तत्रैव व्याख्यातम्। अस्माभिरपि क्षीणे राजनीत्युक्तम्, चन्द्रक्षयश्चतुर्दश्यष्टमयामात् प्रभृति अमावास्यासप्तमयामं यावदिति वक्ष्यति। अतश्चन्द्रक्षयानुरोधात् पूर्वदिने श्राद्धमिति तात्पर्यार्थः। 'यदहस्त्वेव चन्द्रमा न दृश्येते'ति श्रुतिविरोधमाशङ्क्य परिहृतम्। इति कल्पतरुव्याख्यानमयुक्तं दुर्बलस्मृतिविरोधेन बलवत्यां श्रुतौ क्षयलक्षणाया अयोगात्। अन्यथा विरोधाधिकरणसिद्धान्तेऽपि 'औदुम्बरी सर्वा वेष्टयितव्ये'ति स्मृतिविरोधात् औदुम्बरीं स्पृष्ट्वा उद्गायेतेति श्रुतावुपस्पर्शलक्षणा स्यात्; तस्मान्नैतादृशी प्रत्यक्षश्रुतिरस्ति। अनुमीयमाना चेत् स्मृत्यनुगुणैवानुमेयेति। ननु तेनैव सूत्रेण सिनीवालीत्वेन पूर्वदिने दृश्यमानेऽपि चन्द्रमसि क्षयपुरस्कारेण श्राद्धस्योक्तत्वात् 'दृश्यमानेऽप्येकदा' इति सूत्रमनर्थकमित्यत आह—'यथोक्तं दृश्यमानेऽपी'ति। पूर्वसूत्रम् अमावास्यापदोपादानाच्च चन्द्रक्षये सत्यमावास्याविषयम्। इदं पुनरित्थम्भूतचतुर्दशीविषयमिति नानर्थकत्वं तदा च विकल्प इत्याह—'अमावास्यां प्रतीक्षेत' श्राद्धार्थम्, तदन्ते चतुर्दश्यन्ते वा निर्वपेत्, यदा अमावास्याकालः श्राद्धयोग्यो न लभ्यते तदा चन्द्रक्षयानुरोधाच्चतुर्दश्यन्त एव श्राद्धमित्यर्थः। 'अष्टमेऽंशे चतुर्दश्या' इति क्षीणो भवति, चतुर्थभागोनकलावशिष्टता च क्षैण्यं, वक्ष्यमाणवचनात् अमावास्याष्टमे भागेऽनुरूपचन्द्रोत्पत्त्यभिधानात्, सप्तमे यामे निःशेषचन्द्रक्षयोऽवगम्यते।

ननु कोऽयं क्षयः सूक्ष्मता विनाशो वा? नाद्यः; अमावास्यासप्तमे यामे तदभावात्, न द्वितीयः; पूर्वयामेष्वव्याप्तेः, तुरीयोनकलावशिष्टता विनाशश्च द्वयमेव क्षयशब्दार्थ इति चेन्न, अनुगतैकरूपाभावात्, अमावास्याष्टमे भागेऽपि अनुरूपत्वात् चन्द्रमसः क्षयापत्तेश्च। इष्यत एवेति चेन्नैवम्, अमावास्यायां चन्द्रक्षयव्यभिचाराभावे क्षयस्य विशेषणत्वं प्रमत्तगीतं स्यात्। यथा गोभिलः, 'यदहस्त्वेव चन्द्रमा ने'ति। तथा मार्कण्डेयपुराणम्—

'कार्यं श्राद्धममावास्यां मासि मास्युडुपक्षये।' इति।

उच्यते—अन्त्यकलाया अवयवविनाशोत्पत्तिरेव क्षयः। सा च सूक्ष्मतायां विनाशेऽप्यस्तीति न विरोधः। विशेषमाह—'आग्रहायण्यमावास्ये'ति। चन्द्रचारविदो ज्योतिर्विदः। चन्द्रगतिवैलक्षण्याद् वैलक्षण्यमित्यर्थः। 'चतुर्थभागोनकलावशिष्टः' क्षीणः, मासान्तरे चतुर्दश्यष्टमयामे, क्षैण्यमेतयोरमावास्याप्रथमयाम इति विशेषः। तदन्त एव अमावास्यान्तयाम एव कृत्स्नं क्षयमेति यतः, अतस्तयोरमावास्याष्टमभाग एवापरदिनेऽपराह्णलाभे ज्ञेयम्। यद्यपि पूर्वदिनेऽप्यमावास्याप्रथमयामे चन्द्रक्षयो लभ्यते तथाऽप्यपरदिन एव कृत्स्नक्षयानुरोधादित्यर्थः। अत्रापि विशेषः—यस्मिन्नब्दे द्वादशैकश्च यव्यत्रयोदश मासा इत्यर्थः। तेन मलमासपाते कलाभागत्रयावशिष्टत्वममावास्याप्रथमयामे यदुक्तं तन्न भवतीति तात्पर्यम्। उभयत्राप्यपराह्णलाभे स्तम्भितायां व्यवस्थामाह—स एव 'संमिश्रे'ति। वृद्धिह्रासशून्या सती या चतुर्दश्या संमिश्राऽमावास्या तां खर्वितां नीचां निन्दितां केचिदाहुः। अपरे तामेवोपेध्वम् उपगच्छतेति मन्यन्ते। अस्या व्यवस्था शाखिभेदेनेत्याह लघुहारीतः—'त्रिमुहूर्ताऽपी'त्यादि। बह्वृचैः पूर्वदिनेऽमावास्या मुहूर्तव्यापिन्यपि कार्या। यजुर्वेदिभिरपरदिने, सामगीतिभिश्छन्दोगैर्यथेष्टमनियमेनेत्यर्थः। यथेष्टं सामगीतिभिरित्यभिधानात्। स्तम्भिताविषयमिदम्, क्षीयमाणवर्धमानपक्षयोः परिशिष्टकृता व्यवस्थापितत्वात्। उभयत्रापराह्णालाभेऽपीयं व्यवस्था। वर्धमानामाह—वर्धमानामिति। पूर्वदिने तुरीयं यामं पूरयित्वाऽपरदिने पूर्वतिथ्यपेक्षया वर्धमानामित्यर्थः, न तु क्षीयमाणापेक्षया, क्षीयमाणत्वस्य पूर्वतिथ्यपेक्षितत्वे वर्धमानत्वस्यापि तथैव न्याय्यत्वात्। अतः प्रहरत्रयमधिकं वा यदा वर्धमानाममावास्यां लक्षयेत् तदा परदिन एव श्राद्धं चन्द्रक्षयालाभेऽपि वचनादेव, एतदप्युभयत्रापराह्णलाभे बोद्धव्यम्। ननु पूर्वदिने तुरीयं यामं पूरयित्वाऽपरदिने प्रहरत्रयं यावदवतिष्ठमाना कथं वर्धमाना स्यात्? सत्यम्, 'तुरीयमनुपूरयेदि'ति, अपराह्णप्राप्त्युपलक्षणार्थम्। इतरथा दण्डाधिक-दण्डोन-तुरीययामपूरणे कीदृशी शास्त्रार्थव्यवस्था स्यात्, तदा च पूर्वदिने दण्डाधिकतुरीयप्रहरव्यापिनी अमावास्या परदिने प्रहरत्रयमवतिष्ठमाना कथं न वर्धमाना स्यात्। ननु वर्धमानाऽमावास्यापक्षे प्रातःकालविहितस्य पक्षादिचरोर्न तस्मिन् दिनेऽमावास्याप्रातःकाले अनुष्ठानं 'पक्षादयोऽभियष्टव्याः' इति गोभिलविरोधात्। नाप्यपरदिने द्वितीयाविद्धत्वात्, द्वितीयावेधे 'एषा वै सुमना नाम्नेष्टि'रिति। तैत्तिरीयश्रुतौ निन्दाग्रहणाल्लोप एव पक्षादिचरोः स्यादित्याह—'पक्षादावेव कुर्वीते'ति। अपरदिने प्रतिपद्येव विद्धायामपि कर्तव्य इत्यर्थः। वेधनिन्दा च बह्वृचविषयेति वक्ष्यते। प्रसङ्गादिदमाह लघुहारीतः—

पार्वणेंऽशे तुरीये तु कार्या इष्टिर्द्विजातिभिः।
द्वितीयासहितां यस्माद् दूषयन्त्याश्वलायनाः॥ इति

बह्वृचविषयञ्चेदम्, दूषयन्त्याश्वलायना इत्यभिधानात्, छन्दोगपरिशिष्टकृता च वेध एव इष्टेरुक्तत्वात्। अत एव बौधायनः—

पर्वणो यस्तुरीयांश आद्याः प्रतिपदस्त्रयः ।

यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः ॥ इति ।

अमावास्याव्यतिरिक्तकृष्णपक्षतिथिपार्वणतिथिद्वैधे गृह्यपरिशिष्टवचनम्—

यथाऽस्तं सविता याति पितरस्तामुपासते ।

तिथिं तेभ्योऽपराह्णो हि स्वयं दत्तः स्वयम्भुवा ॥

एतच्च नैकोद्दिष्टशुक्लपक्षपार्वणविषयम्, अपराह्णो हि दत्त इति हेतुवन्निगदात् ।

अथ प्रतिमासपार्वणाशक्तस्य कर्तव्यम् ।

पार्वणश्राद्धमभिधायाऽऽह मनुः—

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।

हेमन्त-ग्रीष्म-वर्षासु पाञ्चयाज्ञिकमन्वहम् ॥ (३।२८१)

अयञ्च साग्निनिरग्निसाधारणः पक्षः, निरग्निविषयत्वे प्रमाणाभावात् । संवत्सरमध्ये यदत्र पार्वणं विहितं तद् द्रव्यासम्भवादेर्निमित्तत्वाद् दर्शान्तरेऽनावश्यकं पञ्चयज्ञान्तर्गतं यच्छ्राद्धं तत् प्रत्यह-मुदकादिनाऽपि कार्यम् । हेमन्त-ग्रीष्म-वर्षास्विति यदुक्तं तत् कन्या-कुम्भ-वृषस्थेऽर्के इति दर्शयति मत्स्यपुराणे—

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।

कन्या-कुम्भ-वृषस्थेऽर्के कृष्णपक्षेषु सर्वदा ॥ (१६।५७)

कृष्णपक्षेष्विति अमावास्यायामेवेति साग्निः, निरग्निस्तिथ्यन्तरेऽपीत्याह मनुः—

न पैतृयज्ञियो होमो लौकिकाग्नौ विधीयते ।

न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ॥ (३।२८२)

यस्मात् पिण्डपितृयज्ञाङ्गभूतोऽग्नौकरणहोमो न लौकिकाग्नौ विधीयते किन्तु दक्षिणाग्नौ स च दर्श एव विधते, दर्श एव तदुद्धरणस्य विहितत्वात ; अतस्तदङ्गबाधभिया न दर्शेन विना आहिताग्नेः श्रौताग्निमतः श्राद्धमेतत् प्रतिमासविहितपार्वणाख्यमस्तीति अगत्या ह्यष्टकादौ यथा-कथञ्चिद् विप्रपाण्यादौ अग्नौकरणहोमः । यच्च न दर्शेन विनेत्यत्र दर्शपदेन पार्वणविधिर्लक्ष्यते, तेन दर्शेन विना पार्वणविधिना विना नाऽऽहिताग्नेः श्राद्धमिति हलायुधव्याख्यानमसङ्गतम्, लक्षणाहेत्वभावात्, पूर्वार्धेन सहानन्वयाद् वाक्यभेदापत्तेश्च । तस्मादुक्तमेव व्याख्यानम्, पार्वणत्रयाशक्तेन त्रिः सकृद्वा कर्तव्यमित्याह देवलः—

अनेन विधिना श्राद्धं कुर्यात् संवत्सरे सकृत् ।

त्रिश्चतुर्वा यथाशक्ति मासे मासे दिने दिने ॥

सकृत्करणपक्षस्तु कन्यायामिति प्रशस्तत्वात् पार्वणश्राद्धाशक्तस्याऽऽहिताग्नेः पिण्डदानमात्रं निरग्निना ब्राह्मणभोजनमात्रं कर्तव्यमित्याह निगमः—“आहिताग्नेः पित्रर्चनं पिण्डैरेव ब्राह्मणान् भोजयेदिति पूर्तश्रुतेः । पूर्तमन्नदानम् ॥” इति ।

[1]किञ्च—

**त्रयः पौर्णमासीकाला भवन्ति सन्ध्या वाऽस्तमितोदिता वोच्चैर्वा ॥ ११ ॥**

त्रयः त्रिसंख्याकाः पौर्णमासी(A)काला भवन्ति। पौर्णमास्येव कालः पौर्णमासीकालः। स त्रिप्रकारको भवतीत्यर्थः। सन्ध्या वा, सन्ध्या तावदुक्तलक्षणा। या अस्तमयसन्ध्यायामवच्छिद्यते उदयसन्ध्यायां चेति। अपरा अस्तमितोदिता। यस्यां सवितुरस्तमयानन्तरम् एव चन्द्रमा उदेति। सेयमस्तमितोदिता। सा चार्द्धरात्रोद्देशेऽवच्छिद्यते। अन्या उच्चैः [2]पौर्णमासी। यस्यामीषदुच्चैः स्थिते [3]चन्द्रे पश्चात् सविताऽस्तमेति। सेयमुच्चैःपौर्णमासी[4]त्युच्यते। सा च किञ्चिच्चतुर्दशीमिश्रा भवति(B)।

A. पौर्णमासीमधिकृत्याऽऽह हेमाद्रिः—"यदा अस्तंगते सूर्ये चन्द्रमा अभ्युदियात् सा पौर्णमासी"ति। तत्र पूर्णिमानामनिर्वचनं ब्रह्माण्डमत्स्यपुराणयोः—

यद्दीक्षेते व्यतीपाते दिवापूर्णौ परस्परम्।
चन्द्रादित्यौ पराह्णे तु पूर्णत्वात् पूर्णिमा स्मृता ॥ इति।

तथा च काठकश्रुतिः—

"या पूर्वा पौर्णमासी साऽनुमतिः, योत्तरा सा राका; या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूरिति।"

वृद्धवशिष्ठः— राका चानुमतिश्चैव पौर्णमासीद्वयं विदुः।
राका सम्पूर्णचन्द्रा स्यात् कलोनाऽनुमतिः स्मृता।
रात्रिदृष्टे पुनस्तस्मिन् सैव राकेति कीर्त्तिता ॥

भगवतीपुराणे— यदा त्वस्तमियात् सूर्यः पूर्णश्चेन्दुरुपागमत्।
युगपत् सोत्तरा राका तदा भवति पूर्णिमा ॥ इति।

मत्स्यब्रह्माण्डपुराणयोः—

यस्मात् तामनुमन्यन्ते पितरो दैवतैः सह।
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ॥
अत्यर्थं राजते यस्मात् पौर्णमास्यां निशाकरः।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः ॥" इत्यादि।

B. सूत्रस्यास्य हेमाद्रिकृता व्याख्या—सन्ध्योदिते चन्द्रो सन्ध्यास्तमिते रवौ चन्द्रोदये उत्तरा प्राग् रव्यस्तमयादुच्चैरुदेति तामुपवसेदिति।

1. नास्ति ख। 2. 'पूर्ण-' क-ग। 3. 'चन्द्रमसि' ख। 4. 'इति' नास्ति ख।

यत्र तु प्रहरद्वयं चतुर्दशी स्यादथ पौर्णमासी श्वश्चोत्तरयापत्तयरहिता तथैव प्रहरद्वयं पौर्णमासी 'भवित्री स्यात् अथ प्रतिपत्, तत्र किं पूर्वामुपवसेदुतोत्तराम् इत्यत आह—

## अथ यदहः पूर्णो भवति ॥ १२ ॥

अथेति सूत्रादि²प्रज्ञापनार्थः। इतरथा पूर्वसूत्रेण सहास्यैक³सूत्रता स्यात्, उच्चैर्वा यदहः पूर्णो भवतीति, तस्मादथेत्युक्तम्। यदहः यस्मिन्नहनि पूर्णः षोडशकलोपचयरागात्खण्डमण्डलश्चन्द्रमा भवति। तामुपवसेदिति वर्त्तते। स च पूर्णश्चतुर्दशीमिश्रायामर्धरात्रोद्देशे भवति नात्तरस्या⁴मिति*। तथा च केनचिज्ज्योतिःशास्त्रविदा कश्चिद्राजोपश्लोकितः।

पञ्चदश्यां पञ्चदशे मुहूर्त्ते चन्द्रमण्डलम्।
यथा भवति तद्वत् त्वं सदा भव नृपोत्तम(A)॥ इति।

तस्मादनयोरपि पूर्वामेवोपवसेन्नोत्तरा⁵मिति(B)।

---

सामश्रमी तु—सूर्योदयात् तत्पूर्वतो वा पूर्णिमा यत्र सा सन्ध्या पौर्णमासी, सूर्यास्तमितेन साकमेव पूर्णोदयो दृश्येत चेत् सा अस्तमितोदिता पौर्णमासी, सूर्यास्तादुच्चैः ऊर्ध्वं रात्रौ पूर्णश्चेत् चन्द्रः सैव उच्चैःपूर्णमासी, इत्युक्तास्त्रयः काला इति व्याचष्टे।

A. प्रमाणीकृतं वचनमिदं तर्कालङ्कारेणापि 'श्लोकमप्युदाहरन्ती'त्युपक्रमेण।

B. पौर्णमास्यामुपवासमधिकृत्य पर्वसन्धिञ्चाधिकृत्य यदुक्तं हेमाद्रिणा तस्मात् किञ्चिदुपस्थाप्यते। स्मृत्यन्तरम्—

पूर्वोदिते कलाहीने चन्द्रे पूर्वां विचक्षणः।

उपवसेदिति शेषः। कात्यायनः—पूर्वां पौर्णमासीमुत्तरां चोपवसेत्। तत्र दिवा पर्वसन्धौ पूर्वेद्युरुपवासस्तदहर्यागः। रात्रिपर्वसन्धौ तदहरुपवासः परेद्युर्यागः।

उक्तञ्च भाष्यार्थसंग्रहकारेण—

अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते।
उपोष्या तत्र राका स्यात् सा पूर्णात्सर्पिलक्षणा॥
पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्यानुमतिस्तत्र सा श्वः पूरितलक्षणा॥

---

1. 'भवित्री' नास्ति ख। 2. '-प्रतिज्ञाप-' ख। 3. 'सूत्र' नास्ति क-ग। 4. नास्ति क-ग। 5. '-मेवेति' ख।

अपराह्णे क्षपायां वा पर्वसन्धिर्भवेद् यदि ।
उपोष्या तु कुहूस्तत्र यदहर्नेति लक्षणा ॥
पूर्वाह्णे वाऽथ मध्याह्ने पर्वसन्धिर्भवेद् यदा ।
तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणा ॥ इति ।

तदुक्तं निबन्धिभिः—

अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
तदहस्तत्र चोपोष्या पूर्ण उत्सर्पिलक्षणा ।
पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते ।
पूर्वेद्युस्तत्र चोपोष्या सा श्वः पूरितलक्षणा ॥
अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
तदहस्तत्र चोपोष्या यदहर्नेति लक्षणा ॥
पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते ।
तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणा ॥ इति ।

गृह्यकारिकापि—

पञ्चदशी प्रतिपच्च समेते एकदिने महती यदि तस्मिन् पञ्चदशीप्रकृतेरुपवासः पञ्चदशीह तनुर्यदि याग इति । तथा सङ्कर्षणकाण्डे गोविन्दोपाध्यायेनोक्तम्—

यस्मिन्नहनि मध्यन्दिने पूर्व एव विक्रम-सन्निपातौ तत्र पूर्वेद्युरुपवासः 'श्वः पूरितेति वा, श्वो न द्रष्टार इत्यस्य विषयः । यत्रापराह्णे रात्रौ वा विक्रमसन्निपातौ तत्र तदहरुपवासः 'यदहः पुरस्ताच्चन्द्रमा पूर्ण उत्सर्पेत् यदहर्न दृश्येतेत्यस्य विषय इति ।

देवस्वामिनाऽप्युक्तम्—

यदि पूर्वाह्णे पर्वसन्धिः समाप्येत ततो नितरामेव च शोभनं यदि पुनरपराह्णे रात्रौ वा तदहरुपोष्य श्वो भूते याग इति ।

तथा च लौगाक्षिः—

पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पर्वेद्युस्तदहर्याग इष्यते ॥
अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वो भूते याग इष्यते ॥

अत्र केचित्—सन्ध्यायां पर्वसन्धौ व्यवस्थापकवचनान्तराभावात् प्रायेण तत्रापि रात्रिशब्दप्रयोगाच्च सापि रात्रिशब्देन गृह्यत इत्याहुः, तदयुक्तम्, सन्ध्यारात्र्योर्भेदात्, लक्षणायाञ्च कारणाभावात् सन्ध्यायां पर्वसन्धौ च पूर्वेद्युर्यागस्य 'आवर्त्तते यदा सन्धिरि'त्यनेनैव सिद्धेः । एतेन 'स वै सम्प्रत्येवोपवसेत्' 'स वा उत्तरामेवोपवसेत्' इति श्रुतिद्वयञ्च व्याख्यातम्'' इति ॥

तिथिचन्द्रमसोरुपचयापचयपरिज्ञानमन्तरेण दर्शपूर्णमासौ साधयितुं न शक्येते।

[1]अथ पुनः कस्तयोरुपचयापचयपरिज्ञानोपाय इत्यत आह[1]*—

**पृथगेवैतस्य ज्ञानस्याध्यायो भवति अधीयीत वा तद्विद्भ्यो वा पर्वाऽऽगमयेत ॥ १३ ॥**

पृथगेव [2]अन्य एवै[2]*तस्य पूर्वविवक्षितस्य ज्ञानस्य अध्यायः ग्रन्थो ब्रह्मसिद्धान्त-प्रभव[3]खण्डखाद्यादिको भवति, तमधीयीत वा जानीयात्। [4]तत् ज्योतिःशास्त्रं ये विदन्ति ते इमे तद्विदः, तेभ्यो वा सकाशात् पर्व दर्शपूर्णमासाख्यम् आगमयेत जानीयात्। ग्रन्थगौरव[5]भयात् तदिह [6]नोक्तम्।

किञ्च—

**अथ यदहरुपवसथो भवति तदहः पूर्वाह्ण एव प्रातराहुतिं हुत्वैतदग्नेः स्थण्डिलं गोमयेन समन्तं पर्युपलिम्पति ॥१४॥**

अथेत्यपूर्वसूत्रोपादानार्थः। यदहः यस्मिन्नहनि उपवसथो भवति। [7]अत्र पद-व्युत्क्रमेण व्याख्या। तदहस्तस्मिन्नहनि प्रातराहुतिं हुत्वा पूर्वाह्ण एव एतदग्नेः स्थण्डिलं(A) गोमयेन समन्तं पर्युपलिम्पति [8]इति। प्रातराहुतिं हुत्वा इति [9]सिद्धौ पुनर्वचनम् औपवसथिके अहनि स्वयं होमनियमार्थम्। तत्र हि स्वयं हुते सर्वदैव किल स्वयं हुतं भवतीति। तथा च श्रुतिः—[10]एते ह वै रात्री सर्वा रात्रयः समवयन्ति या आपूर्यमाणपक्षस्य रात्रयस्ताः सर्वाः पौर्णमासीं समवयन्ति। या अपक्षीयमाणपक्षस्य रात्रयस्ता सर्वा अमावास्यां समवयन्ति। स यो हैवं विद्वान् स्वयमुपवसथे जुहोति सर्वदा हैवास्य स्वयं हुते भवती[11]ति(B)। [12]पूर्वाह्णग्रहणमपराह्णप्रतिषेधार्थम्[12]* पूर्वाह्ण एवोपलिम्पतीति। किम्? तदग्नेः स्थण्डिलम्, अग्न्यागारमित्यर्थः। स्थण्डिलग्रहणं लोहमृन्मयादिभाण्डस्थेऽग्नौ [13]होमप्रतिषेधार्थम्। अग्नेः स्थण्डिलम्

---

A. एतदधिकृतम्, अग्नेः स्थण्डिलम्, एतस्याधिकृतस्याग्नेर्वा स्थण्डिलम् इत्यर्थः।

B. प्रमाणत्वेनोपन्यस्तेयं श्रुतिस्तर्कालङ्कारेणापि स्वभाष्ये—'भवति चात्र ब्राह्मणम्' इत्युपोद्घातेन, परमत्र पाठभेद आहृतस्तेन स च 'उपवसथे' इत्यत्र 'उपवपथम्' इति। 'स्वयं हुते' इत्यत्र च 'स्वयं कृतम्' इति।

---

1. चिह्नितांशस्थाने, 'यथास्त्वनयोरुपचयापचयपरिज्ञानोपायज्ञानार्थमिदमाह' ख। 2. नास्ति ख। 3. 'खण्डकाद्यादिको' ग, 'प्रभाव खण्डाद्यादिको' ख। 4. 'तत्' नास्ति ख। 5. '-भिया' ख। 6. 'नोच्यते' ख। 7. 'यथ' ख। 8. 'इति' नास्ति क-ग। 9. 'सिद्धे' ख। 10. 'एता ह वै' ख। 11. 'इति' नास्ति ख। 12. चिह्नितांशो नास्ति ग। 13. 'कर्म-' ख-ग।

[1]इत्येतावतैव सिद्धत्वा[2]देतदित्यवाच्यमिति चेत् ? न (A)गृहस्थस्य द्वितीयभूमिकाया-मभ्यागारप्रतिषेधार्थ[3]मिदमुच्यते। कथं नाम ? [4]तदेवम्भूत[5]मेवाविकृताया भूमेः स्थण्डिलमित्यर्थः। एवं प्राकृतायामेव भूमौ स्थितस्याग्ने[6]श्चुल्लीपरिवारादिकरणे न दोषः। केनोपलिम्पति ? गोमयेन, गोशकृता, समन्तं [7]समचतुरस्रम्, [8]परीति सर्वतोभावम्, सर्वत उपलिम्पतीत्यर्थः।

किञ्च—

## अथेध्मानुपकल्पयते खादिरान् वा पालाशान् वा ॥ १५ ॥

अथेत्यानन्तर्ये। उपलेपनानन्तरमेव श्वो यागार्थम् इध्मानुपकल्पयते, आसादयतीत्यर्थः। इध्मः समिन्धनात्। बहुवचनमावृत्त्यपेक्षम्। तस्य चेध्मस्य द्विप्रादेशमात्रं प्रमाणं भवति।

[9]तथा चोक्तम्—

प्रादेशद्वयमिध्मस्य [10]प्रमाणं परिकीर्तितम्।
एवंविधाभिरेवेह समिद्भिः सर्वकर्मसु(B) ॥ इति।

समित्संख्या च।

समिधोऽष्टादशेध्मस्य[10]*प्रवदन्ति मनीषिणः।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः(C) ॥ इति।

---

A. प्रमाणमत्र कालमाधवग्रन्थधृता श्रुतिः—'न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्यः' इति। अत्र पृथिवीपदस्य विकृतभूमिपरत्वमेवावगन्तव्यम्, अन्यथाऽग्निचयनस्य कुत्रापि प्रसक्तिर्न स्यात् पृथिव्यामग्निचयनबोधिकायाः श्रुतेर्बाधोऽपि स्यादिति दिक्।

B. कर्मप्रदीपः १।८।१९ अस्य सप्रकाशमुद्रितपुस्तकपाठस्तु—

'एवंविधाः स्युरेवेह समिधः सर्वकर्मसु'। इति।

प्रकाशकारोक्ता व्याख्या चेत्थम्—'अथेध्मानित्यादिसूत्रोक्तानिध्मान् स्पष्टीकरोति। पूर्वार्धं निगदव्याख्यातम्। यद्यपि सूत्रे अथेध्मानिति दर्शपौर्णमासौ प्रकृत्योक्तम्, तथाऽपीह गृह्योक्तेषु सर्वकर्मसु प्रादेशद्वयमाना इध्माख्याः समिधो भवेयुः। समिध इति संज्ञालिङ्गादेवेध्मानामप्यग्निसमिन्धनार्थत्वमित्युक्तं भवति' इति।

C. कर्मप्रदीपः १।८।२० अत्र 'विंशतिम्' इति सप्रकाशमुद्रितपुस्तकपाठः। ते खल्विमे इध्माः यत्र न कर्तव्यास्तदप्याह कर्मप्रदीपः—

---

1. 'इत्युक्ते सिद्ध-' ख। 2. '-देतदवाच्य-' ख। 3. 'इदम्' नास्ति क-ग। 4. 'एतदेव-' ग। 5. '-मेवाविकृताया' ख। 6. 'शुल्ली' क, 'शुल्लपरि-' ख। 7. 'सम' नास्ति ख। 8. 'परितः सर्वतोभावे' ख। 9. 'तथा चोक्तम्' नास्ति ख। 10. 'परिमाणं' क, चिह्नितांशो नास्ति ख।

'उक्तत्वाद् दर्शपूर्णमासयोरष्टादशेति सिद्धम्'[1]*। खदिर-पलाशौ प्रसिद्धौ। वा-शब्दद्वित्वं तुल्यविकल्पार्थम्।

---

इध्मोऽग्न्येधार्थमेवाग्नेर्हविराहुतिषु स्मृतः।
यत्र चास्य निवृत्तिः स्यात् तत् स्पष्टीकरवाण्यहम्॥
अङ्गहोम-समित्तन्त्र-सोष्यन्त्याख्येषु कर्मसु।
येषाञ्चैतदुपर्युक्तं तेषु तत्सदृशेषु च॥
अक्षभङ्गादिविपदि जलहोमादिकर्मणि।
सोमाहुतिषु सर्वासु नैतेष्विध्मो विधीयते॥ इति (का०, स, १।८।२२—२४)

एतेषां प्रकाशकारोक्ता व्याख्या चेत्थम्—चरु-पुरोडाशादिरूपहविराहुतिषु इध्मोऽग्निसमिन्धनार्थमेव। प्रादेशद्वयमात्रसमिन्मुनिभिः स्मृता। यतोऽयमपि समिन्धनार्थोऽतो न देवतोद्देशेन त्यजनीय इति अत्रापि मन्त्रदेवतयोरभावः। अतो मन्त्रस्य देवतायाश्चेति वचनानवकाशः। (२२) अङ्गहोमाः सीमन्तोन्नयन-चूडाकरणादौ विहिताः, तेष्वन्यस्य सीमन्तोन्नयनादेः प्रधानत्वात्, तथा द्विविधा होमास्तन्त्रहोमाः क्षिप्रहोमाश्च याज्ञिकप्रसिद्धाः। तत्र क्षिप्रहोमाः, क्षिप्रं हूयन्ते इति व्युत्पत्त्या सायंप्रातर्होमादयः। तन्त्रहोमाश्च परिसमूहनबर्हिःस्तरणाद्यङ्गविस्तारयुक्ताः, तत्र ये समिद्विष्कास्तन्त्रहोमाः, यश्च सुखप्रसवार्थं सोष्यन्तीहोमः, येषां च वैश्वदेव-सायंप्रातर्होमादीनामेतदिध्माख्यं द्रव्यं पश्चा'दथेध्मानुपकल्पयते' इत्यनेन सूत्रेणोक्तम्, तेषु तत्सदृशेषु च क्षिप्रहोमेष्विध्मस्य निवृत्तिर्भवेदिति। (२३)

ऊढाया यानेन वरेण नयनं गृह्योक्तम्। तत्राक्षभङ्गेऽनडुद्विमोक्षे यानविपर्यासे अन्यासु चापत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वा अन्यद् द्रव्यमाहृत्य 'य ऋते चिदभिश्रिषे' इत्याज्यशेषेणाभ्यञ्ज्या दि'ति (२।४।३) सूत्रेणाक्षभङ्गादियानविपदि तत्समाधानार्थं यो होमो विहितः, यश्च 'पौर्णमास्यां रात्रावविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षततण्डुलान् ऋगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके' इत्यनेन (४।९।२७)सूत्रेण मुखेन यवमिश्रतण्डुलानां वृक्ष इवेत्यादि-पञ्चर्चस्य प्रथमया ऋचा भूमिकामस्य जलहोम उक्तः। याश्च सोमरसाहुतयस्तास्विध्मविधिर्न भवति। अक्षो रथावयवविशेषः। अत्रेध्मविधिनिवृत्तिरित्यभिदधता पर्युदासोऽयमित्युक्तम्, न तु निषेधविधिः, येनाक्षभङ्गादिविषये विहितनिषिद्धत्वादिध्मविकल्पः स्यादित्यापाद्यम्। जलहोमादीत्यादिपदेन पद-वर्त्म-क्षित्याधारहोमानां ग्रहणम्। तथा च श्रुतिः—'पदे जुहोति वर्त्मनि जुहोती'ति। स्मृतिश्च—

लौकिके वैदिके वाऽपि हुतोच्छिष्टे जले क्षितौ।
वैश्वदेवश्च कर्तव्यः पञ्चसूनाऽपनुत्तये॥ इति। (२४)

1. चिह्नितांशो नास्ति क-ग।

किञ्च—

**खादिर-पालाशालाभे [1]विभीदक-तिल्वक-बाधक-नीव-निम्ब-राजवृक्ष-शाल्मल्यरलु-दधि[2]त्थ-कोविदार-श्लेष्मातकवर्जं सर्ववनस्पतीनामिध्मो यथार्थं स्यात् ॥ १६ ॥**

तदलाभे इति वक्तव्ये गौरवं स्यादिति चेत् ? उच्यते—तदलाभे इत्युच्यमाने तत्-प्रतिनिध्योरपि [3]कदर-पारिभद्रयो(A)र[4]भावेऽन्यस्योपादानं मा भूदित्यतः खादिर-पालाशालाभे इत्युक्तम्। खादिर-पालाशयोरि[5]ध्मयोरभावे विभीदकादिवर्जमन्येषां सर्व-वनस्पतीनाम् अश्वत्थादीनामिध्मो यथार्थं यावताऽर्थो भवति तावान् स्याद् भवेदिति। विभी[6]दकादयो वृक्षजाति[7]विशेषा विद्वद्भ्य उपलब्धव्याः(B)।

किञ्च—

**विशाखानि प्रति लूनाः कुशा बर्हिः ॥ १७ ॥**

विप्र[8]कृष्टाः पृथक् शाखाः पत्राणि यस्मात् स्थानाद् भवन्ति तानि विशाखानि[9]

A. कदरः—'काटाबाब्ला' इति ख्यातः। श्वेतखदिरः। 'अरिमेदो विट्खदिरे कदरः खदिरे सिते' इत्यमरः। 'पारिभद्रः'—'पालितामाँदार' 'बकायिनी' इति ख्यातः। 'पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः' इत्यमरः। एतौ खलु यथासंख्यं खदिरपलाशयोः प्रतिनिधी भवत इति भाष्यकाराणामाशयः।

B. सूत्रस्थविभीदकपदस्थाने विभीतक इति पठति सामश्रमी।

विभीदकः—(विभीतकः) 'बहेडा' इति ख्यातः 'त्रिलिङ्गस्तु विभीतकः। नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः' इत्यमरः।

तिल्वकः—लोध्रः। 'गालवः शबरो लोध्रस्तिरीटस्तिल्वमार्जनौ' इत्यमरः।

बाधकः—'गोभिलगृह्यसूत्रोक्तो वृक्षविशेषः' इति ( M. W.-कोशे )।

नीवः—( नीपः ) कदम्बः, 'नीपप्रियकदम्बास्तु हलिप्रिये' इत्यमरः।

निम्बः—'नीम्' इति ख्यातः। 'अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः। पिचुमर्दश्च निम्बे' इत्यमरः।

राजवृक्षः—'लङ्कासिज्' 'सोनालु' 'धनवहेड्' इति ख्यातः। 'आरग्वधे राजवृक्ष-संपाक-चतुरङ्गुलाः' इत्यमरः।

1. 'व्यंदक-' ख। 2. '-त्क-' ख। 3. 'कदम्बभद्रकाद्यो-' ख। 4. '-भावादन्यस्मी-' ख। 5. '-भालाभे' ख। 6. '-तका-' ख। 7. '-विशेषा' नास्ति ख। 8. '-ष्टानि पृथक् शाखापत्राणि' ख। 9. अनन्तरं 'उच्यन्ते' इत्यधिकः क।

कुशस्कन्ध[1]स्थानान्युच्यन्ते। [2]तानि प्रति ये लूनाश्छिन्नाः कुशाः दर्भाः बर्हिः बर्हिषः, स्तरणार्थम् उपकल्पयेदिति वर्त्तते[4]*(A)।

## उपमूललूनाः पितृभ्यः ॥ १८ ॥

प्रसङ्गादिदमिहोच्यते। मूलसमीपप्रदेशेषु ये लूनास्ते उपमूललूनाः। तान् [3]पित्र्ये कर्मणि उपकल्पयेदिति। (B)यथा पश्चाद्वक्ष्यति [4]'स्वस्तरमास्तारयेद् दक्षिणाग्रैः कुशै-

शाल्मली—(शिमुल्, शेँवेर्) इति ख्यातः। 'पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलि-र्द्वयोः' इत्यमरः।

अरलुः—'शोनागाछ्' इति ख्यातः शोणकः। 'स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः। शोणकश्चारलौ' इत्यमरः।

कपित्थः—कद्वेल्, कैथ् इति ख्यातः। 'अथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः' इत्यमरः।

कोविदारः—रक्तकाञ्चन्, कचनार् इति ख्यातः। 'कोविदारे चमरिकः कुद्दालो युगपत्रकः' इत्यमरः।

श्लेष्मातकः—चालृता, 'पसोडा' इति ख्यातः। 'शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः' इत्यमरः।

A. अत्र भाष्ये 'तान्' इति पूरणीयमर्थसौकर्यार्थमिति। तर्कालङ्कारस्तु—"बर्हिःसंज्ञकाः इति वा व्याख्येयम्। तदत्र विधेयप्राधान्यविवक्षयैकवचनं द्रष्टव्यम्। 'बर्हिषः' इति बहु-वचनान्तमेव शूलपाणिः पठति, तदा व्यक्त एवार्थः" इति च व्याचष्टे॥

B. ते खल्विमे पित्रर्थमुपकल्प्याः कुशा मूलसमीपेऽप्यधोभाग एव लवितव्या नोर्ध्वभागे। तथा च कर्मप्रदीपः—

हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः॥
हरिता वै सपिञ्जूलाः शुष्काः स्निग्धाः समाहिताः।
रत्निमात्राः प्रमाणेन पितृतीर्थेन संस्कृताः॥
पिण्डार्थं ये स्तृता दर्भास्तर्पणार्थे तथैव च।
धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते॥ इति का, स, १।२।२—४।

एतेषां प्रकाशकारोक्ता व्याख्या चेत्थम्—"यादृशाः कुशाः कर्माङ्गभूतास्तानाह, दर्शादियज्ञार्था हरिताः, पाकयज्ञार्थाः पीतवर्णाः, पितृ-दैवतकर्मार्थाः समूलाः, विश्वदेवश्राद्धार्थास्तिलकोपेताः। कुशा उत्पाद्या इति शेषः। कल्माषाश्चैव दैविका इति कल्पतरुपाठः। तदा च व्यक्त एवार्थः।

1. '-स्थानच्यन्ते' क। 2. चिह्नितांशो नास्ति ग। 3. 'पितृकर्मणि' ख। 4. 'प्रस्तर-' क।

अत्र च प्रसङ्गाद् यज्ञार्था अप्युक्ताः। (२) पित्रर्थानां वर्णपरिमाणादीन्याह—सपिञ्जूलाः प्रादेशमात्रार्द्रशुष्कान्यतरशीर्णपुष्प-मञ्जरीसहिताः, स्थूलपत्राः, कोमलाः, समाहिता नेतस्ततो विक्षिप्तपर्णाः, कृतमुष्टि-हस्तप्रमाणाः पितृतीर्थसंयोगसंस्कृताः, पितृकर्मण्युपादेया इति शेषः। रत्निप्रमाणता च पिण्डास्तरणार्थानामेव। आसनार्घ्योत्सर्गाद्यर्थानान्तु गोकर्णप्रमाणता। तथा च वायुपुराणम्—

रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृताः।
उपमूले तथा लूनाः प्रस्तरार्थे कुशा मताः॥

ब्रह्मपुराणे— हरिताश्च सपिञ्जूलाः स्निग्धाः पुष्टाः समाहिताः।
गोकर्णदीर्घास्तु कुशाः सकृच्छिन्नाः समूलकाः॥
पितृतीर्थेन देयाश्च दूर्वाः श्यामाकमेव च।
काशाः कुशा बल्वजाश्च तथाऽन्ये तीक्ष्णरोमशाः॥
मौञ्जाश्च शाद्वलाश्चैव षड् दर्भाः परिकीर्त्तिताः॥

तीक्ष्णरोमशा इति बल्वजानां विशेषणम्, तेन 'तेषामलाभे शूकतृणशरशीर्यबल्वजमुतवनलसुण्ठवर्जं सर्वतृणानी'ति गोभिलोक्तेन तद्व्यतिरिक्तबल्वजानां निषेधो बोद्धव्यः। गोकर्णपरिमाणञ्च 'प्रादेशतालगोकर्णा' इत्यभिधानकोशे प्रतिपादितम्। मुख्यकुशाभावे दूर्वादीनां ग्रहणम्। तदभावे सर्वतृणानीति गोभिलेनोक्तत्वात्; अत एव कुशाभावे कुशस्थाने काशं दूर्वां वा दद्यादिति विष्णुः। (३) त्याज्यान् कुशानाह—पिण्डास्तरणे ये कुशाः, ये च तर्पणार्थम्, यैश्च धृतैर्विण्मूत्रे कृते, तेषां त्यागः कर्त्तव्यः। ते कर्मसु न योज्या इत्यर्थः।

अन्येऽपि ये त्याज्यास्तानाह लघुहारीतः—

चितौ पथि च ये दर्भा ये दर्भा यज्ञभूमिषु।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत्॥
नीवीमध्ये तु ये दर्भा यज्ञसूत्रे च ये कृताः।
पवित्रांस्तान् विजानीयाद् यथा कायस्तथा कुशाः॥ इति

एतच्च धृतैः कृते चेत्यस्यापवादकम्,

पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम्।
मूत्रोच्छिष्टे धृता ये च तेषां त्यागो विधीयते॥

इत्येतदनन्तरं लघुहारीतेन नीवीमध्ये इत्युक्तत्वात्। त्याज्यव्यतिरिक्तास्तु विनियुक्ता अपि विनियोज्याः। तथा च गृह्यपरिशिष्टम्—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः॥ इति।

यातयामं जीर्णं तद् यन्न भवति तदयातयामं सवीर्यं कार्यक्षममिति यावत्।

अत्र मरीच्युक्तो विशेषः—

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥" इति।

रिति(A)। तथा "कर्षूणां स्तरणं[1] "घनैरि"ति(B)।

तेषामलाभे शूकतृणशरशीर्यबल्वजमुतवन[3]ललुण्ठवर्जं सर्व-तृणानि ॥ १६ ॥

तेषां यथोपदिष्टानां कुशानामलाभे बर्हिषोऽर्थं सर्वतृणा[4]न्यापादेयानि किम-विशेषेण? न। कथं तर्हि? शूकतृणादिवर्जं शूकानि पुष्पफलमञ्जर्यः। तानि येषां तृणानां [5]सन्ति तानि शूकतृणानि शरशीर्यादीनि प्रसिद्धानि(C)।

केचित्तु दर्भा इत्यादिगृह्यपरिशिष्टवचनात् सामान्यत एव दर्भाणामयातयामत्वम्। 'मासे' इत्यादिमरीचिवचनन्तु—

कदाचिन्नाहरेद् विद्वान् प्रसुप्ते केशवे कुशान्।

अभावे तु समुद्धृत्य परेऽहनि विवर्जयेत्।

इति वचनस्यापवादकमित्याहुरित्यवगन्तव्यमिति ॥

A. पश्चादग्नेः स्वस्तरमास्तारयेत् उदगग्रैस्तृणैरुदक्प्रवणम् इति गो, सू, ३।९।१२। तथा पश्चात् कर्षूणां स्वस्तरमास्तारयेत् दक्षिणाग्रैः कुशैर्दक्षिणाप्रवणम् इति च गो, सू, ४।२।२३ द्रष्टव्ये।

B. उक्तमेतत् कर्मप्रदीपे—

अन्याधाग्रैः कुशैः कार्यं कर्षूणां स्तरणं घनैः।

दक्षिणान्तं तदग्रैस्तु पितृयज्ञे परिस्तरेत्॥ इति। १७।४

C. शरः—'शर्', 'शरहरी'ति ख्यातः, 'गुन्द्रस्तेजनकः शरः' इत्यमरः।

शीर्यः—'गोभिलगृह्योक्तो यवसविशेषः' इति M. W.-कोशे।

बल्वजाः—'वाद्' 'वगयी'ति ख्याताः। 'पुंभूमनि तु बल्वजाः' इत्यमरः।

मुतवनः—'गोभिलगृह्योक्तो घासविशेषः' इति M. W.-कोशे।

ललुण्ठः— ? प्रचलितकोशेष्वप्राप्तः।

अत्र केचित्—मुतव-नल-लुण्ठ इति पदच्छेदं विधाय नलस्यापि वर्ज्यत्वं सम्पादयन्ति। तेषां मते यद्यपि 'नलस्तु धमनः पोटगल' इत्यमरानुशासनात् नलपदेन 'नल्' इति ख्याततृणस्य ग्रहणं भवितुमर्हति, तथाऽपि 'मुतव-लुण्ठौ' अज्ञातावेवेति सुधीभिर्ध्येयम्।

यदत्र पुनर्बल्वजविधायकं प्रकाशकारधृतं 'कुशाः काशा' इत्यादि ब्रह्मपुराणवचनं तत् कौथुमादिव्यतिरिक्तविषयं ज्ञातव्यम्। यत्तु 'तीक्ष्णरोमशाः' इति बल्वजानां विशेषणं तेनात्र सूत्रे तद्व्यतिरिक्तबल्वजानां निषेधो बोद्धव्य' इति प्रकाशकारनारायणोपाध्यायैरुक्तं तदसङ्गतम्,

1. 'स्तरणादि' ख। 2. 'घनैरि'ति नास्ति ख। 3. '-लगुण्ठ-' इति ख, स० सा०, 'लमुण्ठ-' प्रकाशे। 4. '-न्युपादेया-' ख। 5. 'न सन्ति' क-ग।

किञ्च—

**आज्यं स्थालीपाकीयान् व्रीहीन् वा यवान् वा चरुस्थालीं मेक्षणं स्रुवमनुगुप्ता अप इति ॥ २० ॥**

आज्यं घृतम्। (A)उपकल्पयते इति प्रत्येकमनुषज्यते। आज्यग्रहणं तैलादि-प्रति[1]निधीनामप्युपलक्षणार्थम्।[1]*(B) यवागू[2]पयसोस्तु यजतिकाल एवोपकल्पनम्। पूर्वोपकल्पतयोर्विनाशदोषदर्शनात्। स्थालीपाकीयान् स्थालीपाकार्थान्। व्रीहीन् वा यवान् वा, यावद्भिः स्थालीपाक[3]निष्पत्तिर्भवति [4]तावदुपकल्पयते इति वर्त्तते।

---

साधारणवचनव्यपाश्रयेण स्वशास्त्रसङ्कोचस्यान्याय्यत्वात्। 'तथान्ये' इति वचने बल्वजानां भेदेनैव तीक्ष्णरोमशानामवगमाच्च। एवञ्च षट्संख्याविरोधोऽपि स्यात् तीक्ष्णरोमशत्वस्य बल्वजविशेषणत्वे पञ्चानामेवोपलम्भात्। न च—

'पितृतीर्थेन देयाः स्युर्दूर्वाः श्यामाकमेव च'

इति तत्पूर्ववचनोपात्ताभ्यां संख्यापूरणमिति वाच्यम्? सप्तसंख्यापत्तेः। तस्मात् ततो भेदेनैवेह षण्णामुपादानम्। षण्णामेव वा मध्ये दूर्वाश्यामाकयोरितरेतरापेक्षयोपादेयत्वार्थं तयोः पूर्वं पृथक् कीर्त्तनमिति वर्णनीयम्। ते खल्वत्र शाद्वलशब्देनैव लभ्येते इति निपुणमतिभिरूह-णीयमिति।

A. आज्यस्थालीप्रमाणमुक्तं कर्मप्रदीपे—

आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसम्भवा।
माहेयी वापि कर्त्तव्या नित्यं सर्वाग्निकर्मसु॥
आज्यस्थाल्याः प्रमाणन्तु यथाकामन्तु कारयेत्।
सुदृढामव्रणां भद्रां स्थालीमादाय मङ्गलाम्॥ इति १।८।१०—११।

प्रकाशकारोक्ता व्याख्या चात्र; 'सर्वेष्वग्न्याधानादिकर्मरूपेषु होतव्याज्यस्थापनार्थं सुवर्णादि-मयी मृन्मयी वाऽऽज्यस्थाली कर्त्तव्या, नित्यं सर्वदा, न त्वसम्भवे शरावादिः। चरुहोमादिष्वपि व्याहृतिहोमोपस्तरणाभिघारणाद्यर्थमाज्योपयोगात् सर्वाग्निकर्मस्वित्युक्तम्। मृन्मय्यपि हस्त-घटिता ग्राह्या, कुलालचक्रनिष्पन्नाया आसुरत्वेनामाङ्गल्यत्वात्। तथा च वक्ष्यति—

'कुलालचक्रनिष्पन्नमासुरं मृन्मयं भवेत्' इत्येवंविधा।

B. व्यक्तीभविष्यति चैतत् सप्तमकण्डिकायामष्टादशसूत्रव्याख्यानावसरे।

---

1. '-र्थेवार्थम्' ख। 2. '-पयोर्भ्यां यजति-' ख। 3. '-निष्पत्ति-' ख। 4. * 'तावत उपकल्पयेत्' इति ख।

चरुस्थालीम् उपकल्पयते। चरुस्थाल्यधस्तादेवोक्तं (A) मेक्षणमुपकल्पयते। मेक्षण-स्वरूपं तु—

"इध्मजातीय[1]मिध्मार्धप्रमाणं मेक्षणं भवेत्।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्॥" इति।
एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे।
दर्वी द्व्यङ्गुष्ठपृथ्वग्रा तुरीयोनं च मेक्षणम्(B)॥ इति।

स्रुवमुपकल्पयते। स्रुवग्रहणं [2]च स्रुचो[3]ऽपि प्रदर्शनार्थम्[4]*। [4]स्रुवस्रुचोर्लक्षण-मुक्तम्(C)। अनुगुप्ता अप इत्युक्तार्थम्(D)। उपकल्पयते इत्यनुवर्त्तते।

किञ्च—

## यानि चानुकल्पमुदाहरिष्यामः ॥ २१ ॥

यानि चानुकल्पम्, कल्पं सूत्रम्, सूत्रमनु उदाहरिष्यामः कथयिष्यामः। यानि चोलूखलमुषलसूर्पादीनि उदाहरिष्यामो वक्ष्यमाणेन ग्रन्थेनेति। तानि चाऽऽसादये-[5]दिति। [6]एतानि औपवसथिकेऽहनि अतोऽर्थमासा[7]द्यन्ते, [8]श्वो येन पूर्वाह्ण एव [9]यज्ञ-निर्वृ‍तिर्भवतीति।

किञ्च—

## न तदहः प्रसृज्येत ॥ २२ ॥

[10]तदहस्तस्मिन्नहनि [11]न प्रसृज्येत प्रकर्षेण दूरं न गच्छेत्।

A. तिर्यगूर्ध्वमित्यादिना, प्रथमप्रपाठकस्य तृतीयकण्डिकायां नवमसूत्रभाष्ये ( पृ ९६ )। एवञ्च गर्भप्रस्थदैर्घ्यैः प्रादेशप्रमाणा मृन्मयी ताम्रमयी वा दृढा चरुस्थाली प्रशस्ता भवतीति।

B. कर्मप्रदीपः १९।१४-१९। अनयोः प्रकाशकारोक्ता व्याख्या चेदृशी—

इध्मजातीयं खादिरं पालाशं वाऽभावे सूत्रोक्तविभीतकादिवर्जसर्ववनस्पतिमयं स्वप्रादेश-प्रमाणं वर्तुलदण्डं वृक्षकाण्डनिर्मितं न तु शाखाभवं स्थूलाग्रमवदानयोग्यं ( भेदनयोग्यं ) मेक्षणं भवेत्। (१४) यादृशं मेक्षणं तादृश्येव दर्वी, किन्तु दर्व्यां यो विशेषस्तमहं वदामि, दर्वी मण्डलेनाङ्गुष्ठद्वयपृथ्वग्रा, मेक्षणं चतुर्थभागोनस्थूलाग्रमित्यर्थः।

C. १।३।१९ सूत्रभाष्ये।

D. १।१।१९ सूत्रभाष्ये।

1. '-मिध्मार्धं प्रमाणं' क। 2. 'च' नास्ति ख। 3. '-ऽप्युपलक्षणार्थम्' ख। 4. 'स्रुक्स्रुवयो-रप्युपलक्षणमुक्तम्' ख। 5. 'इति' नास्ति ख। 6. 'ए' नास्ति ख। 7. '-मासादनीयानि' ख। 8. 'श्वो' नास्ति ख। 9. 'यज्ञ' नास्ति ख। 10. 'न तदह-' ख। 11. 'न' नास्ति ख।

## दूरादपि गृहानभ्येयात् ॥ २३ ॥

स्वयं होमादिसम्पादनार्थं दूरादपि गृहानागच्छेत् ।

## अन्यतस्तु धनं क्रीणीयान्न विक्रीणीत ॥ २४ ॥

अन्यतः सकाशाद् द्रव्यक्रयः कर्त्तव्यः, न स्वद्रव्यविक्रय इति । तु-शब्दः [1]पद-पूरणार्थो निपातः ।

## अबहुवादी स्यात्(A) ॥ २५ ॥

लौकिक्या वाचा न बहु वदेत्(B) । व्याख्यानादौ तु न दोषः ।

## सत्यं विवदिषेत् ॥ २६ ॥

सत्यं [2]वदेदिति वक्तव्ये विवदिषेदिति मनसाऽप्यनृतं [3]वक्तुं नेच्छेदित्यर्थः ।

## अथापराह्ण एवाऽऽप्लुत्यौपवसथिकं दम्पती भुञ्जीयातां यदेनयोः काम्यं स्यात् सर्पिर्मिश्रं स्यात् कुशलेन ॥ २७ ॥

अथेत्यानन्तर्यार्थः, इध्माद्यासादनानन्तरम्, पूर्वाह्ण एवाऽऽप्लवनं स्नानं दर्शयति । तथा च मनुः—

मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।
पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम् ॥ (C)इति ।

---

A. सूत्रमिदम् 'अन्यतस्तु' इति सूत्रात् प्रागेव संस्थाप्य विवृणोति तर्कालङ्कारः ।

B. तदत्र ताच्छील्यार्थकणिनिप्रत्ययाद् वृथैव बहुवादी न भवेदिति बोध्यम् ।

C. मनुसंहिता ४।१५२ । अस्य व्याख्या चेदृशी कृता मेधातिथि-कुल्लूकभट्टाभ्याम्—अर्थवादेषु पश्वङ्गसंस्तवे मैत्रः पायुरिति श्रूयते । तत्र भवं शौचं मैत्रम् । अथवा विशेषणविशेष्ये शब्दे मैत्रं प्रसाधनम्, अकृततदकृताऽपि प्रातः पायुप्रक्षालनं कर्तव्यम् । यथा हि हस्तस्य स्नाका-स्नावादेरवश्यम्भावित्वान्मुखधावनं विहितम्, एवमेतदपि विनैव निमित्तेन मुखस्य अवन्ययोरङ्गयोः प्रक्षालनमवश्यं कर्तव्यम् । अन्ये त्वाहुः—मित्रकार्यं मैत्रं तत् सर्वकार्येभ्योऽन्तरङ्गेभ्योऽपि पूर्वं कर्तव्यम् । तत्राप्ययुक्तं क्षणमप्यवस्थानाभावात् स्वकार्यापेक्षया पूर्वत्वं द्रष्टव्यम्, तथा च पूर्वाह्ण-शब्दः कार्यान्तरेभ्यः पूर्वतामात्रोपलक्षणार्थो न पुनरपराह्णप्रतिषेधार्थः । अथवा मित्र आदित्य-स्तदुपस्थानं मैत्रम् । तथा देहप्रसाधन-प्रातःस्नान-दन्तधावनाञ्जन-देवार्चनान्यपि पूर्वाह्ण एव कुर्यात् । पूर्वाह्णशब्देन रात्रिशेषदिनपूर्वभागाविह विवक्षितौ । पदार्थमात्रविधिपरत्वाच्चास्य पाठक्रमोऽपि नादरणीयः, न हि स्नानानन्तरं दन्तधावनमिति ।

---

1. 'पद' नास्ति ख । 2. 'विवदे' ख । 3. 'वक्तुं' नास्ति क-ग ।

आप्लुत्य स्नात्वा, अपराह्ण एव इत्यस्य दम्पती भुञ्जीयातामित्यनेन सह सम्बन्धः। अह्नः अपरो भागः अपराह्णः, द्विर्भोजने प्राप्ते(A) सकृद्भोजननियमोऽनेन क्रियते। अपराह्ण एव भुञ्जीयातां न तु सायमपीति। दम्पती स्त्रीपुमांसौ। किं भुञ्जीयातामिति औपवसथिकम्। उपवसथे भवमौपवसथिकम्। इह तस्यानुपदेशात् शास्त्रान्तरादुपादेयम्(B)।

---

A. मनुष्याणां द्विर्भोजनमुक्तं 'निहिते' इत्यादिसूत्रे ( ६९ पृष्ठे )।

B. औपवसथिकदिनकृत्ये भोजनादिविषये यदुक्तं विश्वनाथेन पारस्करगृह्यसूत्रभाष्ये तस्मात् किञ्चिदुल्लिख्यते—

"पुलस्त्यः— सकृत् पर्वणि सर्पिष्मद्धविष्यं लघु भोजनम्।
न सायं नोपवासः स्यात् तैलामिषविवर्जितम्॥

कात्यायनोऽपि—

अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषाऽऽहितौ।

शतपथब्राह्मणे—

स वै पौर्णमासेनोपवत्स्यन्नसन्नाशहित इव स्यात्।

व्रताहवर्ज्यमाह कात्यायनः—

शाकं मांसं मसूरञ्च चणकं कोरदूषकान्।
माषान्मधु परान्नञ्च वर्जयेदौपवसथ्यके॥

तथा—

तिलमुद्गादृते सेव्यं शस्ये गोधूमकोद्रवौ।
चीनकं देवधान्यञ्च सर्वशाकं तथैक्षवम्॥
सर्ज्जीक्षारं यवक्षारं टङ्कणक्षारमेव च।
व्रतस्थो वर्जयेन्नित्यं सामुद्रं लवणं तथा॥ इति।

उपवासमधिकृत्य यदुक्तं रघुनन्दनेन तस्मात् किञ्चिदुपस्थाप्यते—

भविष्ये— उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः॥ इति।

उपावृत्तस्य निवृत्तस्य, पापेभ्यः पापकर्मभ्यः। मैथिलास्तु दोषेभ्य इति पठित्वा दोषेभ्यो रागद्वेषमात्सर्यादिनिमित्तात्मकाऽधर्मेभ्य इत्यर्थमाहुः।

गुणानाह गौतमः—

दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा चेति।

दयादिलक्षणान्याह बृहस्पतिः—

परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आत्मवद् वर्तितव्यं हि दयैषा प्रकीर्तिता ॥

परे उदासीने । आपत्सु रक्षितव्यन्त्विति कल्पतरौ पाठः । आत्मवदिति ।

व्यक्तमाह दक्षः— यथैवाऽऽत्मा परस्तद्वद् द्रष्टव्यः सुखमिच्छता ।
सुखदुःखानि तुल्यानि यथाऽऽत्मनि तथा परे ॥

बृहस्पतिः— बाह्ये वाऽऽध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता ॥
न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते साऽनसूया प्रकीर्त्तिता ॥
अभक्ष्यपरिहारस्तु संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकीर्तितम् ॥
शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते ॥
प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥
स्तोकादपि च दातव्यमदीनेनैव चाऽऽत्मना ।
अहन्यहनि यत् किञ्चिदकार्पण्यं हि तत् स्मृतम् ॥
यथोत्पन्नेन सन्तोषः कर्त्तव्योऽप्यल्पवस्तुना ।
परस्याचिन्तयित्वाऽर्थं साऽस्पृहा परिकीर्तिता ॥

देवीपुराणम्— तद्ध्यानं तज्जपः स्नानं तत्कथाश्रवणादिकम् ।
उपवासकृता ह्येते गुणाः प्रोक्ता मनीषिभिः ॥ इति ।

'सर्वभोगविवर्जितः' शास्त्राननुमतनृत्यगीतादिसुखरहितः । अत्र मैथिलाः—वृद्धशातातपो भोगविशेषान् प्रतिप्रसूते—

गन्धालङ्कारवस्तूनि पुष्पमाल्यानुलेपनम् ।
उपवासेन दुष्येत दन्तधावनमञ्जनम् ॥

गौडीयस्मृतिः— उपवासे तथा श्राद्धे न खादेद् दन्तधावनम् ।
दन्तानां काष्ठसंयोगो हन्त्यासप्तमं कुलम् ॥

तत्र योगीश्वरः—

दन्तानां काष्ठसंयोगो निषिद्धः, पर्णादिना दन्तधावनमिति विरोधं परिजिहीर्षन्तो वचनमर्थं व्याचक्रुः । तत्र, वृद्धशातातपेन—

तथा च गृह्यान्तरम्—

लवणं मधु मांसञ्च [1]क्षारं श्वो येन हूयते ।
उपवासेन भुञ्जीत नोरुरात्रौ च किञ्चन ॥ (A)इति ।

यच्च तयोर्दम्पत्योः काम्यं कमनीयं रुचितमित्यर्थः । स्याद् भवेत् । तद् भुञ्जीयातामिति । [2]यच्च सर्पिर्मिश्रं घृतमिश्रं स्यात् । यच्च कुशलेन सुखेन परिणमतीति वाक्यशेषः । कथं नाम स्वल्पमश्नीयात्[2]* यच्छरीरवैषम्यं नात्पादयति । श्वो येन यागविघ्नो न भवतीति । उक्तञ्च ' नोरुरात्रौ [3]च किञ्चने'ति ॥

इति श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य पञ्चमी कण्डिका[4]* ॥

---

मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात् सर्वप्रयत्नेन भक्षयेद् दन्तधावनम् ॥

इत्यभिधाय तद्वचनाभिधानेन दन्तधावने दोष एवोक्तः । अन्यथा पौनरुक्त्यापत्तेः ।

अञ्जनं रोचनञ्चापि गन्धान् सुमनसस्तथा ।
पुण्यके चोपवासे च नित्यमेव विवर्जयेत् ॥ इति हरिवंशात् ।

मिताक्षरायाम्— गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् ।
व्रतस्थो वर्जयेत् सर्वं यच्चान्यद् बलरागकृत् ॥

इत्यनेनानुलेपनादिबलरागकृन्निषेधाच्च ।

देवलः— उपवासः प्रणश्येत दिवा-स्वापाक्षमैथुनैः ।
अत्यये चाम्बुपाने च नोपवासः प्रणश्यति ॥

अत्यये नाशे सम्भाव्यमाने ।" इति ।

A. वचनमिदं कात्यायनसंहितायामुपलभ्यते ( २७।६ ) 'अत्र क्षारांश' इति 'न किञ्चन' इति च 'वङ्गवासी'मुद्रितः पाठः । 'अत्र, उरुरात्रौ किञ्चन न भुञ्जीत इत्युपादानाद् दिवा दैवाद्भोजने रात्रेः प्रथमयामेऽपि भोजनं दर्शयति—

दिवोदितानि कर्माणि स्वकाले न कृतानि चेत् ।
शर्वर्याः प्रथमे यामे तानि कुर्यादतन्द्रितः ॥ इति च स्मृत्यन्तरम् ।'

इति तर्कालङ्कार आह स्वभाष्ये ।

---

1. 'चारांशो' ख । 2. चिह्नितांशो नास्ति ख । 3. 'न' क-ग । 4. 'गृह्यभाष्ये प्रथमस्य पञ्चमी कण्डिका' ख । 'श्रीभट्टनारायणकृतौ' नास्ति ग ।

## षष्ठी कण्डिका

औपवसथिकं दम्पती भुञ्जीयातामित्युक्तम्, अथ तद्भोजने को गुणः कश्चाभोजने प्रत्यवायः। इत्येतस्यार्थस्य [1]दृढीकरणाय परब्राह्मणमुपादीयते।

**मानतन्तव्यो होवाचाहुता वा एतस्य मानुष्याहुतिर्भवति य औपवसथिकं नाश्नाति ॥ १ ॥**

मानतन्तव्यो नाम कश्चिदृषिः स इदमुवाच उक्तवान्, ह इति निपातः। न हुता अहुता फलरहितेत्यर्थः। एतस्य प्रकृतस्य स्नातकस्य, (A) वै इति निपातः। मनुष्य-स्योपकारा भवतीति मानुष्याहुतिर्भवति। सायंप्रातर्होमवैश्वदेवप्राणाग्निहोत्रा[2]दि-लक्षणा (B)सर्वप्रकाराऽप्यहुता भवतीति। कस्य? य औपवसथिकं नाश्नाति।

A. स्नातकाश्च नवप्रकारा भवन्तीत्याह मनुः—

सान्तानिकं यक्ष्यमाणमध्वगं सर्ववेदसम्।
गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः ॥
नवैतान् स्नातकान् विद्याद् ब्राह्मणान् धर्मभिक्षुकान्।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥ इति (११।१-२)।

अस्य व्याख्यायां कुल्लूकभट्टः—"सन्तानप्रयोजनत्वाद् विवाहस्य सान्तानिको विवाहार्थी, यक्ष्यमाणोऽवश्यकर्तव्यज्योतिष्टोमादियागं चिकीर्षुः, अध्वगः पान्थः, सर्ववेदसः कृतसर्वस्वदक्षिण-विश्वजिद्यागः, विद्यागुरोर्ग्रासाच्छादनाद्यर्थः प्रयोजनं यस्य स गुर्वर्थः, एवं पितृमात्रर्थावपि, स्वाध्यायार्थी, स्वाध्यायाध्ययनकालीनाच्छादनाद्यर्थी ब्रह्मचारी, उपतापी रोगी, एतान् नव ब्राह्मणान् धर्मभिक्षाशीलान् स्नातकान् जानीयात्।" इत्येवं व्याजहार।

B. प्राणाग्निहोत्रञ्च भोजनम्। तदत्र तर्कालङ्कारः—

"तथा च स्मर्यते—

गृहस्थो ब्रह्मचारी च यस्त्वनश्नंस्तपश्चरेत्।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः ॥ इति।
अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥

इति चैवमादि" इत्येवमुक्तवान् स्वकीये भाष्ये।

---

1. 'दृढ-' क-ग। 2. 'आदि' नास्ति ख।

किञ्च[1]—

अनीश्वरो ह क्षोधुको भवत्यकाम्यो जनानां पापवसीयसी हाऽस्य प्रजा भवति ॥ २ ॥

न ईश्वरः अनीश्वरः, अस्वामी, स्वस्यापि द्रव्यस्याभोक्ता भवती[2]ति । ह इति[3] निपातः, क्षोधुकः [4]क्षुद्युक्तः । अतृप्तः सदा भवतीति । अकाम्यः अकमनीयः अस्पृहणीय इत्यर्थः । जनानां लोकानाम् । पापवसीयसी, पापशीला । ह इति निपातः । अस्य प्रजा भवतीति(A) ।

किञ्च—

य औपवसथिकं भुङ्क्ते ईश्वरो ह भवत्यक्षोधुकः काम्यो जनानां वसीयसी हाऽस्य प्रजा भवति ॥ ३ ॥

वसीयसी सुस्थिरा (B) । ऋज्वन्यत् ।

यतु यस्मादौपवसथिकभोजने एते गुणाः अभोजने च दोषाः ।

तस्माद् यत् कामयेतौपवसथिकं भुञ्जीयाताम् ॥ ४ ॥

निगदव्याख्यातं सूत्रम् (C) ।

अथ एवैतां रात्रिं शयीयाताम् ॥ ५ ॥

"एतदपि ऋज्वेव"*(D) ।

---

A. एवञ्चास्य पूर्वोक्तविधानानुसारेणौपवसथिकमनभ्नुवानस्य सन्ततिः पापशीला भवति । स्वयञ्च दरिद्रः क्षुधार्त्तो जनानां चक्षुःशूलश्च भवतीति तत्र यतितव्यमित्यर्थः ।

B. वसीयसी कल्याणी, पुण्यवतीत्यनर्थान्तरमिति च भाष्यान्तरम् । वसीयसी स्ववश-भूतेति सामश्रमी ।

C. तस्मात् विहितानामुपवसथदिनभोज्यानां मध्ये यत् कामयेतेच्छेत् गृहपतिः, तदेव दम्पती भुञ्जीयातामित्यक्षरार्थः । इति ।

D. अथेदानीमन्यदपि व्रतमभिधीयते अथ इति । तथा चैतामुपवासदिवसीयां रात्रिं दम्पती अधो भूमावेव शयीयातां न पर्यङ्कादौ, पुलाकादिशयनन्तु न निषिध्यते तूलिकादि चेति ज्ञातव्यम् ।

---

1. 'किञ्च' नास्ति ग । 2. 'इति' नास्ति ख । 3. 'इति' नास्ति क ग । 4. 'क्षुधायुक्तः' ग । *'ऋज्वेतत्' ख ।

## तौ खलु जाग्रन्मिश्रावेवैतां रात्रिं विहरेयाताम् इतिहास-मिश्रेण वा केनचिद् वा ॥ ६ ॥

तौ दम्पती। खल्विति निपातः। जाग्रदवस्थयैव स्वापं मिश्रयन्तौ एतामौप-वस[1]थिकां रात्रिं विहरेयातां नयेयातामित्यर्थः। इतिहास (A) मिश्रेण वा, जागरणो-पायेन केनचिद् वा [2]पुण्यकथादिना।

## जुगुप्सेयातां त्वेवाव्रत्येभ्यः कर्मभ्यः ॥ ७ ॥

[3]जुगुप्सा गोप्तुमिच्छा, जुगुप्सेयातां रक्षेयाताम् [4]आत्मानम्। अव्रत्येभ्यः [5]"व्रतादिविरुद्धेभ्यः," मैथुनादिभ्यः कर्मभ्यः[4]। तुशब्दादालिङ्गनादिभ्योऽपीति।

तथा चोक्तम्—

स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृ तिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् (B)॥ इति।

---

A. इतिहासः—पूर्ववृत्तान्तः, व्यासादिप्रणीतमहाभारतादिग्रन्थ इति यावत्। 'इतिहासः पुरावृत्तम्' इत्यमरः।

B. प्रमाणस्यास्याऽऽदितः षट् पादा दक्षसंहितायां 'क्रियानिष्पत्तिरेव चे'ति पाठविपरिवर्त्तनेन सप्तमाध्याये उपलभ्यन्ते, अन्तिमं पादद्वयञ्च—'अनुरागात् कृतश्चैव ब्रह्मचर्यविघातकम्' इत्येवं विपरिवर्त्य पठति रघुनन्दन उद्वाहतत्त्वे 'तथा च दक्ष' इत्युपोद्घातेन। तर्कालङ्कारस्तु अनुरागादित्यादि पठित्वा विपरीतमित्याद्यपि पठति 'तथा च स्मर्यते' इत्युदाहारेण।

मैथुने विशेषमाह देवलः—

"उपवासे तथा यौनं हन्ति सप्त कुलानि च।
स्त्रीणां संप्रेक्षणात् स्पर्शात् ताभिः सङ्कथनादपि॥
ब्रह्मचर्यं विपद्येत न दारेष्वृतुसङ्गमात्॥ इति।

अत्र च सम्प्रेक्षणात् सङ्कथनादित्यत्र सरागत्वं संशब्दस्यार्थः, साहचर्यात् स्पर्शोऽपि तथा इति शूलपाण्युपाध्यायाः।

कात्यायनोऽपि—

रेतःसेकात्मकं भोगमृतेऽन्यत्र क्षयः स्मृतः। इति।

रेतःसेकात्मकमपत्योत्पादनार्थम् ऋत्वभिगमनात्मकं भोगमृते अन्यत्र स्वसुखमात्रतात्पर्यरैः स्त्रीस्पर्शनादौ ब्रह्मचर्यक्षय इत्यर्थः।

---

1. '-थिकी' ख। 2. 'पुण्यकथादिना' नास्ति ग। 3. 'जुगुप्सा' नास्ति ख। 4. चिह्नितांशो नास्ति ख। 5. 'व्रतादिविरुद्धेभ्यः' नास्ति ग।

## न प्रवसन्नुपवसेदित्याहुः ॥ ८ ॥

'न प्रवसन् प्रवासम[2]नुतिष्ठन्। नोपवसेदित्येवमेके आहुः। एतस्मादेवान्ये आहुः, 'प्रवसन्नप्युपवसेदेवे'ति ॥

## पत्न्या व्रतं भवतीति ॥ ९ ॥

प्रोषितेऽपि पत्यावेतदौपवसथिकं व्रतं पत्न्या भवत्येवेति। अयं तु पुनः प्रवसन्। विकल्पे सति—

## यथा कामयेत तथा कुर्यात् ॥ १० ॥

ऋज्वेतत् (A)।

## एवमेवाहिताग्नेरप्युपवसथो भवति ॥ ११ ॥

आहिताग्निः पञ्चाग्निः (B), तस्याप्येवमेवोपवसथो भवती"ति।

---

याज्ञवल्क्यः—

षोडशर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत्।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्। इति (११७९)।

अत्र मिताक्षरा—संविशेत् गच्छेत्, पुत्रार्थमेवं गच्छन् ब्रह्मचारी भवति, अतो यत्र ब्रह्मचर्यं श्राद्धादिषु चोक्तं तत्र गच्छतोऽपि ब्रह्मचर्यस्खलनदोषो नास्ति पर्वाण्याद्याश्चतस्रश्च वर्जयेदिति व्याचख्यौ।

A. तदेवं 'प्रवसता नोपवस्तव्यम्' इत्येकेषामाचार्याणां मतम्, 'प्रवसताऽप्युपवस्तव्यम्' इति चापरेषामाचार्याणाम्। एतस्मिंश्च विकल्पे सति यथेच्छेत् तथा कुर्यादिति सूत्रस्य व्याख्या भाष्यकारादिसम्मता।

सामश्रमी तु—'उपवासदिने भोजनफलमभोजनफलञ्च द्वे एवोक्ते, तदत्र यथा कामयेत तथा कुर्यात्, अनीश्वरत्वादिकमिच्छेच्चेदभोजन एव स्यात्, अपीश्वरत्वादिकमिच्छेच्चेद् भोजनं कुर्वीते'ति व्याचख्यौ। तदत्र सामश्रमिव्याख्यानमसङ्गतम्, को हि नाम देवानां प्रियः सर्पिर्मिश्रादिष्टभोज्यरसास्वादनं कृत्वाऽप्यत्यन्ते सुखदायकमनन्तरमपि सुखप्राप्तिफलकमेतदौपवसथिकं व्रतं दुरन्तकायक्लेशसाध्येनाभोजनेन कर्मणा दुःखफलकं कुर्यादिति। ईदृशो विकल्पस्त्वत एव उपेक्षणीयः, भाष्यकृत्सम्मत एव युक्त इति सुधीभिर्विवेचनीयम्।

B. स च—

'पवनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे'

इति स्मृत्युक्तः। पवनः आवसथ्योऽग्निः, पावनः सभ्योऽग्निः, यः शीतापनोदनाद्यर्थं बहुषु देशेष्वपि विधीयते इति कुल्लूकभट्टः। त्रेता दक्षिणगार्हपत्याहवनीयलक्षणमग्नित्रयम्। यस्य गृहे तस्यापीति। एवञ्चौपासनाग्निमधिकृत्यौपवसथस्य सूत्रितत्वादाहिताग्नेरेष न प्राप्नोतीत्येवं सूत्रेणातिदिश्यते इति ज्ञेयम्।

---

1. 'न' नास्ति ख। 2. 'मनु' नास्ति ख। 3. 'इति' नास्ति ख।

किञ्च—

## यच्चाऽऽम्नायो विदध्यात् ॥ १२ ॥

अध्वर्युप्रत्ययत्वादग्निहोत्रस्य, तदाम्नायविहितं [1]च स्यादिति (A)। समुच्चयार्थमिदमुक्तम्।

## अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वाऽग्रेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान् दर्भानास्तीर्य ॥ १३ ॥

प्रातराहुतिं हुत्वेति सिद्धे पुनर्वचनं क्रमार्थम्। कथं नाम? प्रातराहुतिं हुत्वा अथानन्तरं पूर्वाह्ण एव भूमिजप-त्र्यृचसमूहने कुर्यात्। पश्चाद् ब्रह्मोपवेशनमिति। तयोश्च स्वरूपम्—

दक्षिणं वामतो बाह्यमात्माभिमुखमेव च।
करं करस्य कुर्वीत करणे न्यंचकर्मणः[2](B) ॥
कृत्वाऽग्र्यभिमुखौ पाणी स्वस्थानस्थौ तु सं[3]हतौ।
प्रदक्षिणं तथाऽऽसीनः कुर्यात् परिसमूहनम् ॥ (C) इति।

[4]एतेन न्यायेनाग्रेणाग्निं परिक्रम्य दक्षिणेनाग्निं [5]गत्वा, दक्षिणतोऽग्नेः प्रागग्रान् दर्भानास्तीर्य, अन्यद्योपेत् इति वक्ष्यमाणेन सह सम्बन्धः। (D)दर्भास्तरणं

A. सूत्रेणानेन वेदबोधितमिदमग्निहोत्रिणामप्यौपवसथिकं व्रतमिति भाष्यकारो वर्णयाम्बभूवेति ज्ञातव्यम्।

B. कर्मप्रदीपः २।९।१७। अत्र प्रकाशकारः—'भूमिजपानुष्ठाने दक्षिणं वामतः करेण वा कुर्यात्। करं करमिति पाठान्तरम्। दक्षिणहस्तमधोमुखं वामहस्तपृष्ठोपरिभावेन विपर्यस्तमात्माभिमुखं कुर्यादित्यर्थः', इति व्याचष्टे।

C. कर्मप्रदीपः २।९।१८। अस्य प्रकाशकारोक्ता व्याख्या—'इमं स्तोममिति त्र्यृचेन परिसमूहेत', इत्यनेन (४।९।९) सूत्रेणाग्नेर्विक्षिप्तावयवानामेकीकरणं परिसमूहनमुक्तम्। तत्र करविन्यासमाह—अग्निपश्चिमत आसीनश्चतसृष्वेव दिक्षु सम्यगग्नौ अग्न्यभिमुखौ, न न्यञ्चौ किन्तु विस्तृतौ, तथैव विक्षिप्तावयवानामेकीकरणस्य स्फुटत्वात्; स्वस्थानस्थौ न भूमिजप इव न्यञ्चौ करौ कृत्वा दक्षिणावर्तेन परिसमूहनं कुर्यात्'। इति।

D. ब्रह्मासनार्थं दर्भास्तरणे प्रागेवोदकधारा दातव्येत्याह गृह्यासंग्रहे कात्यायनः—

1. 'च' नास्ति क-ख। 2. 'इति' ग। 3. 'मर्ती' ग। 4. 'एतेन' ख। 5. 'गत्वा' ग।

चैतदासने 'कर्त्तव्यम्[1]। कुतः ? "अथ ब्रह्मा आसने उपविशती"ति वक्ष्यमाणत्वात्। दर्भा[2]स्तरणान्तमिदं* यजमानकर्म

**तेषां पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या ब्रह्मा आसनात् तृणमभिसंगृह्य दक्षिणापर(A)मष्टमदेशं निरस्यति—निरस्तः परावसुरिति ॥१४॥**

तेषां यजमानेनास्तीर्णदर्भाणां पुरस्तात् पूर्वस्यां दिशि प्रत्यङ्मुखस्तिष्ठन् सव्यस्य [3]वामस्य, पाणेः [4]करस्य, अङ्गुष्ठेनोपकनिष्ठिकया उप समीपे तिष्ठतीति उपकनिष्ठिका, अनामिके[5]त्युच्यते। तया चाङ्गुल्या ब्रह्मा आसनाद् दर्भतृणम् अभिसंगृह्य दक्षिणापरं दक्षिणपश्चिममष्टमदेशं निरस्यति निक्षिपति (B)'निरस्तः परावसुरि'त्यनेन मन्त्रेण।

**अप उपस्पृश्याथ ब्रह्मा आसने उपविशत्या वसोः सदने सीदामीति ॥१५॥**

अप उदकम् उपस्पृश्य पाणिना [6]स्पृष्ट्वा अथानन्तरं ब्रह्मा आसने उपविशति (C)'आ वसोः सदने सीदामी'त्यनेन मन्त्रेण।

---

उदग्धाराम विच्छिन्नामाग्न्यमारभ्य दक्षिणाम्।
दद्याद् ब्रह्मासनस्थाने सर्वकर्मसु नित्यशः॥ इति। ( १।१०

ब्रह्मासनमाह यज्ञपार्श्वसंग्रहकारिकायाम्—

आसनं ब्रह्मणः कार्यं वारणं वा विकङ्कतम्।
हस्तमात्रं चतुःस्रक्ति मूलदण्डसमन्वितम्॥ इति।

A. अष्टमं देशमिति सामश्रमी तर्कालङ्कारश्च पठतः।

B. "ॐ निरस्तः परावसुः"। मन्त्रस्यास्याकरस्थानं तु शतपथब्राह्मणम् १।५।१।३।

C. "ॐ आ वसोः सदने सीदामि" मन्त्रस्यास्य विनियोगस्थानं तु लाट्यायनश्रौतसूत्रमपि ४।९।१६। भवदेवभट्टोक्तोऽग्निस्थापनप्रकार उक्तस्तृतीयकण्डिकाप्रथमसूत्रे (पृ० ४९)। अथेदानीं तदुक्तं ब्रह्मस्थापनमुच्यते—"साग्रपञ्चाशत्कुशपत्रनिर्मितं द्विर्दक्षिणावर्त्तमूर्ध्वमुखं कुशब्राह्मणमधीतवेदं ब्राह्मणं छत्रमुत्तरासङ्गं कमण्डलुं वा ब्रह्मत्वेन परिकल्प्य धारासहितमुदकपात्रं गृहीत्वा अग्नेरुत्तरतः प्रभृति दक्षिणावर्त्तेन दक्षिणदेशं गत्वा अरत्निमात्रान्तरिते देशे पूर्वाभिमुखीं वारिधारां दत्त्वा तदुपरि प्रागग्रान् कुशानास्तीर्य पश्चिमाभिमुखोऽनुपविष्टो वामहस्तानामिकाङ्गुष्ठाभ्यामास्तीर्ण-

---

1. 'वर्त्तव्यम्' क। 2. '-स्तरणं' ख। 3. 'वामस्य' नास्ति ख। 4. 'करस्य' क, नास्ति ख। 5. 'इति' नास्ति क-ग। 6. 'स्पृष्ट्वा' नास्ति ख।

किञ्च—

**अग्निमभिमुखो वागृयतः प्राञ्जलिरास्ते आ कर्मणः पर्यवसानात् ॥१६॥**

उपविश्य च ब्रह्मा अग्निमभिमुखो वागृयतः संयतवाक् प्राञ्जलिपुट आस्ते।

कुशानां कुशपत्रमेकं गृहीत्वा 'प्रजापतिऋ॑षिरनुष्टुप्छन्दोऽग्निर्देवता तृणनिरसने विनियोगः, ॐ निरस्तः परावसुः' इत्यनेन दक्षिणपश्चिमकोणे प्रक्षिपेत्। ततोऽप उपस्पृश्य दक्षिणपादेन सव्यपादमवष्टभ्य उत्तराभिमुखीभूयास्तृतकुशानद्भिरभ्युक्ष्य प्रजापतिऋ॑षिरनुष्टुप्छन्दोऽग्निर्देवता ब्रह्मोपवेशने विनियोगः, ॐ आ वसोः सदने सीद' इत्यनेन कुशोपरि प्रागग्रं कुशब्राह्मणम्, ब्राह्मणब्रह्मपक्षे तूत्तराभिमुखं स्थापयेत्, ब्रह्मा 'सीदामी'ति ब्रूयात्, कुशादिब्रह्मपक्षे तु कर्तैव ब्रूयात्। ततस्तदुपरि कुशान् दत्त्वाऽद्भिरभ्युक्ष्य कुश-कुसुमैरर्चयेत्। ततस्तेनैव पथा प्रत्यावृत्य स्वासने पूर्वाभिमुख उपविशेत्। ततो भूमिजपादिकं कुर्यात्। यदि तु ब्रह्मत्वेनाऽऽरोपितो ब्राह्मणोऽयज्ञियवागृवचनं ब्रूयात् तदा 'प्रजापतिऋ॑षिर्गायत्री च्छन्दो विष्णुर्देवताऽयज्ञियवागृवचननिमित्तजपे विनियोगः। ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्, समूढमस्य पांसुले (सा० पु० ३।१।३) इति जपेत्। कुशादिब्रह्मपक्षे तु कर्मकर्तुरेव कृताऽकृतावेक्षणादिब्रह्मकार्यकर्तृत्वादयज्ञियवागृवचननिमित्तजपं स एव कुर्यादिति।

अत्र रघुनन्दनः—"अथ ब्रह्मस्थापनम्—तच्च होतृकर्तृकमेव, अग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्येति कात्यायनेनैककर्तृकत्वाभिधानात्। ब्रह्मोपवेशनप्रकारमाह गोभिलः—अग्रेणाग्निं.. ......अथान्यद्वर्हेदिति। अस्यार्थः—अग्रेण पूर्वदिशा प्रदक्षिणेनाग्निं गत्वा अग्नेर्दक्षिणस्यां दिशि प्रागग्रान् दर्भानास्तीर्यान्यद्वर्हेत् इति वक्ष्यमाणेन सम्बन्धः, न तु निरस्यतीत्यनेन, अत्र ब्रह्मेति कर्तृनिर्देशात्। न च ब्रह्मेत्यासनेन सम्बन्धः, उपवेशनात् पूर्वं तत्सम्बन्धाभावात्; अतो दर्भास्तरणान्तं याजमानिकम्। तत्र ब्रह्मासनस्थाने आस्तरणात् पूर्वं वारिधारामाह गृह्यासंग्रहः।...ब्रह्मा तु तेषां पुरस्तादास्तृतकुशानां पूर्वदिग्भागे तिष्ठन्नुपविष्टो वामस्याङ्गुष्ठानामिकया आसनाद् यजमानास्तृतात् तृणं कुशपत्रं गृहीत्वा दक्षिणापरं...नैर्ऋतमिति यावत्, 'निरस्तः परावसुरि'त्यनेन प्रक्षिपतीति। अप उपस्पृश्य दक्षिणपाणिना जलं स्पृष्ट्वा, अथानन्तरमासने ब्रह्मासनत्वेन कल्पिते उपविशति 'आ वसोः सदने सीदामी'ति मन्त्रेण, एवमेव भट्टनारायणव्याख्यानात् 'तेषां पुरस्तादित्यादि आ वसोः सदने सीदे'त्यन्तं यजमानकर्तृकं सीदामीति प्रतिवचनं ब्रह्मकर्तृकमि'ति भवदेवभट्टकल्पनं कल्पनमेव, सीदेति सूत्रानुपात्ताच्च"। एवं निबध्नाति। तर्कालङ्कारोऽपि अस्मद्-

1. '-लिः कृताञ्जलिरास्ते' ख।

कियन्तं कालम् आस्ते ? आ कर्मणः पर्यवसानात्, कर्मणः परि सर्वस्य आ अवसानात्। अवसानम् 'अन्तं (A)कर्मकृता कृतं "प्रत्यवेक्षते। वागृयत"स्याप्यपवादमाह—

## भाषेत यज्ञसंसिद्धिम् ॥१७॥

होत्रा अन्यथा क्रियमाणे कर्मणि तत्सिद्ध्यर्थम् एतदेवं कुरुष्वैतत् कृत्वैतत्-'कुर्वित्यादि भाषेत(B)।

तत्रापि—

## (C)नायज्ञियां वाचं वदेत् ॥१८॥

अयज्ञिया[5] असंस्कृता म्लेच्छभाषा, तां न [6]वदेत्(D)।

## यद्य(E)यज्ञियां वाचं वदेद् वैष्णवीमृचं यजुर्वा जपेत् ॥१६॥

यदि प्रमादात् अयज्ञियाम'जानन् वा अयज्ञियां'* वाचं वदेत्, ततस्तद्दोष-

---

भाष्यकारपदवीमनुसरन् 'तदत्र सूत्रमनवमृश्यैव 'आ वसोः सदने सीद' इति यजमानो ब्रूयात्, एतदन्तमेव कर्म याजमानिकम्। 'सीदामी'त्यभिधाय ब्रह्मोपविशेदिति भवदेवभट्टकल्पना समुल्लसिता' इत्यभिधाय भवदेवभट्टस्योपरि कटाक्षं निक्षिपति, प्रमाणीकरोति च दर्भास्तरणान्तं यजमानकर्मेति। गुणविष्णुस्तु भवदेवभट्टानुसारेणैव 'आ वसोः सदने सीदे'ति मन्त्रमाकलय्य व्याख्यातवान् स्वकीये छान्दोग्यमन्त्रभाष्ये। अत्र कियदन्तं कर्म केन कर्तव्यम्, केन कीदृशो वा मन्त्रः पठितव्य इति भगवन्तोऽनूचानाः प्रमाणयन्तु।

A. कर्मणो यागादेरवसानन्तु दक्षिणादानपर्यन्तमिति, आ वसोः सदने सीदामीति ब्रह्मणो मन्त्रलिङ्गादवगन्तव्यम्।

B. होमादौ कर्मणि कस्य किं कर्त्तव्यं तदाह कात्यायनः—

एकः कर्मणि युक्तः स्याद् द्वितीयस्तन्त्रधारकः।
तृतीयः प्रश्नं प्रब्रूयात् ततः कर्म समारभेत् ॥ इति गृ० स० १।६३

C. अत्र यज्ञीयामिति पठति सामश्रमी।

D. भवति चात्र प्रमाणं ब्राह्मणम्—"साधुभिर्भाषितव्यं नापभ्रंशितवै न म्लेच्छितवै" इति।

E. 'यज्ञीया'मिति सामश्रमिस्वतः पाठः।

---

1. 'यन्त:' ख-ग। 2. 'प्रत्यवेक्षन्' क, 'प्रत्यवेक्षेत्' ग। 3. '-स्यापवादार्थमिदमाह' ख-ग। 4. 'कुर्यादित्यादि' क। 5. '-यामसंस्कृतां' ख। 6. 'भाषेत' ख। 7. 'जानन्नयज्ञियां' ख।

[1]निराकरणाय वैष्णवीं विष्णुदेवतामृचम् (A)इदं विष्णुर्विचक्रमे इति जपेत्। यजुर्वा वैष्णवं (B)विष्णोः शिरोऽसीति जपेत्।

**अपि वा नमो विष्णवे इति ब्रूयात् ॥२०॥**

अर्थाद् ऋग्यजुषोरसम्भवे एतद् द्रष्टव्यम्।

[2]किञ्च—

**यद्यु वा उभयं चिकीर्षेद् हौत्रञ्चैव ब्रह्मत्वं चैवैतेनैव कल्पेन छत्रं वोत्तरासङ्गं वोदकमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्यावज्याथान्यच्चेष्टेत् ॥२१॥**

यद्यसति ब्रह्मणि, उ वै इति निपातौ, उभयं द्वयमपि [3]स्वयं चिकीर्षेत् कर्त्तु-[4]मिच्छेत्। हौत्रं [5]चैव ब्रह्मत्वं च, एतस्मादेव वचनाद् ब्रह्मणोऽभावे स्वयमेव उभयं कर्त्तव्यमिति विधि[6]र्गम्यते। एतेनैव [7]कल्पेन अग्रेणाग्निमित्येवमादिना। एव-कारकरणं स्वयंकर्तृके आ वसोः सदने सीदामीति मन्त्रस्योहप्रतिषेधार्थम्। छायया

A. ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांशुले। मन्त्रोऽयं सामसंहितायां पूर्वार्चिके ३।१।३। उत्तरार्चिके ८।२।५। पांशुले इत्यत्र तालव्यशकारयुक्तपाठो गुणविष्णुधृतः, दन्त्यसकारयुक्तस्तु ससायणभाष्यमुद्रितपुस्तके। 'पांसुरे' इति सायणाचार्यसम्मत ऋग्वेदीयः पाठ इति। अस्य गुणविष्णुकृतो व्याख्यासारस्तु—विष्णुर्भूम्याकाशस्वर्गात्मकं जगत् पादेनाक्रान्तवान्; तस्य पदं भूम्यां सम्यङ् निविष्टम्। एतेन विष्णुपदसम्बन्धेन भूमिरतीव शुद्धेति सा भूमिरस्मिन् सदने दुरुक्तादिकं समाधास्यतीति।

B. ॐ विष्णोः शिरोऽसि यशोधा यशो मयि धेहि। मन्त्रस्यास्याकरस्थानं तु ताण्ड्यमहाब्राह्मणम् १।१।८। अस्य सायणाचार्यकृतो भाष्यसारस्तु—"हे विष्णोः शिरः हे रराटि त्वमचेतनाऽपि सती 'यशोधा' असि विष्णुशिर इत्येवम्भूतस्य यशसो धारयित्री भवसि, तस्मात् त्वदीयस्पर्शं कुर्वति मयि यशः उद्गात्रे कुशलः इति तादृशं धेहि धारय सम्पादय। इति। अत्र रघुनन्दनस्तु वाजसनेयिसंहितोक्तां ५।२१ ॐ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थः, विष्णोः स्यूरसि, विष्णोर्ध्रुवोऽसि, वैष्णवमसि विष्णवे त्वा। इति याजुषीमृचं यजुःपदेन संगृह्य प्रायश्चित्तार्थमुपदिशति। अस्य महीधरकृतभाष्यसारस्तु—"हे दर्भमयमालाधारवंश त्वं विष्णोः विष्णुमूर्त्तित्वेनोपचरितस्य हविर्धानमण्डपस्य रराटमसि, ललाटस्थानीयोऽसि विष्णोः श्नप्त्रे स्थः ओष्ठसन्धिरूपे भवथः। स्यूः सूचिः। ध्रुवोऽसि ग्रन्थिर्भवसि, त्वं वैष्णवमसि विष्णुदेवताकत्वेन तत्सम्बन्धि भवसि, तस्माद् विष्णवे विष्णुप्रीत्यर्थं त्वा त्वां स्पृशामीति शेषः। इति।

1. 'निष्कृयणाय' ख। 2. 'किञ्च' नास्ति ख। 3. 'स्वयमेव कर्त्तुं चिकीर्षेदिच्छेत्' ख। 4. 'इच्छेत्' नास्ति ग। 5. 'एव' नास्ति ख। 6. '-रवगम्यते' ख। 7. 'पूर्वोक्तेन कल्पेन' ख।

आतपात् त्रायते इति छत्रम् आतपत्रम्, उत्तरासङ्गम् उत्तरीयम्; उदकमण्डलुः [1]आलुका। दर्भवटुः(A) कुशमयो ग्रन्थिः, स चापरिमितैः कुशदलैर्भवति।

तथा चोक्तम्—

[2]यज्ञवास्तुनि मुष्ट्याञ्च [3]स्तम्बे दर्भवटौ तथा।
दर्भसंख्या न विहिता विष्टरास्तरणेष्व[4]पि॥(B) इति।

तृणनिरसनोदको[5]पस्पर्शने कृत्वा "आ वसोः सदने सीदामी"ति मन्त्रेण छत्रादीनामन्यतमं ब्रह्मासने निधाय तेनैव पथा अप्रदक्षिणेन अग्निं प्रत्यावज्य, अथान्यत् चेष्टेत्। अथेति विशिष्टमानन्तर्यं द्योतयति। [6]तथा च गृह्यान्तरम्—ब्रह्माणं संस्थाप्य 'इदं भूमेर्भजामह' इति भूमिं संगृह्य चरुस्थालीमधिश्रित्य हविः संगृह्णातीति"*। [7]कथं

A. दर्भविषये विशेषमाह गृह्यासंग्रहे कात्यायनः—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः।
नैते निर्माल्यतां यान्ति नियोज्यास्तु पुनः पुनः॥
दर्भाः पिण्डेषु निर्माल्या विप्राः प्रेतान्नभोजने।
मन्त्राः शूद्रेषु निर्माल्या निर्माल्याश्चिति पावकाः॥
पिण्डार्थं ये स्तृता दर्भास्तर्पणन्तु कृतन्तु यैः।
धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते॥ इति २।८५-८७।

तत्त्वकारस्तु प्रथमश्लोकमन्यथा पठति—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः॥ इति।

तत्रायातयामत्वमपि अनिर्माल्यतापर्यवसायि बोद्धव्यम्। कुतः?

'जीर्णञ्च परिभुक्तञ्च यातयाममिदं द्वयम्' इत्युक्तः।

स्मृत्यन्तरे तु विशेषः—

संग्रहाद् वत्सरं यावत् शुद्धिः स्याद्भिर्बर्हिषाम्।
अतः परं न गृह्णीयाजपात्रौ यज्ञकर्मणि॥ इति।

B. कर्मप्रदीपः २। ८।२४। अत्र विशेषमाह गृह्यासंग्रहे कात्यायनः—

कतिभिस्तु भवेद् ब्रह्मा कतिभिर्विष्टरः स्मृतः।
पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्धेन तु विष्टरः॥१।८७।
ब्रह्मविष्टरयोश्चापि सन्देहे समुपस्थिते।
ऊर्द्ध्वकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः॥ १।८८। इति।

1. 'उदकपात्रम्' ख। 2. 'यज्ञ' वास्तुनि क-ग। 3. 'स्तम्ब-' क 4. 'अपि' नास्ति ख 5. 'उप' नास्ति क-ग। 6. चिह्नितांशो नास्ति क-ग। 7. 'कथं' नास्ति ख।

नानाद्रव्याण्युत्तरत आसाद्य यथाक्रमं प्रोक्ष्य च अथानन्तरमन्यद् वक्ष्यमाणं कर्म 'वेष्टेत्[1] कुर्यादिति ।

तथा च कर्मप्रदीपः—

प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं[2] समीपतः ।
तत् तथासादयेद् द्रव्यं यद् यथा विनियुज्यते ॥ (A)इति ।

तथा च—

द्रव्याणामुपक्लृप्तानां[3] होमीयानां यथाक्रमम् ।
प्रसिञ्चन् वीक्षणं कुर्यादद्भिरभ्युक्षणं तथा ॥ (B)इति[4] ।

इति श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये
प्रथमप्रपाठकस्य षष्ठी कण्डिका ॥

---

आभ्यां श्लोकाभ्यां दर्भवटुविष्टरौ गोभिलोक्तौ व्याख्यातौ । कर्मप्रदीपे तु दर्भवटौ विष्टरे च दर्भसंख्या निषिद्धा । तदनयोर्विकल्पः, पञ्चाशद्भिर्वा कुशैर्भवति कुशैर्वाऽपरिमितैरिति । कथमिति ? द्वयोरप्यत्सम्बन्धाभ्येऽभिधानात् । 'सम्भवे पञ्चाशद्भिः कुशैरसम्भवेऽपरिमितैरिति व्यवस्थितोऽयं विकल्पः' इति प्रकाशकाराः । अत्र तर्कालङ्कारः—'रघुनन्दनस्तु छन्दोगोऽपि आचार्यपुत्रस्यैतद् वचनमित्यजानानः शाख्यन्तरीयमेतत् संख्यावचनमिति कल्पयाञ्चकार ।

अत्र ब्रह्मग्रन्थौ—

द्विरावृत्त्याऽथ मध्ये वै अर्धावृत्त्याऽन्तदेशतः ।
ग्रन्थिः प्रदक्षिणावर्तः स ब्रह्मग्रन्थिसंज्ञकः ॥

इति पुराणवाक्यमप्यनुसन्धेयम्' इत्युक्तवान् स्वभाष्ये । रघुनन्दनस्तु संस्कारतत्त्वे भट्टभाष्यं कर्मप्रदीपवचनञ्चोल्लिख्य 'एतच्छन्दोगपरम् । अन्येषान्तु शान्तिदीपिकायाम्—

सप्तभिर्नवभिर्वाऽपि सार्धद्वितयवेष्टितम् ।
ॐ कारेणैव मन्त्रेण द्विजः कुर्यात् कुशद्विजम् ॥

कर्मोपदेशिन्यान्तु नवभिरित्यत्र पञ्चभिरिति पाठः । एतदेकवाक्यतया

द्विरावृत्त्याऽथ मध्ये वै......................

इति कालिकापुराणोक्तं व्याख्येयम् । रत्नाकरे गृह्यासंग्रहपरिशिष्टम् ऊर्द्ध्वकेश इत्याद्याह ।

एवञ्च पञ्चाशद्भिरित्याद्याचार्यपुत्रवचनमित्यविदुषो रघुनन्दनस्य छन्दोगानां ब्रह्मणि दर्भसंख्यामात्रोच्छेदकल्पनं कल्पनमेवेति भगवन्तोऽनूचाना विचारयन्तु ।

A कर्मप्रदीपः १।८।१०। "स्रुवस्रुगादिद्रव्यम्, उपयोगसन्निधिक्रमेण स्वसमीपदेशेऽग्नेः कस्मात् पूर्वमेकं ततः पूर्वमपरमित्येवं क्रमेणाग्नेरुत्तरत उत्तराग्रं स्थापयेत् ।" इति चास्य प्रकाशकारोक्ता व्याख्या ।

B. गृह्यासंग्रहः १।१०३। मुद्रितपुस्तके तु 'यथाक्रमम्' इत्यस्य स्थाने 'यथाविधी'ति

---

1. 'वेष्टयेत्' क । 2. '-मुदक्कुद्ग्रं-' क-ग । 3. -क्लृप्तानां' ग । 4. 'इति' नास्ति ग ।

पाठः। अस्य व्याख्या चेत्थम्—निरुक्तकर्मप्रदीपवचनविध्यनुसारेण उपक्लृप्तानां समासादितानां होमसम्बन्धिनां द्रव्याणाम्, अग्निः प्रसिद्धान् वीक्षणं दर्शनम्, अभ्युक्षणञ्च—

उत्तानेनैव हस्तेन प्रोक्षणं परिकीर्त्तितम्।
न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं मतम्॥

इत्युक्तलक्षणं कुर्यात् इति।

भाष्यकारास्तु सूत्रानुसारेणैव भूमिजपं त्र्यृचेन परिसमूहनञ्च कृत्वा ब्रह्मस्थापनं कर्त्तव्यमित्युक्तवन्तः। तर्कालङ्कारस्तु—"इदञ्च द्रव्यासादनाद्यनन्तरं भूमिजपादिकं चर्वनङ्के द्रष्टव्यम्। चर्वङ्के तु कर्मणि द्रव्यासादनाद्यनन्तरमेव चरुश्रपणमाचार्यः सूत्रयिष्यति—'अथोलूखलमुषले' इत्यादि। ततश्च चर्वङ्कके कर्मणि, द्रव्यासादनाद्यनन्तरं चरुश्रपणम् अनन्तरं भूमिजपादिकं कर्त्तव्यम्। अत एव कर्मप्रदीपकृद्भिः 'तिर्यगूर्द्ध्वं समिन्मात्रा' इत्यादिना 'शूर्पं वैणवमेव च' इत्येवमन्तेन ग्रन्थेन चर्वङ्गमभिधाय 'दक्षिणं वामतो बाह्यम्' इत्यादिना भूमिजप-परिसमूहन-हस्तविन्यासोऽभिहितः। तस्माद् ब्रह्मस्थापन-द्रव्यासादनादि-चरुश्रपणेभ्यः परं भूमिजप-परिसमूहनादिकम्, इति भवदेवभट्ट-वीरेश्वर-रघुनन्दनप्रभृतयः" इत्याह। (रघुनन्दनमतन्तु प्रदर्शयिष्यते ४।९।९ सूत्रपादटीकायाम्)। इदन्त्विह वक्तव्यम्—कर्मप्रदीपकृता पदार्थानामुपन्यासमात्रं कृतम्, न तु क्रमोऽपि तेषामभिहितः। तत्र चर्वङ्गमभिधाय भूमिजपप्रकाराभिधानात् खल्वानुमानिकः क्रमः परिचिकल्पयिषितः। स चायमाचार्यपुत्रोपदिष्टक्रमविरोधाद् भवितुं नार्हति।

तथा च—

लेखनाभ्युक्षणे...............( पृः ४७ )
ब्रह्माणमुपसंकल्प्य चरुश्रपणमारभेत्। गृ, स, १।८६-८७।

इति तेनोक्तम्। तस्मादाचार्यपुत्रवचनाद् भूमिजपं त्र्यृचेन परिसमूहनञ्च कृत्वा ब्रह्मस्थापनं कर्त्तव्यम्, ततश्चरुश्रपणमित्यादरणीयम्। आचार्योऽपि 'अग्निमुपसमाधाय परिसमुह्ये'त्यादि ३।१ सूत्रयित्वा ब्रह्मस्थापनं सूत्रयाम्बभूव। अनन्तरं चरुश्रपणं च सूत्रयिष्यति। ननु तर्हि सूत्रे 'अन्यच्चेष्टेदि'त्यनर्थकम्, 'अथोलूखलमुषले' इति सूत्रयिष्यत्येवातो नानर्थकम्। कथमिति चेत्? सामान्यविशेषभावोपपत्तेः। 'अन्यच्चेष्टेत्' इति सामान्यतः सूत्रयित्वा 'अथोलूखलमुषले' इति विशेषतः सूत्रणमुपपद्यते। सामान्यप्राप्तेस्तु विशेषकथनमपुनरुक्तमेव। शास्त्रे चास्मिन् पुनरुक्तिरनुमतैवाचार्यस्येति च निवेदितमधस्तादेवास्माभिः (पृः १७)। यत्र चरुर्नास्ति तत्राज्यग्राज्यसंस्कारादिकमित्यभिप्रायेण वा वचनमेतदुपपादनीयम् इति। तदत्र ब्रह्मस्थापन-भूमिजप-परिसमूहनादीनां क्रमव्यत्यासे कीदृशी व्यवस्था कर्त्तव्येति भगवन्तोऽनुष्ठानाः प्रमाणयन्तु।

---

# सप्तमी कण्डिका

अथोलूखल-मुषले प्रक्षाल्य शूर्पञ्च पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्योपसादयति ॥ १ ॥

अथेति पूर्वप्रकृतार्थः। पूर्वासादितानां मध्ये उलूखल-मुषल-शूर्पाणि प्रक्षाल्य पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्योपसादयतीति। उलूखल-मुषले खदिरादियज्ञिय-वृक्षमये। 'वारणान्य'[1]होमसंयुक्तानीति वचनात्(A)। [2]वारणमये वा(B)। ते च इच्छाप्रमाणे, [3]तथा चोक्तम्—

मुषलोलूखले वार्क्षे स्वायते सुदृढे तथा।

इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च ॥ (C) इति।

अन्ये तु—शूर्पं चैषीकमेव चेति पठन्ति। तत्रैषीकाग्रहणं वैणवस्याप्युपलक्षणा-र्थम्। विसमासकरणं शौचभेदप्रदर्शनार्थम्। पूर्वं तावत् चरुस्थालीकुशोलू[4]खल-[5]मुषल-[6]हविः-शूर्प-पवित्र-प्रोक्षणेध्माज्य-समित्-[7]संमार्गकुश-स्रुक्स्रुवाणामग्नेरुत्तरतः प्राक्-[8]संस्थानामासादनम् अथोलूखलमुषलशूर्पाणां पश्चादग्नेः प्रागग्रेषु दर्भेष्विति(D)।

---

A. प्रमाणीकृतं वचनमिदं चन्द्रकान्तेनापि स्वभाष्ये।

B. 'वरणे वरुणः सेतुस्तिक्तशाकः कुमारकः।' इत्यमरानुशासनाद् वरुणनाम्ना ख्यातस्तिक्त-शाको वृक्षविशेषो ज्ञातव्यः।

C. कर्मप्रदीपः २।७।१६। अत्र 'शूर्पस्त्वैषिक एव वा' इति पाठं स्वीकृत्य विवृणोतीद-मित्थं प्रकाशकारः—"वार्क्षे यज्ञियवारण-वैकङ्कतवृक्षमये। वारणो वैकङ्कतो वा यज्ञावचरः' इति वचनात्। न त्वेतेन जुहुयादिति श्रुतिबलाद् होमकरणध्रुवोपभृज्जुहूस्रुवाणां ग्रहणम्, 'पर्णमयी जुहूः' इत्यादिविधिनवृक्षविशेषावरुद्धत्वात् तदितरोलूखलादिष्वेव सामान्यविधिरयवारणवाक्यपर्य-वसानात्। ऐषिकः काशमयः। 'शूर्पं वैणवमेव च' इति भट्टभाष्यलिखितम्। शेषं सुगमम्" इति। 'विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि' इत्यमरानुशासनाद् विकङ्कतपदेन 'कठेर' 'बंच' इति ख्यातो वृक्षविशेषो बोद्धव्य इति।

D. तथा च पूर्वासादितानामिदानीमग्नेः पश्चिमतः स्थापनं कर्तव्यं निर्वापाद्यर्थमिति भावः। तत्रोलूखल-मुषल-शूर्पाणां प्रमाणमाह पारस्करगृह्य-गदाधरभाष्ये—

पालाशं जानुमात्रं स्यात् पृथुबुध्नमुलूखलम्।

अर्धखातं बृहद्वक्त्रं मध्ये रास्नासमन्वितम्॥

---

1. 'वारणापि' क, 'वारणान्यपीति' ग। 2. 'वारणमयो वा' ग, 'वारणे वा' ख। 3. 'तथा चोक्तम्' नास्ति ख। 4. '-खलं मुषलं शूर्प' ग। 5. '-मुषलकं' ख। 6. 'च हविः' ख। 7. '-संमार्गकुश-' नास्ति ख। 8. 'संस्थमा-' क।

**अथ हविर्निर्वपति व्रीहीन् वा यवान् वा कंसेन वा चरुस्थाल्या वा ॥ २ ॥**

अथानन्तरमेव तस्मिन्नुलूखले आसादिते, हविः किम्? व्रीहीन् वा यवान् वा, निर्वपति प्रक्षिपति। वाशब्दद्वित्वं तुल्यविकल्पार्थम्। किं हस्तेन निर्वपति? [1]न, कंसेन वा चरुस्थाल्या वा, वाशब्दौ पूर्ववत्।

कथं निर्वपतीत्य[2]त आह—

**अमुष्मै त्वा जुष्टं निर्वपामीति देवतानामादेशं सकृद् द्विस्तूष्णीम्(A) ॥ ३ ॥**

देवतानां नामानि [3]देवतानामानि, तेषामादेशो देवतानामादेशः, तं सकृत् कुर्वन् गृह्णाति। अथ वा देवतानामादेशं सकृत् [4]कुर्वन् निर्वपति। द्विस्तूष्णीम्। अमुष्मै त्वा इत्येतस्मिन् सर्वनाम्नि चतुर्थ्यन्ते देवतानाम गृह्णीयात्। अग्नये त्वा जुष्टं निर्वपामीति [5]प्रयोगः। निर्वापप्रमाणन्तु—

यावता होमनिर्वृत्तिर्भवेद्वा या यत्र कीर्त्तिता।
शेषं चैव भवेत् किञ्चित् तावन्तं निर्वपेच्चरुम् (B) ॥ इति।

अत्र सन्देहः—बहु[6]दैवत्येषु समशनीयादिषु [7]चरुषु किमनुनिर्वापौ(C) प्रतिदैवतं भवतः, उत तन्त्रेणेति? होमश्च किं पृथगेव भवति, उत तन्त्रेणेति?

---

खादिरं मुषलं प्रोक्तमरत्नित्रयसम्मितम्।
शूर्पं स्वरत्निमात्रं स्यादैषिकं वैणवन्तु वा ॥ इति।

A. अत्र सूत्रे सकृत्पदादनन्तरं 'यजुषा' इति पठित्वा व्याकरोतीत्थं रघुनन्दनः संस्कारतत्त्वे—"एवञ्चाग्नये त्वा जुष्टं निर्वपामीति सामगानां यजुःप्रयोगः, गोभिले निर्वापमात्रश्रुतेः, याजुर्वेदिकसमन्त्रकग्रहणप्रोक्षणे सामगेन न कार्ये। यजुःपरिभाषामाह जैमिनिः—'शेषे यजुःशब्द' इति। शेषे सन्त्रभिन्ने मन्त्रजाते, ततश्च यन्मन्त्रजातं प्रश्लिष्टपठितं गानपादभेदरहितं तद् यजुरिति।

B. कर्मप्रदीपः ३।७।४। तथा च एवं निर्वापः कर्तव्यो यथा होमानन्तरं शेषमपि किञ्चित् स्यादिति भावः।

C. अनुनिर्वापौ नाम सूत्रस्थ'द्विस्तूष्णीम्' इति शब्दप्रतिपाद्यौ उलूखले अमन्त्रकमुद्दिश्य प्रक्षेपौ। इति।

---

1. 'न' नास्ति ख। 2. '-त्याह' ख। 3. 'देवतानामानि' नास्ति ग। 4. 'कुर्यात्, गृह्णाति, निर्वपति' ख। 5. 'निर्वापः' ग। 6. '-दैवत्येव' ख-ग। 7. 'चरुषु' नास्ति ख।

'अत्रोच्यते—देवतानामभिः पृथक् संगृह्यानुनिर्वापौ तन्त्रेण गृह्णीयात्, होमोऽपि भेदेनैव स्यात् , कुतः—

चरुः समशनीयो यस्तथा गोयज्ञकर्मणि ।
ऋषभोत्सर्जने चैव अभ्वयज्ञे तथैव च ॥
श्रावण्यां [2]च प्रदोषे यः कृष्यारम्भे तथैव च ।
कथमेतेषु निर्वापः कथं चैव जुहोतयः ॥
देवता[3]संख्ययैनाद्गृह्य निर्वापास्तु पृथक् पृथक् ।
तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक् ॥

(A) इति वचन[4]सामर्थ्यात् ।

अथ पश्चात् प्राङ्मुखोऽवहन्तुमुपक्रमते दक्षिणोत्तराभ्यां पाणिभ्याम् ॥ ४ ॥

अथेति पूर्वप्रकृतार्थः, तेनैव [5]पूर्वासादितेन मुषलेनेति पश्चादुलूखलस्य, निर्वपणस्य वा पश्चात् । प्राङ्मुख आसीनः । कुतः—

"आसीन ऊर्द्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता ॥ (B)

इति वचनात् । तान् निरुप्तान् व्रीहीनवहन्तुम्, अवहननं कण्डनं कर्त्तुमुपक्रमते प्रारभते । कथम् ? दक्षिणोत्तराभ्यां पाणिभ्याम्, दक्षिणम् उत्तरः उपरि ययोः पाण्योस्तौ दक्षिणोत्तरौ ताभ्याम् । उपक्रम[7]ते इति वचनाद् उपक्रम एवायं नियमः । तत[8]श्च शिष्यादेरपि पश्चादवहननं [9]कुर्वतो [10]न दोषः ।

---

A कर्मप्रदीपः ३।७।१-३ । प्रकारान्तरेण चरुनिर्वापमाह गृह्यासंग्रहे कात्यायनः—

'चतुर्मुष्टिश्चरुः कार्यश्चतुर्णामुत्तरोऽपि वा' । ( २।७० ) इति ।

अत्र मुष्टिशब्दस्य पलपरिमाणत्वं केचिद् वर्णयन्ति, अन्यथा सूत्रमिदं विरुध्येतेति सुधीभिर्ध्येयम् ।

B. कर्मप्रदीपः १।१।८ । अत्र प्रकाशकारः—"यत्र उपविष्ट उत्थितोऽवनतपूर्वकायः कुर्यादित्येतादृशो नियमो नास्ति तत् कर्म उपविष्टेन कर्तव्यम् । माऽऽपद्यपि प्रह्वेणोत्थितेन वा कर्तव्यमित्यर्थः" इत्येवं व्याचख्यौ ।

---

1. 'तत्रो-' ख । 2. 'यः' ख । 3. '-संख्यया यात्रा' ख । 4. '-मामर्थ्यते' क-ग । 5. 'पूर्वमादि-' क । 6. 'तिष्ठन्नासीनः प्रह्वो' ख । 7. '-ते' नास्ति ख । 8. 'च' नास्ति ख । 9. 'कारयतो' क-ग । 10. 'न' नास्ति ग ।

**त्रिः फलीकृतांस्तण्डुलांस्त्रिर्देवेभ्यः प्रक्षालयेदित्याहुर्द्वि-र्मनुष्येभ्यः सकृत् पितृभ्य इति ॥ ५ ॥**

फली[1]करणं तण्डुलानां कम्बूकापनयनं [2]छटनमिति प्रसिद्धम्[2]* । [3]त्रिः [4]कण्डने-[5]नैवापनीततुषान् [6]तण्डुलान् कृत्वा ततस्त्रिः फलीकृतान् छटितान् त्रिः प्रक्षालयेत्(A) देवेभ्यः देवदेवत्ये चरौ, द्विर्मनुष्येभ्यः मनुष्यदेवत्ये [7]चरौ, सकृत् पितृभ्यः पितृदेवत्ये ।

**पवित्रान्तर्हितांस्तण्डुलानावपेत् ॥ ६ ॥**

पवित्रमन्तर्धानं येषां तण्डुलानां ते पवित्रान्तर्हिताः । [8]तथा कृत्वा [9]तण्डुलान् आवपेत् [10]प्रक्षिपेत्, [11]कथं नाम ? चरुस्थाल्यां वा पवित्रमन्तर्धाय तण्डुलानावपेदिति[12] ।

पवित्रलक्षणन्तु—

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ इति ।
एतदेव हि पिञ्जुल्या लक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थं यत् तदप्येतावदेव तु ॥
एतत्प्रमाणमेवैके कौशीमेवार्द्रमञ्जरीम् ।
शुष्कां वा शीर्णकुसुमां पिञ्जुलीं परिचक्षते(B) ॥ इति ।

---

A. अत्र तर्कालङ्कारः—"तथा च स्मरणम्—

कण्डनं सेचनञ्चैव तथैवोलूखलक्रिया ।
सकृदेव पितृणां स्याद् दैवे त्रित्वं विधीयते ॥ इति ।

अन्ये त्वाहुः—'फलीकरणं...प्रसिद्धम् । सकृत्कण्डनेनैवापनीततुषान्...छटितान्' इति । तदिदं सकृत्कण्डनवचनमसङ्गतम्, दैवे त्रित्वमिति स्मरणात् । अपरे तु व्याचक्षते त्रिः फलीकृतान् त्रिधा वितुषीकृतान् कण्डनप्रच्छटनाभ्यामिति शेष इति, तदेतन्मनीषिभिश्चिन्त्यम्', इत्याह । अत्र पुनः 'अन्ये तु' इति पाठमुद्धृत्य अस्मद्भाष्यकारमेवाक्षिपति सः, परं यद्यप्यत्र पुस्तकान्तरे सकृदिति पाठो वर्तते तथाऽपि त्रिः कण्डनेनैवेति पाठयुक्तः पुस्तक एव प्रमाणत्वेन संगृहीतोऽस्माभिः । अत्र लेखकभ्रमसङ्कुलमपपाठमुपन्यस्यानालोच्य च पुस्तकान्तरं तादृशानामुपजीव्यानामुपरि दोषदानन्तु माक्षिकन्यायमेवाविष्करोतीति सुधियो निपुणं पश्यन्तु ।

B. कर्मप्रदीपः १।२।१०—१२ । अत्र प्रकाशकारः—

पवित्रं व्याकरोति । कुशस्य पत्रद्वयमन्तर्गर्भशून्यं साग्रं प्रादेशप्रमाणं सर्वत्र पवित्रं ज्ञेयम्,

---

1. '-कृतं' ग । 2. चिह्नितांशो नास्ति ख । 3. 'सकृत्' क । 4. 'खण्डने-' ख । 5. '-नैवापनीत-' क । 6. 'तण्डुलान्' नास्ति ख । 7. 'चरौ' नास्ति ख । 8. 'तान् पवित्रान्तर्हितान्' ख । 9. 'तण्डुलान्' नास्ति क-ग । 10. 'इति' ख । 11. 'कथं नाम' नास्ति ख । 12. 'इति' नास्ति ख ।

## कुशलशृतमिव स्थालीपाकं श्रपयेत् प्रदक्षिणमुदायुवन् ॥७॥

कुशलो निपुणस्तेन शृतमिव स्थालीपाकं श्रपयेत्। नोपदग्धं न मन्दशृतमिति(A)। प्रदक्षिणम् उत् आयुवन्। यु मिश्रणे, मेक्षणेनोर्द्धं प्रदक्षिणञ्चावघट्टय'न्निति। कुतः? "तस्मिन्नेवाग्नौ श्रपयत्योदनचरुं च मांसचरुं च पृथग् मेक्षणाभ्यामि"ति वक्ष्यमाणत्वात्(B)।

## शृतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ॥८॥

²शृतं सन्तं चरुम्। अभिघार्य आज्यस्य स्रुवेणाव'सिच्य ⁵उदक् अग्नेरुत्तरतः उद्वास्य उत्तार्य प्रत्यभिघारयेत् पुनरभिघारयेत्। एते च पवित्रान्तर्हिते स्याताम्(C)।

---

न तु प्रकृते अर्घ्यपात्रमात्रे। (१०) 'अथ सीमन्तमूर्ध्वमुन्नयति भूरिति दर्भपिञ्जुलीभिरेव प्रथममित्यत्र (सू २।७।५), अन्यत्र च चूडाकरणे एकविंशतिर्दर्भपिञ्जुल्य इति (सू २।९।४) सूत्रोक्तदर्भपिञ्जुल्या अपि एतदेव लक्षणमाचार्येणोक्तम्। तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते इति (१।७।१९) सूत्रोक्तमाज्योत्पवनार्थं यत् पवित्रं तदप्येतावत्संरूपमेव, न तु द्विवचननिर्देशाद् द्विदलद्वयरूपम्। द्विवचनन्तु कुशजातिवचनस्य पवित्रशब्दस्य दलद्वये प्रयोगात्। (११) एके पूज्याः प्रादेशप्रमाणामेव कुशमयीमार्द्रमञ्जरीं शुष्कां वा भ्रष्टपुष्पां पिञ्जुलीमाहुः। इयञ्च 'हरिता वै सपिञ्जुला' इत्यत्र ग्राह्या। अन्यत्र तु पवित्ररूपैवेति" इत्येवं व्याजहार।

A. तदुक्तं कर्मप्रदीपे—

स्वशाखोक्तश्च सुस्विन्नो ह्यदग्धोऽकठिनः शुभः।
न चातिशिथिलः पाच्यो न च वीतरसो भवेत्॥ इति २।५।१३

रघुनन्दनस्तु— "ताम्रमयी चरुस्थाली पायसचरावपि न निषिद्धा—
'पयोऽनुद्धृतसारञ्च ताम्रपात्रे न दुष्यति' इति स्मृतिसागरधृतवचनात्।

अत एव सारदातिलके—

ततश्च संस्कृतं वह्नौ गोक्षीरेण चरुं पचेत्।
मन्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके॥ इति चरुपाकमधिकृत्याऽऽह।

B. एवञ्च चतुर्थप्रपाठकीय(१६)निरुक्तसूत्रे मेक्षणशब्दपाठादत्रापि मेक्षणेनैवावघट्टयेदिति ज्ञातव्यमिति भाष्यकाराणामाशयः।

C. अत्र प्रमाणमाह गृह्यासंग्रहे कात्यायनः—

पवित्रान्तर्हितं कृत्वा चरुं प्राज्ञोऽभिघारयेत्।
उद्वास्य चैव विधिना एवं तन्त्रं न लुप्यते॥ इति। (२।९९)

---

1. -न्निति मेक्षणेनेति' ख। 2. 'च' नास्ति ख। 3. 'शृतं शृतितं' ख, 'शृतं चुतं चरुं' ग। 4. '-सिक्त' ख। 5. 'उदक्' ख।

**अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयात् पुरस्ताद् दक्षिणत उत्तरतः पश्चादिति ॥९॥**

उपसमाधानं 'समिद्धीकरणमुच्यते, अग्निमुपसमाधाय काष्ठादिना समिध्य, 'कुतः ? 'तस्मात् समिद्धे होतव्यमि'ति(A) वचनात्। कुशैः पूर्वासादितैः, समन्तं सर्वतः, परिस्तृणुयाद् विकिरेत्, पुरस्तादि'त्यनेन क्रमेण।

**सर्वतस्त्रिवृतं पञ्चवृतं वा ॥१०॥**

'सर्वासु दिक्षु, त्रिवृतं त्रिःकृत्वः पञ्चकृत्वो वा स्तृणुयात् इति वर्त्तते।

किञ्च—

**बहुलमयुग्मसंहतम् ॥११॥**

बहुलं बहुतृणम् अयुग्मं च तत् संहतं च अयुग्मसंहतम्। त्रिवृतं पञ्चवृतं 'वेत्यनेनैवायुग्मत्वे सिद्धे एकवृतस्यापि प्राप्त्यर्थमिदमुच्यते। तथा च गृह्यान्तरम्—

सकृत् 'त्रिर्वा प्रदक्षिणं प्रतिदिशमग्निं परि'स्तृणाति। इति।

संहतम् अन्तरान्तरदिक्ष्वपि संलग्नमित्यर्थः(B)।

---

अस्य व्याख्या चेत्थम्—प्राज्ञो बुद्धिमान्, उदगग्रेण पवित्रेण चरुमन्तर्हितं व्यवहितं कृत्वा चरुमध्ये उदगग्रं पवित्रं निधायेत्यर्थः, अभिघारयेद् घृतस्त्रुवेणाप्लावयेत्, चरुमुत्तरस्यां दिशि उद्वास्य उत्तार्य च पूर्वोक्तेनैव विधिना पुनरभिघारयेत्। एवंकृते तन्त्रम् अङ्गविस्तारो न लुप्यते। इति।

अत्र "चरुविधौ तु विद्याकरवाजपेयी—यत्र प्रयोजनाभावनिश्चयस्तत्रैव तदुपादानादिलोपः, यत्रानुष्ठानवेलायामेव पुरुषदोषेण प्रयोजनाभावो ज्ञायते तदा प्राक् तन्निश्चयाच् शास्त्रप्रापितः पदार्थो नियमापूर्वमात्रार्थमनुष्ठेय इति। अत एव यदा त्वालस्यादिना व्रीह्यादिस्थाने तण्डुला गृहीतास्तदाऽप्यवघातादि समाचरन्ति याज्ञिकाः, पठन्ति च—

घाते न्यूने तथा छिन्ने साद्गुण्ये मान्त्रिके तथा।
यज्ञे मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः॥ इति।

मान्त्रिके मन्त्रसाध्ये अवघातादौ न्यूने तत्काले मन्त्रपाठाभावेऽपि यज्ञकाले मन्त्राः पाठ्याः। अस्मिंस्तु मन्त्रार्थज्ञानस्य नास्त्युपयोगः" इत्याह संस्कारतत्त्वे रघुनन्दनः।

A. 'तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन'
इति कर्मप्रदीपवचनमुक्तं प्राक् तृतीयकण्डिकायाम्। (पृ० ९४)।

B. सूत्रस्यास्य व्याख्यायां तर्कालङ्कारः—'अयुग्मसंहतम्—युग्मञ्च संहतञ्च युग्मसंहतम्, तन्न भवतीत्ययुग्मसंहतम्, अयुग्ममसंहतञ्चेत्यर्थः। केचित् तथैव पठन्ति। असंहतमसंलग्न'

---

1. 'समवी-' ख। 2. 'कुतः' नास्ति ख। 3. '-दिति क्रमेण' ख। 4. 'पूर्वान्' क-ग। 5. 'चेत्यने-' ग-च। 6. 'त्रिस्त्रिर्वा' ख-ग। 7. 'परि' नास्ति ख।

[1]किञ्च—

## प्रागग्रैरग्रैर्मूला[2]नि च्छादयन् ॥ १२ ॥

पूर्वास्तृतानां कुशानां मूलानि बुध्नानि पश्चात् स्तृतैः प्रागग्रैः प्राक्तनैः, अग्रैर्न मध्यैर्न च बुध्नैः। छादयन् स्थगयन् स्तृणुयात् यक्तस्तावदयं परिस्तरणविधिः(A)।

---

पृथक् पृथगित्यनर्थान्तरम्। तदेवं प्रतिदिशमयुग्मैः परस्परमसंलग्नैर्बहुभिस्तृणैरेकं परिस्तरणं सम्पद्यते तस्य खल्वस्य त्रिः पञ्चकृत्वो वा करणमुपदिश्यते। इत्यर्थः'। 'यच त्रिवृतं पञ्चवृतं वा' इत्यनेनैवायुग्मत्वे सिद्धे अयुग्ममित्येकावृतस्यापि प्राप्त्यर्थम्, तथा च गृह्यान्तरम्—'सकृत्... स्तृणोति' इति रघुनन्दनादृतं भट्टनारायणादिमतं तदसङ्गतम्, न ह्येतद्विशेषार्थं सूत्रम्, किं तर्हि? परिस्तरणस्वरूपप्रतिपादनार्थम्, इत्यवोचाम, न खल्वदर्शिते परिस्तरणस्वरूपे त्रिवृतं पञ्चवृतं वेति समञ्जसं वचनम्, अदर्शिते हि स्वरूपे कस्य त्रिवृत् पञ्चवृद् वा उपदिश्येत। तदेवं स्थिते अयुग्ममित्यस्य कुत एवानुवादापत्तिः? येन तत्परिहारार्थमेकाऽऽवृत् परिकल्प्येत। कथमन्यथा बहुलमित्यत्रानुवादता परिहरणीया नित्यानुवादतया परिहारश्चान्यत्रापि समानः। गृह्यान्तरमपि प्रदक्षिणं परिस्तरणं विदधत् कौथुमादीनामन्यत्रावतिष्ठते। 'पुरस्ताद् दक्षिणत उत्तरतः पश्चात् इति (१।७।९) खल्वाचार्यः सूत्रयाञ्चकार' इत्येवं प्रणिजगाद। रघुनन्दनस्तु अग्निमुपसमाधायेत्यादिसूत्रेषु असंहतमिति पठित्वा व्याकरोत्येवम्—"उपसमाधाय ज्वालयित्वा समन्तं सर्वतः पुरस्तादित्यनेन क्रमेण सर्वतः सर्वासु दिक्षु त्रिवृतं पञ्चवृतं बहुलतृणकम्, अयुग्मं युग्मभिन्नम्, असंहतमसंलग्नं पृथक् पृथक् त्रिवृतं पञ्चवृतं वेत्यनेन अयुग्ममित्येकावृतस्यापि प्राप्त्यर्थम्। तथा च गृह्यान्तरम्—सकृत्...स्तृणोतीति, एवमेव भट्टनारायणचरणाः। तत्र सकृदावृतमशक्तविषयम्। इति। भवदेवभट्टस्तु अस्मद्भाष्यकारसम्मतसंहतशब्दार्थमुररीकृत्य "एकपत्रीकृतान्" इति स्तरणकुशान् विशिनष्टि। तदत्राऽऽस्तरणे कुशानां संहतत्वमसंहतत्वं वा सम्यगिति भगवन्तोऽनूचाना विचारयन्तु इति।

यत्तु रघुनन्दनभट्टाचार्यैरपि प्रमाणीकृतम् 'अयुग्ममित्येकावृतस्यापि प्राप्त्यर्थमि'ति भट्टनारायणवचनमसङ्गतमिति नितान्तार्वाचीनभाष्यकृता चन्द्रकान्तेनोक्तम्, तन्न मनोरमं भवितुमर्हति। तथा हि भवतु नाम सूत्रमिदं परिस्तरणस्वरूपप्रतिपादनार्थं तत्रापि 'बहुलम्' 'संहतम्' इति पदद्वयेनैव स्वरूपपरिज्ञानात् कृतमयुग्मपदोपन्यासेन, न हि अयुग्मपदोपन्यासं विना स्तरणस्वरूपपरिहानिः सम्भाव्यते, संहते युग्मत्वमयुग्मत्वं वा ग्राह्यमिति सन्देहस्तु त्रिवृतं पञ्चवृतं वेति पूर्वसूत्रादेव निवृत्तः स्यादिति तस्य वैयर्थ्यमनुवादता वा स्यादिति। निरुक्तपदद्वयी तु स्वरूपाधायिकेति नानुवादतामर्हति, तदनुक्तौ तदर्थप्रतिपादकपदान्तरासद्भावादिति सुधीभिरालोचनीयमिति।

A. अत्र रघुनन्दनः—"पूर्वास्तृतावृतानां मूलानि पश्चादावृताग्रैश्छादयन् परिस्तृणुयात्।

---

1. 'किञ्च' नास्ति क·ग। 2. '-न्याच्छादयन्' ख।

**पश्चाद् वास्तीर्य दक्षिणतः प्राञ्चं प्रकर्षति तथोत्तरेण(A) दक्षिणोत्तराण्यग्राणि कुर्यात् ॥ १३ ॥**

हस्तद्वयेन कुशान् गृहीत्वा। पश्चात् प्रकृतत्वादग्नेः, आस्तीर्य दक्षिणतः, प्राञ्चं प्रकर्षति प्रकिर¹ण्यति। तथा तेन प्रकारेण उत्तरतः, दक्षिणहस्तेन गृहीतानि कुशाग्राणि उत्तराणि उपरिष्टात् कुर्यात्, दक्षिणानि च तानि उत्तराणि दक्षिणोत्तराणि, अर्थात् सव्यगृहीतानि अधराणि भवन्ति। दक्षिणगृहीतैर्दक्षिणतः परिस्तृणाति सव्यगृहीतैरपि सव्यत इति(B)।

**एष परिस्तरणन्यायः सर्वेष्वाहुतिमत्सु ॥ १४ ॥**

ऋज्वर्थं सूत्रम्। ²सर्वेष्वाहुतिमत्सु इति वचनात् किं सायंप्रातर्होमादिष्वपि स्तरणं स्यात्, न; कुतः?

³"यान्यधःस्तरणाम्नानाम्न तेषु स्तरणं भवेत्।

एवञ्च प्रतिदिशं दर्भत्रयेणाऽऽवृतानि कृत्वा तेषां मूलानि तथैवाऽऽच्छाद्य तेषां मूलानि तथैवाऽऽच्छादयेत्" इत्याह।

A. अत्रैव सूत्रमेकं विभज्य दक्षिणेत्यादि सूत्रान्तरं पठतः सामश्रमी तर्कालङ्कारश्च।

B. तदत्र परिस्तरणमाह भवदेवभट्टः—"ततोऽग्नेः पूर्वत उत्तरान्ताद् दक्षिणान्तं यावदुप-मूललूनानेकपत्रीकृतान् प्रागग्रान् कुशान् अग्रेण मूलमाच्छादयन् वारत्रयमास्तरेत्। एवं दक्षिणस्यां पूर्वान्तात् पश्चिमान्तं यावत्। उत्तरस्यां पूर्वान्तात् पश्चिमान्तं यावत्, प्रतीच्याञ्चोत्तरान्ताद् दक्षिणान्तं यावत् परिस्तरेत्"। इति।

तर्कालङ्कारोऽपि स्वभाष्ये—"तदिदं परिस्तरणं पूर्वस्यामुत्तरान्ताद् दक्षिणान्तं यावत्, दक्षिणस्यां पूर्वान्तात् पश्चिमान्तं यावत्, यथा दक्षिणस्यां तथोत्तरस्याम्, यथा पूर्वस्यां तथा पश्चाद्दिशि कर्त्तव्यम्। कुतः पुनरेवमुच्यते कुशानां प्रागग्रत्वानुरोधात्। 'प्राचीसोऽग्यपराजिता' इति च स्मरणात्' इति वदन्ति" इत्येवमुदाजहार। यत्तु सिद्धान्तवागीशेन पुरोहितप्रदीपे भवदेवपाठं विपरिवर्त्य 'दक्षिणस्यां पूर्वान्तात् पश्चिमान्तं यावत्, प्रतीच्याञ्च दक्षिणान्तादुत्तरान्तं यावत्, एवमुत्तरस्याञ्च पश्चिमान्तात् पूर्वान्तं यावदि'त्येवं मुद्रितं तस्य कारणं "पुरस्ताद् दक्षिणत उत्तरतः पश्चादि"ति गोभिलसूत्रविरोधोऽस्त्यत्रेति न विद्मः। यदपि तत्रैव—'पूर्वापरं उदगग्रान् प्रागग्रान् दक्षिणोत्तरे' इति हयशीर्षवचनप्रामाण्यात् पूर्वस्यां पश्चिमायाञ्चोदगग्रान् कुशानास्तरेत्, दक्षिणस्यामुत्तरस्याञ्च पूर्वाग्रान् कुशान् यथाक्रममास्तरेदित्युक्तम्, तदप्यनुपादेयम्, "प्रागग्रैरग्रैर्मूलानि च्छादयन्" इति गोभिलसूत्रविरोधात्। गोभिलीयव्यतिरिक्तविषयकं वा निरुक्तवचनमित्यवगन्तव्यम्।

1. '-किरति' ख। 2. 'सर्वेषु' नास्ति ख। 3. 'यानधस्तरणा-' ग।

एककार्यार्थ[1]साम्यत्वात् परिधीनपि वर्जयेत् (A)।

[2]इति वचनात्[2]*। एवं चान्येष्वपि तत्प्रकृतिकेषु क्षिप्रहोमेषु नैव स्यात् (B)।

## परिधीनप्येके कुर्वन्ति शामीलान् पार्णान् वा ॥१५॥

कुशानां प्रतिनिधीनां चाभावे स्तरणार्थं परिधीनप्येके कुर्वन्ति। शामीलान् [3]शमीमयान्[3]*, पार्णान् [4]पलाशमयान्[4]*। परिधिस्वरू[5]पं विन्यासश्च[5]*—

[6]बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः।
त्रयो भवन्त्यशीर्णाग्रा एके[7]षान्तु [8]चतुर्दिशम् ॥
प्रागग्रावभितः पश्चादुदगग्रमथापरम्।
न्यसेत् परिधिमन्यश्चे[9]दुदगग्रः स पूर्वतः ॥ (C) [10]इति।

A. कर्मप्रदीपः १।९।८। अस्य प्रकाशोक्ता व्याख्या—"अग्निमुपेति (सू-१।७।९) स्तरणोपदेशात् पूर्वं यानि सायंप्रातर्होमादीनि गोभिलोक्तानि तेषु स्तरणं नास्ति, तथा तेषु परिधीनपि स्तरणवैकल्पिकान् 'परिधीनप्येके कुर्वन्ती'त्युक्तान् त्यजेत्, हेतुमाह—एककार्येत्यादि। यथा स्तरणस्य होमरूपकार्यार्थकत्वाद् अग्निवेष्टनं साम्यं तथा परिधीनामपि। अतस्तुल्यकार्यत्वात् परिधीनामपि निवृत्तिरि'ति।

B. यत्र पुनश्चरुर्न क्रियते तत्रापि परिस्तरणं न करणीयम्। ब्रह्मैव तत्र परिस्तरणस्थानीयो भवति।

तदाह गृह्यासंग्रहे कात्यायनः—

'ब्रह्माणं स्तरणं विद्याच्चरुर्यत्र न कल्पितः'। इति १।८७।

भवदेव-रघुनन्दनाभ्यां तु वचनमेतदनवमृष्यैवाऽऽचार्यपुत्रस्य क्षिप्रहोमवर्जं सर्वत्रैव होमे साधारण्येन स्तरणमुपदिष्टमिति, तदिदं स्तरणमाज्यतन्त्रहोमे कौथुम-राणायनीयानां कर्तव्यमकर्तव्यं वेति भगवन्तोऽनूचानाः प्रमाणयन्तु इति।

C. कर्मप्रदीपः २।९।१९-२० । अत्र प्रकाशकारः—"परिधीनिति सूत्रेण कुश-तत्प्रतिनिध्योरभावे परिधयः स्तरणार्थे विहिताः। शामीलान् शमीमयान्। 'बाहुमात्राः परिधयः' इत्यनेन तेषां स्पष्टीकरणं कृतम्। ते च त्रयो भवन्ति। एकेषान्तु मते चतुर्दिशम्, चत्वारो भवन्तीति। तेषां विन्यासप्रकारमाह—अग्नेः पार्श्वद्वये दक्षिणोत्तरतः परिधीन् विन्यसेत्। पश्चिमोत्तराग्रमथोत्तरम्। चतुर्थमन्यं यदि न्यसेत् तदा सोऽग्नेः पूर्वम् उत्तराग्रमारोप्ये"ति व्याचख्यौ। प्रकरणेऽत्र पवित्रं परिधिञ्च लक्षयित्वा परिधिं निषेधत्याचार्यपुत्रः—

1. '-मित्र्यात्' ख। 2. चिह्नितांशो नास्ति ख। 3. चिह्नितांशो नास्ति ख। 4. चिह्नितांशो नास्ति ख। 5. '-पं तु' ख। 6. 'बाहुमात्राः परिधयः' क। 7. '-षां च' ख। 8. 'चतुर्दिशं' ख। 9. '-दुदगग्रं' क। 10. 'इति' नास्ति ख।

## उत्तरतोऽपां पूर्णः स्रुवः प्रणीताः ॥१६॥

उत्तरतः प्रकृतत्वादग्नेः, अपाम् उदकस्य पूर्णः सम्भृतः, स्रुव उक्तलक्षणः, प्रणी[1]ता, [2]महतीर्वसतीवरीरित्याद्याः संस्कारविशेषादपि एवाभिधीयन्ते(A)। ताभि[3]श्च प्रणीताभिः पर्युक्षणपवित्रसम्मार्गादय उदकार्थाः कार्याः।

तथा च गृह्यान्तरम्—

[4]प्रणीताभिरुदकार्थः कार्य इति (B)। एवं चेदस[5]त्यन्यस्मिन् महति पात्रे स्रुवं स्याद्-दृष्टार्थत्वादेव तस्य।

[6]सति त्वन्यस्मिन् महति प्रणीतापात्रे किं स्रुवः स्यादुत नेत्यत आह—

## भावे न वा स्यादित्येके ॥१७॥

भावे [7]सम्भवे अन्यस्य पात्रस्य स्याद्वा, अदृष्टार्थं न वा स्यादित्येके। तदेतद् यथा-भिप्रेतम् (C)।

---

नवैः शोभनैरगर्भं पवित्रन्तु कुशाग्रजम्।

ललाटाच्चिबुकं प्राहुर्बाहुमात्राः परिधयः॥ गृ० स० १।८४।

परिधींस्तु न कुर्वीत गृह्याकर्मसु याज्ञिकः।

उदकाञ्जलयस्तित्रस्ते वै परिधयः स्मृताः॥ इति गृ० स० १।९६।

गृह्याकर्मसु परिधिस्थाने अदितेऽन्वित्यादिमन्त्रैरुदकाञ्जलिक्रियाणां कर्तव्यतैवेति भावः। यज्ञपार्श्वसंग्रहकारिकायान्तु परिधिप्रमाणमाह—

'श्रैपर्णान् परिधीन् कुर्याद् बाहुमात्रानपुष्करान्' इति।

A. प्रमाणमत्र लाट्यायनश्रौतसूत्रम्—"हविर्धानं प्रवेक्ष्यमाना वसतीवरीरनुप्रविशेयुः" (१।९।८) इति।

प्रणीताप्रोक्षणीपात्रयोर्लक्षणञ्चाऽऽह पारस्करगृह्यसूत्रभाष्ये गदाधरः—

यज्ञपार्श्वसंग्रहकारिकायाम्—

त्रिषडङ्गुलसंख्याको मूलदण्डो विकङ्कतः।
प्रस्थमात्रोदकग्राही प्रणीता चमसो भवेत॥
वैकङ्कतं पाणिमात्रं प्रोक्षणीपात्रमुच्यते।
हंसमुखप्रसेकञ्च त्वग्बिलं चतुरङ्गुलम्॥ इति।

B. प्रमाणत्वेनोपन्यस्तं गृह्यान्तरमिदं तर्कालङ्कारेणाऽप्यस्मिन् प्रकरणे।

C. सेयं विहितप्रतिषिद्धा प्रणीता गृह्याकर्मसु नोपकल्पयितव्या,
विहितप्रतिषिद्धां च प्रणीतां नोपकल्पयेत्। (१।९९)

---

1. '-ताप्रोक्षणी' ख। 2. 'महती-' ख, 'वसतीवरी'-ग। 3. 'च' नास्ति क-ग। 4. 'प्रणीताभि-' क, 'प्रणीताभि-' ग। 5. '-त्यस्मिन्' ग। 6. 'असति' ख। 7. 'अभावे' ग।

**बर्हिषि स्थालीपाकमासाद्येध्ममभ्याधायाऽऽज्यं संस्कुरुते,(A) सर्पिस्तैलं दधि पयो यवागूं वा ॥ १८ ॥**

'बर्हिषि स्तरणे²षु पुरस्तादात्मनः स्थालीपाकमासाद्य कृत्वा, इध्ममग्नाव³भ्याधाय देवतामन्त्रयोरनुपदेशादमन्त्रकमेवाऽऽधानमिध्मस्य (B)।

मन्त्रस्य देवतायाश्च प्रजापतिरिति 'स्थितिः(C)। इति चेत्'*, न ; कुतः ?

इध्मोऽप्येधार्थमात्रार्थैर्हविराहुतिषु स्मृतः (D)।

इति ⁵वचनात्। (E)आज्यं ⁶च वक्ष्यमाणेन विधिना संस्कुरुते, ⁷अज्यते इति आज्यं मुख्यं तावत् सर्पिर्घृतम्,(F) तदभावे तैलं तिलेषु भवं तैलम्, तदभावे दधि, इति गृह्यासंग्रहे कात्यायनेनोक्तत्वादिति। एवञ्च भवदेवरघुनन्दनादयोऽपि होमेषु प्रणीतां नोपकल्पयन्ते पद्धतिष्विति युक्तमेव।

A. अत्रैव सूत्रमेकं समाप्य सर्पिरित्यादि सूत्रान्तरं कल्पयेते सामश्रमि-तर्कालङ्कारौ।

B. तदुक्तं गृह्यासंग्रहे—

इध्मः सन्नहनादानं चरुश्रपणमेव च।
तूष्णीमेतानि कुर्वीत समस्तञ्चेध्ममाददेत् ॥ इति गृ० स० १।१०१।

C. व्याख्यातं प्राक् ( ९७ पृष्ठे )।

D. व्याख्यातं वचनमिदं प्राक् ५म-कण्डिका१५श-सूत्रपादटीकायाम्। ( पृ० १७८ ) अत्र "मात्रार्थै"रित्यत्र 'मेवाग्ने' रिति प्रकाशकारसम्मतः पाठः।

E. आज्यं व्याकरोति कात्यायनो गृह्यासंग्रहे—

अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा।
चतुर्भिश्च यत् पूतं तदाज्यमितरद् घृतम्' ॥ इति गृ० स० १।१०९।

एवञ्च 'उद्वहेत द्विजो भार्यामि'त्यादिवद् 'आज्यं संस्कुरुते' इत्यत्रापि भाविनि भूतवदुपचारो बोद्धव्य इति।

F. आज्यभेदमाह गृह्यासंग्रहे—

घृतं वा यदि वा तैलं पयो वा दधि यावकम्।
आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते ॥
आज्यानां सर्पिरादीनां संस्कारे विधिचोदिते।
अनधिश्रयणं दध्नः शेषाणां श्रयणं स्मृतम् ॥
यथा सीमन्तिका नारी पूर्वगर्भेण संस्कृता।
एवमाज्यस्य संस्कारः संस्कारे विधिचोदिते ॥ इति १०६।१८।

1. 'बर्हिःस्तरणेषु' ग। 2. '-षु' नास्ति ख। 3. '-भ्यादधाति' ख। 4. 'वचनात् प्राजापत्य इति चेत्' ख। 5. 'वचनात्' नास्ति ख। 6. 'च' नास्ति ख। 7. 'आज्यते इज्यते' ख-ग।

तदभावे पयः 'दुग्धम्, तदभावे यवागूं वा। यवागूस्वरूपम् अधस्तादुक्तम् (A)।
किञ्च—

**तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते ॥ १९ ॥**

²ततस्तस्मादेवाऽऽस्तीर्णशेषाद् बर्हिषः(B) प्रादेशमात्रे पवित्रे कुरुते। पवित्रलक्षणमुक्तम्। द्विवचनं द्व्यापेक्षम्। उक्तञ्च—

आज्यस्योत्पवनार्थं यत् तदप्येतावदेव तु। (C)इति।

**ओषधिमन्तर्धाय छिनत्ति न नखेन "पवित्रे स्थो वैष्णव्या"-विति ॥ २० ॥**

ओषधिर्व्रीह्यादिका, ³तामन्तर्धाया'ऽन्तरा कृत्वा(D)। 'पवित्रे स्थो वैष्णव्यावि'त्य-

A. प्रथमप्रपाठकस्य तृतीयकण्डिकायामष्टमसूत्रभाष्ये। (पृ० ५९)

( यवागूः 'लाप्सी' इति ख्याता )

'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इति चामरः।

B. 'विशाखानि प्रतिलूनाः कुशा बर्हिः' (१।५।१७) इति सूत्रोक्तबर्हिःसंज्ञककुशमुष्टेः, तथा च बर्हिषः स्कन्धस्थानं प्रति लूनानां कुशानां समष्टितः, ततः, यस्माद् गृहीत्वा स्तरणं कृतं तस्माद् गृहीत्वा इति भाष्यस्य सरलार्थः। अत्र यदुक्तं भवदेवभट्टेन "तत आस्तृतकुशादेव साग्रं कुशपत्रद्वयं गृहीत्वे'त्यादि, यच्च तदेव वाक्यं प्रतिध्वनितं रघुनन्दनेन 'तत एव बर्हिषः' इत्यादिसूत्रोपन्यासपुरःसरं तद्व्याख्यानमुखेन 'तत आस्तृतात् प्रादेशमात्रे विस्तृततर्जन्यङ्गुष्ठप्रमाणे' इत्यादि, तदत्यन्तमसङ्गतम्, विशाखानीत्याद्याचार्यसूत्रवैयर्थ्यापत्तेः। तथा हि यदि कुशबर्हिषोः समपर्यायत्वं स्यात् तर्हि सूत्रमिदं व्यर्थं स्यात्; अथ सूत्रेणानेन केषाञ्चिद् विशिष्टानां कुशानां बर्हिःसंज्ञा स्वशास्त्रप्रयोजनानुरूपा कृता तर्हि सर्वैरेव तन्मतानुसारिभिस्तदेवाङ्गीकृत्य व्याख्या कर्तव्या, न तत्र कोशान्तरं स्वकपोलकल्पितमर्थान्तरं वा प्रयोज्य नवोपेक्ष्य च शतशः प्रमाणवाक्यानां भट्टनारायणचरणानां व्याख्यानमुचितमन्यथोपदेष्टुं स्वे स्वे निबन्धे इति। शिष्टन्तु १।८।२६ सूत्रपादटीकायां द्रष्टव्यम्।

C. उक्तमिदं कर्मप्रदीपवचनम् १।७।६। भाष्ये ( पृ० २०४ )।

D. ओषधीराह कर्मप्रदीपः—

व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः।

यवाश्चौषधयः सप्त विपदं घ्नन्ति धारिताः॥ इति ३।७।१२।

तथा हि व्रीह्यादीनामेकामोषधिं मध्ये संस्थाप्य पवित्रच्छेदनं कर्तव्यमिति भाष्यकाराणामाशयः।

1. 'दुग्धम्' नास्ति ख। 2. 'तत् तस्मादेवा-' ग। 3. 'कामन्तर्धाया-' ख।

नेन (A)मन्त्रेण छिनत्ति वृश्चति। न नखेन[1] न करजेन।

**अथैने अद्भिरनुमार्ष्टि "विष्णोर्मनसा पूते स्थः" इति ॥२१॥**

अथानन्तरमेवाविमुञ्चन् 'एने पवित्रे अद्भिः प्रणीताद्भिः, सव्येन मूलप्रदेशे गृहीत्वा दक्षिणेनानुमार्ष्टि संमृजति।

(B) "'विष्णोर्मनसा पूते स्थः' इत्यनेन मन्त्रेण"* ।

**संपूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम् ॥ २२ ॥**

संपूय, प्रकृतत्वादाज्यम्। कथम्—

"पवित्रमन्तरा कृत्वा स्थाल्यामाज्यं समावपेत्।" (C)

इत्यनेन वक्ष्यमाणेन विधिना, उत्पुनाति शोधयति। उदगग्राभ्यां पवित्राभ्याम्।

कथमित्यत आह—

**अङ्गुष्ठाभ्यां चोपकनिष्ठिकाभ्यां चाङ्गुलीभ्यामभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति, "देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरि"ति सकृद् यजुषा द्विस्तूष्णीम् ॥२३॥**

अङ्गुष्ठाभ्यामिति द्विवचनं पाणिद्वयस्य प्राप्त्यर्थम्। एवमनेन प्रकारेणाभिसंगृह्य,

---

A. मन्त्रः—"ॐ पवित्रे स्थो वैष्णव्यौ"। मन्त्रस्यास्याऽऽकरस्थानं तु वाजसनेयी संहिता १।१२।

मन्त्रस्यास्य श्रीमन्महीधरकृता व्याख्या चेत्थम्—हे पवित्रे शोधके कुशद्वयरूपे युवां वैष्णव्यौ यज्ञसम्बन्धिनी स्थः भवथः, 'यज्ञो वै विष्णुर्यज्ञिये स्थः' इति श्रुतेः। इति।

B. मन्त्रस्यास्याऽऽकरस्थानं तु मैत्रायणी संहिता १।१।३।

C. अस्योत्तरार्द्धन्तु—

'एतत् सम्पूयनं नाम पश्चादुत्पवनं स्मृतम्' ॥ इति गृ० स० १।१२९।

रघुनन्दनस्तु "संपूय प्रकृतत्वादाज्यं 'पवित्र......समावपेत्' इत्येवं वक्ष्यमाणविधिना संपूयेति भट्टभाष्यम्। संपूय मक्षिकाद्यपनीयेति सरला। उत्पुनात्यूर्ध्वं शोधयेत्" इत्युक्त्वा वचनमिदं प्रमाणीकरोति।

1. 'न' नास्ति ख। 2. '-ते' ख-ग। 3. '-मेवावि-' ख। 4. 'एते' क-ग। 5. '-देशे' ख। 6. चिह्नितांशो नास्ति ख। 7. '-मन्तरं' ख, 'मन्तरेण' ग। 8. 'इत्येवं' ख।

प्रकृतत्वात् पवित्रे 'प्राक्शः प्राङ्मुखम्, [2]त्रिकृत्व उत्पुनाति देवस्त्वेति(A)। अनेनेति-करणान्तेन यजुषा सकृद् उत्पुनाति द्विस्तूष्णीम् (B)।

## अथैने[3] अद्भिरभ्युक्ष्याग्नावप्यर्जयेत्(C) ॥ २४॥

अथानन्तरमेवाविमुञ्चन्, [4]एने पवित्र अद्भिः प्रणीताद्भिः सव्येन गृहीत्वा दक्षिणेना-भ्युक्ष्य [5]अग्नावप्यर्जयेत्।

## अथैतदाज्यमधिश्रित्योदगुद्वासयेत् ॥२५॥

अथेत्यान[6]न्तर्ये। उत्पवनानन्तरमेव। एतदिति। [7]प्रथमकल्पासम्भवे तैला-दे[8]र्यस्याधिश्रयणं कर्तुं युक्तं तदेतदिति। घृततैलपयसामधिश्रयणं कुर्यात्। न

A. मन्त्रः—

ॐ देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः। इति।

मन्त्रोऽयं खादिरगृह्यसूत्रे ( १।२।१४। ) जैमिनिगृह्यसूत्रे ( १।१।२। ) च एवमेवोपलभ्यते, तैत्तिरीयसंहिताकाण्वशाखायां ( १।२।१।२। ) तु 'देवस्त्वा सविता पुनात्वि'त्यादिपाठभेदेन पठितः। मन्त्रस्यास्य व्याख्यायां गुणविष्णुः—"हे आज्य त्वा त्वां देवः दानादिगुणयुक्तः सविता अच्छिद्रेण अच्छिन्नाभ्याम् अव्यवच्छिन्नाभ्यां पवित्रेण आभ्यां पवित्राभ्याम् उत्पुनातु ऊर्ध्ववत् पवित्री करोतु अज्ञातकेशकीटादिसंसर्गदोषमपनयतु। किञ्च वसोः सूर्यस्य रश्मिभिः किरणै-स्त्वाम् उत्पुनातु, इति सम्बन्धः" इत्याह।

B. भवदेवकृता आज्योत्पवनप्रणाली तु—"तत आस्तरणकुशादेव साग्रं कुशपत्रद्वयं गृहीत्वा 'प्रजापतिऋर्षिः पवित्रं देवते पवित्रच्छेदने विनियोगः। ॐ पवित्रे स्थो वैष्णव्यौ' इति नखव्यतिरेकेण छित्त्वा 'प्रजापतिऋर्षिः पवित्रं देवतं पवित्रमार्जने विनियोगः' ॐ विष्णोर्मनसा पूते स्थः। इत्यनेनाभ्युक्ष्य ताम्रादिपात्रे उत्तराग्रं निधाय तत्र होमार्थं घृतं निक्षिपेत्। ततस्तत्-कुशपत्रद्वयमग्रे दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां मूले च वामहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा दक्षिण-हस्तोपरिभावेनाधोमुखन्यस्तपाणिः—प्रजापतिऋर्षिराज्यं देवता आज्योत्पवने विनियोगः, ॐ देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः स्वाहा इत्यनेन पवित्रद्वयमध्येन घृतमग्नौ सकृज्जुहुयात्। तूष्णीं वारद्वयम्। ततस्तत्कुशपत्रद्वयमद्भिरभ्युक्ष्याग्नौ प्रक्षिपेदित्येवं-रूपे"ति।

C. अग्नावप्यर्जयेदित्यत्र अग्नावभ्युत्सृजेदिति पठतः सामश्रमी तर्कालङ्कारश्च।

1. 'प्राक्शः' नास्ति ख। 2. 'त्रिकृत्पुनाति' ख। 3. '-ते' क-ग। 4. 'एते' क-ग। 5. 'अग्नौ प्रक्षिपेत्' ख। 6. '-नर्थार्थे' ख। 7. 'आज्यस्य घृताद्-' इति ख। 8. '-चकं कुर्वन्ति' ख।

दर्भः(A)। यवाग्वां तु विकल्पः। अधिश्रित्य अग्नेरुपरि कृत्वा। [1]उदग् उत्तरतः उद्वासयेदवस्थापयेदिति।

**एवमाज्यस्य संस्करणकल्पो भवतीति ॥ २६ ॥**

एवमनेन प्रकारेण, आज्यस्य संस्कारः कृतो भवतीति (B)।

इति [2]श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य[2]* सप्तमी कण्डिका।

---

A. अत्र प्रमाणमुक्तमूनविंशसूत्रपादटीकायाम्।

B. एवञ्च यत्र यत्राऽऽज्यं संस्क्रियते तत्र तत्रैवं कर्तव्यमित्यभिप्रायः। अत्र तर्कालङ्कार आह—'इतिः कण्डिकापरिसमाप्त्यर्थः स्रुवादिसंस्कारसमुच्चयार्थो वा। तथा च गृह्यान्तरम्—

'स्रुवं प्रतप्य दर्भैः संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यादि'ति।

कर्मप्रदीपोऽप्याह—

तेषां प्राक्शः कुशैः कार्यः सम्प्रमार्गो जुहूषता।
प्रतापनञ्च लिप्तानां प्रक्षाल्योष्णेन वारिणा ॥ इति ( १।८।१४ )

रघुनन्दनस्तु वचनस्यास्य व्याख्यामुखेनाऽऽह—"स्रुवस्रुचोर्व्यक्तिभेदाद् बहुवचनम्, पूर्वाभिमुखं मार्जनं कुशैः कार्यम्, घृतादिलेपवतां तु उष्णेन वारिणा प्रक्षालनपूर्वकमग्नौ प्रतापनं कार्यम्। लेपरहितानान्तु प्रतापनं दर्भैः सम्मार्जनमभ्युक्षणम्। पुनः प्रतापनमुत्तरतो निधानञ्च कुर्यात्। तथा च कात्यायनः—'स्रुवं प्रतप्य दर्भैः संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात्' इति। आज्यादिसंस्कारं वारत्रयं कुर्यादिति भवदेवभट्टः। हरिशर्मणाऽप्येतत्प्रकरणे सकृत् त्रिर्वेति वचनादित्युक्तम्। होमकाले पञ्चाङ्गुलांस्त्यक्त्वा शङ्खमुद्रया धार्यः स्रुवः—

पञ्चाङ्गुलान् बहिस्त्यक्त्वा धारयेच्छङ्खमुद्रया। इति वचनात्" इति।

---

1. 'उदग्' नास्ति क-ग। 2. 'गृह्यभाष्ये प्रथमस्य' ख। 'श्रीभट्टनारायणकृतौ' नास्ति ग।

## अष्टमी कण्डिका

पूर्वमाज्यमपरः स्थालीपाकः ॥ १ ॥

पूर्वस्यां दिश्यासाद्यते इति पूर्वमाज्यमासादयेदिति वाक्यशेषः। अपरस्यां पश्चिमतः आसाद्यते इत्यपरः स्थालीपाकः, आसाद्यते इति वर्तते। कस्मिन् देशे पतयोरासादनमित्युच्यते—अग्नेरुत्तरतः। कुतः? शृतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत् [ सू १।७।८ ] अथैतदाज्यमधिश्रित्योदगुद्वासयेदिति [ सू १।७।२४ ] च वचनात्।

उक्तञ्च—

प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः।
तत् तथासादयेद् द्रव्यं यद् यथा विनियुज्यते(A) ॥ इति।

सत्यम्, किन्तु उत्तरतो धर्ममात्रमासादनं कृत्वा पश्चाद्योगमासादयेत्। कुतः? क्रियानुगुण्यात् प्राक्[1]संस्थता[2]सम्पदर्थम्। इतरथा दक्षिण[3]संस्थं स्यात्(B)। तथा च गृह्यान्तरम्—[4]होमयोरन्तराज्यहविषी आसादयेत् पूर्वं चाज्यमिति(C)।

पर्युक्ष्य स्थालीपाक आज्यमानीय मेक्ष[5]णेनोपघातं होतु-मेवोपक्रमते ॥ २ ॥

अदिते अनुमन्यस्वे[6]त्येवं पर्युक्ष्य(D) स्थालीपाके चरौ आज्यमानीय प्रक्षिप्य, 'स्रुवमात्रमनादेश' इति वचनात् स्रुवमात्रम्। मेक्षणेन उपघातम् उपहत्य, [7]अवदायेत्यर्थः।

A. कर्मप्रदीपः १।८।१५। व्याख्यातमिदं १।६।२१ सूत्रे पाठटीकायाम्।

B. अत्र गृह्यासंग्रहे कात्यायनः—

आज्यस्य हविषां चैव आज्ये पूर्वक्रियाविधिः।
तस्य संपवनं पूर्वं चरोः पर्युक्षणं परम् ॥ इति। १।६।२९।

आज्यस्य आज्यस्थाने गृहीतानां हविषाञ्च मध्ये पूर्वं प्रथममेव संस्कारस्योत्पवनरूपस्य विधिर्विधानम्, न पुनः पश्चाद् गृहीतस्यापि, चरोस्तु परं केवलम्, परि सर्वतोभावेन उक्षणं प्रोक्षणमेव संस्कार इत्यर्थः। व्याख्या चास्यैवमिति।

C. प्रमाणीकृतं गृह्यान्तरमिदं रघुनन्दनेनापि संस्कारतत्त्वे।

D. पर्युक्षणमुक्तं तृतीयकण्डिकायाम् ( सू: १—४, पृ: ४०-६० )।

1. '-संस्थायाः' ख, 'संस्थता' नास्ति ग। 2. 'सम्पदर्थम्' क। 3. '-संस्थं' ख। 4. 'होमयोः' क। 5. '-णोपघातं' क-ग। 6. '-त्येवं' क-ग। 7. नास्ति ख।

'होतु'मेवोपक्रमते प्रारभेत। एवकारकरणमभिघातहोमे अभिघारकृताभ्यङ्गप्रतिषेधार्थम्। होतुमेवोपक्रमते, नान्यत् कुर्यादिति। कथं नाम? चरावाज्यमानीय प्रपद्यवैरूपान्तौ जपित्वा'*जुहुयादेवेति(A)।

## यद्यु वा उपस्तीर्णाभिघारितं जुहुषेत्(B) ॥ ३ ॥

यद्यु वा अथ वा उपस्तीर्णाभिघारितं स्रुचि आज्यमुपस्तीर्य यथोक्तहविरवदाय पुनराज्येनाभिघार्य "यद्धूयते तदुपस्तीर्णाभिघारितम्, तथा वा *जुहुषेत्, जुहुया"दिति। अथैतच्चिन्त्यते—"इच्छाविकल्पस्तावदयं न भवति, कुतः? अनयोर'समत्वात्, गुणविशेषे फलविशेष इति "च न्यायात्। तत्रैके आहुः—"अभावे विकल्पोऽयम्। उपस्तीर्णाभिघारित'"होमाशक्ता''दुपघातहोम इति। अन्ये त्वाहुः—

A. द्विविधः किल होमो याज्ञिकप्रसिद्धः—उपघात उपस्तीर्णाभिघारितश्च; चरावाज्यं निःक्षिप्य विनैवाभिघारणादिकं यद्धूयते स उपघातः, यच्च स्रुचि स्रुवेणाऽऽज्येनाभिघार्य चरुमवदाय पुनराज्येनाभिघार्य हूयते तदुपस्तीर्णाभिघारितमित्याख्यायते। स्रुवेण स्रुचि यदाज्यं प्रथमं गृह्यते तदुपस्तीर्णम्, हविरवदायानन्तरं यदाज्यं दीयते तदभिघारितम् इति व्यवह्रियते। यथा उपस्तीर्णाभिघारितं होतव्यं तदनन्तरसूत्रे व्युत्पादयिष्यति, यथोपघातहोमस्तदत्र सूच्यते।

तथा च गृह्यसंग्रहः—

पाणिना मेक्षणेनाथ स्रुवेणैव च यद्धविः।
हूयते चानुपस्तीर्य उपघातः स उच्यते ॥
यद्युपघातं जुहुयाच्चरावाज्यं समावपेत्।
मेक्षणेन तु होतव्यं नाऽऽज्यभागौ न स्विष्टकृत ॥ इति १।११०-११।

पाणिना मेक्षणेन वा स्रुवेणैव वा अनुपस्तीर्य उपस्तरणमभिघारणञ्चाकृत्वा यद्धविर्हूयते स खल्वयं होम उपघात उच्यते। यद्युपघातं जुहुयात् तदा स्थालीपाके चरावाज्यं प्रक्षिपेत् मेक्षणेन होतव्यमिति। ततोऽन्यत्र केवलाज्यहोमे नाऽऽज्यभागस्विष्टकृद्धोमौ भवत इति शेषपादव्याख्या कर्तव्या, आचार्यस्य आज्याहुतिष्वित्यादि(१।९।२२)सूत्रेण सहैकवाक्यतासंरक्षणार्थमिति।

B सूत्रेणानेनैव सह आज्यभागेत्यादिसूत्रान्तरमेकीकृत्य पठतः सामश्रमी तर्कालङ्कारश्च। विवृणोति चेत्थं तत्र तर्कालङ्कारः—'कश्चिदत्र जुहुषेदित्यत्र जुहुयादिति प्रकल्प्य सूत्रद्वयं कल्पयन्ति, तत्र च यद्यु वा...जुहुयादित्येकम्, आज्यभागौ...जुहुयादिति चापरसूत्रं मन्यन्ते, यद्यु वा इत्येतस्य चाथ वा इत्यर्थमाचक्षते' इति।

1. चिह्नितांशो नास्ति ख। 2. '-रूपौ-' ग। 3. 'भियते' क-ग। 4. 'जुहुषेत्' नास्ति ख। 5. 'इति' नास्ति ख। 6. 'इच्छया' ख। 7. '-युक्तत्वात्' ख। 8. 'च' नास्ति ख। 9. 'नाम-' ख। 10. 'होम' ख। 11. '-दुपघातितहोम' क।

[1]उत्तरसूत्रादेव पूर्वसूत्रोक्तस्योप[2]घातहोमस्य प्रतिरोधोऽनुमीयते। अपरे त्वाहुः—समशनीयादिपरार्थे[3]*चरुविषयोऽयमुपघातहोम इति। वक्ष्यति चान्वष्टक्ये कंसे चरुं समवदाय मेक्षणेनोपघातं जुहुयादिति [ सू ४।२।३७ ]। तथा चोक्तम्—

"चरौ समशनीये तु पितृयज्ञचरौ तथा।
होतव्यं मेक्षणेनान्यदुपस्तीर्णाभिघारितम्(A)। इति।"*

'अयं तु विशेषः'*—अन्वष्टक्यपितृयज्ञयोः क्षिप्रहोमधर्मः, समशनीये तु ब्रह्मोपवेशनादितन्त्रधर्म इति।

## आज्यभागावेत्र प्रथमौ जुहुयात् ॥ ४ ॥

एवकारकरण[5]मवधारणार्थम्। कथं? यत्र यत्र ब्रह्मोपवेशनादि तत्र तत्रोभयोरपि विकल्पयोराज्यभागौ प्रथमौ जुहुयादेवेति(B)।

---

A. कर्मप्रदीपः ३।७।९। "परिशिष्टप्रकाशधृतं स्मृत्यन्तरञ्च—

'चरौ तु बहुदैवत्ये होमस्तस्योपघातवत्' ॥ इति।

"वृषोत्सर्गहोमस्य तु बहुदैवतत्वेऽपि नोपघातत्वं भवति।

तदाह कर्मप्रदीपः—

एतेभ्य एव जुहुयान्मेक्षणेनावदाय च।
स्रुच्याहुतीश्चरोः पृथक् सिद्धेराज्याभिघारितम् ॥ इति
चतुर्गृहीतं कृत्वाज्यमाभिऋग्भिः पृथक् पृथक्।
स्वाहाकारावसानाभिर्जुहुयाद् विधिवत् सदा ॥ इति च"।

इत्याह तर्कालङ्कारः स्वभाष्ये।

B. अस्यां भाष्यकारोक्तव्यवस्थायां मतवैषम्यमुपस्थापयति तर्कालङ्कारः—

"सेयं निर्वासनिका व्यवस्था, कस्मात्? उपस्तीर्णाभिघारितेनानयोराज्यभागयोरेकवाक्यत्वात् प्रमाणविशेषस्य चाभावात्, यद्युपस्तीर्णाभिघारितं होतुमिच्छेदाज्यभागौ जुहुयादिति स्यादेकवाक्यता, न खलु भङ्क्त्वा वाक्यमन्यत्र कल्पयितुमुचितौ, आचार्यपुत्रश्चोपघातहोमे साक्षादाज्यभागौ निषिषेध; तच्चोदाहृतमस्माभिः पूर्वस्मिन् सूत्रे ( गृ० स० १।११०-११ )। वक्ष्यति चाऽऽचार्यः 'चाऽऽज्यभागौ न स्विष्टकृदिति"(१।९।२२) इति। अत्राऽऽचार्येणाऽऽज्यहोमप्रकरणे एव आज्यभागस्विष्टकृद्धोमयोर्निषेधः कृतः, न तु चरुहोमे इति। अत्र चरुहोमे एवं व्यवस्थायां नास्ति दोषः, तर्कालङ्कारपक्षपरिपोषकाचार्यसूत्रस्याऽऽज्यहोमविषयत्वाद् आचार्यपुत्रस्यापि तदनुवादकत्वात्। इति तर्कालङ्कारस्य कीदृशी सवासनिका व्यवस्था भवतीति जानाति स एवेति नात्र भाष्यकाराणां दोषलेशोऽपीति सुधीभिरवगन्तव्यम्। इति प्रदर्शितमस्माभिस्तद्व्याख्यानावसरे (पृ० २१७)।

---

1. 'उत्तरार्थे' इति ख। 2. '-घातित-' क-ख। 3. चिह्नितांशो नास्ति ख। 4. चिह्नितांशो नास्ति ख। 5. 'अवधारणार्थम्' नास्ति ख।

कथं जुहुयादित्यत आह—

## चतुर्गृहीतमाज्यं गृहीत्वा पञ्चावत्तन्तु भृगूणामग्नये स्वाहेत्युत्तरतः सोमाय स्वाहेति दक्षिणतः प्राक्शो जुहुयात् ॥५॥

चतुःकृत्वो गृहीतं 'चतुर्गृहीतम्'*, आज्यं प्रकृतम्, क गृहीत्वा ? स्रुचि। कुतः ? होमार्थत्वादेव तस्याः।

तथा च रौरुकीया श्रुतिः—"यस्य वै पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति, यस्य खादिरी न सोऽस्मात् परिच्यवत इति(A)। पञ्चावत्तं पञ्चगृहीतम्। भृगूणामिति पञ्चार्षेयाणामिति*। तथा च गृह्यान्तरम्—पञ्चावदानानि पञ्चार्षेयाणामिति(B)। कथं नाम चतुर्गृहीतमाज्यं गृहीत्वा भृगुत्वे सति पञ्चगृहीतम्। अग्नये स्वाहेत्यनेन मन्त्रेण उत्तरतः समिद्धस्याग्नेरुत्तरभागे*। प्राक्श इति प्राङ्मुखो जुहुयात्। पुनस्तथैव गृहीत्वा "सोमाय स्वाहेत्येवं दक्षिणतो दक्षिणभागे"* प्राक्श एव। एतस्मादेवान्यत्रापि द्रष्टव्यम्। प्राक्श एव जुहुयादिति वर्त्तते।

## अथ हविष उपस्तीर्यावद्यति ॥ ६ ॥

अथानन्तरमेव हविषः चरोः अवद्यति अवदानानि गृह्णातीति। किं कृत्वा ? उपस्तीर्य, प्रकृतत्वादाज्येन। कथमित्यत आह—

A. प्रमाणीकृतेयं श्रुतिस्तर्कालङ्कारेणापि 'इति च रौरुकीयसमाम्नाये श्रवणात्' इत्युपोद्घातेन।

B. प्रमाणत्वेनोपन्यस्तं गृह्यान्तरमिदं स्वभाष्ये तर्कालङ्कारेण। 'भृगूणां भृगुगोत्राणामिति सरला, पञ्चार्षेयाणामिति गृह्यान्तराद् भार्गवप्रवराणामिति भट्टभाष्यम्, भृगुगोत्राणां भार्गवप्रवराणामिति भवदेवभट्टः' इत्याह रघुनन्दनः संस्कारतत्त्वे। 'पञ्चावदानानि पञ्चार्षेयाणाम्' इति गृह्यान्तरम्। स्मरन्ति चापरे—

जामदग्न्या वत्सविदार्ष्टिषेणास्तथैव च।
भार्गवाश्च्यवना और्वाः पञ्चावत्तिन ईरिताः॥

इत्यप्याह तर्कालङ्कारः स्वभाष्ये।

1. चिह्नितांशो नास्ति ख। 2. 'यानग्रथ एव श्रुतिः' ख। 3. 'तस्य पार्णमयी' ख। 4. 'पापीयं श्लोकं' ख। 5. चिह्नितांशो नास्ति क-ग। 6. '-नि उत्तरार्धे उत्तरभागे' ख। 7. 'इति' नास्ति क-ग। 8. 'सोमायेति दक्षिणभागे' ख। 9. 'एव' नास्ति क-ग। 10. 'एव' नास्ति क-ग। 11. 'वर्त्तते' नास्ति क-ग। 12. 'हविषश्चरोः' ख। 13. 'अवदाने' इत्यधिकं क-ग।

**[1]मध्यात् पूर्वार्द्धात् चतुरवत्ती चेद् भवति [2]मध्यात् पूर्वार्द्धात् पश्चार्द्धादिति पञ्चावत्ती चेद् भवति ॥ ७ ॥**

मेक्षणेन [3]मध्यादवद्यति अथ पूर्वार्द्धात् चेद् यदि चतुरवत्ती भवति चत्वारि अवदानानि अर्हतीति चतुरवत्ती। पञ्चावत्तीत्वे सति [4]पश्चिमार्द्धादधिकमवदानं सम्प[5]द्यर्थम् (A)।

**अभिघारयत्यवदानानि प्रत्यनक्त्यवदानस्थानान्ययातयामतायै ॥ ८ ॥**

अभिघारयति। [6]तानि स्रुचि गृहीत्वा[6]*, तानि अवदानानि। बहुवचनं त्रिर्हो[7]म-पत्तापेक्षम्[7]*। भूम्नपेक्षया प्रति अनक्ति अभ्यङ्गं करोति। अवदानस्थानानि। यस्मात् प्रदेशाद् अवदानानि गृहीतानि [8]इति। कस्मात्? अयातयामतायै। यातयामता स्वाधिकारायोग्यता। न यातयामता अयातयामता, तस्यै [9]अयातयामतायै(B)।

**अग्नये स्वाहेति मध्ये जुहुयात् (C)सकृद् वा त्रिर्वै तेनैव कल्पेन ॥ ९ ॥**

निगदव्याख्यातम् [10]एतत् सूत्रम्। [11]त्रित्वपक्षाशक्तौ सकृदिति। अभावविकल्पोऽयम्। इत[12]रथा को हि दैव[12]*शासः सकृत्कृत्ये सति बहुव्ययं त्रिहोममङ्गीकरोती[13]ति(D)।

---

A. अत्र तर्कालङ्कारः—'तथा च गृह्यान्तरम्—मध्यात् पूर्वार्धाच्च हविषोऽवद्यति इति। चेद् यदि चतुरवत्ती भवत्यवदाता, तर्हि चरोर्मध्यात् पूर्वार्धाच्चावद्यति इति गतेन सम्बन्धः, एवं सत्याज्याभिघारणं चावदानद्वयं पुनरभिघारणञ्चेति चत्वार्यवदानानि सम्पद्यन्ते, यदि पुनः पञ्चावत्ती भवत्यवदाता तदा चरोर्मध्यात् पूर्वार्धात् पश्चिमार्धाच्चावद्यतीत्यर्थः। मध्यादित्यत्र मध्यमादिति केचित् पठन्ति' इत्येवं व्याचख्यौ।

B. एवञ्च यस्मात् स्थानान्मेक्षणेन चरुर्गृहीतः, तत् स्थानं घृतस्रुवेणाऽऽप्लावयति यागायोग्यतानिवारणायेत्यर्थः।

C. एतदन्तं सूत्रमेकं कल्पयित्वा सकृदित्यादि सूत्रान्तरं कल्पयतः सामश्रमी तर्कालङ्कारश्च।

D. अत्र केचिद् 'एका देयास्तिस्रो देयाः' इत्यादिवद् श्रेयसो भूयस्त्वं कल्पयितव्यमिति ब्रुवन्ति।

---

1. 'मध्यमात्' ख-ग। 2. 'मध्यमात्' ख-ग। 3. 'मध्यादवद्यति' नास्ति क-ग। 4. 'पश्चार्द्धा-' ख। 5. '-द्यर्थः' ख। 6. चिह्नितांशो नास्ति ख। 7. '-मापेक्षम्' ख। 8. 'इति' नास्ति ख। 9. 'अयातयामतायै' नास्ति क-ग। 10. 'एतत्' नास्ति ग। 11. 'नित्य-' ग। 12. '-रथा हि सदैव' क-ग। 13. 'इति' नास्ति क-ग।

अथ स्विष्टकृत उपस्तीर्यावद्यत्युत्तरार्द्धपूर्वार्द्धात् सकृदेव भूयिष्ठं द्विरभिघारयेत् ॥ १० ॥

अथेति विशिष्टमानन्तर्यं द्योतयति। कथम्? यद् वक्ष्यति "प्राक् स्विष्टकृत आवापः" इति [ सू १।८।१४ ], यथा शतायुधाये[1]त्याहुतयो [सू ३।८।१०] गोनामानि [सू ३।८।३] च सर्वप्रायश्चित्तादीनि वक्ष्यत्ये[2]व। तद् हुत्वाऽथानन्तरं स्विष्टकृतोऽवद्यति(A)। किं कृत्वा? उपस्तीर्य उत्तरार्द्धपूर्वार्द्धाद् उत्तरपूर्वकोणात्, सकृदेव एकवारमेव। भूयिष्ठं बहुतरम्। द्विरभिघारयेद् यथा चत्वार्यवदानानि भवन्ति(B)।

यद्यु पञ्चावत्ती स्याद् द्विरुप[3]स्तीर्यावदाय द्विरभिघारयेत् ॥ ११ ॥

ऋज्वर्थं [4]सूत्रम्। द्विरुपस्तरणम्, द्विरभिघारणम्, एवं पञ्चावदानानि हविरवदानेन [5]सह भवन्ति।

न प्रत्यनक्त्यवदानस्थानं यातयामतायै ॥ १२ ॥

[6]एतदपि ऋज्वर्थमेव[6]*। यातयामताया इति हेतुवचनाद् [7]यत्र यातयामतेष्यते तत्र "न प्रत्यनक्त्यवदानस्थानम्"* (C)। यथा समशनीय-वास्तुकर्म-बलिषु।

अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धपूर्वार्द्धे जुहुयात् ॥ १३ ॥

[9]उक्तार्थमेतत्।

महाव्याहृतिभिराज्येनाभिजुहुयात् ॥ १४ ॥

A. अत्र तर्कालङ्कारः—"अथ प्रधानहोमानन्तरं स्विष्टकृदर्थमवद्यति। आज्यस्रुवेण स्रुचमाप्लाव्य, अपराजिताया दिश इति।"

B. तथा च प्रागुपस्तरणं ततश्चरुस्थापनं पुनर्घारद्वयं घृतस्रुवदानमिति चत्वार्यवदानानि भवन्तीति ज्ञेयम्।

C. तथा हि तत्र स्विष्टकृद्धोमानन्तरं चरुणा होमान्तराभावाद् नाऽऽज्यस्रुवेणाऽऽप्लावयति चरुग्रहणस्थानमिति।

1. '-त्याज्याहुतयो' ख-ग। 2. '-वं' ख। 3. '-स्तिर्या-' क। 4. 'सूत्रम्' नास्ति ख। 5. 'सह' नास्ति ख। 6. 'स्पष्टार्थमेतत्' ख। 7. 'यथायातयाम-' ख। 8. 'तथावदानस्थानं प्रत्यनक्ति' क। 9. 'उक्तार्थमेतत्' नास्ति ख।

भूर्भुवः स्वरिति तिस्रो महाव्याहृतयः प्रसिद्धास्ताभिराज्ये'नाभिजुहुयात्। स्विष्टकृद्वर्ज्जमयं होमः स्रुवेण।

होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः(A)। इति वचनात्।

यास्तु प्राक् स्विष्टकृतो महाव्याहृतयः सर्वप्रायश्चित्तार्थास्ताश्च तिस्रो भवन्ति। भूर्भुवः स्वः स्वाहेति चतुर्थी। सा चाज्ञातप्राजापत्याभ्यां सह ²विकल्प्यमाना द्रष्टव्या। कुतः? श्रुतौ तस्यास्ताभ्यां ³सह विकल्पोपदेशात्। तस्मा'देतामेव जुहुयादपि वाज्ञातं यदनाज्ञातमि'त्यादि (B)।

कर्मप्रदीपे च—

यत्र व्याहृतिभिर्होमः प्रायश्चित्तार्थको भवेत्।
चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे ⁶यथा॥
अपि वाज्ञा'तमित्येषा प्राजापत्याऽपि वाहुतिः।
होतव्या, त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः(C)॥

---

A. कर्मप्रदीपः। ( उक्तं विवृतञ्च प्रमाणमिदं १।३।६ सूत्रे पृ० ९३ )। अत्र तर्कालङ्कारः—"कर्मप्रदीपोऽप्याह—

भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः। इति।

...स खल्वयं महाव्याहृतिहोमश्चरुहोमात् परस्तादेव कर्तव्यः, न तु पुरस्तादपि। कस्मात्? इदानीमेवोपदेशात्। आज्यहोमात्तु पुरस्तात् परस्ताच्च कर्तव्य इत्युपरिष्टाद् वक्ष्यति।

B. आज्ञातं यदनाज्ञातं यज्ञस्य क्रियते मिथु।
अग्ने तदस्य कल्पय त्वं हि वेत्थ यथायथम्॥

मन्त्रोऽयं गुणविष्णुना स्वीये छान्दोग्यमन्त्रभाष्ये (२।८) एवमेव पठितो व्याख्यातश्च। षड्विंशब्राह्मणे ( १।६।१९ ) तु 'अज्ञातं यदना'—इत्येवमुपलभ्यते। तैत्तिरीयब्राह्मणे ( ३।७।११।५ ) तु 'अनाज्ञातं यदाज्ञातं...यथातथम्' एवं पाठः। आपस्तम्बश्रौतसूत्रे ( ३।१२।१ ) तु 'अज्ञातमनाज्ञातं...यथातथम्' इत्येवं पठितः। गुणविष्णुकृता व्याख्या चास्येत्थम्—श्रुत्या यत्र यन्नियुक्तं तदाज्ञातम्, अन्यदनाज्ञातम्, अस्य यज्ञस्य यदाज्ञातं यच्चानाज्ञातं मिथु अन्योन्यम्, अत्र नियुक्तमन्यत्र, अन्यत्र नियुक्तमत्र क्रियते, तदस्य यज्ञस्य हे अग्ने त्वं कल्पय समर्थय यथायोगं प्रापय। हि यस्मात् त्वं यथायथं यथास्वं वेत्थ जानासीति।

C. छन्दोगपरिशिष्टम् २।८।१०-११। अत्र रघुनन्दनः—"अथ प्रायश्चित्तम्—होमानन्तरं कर्मवैगुण्यसमाधानार्थं प्रायश्चित्तं गोभिलानुक्तमपि तत्परिशिष्टोक्तं कुर्यात्। तद् यथा—'यत्र व्याहृतिभिः'

---

1. 'अभि' नास्ति क-ग। 2. 'वि' नास्ति ख। 3. 'सहाविकल्पो-' ख। 4. '-तामेव' ख। 5. 'आदि' नास्ति ख-ग। 6. 'तथा' क। 7. '-नमेतयो' ग।

[1]इति। एवमेतत् सर्वप्रायश्चित्तं त्रिप्रहोमवर्जं सर्वत्र स्यात्, [2]कुतः? यच्चावगतं यच्चानवगतं सर्वस्यैव एव प्रायश्चित्तिरिति श्रुतेः(A)। यत्र स्विष्टकृन्न भवति तत्र स्विष्टकृत्स्थानीयाया आहुतेः पूर्वमेव स्यात्। अत्र केचिद् यज्ञतन्त्रानभिज्ञाः 'पाहि नो

---

इति। यत्र प्रायश्चित्तरूपो महाव्याहृतिहोमो विधीयते तत्र चतस्र आहुतयो होतव्याः, यथा विवाहे। तथा च गोभिलः—महाव्याहृतिभिः···( सू २।१।२४-२९ )। अस्यार्थः—भूराद्याभिर्व्यस्ताभिस्तिसृभिस्तिस्र आहुतीः भूर्भुवःस्वः स्वाहेति समस्ताभिश्चतुर्थीमाहुतिं जुहुयात्। अपि वा, अथ वा 'आज्ञातं यदनाज्ञातमि'ति मन्त्रेणाऽऽहुतिर्होतव्या प्रजापतये स्वाहेति वा प्रायश्चित्तविधिर्विकल्पत्रयवान् मुनिभिः स्मृत इत्यनेन पक्षान्तरं निरस्तम्। ततश्च भवदेवभट्टोक्तप्रायश्चित्तात्मकशाट्यायनकहोमो निष्प्रमाणकः, भट्टनारायणैर्गोभिलभाष्ये तदप्रमाणीकृतत्वात्।...आज्यद्रव्यकहोमत्वेन पूर्वापरं महाव्याहृतिहोमः। तथा च गोभिलः—आज्याहुतिष्वनादेशे···( सू १।९।२३ )। एवञ्च तिसृभिर्महाव्याहृतिभिर्हुत्वा व्यस्तसमस्ताभिः प्रायश्चित्तरूपाश्चतस्र आहुतीर्हुत्वा तिसृभिर्महाव्याहृतिभिर्हुत्वा समित्प्रक्षेपेण प्रायश्चित्तं समापयेदिति।

अत्र तर्कालङ्कारः—"याश्च प्रायश्चित्ताहुतयस्ता अपि स्विष्टकृद्धोमादर्वागेव होतव्या इत्येके मन्यन्ते, तदसङ्गतम्; तासामप्रधानत्वात्, आगन्तुकानामन्त एवाभिनिवेशस्य न्याय्यत्वाच्च। आगन्तुकाः खल्वेता आहुतयः प्रायश्चित्तरूपत्वात्। प्रायश्चित्ताहुतयो हि प्रकृतहोमवैगुण्यदोषोपशमनाय विधीयन्ते इति प्रकृतहोमात् परत एव होतुमुचिताः, महाव्याहृतिहोमान्तेनैव हि प्रकृतहोमनिष्पत्तिः, तस्मान्महाव्याहृतिहोमं कृत्वा कर्मापवर्गविहितां समिधमाधाय प्रायश्चित्ताहुतयो होतव्याः। ताः खल्वेता हविषोऽनादेशादाज्येनाऽऽज्यतन्त्रेणैव हूयन्ते।

स खल्वयं प्रायश्चित्तहोमो व्यस्तसमस्तमहाव्याहृतिभिर्वा आज्ञातमित्यादिमन्त्रेण वा प्राजापत्यमन्त्रेण वा कर्त्तव्यः। कुतः? तस्मादेतामेव जुहुयादपि वाज्ञातं यदनाज्ञातमित्येवमादिकायां श्रुतौ विकल्पोपदेशात्।

व्यक्तमाह कर्मप्रदीपो यत्र व्याहृतिभिरित्यादिना। तदत्र 'त्रिकल्प' इत्यनेन कल्पान्तरस्य प्रतिषेधोऽवगम्यते। केचित् पुनरत्र पाहि नोऽग्न एनसे स्वाहेत्यादिकं प्रायश्चित्तहोममाचक्षते, तदसारम्; इह तस्यानुपदेशात्। यदपि शाट्यायनकं कुग्रन्थान्तरमपपाठभूतमधीयते तदप्यप्रमाणम्, अनार्षत्वात्, परिशिष्टमध्यान्तःपातित्वासम्भवाच्च, इति भट्टनारायणोपाध्यायाः। शाट्यायनहोमस्य समूलत्वेऽपि शाखान्तरीयत्वमिति तत्त्वकारः, शाट्यायनपठितहोमः शाट्यायनिनां स्यान्न कौथुमादीनामिति युक्तमस्य शाखान्तरीयत्वम्; कौथुमादीनान्तु कर्मप्रदीपोक्त एव प्रकार इति नैवात्र किञ्चिद् वक्तव्यमस्ति" इति।

A. प्रमाणीकृतेयं श्रुतिस्तर्कालङ्कारेणापि स्वभाष्ये 'श्रुतिश्चात्र भवती'त्युपोद्घातेन।

---

1. 'इति वचनात्' नास्ति क-ग। 2. 'कुतः' नास्ति ग।

अग्न एनसे स्वाहेत्यादिकं प्रायश्चित्त[1]मधिकं कुर्वन्ति, तत् तेषां बाल[2]क्ष्वेडितवदनर्थकं मन्यामहे(A)। कुतः? श्रुताविह च तस्यानुपदेशात्। यत्तु "केचित् [3]शाट्यायनकं कुग्रन्थान्तरम् अपपाठभूतमधीयते, तदप्यप्रमाणम्। कुतः? अनार्षत्वा[5]च्च परिशिष्ट[6]मध्यान्तःपातित्वासम्भवा[7]च्च तस्य। तस्मात् प्रायश्चित्तार्थाश्चतस्र एव भवन्ति। स्विष्टकृदूर्ध्वं तु तिस्र एव [8]भवन्ति।

---

A. अत्र भवदेवभट्टधृतः 'पाहि नो' इत्यादिमन्त्रवत् शाट्यायनहोमसम्वलितः प्रायश्चित्त-होमः प्रदर्श्यते। "यदि तु प्रकृते कर्मणि चरुहोमोऽस्ति तदा महाव्याहृतिहोमस्याऽऽज्यतन्त्रोपक्रम-विहितत्वात् प्रथमं महाव्याहृतिहोमो न कर्तव्यः, अन्ते तु कर्तव्य एव विहितत्वात्। अतः प्रकृतं कर्म समाप्य पुनर्व्यस्तसमस्तमहाव्याहृतिहोमं कृत्वा प्रादेशप्रमाणां घृताक्तां समिधं तूष्णीमग्नौ प्रक्षिप्य शाट्यायनहोमादिवामदेव्यगानान्तमुदीर्य्यं सर्वकर्मसाधारणं कर्म करणीयम्......। ततः स्रुवेणाऽऽज्यं गृहीत्वा शाट्यायनहोमरूपप्रायश्चित्तहोमं कुर्यात्। तद् यथा—प्रजापतिऋ'षिरग्नि-र्देवता प्रायश्चित्तहोमे विनियोगः, ॐ पाहि नो अग्न एनसे स्वाहा ( तै० आ० १०।५।१ ), प्रजापतिऋ'षिर्विश्वेदेवा देवता प्रायश्चित्तहोमे विनियोगः, ॐ पाहि नो विश्ववेदसे स्वाहा ( तै० आ० १०।५।१ ), प्रजापतिऋ'षिर्विभावसुर्देवता प्रायश्चित्तहोमे···, ॐ यज्ञं पाहि विभावसो स्वाहा ( तै० आ० १०।५।१ ), प्रजापतिऋ'षिः शतक्रतु···, ॐ सर्वं पाहि शतक्रतो स्वाहा ( तै० आ० १०।५।१ ), प्रजापतिऋ'षिरनुष्टुप्छन्दोऽग्निर्देवता···ॐ पाहि नो अग्न एकया पाह्युत द्वितीयया। पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभिर्वसो स्वाहा ( सा० स० पू० १।४।२ ), प्रजापतिऋ'षिर्गायत्री छन्दोऽग्निर्देवता...ॐ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा। पुनर्न पाह्यं हसः स्वाहा। ( सा० स० उ० ९।२।८ ), प्रजापतिऋ'षिरनुष्टुप् छन्दो...ॐ सहर्जा निवर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्न्या विश्वतः परि स्वाहा। ( सा० स० उ० ९।२।८ सहरय्या इति पाठः )

प्रजापतिऋ'षि···ॐ आज्ञातं यदनाज्ञातं···।

प्रजापतिऋ'षिः पङ्क्तिश्छन्दः प्रजापतिर्देवता···ॐ प्रजापते नत्वदेतान्यन्यो विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ( म० ब्रा० २।५।८ ) इति सर्वत्राऽऽज्येन जुहुयात्। ततः प्रादेशप्रमाणां घृताक्तां समिधं तूष्णीमग्नौ हुत्वा पूर्ववदेव महाव्याहृतिहोमं समित्प्रक्षेपञ्च कुर्यादिति।

---

1. '-मग्नेऽधिकं' ख। 2. '-क्ष्वलित-' ख। 3. 'कश्चित्' ख। 4. 'शाट्यानकं' क ख। 5. 'च' नास्ति ख। 6. 'मध्य' नास्ति ख। 7. 'च' नास्ति ख। 8. 'भवन्ति' नास्ति ग।

## प्राक् स्विष्टकृत आवापः ॥ १५ ॥

आ उप्यते इति आवापः [1]प्रक्षेपः, स प्राक् स्विष्टकृतो भवति(A)। यथा शतायुधायेत्यादयः(B)। कश्चिद्[2]आह अलक्ष्मीनिर्णोद-पूर्णहोमयोरावापो नित्यचरु[3]स्तन्त्रेणेति। [4]तदयुक्तम्; न हि नित्य-काम्ययोरङ्गाङ्गिभावः(C)। न चानङ्गस्य "तन्त्र मध्यपाति"[5]त्वम्। तस्मादयुक्तमेतत्।

## गणेष्वेकं परिसमूहनमिध्मो बर्हिः पर्युक्षणमाज्यमाज्यभागौ च ॥ १६ ॥

प्रति"[6]प्रधानम् इतिकर्त्तव्यताप्राप्तौ [7]यत् तन्त्रेण कर्त्तुं शक्यते, तस्य न्यायप्राप्तस्य तन्त्रभाव उच्यते। यथा समशनीय-श्रवणाकर्मापूपाष्टका-शाकाष्टकादीनां गणानां भवती"[8]ति। गणशब्देनेह तन्त्रमुच्यते। तेषु एकमेव परिसमूहनं न [9]प्रतिद्रव्यम्। एकशब्दः प्रत्येकमभिसम्बध्यते। एक इध्म इत्यादि(D)।

---

A. अत्र तर्कालङ्कारः—"प्राक् पूर्वं स्विष्टकृतः स्विष्टकृद्धोमात्, आ उप्यते इत्यावापः प्रधानहोमः कर्तव्य इति सूत्रशेषः। एवञ्च मुख्यहोमे त्वकृते यदि चरुर्नष्टो दुष्टो वा भवति तदाऽन्यः पाच्यः, मुख्ये कृते चेन्नाशदुष्टी स्यातां तदा आज्येनैव स्विष्टकृद्धोम इति सरला। मुख्यहोमार्थमवत्ते हविषि च नष्टे दुष्टे वा खल्वाज्येन होतव्यं न पुनरवदातव्यं नवाऽन्यत् पाच्यम्। कुतः? 'निर्देशाद्वा अन्यदागमयेत्' इति सिद्धान्तात्। 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुर्वा अपहरेयुर्वा, आज्येन ता देवताः परिसंख्याय यजेरन्' इति च हविषो नाशे आज्यविधानात्। तत्र सर्वशब्दस्य निमित्तविशेषणत्वेनाविवक्षितत्वान्नाशमात्रे सर्वत्राऽऽज्यस्य विधिरित्यधिकरणमालायां माधवाचार्याः" इत्युक्तवान् स्वभाष्ये। मुख्यहोमादर्वागनन्तरं वा चरौ नष्टे दुष्टे किं कर्तव्यमित्यत्र किमपि नोक्तमस्मद्भाष्यकृद्भिरिति। तदत्र सरलामाधवाचार्ययोर्विरोधे भगवन्तोऽनूचानाः प्रमाणमिति।

B. "तस्य मुख्यां हविराहुतिं हुत्वा चतसृभिराज्याहुतिभिरभिजुहोति शतायुधायेत्येतत्प्रभृतिभिः" इति (गो० सू० ३।८।१०) द्रष्टव्यम्।

C. अलक्ष्मीनिर्णोदपूर्णहोमौ तु काम्याविति, ४।६।३—४ सूत्रे द्रष्टव्ये। तथाचेमावावापेन मुख्यहोमेन सह तन्त्रेण प्रधानाङ्गतया नित्यमेव भवेतामिति पूर्वपक्षिणामाशयः।

D. गणेष्विति सामान्यतोऽभिधानाद् विभिन्नदेवताकेष्वपि होमेषु एकदा क्रियमाणेषु एकमेव परिसमूहनादिकमित्यवगम्यते। तथा च गृह्यान्तरम्—

---

1. 'प्रक्षेपः' नास्ति ख। 2. 'अत्र' नास्ति ख। 3. 'उत पृथक्तन्त्रेणेति' ख। 4. 'तत्र केचिदावापं मन्यन्ते तदयुक्तम्' क। 5. 'तन्मान्तःपाति' ख। 6. '-प्रधान-' क। 7. 'यत्' नास्ति क-ग। 8. 'इति' नास्ति ख। 9. 'प्रतिद्रष्टव्यम्?' क।

## सर्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोति ॥ १७ ॥

ऋजुवेतत्(A)।

## हुत्वैतन्मेक्षणमनुप्रहरेत् ॥ १८ ॥

क्रियार्थस्य मेक्षणस्य क्रियान्तरमेव प्रतिपत्तिर्मा भूदित्यतो हुत्वैतदुक्तम्। कथं नाम? व्याहृतिभि[1]रपि हुत्वेत्यर्थः। एतन्मेक्षणमनुप्रहरेत्, जुहुयात्। अनुप्रह[2]-रतिशब्दो होमवचनः। तथा च सूत्रकारः—अध्यवस्त्रौ "शकलान्याहवनीयेऽनुप्रहरेयु[3]र्देव-[4]कृतस्येति(B)। एतन्मेक्षणमिति। [5]तदनुप्रहरेद् यदनुप्रहरणार्थम्, यस्मिंस्तु पक्षे [6]प्रक्षाल्य वैनेनोद्धृत्य भुञ्जीतेति तस्मिन्नानुप्रह[7]रेदिति।

## प्रक्षाल्य वैनेनोद्धृत्य(C)भुञ्जीत ॥ १९ ॥

प्रक्षाल्य वा मेक्षण[8]मेनेन चरुशेषमुद्धृत्य भुञ्जीत भक्षयेत्। यत्र हौत्रं ब्रह्मत्वं चोभय-मपि स्वयमेव कुर्यात् सोऽस्य विषयः। यत्र वाऽन्यो ब्रह्मा भवति तत्र वक्ष्यति—"अथै-तद्धविरुच्छिष्टमि"त्यादि [सू० १।६।१]। प्रक्षाल्य वाऽनेनोद्धृत्येति पाठे प्राप्ते छान्दसोऽयं प्रयोगः। छन्दः सूत्राणि भवन्तीति न्यायात्।

---

पाकयज्ञान् समासाद्य एकाज्यानेकबर्हिषः।
एकस्विष्टकृतः कुर्यान्नानाऽपि सति दैवते ॥ इत्याह तर्कालङ्कारः स्वभाष्ये।

A. गणेष्वित्येव। सकृदेकवारं न पृथक् पृथगित्यभिप्रायः। तर्कालङ्कारस्तु "उपलक्षण-मेतत्, महाव्याहृत्यादि सकृदेव भवतीति सरला" इत्याह।

B. लाट्यायनश्रौतसूत्रम्। २।११।१४।

C. 'वैनेनोद्धृत्ये'ति पठति चन्द्रकान्तोऽपि, व्याकरोति चेत्थम्—"एनेन एतेन, एनः प्रकृत्यन्तरमेतदर्थः, एतेनेति वा पाठः। अन्ये पुनरेनं प्रकृत्यन्तरमविद्वांसो भाषन्ते 'प्रक्षाल्य वा अनेने'ति पाठे प्राप्ते छान्दसोऽयं प्रयोग" इति। अत्र भाष्यकाराणामुपरि तर्कालङ्कारकृत आक्षेपो विनिगमनारहित इत्युपेक्षणीयः। यतोऽत्र विवदन्ते वैयाकरणाः, भाष्यकारोऽपि छान्दस एवैनः शब्द इति कथयति निषेधति च लौकिकमेनशब्दम्। मतमिदमस्मद्भाष्यकाराणां विश्वविश्रुत-कीर्त्तिना M. W. कोशकारेणापि स्वीकृतं स्वीये निबन्धे (See M. W. Dict. Page 232.)।

---

1. 'अपि' नास्ति ख। 2. '-रयमर्थो' ख। 3. 'कपालान्याह' ख। 4. 'देवकृतस्य' नास्ति ख। 5. '-कृतस्येति' क। 6. 'एतदनु-' ख। 7. 'प्रक्षाल्य' नास्ति ख। 8. '-रतीदति' क-ग। 9. '-मनु चरु…' ख।

**न स्रुवमनुप्रहरेदित्येक आहुः ॥ २० ॥**

एतस्मादेव सूत्राद् विधिप्रतिषेधावनुमन्तव्यौ—[1]एके एवमाहुः [2]स्रुवमप्यनुप्रहरेत्, [3]नेत्येके(A)।

**आग्नेय एवानाहिताग्नेरुभयोर्दर्शपौर्णमासयोः स्थालीपाकः स्यात् ॥ २१ ॥**

[4]ऋज्वेतत्(B)।

**आग्नेयो वाऽग्नीषोमीयो वाहिताग्नेः पौर्णमास्याम् ॥ २२ ॥**

[5]एतदपि ऋज्वेव[5]* ।

**ऐन्द्रो वैन्द्राग्नो माहेन्द्रो वा अमावास्यायाम् ॥ २३ ॥**

अत्र केचिद् विनिवेशविकल्पमाहुः। ऐन्द्रमा[6]हेन्द्रौ सोमयाजिनः। [7]ऐन्द्राग्नस्त्व-[8]सोमयाजिनः[7]* इति। तत्राप्येकेनेष्टवत [9]इन्द्रः, बहुभिरिष्टवतो [10]माहेन्द्र इति। [11]केचिद् इच्छाविकल्पमाहुः।

**अपि वाहिताग्नेरप्युभयोर्दर्शपूर्णमासयोराग्नेय एव स्यात् ॥ २४ ॥**

ऋज्वेतत्(C)।

A. तस्मात् स्रुवमग्नौ क्षिपेद्वा न वा क्षिपेदिति विकल्पः। दारुमयपात्रनाशे विशेषमाह कर्मप्रदीपे—

विनष्टं स्रुक्स्रुवं न्युब्जं प्रत्यक्स्थलमुदर्चिषि।
प्रत्यगग्रं च मुषलं प्रहरेज्जातवेदसि॥ इति।

B. 'अनाहिताग्निः श्रौताग्निरहितः स्मार्ताग्निरित्येतत्' इति च० त०।

C. अथात्र दर्शपूर्णमासस्थालीपाकप्रयोगोऽग्निहोत्रिब्रह्मण्योक्त उपस्थाप्यते—"दर्शपूर्ण-मासयोः कालः पर्वप्रतिपदोः सन्धिस्तत्र यागः। पूर्वदिने सङ्कल्पादिकमन्वाधानं कर्म।

1. 'एकमेवाहुः' ग। 2. 'स्रुवमनुप्रहरेत्' ख-ग। 3. 'नेत्यन्ये' ग। 4. 'ऋज्वेतत्' नास्ति क-ग। 5. नास्ति ख। 6. '-हेन्द्रसोम-'…क, '-हेन्द्रौ सोमयाजिनौ' ख। 7. 'इन्द्राग्निस्त्वसोमयाजिनाम्' क। 8. '-साम-' ग। 9. 'एव इन्द्र' ग। 10. 'माहेन्द्रौ' क। 11. 'किंचिद्' ग।

यदाऽहोरात्रव्यापिनी पौर्णमास्यमावास्या वा तद्दिनेऽन्वाधानं परेद्युर्यागः, यदा रात्रौ पर्वसन्धिस्तदा सन्धिकाले यागस्यासम्भवात् सन्धिमद्दिने पूर्वाह्णेऽन्वाधानं परेद्युर्यागः। यदा दिवा पर्वप्रतिपदोः सन्धिस्तदा त्वेवं निर्णयः—पर्वपुच्छघटिकाश्च संयोज्य ताश्च दिवाप्रमाणघटिकापेक्षयाऽधिकाश्चेत् पुच्छपर्वण्यन्वाधानं पुच्छप्रतिपदि यागः, दिवाप्रमाणघटिकापेक्षया न्यूनाश्चेच्चतुर्दश्यामन्वाधानं पुच्छपर्वणि यागः। यदा दिवाप्रमाणघटिकाः समास्तदा चतुर्दश्यामन्वाधानं पुच्छपर्वणि यागः। तदेतत् सर्वं प्राचीनग्रन्थेषु स्पष्टम्। पात्रलक्षणं च—स्रुवोऽरत्निमात्रो, बाहुमात्रा पालाशी स्रुक्, खादिरः स्रुवो द्व्यङ्गुष्ठपरिमितबिलो घ्राणवत् कृतमर्यादः। इध्मसजातीयनिर्मितेध्मार्धप्रमाणाङ्गुष्ठपृथ्वग्रं हविरवदानसमर्थं काष्ठं मेक्षणमुच्यते। मेक्षणसजातीयद्व्यङ्गुलपृथ्वग्रा दर्वी। वैणवः शूर्पः। यज्ञियवृक्षनिर्मितमवहननसमर्थमुलूखलं मुषलञ्च। वैकङ्कतमयो यज्ञियवृक्षजो वा प्रादेशदीर्घश्चतुरङ्गुलविस्तृतस्त्र्यङ्गुलचतुरङ्गुलोर्ध्वो वा त्वग्बिलश्चमसः। इति।

अथ यागपूर्वदिने अमावास्यायां पौर्णमास्याञ्च दम्पत्योर्नियमाः कथ्यन्ते—यजमानस्य प्रवासनिषेधः। स्वयं होमार्थं प्रवासादवश्यं गृहागमनं कर्तव्यम्। स्वद्रव्यविक्रयनिषेधः। बहुलौकिकभाषणनिषेधश्च। सत्यस्यैव वदनम्, अपराह्णे पुनः स्नानादिकम्। तदैव दम्पत्योर्भोजनम्, रात्रिभोजननिषेधः, मधु-मांस-लवण-क्षार-माष-कोद्रवादिनिषिद्धद्रव्यभोजननिषेधश्च। घृत-दधि-क्षीर-फलौदनादिभिस्तृप्तिपर्यन्तं भोजनम्। विहितपदार्थभोजनस्यैश्वरत्वाक्षोधुकत्वसर्वकाम्यत्वप्रजापश्वाविप्राप्तिः फलम्। दम्पत्योरधःशयनं जागरणं च। तदर्थं पुण्यकथाश्रवणं कथनं वा। अष्टविधमैथुननिषेधः। गृहे पत्न्या स्थालीपाकेऽनुष्ठीयमाने ग्रामान्तरस्थस्य यजमानस्य नोपवास इति केषाञ्चिन्मतम्। एते नियमा आहिताग्निनाऽप्यनुष्ठेयाः। अन्येऽपि नियमविशेषा अध्वर्युशाखाप्रतिपादिता ग्राह्याः। अथ प्रयोगः—

तत्रान्वाधानदिने प्रातः कृतनित्यक्रियः प्रातरौपासनं विधाय कुशेष्वासीनो दक्षिणहस्तानामिकया ब्रह्मग्रन्थियुक्तं कुशपवित्रं कुशांश्च धारयमाणः पत्न्या सह प्राणानायम्य सङ्कल्पं करोति; देशकालौ सङ्कीर्त्य ममोपात्तसमस्तदुरितक्षयद्वारा परमेश्वरप्रीत्यर्थं पौर्णमासस्थालीपाकं करिष्ये इति पौर्णमास्याम्। दर्शस्थालीपाकं करिष्ये इत्यमावास्यायाम्। तेन परमेश्वरं प्रीणयानि पत्न्यर्थमप्येवमुक्त्वा दर्भानुत्तरतो निरस्याप उपस्पृशति। ततो ब्रह्मवरणम्। अथाग्नेः स्थण्डिलं गोमयेन समन्तमुपलिम्पति। प्रादेशद्वयमात्रान् खादिरान् पालाशान् वा सत्वकानष्टादशेध्मान् बध्नीयात्। खादिरपालाशालाभे आश्वत्थानौदुम्बरान् सर्ववृक्षजान् वा गृह्णीयात् विभीतक-तिल्वक-बाधक-नीवनिम्ब-राजवृक्ष-शाल्मल्यरलु-दधित्थ-कोविदार-श्लेष्मातकवर्जम्। ततः स्कन्धस्थानादुपरिच्छिन्नान् साग्रानरत्निमात्रान् बाहुमात्रान् वा बर्हिष आनीय परिस्तरणार्थं बध्नीयात्। कुशालाभे सर्वतृणानि वा गृह्णीयात् शूकतृण-शरशीर्य-बल्वज-मुतब-मल-शुण्ठवर्जम्। अथाऽऽज्यं स्थालीपाकार्थं व्रीहीन् यवान् वाज्यस्थालीं मेक्षणं स्रुक्स्रुवौ निर्वापार्थं कांस्यपात्रं चरुस्थालीमुलूखलं मुषलं शूर्पमनुगुप्ता अपः पूर्णपात्रञ्चोपकल्पयेत्। सङ्कल्पप्रभृत्येतदन्तं कर्म अन्वाधानमौपवसथिकमित्या-

चक्षते। एतत् कर्म यागस्य पूर्वदिने कर्तव्यम्। ततः परेद्युः प्रतिपदि प्रातर्होमानन्तरं तूष्णीं समिधमाधाय भूमिजपपरिसमूहने कुर्यान्न वा कुर्यात्। यदि सङ्कल्पानन्तरं ब्रह्मवरणं न कृतं तदाऽस्मिन्नेव काले कुर्यात्। ततो यजमानोऽग्रेणाग्निं गत्वाऽग्नेर्दक्षिणत आग्नेयमारभ्य दक्षिणाग्रामविच्छिन्नामुदकधारां दत्त्वा प्रागग्रान् दर्भान् ब्रह्मासनार्थमास्तीर्य यथेतमागत्य पात्राण्यासादयति। ततो ब्रह्माऽग्नेरुत्तरतः शिरसां बद्ध्वाऽप उपस्पृश्य यज्ञोपवीत्याचम्याग्रेणाग्निं गत्वाऽग्नेर्दक्षिणत आस्तीर्णदर्भाणां पुरतः प्रत्यङ्मुखस्तिष्ठन् वामहस्तानामिकाङ्गुष्ठाभ्यामास्तीर्णदर्भाणामेकं दर्भं गृहीत्वा मन्त्रेण निरस्यति निर्ऋतिदिशम्। निरस्याप उपस्पृशेत्। ततः 'ॐ आवसोरि'ति मन्त्रेणोपविशेत्।

अग्निमभिमुखीकृत्य कर्मसमाप्तिपर्यन्तं प्राञ्जलिर्मौनी प्रयोगं पश्येत्। यदि होमकर्ता प्रयोगमन्यथा करोति तं देववाण्या बोधयेत्, एवं कुर्वेवं मा कुर्विति। यदि देववाणीं न जानाति देशभाषया वदेत्, देशभाषोच्चारणप्रायश्चित्तार्थम् 'इदं विष्णु'रिति वैष्णव्या ऋचो 'विष्णो रराटमसी'ति यजुषो वा 'नमो विष्णव' इत्यस्य वा जपं कुर्यात्। मूत्रपुरीषाद्युत्सर्गे कृते यथाविधि स्नानाचमनादि विधायोक्तप्रायश्चित्तजपं कुर्यात्। ब्राह्मणाभावे ब्रह्मासने छत्रमुदककमण्डलुमुत्तरीयवस्त्रं कुशवटुं वा स्थापयेत्। स्वयमेव मन्त्रेण दर्भनिरसनमपामुपस्पर्शनञ्च कृत्वा मन्त्रेण छत्राद्यन्यतमं संस्थाप्य स्वकीयकर्मान्तरं कुर्यात्। कुशवटुनिर्माणे दर्भसंख्या त्वैच्छिकी।

उपविष्टे ब्रह्मणि यजमानोऽग्नेरुत्तरतः प्रागग्रानुदगग्रान् वा दर्भानास्तीर्य तेषु पात्राण्यधोमुखान्यासादयति पश्चिममारभ्य प्राक्संस्थम्। शुद्धजलपूर्णपात्रं बर्हिर्मुष्टिं चरुस्थालीमुलूखलं मुषलं कांस्यपात्रं सहविः शूर्पं मेक्षणमष्टादशेध्मानाज्यमाज्यस्थालीं स्रुक्स्रुवौ उष्णोदकं सम्मार्गकुशान् पूर्णपात्रञ्चाऽऽसादयति। तानि च पात्राणि संवीक्ष्योत्तानानि कृत्वाऽनुगुप्ताभिरद्भिरभ्युक्षेत्। ततो हविर्निर्वापं कुर्यात्। अथोलूखलमुषले शूर्पञ्च प्रक्षाल्याग्नेः पश्चात् प्राङ्मुख उपविश्य प्रागग्रेषु दर्भेषूलूखलं दृढं संस्थाप्य व्रीहीन् यवान् वा चरुस्थाल्या कांस्यपात्रेण वा 'अग्नये त्वा जुष्टं निर्वपामी'ति सकृन्मन्त्रेण द्विस्तूष्णीमुलूखले यथादैवतं निर्वपति। विकृतौ तत्तद्देवतानाम्नश्चतुर्थ्यन्तस्योच्चारणम्। अथोलूखलस्य पश्चात् प्राङ्मुखो दक्षिणोत्तराभ्यां पाणिभ्यां मुषलेन व्रीहीन् त्रिरवहन्ति। शूर्पेण तुषानपनीय प्रक्षालयेत्। दैवहविषस्त्रिः प्रक्षालनम्, मानुषस्य द्विः, पैतृकस्य सकृत्। अथाऽऽसादितबर्हिषः समावप्रच्छिन्नाग्रावनन्तर्गर्भौ दर्भौ प्रादेशमात्रे पवित्रे भवतः। मन्त्रेणौषधिमोषध्यादिकमन्तर्धाय छिनत्ति न नखेन। अप उपस्पृश्य वामहस्तेन पवित्रमूलं धृत्वा मन्त्रेण दक्षिणहस्तेनाद्भिः प्रक्षालयति। ततश्चरुस्थाल्यामुदगग्रे पवित्रे निधाय तण्डुलान् प्रक्षिप्य पवित्रेऽन्यत्र संस्थाप्योदकं निनीयाग्नावधिश्रित्य सुश्रृतं करोति। श्रृते हविषि मेक्षणेन चरुं प्रादक्षिण्येन मिश्रीकृत्य स्रुवेणाऽऽज्यमादाय पवित्रेऽन्तर्धाय चरुमभिघार्याग्नेरुत्तरत उद्वास्य दर्भेषु संस्थाप्य प्रतिष्ठितं चरुं स्रुवेणाऽऽज्येन सपवित्रं प्रत्यभिघारयेत्। अग्निमुपसमाधाय पूर्वासादितैः कुशैः समन्तं परिस्तृणाति, पुरस्ताद् दक्षिणत उत्तरतः पश्चात्। सर्वतस्त्रिवृतं पञ्चवृतं वा प्रागग्रैर्बहुदर्भैः परिस्तरेत्, पश्चा-

दास्तृतदर्भाग्रैः पूर्वपरिस्तृतदर्भाणां मूलान्याच्छादयेत्। अवान्तरदिक्षु परिस्तृतदर्भाणां संयोगः। एष परिस्तरणन्यायः सर्वेष्वाहुतिमत्सु न तु क्षिप्रहोमेषु। अग्नेरुत्तरतः प्रोक्षणपर्युक्षणार्थं तोयपूर्णां प्रणीतामासादयेत्, न वासादयेदित्येके। ततः पूर्वासादितानष्टावष्टेध्मानादाय युगपत् तूष्णीमग्नौ प्रक्षिपेत्।

अथाऽऽज्यसंस्कारः—आज्यं गव्यं माहिषमाजं वा, तदभावे तैलं दधि क्षीरं यवागूं वा पूर्वपूर्वाभावे उत्तरोत्तरं गृह्णीयात्। आज्यवदेव तत्प्रतिनिधीनां संस्कारः, दध्नो नाधिश्रयणं यवाग्वास्तु विकल्पः, पूर्वकृते पवित्रे गृहीत्वा आज्यस्थाल्यामुदगग्रं निधाय तस्यामाज्यमवनीय हस्तयोरङ्गुष्ठानामिकाभ्यां धृताभ्यामुदगग्राभ्यां पवित्राभ्यामाज्यं त्रिवारमुत्पुनाति प्राक्शः, सकृन्मन्त्रेण द्विस्तूष्णीम्। अविमुञ्चन् पवित्रे अद्भिरभ्युक्ष्याग्नौ प्रहरेत्। उत्पूतमाज्यमग्नौ संस्थाप्याग्नेरुत्तरत उद्वासयेत्। अदृष्टार्थं पुनरग्नेः पश्चाद् बर्हिषि चरुं तत्पूर्वदेशे आज्यस्थालीं वाऽऽसादयति। ततः स्रुक्स्रुवावादायोष्णेन वारिणा प्रक्षाल्य प्राक्संस्थं सम्मार्गकुशैर्मूलादारभ्य तदग्रदेशाभिमुखं संमृज्याग्नौ प्रतितप्य जलेनाभ्युक्ष्य पुनः प्रतितप्याऽऽज्यचर्वोरुत्तरतो निदध्यात्। सम्मार्गस्तु पृथक् पृथक्, प्रतपनं तु सहैव। अत्र प्रपद्विरूपाक्षजपस्य नित्येषु विकल्पः। तूष्णीं समिधमाधायोपघातविधिनोपस्तीर्णाभिघारितविधिना वा होमं कुर्यात्। साहसनामानमग्निमावाहयेत्। अथाज्यभागौ जुहोति—त्र्यार्षेयाणां चतुर्गृहीतमाज्यं स्रुवेण स्रुचि गृहीत्वोत्तरार्धपूर्वार्धे जुहोति। अनयोः प्रजापतिरृषिरग्निः सोमश्च क्रमेण देवता आज्यभागहोमे विनियोगः, अग्नये स्वाहा इदमग्नये न मम। पुनश्चतुर्गृहीतमाज्यं स्रुच्यादाय सोमाय स्वाहेति दक्षिणार्धपूर्वार्धे जुहोति, इदं सोमाय न मम। पञ्चार्षेयाणां भृगूणां पञ्चवारमाज्यं स्रुचि गृहीत्वोक्तहोमद्वयं कार्यम्।

अथ चरुहोमः—स्रुच्युपस्तीर्य त्र्यार्षेयाणां चेद्धविषो मध्यादङ्गुष्ठपर्वमात्रं तिरश्चीनं प्रथमं मेक्षणेनावदाय पूर्वार्धाच्च द्वितीयमवद्यति। पञ्चार्षेयाणां भृगूणां चेत् पश्चार्धाच्च तृतीयमवद्यति। अथावदानान्येकीकृत्य सकृत् स्रुवेणाभिघार्य हविष्यवदानप्रदेशान् सकृत् प्रत्यभ्यज्य स्रुङ्मुखेनाज्यमग्नौ प्रच्याव्य, अग्नये स्वाहेति मध्ये जुहोति, इदमग्नये न मम। एवं सकृत् त्रिवारं वा जुहुयात्। पुनः स्रुचि सकृदुपस्तीर्य पूर्वाहुत्यपेक्षया किञ्चिदधिकमुत्तरार्धपूर्वार्धात् सकृदेव चरुमवदाय द्विरभिघारयति त्र्यार्षेयाणामेवम्। पञ्चार्षेयाणां तु द्विरुपस्तीर्य सकृदवदाय द्विरभिघारयति, नात्र प्रत्यभ्यञ्जनम्। एवं गृहीत्वा अग्नये स्विष्टकृते स्वाहेत्युत्तरार्धपूर्वार्धे जुहोति। इदमग्नये स्विष्टकृते न मम। अथ व्याहृतिहोमः—व्याहृतीनां विश्वामित्र-जमदग्नि-भरद्वाजा ऋषयो गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्नि-वायु-सूर्या देवता आज्यहोमे विनियोगः। भूः स्वाहा, इदमग्नये न मम। भुवः स्वाहा, इदं वायवे न मम। स्वः स्वाहा, इदं सूर्याय न मम। इत्याज्येनाऽऽहुतित्रयं स्रुवेण कुर्यात्। प्रधानदेवतानां बहुत्वेऽपि परिसमूहनेध्माधानपर्युक्षणाज्यभागानां सकृदेवानुष्ठानम्। प्रधानहविषां बहुत्वे सर्वेभ्यो हविर्भ्यः सकृत् सकृत् स्विष्टकृते अवदायावदानान्येकीकृत्य सकृदेव जुहुयात्। मेक्षणमग्नौ प्रहरेत् प्रक्षाल्य वा स्थापयेत्। दर्शे पौर्णमासे चानाहिताग्ने-

**समिधमाधायानुपर्युक्ष्य यज्ञवास्तु करोति ॥ २५ ॥**

समिदाधानानुपर्युक्षणयोः सिद्धयोः पुनर्वचनं [1]क्रमार्थम्। यज्ञवास्त्विति वक्ष्यमाणस्य कर्मणो नामधेयम्।

कथं करोति ? अत आह—

**तत एव बर्हिषः कुशमुष्टिमादायाऽऽज्ये वा हविषि वा त्रिरवदध्यादग्राणि मध्यानि मूलानी"त्यक्तं रिहाणा व्यन्तु वयः" इति ॥ २६ ॥**

[2]ततस्तस्मादेव बर्हिषः (A)स्तृत[3]शेषात् कुशमुष्टिमादाय आज्ये वा [4]हविषि वा त्रिः[*] अवदध्याद् मज्जयेत्। न चे[5]दाज्यमवशिष्टं हविषि वा चरौ वा[6]ऽपि अवदध्यात्

---

अग्निर्देवता, आहिताग्नेः पौर्णमासे अग्निरग्नीषोमौ वा। दर्शे असोमयाजिन इन्द्राग्नी, सोमयाजिनस्त्विन्द्रो महेन्द्रो वा।

अथ तूष्णीमग्नौ समिधमाधायानुपर्युक्ष्य त्रिरुदकाञ्जलिसेचनं कुर्यात्। तत आस्तृतबर्हिर्मुष्टिमादायाऽऽज्ये वा हविषि वाऽग्राणि मध्यानि मूलान्यवदध्यादक्तमिति मन्त्रेण। अथाग्नौ बर्हिरद्भिरभ्युक्ष्य 'यः पशूनामि'ति मन्त्रेणाग्नौ क्षिपेत्। अथ गृह्यासंग्रहोक्तामाज्यधारामविच्छिन्नां स्रुवा जुहुयात्। प्रजापतिऋषिर्यजुर्वसवो देवता होमे विनियोगः, वसुरुद्रः स्वाहा, इदं वसुभ्यो न मम। ततो हविरुच्छिष्टमुदगुद्वास्य मेक्षणेनोद्धृत्य पात्रान्तरं निधाय ब्रह्मणे दद्यात्, ब्रह्मा तदादाय तूष्णीं प्राश्य द्विराचामेत्। यजमानो 'ब्रह्मन् पूर्णपात्रं ते ददामी'ति दक्षिणां दद्यात्। ततोऽग्निं परिक्रम्य नमस्कृत्य चमसं निनीय पूरयित्वा वामदेव्यसामगानमीश्वरार्पणञ्च कुर्यात्। इति दर्शपौर्णमासस्थालीपाकप्रयोगः।

A. 'तत एव बर्हिषः' इत्येतदनुक्तिन्नपदार्थं वाक्यं व्याकुरुते कात्यायनोऽपि—

स्तृतेभ्यो न प्रचिन्वीयाद् यातयामं स्तृतं स्मृतम्।
स्तृतशेषात् ततो गृह्य यज्ञवास्तुक्रिया तथा ॥ इति गृ० स० १।१।

व्याख्या चास्येत्थमभियुक्तानाम्—यज्ञवास्त्वर्थं स्तृतेभ्यः कुशेभ्यः कुशं न चिनुयात्। कस्मात् ? यस्मात् स्तृतं बर्हिर्यातयामं निर्वीर्यं स्मृतमाचार्यैः। स्मरन्ति च—

---

1. 'क्रमार्थं' नास्ति ग। 2. 'तत [illegible]' न 3. [illegible] ख। 4. नास्ति ख।
5. '-दाज्ये वाऽवशिष्टे' ख। 6. 'अपि' नास्ति क-ग

त्रिस्त्रिरेकैकं प्रदेशम्। किम्? अग्राणि मध्यानि मूलानीति। (A)"अक्तं रिहाणा व्यन्तु वयः" इत्यनेन मन्त्रेण। स्थानभेदान्मन्त्रावृत्तिः(B)।

**अथैनमद्भिरभ्युक्ष्याग्नावप्यर्जयेत्—यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा। इति॥ २७॥**

अथानन्तरमेवाविमुञ्चन्, एनं कुशमुष्टिम्, अद्भिः 'प्रणीताद्भिः, अभ्युक्ष्याग्नौ अप्यर्जयेद् दाहयेत्। (C) यः पशू²नामित्यनेन मन्त्रे³णेतिकरणान्नेन।

**एतद् यज्ञवास्त्वित्याचक्षते॥ २८॥**

एतद् यज्ञवास्तु, तत एव बर्हिष इत्यारभ्य यदुक्तम्। गुणानुवादार्थं पुनर्वचनम्।

---

'स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत्' इति। उक्तं प्राक् पादटीकायाम् (पृ० १८१)। यस्मादेवं तस्मात् स्तृतशेषाद् बर्हिषः कुशमुष्टिं गृहीत्वा, तथा गोभिलोक्तेन प्रकारेण यज्ञवास्तु-क्रिया कर्तव्या। अपरे पुनरेतदविद्वांसः स्तृतादेव बर्हिषः कुशमुष्टिमादाय यज्ञवास्तुक्रियां कुर्वन्ति। तदसमीक्ष्यकारित्वमिति सुधियोऽवधारयन्तु।

A. मन्त्रस्याख्याकरस्थानं तु कात्यायनश्रौतसूत्रम् ३।१।११। खादिरगृह्यसूत्रे (२।१।२६) तु 'वियन्तु' इति पाठः। "हे वयः पक्षिणः, इदं दर्भतृणम् अक्तं घृतेनाभ्यक्तं रिहाणाः आस्वादयन्तः व्यन्तु खादन्तु" इत्यस्य गुणविष्णूक्ता व्याख्या।

B. अत्र तर्कालङ्कारः—

'कर्मावृत्तौ तु मन्त्रस्याप्यावृत्तिर्गृह्यकर्मणि'

इति चाभियुक्तवचनात्। यत्र खल्वनावृत्तिरिष्यते मन्त्राणां प्रायेण तत्रोत्तरत्र तूष्णीमिति करोति। यथा सकृद् यजुषा द्विस्तूष्णीमित्येवमादौ' इत्याह।

C. विनियोगश्चास्य मन्त्रस्य खादिरगृह्यसूत्रे (२।१।२६) अपि वर्तते। "यः 'पशूनां' गवादीनाम् 'अधिपतिः' स्वामी 'रुद्रः' परेषां रोदयिता 'तन्तिचरः' अन्तरिक्षस्थानगः, 'वृषा' वर्षयिता पर्जन्यरूपः। अधुना स एव प्रत्यक्षीकृत्योच्यते—हे रुद्र स त्वं 'पशून्' गवाश्वादीन् अस्माकं सम्बन्धिनो 'मा हिंसीः'। एतद्धुतं तवास्तु, प्रीतये इति शेषः।" इति चास्य गुणविष्णु-कृता व्याख्या।

---

1. 'प्रणीताभिः' क-ग। 2. '-नामधिपतीत्यनेन' ख। 3. 'इति' नास्ति ख।

यज्ञो यस्मिन् प्रतिवस'तीति'* यज्ञवास्तु(A)। "अत्यन्तं प्रतिपत्तिकर्मैतत्, (B)ततश्चाकृते एतस्मिन् बर्हिषि विनष्टे अन्यं कुशमुष्टिमादायैतत् कुर्यात्"*। कथं नाम इतरथा (वास्तु, वसनेर्नि"वासकर्मणः इति ?), वास्तुरहितो यज्ञः स्यात्, तस्माद् गुणार्थं पुनर्वचनम्(C)।

इति "श्रीभट्टनारायणकृतौ "गोभिलीयगृह्यसूत्रभाष्ये
प्रथमप्रपाठकस्य"* अष्टमी कण्डिका।

---

A. यज्ञवास्तुक्रियानन्तरमाज्येन पूर्णाहुतिर्होतव्या, यथाह कात्यायनः—

यज्ञवास्तुक्रियां कृत्वा विधिदृष्टेन कर्मणा।
आज्यधारामविच्छिन्नां जुहुयात् सार्वकामिकीम्॥ इति ( गृ० स० २।२ )

व्याख्या चास्यैवम्—विधिदृष्टेन कर्मणा यज्ञवास्तुक्रियां कृत्वा सर्वकामप्रदामविच्छिन्नामाज्यधारां जुहुयात्। तदनेनात्राऽऽचार्यानुक्ताऽपि पूर्णाहुतिर्विधीयते। ज्ञायते चैवं सार्वकामिकीमिति वचनात्। "पूर्णाहुत्या सर्वान् कामानाप्नोति" इति ब्राह्मणम्। मन्त्रस्तु—"पूर्णहोमं यशसे जुहोमी"त्यादिरिति भवदेवभट्टप्रभृतयः। मन्त्रोऽयं 'पूर्णहोमो यजनीयप्रयोगः' इति (४।८।२३) सूत्रे द्रष्टव्यः।

B. प्रतिपत्तिकर्म नाम फलशून्यकर्माङ्गम्, पूजितप्रतिमादेर्जलादौ विसर्जनादिवत्। स्तृतशेषबर्हिषामिह विनियोगाम्नानात् प्रतिपत्तिकर्मेदमित्यस्मद्भाष्यकाराणां मतमित्याह रघुनन्दनः—"एतत्प्रयोजनन्तु प्रतिपत्तिकर्मत्वेऽपि तद्द्रव्यनाशे एतत्कर्माप्राप्तावपि यज्ञो यस्मिन् वसतीति व्युत्पत्तिप्रतिपाद्यार्थसिद्ध्यर्थं कुशान्तरमुष्टिमादाय तत् कर्तव्यमित्येवमेव भट्टभाष्यम्" इत्युपन्यस्य संस्कारतत्त्वे। तर्कालङ्कारस्तु—"नैतत् प्रतिपत्तिकर्म, किन्त्वर्थकर्मैवैतत्। कुतः ? प्रतिपत्तितायां प्रमाणाभावात्, यद्यास्तृतमेव बर्हिरिह प्रतिपाद्येत भवेदियं प्रतिपत्तिः, न तु प्रतिपाद्यते, किन्तु स्तृतशेषाद् बर्हिषः कुशमुष्टिरादीयते निर्देशसामान्यात्" इत्येवं ग्रन्थेन स्वपरमतमुद्धृत्य बहु विचचार। तत् तत्राप्यादवगन्तव्यम्। वयं पुनः कर्मस्य फलशून्याङ्गत्वाभावेन प्रतिपत्तित्वं नाद्रियामहे इति "नात्यन्तं प्रतिपत्तिकर्मैत"दिति 'ख'-पुस्तकपाठ एव साधीयानिति पश्यामः। प्रकृते, इदं यज्ञवास्तु प्रतिपत्तिकर्म वा अर्थकर्म वेति भगवन्तोऽभिज्ञा निर्दिशन्तु इति।

C. यज्ञवास्तुकर्मणा पश्वादिनाशाभावरूपो गुणो भवतीति तस्यैवानुवादार्थं पुनरुक्तिर्यज्ञवास्तुशब्दस्येति भाष्यकाराणां मतम्, 'तदेतत् पुनरुपादानं निगमनरूपमित्यप्याह तर्कालङ्कारः।

---

1. '-ति तद' ख। 2. 'नात्यन्तं' ख, चिह्नितांशो नास्ति क। 3. '-वीस-' ख, '-वस-' क। 4. 'श्रीभट्टनारायणकृतौ' नास्ति ग। 5. 'गृह्यभाष्ये प्रथमस्य' ख।

# नवमी कण्डिका

तच्छेषस्य का प्रतिपत्तिरित्यत आह—

**अथैतद्धविरुच्छिष्टमुदगुद्वास्योद्धृत्य ब्रह्मणे प्रयच्छेत् ॥ १ ॥**

[1]अथेत्यपूर्वसूत्रोपादानार्थः। आनन्तर्यार्थो वा। प्रदक्षिण-प्रणीताविमोकोदपात्र-पूरणानि कृत्वा अथानन्तरमेतद्धविःशेषं ब्रह्मणे प्रयच्छेत्। [2]एतदित्यवाच्यमिति चेत्? न। एतद्धविरुच्छिष्टं प्रयच्छेत्[3]*,। कतरदेतत्? उच्यते—समशनीय-नवयज्ञ-वास्तु-शमनादिचरुभ्यो यदन्यत्। कुतः? एतेषां प्रतिपत्त्यन्तरदर्शनात्। (A)प्रतिपत्त्यन्तर-दर्शनादेवैतेषामप्रदानमिति चेत्, न, एतदित्यनु[4]च्यमाने एतेषु प्रतिपत्तिद्वयाशङ्का स्यात्। तस्मादेत[5]दित्युक्तम्। हविःशेषमिति वक्तव्ये उच्छिष्टग्रहण[6]मुच्छिष्टस्यैवाप्रधानत्व-मस्य दर्शयति। तेन किं? अप्रदत्त एतस्मिन् विनष्टे प्रदानार्थमेव नान्यद्धविरुत्पादये-दिति। उदगुद्वास्येत्युक्तार्थम्(B)। एतस्माच्चोदगुद्वासनवचनाद् होमाग्न्योरन्तराज्य-हविषोरासादनमिति। उद्धृत्य पात्रान्तरे कृत्वा ब्रह्मणे [7]प्रयच्छेत्, प्र[8]*दद्यादित्यर्थः।

**तं तितर्पयिषेत् ॥ २ ॥**

[7]तं ब्रह्माणं तितर्पयिषेत्[7]* तर्पयितुमिच्छेत्। तर्पयेदिति वक्तव्ये गौरवं मनो[8]बुद्धि-विशुद्धिदर्शनार्थम्। कथं नाम? परलोकाद्यस्तित्व[9]विनिश्चयादिगुणयुक्तेन मनसा भोजनादि दद्याद् इत्यर्थः।

तथा च पुराणे—

> [10]देशकाला[11]गमद्रव्यदातृमनोगुणाः।
> [12]सुकृशस्यापि दानस्य फलातिशयहेतवः(C) ॥ इति।

---

A. समशनीयादिचरूणां प्रतिपत्तीस्तु प्रदर्शयिष्यन्ति तेषु तेष्ववसरेषु। एवञ्च अत्र 'एतत्'-पदानुक्तौ समशनीयादिचरुषु प्रतिपत्तिद्वयाशङ्का भवितुमर्हतीति भावः।

B. १।७।८ सूत्रे, १।८।१ सूत्रे च द्रष्टव्यम्।

C. प्रमाणत्वेनोपन्यस्तं वचनमिदं स्वभाष्ये चन्द्रकान्तेन, प्रमाणान्तरमप्युदाहरति सः, "तथा च स्मरणम्—

---

1. 'अथेति पूर्व-' क-ग। 2. चिह्नितांशो नास्ति ग। 3. '-वाच्य-' क। 4. 'इति' नास्ति क-ग। 5. '-च्च उच्छिष्ट-' ख। 6. 'प्रयच्छेत् प्र' नास्ति ख। 7. नास्ति ख। 8. 'बुद्धि' नास्ति ख। 9. 'वि' नास्ति क-ग। 10. 'देशकालागम' ग। 11. '-गम-' क। 12. 'सुकृतस्यापि ख'।

कस्मादनन्तरमेव ब्राह्मणतर्पणम् [1]तेनाह—

## ब्राह्मणस्य तृप्तिमनुतृप्यामीति ह यज्ञस्य वेदयन्ते ॥ ३ ॥

ब्राह्मणस्य[2] तृप्तिमनु पश्चादहं तृप्यामि। ब्राह्मणे तर्पिते सति [3]मम तृप्तिर्भवतीत्यर्थः[4]। इति एवम्, ह [5]इति निपातः। एवं यज्ञस्य यज्ञपुरुषस्य वचो वेदयन्ते।

चरुशेषेण ब्राह्मणतृप्त्यसम्भवे कथमित्यत आह :—

## अथ यदस्यान्यदन्नमुपसिद्धं स्यात् ॥ ४ ॥

अथेत्यानन्तर्यं[6]। अनन्तरमेव भोजयेत् नात्मीयं भोजनकालं प्रतिपालयेदिति। यदस्य गृहपतेः स्वकीयपाकादन्यदन्नम् उपसिद्धं स्यात्। उपेति सामीप्ये, तत्कालसमीपसिद्धमेव यत् किञ्चित् स्यात् तेन तर्पयेत् न पर्पट[7]चिर्भटकादिगुणसंस्कारविशेषा[8]न्तरस्याद्रियेतेति(A)। एवं सति [9]स्वयं ब्रह्मत्वे कृते अन्यस्य ब्राह्मणस्याकृत्य तृप्तिमात्रं [10]दद्यात् चरुशेषं [11]तु स्वयं [12]प्राश्नीयादिति।

## अथ ब्राह्मणान् भक्तेनोपेप्सेत् ॥ ५ ॥

अथ स्वस्य[13] पाकसिद्ध्यनन्तरं ब्राह्मणान् भक्तेन भोजनेन उप ईप्सेत् तर्पयितुमिच्छेदि[14]त्यर्थः। अत्रापि [15]मनोविशुद्धिप्रदर्शनार्थमेव गौरवम्। अपवर्गेऽभिरूपभोजनमिति(B) सिद्धत्वादिदमवाच्यमिति चेत्? न। पूर्वं[16]ब्राह्मणभोजनेनैव कृतकृत्यता[16]* मा भूदित्यतः पुनरिदमुक्तम्। एवञ्च सत्यत्र बहुवचनमविवक्षितम्। कुतः? पूर्वत्र यथाशक्तिश्रवणात्।

---

श्रद्धाविधिसमायुक्तं कर्म यत् क्रियते नृभिः।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥" इति।

A. पर्पटः पिष्टकभेदः, चिर्भटका फलविशेषः ( काँकुड इति ख्यातः ) एतयोरन्येषाञ्च विनिवेशेनोत्कृष्टतरखाद्यप्रणयने यत्नमकृत्वाऽविलम्बेन तत्काले यत् सिद्धं स्यात् तेनैव ब्राह्मणं परितोषयेत्। इत्येवं सूत्रकाराणामाशयं विवृणोति भाष्यकारः।

B. "अपवर्गेऽभिरूपभोजनं यथाशक्ति" गो० सू० १।१।६।

---

1. 'तेनाह' नास्ति ग, 'येनाह' ख। 2. 'स्य' नास्ति ख। 3. 'ममतृप्तिर्भव-' ख। 4. 'मर्थः' नास्ति ख। 5. 'इति' नास्ति क। 6. '-मर्थार्थे-' ख। 7. 'पर्पटचिर्भटकादि-' ख, '...चिर्भकादि-' ग। 8. '-न्तरमाद्रि-' ख, '-न्तरस्याद्रिये तत्' ग। 9. 'स्वयं' नास्ति ग। 10. 'दद्यात्' नास्ति क। 11. 'च' ख। 12. 'प्राश्नीयाः' ग। 13. 'स्य' नास्ति ख। 14. 'इत्यर्थः' नास्ति ख। 15. 'मनो' नास्ति ग। 16. 'ब्राह्मणेनैव कृतार्थता' ख।

## पूर्णपात्रो दक्षिणा तं ब्रह्मणे दद्यात् ॥ ६ ॥

पूर्णपात्रं(१) ब्रह्मणे दद्यादिति वक्तव्ये 'दक्षिणाग्रहणमनर्थकं'*मिति चेत्? न। स्वयमुभय*स्मिन् कृते*ऽन्यस्मै पूर्णपात्रादिका दक्षिणा देयेत्येतदर्थम्।

तथा चोक्तम्—

विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत्।

स्वयश्चेदुभयं कुर्यादन्यस्मै प्रतिपादयेत्(B) ॥ "इति।

१. पूर्णपात्रमाह गृह्यसंग्रहे कात्यायनः—

चतुर्मुष्टिर्भवेत् किञ्चित् पुष्कलं तच्चतुर्गुणम्।

पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते ॥ इति १।४३।

चतुःषष्टिमुष्टिः पूर्णपात्रमिति दीक्षितभाष्यम्।

कर्मप्रदीपे तु—

मुष्टयोऽष्टौ भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम्।

पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते ॥ इति २।५।३।

वचनमिदं प्रकाशकारसम्मतमिति सप्रकाशमुद्रितपुस्तके दृश्यते। आनन्दाश्रमवङ्गवासीमुद्रितयोः पुस्तकयोस्तु नोपलभ्यते ॥

B. कर्मप्रदीपः २।५।३ अत्र प्रकाशकारः—"यदा यजमानान्यो होमकर्म करोति तदा स होतृकदक्षिणाया अर्धं गृह्णीयादर्धं च ब्रह्मा। यदा यजमान एव हौत्रं ब्रह्मत्वं च करोति तदाऽन्यस्मै दद्यादि"ति व्याचख्यौ।

पूर्णपात्रं दक्षिणा, साऽपि ब्रह्मणे एव देयेत्येतदप्याह कर्मप्रदीपः—

ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता।

कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत् ॥ इति २।५।१।

अत्र पूर्णपात्रादिकेत्यादिपदाद् दक्षिणाविशेषालाभे मूलादिकमपि संगृह्णाति। तथा च मैत्रायणीयपरिशिष्टम् "दक्षिणालाभे मूलानां भक्ष्याणां दक्षिणां ददाति" इति। तदत्र यत्र येति सर्वनाम्ना व्याप्त्यवगमात् कर्मान्ते इति सामान्याभिधानाद् दक्षिणामात्रमेव ब्रह्मणे देयम् इत्युपदिशति। न च प्रधानकर्मदक्षिणानामन्यस्मै दानं शिष्यत इति विशेषोपदेशविरहादपि ब्रह्मणे एव तेषां देयता पर्यवस्यतीति। स खल्वयमाचार्यस्यास्पष्टोऽभिप्रायः कर्मप्रदीपकृता स्पष्टीकृत इति ज्ञातव्यम्।

न चैतत् सूत्रानुसारात् कर्मान्ते इति कात्यायनवचनं ब्रह्मसाध्यहोमान्तपरमिति युक्तम्, एतद्विवरणरूपत्वात् तस्य। न ह्यत्रापि होमदक्षिणेयमित्युच्यते, किन्तु प्रकरणादनुमीयते,

1. 'दक्षिणमनर्थक-' ख। 2. '-मुभयं कृते' ख। 3. 'इति' नास्ति ख।

वाक्यन्तु अविशेषाद् ब्रह्मणे दक्षिणादानमुपदिशति। दुर्बलञ्च प्रकरणं वाक्यादिति शक्यते वक्तुम्। अपि चेयं दक्षिणा प्रधानस्यैव कर्मणः परमेतद् होमात्मकमिति नैतावता किञ्चिदपचीयते तथात्वे वा दर्शादियागप्रस्तावात् तस्यैव दक्षिणा ब्रह्मणे देया इत्यापतति। स चायं पर्यनुयोगः सामान्याभिधानबलादेव परिहर्त्तव्यः।

विद्ध्याद्धौत्रमिति तु होमप्रस्तावाद् वा प्रायेण गृह्यकर्मणां सहोमकत्वाद् वा समाम्नातम्। न खल्वन्यत्रैतन्निषिध्यते, एकस्मिन्नुपदेशश्च विशेषोपदेशविरहे अन्यस्मिन्नपि कल्पनीय इति निबन्धारो मन्यन्ते। तस्मादन्यैरपि ऋत्विग्भिर्विभज्यैव दक्षिणा ग्रहीतव्या न्यायस्याविशेषात्। अपि च सहोमके कर्मणि ब्रह्मणः सद्भावात् कर्मदक्षिणायाश्च ब्रह्मणे देयत्वसूत्रणाद् होतुः किं तत्र दक्षिणा नास्त्येव ? इत्याशङ्कायां विद्ध्याद्धौत्रमिति वचनारम्भो न्याय्य एव इति न किञ्चिदनुचितम्, स खल्वयमुत्सर्गो विधिरिति यत्र स्पष्टमन्यस्मै आचार्यादिकाय दक्षिणाविशेषस्य दानमुपदिश्यते तत्र नैतत् प्रवर्तते, अब्रह्मके तु कर्मणि सुतरामन्यस्मै दक्षिणा दातव्या, ब्रह्मणे इति कर्मकारयितृपलक्षणत्वे तु प्रागेव नानुपपत्तिः, सेयमस्मद्भाष्यकारभट्टनारायणप्रभृतीनां बहूनामनुमता व्यवस्था।

रघुनन्दनस्तु—"अथ वन्दनादिकर्म, तत्र वशिष्ठः—

ऐशान्यामाहरेद् भस्म स्रुचोऽग्रेण स्रुवेण वा।
वन्दनं कारयेत् तेन शिरःकण्ठांसकेषु च॥
कश्यपस्येति मन्त्रेण यथानुक्रमयोगतः।
ततः शान्तिं प्रकुर्वीत अवधारणवाचनम्॥
दक्षिणा च प्रदातव्या ब्रह्मणाञ्च विसर्जनम्॥ इति।

शान्तिः सामगानां वामदेव्यगानम्। अवधारणमच्छिद्रावधारणम्—

अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः।
प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः समम्॥

इति शातातपपराशरवचनात्। अवधारणम्, तच्च दक्षिणादानानन्तरं कर्त्तव्यं न तु पाठक्रमादरः।

वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभे।
अदत्त्वा दक्षिणां वाऽपि स याति नरकं ध्रुवम्॥ इति नारदीयात्।

अत एव भवदेवभट्टेनापि वामदेव्यगानानन्तरं दक्षिणाऽभिहिता न त्वच्छिद्रावधारणात् परम्। होमदक्षिणा च स्वयंहोतृपक्षे ब्रह्मणे देया, ब्रह्मणे······इति छन्दोगपरिशिष्टात्। एतदनुसारात् कर्मान्त इति ब्रह्मसाध्यहोमान्तपरम्, न तु परिशिष्टप्रकाशोक्तनामकरणादिप्रधानकर्मान्तपरम्, अतः प्रधानकर्म-दक्षिणां कर्मोपदेष्ट्रे आचार्याय दद्यात्। यजमानेतरहोतृपक्षे तु ब्रह्म-होतृभेदेन

एवञ्च सति पूर्णपात्रं दक्षिणा तद् ब्रह्मणे दद्यादिति वक्तव्ये 'नपुंसकस्यापि चात्र पुंस्त्वं'* छान्दसम्।

"पूर्णपात्र इति"* कीदृशं "तत् पूर्णपात्रमिति ? अत आह—

**कंसं चमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतं पूर्णपात्रमित्याचक्षते ॥ ७ ॥**

कंसं कंसपात्रम्। चमसो 'वानस्पत्यं पात्रम्'*(A)। तद्वाऽन्नस्य पूरयित्वा "कृतस्य वा ओदनादेः अकृतस्य वा व्रीह्यादेः, कियन्मात्रस्यान्नस्य पूरयित्वा"* ? "उच्यते--

दक्षिणाविशेषानुपादाने होमदक्षिणैव ब्रह्म-होतृभ्यां ग्रहीतव्या। स्वयमेव होतृत्वब्रह्मत्वकरणे अन्यस्मै दद्यात्। विदध्या······इति छन्दोगपरिशिष्टात्।

पूर्णपात्रलक्षणन्तु गृह्यासंग्रह-यज्ञपार्श्व-परिशिष्टप्रकाशेषु—

अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम्।
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते ॥

अत्र षट्पञ्चाशदधिकशतद्वयमुष्टिमितं पूर्णपात्रम्। असम्भवे तु यावता...इति छन्दोग-परिशिष्टम्। ततः प्रागुक्तनारदीयाच्छिद्रावधारणं कुर्यात्। ततः साकुल्यार्थं तद्विष्णोरिति मन्त्रेण विष्णुं स्मरेत्।

प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥
तद्विष्णोरिति मन्त्रेण स्नायादप्सु पुनः पुनः।
गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥

इति याज्ञवल्क्यात्।" इत्याह संस्कारतत्त्वे।

A. चमसलक्षणं कातीययज्ञपार्श्वपरिशिष्टे—

चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः।
त्र्यङ्गुलस्तु भवेत् स्कन्धो विस्तारश्चतुरङ्गुलः ॥
विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः।
अन्येभ्यो वाऽपि वा कार्यास्तेषां दण्डेषु लक्षणम् ॥

1. 'ऽत्राम वात्रपुंसकस्य यतः पुंस्त्वं' ख, 'भन्नात्वान्नपुंसकं' ग। 2. चिह्नितांशो नास्ति ख। 3. 'तत्' नास्ति ख। 4. 'वान्नस्य तथात्वं' ख। 5. चिह्नितांशो नास्ति ग। 6. 'उच्यते' नास्ति ख।

[1]बहुभोक्तुः पुरुषस्य यावताऽन्नेन तृप्तिर्भवतीति[2]। कुत [3]एतत्—

यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते ।
नावरार्ध्यमतः कुर्यात् पूर्णपात्रमिति स्थितिः(A) ॥

इति वचनात्। अपि वा फलानां पूरयित्वा। चकारकरणादत्र[4]बदरादीनां भोज्यानामेव पूरयेन्न त्वर्जुनफलानाम्, एतत् पूर्ण[5]पात्रमित्याचक्षते इति वक्तव्ये पुंस्त्वं विभक्त्यतिक्रमश्च छान्दसः।

## ब्रह्मैवैक ऋत्विक्(B) पाकयज्ञेषु स्वयं होता भवति ॥ ८ ॥

ननु [6]पूर्वोक्तादेव प्रन्थादिद[6]मवधृतं कस्मादिह पुनरुच्यते? तत्रैके आहुः—पाकयज्ञानां स्वयं कर्तृत्वनियमार्थमिदमुच्यते। स्वयमेवाप्रवसता पाकयज्ञाः कर्तव्या इति(C)। तदयुक्तम्, कुतः? जुहुयाद् वा हावयेद् वेत्यना[7]रभ्य विधानात्(D) प्रवासदर्शनाच्च। न प्रवसन्नुपवसेदिति। [8]तथा विप्रोष्य ज्येष्ठस्य पुत्र[9]स्येति(E)।

---

अन्यत्रापि—

तच्छालास्त्रमसा दीर्घाः प्रादेशाश्चतुरङ्गुलाः।
तथैवोत्सेधतो ज्ञेयाश्चतुरस्रास्त इत्यपि ॥ इति।

A. कर्मप्रदीपः २।९।२। अत्र 'विद्यते' स्थाने जायते इति सप्रकाशमुद्रितपुस्तकपाठः। प्रकाशव्याख्या चेत्थम्—"यावताऽन्नादिना पूर्णेन पात्रेण कंसादिना बहुभोक्तुस्तृप्तिर्भवेत् न ततो हीनं पूर्णपात्रं कुर्यात् इति शास्त्रस्य स्थितिः, ततोऽधिकं तु न प्रतिषिध्यते" इति।

B. सामश्रमितकाकक्कारौ तु अत्रैव सूत्रमेकं समाप्य पाकयज्ञेत्यादि द्वितीयं सूत्रं पठतः।

C. पाकयज्ञोऽल्पयज्ञः प्रशस्तयज्ञो वा। कस्मात्? उभयत्र पाकशब्ददर्शनात्। अल्पे पाकशब्दस्तु—'योऽस्मत्पाकतरः' इति। तं पाकेन मनसाऽपश्यम्, इति 'यो मा पाकेन मनसा' इति च प्रशंसायां पाकशब्दः प्रयुक्तः। स खल्वयमर्थो गृह्यान्तरवृत्तिकारैर्निरूपितः। रघुनन्दनादयस्तु पाकयज्ञः पाकाङ्गयज्ञो वृषोत्सर्गादिरिति मन्यन्ते। वयन्तु एकाग्नौ ये यज्ञास्तान् पाकयज्ञानवगच्छामः। कुत एतद्वेत्? अस्माकमेव लाट्यायनश्रौतसूत्रे समाम्नानात्। तथा च सूत्रं "पाकयज्ञा इत्याचक्षते एकाग्नौ यज्ञान्" इति।

D. सूत्रमिदमुक्तं प्राक् १।३।१४। अनारभ्य विधानात् सामान्यतः सूत्रणादित्यर्थः।

E. विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेदित्यादि गो० सू० २।८।२०।

---

1. 'अबहुभोक्तुः' ख। 2. 'इति' नास्ति ड। 3. 'एतत्' नास्ति ख। 4. '-दात्र' ख। 5. '-पात्र-' नास्ति ख। 6. 'पूर्वोक्तग्रन्थादिद-' ख। 7. '-रभ्यविधानात्' ख। 8. 'तथा' नास्ति ख। 9. '-स्येति' क, '-स्येति च' ख।

तथा च [1]गृह्यान्तरम्—

निक्षिप्याग्नीन् स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत् कार्यवान् विप्रो मृषैव न चिरं [2]क्वचित्(A) ॥

तथा च—

मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः ।
उपविश्य शुचिः सर्वं यथाकालमनुद्रवेत्(B) ॥ इति ।

अन्ये त्वाहुः—ऋत्विग्याज्ययोरितरेतरमपरित्यागार्थमिदमुच्यते । अकारणमेवर्त्विजा याज्यो [3]न परित्याज्यो [4]न याज्येनर्त्विगिति, तथा च मनुः—

ऋत्विजं यस्त्यजेद् याज्यो याज्यं चर्त्विक् त्यजेत् [5]पुनः ।
शक्तं कर्मण्यदुष्टं [6]च तयोर्दण्डः शतं शतम्(C) ॥ इति ।

A. प्रमाणमिदं कर्मप्रदीपे ( २।९।१ ) उपलभ्यते ।

B. कर्मप्रदीपः २।९।२ ।

C. मनुसंहिता ८।३८८ । 'अथास्य बोधसौकर्याय मेधातिथिभाष्यमुपादीयते—

"यज्ञे कर्मकरऋत्विगध्वर्युद्गात्रादिः । यद्यपि वरणोत्तरकालमाप्रयोगसमाप्तेस्तद्व्यपदेशस्तथाऽप्यत्र कर्मणोरितरेतरत्यागे विधिरयम् । किं तर्हि ? प्राग् वरणाद् भूतपूर्वगत्या ऋत्विग्व्यवहारः । यः प्रयोगान्तरे वृतः स एव शक्तः प्रयोगान्तरेऽपि वरितव्यः, न केवलं पूर्ववृतस्यायं न्यायः, किं तर्हि ? तत्पित्रादिभिरपि, तथा हि "पूर्वजुष्टः स्वयंवृतः" इति नारदः । न चायमैकपुरुषिको नियमः, किं तर्हि ? कुलधर्मोऽयम् । तथा च महाभारते—संवर्त-मरुत्तीयेषु प्रपञ्चितम् । तेन यत्कुलाः पित्रादिभिरृत्विजो वृतास्त एव वरितव्याः । याजकानामप्येष एव विधिस्तैरपि ते याजनीयाः, ऋत्विजं कृतार्त्विज्यं तत्कुलीनं वाऽन्यं यो न वृणीते यियक्षुरपि त्वन्ययाजकमर्थयेत् शक्तं कर्मणि यज्ञे प्रयोगज्ञमदुष्टमभिशंसनाङ्गवैकल्यादिभिर्दोषैरयुक्तमेवमीदृश एवर्त्विगर्थ्यमानो यदि नाङ्गीकुर्याद् याजकत्वम्, अदुष्टमेभिरेव दोषैरनाक्रान्तं याज्यं शक्तं विद्वत्तया च, तादृशे त्यागे तयोः शतं दण्डः । ऋत्विक् शतं दाप्यो याज्यं त्यजन् याज्यश्च ऋत्विजम् । न केवलमयमृत्विग्याज्यधर्मः शिष्याचार्ययोरपि, तथा च गौतमः—अथ याजकावृत्विगाचार्यौ पतनीयसेवायाञ्च हेयावन्यत्र हानात् पततीति । दातृसम्प्रदानयोरपि प्रतिग्रहे केचिद् धर्ममिममिच्छन्ति" । इति ।

अत्र स्मरणान्तरमप्युदाहरति तर्कालङ्कारः—

"ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टमृत्विजं याज्यो विनेयौ तावुभावपि ॥
क्रमागतेष्वेव धर्मो वृतेष्वृत्विक्षु च स्वयम् ।
याहच्छिके तु संयोज्ये तत्त्यागे नास्ति किल्बिषम् ॥ इति ।

1. 'यद्यान्तरे' ग । 2. 'वसेत' ख । 3. 'न परित्याज्यो' नास्ति क-ग । 4. 'याज्येन चर्त्विगिति' ख । 5. 'तु यः' ख । 6. 'तु' ख ।

कथं नाम एक एव ब्रह्मा सर्वकर्मसु कर्त्तव्यो न त्वेकस्मिन् कर्मण्यन्योऽन्यस्मिन् अन्य इति। पाकयज्ञग्रहणं सर्व[1]यज्ञोपलक्षणार्थम्। किं पूर्णपात्रमेव पाकयज्ञादिषु दक्षिणा उत [2]बहुतरा भवतीत्यत आह—

## पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा ॥ ९ ॥

[3]"पूर्णपात्रोऽवम इति"* पुंस्त्वं पूर्ववत्। [4]अवमा अधमा एषा दक्षिणा यत् पूर्णपात्रमिति। सर्वनिकृष्टेत्यर्थः। अतोऽप्यल्पतरा पाकयज्ञानां दक्षिणा [5]न देयेति।

बहुनः किं प्रमाणमित्यत आह—

## [6]अपरिमितं परार्द्धयम्॥ १० ॥

[7]"न परिमितम्"* अपरिमितं बह्वित्यर्थः। तत् तावद् दद्याद् यावत् परार्द्धयम्। परार्द्धं नाम गणिते अङ्कस्थान[8]मस्ति यस्मादन्यद् बहुतर[9]मेव नास्ति।

एतस्यैवार्थस्य दृढीकरणार्थं दृष्टान्तं [10]"दर्शयन्निदमाह"[10]*—

## अपि ह सुदाः पैजवन ऐन्द्राग्नेन स्थालीपाकेनेष्ट्वा शतं सहस्राणि ददौ ॥ ११ ॥

ह [11]इति निपातः, सुदा अपि पैजवनः—सुदाः शोभनदायी, नामधेयं [12]वाऽस्यैतत्; [13]"पैजवनः पिजवनस्य पुत्रः"[13]* [14]ऐन्द्रेण स्थालीपाकेन नवयज्ञेनेत्यर्थः। इष्ट्वा यागं कृत्वा सहस्राणि ददौ दत्तवान् [15]इति। कियन्ति सहस्राणि? शतम्, [16]लक्षं दत्तवानित्यर्थः। [17]कस्य वस्तुनः? गवाम्। कुत एतत्? याज्ञिकानां संख्यासंबन्धाया बहुवचश्रुतेर्गोषु [18]स्मृतेः(A)। शतदक्षिणेनाहं यक्ष्ये [19]दशशतदक्षिणेनेति। अपरि[20]मितमिदं दानपक्षे [21]ब्रह्मणे दत्त्वा तदनुज्ञयाऽन्येभ्योऽपि देयम्। उक्तं च—

---

A. 'संख्यामात्रे च दक्षिणा गावः' इति च द्राह्यायणसूत्रात्।

---

1. '-कर्मोप-' ख। 2. 'बहूनपि' ख। 3. चिह्नितांशो नास्ति ख। 4. 'अवमा वा' ग। 5. 'न देयेति' नास्ति ग। 6. 'अतस्त्राता? अपरि-' ख। 7. चिह्नितांशो नास्ति ख। 8. '-मिति' ख। 9. 'एव' नास्ति ख। 10. 'दर्शयति' ख। 11. 'इति' नास्ति क। 12. 'वा तस्यैतत्' ख। 13. 'पिजवनस्य पुत्रः पैजवनः' ख। 14. 'ऐन्द्राग्नेन' ख। 15. 'इति' नास्ति क-ग। 16. 'लक्ष्य' ख। 17. 'कस्मात्' ख। 18. 'वसेः' क, 'श्रुतेः' ग। 19. 'द्वादश-' ख-ग। 20. '-मितदानपक्षे' ख। 21. 'ब्रह्मणे' नास्ति क-ग।

कुलर्त्विजमधीयानं सन्निकृष्टं तथा गुरुम् ।
नातिक्रामेत् सदा दित्सन् य इच्छेदात्मनो हितम्(A) ॥ [1]इति ।
अहमस्मै ददानीति एवमाभाष्य दीयते ।
नैताव[2]पृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि ॥
दूरस्थाभ्या[3]मपि त्वाभ्यां प्रदाय मनसा वरम् ।
इतरेभ्यस्ततो दद्यादेष दानविधिः परः(B) ॥

इत्या[4]दिसायंप्रात[5]र्होमवैश्वदेवबलिहरणदर्शपूर्णमासाख्यानि नित्यतया कर्माण्युक्तानि तेषां च यावज्जीविकोऽभ्यासः [6]स्वे स्वे उक्तः(C) । एव[7]मभ्यस्येत् कालस्य बहुत्वाद् [8]देवाद् मनुष्याद्वा ।

---

A. यदाऽन्यस्मै दक्षिणा दीयते तदाऽपि कुलर्त्विजे गुरवे वा देया, तयोः प्रतिग्रहवैमुख्या-दिना ग्रहणासम्भवे बहुतरायां वा दक्षिणायामन्यस्मा अपि दातुमिच्छायां तदनुमत्या, दूरस्थत्वे च तयोस्ताभ्यामुद्दिश्य मनसा दत्त्वैव देया इत्याह कर्मप्रदीपः कुलर्त्विजमित्यादिना । सन्निकृष्ट-मधीयानमिति द्वयं प्रत्येकं द्वाभ्यां सम्बध्यते, सदेति कर्मादिदक्षिणां विनाऽन्यस्मिन्नपि दाने दातुमिच्छन्न तौ लङ्घयेदिति । २।९।४ ।

B. कर्मप्रदीपः २।९।५-६ । 'यदा तु गुरुकुलाद् द्विजः सन्निकृष्टोऽप्यमुष्मै प्रतिग्रहवैमुख्या-दिना न दीयते तदा 'अहमस्मै ददानी'ति ततोऽप्यनुज्ञां गृहीत्वाऽन्यस्मै दद्यात् नान्यथा । (९) यदाऽपि तौ दूरस्थौ तदाऽपि तौ मनसोद्दिश्य सामान्यनामगोत्राभ्यां ताभ्यां धनमुत्सृज्य अन्येभ्यो दद्यात् । एष दानविधिः स्मृतः । 'दानविधिः परः' इति पाठे परः श्रेष्ठ इत्यर्थः । 'कालविधिः पर' इति पाठे काले अयनादौ यो दानविधिः सोऽप्येवंविधः श्रेष्ठ इत्यर्थः' इति च प्रकाशोक्ता व्याख्या ।

C. अथ सर्वसाधारणहोमं दर्शपूर्णमासयागञ्चाधिकृत्य यदुक्तं छन्दोगगृह्यसूत्रे तदुपस्थाप्यते— "होमेषु पाकयज्ञ इत्याख्या यः कश्चैवाग्नौ । तत्रर्त्विग् ब्रह्मा सायंप्रातर्होमवर्जम् । स्वयं हौत्रं दक्षिणतोऽग्नेरुदङ्मुखस्तूष्णीमास्ते ब्रह्मा आहोमात् प्रागग्रेषु । कामं त्वधियज्ञियां व्याहरेद-यज्ञियां वा व्याहृत्य महाव्याहृतीर्जपेत् इदं विष्णुरिति वा । हौत्रब्रह्मत्वे स्वयं कुर्वन् ब्रह्मासन-मुपविश्य छत्रमुत्तरासङ्गं कमण्डलुं वा तत्र कृत्वाऽथान्यत् कुर्यादव्यावृत्तिं यज्ञाङ्गैरव्यवायं चेच्छेत् । पूर्वे भागे वेश्मनो गोमयेनोपलिप्य तस्य मध्यदेशे लक्षणं कुर्यात् । दक्षिणतः प्राचीं रेखामुल्लिख्य तदारम्भादुदीचीं तदवसानात् प्राचीं तिस्रो मध्ये प्राचीस्तदभ्युक्ष्याग्निमुपसमाधायेमं स्तोममिति

---

1. 'इति' नास्ति ख । 2. '-वत् दृष्टा' क । 3. '-मपि ताभ्यां' ख । 4. 'आदि' नास्ति ख । 5. '-होमे वैश्वदेव' क-ग । 6. '-स्वस्वकाले युक्तः' ख । 7. '-मभ्यसनकालस्य बहुत्वाद्' ख । 8 । 'देवाद् वा मनुष्याद्वा' ख ।

परिसमुह्य तृणेन, पश्चादग्नेर्भूमौ न्यञ्चौ पाणी कृत्वेदं भूमेरिति वस्वन्तं रात्रौ। पश्चाद्दर्भानास्तीर्य दक्षिणतः प्राचीं प्रकर्षेदुत्तरतश्चाप्रकृष्य वा पूर्वोपक्रमं प्रदक्षिणमग्निं स्तृणुयान्मूलान्यग्रैश्छादयन् त्रिवृतं पञ्चवृतं वा। उपविश्य दर्भाग्रे प्रादेशमात्रं प्रच्छिनीत न नखेन, पवित्रे स्थो वैष्णव्यावित्यद्भिरुन्मृज्य, विष्णोर्मनसा पूते स्थ इत्युदगग्रेऽङ्गुष्ठाभ्यामनामिकाभ्याञ्च संगृह्य त्रिराज्यमुत्पुनाति। देवस्त्वा सवितोत्पुनात्वित्यभ्युक्ष्यैतावप्रावनुप्रहरेदाज्यमधिश्रित्योत्तरतः कुर्यात्। दक्षिणजान्वक्तो दक्षिणेनाग्निम् अदितेऽनुमन्यस्वेत्युदकाञ्जलिं प्रसिञ्चेत्, अनुमतेऽनुमन्यस्वेति पश्चात्, सरस्वत्यनुमन्यस्वेत्युत्तरतः, देव सवितः प्रसुवेति प्रदक्षिणमग्निं पर्युक्षेदपरिहरन् हव्यम्। सकृत् त्रिर्वा समिध आधाय प्रपदं जपित्वोपताम्य कल्याणं ध्यायन् वैरूपाक्षमारभ्योच्छ्वसेत् प्रतिकामं काम्येषु सर्वत्रैतद्धोमेषु कुर्यात्। पौर्णमासोपक्रमौ दर्शपूर्णमासौ, दर्शञ्चेत् पूर्वमुपपद्येत पौर्णमासेनेष्ट्वा, अथ तत् कुर्यात्। अकुर्वन् पौर्णमासीमाकाङ्क्षेदित्येके। अपराह्ने स्नात्वौपवसथिकं दम्पती भुञ्जीयाताम्। मानदन्तश्च उवाच श्रेयसीं प्रजां विन्दते, काम्यो भवत्यक्षोधुको य औपवसथिकं भुङ्क्ते। तस्माद् यत् कामयेत तद् भुञ्जीत। नाव्रत्यमाचरेत्, प्रातराहुतिं हुत्वा हविर्निर्वपेत्, अमुष्मै त्वा जुष्टं निर्वपामीति देवताश्रयं सकृद् यजुषा द्विस्तूष्णीम्। त्रिर्देवेभ्यः प्रक्षालयेद् द्विर्मनुष्येभ्यः, सकृत् पितृभ्यो मेक्षणेन प्रदक्षिणमुदायुवन् श्रपयेत्। श्रुतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत्, सर्वाण्येवं हवींषि बर्हिषि सादयेत्, आज्यभागौ जुहुयात्, चतुर्गृहीतमाज्यं गृहीत्वा पञ्चावत्तं भृगूणां जामदग्न्यानामग्नये स्वाहेत्युत्तरतः, सोमाय स्वाहेति दक्षिणतो विपरीतमितरमाज्यं गृहीत्वा हविषाऽवद्येत् मेक्षणेन मध्यात् पुरस्तादिति पश्चाच्च पञ्चावत्यभिघार्य प्रत्यनक्त्यवदानस्थानानि न स्विष्टकृतोऽमुष्मै स्वाहेति जुहुयात्। यद्देवत्यं स्यात् स्विष्टकृतः यकृदुपस्तीर्य द्विर्भृगूणां सकृद्धविषो द्विरभिघार्य, अग्नये स्विष्टकृते स्वाहेति प्रागुदीच्यां जुहुयात्। समिधमाधाय दर्भानाज्ये हविषि वा त्रिरवदायाग्रमध्यमूलानि अक्तं रिहाणा व्यन्तु वय इत्यभ्युक्ष्याग्नावनुप्रहरेद् यः पशूनामधिपतिरिति। तद् यज्ञवास्तु सर्वत्र कुर्यात्। चरूच्छिष्टमुदगुद्वास्य ब्रह्मणे दद्यात्। पूर्णपात्रं दक्षिणा यथोत्साहं वा। आग्नेयपरस्थालीपाकोऽनाहिताग्नेर्दर्शपूर्णमासयोरग्नीषोमीयः पौर्णमास्यामाहिताग्नेरैन्द्रो माहेन्द्रो वा इन्द्राग्नी वा अमावास्यायाम्। यथा वाऽनाहिताग्नेः इति।

एवमेव प्रायः समानुपूर्विकाणि विषयेऽस्मिन् खादिरद्राह्यायणगृह्ययोः सूत्राणीति न पृथगुपस्थापितानीति।

अथ जैमिनिगृह्यसूत्रोक्तं सदर्शपूर्णमासं पाकयज्ञतन्त्रमुच्यते—

अथातोऽग्निं प्रणेष्यन् प्रागुदक्प्रवणमभ्युक्ष्य स्थण्डिलं लक्षणं कुर्यान्मध्ये प्राचीं रेखामुल्लिख्योदीचीं च संहतां पश्चात् तिस्रो मध्ये प्राच्योऽभ्युक्ष्याग्निं प्रतिष्ठापयेद् भूर्भुवः स्वरिति लक्षणावृदेषा सर्वत्र। अथातः पाकयज्ञान् व्याख्यास्यामः, हुतोऽहुतः प्रहुतः प्राशित इति तेषामेकाग्नौ होमो नित्ये यज्ञोपवीतोदकाचमने दर्शपूर्णमासतन्त्राः स्वतन्त्रा वा दक्षिणतोऽग्नेः पूर्णपात्रमुपनिदधाति ध्रुवं वापां पूर्णमुत्तरतोऽग्नेरिध्माबर्हिः। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां

प्रोक्षामीति प्रोक्षितमुपक्लृप्तं भवति सकृद् यजुषा द्विस्तूष्णीम्। खादिरः पालाशो वेध्मस्तदलाभे विभीतक-तिल्वक-बाधक-निम्ब-राजवृक्षशाल्मल्यरलु-दधित्थ-कोविदार-श्लेष्मातकवर्जं सर्ववनस्पतीनामिध्मः। कुशालाभे शूकतृण-शरशीर्य-बल्वज-मुतव-नल-शुण्ठवर्जं सर्वतृणानि। शुक्लाः सुमनसस्तासामलाभे जपारूपकाकुस्थाभण्डीकुरण्डकवर्जं गन्धवत्यो वा सर्ववर्णाश्चतत्र आज्यप्रकृतयो भवन्त्यूधन्यं वा माह्यं वा दधि वा पयो वा पश्चादग्नेराचमनं त्रिराचामेद् द्विः परिमृजेत् सकृदुपस्पृशेत् पादावभ्युक्ष्य शिरश्च शीर्षण्यान् प्राणानुपस्पृशेदप उपस्पृश्य पश्चादग्नेरुपसमाहितस्योपविश्य दक्षिणेन पाणिना भूमिमारभ्य जपतीदं भूमेर्भजामह......धनमिति वस्वन्तं रात्रिश्चेदिमं स्तोम्येन तृणेनाग्निं परिसमूहेदायया वा त्रिः प्रस्तरमुपसंगृह्य प्रतिदिशं परिस्तृणाति दक्षिणपुरस्तादुपक्रम्याग्रै र्मूलानि च्छादयन् पश्चाद् वोपस्तीर्योत्तराजिभ्यामुपहरेद् दक्षिणोत्तरः सन्धिः। १।

प्रस्तरात् पवित्रे गृह्णाति प्रादेशमात्रे समे अप्रक्षीर्णाग्रे अनन्तर्गर्भे अङ्गुष्ठेनोपकनिष्ठिकया च धारयन्न नखेन च्छिनत्ति पवित्रे स्थो वैष्णव्याविति त्रिरूर्ध्वमद्भिरनुमार्जयेद् विष्णोर्मनसा पूते स्थ इति सकृद् यजुषा द्विस्तूष्णीम्। पात्रस्योपरिष्टात् पवित्रे धारयन्नाज्यमासिच्योत्तरेणाग्निमङ्गारानिरुह्य तेष्वधिश्रित्यावद्योत्य दर्भतरुणाभ्यां प्रत्यस्य त्रिः पर्यग्निकृत्वोदगुद्वास्य प्रत्यूह्याङ्गारानुदगग्राभ्यां पवित्राभ्यां त्रिरुत्पुनात्याज्यं च हविश्च प्रणीताश्च स्रुवं च, देवस्त्वा......रश्मिभिरिति देवो व इति प्रणीताः पुनराहारमाज्यस्य सकृद् यजुषा द्विस्तूष्णीमुत्तरतोऽग्नेः प्रणीताः प्रणीय दर्भैः प्रच्छाद्य दक्षिणतोऽग्नेः प्रस्तरं निधाय प्रस्तरस्योपरिष्टात् पवित्रे निधाय विरूपाक्षं जपति ॐ तपश्च......मामवन्तु। भूर्भुवः स्वरोम्......कर्माधिपतये नम इति। २।

स्रुवं प्रणीतासु प्रणीय निष्टप्य दर्भैः संमृज्य संमार्गानभ्युक्ष्याग्नावाधाय दक्षिणं जान्वाच्यामेध्यं चेत् किञ्चिदाज्येऽवपद्येत घुणक्रयन्मुकामक्षिकापिपीलिकेत्यापद्यन्ये उद्धृत्याभ्युक्ष्योत्पूय जुहुयात् परिधीन् परिदधाति मध्यमं स्थवीयसं पश्चाद्दीर्घं मध्यमं दक्षिणतः कनीयसमुत्तरतः संस्पृष्टान् दक्षिणतोऽग्नेरपां कोशं निनयत्यदितेऽनुमन्यस्वेत्यनुमतेऽनुमन्यस्वेति पश्चात्, सरस्वतेऽनुमन्यस्वेत्युत्तरतो देव सवितः प्रसुवेति त्रिःप्रदक्षिणमग्निं परिषिञ्चेद् देव सवितः...स्वदत्विति सकृद् यजुषा द्विस्तूष्णीम्। अथेध्ममादाय स्रुवेणाऽऽज्यं गृहीत्वाऽभिघार्याग्नावभ्यादधात्ययं त इध्म आत्मा जातवेदस्तेन वर्धस्व चेध्यास्व चेन्धि वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहेति मनसाघारौ जुहोति सन्ततमक्ष्णया प्रजापतये स्वाहेत्युत्तरं परिधिसन्धिमन्ववहृत्य स्रुवमिन्द्राय स्वाहेति दक्षिणं परिधिसन्धिमन्ववहृत्याऽऽघारौ हुत्वाज्यभागौ जुहोत्यग्नये स्वाहेत्युत्तरतः सोमाय स्वाहेति दक्षिणतस्तावन्तरेणाऽऽहुतिलोको भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा, भूर्भुवः स्वः स्वाहेत्यग्नयेऽग्नीषोमाभ्यामिति पौर्णमास्यामग्नय इन्द्राग्निभ्यामित्यमावास्यायामुत्तरपूर्वामुत्तरपूर्वामाहुतिं जुहोत्यनभिजुह्वदाहुत्याहुतिं प्रत्यक्सौविष्टकृतस्थानान्नित्योऽग्निः पुरस्तात् स्विष्टकृदन्तेऽन्यत्र वपाहोमाज्यहोमाभ्यां न स्विष्टकृतं प्रत्यभिघारयति। स्रुवे सकृदाज्यमुपस्तृणाति द्विर्हविषोऽवद्यति सकृदाज्येनाभिघार्य प्रत्यभिघारयत्यङ्गुष्ठेनाङ्गुलिभ्यां च मांससहिताभ्यां

द्विर्हविषोऽवद्यति द्विराज्येनाभिघार्य प्रत्यभिघारयति जामदग्न्यानां तद्वि पञ्चावत्तं भवत्यकृत्स्ना तृणकूर्चेन वा एषा होमावृत् सर्वत्र। ३।

सपवित्रं प्रस्तरमादत्ते तस्याग्राणि स्रुवेऽनक्ति दिव्यङ्क्ष्वेति मध्यमाज्ये अन्तरिक्षेऽङ्क्ष्वेति मूलानि हविषि पृथिव्यामङ्क्ष्वेति प्रस्तरात् तृणं निरस्यत्यायुषे त्वेति प्रस्तरमग्नावनुप्रहरत्यग्नयेऽनुमतये स्वाहेति पश्चात् तृणमनुप्रहरति द्विषन्तं मेऽभिधेहि तं चैव प्रदह स्वाहेति, घृतेनाक्ताः समिध आदधाति समृद्ध्यै स्वाहेति भूमिमारभ्य शीर्षण्यान् प्राणानुपस्पृशेदप उपस्पृश्य द्वादशप्रायश्चित्ताहुतीर्जुहोत्याकूत्यै स्वाहा। कामाय स्वाहा। समृद्ध्यै स्वाहा। ऋचा स्तोमं समर्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्तनि स्वाहा। उदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यं स्वाहा। चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आ प्रा द्यावा पृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा। उद्वयं तमसस्परि स्वः पश्यन्तो ज्योतिरुत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं स्वाहा। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽस्तु वयं स्याम पतयो रयीणां स्वाहा। भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा। भूर्भुवः स्वः स्वाहेति। अथास्तीर्णान् दर्भानानीय प्रणीतानां च स्रुवस्य चोपरिष्टात् कृत्वापस्तावयञ्जपति। सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मामेक्षेष्टा इति प्रतिदिशम् अप उत्सिञ्चति, प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामिति प्राचीनावीती, दक्षिणस्यां दिशि मासाः पितरो मार्जयन्तामिति यज्ञोपवीती भूत्वाऽप उपस्पृश्य प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामित्युदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामित्यूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तामिति समुद्रं वः प्रहिणोमीत्यपो निनीय समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपि गच्छत। अरिष्टा अस्माकं वीराः सन्तु मा परासेचिनः स्वमिति यदप्सु ते सरस्वतीत्यङ्गुष्ठेनोपकनिष्ठिकया चाक्षिणी विमृजेद् यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वतीति दर्भान् परिधींश्चाग्नावाधाय वामदेव्येन शान्तिं कृत्वा त्रिः पर्युक्षेत् सहविष्कं प्रदक्षिणमन्वमंस्थाः प्रसावीरिति मन्त्रान् संनमयेत पूर्णपात्रमुपनिहितं सा दक्षिणा यथाश्रद्धं दक्षिणाः पाकयज्ञाः पूर्णपात्रं वा। इति।

आपस्तम्बगृह्योक्तं च—अग्निमिध्माप्रागग्रैर्दर्भैरग्निं परिस्तृणाति। प्रागुदगग्रैर्वा। दक्षिणाग्रैः पित्र्येषु। दक्षिणाप्रागग्रैर्वा। उत्तरेणाग्निं दर्भान् संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति देवसंयुक्तानि। सकृदेव मनुष्यसंयुक्तानि। एकैकशः पितृसंयुक्तानि। पवित्रयोः संस्कार आयामतः परीमाणं प्रोक्षणीसंस्कारः पात्रप्रोक्ष इति दर्शपूर्णमासवत् तूष्णीम्। अपरेणाग्निं पवित्रान्तर्हिते पात्रेऽप आनीयोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूय समं प्राणैर्हृत्वोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य। ब्राह्मणं दक्षिणतो दर्भेषु निषाद्य। आज्यं विलाप्यापरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरूप्योदीचोऽङ्गारान् निरूह्य तेष्वधिश्रित्य ज्वलताऽवद्युत्य द्वे दर्भाग्रे प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान् प्रत्यूह्योदगग्राभ्यां पुनराहारं त्रिरुत्पूय पवित्रेऽनुप्रहृत्य येन जुहोति

तदग्नौ प्रतितप्य दर्भैः संमृज्य पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भानद्भिः संस्पृश्याग्नौ प्रहरति। साम्याः परिध्यर्थे विवाहोपनयनसमावर्तनसीमन्तचौलगोदानप्रायश्चित्तेषु। अग्निं परिषिञ्चत्यदिते अनुमन्यस्वेति दक्षिणतः प्राचीनम्, अनुमतेऽनुमन्यस्वेति पश्चादुदीचीनम्, सरस्वतेऽनुमन्यस्वेत्युत्तरतः प्राचीनम्, देव सवितः प्रसुवेति समन्तम्। पैतृकेषु समन्तमेव तूष्णीम्। इध्ममाधायाघारावाघारयति दर्शपूर्णमासवत् तूष्णीम्। अथाऽऽज्यभागौ जुहोत्यग्नये स्वाहेत्युत्तरार्धपूर्वार्धे, सोमाय स्वाहेति दक्षिणार्धपूर्वार्धे समं पूर्वेण। यथोपदेशं प्रधानाहुतीर्हुत्वा जयाभ्यातानान् राष्ट्रभृतः प्राजापत्यां व्याहृतीर्विहृताः सौविष्टकृतीमित्युपजुहोति। यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु स्वाहेति। पूर्ववत् परिषेचनमन्त्रमंत्थाः प्रासावीरिति मन्त्रसन्नामः। लौकिकानां पाकयज्ञशब्दः। तत्र ब्राह्मणापेक्षो विधिः। द्विर्जुहोति द्विर्निमार्ष्टि द्विः प्राश्नात्युत्सृप्याचामति निर्लेढीति। अथैनामाग्नेयेन स्थालीपाकेन याजयति। पत्न्यवहन्ति। श्रपयित्वाऽभिघार्य प्राचीनमुदीचीनं वोद्वास्य प्रतिष्ठितमभिघार्याग्निरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायां स्थालीपाकाज्जुहोति। सकृदुपस्तरणाभिघारणे द्विरवदानम्। अग्निर्देवता स्वाहाकारप्रदानः। अपि वा सकृदुपहत्य जुहुयात्। अग्निस्विष्टकृद् द्वितीयः। सकृदुपस्तरणावदाने द्विरभिघारणम्। मध्यात् पूर्वस्यावदानम्। मध्ये होमः। उत्तरार्धादुत्तरस्य। उत्तरार्धपूर्वार्धे होमः। लेपयोः प्रस्तरवत् तूष्णीं बर्हिरक्त्वाऽग्नौ प्रहरति। सिद्धमुत्तरं परिषेचनम्। तेन सर्पिष्मता ब्राह्मणं भोजयेत्। योऽस्यापचितस्तस्मा ऋषभं ददाति। एवमत ऊर्ध्वं दक्षिणावर्जमुपोषिताभ्यां पर्वसु कार्यः। पूर्णपात्रस्तु दक्षिणेत्येके। सायं प्रातरत ऊर्ध्वं हस्तेनैते आहुती तण्डुलैर्यवैर्वा जुहुयात्। स्थालीपाकवद् दैवतम्। सौरी पूर्वाहुतिः प्रातरित्येके। उभयतः परिषेचनं यथा पुरस्तात्। पार्वणेनातोऽन्यानि कर्माणि व्याख्यातानि आचाराद्यानि गृह्यन्ते। यथोपदेशं देवताः। अग्निं स्विष्टकृतं चान्तरेण। अविकृतमातिथ्यम्। वैश्वदेवे विश्वेदेवाः। पौर्णमास्यां पौर्णमासी यस्यां क्रियते। इति।

काठकगृह्यसूत्रोक्तं तु—अथ पाकयज्ञः। चतुर्विधः पाकयज्ञो भवति हुतोऽहुतः प्रहुतः प्राशितश्चेति। हुतो हुतानाम्, उपहारोऽहुतानाम्, पिण्डपितृयज्ञः प्रहुतानाम्, मधुपर्को ब्रह्मौदनश्च प्राशितानाम्। दर्शपूर्णमासप्रकृतयः पाकयज्ञाः। तेष्वावृदुपचारस्तूष्णीम्। अनर्थलुप्तम्। प्रयाजाभावाद्योपभृत्। एष औपसदोऽग्निर्वैवाहनो वा। तस्मिन् पाकयज्ञाः। तेषामुक्तमुपसमाधानम्। यथा करिष्यं च पवित्रसंस्करणाज्यनिर्वपणग्रहणाधिश्रयणोत्पवनमवेक्षणं च। प्रागाज्यभागाभ्यामुक्ता आघारौ। युक्तः पुरस्तादिति पञ्चभिराज्यस्य जुहोति। आयुषः प्राणमिति सन्ततीर्जुहोति। जयाभ्यातानान् राष्ट्रभृतश्च। चात्रौ नाज्यभागौ। स्विष्टकृदाज्यभागा अन्तरेणाऽऽवापः। नामधेयेन देवतां यजेत तद्देवतया वर्णाग्नेयीं वोहेदग्नीषोमीयामैन्द्राग्नीं वा द्विदेवतेषु वैश्वदेवीं बहुदेवतेषु। ऋतु-तिथि-नक्षत्र-देवताश्च यजेत। प्राक् स्विष्टकृत उपहोम 'इह गावोऽयं यज्ञ आन:

प्रजाम्, धूर्भिरुपधूर्भिश्च हुत्वेडामग्न इति स्विष्टकृतम्। त्वं नो अग्न इति द्वाभ्यां जुहुयाद्याभूरिति च सर्वप्रायश्चित्तानि मनोज्योतिरिति सप्तभिः। परिस्तरणान्यनुप्रहरेन्नानुप्रहरेदित्येके। एवं सर्वा देवताश्चेष्ट्यानि च। उक्तः शेषः। इति।

मानवगृह्यसूत्रोक्तं तु—प्रागुदक्षं लक्षणमुद्धृत्यावोक्ष्य स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरस्रं वाऽग्निं निर्मथ्याभिमुखं प्रणयेत्। दर्भाणां पवित्रे मन्त्रवदुत्पाद्याग्नेयं स्थालीपाकं श्रपयति। पवित्रान्तर्हितेऽप आनीय तण्डुलानोप्य मेक्षणेन प्रदक्षिणं पर्यायुवन् जीवतण्डुलं श्रपयति। घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्योत्तरत उद्वासयति। इमं स्तोममर्हत इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य पश्चादग्नेरेकवृद्बर्हिः स्तृणाति। उदक् प्राक् तूलान् दर्भान् प्रकृष्य दक्षिणांस्तथोत्तरानग्रेणाग्निं दक्षिणैरुत्तरानवस्तृणाति। दक्षिणतोऽग्नेर्ब्रह्मणे संस्तृणात्यपरं यजमानाय पश्चार्द्धे पत्न्यै। उत्तरतः संस्तीर्णे पवित्रे स्रुक्स्रुवावाज्यस्थालीं प्रक्षाल्य संस्तीर्णे द्वे द्वे प्रयुनक्ति। तूष्णीं दक्षिणत आज्यं निरुप्य मन्त्रवत् पर्यग्नि कृत्वा तूष्णीं स्रुक्स्रुवौ संमृज्याऽदब्धेन त्वा चक्षुषा वेक्ष इति पत्न्याज्यमवेक्षते। तूष्णीमधिश्रित्योपाधिश्रित्य पश्चादग्नेरुपसाद्य मन्त्रवदुत्पूयावेक्षते। तेजोऽसीत्याज्यं यजमानोऽवेक्षते। आज्यस्थाल्यां स्रुवं निधायाग्रेण स्थालीपाकमन्वायातयत्यपरेण मेक्षणम्। तूष्णीं प्राञ्चमिध्ममुपसमाधाय ब्रह्माणमामन्त्र्य ॐ जुहुधीत्युक्ते दक्षिणेन हस्तेनान्तरेण जानुनी प्राङासीन आघारौ जुहोति। प्राजापत्यमुत्तरार्द्धे प्राञ्चं मनसा, ऐन्द्रं दक्षिणार्द्धे प्राञ्चमेव। अथाऽऽज्यभागौ जुहोति। आग्नेयमुत्तरार्द्धे सौम्यं दक्षिणार्द्धे। समावनक्ष्णौ। युक्तो वह यदाकूतमिति द्वाभ्यामग्निं योजयित्वा। नक्षत्रमिष्ट्वा नक्षत्रदेवतां यजेत् तिथिं तिथिदेवतामृतुमृतुदेवतां च। उपस्तीर्याप उपस्पृश्य मेक्षणेन स्थालीपाकस्यावद्यति मध्यात् प्रथमं पूर्वार्धाद् द्वितीयम्। पश्चार्धात् तृतीयं यदि पञ्चावदानस्य। अवत्तमभिघार्य स्थालीपाकं प्रत्यभिघारयति। अग्नये स्वाहेति मध्ये जुहोति। यो देवानामसीति रौद्रस्य। जयान् हुत्वाज्यस्य स्विष्टकृते समवद्यत्युत्तरार्धात् सकृद् द्विमात्रम्। द्विर्वा यदि पञ्चावदानस्य। अवत्तं द्विरभिघार्य नात ऊर्ध्वं स्थालीपाकं प्रत्यभिघारयति। अग्नये स्विष्टकृते स्वाहेत्यसंसक्तमुत्तरार्धपूर्वार्धे जुहोति। मेक्षणं दर्भांश्चाधायानुमतिभ्यां व्याहृतिभिश्च। त्वं नो अग्ने, सत्वं नो अग्ने, अयाश्चाग्नेसीत्येताभिर्जुहुयात्। वित्ते मुञ्चामि रशनां विरश्मीनिति च हुत्वा पवित्रेऽनुप्रहृत्याऽऽज्येनाभिजुहोति। एधोऽस्येधिषीमहीति समिधमादधाति। समिदसि समेधिषी महीति द्वितीयाम्। आपोऽस्मान्वचारिवमित्युपतिष्ठते। आपो हिष्ठीयाभिर्मार्जयते। पूर्णपात्रं दक्षिणा। बर्हिरनुप्रहरति। एतेन स्थालीपाकेन स्थालीपाकाः सर्वत्र व्याख्याताः। अग्नये स्वाहेति सायं जुहोति प्रजापतय इति द्वितीयाम्। सूर्याय स्वाहेति प्रातः। प्रजापतय इति द्वितीयाम्। अग्नीषोमीयः स्थालीपाकः पौर्णमास्यामैन्द्राग्नोऽमावास्यायाम्। उभयत्र वाग्नेयः। आग्नेयः पूर्वः पौर्णमास्यामुत्तरोऽमावास्यायाम्। इति।

कौषीतकि-गृह्यसूत्रोक्तं च—अथ पाकयज्ञाः। चतुर्विधः पाकयज्ञो भवति हुतोऽहुतः प्रहुतः प्राशितश्चेति। हुतो हुतानाम्। उपहारोऽहुतानाम्। पिण्डपितृयज्ञः प्रहुतानाम्। मधुपर्को ब्राह्मी-

वनश्च प्राशितावाम्। दर्शपूर्णमासप्रकृतयः पाकयज्ञाः। तेष्वावृदुपचारस्तूष्णीम्। अनर्थ-लुप्तम्। तूष्णीं निर्मन्थ्यं प्राप्नुयात् सान्तपनं यत्र दीप्यमानं वा बहिरग्निमुपसमाधाय परिसमुह्य पर्युक्ष्य परिषिच्य परिस्तीर्याऽऽज्यं विलीनोत्पूतं कृत्वाघारावाज्यभागान्तं हुत्वा अपरेणाग्निम्। इति।

पारस्करगृह्यसूत्रोक्तमित्थम्—अथातो गृह्यस्थालीपाकानां कर्म। परिसमुह्योपलिप्योल्लिख्यो-द्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत् प्रोक्ष्य निरुप्याज्यमधिश्रित्य पर्यग्नि कुर्यात्। स्रुवं प्रतप्य संमृज्या-भ्युक्ष्य पुनः प्रतप्य निदध्यात्। आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान् कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात्। एष एव विधिर्यत्र क्वचिद्धोमः। अग्न्याधेय-देवताभ्यः स्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वाज्याहुतीर्जुहोति। त्वन्नोऽअग्ने, सत्वन्नोऽअग्ने इमम्मे वरुण, तत्त्वायामि, ये ते शतमयाश्चाग्न उदुत्तमं, भव तन्न इत्यष्टौ पुरस्तात्। एवमुपरिष्टात् स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति। स्विष्टकृते च। अथास्यग्नेर्यद्‌ कृतं यत् कर्मणात्यरीरिचं देवागातुविद इति। बर्हिर्हुत्वा प्राश्नाति। ततो ब्राह्मणभोजनम्। इति।

बौधायनगृह्यसूत्रोक्तमेवम्—आनयन्त्येतमग्निम्। अथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा पक्वमोदनं पायसं वा याचति। तमभ्युक्ष्याग्नावधिश्रयति। आज्यं निर्वपति। अथाज्य-मधिश्रयति। उभयं पर्यग्नि कृत्वा मेक्षणं स्रुवं च संमार्ष्टि। अथैतं चरुं श्रपयित्वाऽभिघार्यो-दञ्चमुद्वास्य प्रतिष्ठितमभिघारयति। परिधानप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति। स एवमेव सर्वेषां स्थालीपाकानां कल्पः।

गृह्यपरिभाषासूत्रोक्तञ्च—अथ शुचौ देशे समे, गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलमुपलिप्तं भवति तच्छुचिर्भवति। तस्य मध्यत उद्धृत्यावोक्ष्यारत्निमात्रं समचतुरस्रं स्थण्डिलं करोति। तत्रोल्लेखनादिकर्म प्रतिपद्यते। दर्भेषु दक्षिणतो ब्राह्मण उपविशति, स यद्युपविशत्यादितो व्युत्थाय-ऽऽसास्ते। यदु वै नोपविशति दर्भेषु दक्षिणतः प्रागग्रं कूर्चं निधाय ॐ भूर्भुवः स्वरों ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मणे इत्युपतिष्ठते ब्रह्मैवात्रासीनो भवति तस्मै वरं ददाति ब्राह्मणं वा भोजये-दिति। एतेन सशिरस्को यज्ञः यो वै यज्ञस्य शिरो वेद शीर्षण्वान् मेध्यो भवतीति। उत्तरत उदपात्रं ब्राह्मणमिध्माबर्हिरिति एतद्वै यज्ञस्य शिरो य एवं वेद शीर्षण्वान् मेध्यो भवति इति ब्राह्मणम्। अथ शम्याः परिदधाति शम्या वा परिधयो वा इति विज्ञायते। नापरिधाय जुहुयाद् रक्षसामपहत्यै इति। सर्वत्र परिसमूहनपर्युक्षणपरिस्तरणपरिधानोपसमाधानाकरणमित्यादराद्याचार्याः। सर्वत्राकृत्य ये तत्र ब्राह्मणाः सन्ति ताननुज्ञाप्य कुर्वीत, यत्कारी स्यात् समृद्धमेवास्य तत्। इति।

अथात्र बौधायनगृह्यशेषसूत्रात् किञ्चिदुपस्थाप्यते—

अथ त्रिःसप्त पाकयज्ञानामुक्तं तच्छेषं व्याख्यास्यामः। पवित्रकरणं प्रोक्षणीसंस्कारं प्रणीता-प्रणयनं स्रुक्स्रुवसंमार्जनमिति दर्शपूर्णमासवत् तूष्णीम्। अथाग्निं परिस्तीर्य दक्षिणेनाग्निं

ब्रह्मायतने दर्भान् संस्तीर्योत्तरेणाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु पात्राणि सादयित्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा विस्रस्येध्मं त्रिः सर्वाभिः प्रोक्ष्य दर्भेषु दक्षिणतो ब्राह्मणमुपवेशयति दर्शपूर्णमासवत् तूष्णीम् । अरत्निमात्राः परिधय आर्द्रा वा सत्वकाः । प्रादेशमात्राण्येकविंशतिरिध्मदारूणि भवन्तीति । अथ यदि शम्याः परिदधाति शमीमय्यः शम्याकृतयो वाऽरत्निमात्राः । अथेध्ममभ्यज्य परिसमिधं शिनष्टि । स्वाहाकारेणाभ्याधायाऽऽघारावाघार्याऽऽज्यभागौ प्रतिमुखं प्रबाहुग् जुहोति । प्रसिद्धमाग्निमुखात् कृत्वा स्रुवेण दर्व्यामुपस्तीर्य पूर्वार्धादवदायापरार्धादवदाय्याभिघारयति प्रत्यनक्ति । यदि पञ्चावत्ती स्यात् दर्व्यामुपस्तीर्य मध्यात् पूर्वार्धादवदायापरार्धादवदायाभिघारयति प्रत्यनक्ति । स्रुवं निमृज्य यथादेवतं पुरोऽनुवाक्यामनूच्य याज्यया जुहोति । अथोपस्तीर्य सकृदुत्तरार्धात् स्विष्टकृतमवद्यति द्विरभिघारयति न प्रत्यनक्ति । तमन्तःपरिधि सादयित्वा यथाम्नातमाज्याहुतीर्जुहोति । व्याहृतिभिरनाम्नातेषु । अथ स्विष्टकृतमादायोत्तरार्धपूर्वार्धे जुहोति पूर्वेण वाऽग्नेतं मेक्षणमनुप्रहरति । अथैनत् संस्रावेणाभिजुहोति । दर्व्यामप आनीय संक्षाल्यमन्तःपरिधि निनयति । निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वा बहिःपरिधि निनयति । अथ समिधमाधाय जयान् जुहोति । अभ्यातानान् जुहोति । अथ राष्ट्रभृतो जुहोति । अथामात्यान् होमान् जुहोति । अथ प्राजापत्यां जुहोति । अथ सौविष्टकृतं जुहोति । स्रुवेण परिधीननक्ति । अथ परिस्तरात् समुच्छिद्याऽऽज्यस्थाल्यां प्रस्तरवद्बर्हिरक्त्वा तृणं प्रच्छिद्याग्नावनुप्रहृत्य तूष्णीं तृणं चाथ शम्या अपोह्य परिधीननुप्रहरति । मध्यमं परिधिमनुप्रहृत्याथेतरावुपसमस्यति । अथैनान् संस्रावेणाभिजुहोति । अथाग्रेणाग्निं यथाम्नातं हुतशेषं दत्त्वा शेषं कुर्यादन्यत्र विवाहशेषात् । तथैव परिषिञ्चति अन्वमंस्थाः प्रासावीरिति मन्त्रान्तान् सन्नमयति । अथ प्रणीताभ्यो दिशो व्युन्नयति दर्शपूर्णमासवत् तूष्णीम् । ब्रह्माणं विसृज्य शेषं प्राश्नाति आयुरसि विश्वायुरसीति । प्राश्याप आचम्य जठरमभिमृशति 'यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः । इति द्वाभ्याम् । शेषमभिघारितं ब्राह्मणाय दद्यात् । न पत्न्या हविषां भक्षणमन्यत्रोच्छिष्टमभिसम्पाताभिहुतानां पिण्डदानस्य शेषं च नैव देवताहुतशेषमन्यत्र ब्रह्मोदनात् ।

अग्निहीनमनाहुतिर्मन्त्रहीनं तु ऋत्विजः ।
आज्यहीनं कुलं हन्ति स्वरहीनं तु पशवः ॥
यजमानं दक्षिणाहीनमन्नहीनं तु राष्ट्रकम् ।
सर्वहीनं सहस्राणि नास्ति यज्ञसमो रिपुः ॥
तस्मात् सर्वप्रयत्नेन किञ्चिद्-द्रव्यः समाचरेत् ।
श्रियः कामश्चरेत् सर्वं सपूर्वं सहदक्षिणम् ॥
एवमृषिविधानोक्तं मुनीनां तत्त्ववेदिनाम् ।
सर्ववेदाह्निकं होमं सर्वलोकेषु पूजितम् ॥
सर्वलोकेषु पूजितमितीत्याह भगवान् बौधायनः ॥ इति ।

**अथ यदि गृह्येऽग्नौ सायं प्रातर्होमयोर्वा दर्शपूर्णमासयोर्वा हव्यं वा होतारं वा नाधिगच्छेत् कथं कुर्यादिति॥ १२ ॥**

[1]'अथेति पूर्वपदोपादानार्थः। यदि गृह्येऽग्नौ सायंप्रातर्होमयोर्वा दर्शपूर्णमासयोर्वा[2] यथोक्ते काले [3]हव्यं नाधिगच्छेत् न प्राप्नुयात्, [4]होतारं वा होमकर्त्तारम्, तत्र कथं कुर्यात्? किं स्वस्मात् कालात् प्रच्युतमात्रस्यैव [5]लोकाग्नित्वम्, [6]उत प्रच्युतमेव तत् कर्मेत्युपेक्षणीयम्? [7]उत वा [8]स्यति कालात्ययेऽपि न लोपोऽस्ये*त्येवं कश्चित् [9]कालविधिरित्यादिसन्देहपरि[10]चिच्छित्विषयेदमाह—

**आ सायमाहुतेः प्रातराहुतिर्नात्येत्या प्रातराहुतेः सायमाहुतिरमावास्यायाः पौर्णमासं नात्येत्या पौर्णमास्या आमावास्यम्॥१३॥**

आङिति मर्यादायां नाभिविधौ। आ सायमाहुतेः प्राक् सायमाहुतिकालात् प्रातराहुतिर्नात्येति नातिक्रामति। यदि प्रातर्होमः स्व[11]कालमतिक्रामति। होतृ-हव्ययोरन्यतराप्राप्तावथ तत्प्राप्तौ सायमाहुतिकालात् पूर्वं सर्वप्रायश्चित्तं हुत्वा यदा [12]तदैव जुहुयादिति। ननु कुत [13]एतत्, यत् सर्वप्रायश्चित्तं[14]हुत्वा जुहुयादिति? उच्यते—एवंप्रकारदोषसम्बन्धिन [15]एव श्रुतौ तस्या[16]विशेषेण विधानात्। "स होवाच किं होष्यसीति। प्रायश्चित्तमिति। किं प्रायश्चित्तमिति सर्वप्रायश्चित्तमिति। किं सर्वप्रायश्चित्तमिति महाव्याहृतीरेवमनुवषित्यादि[17]"(A)। तथा [18]च यच्चावगतं [19]यच्चानवगतं [20]सर्वस्यैव [21]प्रायश्चित्तिरिति।

तथा च गृह्यान्तरम्—स्वकाले सायमाहुतेरप्राप्तौ होतृहव्ययोः।
प्राक् प्रातराहुतेः कालः प्रायश्चित्ते हुते सति॥

---

A. प्रमाणीकृतेयं श्रुतिस्तट्टीकाकारेणापि तथा च ब्राह्मणमित्युपोद्घातेन।

---

1. 'अथेत्यपूर्वसूत्रोपादानार्थः' ख। 2. अतःपरं 'हव्यं वा होतारं वा' इत्यधिकं क-ग। 3. 'हव्यं' नास्ति ख। 4. 'होतारं होमकर्त्तारं वा' ख। 5. 'लोकाग्नित्व' नास्ति ख। 6. 'अथ' ख। 7. 'अथ वा' ख। 8. 'स्वस्यकालात्ययेऽपि भवेति-' ख। 9. 'कालावधि-' ख। 10. '-च्छित्तये इदमाह' ख। 11. 'कालातिक्रामति' ख। 12. 'तदैव' ख। 13. 'एतस्य' ग। 14. 'हुत्वा' नास्ति ख। 15. 'एव' नास्ति ख। 16. 'विशेषवचनाविधानात्' ख। 17. 'आदि' नास्ति ख। 18. 'च' नास्ति ख। 19. 'यच्चानावगतं' क। 20. 'सर्वस्यैव' ग। 21. 'प्रायश्चित्तिरिति' क-ग

प्राक् सायमाहुतेः प्रातर्होमकालानतिक्रमः ।
प्राक् पौर्णमासाद्दर्शस्य प्राग् दर्शादितरस्य च(A) ॥

तस्माद् यत्रान्यद्विशेषप्रायश्चित्तं नास्ति, यथा—

यद्यग्निरग्निनाऽन्येन सम्भवेत्राहितः क्वचित् ।
अग्नये विविचये' इति जुहुयाद्वा "घृताहुतिम्(B) ॥ इत्यादौ"(C)

'तत्रैतदेव द्रष्टव्यम । अनेनैव सूत्रशेषो व्याख्यातः(D)। एवं वैश्वदेवेऽपि स्वकालात् प्रच्युते द्रष्टव्यम् । अन्ये त्वाहुः—इह वैश्वदेवस्यानुपदेशाद् गृह्यान्तरोक्तं

A. गृह्यान्तरवचनमिदमुपलभ्यते कर्मप्रदीपे ३।८।७।८ ।

B. छन्दोगपरिशिष्टम् । २।८।१२ । अस्य प्रकाशकारोक्ता व्याख्या—यद्यावसथ्योऽग्निराहिते-माग्नयन्तरेण हुते चेद् वाग्न्यान्निना मिश्रीभवेत् तदा अग्नये विविचिना अग्नौ घृताहुतिं जुहुयात् । वाशब्दश्चाष्टाकपालपुरोडाशेन सह विकल्पार्थः, तथा च महाभारतम्—

संसृज्येयुर्यदाऽन्योन्यं कथञ्चिद् वायुनाऽग्नयः ।
इष्टिस्त्वष्टाकपालेन कार्या विविचयेऽग्नये ॥ इति ।

C. आदिपदेनैतान्यपि वचनानि समुच्चीयन्ते—

अग्नयेऽप्सुमते चैव जुहुयाद् वैद्युतेन चेत् ।
अग्नये शुचये चैव जुहुयाच्चेद् दुरग्निना ।
गृहदाहाग्निनाऽग्निस्तु यष्टव्यः क्षामवान् द्विजैः ।
दावाग्निना च संसर्गे हृदयं यदि तप्यते ॥
द्विभृतो यदि संसृज्येत् संसृष्टमुपशामयेत् ।
अपवृष्टं जागरयेद् गिरिशर्मैवमुक्तवान् ॥ इति, छ० प० २।८।१३-१५

D. "नन्विदं प्रदर्शनार्थं परिकीर्तनं सायमाहुत्यादीनां न नियमार्थम् । कुतः ? याज्ञिकसमयात् । तथा चोक्तं त्रिकाण्डमण्डनेन—

मुख्यकाले यदाऽवश्यं कर्म कर्तुं न शक्यते ।
गौणकालेऽपि कर्तव्यं गौणेऽप्यत्रंशो भवेत् ॥
आ सायमाहुतेः कालात् कालः स्यात् प्रातराहुतेः ।
प्रातराहुतिकालात् प्राक् कालः स्यात् सायमाहुतेः ॥
पूर्णमासस्य कालोऽस्ति पुरा दर्शस्य कालतः ।
स्याच्छाकमेधकालोऽपि आ शुनासीरकालतः ॥

1. 'त्वा' इत्यधिकं क-ग । 2. 'घृतमिति' ख । 3. 'इत्यादौ' नास्ति ख, 'चादौ' नास्ति ग । 4. 'तत्र तदेव' क । 5. 'विशेषो' क ।

द्रष्टव्यम्। युक्तश्चै त[1]न्यायविरोधात् स्वशाखाभेदे पठितत्वाच्च[2]। किं तत् ?

उच्यते— वैश्वदेवे त्वतिक्रान्ते अहोरात्रमभोजनम्।
प्रायश्चित्तमथो हुत्वा पुनः सन्तनुयाद् व्रतम्(A) ॥ [3]इति।

एवन्त्वहोरात्राभोजनमधिकम्। प्राक् सूर्यास्तमयात् [4]प्रथमवैश्वदेवो नात्येति। सायं च प्रागर्द्धप्रहरात्। यतस्तावानेव भोजनकालः।

तथा चोक्तम्— ऋषिभिर्द्विरशनमुक्तं विप्राणां मर्त्यवासिनां नित्यम्।
अहनि च[5] तथा तमस्विन्यां सार्द्धप्रथमयामान्तः(B) ॥

एकस्यै[6]व वैश्वदेवस्यात्यये एतद् द्रष्टव्यम्। [7]द्वयोरतिक्रमे विशिष्टस्य प्रायश्चित्तस्य विधानात्।

परेणाग्नौ हुते स्वार्थं परस्याग्नौ हुते स्वयम्।
पितृयज्ञात्यये चैव वैश्वदेव[7]*द्वयस्य च ॥

शुनाशीरीयकालोऽप्या वैश्वदेविककालतः।
श्यामाकैर्व्रीहिभिश्चैव यवैरन्योऽन्यकालतः ॥
प्राग् यष्टुं युज्यतेऽवश्यं नैव स्वाग्रयणात्ययः।
दक्षिणायनकाले वा पश्चिज्या योत्तरायणे ॥
अन्योन्यकालतः पूर्वं यष्टुं युक्ते उभे अपि।
एवमागामियागीय-मुख्यकालावधस्तनः ॥
स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः।
यदागामिक्रियामुख्यकालस्याप्यन्तरालवत् ॥
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्मणि ॥ इति।

सर्वमेव प्राक्तनकर्म प्रायश्चित्तहोमानन्तरमेव गौणकाले करणीयम्। सायमाहुत्यादौ तथा दर्शनात्।

गौणेषु तेषु कालेषु कर्म चोदितमारभेत्।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् ॥

इति स्मरणाच्च। वैश्वदेवस्य पुनरतिक्रमे अभोजनमपि कृत्वा कालान्तरे तदाचरणमि"त्याह तर्कालङ्कारः स्वभाष्ये।

A. कात्यायनसंहिता २७।९। "प्रथमवैश्वदेवातिक्रमे दिवाऽभोजनं द्वितीयवैश्वदेवातिक्रमे च रात्रावभोजनमि"ति परिशिष्टप्रकाशः।

B. कात्यायनसंहिता १३।९।

---

1. 'चापि' नास्ति क-ग। 2. 'च' नास्ति क-ग। 3. 'इति' नास्ति ख। 4. 'पूर्वं' ख। 5. 'अहनि तथाच' ख। 6. 'एव' नास्ति ख। 7. चिह्नितांशो नास्ति ख।

अनिष्ट्वा [1]पितृयज्ञेन नवान्नप्राशने तथा ।
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत्(A) ॥ इति ।

यस्मात् [2]च कालात्यये प्रायश्चित्तम् अतः—

**एतेनैवावकाशेन हव्यं वा होतारं वा लिप्सेत ॥ १४ ॥**

अर्थात् प्राप्ते नियमार्थं पुनरुच्यते, [3]यत उक्तादवधेः [4]अतिक्रमे कर्मात्येति तस्मादेतेनैवावकाशेन एतेन कालावधिना हव्यं होतारं वा लब्धुमिच्छेत् [5]प्रयत्नेनेत्यर्थः । यथा कालात्यय एव न स्यादिति(B) ।

एतस्मिन्नपि कालावधौ हविष्ये[6]ऽनुपलभ्यमाने कथमित्यत आह—

**अपि वा यज्ञियानामेवौषधिवनस्पतीनां फलानि वा पलाशानि वा[7] श्रपयित्वा जुहुयात् ॥ १५ ॥**

एवकारकरणमयज्ञि[8]यौषधिवनस्पतिप्रतिषेधार्थम्[8]* । [9]प्रशस्तवस्तूपसंग्रहार्थं वा । ओषधयो व्रीह्याद्याः ।

उक्तञ्च—　　व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाश्चौषधयः सप्त[10]विपदो घ्नन्ति धारिताः[10]*(C) ॥ इति ।

वनस्पतिग्रहणं सर्वयज्ञियवृक्षप्रदर्शनार्थम्(D) । तेषां फलानि [11]वा पलाशानि [12]पत्राणि वा श्रपयित्वा जुहुयात् । न तु कालमतिपातयेत् ।

[13]एवमेषामप्यनुपलब्धौ कथमित्यत आह—

---

A. छन्दोगपरिशिष्टम् २।८।१९-२० ।

B. यदा पुनर्लभ्यते तदा होतव्यमित्याह कर्मप्रदीपः—
पौर्णमासात्यये हव्यं होता वा यदहर्भवेत् ।
तदहर्जुहुयादेवममावास्यात्ययेऽपि च ॥ इति २।८।७ ।

C. गौभिलस्मृतिः २६।६ ।

D. मनूक्तवनस्पतिलक्षणं तु—
अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः । इति म० स० १।४७ ।

---

1. 'नव-' ख-ग । 2. 'च' नास्ति क-ग । 3. 'यदुक्तादवधेः' ख । 4. 'इति क्रमे' ख । 5. 'प्रयतेतेत्यर्थः' ख । 6. '-ऽनुलभ्यमाने' क, '-लभ्यमाने' ख । 7. 'वा' नास्ति ख । 8. '-यानां निषेधार्थम्' ख । 9. 'प्रशस्तवस्तुप्रशस्तफलग्रहार्थम्' ख । 10. चिह्नितांशो नास्ति क । 11. 'वा' नास्ति क-ग । 12. 'पत्राणि' नास्ति क-ग । 13. 'एतेषामप्यलब्धौ' ख ।

अप्यप एवान्ततो जुहुयादि[1]ति ह स्माह पाकयज्ञ ऐडो हुतं ह्येव ॥ १६ ॥

[2]अपि अपः[2]* उदकमपि जुहुयान्न तु कालमतिक्रमेत्। एवकारकरणमाशङ्का-निवृत्त्यर्थम्। अन्ततो मध्यत एव जुहुयान्न त्वग्न्युपशमशङ्कां कुर्या[3]दिति। 'इत्येत-दाह उक्तवान्। कः पाकयज्ञनामा कश्चिदृषिः, इडाया अपत्यं ऐडः। ह स्म इति नि[5]पातौ। हि शब्दो यस्मादर्थे। यस्मादेवमपि कृते हुतमेव भवति। प्रायश्चित्तं न भवतीत्यर्थः(A)।

उदकस्याप्यभावादहूयमाने यथोक्तेऽप्यवधौ किमस्य भवतीत्यत आह—

अहुतस्य प्रायश्चित्तं भवतीति ॥ १७ ॥

किं तत् प्राय[6]श्चित्तमिति। उच्यते—पुनराधानम्। कुत [7]एतत्?

होमद्वयात्यये दर्शपूर्णमासात्यये तथा।
पुनरेवाग्निमादध्यादिति [8]भार्गवशासनम्(B)॥

इति गृह्यान्तरवचनात्। तस्मादेतत् प्रायश्चित्तम्(C)। एवम् अन्यान्यपि [9]च

A. अथात्र सायंप्रातर्होमादीनां गौणकालादिक्रमधिकृत्य यदुक्तं छन्दोग-खादिर-द्राह्यायण-गृह्येषु प्रायः समानानुपूर्वीकैः सूत्रैस्तदुपस्थाप्यते—सर्वमहः प्रातराहुतेः स्थानम्। रात्रिः सायमाहुतेः। सर्वोऽपरपक्षः पौर्णमासस्य। पूर्वपक्षो दार्शस्य। अभोजनेन सन्तनुयादित्येके। अविद्यमाने हव्ये यज्ञियानां फलानि जुहुयात् पलाशानि वा। अपो वा। हुतं हि प्रायश्चित्त-महुतस्य। आज्यं जुहुयाद्विपोऽनादेशे देवतामन्त्रानादेशे ॥ इति।

B. वचनमिदमुपलभ्यते छन्दोगपरिशिष्टे ३।८।१०।

C. अथ गृह्यकर्मप्रकाशिकोक्तो विच्छिन्नाधानप्रयोगः—

अग्न्यागारं तथा श्राद्धं क्षौमाणाञ्चैव धारणम्।
आवृत्तौ नैव युञ्जीत भ्योभूते मन्थनं तथा ॥

इति परिशिष्टोक्तेः, अग्न्यागारकरण-नान्यहतवस्त्रधारणारणिप्रदान-जागरणाग्निधारणाग्निप्रशमनानि वर्जयेत्। अतिक्रान्तदिनपरिगणनया होमद्रव्यं दत्त्वा विच्छिन्नसन्धानार्थं गृह्याग्निमाधास्ये अथ वा पुनराधानं करिष्ये इति संकल्प्य सद्यः पूर्वारणिं मथित्वा पूर्वायतने स्थापयतीति मथिता-ग्न्याधाने, आहृताग्न्याधाने तु पूर्वोक्तगृहादग्निमाहृत्य पूर्वायतने स्थापयेत्। तत्राऽऽज्यतन्त्रेण

1. '-ति' नास्ति ख। 2. चिह्नितांशो नास्ति ख। 3. 'इति' नास्ति ख। 4. 'इति' नास्ति ख। 5. '-पातः' ख। 6. '-त्तं भवति' ख। 7. 'एतत्' नास्ति क-ग। 8. 'भागुरि-' ग। 9. 'च' नास्ति ख।

ग्रन्थान्तरोक्तानि पुनराधाननिमित्तानि उपलभ्यानि असमक्षं तु दम्पत्यो-रित्यादीनि(A)। पुनराधानविधिश्च कर्मप्रदीपोक्तो द्रष्टव्यः।

व्याहृतित्रयहोमान्ते कस्ते जामिरित्यध्यायेनाग्निमुपस्थायाग्निमीडे अग्न आयाह्यग्निभिः, अग्न आयाहि वीतये। तिलोऽग्निर्ज्योतिः पुनरूर्जा, सहरय्या, अग्निं दूतम्, अग्ने मृड, इत्येतैर्मन्त्रैरष्टाऽऽज्याहुतीर्हुत्वा पूर्णाहुत्यादिकं सर्वं पूर्ववत् समापयेत्। अथोपस्थानमन्त्रप्रकाशः—तस्य ऋष्यादयः कस्ते-जामिरिति गोतमगायत्र्यग्निः ईडेन्यो इत्यस्य विश्वामित्रो गायत्र्यग्निः, उतेबृहन्तो इत्यस्य विरूपो गायत्र्यग्निः, पाहि नो अग्न इत्यस्य भर्गो गायत्र्यग्निः, इनो राजन्निति त्रितत्रिष्टुबग्निरुद्रसूर्याः कवात इत्युशना गायत्र्यग्निः, अग्न आयाहीत्यस्य भर्गो बृहत्यग्निः, अच्छानः इत्यस्य शुद्धीतिर्बृहत्यग्निः अदाभ्य इति विश्वामित्रो गायत्र्यग्निः, भद्रो न इति सोम उष्णिगग्निः, अग्ने वाजस्येति गोतम उष्णिगग्निः, विशो विशोव इति गोपवनः प्रथमाया अनुष्टुप् गायत्र्युत्तरयोरग्निः, समिद्धमिति भारद्वाजो जगत्यग्निः उपत्वेत्यस्य गायत्र्यग्निः, अग्न्युपस्थाने विनियोगः। इति। मन्त्रास्तु कर्मप्रदीपवचनटिप्पन्यामत्र (पृ० २५६) द्रष्टव्याः।

A. असमक्षं तु दम्पत्योर्होतव्यं नर्त्विगादिना।
द्वयोरप्यसमक्षं हि भवेद्धुतमनर्थकम्॥
विहायाग्निं सभार्यश्चेत् सीमामुल्लङ्घ्य गच्छति।
होमकालात्यये तस्य पुनराधानमिष्यते॥
अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः।
पालयेदुपशान्तेऽस्मिन् पुनराधानमिष्यते॥
ज्येष्ठा चेद् बहुभार्यस्य अतिचारेण गच्छति।
पुनराधानमत्रैके इच्छन्ति न तु गौतमः॥

इति कर्मप्रदीपः ३।१।१-४।

ऋत्विक्पुत्र-भ्रातृ-गुरु-भागिनेय-जामातृभिर्जायापत्योर्यजमानयोरप्रत्यक्षं न होतव्यम्, हि यस्माद् द्वयोरप्रत्यक्षं हुतं निष्फलं स्यात् तस्मादन्यतरोपस्थितावेव।

ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः।
एभिरेव हुतं यत् स्यात् तत् कृतं स्वयमेव हि॥ इति दक्षोक्तेः

ऋत्विगादिभिर्होतव्यमिति। संप्रति पुनराधाननिमित्तान्याह विहायाग्निमित्यादि यदि सभार्य आहिताग्निर्यत्राग्निस्तद्ग्रामसीमामतिक्रम्य याति, गते तस्मिन्, सायं प्रातर्होमकालो-ऽतिक्रमेत् तदा तस्य पुनराधानं मुनिभिरिष्यते आधानजन्याग्निसंस्कारनाशादिति। अरण्युत्तरारण्योरन्यतरस्या अपि विशीर्णभीत्त्वे अग्निना च दाहे सति तदरणिनिष्पादितमग्निं

पूर्वैव योनिः [1]पूर्वावृत् पुनराधानकर्मणि ।
विशेषोऽत्राग्न्युपस्थानमाज्याहुत्यष्टकं तथा ॥
कृत्वा व्याहृतिहोमान्तमुपतिष्ठेत पावकम् ।
अध्यायः केवलाग्नेयः [2]"कस्ते जामिरमानसः(A) ॥

यजमानो रक्षेद् यावत् तस्मिन्नग्नौ निर्वापिते पुनराधानमिष्यते । बहुपत्नीकस्य यजमानस्य यदि प्रथमोढा सवर्णा पुरुषान्तरं याति तदाऽग्नेके पुनराधानमिच्छन्ति गौतमस्तु नेति उत्तरत्वात् सिद्धान्त इति । वचनानामेषामित्येवं प्रकाशकारोक्ता व्याख्या ।

A. तत्राऽऽग्नेयाध्याये प्रथमा ऋक्—

ॐ कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितः ।
त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ॥
यजानो मित्रावरुणा यजा देवां ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥१॥

अथात्राग्नेयाध्यायमन्त्राणां विदुषुयपत्तिज्ञानार्थं सायणाचार्यकृता व्याख्या प्रतिमन्त्रमुपादीयते—

हे अग्ने जनानां मनुष्याणां मध्ये ते तव कः जामिः को बन्धुः । त्वत्सरूपो बन्धुर्नास्तीति भावः । कः दाश्वध्वरः, दाशुर्दत्तः अध्वरो यज्ञो येन, त्वां यष्टुमतिसमर्थः कोऽपि नास्तीति । को ह त्वं कथम्भूत इति सर्वैर्न ज्ञायते, कस्मिन् स्थाने श्रितः असि, तत् स्थानमपि न केन विज्ञायते, अतस्त्वमस्माभिर्मांसदृष्टिभिः कथमुपलब्धव्य इत्यग्निः प्रशस्यते । हे अग्ने त्वम् अनुग्रहीतृतया सर्वेषां जामिः बन्धुः असि, तथा प्रियः, प्रीणयिता त्वं यजमानानां मित्रः त्रायकोऽसि । ईड्यः स्तुत्यः त्वं सखिभ्यः समानाख्यानेभ्य ऋत्विग्भ्य सखा सखिवदत्यन्तं प्रियोऽसि । हे अग्ने नः अस्मदर्थं मित्रावरुणा, एतत्संज्ञकौ देवौ यज हविषा पूजय, तथा देवान् यज, ऋतं सत्यं यज्ञञ्च यज इत्येतदर्थं बृहत् प्रौढं स्वं दमं यज्ञगृहं यक्षि, सङ्गच्छस्व, त्वयि अन्तर्विद्यमाने सति हि यज्ञगृहं पूज्यते ॥ १ ॥

द्वितीया ऋक्—

ॐ ईडेन्यो नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषा ॥
वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मन्त ईडते ॥
वृषणं त्वा वयं वृषन् वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥ २ ॥

अस्या व्याख्या—ईडेन्यः स्तोतृभिरीड्यः, अत एव नमस्यः, तमांसि तिरः, ध्वान्तानि स्वभाभिस्तिरस्कुर्वन् दर्शतः सर्वैर्दर्शनीयः, अग्निः, वृषा यजमानस्य काम्यानां वर्षिता समिध्यते, आहुतिप्रक्षेपेण प्रज्वाल्यते । वृषा उ वृषैव कामानां वर्षिता देववाहनः देवान् हवींषि वाहयतीति, तत्र दृष्टान्तः अश्वो न, यथाऽश्वो राजानं वाहयति स्वपुरं प्रापयतीति वाहनभूतो योऽग्निः समिध्यते,

1. 'पूर्वं गात्' क । 2. 'कस्ते जामिरमानसः' ग, 'कस्तेजामिरमानसः' क ।

तमग्निं हविष्मन्तः सम्भृतहविष्का यजमाना ईडते कर्मसिद्ध्यर्थं स्तुवन्ति। वृषन् कामानां वर्षितः, हे अग्ने, वृषणः वृषणाः, घृताद्याहुतीनां सेक्तारो वयं वृषणम् आहुतिद्वारोदकस्य सेक्तारं दीद्यतं दीप्यमानं, बृहद् महान्तं तमग्निं समिधीमहि सम्यग् दीपयामः ॥ २ ॥

तृतीया ऋक्—

ॐ उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः। अग्ने शुक्रास ईरते ॥
उप त्वा जुह्वोऽममघृताचीर्यन्तु हर्यत। अग्ने हव्या जुषस्व नः ॥
मन्द्रं होतारमृत्विजं चित्रभानुं विभावसुम्। अग्निमीडे स उ श्रवत् ॥३॥

अस्या व्याख्या—हे दीदिवः, दीप्ताग्ने, समिधानस्य समिध्यमानस्य, ते तव, बृहन्तः महान्तः, शुक्रासः ज्वलन्तः, अर्चयः दीप्तयः, उदीरते उद्गच्छन्ति। हे हर्यत कामयमानाग्ने, मम घृताचीः घृतमञ्चन्त्यः, जुह्वः स्रुवः, त्वा त्वाम् उप यन्तु, नः अस्माकं, हव्या हव्यानि, जुषस्व सेवस्व च। मन्द्रं मादनम्, होतारं देवानामाह्वातारम्, ऋत्विजम् ऋतौ यष्टव्यम्, चित्रभानुं विविधदीप्तिम्, विभावसुं दीप्तिधनम्, अग्निम् ईडे स्तौमि। सः अग्निः श्रवत् उ अस्मदीयां स्तुतिं शृणोत्येव ॥ ३ ॥

चतुर्थी ऋक्—

ॐ पाहि नो अग्न एकया पाह्युत द्वितीयया।
पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभिर्वसो ॥
पाहि विश्वस्माद्रक्षसो अराव्णः प्रस्म वाजेषु नोऽव।
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥ ४ ॥

अस्या व्याख्या—हे अग्ने, नः अस्मान् एकया ऋचा गिरा पाहि रक्ष। उत अपि च द्वितीयया ऋचा पाहि पालय। पाहि तिसृभिर्गीर्भिः, ऊर्जामन्नानां बलानां वा, पते स्वामिन्, तथा पाहि चतसृभिर्गीर्भिः, हे वसो, वासकाग्ने। हे अग्ने विश्वस्मात् सर्वस्माद् रक्षसः, अराव्णः अदातुः, सकाशात् पाहि रक्ष, सोऽस्मान् वाजेषु संग्रामेषु, प्राव प्रकर्षेण रक्ष। स्म इति पूरणः। हि यस्मात् नेदिष्ठमन्तिकतमम्, आपिं बन्धुभूतम्, त्वामित् त्वामेव देवतातये यज्ञाय यज्ञसिद्ध्यर्थं वृधे वर्धनाय, नक्षामहे व्याप्नुमः। नक्षतिर्व्याप्तिकर्मा ॥ ४ ॥

पञ्चमी ऋक्—

ॐ इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमां अदर्शि।
चिकिद्विभाति भासा बृहताऽसिक्नीमेति रुशतीमपाजन् ॥
कृष्णां यदेनीमभि वर्पसा भूज्जनयन् योषां बृहतः पितुर्जाम्।
ऊर्ध्वं भानुं सूर्यस्य स्तभायं दिवो वसुभिररतिर्विभाति ॥
भद्रो भद्रया सचमान आगात् स्वसारं जारो अभ्येति पश्चात्।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात् ॥ ५ ॥

अस्या व्याख्या—हे राजन् दीप्यमानाग्ने, त्वम् इनः ईश्वरः सर्वस्य भवसि, अथ परोक्षः अरतिः हविरादाय देवान् प्रति गन्ता, समिद्धः सन्दीप्तः, रौद्रः शत्रूणां भयङ्करः, सुषुमान् ओषध्यात्मना स्थितोऽग्निः, सुष्ठु सूयत इति सुषुमः, तेन तद्वान् शोभनप्रसवो वा सोऽग्निः दक्षाय यजमानानां धनादिवृद्धयर्थं कर्मवृद्धयर्थं वा अदर्शि सर्वैर्दृश्यते। किञ्च चिकित् सर्वं जानानोऽग्निर्विभाति विशेषेण दीप्यते, तथा बृहता महता, भासा तेजसा ज्वालालक्षणेन, असिक्नीं रात्रिम्, एति सायंहोमसिद्धयर्थं गच्छति। किं कुर्वन् ? रुशतीं श्वेतवर्णां दीप्तिम् अपाजन् अपगमयन् सर्वतो विकिरन्, यद्वा रुशतीं दीप्तामुषसमागच्छन् अपक्षिपन् परित्यजन् रात्रिं गच्छति। सामर्थ्याद् रात्रिं परित्यजन्नुषसं प्रातर्होमसिध्यर्थं गच्छतीत्यर्थो लभ्यते। सोऽग्निः, यद् यदा कृष्णां कृष्णवर्णाम्, एनीं गच्छन्तीं रात्रिं वर्पसा आत्मीयेन ज्वालालक्षणेन रूपेणाभिभून् अभिभवति। किं कुर्वन् ? बृहतः महतः, पितुः सर्वस्य जगतः पालयितुः पितृभूताद् वा, आदित्याद् जां जायमानां योषाम् उषसं जनयन् अभिव्यञ्जयन्। तदानीम् अरतिः गमनशीलोऽग्निः, दिवः द्युलोकस्य, वसुभिः वासयितृभिः, आच्छादकैः सन्धुक्षणसमर्थैः आत्मीयैस्तेजोभिः, सूर्यस्य भानुं दीप्तिम्, ऊर्ध्वम् उपरिष्टात्, स्तभायं स्तम्भयन्, विभाति विशेषेण दीप्यते। भद्रः भजनीयः कल्याणः, भद्रया भजनीयया, दीप्त्योषसा वा, सचमानः सेव्यमानः, सङ्गच्छमानो वा, अग्निरागात् आजगाम। गार्हपत्यादाहवनीयम् आगच्छति, ततः पश्चाद् जारः जरयिता शत्रूणां, सः अग्निः, स्वसारं स्वयं सारिणीं भगिनीं वा आगतामुषसम्, अभ्येति अभिगच्छति। तथा सुप्रकेतैः सुप्रज्ञानैः, द्युभिर्दीप्तिभिः, तेजोभिः सह वितिष्ठन् सर्वतो वर्तमानः, सोऽग्निः, उशद्भिः श्वेतैः, वर्णैः वारकैरात्मीयैः तेजोभिः, रामं कृष्णं शार्वरं तमः, अभ्यस्थात्, सायंहोमकाले अभिभूय तिष्ठति ॥ ५ ॥

षष्ठी ऋक्—

ॐ कया ते अग्ने अङ्गिर ऊर्जोनपादुपस्तुतिम्। वराय देव मन्यवे ॥
दाशेम कस्य मनसा यज्ञस्य सहसो यहो। कदु वोच इदं नमः ॥
अधा त्वं हि नस्करो विश्वा अस्मभ्यं सुक्षितीः। वाजद्रविणसो गिरः ॥ ६ ॥

अस्या व्याख्या—हे अङ्गिरः, हे ऊर्जोनपात् अन्नस्य पुत्र, हे देव, द्योतमान अग्ने, वराय सर्वैर्वरणीयाय, मन्यवे शत्रूनभिमन्यमानाय, ते तुभ्यम्, कया कीदृश्या वाचा, उपस्तुतिं स्तोत्रम्, अहं भरेयम्। हे सहसो यहो बलस्य पुत्र, हे अग्ने, कस्य कीदृशस्य यज्ञस्य यज्वतो यजमानस्य मनसा युक्ताः सन्तो हवींषि तुभ्यं वयं दाशेम प्रयच्छेम, किञ्च तुभ्यमिदं नमः, कत् कदा, वोचे अहं वदामि, उ इति प्रश्ने। ऋषिः कदा दास्यामि, कदा स्तोष्यामि, इत्यग्निं पृच्छति। हे अग्ने, अध अथानन्तरम्, त्वं हि त्वमेव अस्मभ्यं करः कुरु, देहीत्यर्थः। नः अस्मदीया गिरः, त्वद्विषया विश्वाः सर्वाः, स्तुतीः एवं कुरु, यथा सुक्षितीः शोभननिवासाः, यथा वाजद्रविणसः अन्नयुक्तधनवतीः। अथ वा वाजो दीप्तिः, सर्वतो दीप्तधनाश्च कुरु, त्वमस्माभिः स्तुतः सन् गृहपुत्रान्नधनादीनि देहीत्यर्थः ॥ ६ ॥

सप्तमी ऋक्—

ॐ अग्न आयाह्यग्निभिर्होतारं त्वा वृणीमहे।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे॥
अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे।
ऊर्जो न पातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम्॥ ७॥

अस्या व्याख्या—हे अग्ने, अग्निभिः अन्यैः सह, आयाहि आगच्छ, तदर्थं होतारं देवानामाह्वातारम्, त्वा त्वां वृणीमहे, त्वामागतं प्रयता अध्वर्युहस्ताभ्यां नियता, हविष्मती घृतवती यजिष्ठं त्वां बर्हिः बर्हिषि, आसदे, आसाद्य च अनक्तु सिञ्चतु। हे सहसः सूनो बलस्य पुत्र, हे अङ्गिरः सर्वत्र गन्तः, त्वा त्वाम्, अध्वरे यागे, अच्छ अभिप्राप्तुं स्रुचः, चरन्ति गच्छन्ति, अतः ऊर्जः, अन्नस्य न पातं न पातयितारं रक्षकं बलस्य वा भर्तारं घृतकेशं प्रदीप्तकेशं पूर्व्यं पुरातनं पूरकं वा अग्निं यज्ञेषु अस्मदीयेषु ईमहे स्तौमि॥ ७॥

अष्टमी ऋक्—

ॐ अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम्।
अच्छा यज्ञासो नमसा पुरुवसुं पुरु प्रशस्तमूतये॥
अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणाम्।
द्विता यो भूदमृतो मर्त्येष्वाहोता मन्द्रतमो विशि॥ ८॥

अस्या व्याख्या—अच्छ अभिमुखं यन्तु गच्छन्तु नः अस्माकं गिरः स्तुतयः, कम्? शीरशोचिषम् अज्ञानशीलज्वालम्, दर्शतम् सर्वैर्दर्शनीयम् अग्निम्, तथा यज्ञासः यज्ञाश्च अस्मदीयाः, नमसा हविषा, आज्यादिलक्षणेन, अच्छ, अभिमुखं यन्तु गच्छन्तु, कीदृशम्? पुरुवसुं प्रभूतधनम्, पुरु प्रशस्तं बहुभिः सम्यक् स्तुतम्, ऊतये अस्माकं रक्षणाय। (सहसः सूनुं बलस्य पुत्रं जातवेदसमग्निं वार्याणाम् अन्नादीनां दानाय आ आह्वयामहे)। यः अग्निः, अमृतः, अमरणधर्मा देवेषु भवति स मर्त्येषु आ मनुष्येषु च, अभूत्, इत्येवं द्विता द्वैधं भवति। देवेष्वप्यमृतत्वमस्य प्रसिद्धम्, मनुष्येषु, विशि विक्षु, यजमानरूपासु प्रजासु होता होमनिष्पादकः, मन्द्रतमः मादयितृतमश्च भवति, तमच्छ यन्त्विति समन्वयः। अथ वा यः अमृतः, द्विता द्वित्वं द्वैधं द्विःप्रकारोऽभूत्, कथं मर्त्येषु सामान्येन दाहपाकादिसाधनोऽभवदित्येतत् प्रसिद्धम्, विशि यजमानरूपायां तु होता मन्द्रतमश्चाभवदित्येवं द्वित्वम्॥ ८॥

नवमी ऋक्—

ॐ अदाभ्यः पुर एता विशामग्निर्मानुषीणाम्। तूर्णी रथः सदा नवः॥
अभि प्रयांसि वाहसा दाश्वां अश्नोति मर्त्यः। क्षयं पावकशोचिषः॥
साह्वान् विश्वा अभियुजः क्रतुर्देवानाममृक्तः। अग्निस्तुविश्रवस्तमः॥ ९॥

अस्या व्याख्या—मानुषीणां मनोर्जातानां विशां प्रजानां पुर एता सन्मार्गप्रवर्तनेनाग्रतो

गन्ता अत एव तूर्णीः पूर्णिताः प्रजाः वैदिककर्मप्रवर्तनेनानुग्रहीतुं त्वरायुक्ताः, आलस्यरहिताः, रथः हविषां वहनाद्रथसदृशः, सदा तत्कर्मणि नवः पुनर्नवत्वनावृत्तिमयः, एवंविधोऽग्निः, अघ्राम्यः अहिंस्यः, न केनापि तिरस्कार्य इत्यर्थः। दाश्वान् हविषां दाता, मर्त्यः मनुष्यः यजमानः, वाहसा हविषां वाहकेनाग्निना, प्रयांसि अन्नानि, अभि अश्नोति अभितः सर्वतः प्राप्नोति। किञ्च पावकशोचिषः शोधकदीप्तेरग्नेः सकाशात् क्षयं गृहं चाप्नोति। अभियुजः अभियोक्त्रीः, विश्वाः सेनाः, साह्वान् सहमानः स्वबलेन तिरस्कुर्वाणः, अत एवामृक्तः शत्रुभिरहिंसितः देवानां क्रतुः, कर्ता हविःप्रदानेन पोषकः, एवम्भूतोऽग्निः, तुविश्रवस्तमः, अतिशयेन बहुविधान्नोपेतो वर्तते, यस्मादेवं तस्मादस्मानपि बहुविधान्नोपेतान् करोत्विति भावः॥ ९॥

दशमी ऋक्—

ॐ भद्रो नो अग्निराहुतो भद्रा रातिः सुभगभद्रो अध्वरः। भद्रा उत प्रशस्तयः।
भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहिः।
अव स्थिरा तनुहि भूरि शर्द्धतां वनेमा ते अभिष्टये॥ १०॥

अस्या व्याख्या—आहुतो हविर्भिस्तर्पितोऽग्निर्नोऽस्माकं भद्रः कल्याणः भवतु। हे सुभग शोभनधनाग्ने, भद्रा कल्याणी, रातिर्दानं चास्माकं भवतु, भद्रः कल्याणः, अध्वरः यागश्च भवतु, उत अपि च भद्राः कल्याणाः, प्रशस्तयः प्रशंसाः स्तुतयश्च भवन्तु। हे अग्ने, वृत्रतूर्ये संग्रामे, भद्रं शोभनं मनः कृणुष्व अस्माकं कुरु, येन मनसा, त्वं समत्सु संग्रामेषु सासहिः भृशं शत्रूनभिभवसि, अपि च शर्धताम् अभिभवतां शत्रूणाम्, भूरि भूरीणि बहूनि, स्थिरा स्थिराणि दृढान्यपि बलानि अव तनुहि अवाञ्चि कुरु, पराजितानि कुर्वित्यर्थः। वयञ्च अभिष्टिभिः अन्वेषणसाधनैः, हविर्भिः स्तोत्रैश्च ते त्वां वनेम सम्भजेमहि, यद्वा ते तव प्रसादाद् अभिष्टये अभीष्टैः फलैः, वनेम सङ्गच्छेमहि॥ १०॥

एकादशी ऋक्—

ॐ अग्ने वाजस्य गोमत ईशानः सहसो यहो।
अस्मे देहि जातवेदो महि श्रवः॥
स इधानो वसुः कविरग्निरीडेन्यो गिरा।
रेवदस्मभ्यं पुर्वणीक दीदिहि॥
क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः।
स तिग्मजम्भ रक्षसो दह प्रति॥ ११॥

अस्या व्याख्या—हे सहसो यहो बलस्य पुत्र, अग्ने, गोमतः बहुभिर्गोभिर्युक्तस्य, वाजस्य अन्नस्य, ईशानः ईश्वरस्त्वमसि। अतः अस्मे अस्मासु, हे जातवेदः जातधन जातानां वेदितो वा अग्ने, महि प्रभूतम्, श्रवः अन्नम्, देहि प्रयच्छ। सोऽग्निः, इधानः दीपनशीलः, वसुः निवासयिता, सर्वेषां कविः क्रान्तदर्शनः, मेधावी वा, गिरा स्तोत्ररूपया वाचा, ईडेन्यः स्तोतव्यो भवति। हे पुर्वणीक, अनीकं मुखं पुरुभिः बह्वीभिः, अनीकस्थानीयाभिः, ज्वालाभिर्युक्ताग्ने अस्मभ्यं रेवत् धनयुक्तमन्नं

यथा भवति तथा दीदिहि दीप्यस्व। हे राजन् राजमान अग्ने, क्षपः क्षपय राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व, उत अपि च, त्मना न केवलमन्यैरेव आत्मना च, तान् बाधस्व, कदा ? वस्तोः सर्वाण्यहानि उत अपि च उषस उषःकालोपलक्षिता रात्रीश्च, सर्वेष्वहःसु सर्वासु रात्रिषु चेत्यर्थः। हे तिग्मजम्भ तीक्ष्णमुखाग्ने, रक्षसः राक्षसान्, उक्तप्रकारेण क्षपयित्वा स एव त्वं प्रतिदह प्रत्येकं दह, इह न किञ्चिद् वक्तव्यमित्युदास्येत्यर्थः ॥ ११ ॥

द्वादशी ऋक्—

ॐ विशो विशो वो अतिथिं वाजयन्तः पुरुप्रियम्।
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥
यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम्। प्रशंसन्ति प्रशस्तिभिः ॥
पन्यांसं जातवेदसं यो देवतात्युद्यता। हव्यान्यैरयद्दिवि ॥ १२ ॥

अस्या व्याख्या—हे ऋत्विजो यजमानाश्च, वो यूयं वाजयन्तः अन्नमिच्छन्तः, विशो विशः, सर्वस्याः प्रजायाः, अतिथिं पूज्यम्, पुरुप्रियं बहुप्रियमग्निं स्तुत्या परिचरतेति शेषः। अहञ्च वो युष्मदर्थं दुर्यं गृहाहितमग्निं वचः अनु स्तुषे स्तौमि। शूषस्य बलस्य लाभार्थकैः साधनैः मन्मभिः मननीयैः स्तोत्रैः। यमग्निं जनासो जनाः, यजमाना हविष्मन्तः सन्तः मित्रं न मित्रमिव आदित्यमिव सखायमिव वा, सर्पिरासुतिं सर्पिरासूयते हूयते यस्मिन् तादृशं प्रशंसन्ति स्तुवन्ति प्रशस्तिभिः। पन्यांसम् अतिशयेन स्तोतारं साधु कृतमिति यजमानं स्तुवन्तं जातवेदसं जातधनं स्तुम इति वाक्यशेषः। यः अग्निः, देवतातौ यज्ञे उद्यता उद्यतानि, हव्यानि हवींषि, दिवि ऐरयत् प्रेरयति दिवि देवेभ्यः ॥ १२ ॥

त्रयोदशी ऋक्—

ॐ समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम्।
विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसम् ॥
त्वां दूतमग्ने अमृतं युगे युगे हव्यवाहं दधिरे पायुमीड्यम्।
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा निषेदिरे ॥
विभूषन्नग्न उभयाम् अनुव्रता दूतो देवानां रजसी समीयसे।
यत्ते धीतिं सुमतिमावृणीमहेऽध स्मा नस्त्रिवरूथः शिवो भव ॥ १३ ॥

अस्या व्याख्या—समिद्धं सम्यग् दीप्तम् अग्निम्, समिधा समिन्धनहेतुभूतया, गिरा स्तुत्या, गृणे अहं स्तौमि, यद्वा समिधा समिद्भिर्दारुभिः समिद्धं सम्यग् दीप्तम्। अपि च शुचिं स्वयं शुद्धम्, पावकं सर्वेषां शोधकम्, ध्रुवं निश्चलं तमग्निम् अध्वरे यज्ञे, पुरः करोमीति शेषः। तथा विप्रं मेधाविनं होतारं देवानामाह्वातारम्, पुरुवारं बहुभिर्वरणीयम्, अद्रुहमद्रोग्धारं सर्वेषामनुकूलम्, कविं क्रान्त-दर्शनं जातवेदसं जातानां वेदितारमग्निं सुम्नैः सुखकरैः स्तोत्रैः ईमहे सम्भजामहे, यद्वा द्वितीयार्थे

अग्निमी'ळेऽग्न आयाहि ह्यग्न आयाहि वीतये।
तिस्रोऽग्निर्ज्योतिरित्यग्निं दूतमग्ने मृडेति च(A)॥

तृतीया, द्युम्नानि धनानि ईमहे याचामहे इति। हे अग्ने, त्वां देवासः देवाश्च, मर्त्यासो मनुष्याश्च, दूतं दधिरे विदधिरे कृतवन्तः। कीदृशं त्वाम्? अमृतं अमरणम्, युगे युगे काले काले तत्तद्यागानुष्ठानसमये हव्यवाहं हविषां हव्यानां वोढारम्, पायुं पालयितारम्, ईड्यं स्तुत्यम्। अपि च ते उभयविधाः, जागृविं जागरणशीलम्, विभुं व्याप्तं विश्पतिं विशां प्रजानां पालयितारम् अग्निं नमसा हविर्लक्षणेनान्नेन नमस्कारेण वा निषेदिरे उपसेदिरे। हे अग्ने, उभयान् उभयविधान् देवान् मनुष्यांश्च विभूषन् अलङ्कुर्वन् त्वम् अनुव्रता व्रतान्यनु व्रतेषु कर्मसु यागेषु देवानां दूतः सन् रजसी द्यावापृथिव्यौ समीयसे सञ्चरसि, देवानानेतुं द्युलोकं गच्छसि हवींषि च नेतुमिमं लोकम्। किञ्च यद् यस्मात् ते तुभ्यं त्वदर्थं धीतिं कर्म सुमतिं शोभनां स्तुतिञ्च आवृणीमहे वयं सम्भजामहे। अथ अतः कारणात्, त्रिवरूथस्त्रिस्थानस्त्वं नः अस्माकं शिवः सुखकरः भव, स्मेति पादपूरणे॥ १३॥

चतुर्दशी ऋक्—

ॐ उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः। वायोरनीके अस्थिरन्॥
यस्य त्रिधात्ववृतम्बर्हिस्तस्थावसन्दिनम्। आपश्चिन्निदधा पदम्॥
पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः। भद्रा सूर्य इवोपदृक्॥ १४॥

इति सामसंहितायाम् उत्तरार्चिके ७।२।१-१४।

अस्या व्याख्या—हे अग्ने हविष्कृतः, यजमानार्थं गिरः स्तुतयः, जामयः स्वसार इव देदिशतीः तव गुणान् दिशन्त्यः, त्वा त्वाम्, उपास्थिरन् उपतिष्ठन्ते, वायोरनीके समीपे त्वां समेधयन्त्यः अस्थिरंश्च। यस्याग्नेः, त्रिधातु त्रिपर्व अवृतं अनावृतं च, असन्दिनम् अबद्धञ्च स्तरणकाले बर्हिरवद्धं भवति, बर्हिस्तस्थौ आसादनार्थं तिष्ठति। तस्मिन्नग्नौ आपश्चित् आपोऽपि पदं निदधा निदधाति। आन्तरिक्ष्या माध्यमिके पदं निदधतीत्यर्थः। मीढुषः कामानां सेक्तुः, देवस्य द्योतमानस्याग्नेः, पदं स्थानम्, अनाधृष्टाभिः अबाधिताभिः, ऊतिभिः रक्षाभिर्भजनीयं भजतीत्यर्थः। तथैवास्य उपदृक् उपद्रष्टिरपि सूर्य इव, यथा सूर्यस्तद्वद् भद्रा मनुष्यैर्भजनीया भवति॥ १४॥

(A) 'अग्निमीडे' इत्याद्यष्टानां प्रथमो मन्त्रः—

ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम्॥ इति सा० स० पू० ६।३।१२।४॥

'अग्निं देवम्, ईडे स्तौमि, यज्ञस्य पुरोहितं सम्पादकम्, यद्वा यज्ञस्य सम्बन्धिनि पूर्वभागे

1. '-ङेऽ-' घ।

आहवनीयरूपेणावस्थितम्, होतारमृत्विजम्, रत्नधातमं यागरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा।' इति सायणसम्मताऽस्य व्याख्या।

द्वितीयमन्त्रस्तु—

ॐ अग्न आयाह्यग्निभिर्होतारं त्वा वृणीमहे।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे॥ इति सा० स० उ० ७।२।७।

व्याख्यातोऽयं प्रागाग्नेयाध्याये ( पृ० २५९ )।

तृतीयमन्त्रस्तु—

ॐ अग्न आयाहि वीतये गृणानो हव्यदातये।
नि होता सत्सि बर्हिषि॥ इति सा० स० पू० १।१।१।

ऋचोऽस्याः सायणकृतव्याख्यासारस्तु—हे अग्ने, त्वं वीतये हविषां भक्षणाय, हव्यदातये देवेभ्यो हविःप्रदानाय हविषां शोधनाय वा, गृणानः स्तूयमानः सन्नस्माभिः, आयाहि अत्र यज्ञे आगच्छ, आगत्य च होता देवानामाह्वाता होमनिष्पादको वा भवन् त्वं बर्हिषि आस्तीर्णकुशे निषत्सि निषीद उपविशेति।

चतुर्थमन्त्रस्तु—

ॐ अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः।
सूर्यो ज्योतिर्ज्योतिः सूर्यः॥ इति सा० स० उ० ६।२।८।

स्पष्टार्थेति न व्याख्योपन्यस्यते।

पञ्चममन्त्रस्तु—

ॐ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा।
पुनर्नः पाह्यंहसः॥ इति सा० स० उ० ६।२।८।

हे अग्ने ऊर्जा बलेन, इषा अन्नेन आयुषा जीवनेन च पुनः अस्मान् निवर्तस्व अस्मान् प्रत्यागच्छ, किञ्च त्वं नोऽस्मान् अंहसः पापात् पाहि पालय, पुनःशब्दस्यावृत्तिरादरार्था। इति चास्य सायणाचार्यकृता व्याख्या।

षष्ठमन्त्रस्तु—

ॐ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया।
विश्वप्स्न्या विश्वतस्परि॥ इति सा० स० उ० ६।२।८।

हे अग्ने, त्वं रय्या रमणीयेन धनेन सह निवर्तस्व तदस्मान् प्रापयेत्यर्थः। किञ्च विश्वतः सर्वतः परि उपरि विश्वप्स्न्या विश्वस्योपभोक्त्या धारया, पिन्वस्व अस्मान् सिञ्च। इत्यस्य सायणभाष्यम्।

सप्तममन्त्रस्तु—

ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्।
अस्य यज्ञस्य सुक्रतुम्॥ इति सा० स० पू० १।१।१।३।

इत्यष्टावाहुतीर्हुत्वा यथाविध्यनुपूर्वशः ।
पूर्णाहुत्यादिकं सर्वमन्यत् पूर्ववदाचरेत् (A) ॥ इति ।

पुनराधाने[1]ऽपि पूर्वारण्योरेवाग्निमथनं युक्तम् । "[2]तदर्थत्वादेव ताभ्याम्"* । तथा चोक्तम्—

अरण्योरल्प[3]मप्यङ्गं यावत् तिष्ठति पूर्वयोः ।
न तावत् पुनराधान[4]मन्यारण्योर्विधीयते (B) ॥ इति ।

पुनराधाननिमित्ते उत्पन्ने अवि[5]लम्बयन् । शीघ्रमेव पुनरादध्यात् ।
अत एवं हि श्रूयते मुहूर्त[6]मपि—

## नाव्रतो ब्राह्मणः स्यादिति(C) ॥ १८ ॥

[7]ऋज्वर्थमेतत् । एवमेतस्मात् कालादूर्द्ध्वमहुते[8] पुनराधानं भवतीत्युक्तम्(D) ।
[9]अथैतस्मिन्नेवार्थेऽन्यत् पक्षान्तरं परब्राह्मणेन [10]दर्शयन्नाह—

---

'अग्निं दूतं देवानां दौत्ये विनियुक्तम्, वृणीमहे स्तुतिभिर्हविर्भिः सम्भजामहे, होतारं साधु-देवानामाह्वातारं, विश्ववेदसं विश्वानि वेत्तीति विश्ववेदाः तम्, यद्वा विश्वं वेदो धनं यस्य, अस्य प्रवर्तमानस्य यज्ञस्य सुक्रतुं निष्पादकत्वेन शोभनकर्माणम् ।' इति सायणभाष्यम् ।
अहमयमन्त्रस्तु—

ॐ अग्ने मृड महाँअस्यय आ देवयुं जनम् ।
इयेथ बर्हिरासदम् ॥ इति सा० स० पू० १।१।३।२ ।

'हे अग्ने, मृड अस्मान् सुखय, स त्वं महानसि प्रभूतो भवसि, यस्त्वम् अयः गन्ता, देवयुं देवानां कामयितारम्, जनं यजमानम्, बर्हिर्दर्भमासदम्, यज्ञे आसत्तुम् आ इयेथ आगच्छसि ।' इत्यस्य सायणभाष्यम् ।

(A) कर्मप्रदीपः ३।१।१४-१७ ।

(B) कर्मप्रदीपः ३।१।१८ ।

(C) तर्कालङ्कारमते 'मुहूर्त्तमपि' इति भागः केषाञ्चिन्मते सूत्रान्तर्गत इति, तेषां मते अत्र एवार्थ इत्यपि स आचख्यौ ।

(D) अत्र यानि पुनराधाननिमित्तान्युक्तानि गदाधरदीक्षितेन पारस्करगृह्यसूत्रभाष्ये तस्मात् किञ्चिदुद्धियते ।

---

1. 'ऽपि' नास्ति ख । 2. 'तदर्थादेव योनिः' ख । 3. '-मङ्गं वै' ख । 4. '-मरण्योर्विधीयते' ख । 5. '-लम्बेन' ख । 6. 'मिति' क । 7. 'ऋज्वेतत्' ख । 8. '-र्द्धं मुहूर्ते' ख, 'महुतेन' ख । 9. 'यदेव यस्मिन्-' ख । 10. 'दर्शयति' ख ।

अग्नावनुगते यस्य होमकालद्वयं व्रजेत् ।
उभयोर्विप्रवासे वा लौकिकोऽग्निर्विधीयते ॥
कुरुक्षेत्रादितीर्थानां गमने देशविप्लवे ।
समारोपं विनैवाग्नीनोद्वहेयुर्विपश्चितः ॥
आरोप्याग्नीनरण्योः स्यात्तु वस्येत् सहाग्निभिः ॥
इष्टोऽग्निर्यदि नश्येत मथ्यमानो हुताशनः ।
ग्रामात् सीमान्तरं गच्छेत् प्रत्यक्षो हव्यवाहनः ॥
अहुतो वत्सरं तिष्ठेदुदकेन शमं गतः ।
शिक्येनोद्वाहयेदग्नीन् पुनराधानमर्हति ॥
अग्निहोत्रेण रहितः पन्थानं शतयोजनम् ।
आहिताग्निः प्रयायाच्चेदग्निहोत्रं विनश्यति ॥
अकर्तुं स्वयमत्युहृद् यो हापयेदृत्विगादिना ।
तस्य स्यात् पुनराधेयं पवित्रेष्टिरथापि वा ॥
अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः ।
पालयेदुपशान्तेऽस्मिन् पुनराधानमिष्यते ॥
दाहयित्वाऽग्निभिर्भार्यां सदृशीं पूर्वसंस्थिताम् ।
पात्रैश्चाथाग्निमादध्यात् कृतदारोऽविलम्बितः ॥
दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद् विधिवद् दारानग्नींश्चैवाविलम्बयन् ॥
उपघातः क्रियालोप उपेक्षा च प्रमादतः ।
चतुर्विधमिदं प्रोक्तं पुनराधानकारणम् ॥
स्पृष्टोऽग्निर्यदि चाण्डालैरुदक्यादिभिरेव वा ।
उपघातेषु सर्वेषु पुनस्त्वेति समिन्धनम् ॥
यजमानश्च पत्नी च उभौ प्रवसितौ यदा ।
आ होमाच्च निवर्तेत पुनराधानमर्हति ॥
यद्वोभावप्यतिक्रम्य सीमां प्रत्यागतौ पुनः ।
होमकालमतिक्रम्य तदा नश्यन्ति वह्नयः ॥
विनाऽग्निभिर्यदा पत्नी नदीमम्बुधिगामिनीम् ।
अतिक्रामेत् तदाऽग्नीनां विनाशः स्यादिति श्रुतिः ॥
पत्नी सीमामतिक्रान्ता यजमानो गृहे यदि ।
आ होमाद् यदि नाऽऽगच्छेत् पुनराधानमर्हति ॥

एकाकिनी यदा पत्नी वह्निमादाय गच्छति ।
तत्र नाशोऽपरे स्यादुर्भयाद् याते न दुष्यति ॥
रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा ।
प्रवसन्नग्निमान् विप्रः पुनराधानमर्हति ॥
अर्थी भुक्त्वा तु यो लोभात् प्रवसेत् पर्वसन्धिषु ।
करोति पुनराधानं प्रायश्चित्तमृणादृते ॥
नाग्निकार्यस्य वेलायां प्रवसेन्न च पर्वणि ।
न विना च निमित्तेन क्रीडार्थन्तु न व्रजेत् ॥
आधानावसरे जाते यथाधातुरुपद्रवः ।
अवृद्धिर्नाम सा प्रोक्ता तत्र स्यात् पुनराहितिः ॥
रेतोमूत्रपुरीषैर्वा पूयाश्रुश्लेष्मशोणितैः ।
दुष्टास्थिमांसमज्जाभिरन्यैर्वाऽपि जुगुप्सितैः ॥
आरोपितारणिस्पर्शे कृतेऽग्नौ स्पर्शनेऽपि वा ।
आत्माह्वेषु मज्जेद् वा वदेद् वा पतितादिभिः ॥
अथवा योषितं गच्छेदनृतौ काममोहितः ।
वदन्त्येषु निमित्तेषु केचिदग्निविनाशनम् ॥
तत्रारणिगते वह्नौ नष्टे स्यात् पुनराहितिः ।
इतरेषु निमित्तेष्वग्न्याधेयं परिचक्षते ॥ इति ।

नित्यकाम्यकर्मणां विशेषमाह स एव—

काम्याः क्रिया न कर्तव्याः स्वामिनि प्रोषिते सति ।
नित्यनैमित्तिकीः कुर्यात् प्रवसत्यपि भर्तरि ॥
रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा ।
नित्यं नैमित्तिकं कुर्यात् काम्यं कर्म न किञ्चन ॥
आधानं पुनराधानं पशुः सौत्रामणी तथा ।
चातुर्मास्यानि सोमश्च तथैवाऽऽग्रयणक्रिया ॥
अकाम्यत्वेऽपि नैतेषां सूतकादावनुष्ठितिः ।
प्रक्रान्तेष्वपि चैतेषु सूतकादिसमुद्भवे ॥
कर्तव्यान्येव चैतानि वारितान्यप्यशेषतः ।
न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथञ्चन ॥
इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजां पशून् ।
हन्त्यल्पेन धनेनैव विप्रोऽमत्यधनो यजेत् ॥ इति ।

विश्वनाथस्तु—

"अधिकारे सत्यालस्याद् वर्षमाधानाकरणे चान्द्रायणम्। मासातिक्रमे त्वेकमुपोषणम्। तदुक्तम्—

कृतदारो गृहे ज्येष्ठो यो नाऽऽदध्याद्धुताशनम्।
चान्द्रायणं चरेद् वर्षं प्रतिमासमहोऽपि वा॥

अथ कृताधान आलस्याद्वह्निं त्यजति मासद्वयं स प्राजापत्यं चरेत्। मासचतुष्टयं चेदतिकृच्छ्रम्। मासषट्कं चेत् पराकः, संवत्सरं चेत् पयोव्रतम्। तदाह व्याघ्रपादः—

मासद्वयं तु यो वह्निं त्यजेदेतत् समाचरेत्।
नास्तिक्यात् कृच्छ्रमेकं तु होमद्रव्यं ददाति चेत्॥

तथा— योऽग्निं त्यजति नास्तिक्यात् प्राजापत्यं चरेद् द्विजः।
अन्यत्र पुनराधानमुपदिष्टं मनीषिभिः॥

तथा— चतुष्टयं तु संपूर्णं मासानान्तु हुताशनम्।
त्यक्त्वाऽतिकृच्छ्रं कुर्वीत ततः पापात् प्रमुच्यते॥
षण्मासांस्त्यजते योऽग्निं पराकं स समाचरेत्।
ऊर्ध्वं पयोव्रतं कुर्यात् मासमेकं समाहितः॥ इति।

संवत्सराधिककालातिक्रमे पयोव्रतं कृत्वा द्वैमासिकादि समाचरेत्। तदुक्तं स्कन्दपुराणे—

ऊर्ध्वं संवत्सराद्वह्निं यस्त्यजेत् स पयोव्रतम्।
द्वैमासिकं ततः कृत्वा त्रैमासिकमथापि वा॥ इति।

एवमधिकोनकालिकाग्निपरित्यागे प्रायश्चित्ताधिक्यं न्यूनत्वञ्च परिकल्पनीयं त्यागकालिकहोम्यञ्च विप्रेभ्यो देयम्। तदुक्तं भारद्वाजगृह्ये—

यावत्कालमहोमी स्यात् तावद् द्रव्यमशेषतः।
तद्दानं चैव विप्रेभ्यो यथा होमस्तथैव तत्॥ इति।

एवं प्रायश्चित्ताचरणं कृत्वा होम्यं च दत्त्वा पुनराधानं कुर्यात्, एतच्च नास्तिक्याद्वह्निपरित्यागे, विपत्तौ तु शरीरशुद्धिं सम्पाद्य होम्यं दत्त्वा पुनराधानं कुर्यात्।

यस्तु नास्तिक्याद्वह्निं परित्यज्य पुनराधानादि न कुर्यात् स पतितवद् बहिः कार्यः, पुनश्चेत् चिरकालेन व्यवहर्तुमिच्छति तदा द्वादशाब्दं कारयित्वा व्यवहर्तव्यम्। तदुक्तम्—

स्वकर्महानौ नास्तिक्यान्मासेन पतनं स्मृतम्।
द्वादशाब्दव्रतेनैव शुद्धिस्तस्य तु नान्यथा॥

नास्तिक्यं तु वेदप्रामाण्यानभ्युपगमः, अन्यथा क्रियाबाहुल्यपरित्यागे स्वल्पप्रायश्चित्तानुपदेशप्रसङ्ग इति पश्यामः।" इत्युक्त्वाग्निपरित्यागप्रायश्चित्तमभिहितम् पारस्करगृह्यसूत्रभाष्ये।

**अथाप्युदाहरन्ति(A) यावन्न हूयेताभोजनेनैव तावत् सन्तनुयात्, अथ यदाऽधिगच्छेत् प्रतिजुहुयात्, एवमप्यस्य व्रतं 'सन्ततं भवतीति ॥ १६ ॥**

अथाप्युदाहरन्तीत्युक्तार्थम्। होमीयद्रव्यप्राप्तौ यावन्न हूयेत अभोजनेनैव "लङ्घनेनैव "तावत् तदाहिताग्निव्रतं सन्तनुयात् सन्ततमविच्छिन्नमविलुप्तं कुर्यात्।

द्वितीयाऽथशब्दः किमर्थमिति चेत्, उच्यते—यदा तद्धोमीयमधिगच्छेत् तदैव जुहुयात्। किं तर्हि? उच्यते—'सायमारम्भकत्वात् कर्मणः सायमादि कालं प्रतीक्ष्याथ' जुहुयादिति। प्रतिशब्दो होमविधिविशेषप्रदर्शनार्थः। कथं नाम? अतिक्रान्ता" आहुतीः 'अग्निदेवत्याः सर्वा'* गणयित्वा पात्रे कृत्वा सकृदेवाग्नये स्वाहेति जुहुयात्, एवमन्याश्चेति। तथा च कर्मप्रदीपः—

> अहूयमानेऽनश्नंश्चेन्नयेत् कालं समाहितः।
> संपन्ने तु यथा तत्र हूयते तदिहोच्यते॥
> अहुताः परिसंख्याय पात्रे कृत्वाहुतीः सकृत्।
> मन्त्रेण विधिवद् हुत्वा"एवमेवापरा अपि(B)॥ इति।

"एवमपि"* कृतेऽस्य गृहिणस्तद् व्रतं सन्ततमलुप्तं भवतीति। '"पुनराधानं न भवतीत्यर्थः'"* (C)। इतिकरणं प्रकरणोपसंग्रहणार्थम्।

---

A. अत्रैव सूत्रमेकं समाप्य यावन्नेत्यादि सन्तनुयादित्यन्तं सूत्रान्तरं स्वीकुर्वतः सामश्रमितर्कालङ्कारौ; अथादि जुहुयादित्यन्तमेकम्, एवमादि भवतीतीत्यन्तमन्यदिति। एवञ्च सूत्रमिदमेकं विभज्य ताभ्यां सूत्रद्वयी कृतेति।

B. कर्मप्रदीपः २।८।८-९। अत्र प्रकाशकारः—"सायंप्रातराहुत्योर्दर्शपौर्णमासयोश्च यथोक्तकालावधिहोमलोपेऽग्निनाशात् पुनराधानमित्युक्तम्, यदा त्वभोजनेन तत्कालं नयेत् तदा नाग्निनाशः, न च पुनराधानम्, तथा च सूत्रम् 'अथाप्युदाहरन्ति ' आहिताग्नितान्नतम्, अग्नेरनाशादलुप्तं भवतीत्यर्थः। तदेतत्सूत्रबलाद् यदा होमलोपेऽनश्नन् कालं नयेत्, द्रव्यसम्पत्तौ च पतिताहुतीर्जुहुयात् तदा यथा होतव्यं तदिहोच्यते—(८) प्रागहुता आहुतीर्गणयित्वा पात्रे स्रुवादौ कृत्वा सकृद् 'अग्नये स्वाहे'ति मन्त्रेण सायमाहुतीर्हुत्वा एवमेव प्रातराहुतीर्जुहुयात्।" एवं व्याचख्यौ।

C. अथ गृह्यकर्मप्रकाशिकोक्तः प्रायश्चित्तविधिरुच्यते—

सायंप्रातर्होम-वैश्वदेव-दर्शपूर्णमास-स्थालीपाकादीनां मुख्यकाले उक्तद्रव्यालाभेऽननुष्ठान-

---

1. 'सन्ततं भवतीति' ख। 2. 'लङ्घनेनैव' नास्ति ख-ग। 3. 'तावन्तं कालमाहिताग्नि-' ख। 4. 'सायमारम्भकत्वात्' ख। 5. 'अथ' नास्ति क-ग। 6. 'ता' नास्ति क-ग। 7. 'सर्वा अग्निदेवत्याः' ख। 8. 'एवमेवा-' ख। 9. चिह्नितांशो नास्ति ग। 10. 'न पुनराधानम्' ख।

प्रसक्तौ व्रीहि-शालि-गोधूम-मुद्ग-सर्षप-तिल-यवाद्यन्यतमेन, यज्ञवृक्षफलैः पत्रैर्वा पायसाद्यैः, प्रियङ्गु-तण्डुलैर्वाऽनुष्ठानं कर्तव्यम्। सायंहोमस्य प्रातर्होमपर्यन्तं गौणकालः, प्रातर्होमस्य सायंहोम-पर्यन्तं गौणकालः। गौणकाले सर्वप्रायश्चित्तानुष्ठानपूर्वकं तात्कालिकहोमानुष्ठानम्। यत्तु नारायणीये "सायंप्रातर्होमद्वयातिपत्तौ पुनराधानम्, तदुक्तम् होमद्वयात्यये···शासनमिति कर्मप्रदीपवच-नात् तस्मादेतत् प्रायश्चित्तम्, एवमन्यान्यपि च ग्रन्थान्तरोक्तानि पुनराधाननिमित्तान्युपलक्ष-णानीति" तन्नसाधु "अहुतस्य प्रायश्चित्तं भवतीति गोभिलसूत्रेण तादृशार्थाप्रतीतेः, प्रायश्चित्त-सामान्यस्य प्रतीतेः। अथ गोभिलोक्तप्रायश्चित्तमुच्यते—कालद्वयातिपत्तावुपवासश्च दम्पत्योः। अथवा यावत्कालपर्यन्तं होमो न क्रियते तावद्दिनपर्यन्तमुपवासः। पश्चादतीतानां सायमाहु-तीनां दिनगणनपूर्वकं पात्रे हस्ते वा यथासम्भवं गृहीत्वाऽग्नये स्वाहेति सकृदेव जुहुयात्, एवं द्वितीयाहुतिं सकृदेव किञ्चिदधिकेनावशिष्टेन जुहुयात्। एवमतीतप्रातराहुतीनां प्रासः सकृदेव होमः। तदुक्तं कर्मप्रदीपे—"अहूयमाने···अपी"ति। एवमुपवासाकरणे पुनराधानं कर्तव्यम्। अथ परिशिष्टोक्तप्रायश्चित्तान्युच्यन्ते—दर्शस्थालीपाके स्वकालेऽननुष्ठिते प्रायश्चित्तपूर्वकमनुष्ठानं पौर्णमासीपर्यन्तम्। पौर्णमासस्थालीपाके स्वकालेऽनुष्ठिते प्रायश्चित्तपूर्वकमनुष्ठानं दर्शपर्यन्तम्। तृतीया-पञ्चमी-दशमी-त्रयोदशीष्वथवा सर्वासु तिथिष्वतीतस्य स्थालीपाकस्यानुष्ठानम्। गौण-कालेऽप्यतीते वैश्वानरस्थालीपाकः प्रकृतिस्थालीपाकेन समानतन्त्रेण भिन्नतन्त्रेण वा कर्तव्यः। द्वयोः स्थालीपाकयोर्लोपे एकस्योक्तप्रायश्चित्तस्थालीपाकः। द्वितीयस्य प्रायश्चित्तपूर्वकं गौण-कालेऽनुष्ठानम्। द्वितीयस्थालीपाके गौणकालेऽप्यननुष्ठितेऽपि तृतीयस्थालीपाके संप्राप्ते पुनरा-धानम्। अन्वाधानदिने पत्न्यां रजस्वलायां जातायां पञ्चमेऽहनि स्थालीपाकानुष्ठानम्। श्रौते कर्मणि चतुर्थदिनेऽपि। परे तु अन्वाधानदिने औपवसथिकान्नभोजनानन्तरं पत्न्यां रजस्वलायां तामपरुध्य यागः कर्तव्य इति। केचित् संकल्पप्रभृतिप्राशनान्ते कर्मणि कृते भोजनात् पूर्वं पत्न्यां रजस्वलायामपि तामपरुध्य यागं कुर्वन्ति। अथ वैश्वानरस्थालीपाकप्रयोगः—दर्शस्थाली-पाकस्य पौर्णमासस्थालीपाकस्य वाऽतिपत्तिप्रायश्चित्तार्थम् अथवा मुख्यकालातिपत्तिप्रायश्चित्तार्थं वैश्वानरस्थालीपाकं करिष्ये इति संकल्पः। अग्नये वैश्वानराय त्वा जुष्टं निर्वपामीति निर्वापः। अग्नये वैश्वानराय स्वाहेति चर्वाहुतिः। अन्यत् सर्वं प्रकृतिस्थालीपाकवत्। नवयज्ञ-श्रवणा-कर्माश्वयुजि-वैश्वदेवद्वय-पिण्डपितृयज्ञ-कर्मणां लोपे पतितान्नभोजने च वैश्वानरस्थालीपाक-प्रायश्चित्तम्। स्वगृह्याग्नेरन्याग्निसम्पर्के विविचिस्थालीपाकः। मदीयगृह्याग्नेरन्याग्निसंसर्ग-प्रायश्चित्तार्थं विविचिस्थालीपाकं करिष्ये। अग्नये विविचये त्वा जुष्टं निर्वपामीति चरुनिर्वापः, अग्नये विविचये स्वाहेति चरुहोमः। अन्यत् सर्वं प्रकृतिवत्। समानतन्त्रपक्षे वैकृतं निरूप्य प्राकृतस्य निर्वापः। प्रायश्चित्तस्थालीपाककरणेऽशक्तौ चतुर्गृहीतेनाऽऽज्येन स्रुचं पूरयित्वाऽ-मुकस्थालीपाकस्य स्थाने पूर्णाहुतिं होष्यामीति संकल्प्याग्नये वैश्वानराय स्वाहेति चतुर्गृहीतमाज्यं जुहुयात्। तत्तत्स्थालीपाके तत्तद्देवतानाम्नि चतुर्थ्यन्ते स्वाहाकारं संयोज्य पूर्णाहुतिं जुहुयात्।

अथवा चतुर्गृहीताज्यासम्भवे स्रुवेणैकामाज्याहुतिं तत्तद्देवतायै जुहुयात्। अमुकस्थालीपाकस्य स्थाने स्रुवाहुतिं होष्यामीति संकल्पः। अन्यदप्यनुक्तप्रायश्चित्तं सूत्रान्तरोक्तं ग्राह्यं छन्दोगैः। प्रासङ्गिकमुक्त्वाऽथ गोभिलोक्तमुच्यते—यजमानस्य यदि प्रवासस्तदा पत्न्या ऋत्विङ्मुखेन सायं-प्रातर्होम-वैश्वदेव-पार्वणस्थालीपाक-श्रवणाकर्म-नवयज्ञादीनि नित्यकर्माणि यथाकालं कर्त्तव्यान्येव, संकल्प ऋत्विग्वरणञ्च पत्न्या कार्यम्। बर्हिरिध्मादिसाधनयुक्ततन्त्रहोमेषु स्थालीपाकवत् सर्वमङ्गजातं कर्त्तव्यम्, प्रधानाहुतयस्तत्र तत्रोक्ता ग्राह्याः। यत्र मन्त्रान्ते स्वाहेति पदं नास्ति तत्र स्वाहेति योजनीयम्। सर्वत्र स्वाहाकारे यत्र मन्त्रादौ स्वाहाकार आम्नातस्तत्र स्वाहा-पदोच्चारणानन्तरं हुत्वा शेषं मन्त्रं समापयेत्। चरुरहितेष्वाज्यहोमेषु चतुर्थीहोमादिषूपयातं जुहुयात्। तत्रायं क्रमः—आज्यं संस्कृत्य स्रुवेणाऽऽज्यमादाय प्रधानदेवताभ्यो जुहोति, नाऽऽज्यभागौ न च स्विष्टकृद्धोमः। आज्यहोमेषु प्रधानदेवतानामनुक्तौ प्रधानकर्मणः प्रधानहोमोक्तौ तस्य च पुरस्तादुपरिष्टाच्च व्यस्ताभिर्व्याहृतिभिस्तिस्र आज्याहुतीर्जुहुयात्, अन्यत् सर्वं पार्वणस्थालीपाकवत्। यत्र सूत्रकृद् वक्ष्यति 'अग्निरुपसमाहितो भवती'ति, तत्र पुंसवन-शुङ्गाकर्म-सीमन्तोन्नयन-चूडाकर्मादिषु तेषां कर्मणां पुरस्तादुपरिष्टाच्च महाव्याहृतिहोमत्रयं कर्त्तव्यम्। अस्मिन् स्थालीपाके सर्वस्याप्यङ्गस्य गोभिलेनोपदिष्टत्वात् पार्वणस्थालीपाकः सर्वेषां वक्ष्यमाणानां चरुहोमानामाज्यहोमानाञ्च प्रकृतिभूतोऽतः पार्वणस्थालीपाकस्य सुबोधाय पदार्थक्रमो लिख्यते—प्रथमं सङ्कल्पः, विधिवदग्निस्थापनम्, इध्माबर्हिषोश्च यज्ञियपात्राणामुप-कल्पनम्, ब्रह्मवरणम्, ब्रह्मासनदर्भास्तरणम्, ब्रह्मोपवेशनम्, उपविष्टे ब्रह्मण्युत्तरतः पात्रासादनम्, पात्राणां वीक्षणम्, प्रोक्षणम्, परिसमूहनम्, पश्चिमत उलूखलाद्यासादनम्, हविर्निर्वापः, अव-हननम्, तुषविमोचनम्, तण्डुलप्रक्षालनम्, पवित्रकरणम्, तण्डुलावापः, हविःश्रपणम्, शृते-ऽभिघारणम्, उदगुद्वासनम्, प्रतिष्ठिताभिघारणम्, अग्निप्रज्वालनम्, परिस्तरणम्, बर्हिषि स्थालीपाकासादनम्, इध्माधानम्, चर्वभावेऽत्रैव पवित्रकरणम्, पवित्रानुमार्जनम्, आज्यस्थाल्यां पवित्रासादनम्, तत्राऽऽज्यावनयनम्, आज्योत्पवनम्, अग्नेरुपर्याज्यस्थाल्यधिश्रयणम्, उत्तरत आज्योद्वासनम्, स्रुक्सम्मार्गः, बर्हिष्याज्यासादनम्, त्रिरुदकाञ्जलिसेचनम्, पर्युक्षणम्, आज्य-भागहोमः, प्रधानचरुहोमः, स्विष्टकृद्धोमः, व्याहृतित्रयहोमः, तूष्णीं समिदाधानम्, अनुपर्युक्षणम्, उदकाञ्जलिसेचनम्, यज्ञवास्तुकरणम्, वस्वाहुतिः, हविरुच्छिष्टोद्वासनम्, ब्रह्मणे हविःशेषदानम्, हविःशेषभोजनम्, पूर्णपात्रदानम्, गोनिष्क्रयद्रव्यदानम्, चमसनिनयनम्, चमसपूरणम्, वामदेव्यसामगानम्, इति चरुतन्त्रपदार्थक्रमः।

अथाऽऽज्यतन्त्रपदार्थक्रम उच्यते—हविर्निर्वापादि-हविरुद्वासनान्तं कर्म विहायाग्निस्थापन-प्रभृत्याज्यासादनान्तपदार्थक्रमः पूर्ववत्, ततस्त्रिरुदकाञ्जलिसेचनम्, अनुपर्युक्षणम्, व्याहृतित्रय-होमः, प्रधानाज्याहुतयः, प्रधानाज्याहुत्यनुपदेशे प्रधानकर्मानुष्ठानम्, आज्येन व्याहृतित्रयहोमः, तूष्णीं समिदाधानम्, कर्मवैगुण्ये पुनर्व्याहृतिचतुष्टयहोमः पर्युक्षणादिवामदेव्यगानान्तः पदार्थ-क्रमः पूर्ववत्। इति।

इदानीं ग्रन्थगौरवपरिजिहीर्षया सर्वत्रैवमेव विधिमतिदिशन्निदमाह—

## एषोऽत ऊर्ध्वं हविराहुतिषु न्यायः ॥ २० ॥

हूयते इति हविः। अविशेषात् समिदाज्यचरुपश्वपूपशाकादिलक्षणं सर्वप्रकारमपि गृह्यते। तस्याऽऽहुतयो हविराहुतयः, तासु हविराहुतिषु। अत ऊर्द्ध्वं [1]मेष एव न्यायो* द्रष्टव्यः। कथं नाम? अत ऊर्द्ध्वं ये [2]क्षिप्रहोमा[2]* ब्रह्मचारिसमिदा[3]धानादयः, तेषु क्षिप्रहोमोक्त [4]एव न्यायो द्रष्टव्यः। ये तु [5]तन्त्रहोमाः समश[6]नीयादयः[6]* तेषु ब्रह्मोपवेशनादिकस्तन्त्र[7]होमोक्त[7]* एव द्रष्टव्यः। क्षिप्रं [8]हूयन्ते इति क्षिप्रहोमाः सायंप्रातर्होमादयो याज्ञिकेषु प्रसिद्धाः। [9]तन्त्रशब्देन बर्हिरिध्मादिकं साधनमभिधीयते। तद्युक्तहोमा याज्ञिकेषु प्रसिद्धाः[9]*। न्यायग्रहणं क्वचित् प्राप्तानामर्थाभावान्निवृत्त्यर्थम्। यथाऽऽज्यतन्त्रेषु उलूखलमुषलशूर्पादीनां यथा[10]पाण्याहुतिषु मेक्षणस्रुगादीनामिति।

## मन्त्रान्ते स्वाहाकारः ॥ २१ ॥

[11]मन्त्रस्य अन्तोऽवसानं मन्त्रान्तः[11]*, तस्मिन् मन्त्रान्ते स्वाहा[12]कारो वक्तव्य[12]* इति वाक्यशेषः(A)। अधिकाराद्धोम[13]मन्त्रान्ते एव[13]*, न [14]तु जपादिष्वपीति। तत्रापि[15]च ये अनाम्नातस्वाहाकारा मन्त्रा यथा अग्ने प्रायश्चित्त इत्यादयः(B), तदन्ते स्वाहाकारः। [16]न त्वाम्नातस्वाहाकारेष्वपि[16]* यथा अग्निरेतु प्रथम इत्यादिकेषु(C)। कुतः? स्वाहाकार[17]प्रदानार्थत्वाद् हविष[18]स्तस्य चार्थस्याऽऽम्नायसिद्धेनैव कृतत्वात्

---

A. संवदत्यत्र 'सर्वे स्वाहाकारान्ताः' इति ( १।२।६ ) लाट्यायनश्रौतसूत्रमपि।

B. मन्त्रस्तु—ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।
ब्राह्मणस्त्वा नाथकाम उपधावामि
याऽस्याः पापी लक्ष्मीस्तामस्या अपजहि। मन्त्रब्राह्मणम् १।४।१।

C. मन्त्रस्तु—ॐ अग्निरेतु प्रथमो देवताभ्यः सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्।
तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् स्वाहा ॥
मन्त्रब्राह्मणम् १।१।१०।

---

1. '-मेव एतन्न्यायो' ख। 2. चिह्नितांशो नास्ति ख। 3. '-धाना' नास्ति ख-ग। 4. 'एव' नास्ति क-ग। 5. 'मन्त्र-' क, 'तत्र' ख। 6. '-नीयाः' क-ग। 7. '-होमन्याय' ख। 8. 'हूयत इति' ख। 9. चिह्नितांशो नास्ति ख। 10. 'चाज्या-' ख, 'चान्या-' ग। 11. 'मन्त्रावसानं' ख। 12. '-कारः कर्त्तव्य' ख-ग। 13. '-मन्त्रेष्वेव' ख। 14. 'तु' नास्ति क-ग। 15. 'च' नास्ति ख। 16. 'न त्वाम्नातः स्वाहाकारेषु' क-ग। 17. 'प्रदर्शनार्थत्वात्' ख। 18. 'स्तस्य चार्थस्या' स्थाने '-स्तस्य चार्थस्या-', ख, -स्तचार्थस्या-' ग।

द्वितीयस्याऽऽम्नानमनर्थकं स्यात्(A)। यत्राऽऽदौ स्वाहाकारः, यथा स्वाहा सोमाय पितृमते इति। तत्रा[1]पि नैवान्ते स्वाहाकारः स्यात्। [2]तुल्यत्वात् कारणस्य तत्रापि स्वाहाकारेणैव हविः[3]सम्प्रदानं कृत्वा मन्त्रं [4]समावर्त्तयेत्, एवमर्थत्वात् तस्य।

तथा चोक्तम्—

स्वाहां कुर्यान्नवाऽन्ते न चैव जुहुयाद्धविः।
स्वाहाकारेण हुत्वाऽग्नौ पश्चान्मन्त्रं समापयेत्(B) ॥ इति।

ॐकारश्चाऽऽदौ प्रतिमन्त्रं न कर्त्तव्यः। [5]कुतः एवमनुपदेशात्।

तथा चोक्तम्—

नों कुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित्।
अन्येषां चाविकृष्टानां कार्यमाचमनादिना(C) ॥ इति।

## आज्याहुतिष्वाज्यमेव संस्कृत्योपघातं जुहुयात् नाज्यभागौ न स्विष्टकृत् ॥ २२ ॥

आज्यस्याऽऽहुतय आज्याहुतयः, तास्वाज्याहुतिषु चतुर्थीकर्मादिषु आज्यमेव यथोक्तेन विधिना संस्कृत्य उपघातं जुहुयात्। स्रुवेणापहत्य जुहुयादिति। नाज्यभागाविति, आज्यभाग-स्विष्टकृतामतिदेशप्राप्तानां निवृत्तिः क्रियते।

## आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होमः ॥ २३ ॥

यत्राऽऽज्यमेव [6]केवलं हूयतेऽन्यच्चर्वादि हविरन्तरं नास्ति ता आज्याहुतयः। ता अपि यत्र नाऽऽदिश्यन्ते होम एव यत्र नाऽऽदिश्यते इत्यर्थः। तत्र पुरस्ताच्चोपरिष्टाच्च

A. संवदन्ति चात्र तान्त्रिकाः पाठाः—

नमोऽन्ते न नमो दद्यात् स्वाहान्ते द्विठमेव च।
पूजायामाहुतौ चापि सर्वत्रायं विधिः स्मृतः ॥ इति।

B. कर्मप्रदीपः २।७।१४।

C. कर्मप्रदीपः २।७।१६।

1. 'चपि' नास्ति क-ग। 2. 'तुल्यत्वात् कारणस्य' नास्ति ज-ग। 3. 'सं' नास्ति क-ख। 4. 'समापयेत्' ख। 5. 'कुतः' नास्ति ग। 6. 'केवलं' नास्ति क-ग। 7. 'एव' स्थाने 'पूर्वं' ख।

महाव्याहृतिभिर्होमः कर्त्तव्य 'इति वाक्यशेषः'[1]। पुंसवन-शुङ्गाकर्म-सीमन्तोन्नयन-चूडाकरणादिषु। [2]तत्र प्रधानकर्मणोऽंसाभिमर्शनादेः पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होम इति। यत् पुनः कैश्चिच्चकाराध्याहारेणादेशे [3]चानादेशे चेति व्याख्यातम्, तदयुक्तम्। कुतः? अध्याहारदोषात्। [4]अन्यथाऽपि सूत्रस्यार्थवत्त्वाच्च(A)। महाव्याहृतयः प्रसिद्धा एव तिस्रो विज्ञेयाः। ननु पुंसवनादीन्यहोमकानीति चेत्, न; कुतः? "पश्चादग्नेरुदगग्रेषु दर्भेषु" (B)इत्या[5]द्यग्निग्रहणस्य होमार्थत्वात्। तथा चूडाकरणेऽपि। "पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति" [ सू० २।६।२ ] इति। इतरथाऽग्नेरुपसमाधानमदृष्टार्थमेव स्यात्। मनुरपि "त्रेमानि सहोमकान्ये"[6]वाऽऽह—

गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते(C)॥ इति।

तस्माद् यथोक्त एवार्थः।

A. अत्र तर्कालङ्कारः—"आज्याहुतयो यत्र नादिश्यन्ते इति वर्णनायां सर्वाहुतिष्वतिप्रसङ्गः, आज्याहुतयोऽपि यत्र नादिश्यन्ते इत्यर्थकल्पने च व्यक्तमपेरध्याहारः। आज्यपदस्यैवमनतिप्रयोजनं स्यात्। आहुतिष्वनादेशे इति खल्वभिप्रेयते, तस्मादाज्याहुतिषु, आहुतेरनादेशे चेति व्याख्येयम्" इति प्रणिजगाद। परमत्र प्रकृते होमानादेश एवाद्यन्तयोः प्रधानकर्मणो महाव्याहृतिहोमः, उत आज्यहोमादेशेऽपीति भगवन्तोऽनूचाना निरूपयन्तु।

B. "प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति" इति पुंसवनप्रकरणे ( २।६।२ ) गोभिलसूत्रम्।

C मनुसंहिता (२।२७)। अत्र कुल्लूकभट्टः—"ये गर्भशुद्धये क्रियन्ते ते गार्भाः, होमग्रहणमुपलक्षणम्, गर्भाधानादेरहोमरूपत्वात्। जातस्य यत् कर्म मन्त्रवत्सर्पिःप्राशनादिरूपं तज्जातकर्म। चौडं चूडाकरणकर्म। मौञ्जीनिबन्धनमुपनयनम्। एतैर्बैजिकं प्रतिषिद्धमैथुनसंकल्पादिना च पैतृकरेतोदोषाद् यद् यत् पापं गार्भिकं चाशुचिमातृगर्भवासजं तद् द्विजातीनामपमृज्यते" इति व्याचख्यौ। मेधातिथिरपि—"गार्भैर्होमैः गर्भे संभूते नार्याः क्रियन्ते गर्भं वा ग्रहीतुं गर्भप्रयोजनकत्वाद् गार्भाः, नारी तत्र द्वारमात्रं प्रयोजकस्तु गर्भ एव, अतस्तत्प्रयुक्तत्वाच्च, तदर्था होमाः पुंसवनसीमन्तोन्नयनगर्भाधानानि। होमशब्द उपलक्षणार्थः कर्ममात्रस्य, न हि गर्भाधानं होमः। एतेषाञ्च कर्मणां द्रव्यदेवतादिरूपं गृह्यस्मृतिभ्योऽवसातव्यम्" इत्याह। तदत्र द्वयोरपि व्याख्यानयोर्गर्भाधानस्य

1. चिह्नितांशो नास्ति क-ग। 2. 'तत्र'पदम् 'अंसाभिमर्शनादे'रनन्तरं वर्त्तते ख। 3. 'वाऽनादेशे' क। 4. 'अन्यथापि' क. 'अन्यस्यापि' ग। 5. 'आदि' नास्ति क-ग। 6. 'चेमान्यहोमकान्य-' ख।

## यथा पाणिग्रहणे तथा चूडाकर्मण्युपनयने गोदाने च ॥२४॥

यत्र चतस्रो व्याहृतयो भवन्ति तत्रातिदेशेन प्रापयति। सोऽयमनागतातिदेशः। पाणिग्रहणे वक्ष्यति। [1]"समस्ताभिश्चतुर्थीमि"ति [ सू० २।१।२५ ]। यथा पाणिग्रहणे [2]कर्मणि चतस्रस्तथा चडाकर्मणि। तथा[3]शब्दः प्रत्येकमभिसम्बध्यते। तथा चोपनयने, तथा गोदाने।

## अपवृत्ते कर्मणि वामदेव्यगानं शान्त्यर्थं शान्त्यर्थम् ॥ २५ ॥

अपवृत्ते समाप्ते कर्मणि वामदेव्यगानम्, शान्त्यर्थमिति वचनात् [4]नातीवास्य नित्यत्वम्। ननु सायंप्रातर्होमयोराद्यत्वात् [5]तदपवर्गे एव कस्मान्नोच्यते? इत्युच्यते—[6]तत्रोच्यमानं प्रकरणा[7]न्तरेणान्तरितत्वात् तत्रैव स्यात् न सर्वत्र। सर्वकर्मपरिभाषायां [8]तु विधीयमानं सर्वार्थमेव [9]भवति। तस्मादिहोच्यते। एवञ्च[10] सत्यनग्निकेष्वप्येतद् भवति। उक्तञ्च

अहोमकेष्वपि भवेद् यथोक्तं चन्द्रदर्शने।
वामदेव्यं गणेष्वन्ते बल्यन्ते वैश्वदेविके(A) ॥ [11]इति।

[12]अभ्यासः प्रकरणसमाप्त्यर्थः।

इति [13]श्रीमन्[14]* महामहोपाध्याय[13]नारायणभट्टकृतौ[14]* गोभीलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य नवमी कण्डिका ॥ ९ ॥

समाप्तश्चायं प्रथमः प्रपाठकः ॥

---

सहोमकत्वं नाङ्गीकृतम्, तथा भाष्यकारेणापि, तर्कालङ्कारस्तु "गर्भाधानेऽपि होममवसरे उपपादयिष्यामः" इत्युक्तवान्। वयमपि तत्प्रकरणे किञ्चिद् वक्ष्याम इति।

A. कर्मप्रदीपः १।९।७। व्याख्यानं प्राक् ( पृ० ७२ ) अत्र च गानाशक्तौ ऋचो वारत्रयं पठनीयाः। तदुक्तं तत्रैव—

अन्ते च वामदेवस्य गानमित्यथवा त्रिधा। इति १।९।६। 'अथवा गानाशक्तौ त्रिधा कयान-इत्यादि पठेत्' इति च प्रकाशकारोक्ता व्याख्या।

---

1. 'समस्ताभि-' ग। 2. 'कर्मणि' नास्ति क-ग। 3. 'शब्दः' नास्ति ग। 4. 'चातो-' क-ग 5. 'तत्' नास्ति ख। 6. 'तत्रोच्य-' ख। 7. 'न्तरितत्वात्' ख। 8. 'तु' नास्ति क-ग। 9. 'इति' ख। 10. 'च' नास्ति ख। 11. 'इति' नास्ति क-ग। 12. 'विरच्यामोऽध्यायपरिसमाप्तये इति' ख। 13. चिह्नितांशो नास्ति ख। 14. चिह्नितांशो नास्ति ग।

वामदेव्यमन्त्रास्तु—ॐ कयानश्चित्र आभुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥१॥ सा० स० उ० १।१।१२ ।
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृढाचिदारुजे वसु ॥२॥ सा० स० उ० १।१।१२ ।
ॐ अभीषुणः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतये ॥३॥ सा० स० उ० १।१।१२ ।
ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः
स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः
स्वस्ति नो बृहस्पतिर्दधातु ॥ ४ ॥ सा० स० उ० ९।३।९ ।

मन्त्राणामेतेषां सायणकृता व्याख्या—सदावृधः सदा वर्धमानः, चित्रश्चायनीयः पूजनीयः, सखा मित्रभूतः, इन्द्रः कया ऊती ऊत्या तर्पणेन, नः अस्मान्, आभुवत् आभिमुख्येन भवेत्, शचिष्ठया प्रज्ञावत्तमया प्रज्ञासहितानुष्ठीयमानेन कया वृता केन वर्तनेन, कर्मणा चाभिमुखो भवेत् ॥ १ ॥

मंहिष्ठः पूजनीयः, सत्यः सत्यभूतः, मदानां मादयितॄणां मध्ये, कः मदकरः, अन्धसः सोमलक्षणस्यान्नस्य रसः, दृढाचित् दृढमपि, वसु शत्रुसम्बन्धि गवादिकं धनम्, आरुजे आ समन्तात् भङ्क्तुं हे इन्द्र त्वा त्वां मत्सत् मादयेत् ॥२॥

हे इन्द्र, सखीनां मित्राणां जरितॄणां स्तोतॄणाम् अविता रक्षिता, त्वं नः अस्माकं शतं शतसंख्यकम्, ऊतये रक्षायै, सु सुष्ठु, अभि भवासि अभिमुखो भव ॥३॥ इति ।

"नोऽस्मभ्यम् इन्द्रः स्वस्ति शान्तिं दधातु, किम्भूतः ? वृद्धश्रवाः वृद्धवाक्यकारी, तथा पूषा विश्ववेदाः सर्वज्ञः, तथा तार्क्ष्यः अरिष्टनेमिः, अव्याहतगतिप्रसरः, तथा बृहस्पतिः, स्वस्ति नो दधातु । एताश्चतस्रो गातव्या वा इति गृह्यम् ।" इति गुणविष्णुकृता व्याख्या ॥४॥ इति ।

———

# द्वितीयप्रपाठकस्य प्रथमा कण्डिका



देव सवितरित्यादेर्मन्त्रगणस्य विनियोगो वक्तुमारब्धः। तत्राद्यस्य तावन्मन्त्रस्य पर्युक्षणे विनियोग उक्तः(A)। अत ऊर्ध्वं पाणिग्रहणलिङ्गा मन्त्रास्तेषां विनियोग-विवक्षयेदमाह—

## पुण्ये नक्षत्रे दारान् कुर्वीत ॥ १ ॥

पुण्ये दोषरहिते नक्षत्रे ऋक्षे परकीयां कन्यां वक्ष्यमाणेन पाणिग्रहण[1]कर्मणा दारान् कुर्वीत। दारा गृह्या[2]मत इति वचनात् ताः पुंसि सर्वत्र। ननु उदगयने पूर्वपक्षे पुण्येऽहनि इति [3]प्रसिद्धत्वात् कस्मात् पुनर्नक्षत्रग्रहणम्? [4]उच्यते—तिथि-वारकरणयोगेभ्यो नक्षत्रस्य प्राधान्यद्योतनार्थम्(B)।

A. प्रथमप्रपाठकस्य तृतीयकण्डिकायाम् (पृ० ९०)। तत्र मन्त्रव्याख्या न दत्तेत्यत्र दीयते—"हे देव सर्वत्र द्योतमान, सवितः जगत्प्रसवितः, त्वं यज्ञमिदं प्रसुव अनुजानीहि। भगाय कर्मफलभजनाय यज्ञपतिं यजमानं मां प्रसुव। दिव्यो गन्धर्वः सूर्यः केतं चित्तं पुनातीति केतपूः, नः केतं पुनातु, वाचस्पतिर्गुहः नोऽस्माकं वाचं स्वदतु प्रीतिकरीं करोतु" इति।

B. विवाहनक्षत्राण्याह ज्योतिःसारसंग्रहे—

रेवत्युत्तररोहिणीमृगशिरोमूलानुराधा मघा।
हस्तास्वातिषु तौलिषड्मिथुनेषूद्यत्सु पाणिग्रहः ॥

पारस्करगृह्ये तु—

कुमार्याः पाणिं गृह्णीयात् त्रिषु त्रिषूत्तरादिषु।
स्वातीमृगशिरसि रोहिण्यां वा ॥ इति।

भीमपराक्रमे—

पूर्वात्रये विशाखायां शिवाद्ये भचतुष्टये।
ऊढा चाऽऽशु भवेत् कन्या विधवाऽतो विवर्जयेत् ॥

---

1. '-विधिना' क। 2. 'मता' क। 3. 'सिद्धेऽपि पुनर्नक्षत्रग्रहणं किमर्थम्' ख, 'सिद्धत्वात् नक्षत्रग्रहणं कस्मात्' घ। 4. 'उच्यते' नास्ति च।

कीदृशान् दारान् कुर्वीतेत्यत आह—

**लक्षणप्रशस्तान् कुशलेन**(A) ॥ २ ॥

प्रशस्तं लक्षणम् अवैधव्यादि[1]सूचकं येषां दाराणां ते प्रशस्तलक्षणाः [2]सन्तः पदविपर्ययेण लक्षणप्रशस्ता इत्युच्यन्ते। तान् "लक्षणप्रशस्तान्"*। केन ते प्रशस्ताः कुशलेन स्त्रीलक्षणविदा(B)।

---

विष्णुभाद्रे त्रिके चित्रे ज्येष्ठायां ज्वलने यमे।
एभिर्विवाहिता कन्या भवत्येव सुदुःखिता ॥
आद्ये मघाचतुर्भागे नैऋते तस्याद्य एव च।
रेवत्यन्ते चतुर्भागे विवाहः प्राणनाशकः ॥ इति।

रघुनन्दनाद्यः पुनः पारस्करोक्तं नक्षत्रं ज्योतिःशास्त्रानुक्तं यजुर्वेदिविषयमापद्विषयं वा भवतीत्येवं मन्यन्ते।

A. अत्र तर्कालङ्कारः—"कश्चिदेतत्सूत्रानन्तरम् "अनार्षशुल्करहिताम्" इति सूत्रमधिकं पठन्ति "आर्षशुल्कं गोमिथुनादि, तदितरशुल्कनीतां त्यजेत्" इति व्याचक्षते च। तदिदं सूत्रमनार्षमिति प्रतिभाति। तथा हि, पूर्वं दारान् कुर्वीत इति सूत्रयित्वा तद्विशेषणत्वविवक्षयैव लक्षणप्रशस्तानिति, किमिति अनार्षशुल्करहितानिति नासूत्रयत्। "तदलाभे पिण्डान्" इत्युक्तं सूत्रमप्येवं सत्युपपद्यते। तत्र हि तच्छब्देन स्त्रीलक्षणविदः परामर्शः। एतच्चानयोरेव सूत्रयोरानन्तर्ये सुश्लिष्टं स्यात्, न पुनरन्तरा सूत्रान्तरेण व्यवधाने। अपि च अनार्षशुल्करहितान् इत्यनेनार्षेऽपि गोमिथुनस्य शुल्करूपता प्रतीयते, सोऽयमर्थो न्यायविरुद्धो मनुविरुद्धश्च।

तथा च मनुः—

आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्।
अल्पोऽप्येवं महान् वापि विक्रयस्तावदेव सः ॥ इति"।

इत्याह स्वभाष्यपादटीकायाम्।

B. तदुक्तं काशीखण्डे—

सदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि।
अतः सुखसमृद्ध्यर्थमादौ लक्षणमीक्षयेत् ॥ इति ॥३७।१॥

स्त्रीलक्षणसंग्रहस्तु रघुनन्दनीयज्योतिस्तत्त्वे—

स्मृतिः—

धर्मार्थकाममोक्षाणां दाराः संप्राप्तिहेतवः।
परीक्ष्यन्ते प्रयत्नेन पूर्वमेव करग्रहात् ॥

---

1. '-संसूचकम्' घ। 2. 'सन्तः' स्थाने 'प्रशस्त-' घ। 3. चिह्नितांशो नास्ति घ।

मनुः—

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥ ३।१०॥

शातातपः—

हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् ।
तादृशीं वरयेत् कन्यां गृहस्थः सुखमेधते ॥

भविष्ये—

प्रतिष्ठिततलाः सम्यग् रक्ताम्भोजसमन्विताः ।
तादृशाश्चरणा धन्या योषितां भोगवर्धनाः ॥

मनुः—

नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोम्नीं न वाचालां न पिङ्गलाम् ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥ इति ।
[ नातिस्थूलां नातिकृशां न दीर्घां नातिवामनाम् ।
वयोऽधिकां नाङ्गहीनां न सेवेत् कलहप्रियाम् ॥ ]
यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥

प्रतिप्रसवमाह मत्स्यसूक्ते—

गङ्गा च यमुना चैव गोमती च सरस्वती ।
नदीष्वासां नाम वृक्षे मालती तुलसी अपि ॥
रेवती चाश्विनी भेषु रोहिणी शुभदा भवेत् ।

कृत्यचिन्तामणौ—

नेत्रे यस्याः केकरे पिङ्गले वा स्याद् दुःशीला श्यावलोलेक्षणा च ।
कूपौ यस्या गण्डयोः सस्मितायाः निःसन्दिग्धां बन्धकीं तां वदन्ति ॥

नन्दिकेश्वरपुराणे—

श्यामा सुकेशी तनुलोमराजी सुभ्रूः सुशीला सुगतिः सुदन्ता ।
वेदीविमध्या यदि पङ्कजाक्षी कुलेन हीनाऽपि विवाहनीया ॥
रूक्षा कुदन्ता यदि पिङ्गलाक्षी लोम्ना समाकीर्णसमाङ्गयष्टिः ।
मध्येन पुष्टा यदि राजकन्या कुलेऽपि योग्या न विवाहनीया ॥" इति ।

स्त्रीणां जन्मलग्नचन्द्रादिभिः फलविचारमाह ज्योतिःसारसंग्रहे—

लग्ने शशाङ्के च वपुर्विचिन्त्यं तयोः कलत्रे पतिवैभवानि ।
सुताव्ययभावे प्रसवोऽवगम्यो वैधव्यमस्या निधनेऽवगम्यम् ॥
क्रूरैर्गते विधवा भवति पुनर्भूः शुभाशुभैर्नारी ।
क्रूरेऽष्टमेऽपि विधवा सत्स्वर्थेषु स्वयं म्रियते ॥
बाल्ये विधवा भौमे पतिसन्त्यक्ता दिवाकरेऽस्तस्थे ।
सौरे पापैर्दृष्टे कन्यैव जरां समुपयाति ॥

भौमदोषानाह—

लग्ने व्यये च पाताले यामित्रे चाष्टमे कुजे ।
नारी वैधव्यमाप्नोति पुंसो जाया विनश्यति ।

विषकन्यायोगानाह—

भद्रायां भग्नपादर्क्षे शनिभौमार्कवासरे ।
विषकन्या भवेज्जाता पतिपुत्रविनाशिनी ॥
भद्रातिथिर्यदाऽश्लेषा शतभं कृत्तिका तथा ।
मन्दाररविवाराश्चेद् विषकन्या बुधैः स्मृता ॥
द्वादशी वारुणः सूर्ये विशाखा सप्तमी कुजे ।
मन्देऽश्लेषा द्वितीया च विषयोगास्त्रयो मताः ॥
रिपुक्षेत्रस्थितौ द्वौ तु लग्ने यत्र शुभग्रहौ ।
क्रूरश्चैकस्तत्र जाता भवेत् स्त्री विषकन्यका ॥

वैधव्ययोगानाह—

वैधव्यं स्यात् पापखेटेऽष्टमस्थे रन्ध्रस्वामी संस्थितो यस्य चांशे ।
मृत्युः पापे तस्य वाच्योऽङ्गनायाः सौम्यैरर्थस्थानगैः स्यात् स्वयं हि ॥
कामार्ता विधवा कुलक्षयकरी पापद्वये सप्तगे
वेश्या स्वामिवधं करोति नियतं पापत्रये चास्तगे ।
षष्ठे च भवने भौमः सप्तमे राहुसम्भवः ।
अष्टमे च यदा सौरिर्भर्ता तस्या न जीवति ॥
निशाकरात् सप्तमभावसंस्थाः स्वर्भानुमन्दारदिवाकराश्चेत् ।
तनोरिमे जन्मनि नैधने वा दिशन्ति वैधव्यमलं न देवाः ॥

कुलटायोगानाह—

पापान्तराले यदि लग्नचन्द्रौ स्यातां शुभालोकनवर्जितौ तौ ।
भनक्ति कोलां सकलं क्रमेण कुलद्वयं हन्ति तदा मृगाक्षी ॥

किञ्च—

**तद्[1]लाभे [2]पिण्डान् ॥ ३ ॥**

[3]तदिति प्रकृतस्य स्त्रीलक्षणविदः परामर्शः। [4]तद्लाभे स्त्रीलक्षणविदः[4]* अलाभे वक्ष्यमाणलक्षणान् पिण्डान् कुमार्या उपनामयेत् इत्यनेन [5]वक्ष्यमाणेन क्रियापदेन सह सम्बन्धः। इयं चोपश्रुतिः प्रशस्ताप्रशस्तकन्यापरीक्षार्था शाखान्तरादिहोपादीयते।

कुतस्ते पिण्डा ग्राह्या इत्यत आह—

**वेद्याः सीताया ह्रदाद् गोष्ठाच्चतुष्पथादादेवनादादहनादीरिणात्(A) सर्वेभ्यः सम्भार्यं नवमम् ॥ ४ ॥**

वेदिरग्निष्टोमादेर्यज्ञस्य, तस्या वेद्याः, सीता कृष्टं क्षेत्रम्। ह्रदो ह्रादतेः शब्दकर्मणो [6]ह्रादतेर्वाऽस्यास्तीति भावकर्मणो, ग्रीष्मेऽपि यः शोषं [7]नोपैति। गोष्ठं गवां स्थानम्। [8]चतुष्पथः प्रसिद्धः[8]*, आदेवनं द्यूतस्थानम्, आदहनं [9]श्मशानस्थानम्। ईरिणं [10]मुषरम्। एभ्यो वेद्यादिभ्यः स्थानेभ्यो मृदो गृहीत्वा पृथगेव पिण्डान् कुर्यात्।

व्ययेऽष्टमे भूमिसुतस्य राशावबौ सपापे भवतीह रण्डा।
मदे कुलीरे सरवौ कुजेऽपि धनेन हीना रमतेऽन्यलोकैः ॥
तनौ चतुर्थे निधने व्यये वा मदालये पापयुतः कुजश्चेत्।
अनङ्गलीलां प्रकरोति जारैः पतिं तिरस्कृत्य विलोलनेत्रा ॥

अस्य प्रतिप्रसवमाह तत्रैव—

लग्नाद्विधोर्वा यदि जन्मकाले शुभग्रहो वा मदनाधिपो वा।
द्यूनस्थितो हन्त्यनपत्यदोषं वैधव्यदोषञ्च विषाङ्गनोत्थम् ॥
वाचस्पतौ नवमपञ्चमकण्टकस्थे जाताङ्गना भवति पूर्णविभूतियुक्ता।
साध्वी सुपुत्रजननी सुखिनी गुणाढ्या सप्ताष्टके यदि भवेदशुभग्रहोऽपि।
युवतिरमरपूज्ये केन्द्रगे धर्मगे वा सततममलमूर्तिः स्निग्धहृष्यानना(?)च्या।
उभयकुलविभूत्या लब्धकीर्तिश्च जाता सुखयति शुभशीला स्वामिनं भोगिनी सा ॥ इति।

A. अत्रैव सूत्रमेकं समाप्य सर्वेभ्य इत्यादि सूत्रान्तरं पठतः सामश्रमिनकालङ्कारौ।

1. '-भावे' ख-ग। 2. 'पिण्डान च' क। 3. 'तदिति' स्थाने 'तस्य' घ। 4. 'तद्लाभे' स्थाने 'तस्यालाभे' ख-ग, चिह्नितांशो नास्ति घ। 5. 'सम्भूय वक्ष्य-' क-ग। 6. 'ह्रादते-' ख। 7. 'नापैति' क। 8. चिह्नितांशो नास्ति घ। 9. 'श्मशानस्थानम्' स्थाने 'श्मशानम्' घ। 10. '-मुषरम्' क-ख, '-दारिद्रम्' ग।

[1]एवमेतेऽष्टौ पिण्डा[1]* भवन्ति। नवमं च पिण्डं [2]सम्भार्यं कुर्यात्। सर्वेभ्यो वेद्यादिभ्यः स्थानेभ्यः स्तोकं स्तोकं मृदं संभृत्य क्रियते इति सम्भार्यः।

कीदृशांस्तान् कुर्यादित्यत आह—

[3]समान् कृतलक्षणान् ॥ ५ ॥

[4]समान् प्रमाणतः, कृतलक्षणान् [5]कृतचिह्नान्।

कृत्वा च[6]*—

पाणावाधाय कुमार्या उपनामयेद् 'ऋतमेव प्रथममृतं नात्येति कश्चनर्त इयं पृथिवी [6]श्रिता सर्वमिदमसौ भूयादि'ति तस्या नाम गृहीत्वैषामेकं गृहाणेति ब्रूयात् ॥ ६ ॥

[7]पाणौ हस्ते स्वकीये [8]आधाय कृत्वा, [9]कुमार्याः कन्यायाः, उपनामयेत् समीपे कुर्या[10]दित्यर्थः। (A)'ऋतमेव [11]प्रथममि'त्यनेन मन्त्रेणे[12]तिकरणान्तेन, असावित्यस्मिन् [13]स्थाने तस्या नाम अभिधानं गृहीत्वा उच्चार्य। 'सर्वमिदं यशोदा भूयादि'ति प्रयोगः। [14]'प्रसङ्गान्मन्त्रोऽपि व्याक्रियते'[14]*। ऋतमेव [15]प्रथमम् ऋतं सत्यं प्रथमम् आद्यं कारणमित्यर्थः। तथा च श्रुतिः—'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम्' इति, [16]ऋतं नात्येति कश्चन, ऋतं नात्येति नातिक्रामति कश्चन कश्चिदपि, सत्यं नातिक्रामति[16]* अनतिक्रमणीयत्वात्, ऋते सत्ये इयं पृथिवी श्रिता आश्रिता, न केवलं पृथिवी, किं तर्हि? सर्वमिदम्। च-शब्दो लुप्तवद् द्रष्टव्यः। सर्वं चेदं विश्व[17]मनेकनामरूपजातमित्यर्थः। सत्ये श्रितमिति वर्त्तते, यथेदं सर्वं सत्ये श्रितम्, तथा [18]असौ भूयादिति[18]*। असावपि यशोदा सत्या भूयात् सत्या एव भव[19]त्वित्यर्थः। एवमनेन मन्त्रेण तान् पिण्डान् [20]उपनाम्यन् पुनः सम्बोधनविभक्त्या तस्या नाम गृहीत्वा हे यशोदे एषामेकं गृहाणेति ब्रूयात्।

---

A. ॐ ऋतमेव प्रथममृतं नात्येति कश्चनर्त इयं पृथिवी श्रिता सर्वमिदमसौ भूयात्" इति मन्त्रस्तु तैत्तिरीयब्राह्मणे १।५।५, आपस्तम्बश्रौतसूत्रे च ८।४।२ उपलभ्यते।

---

1. 'एवमष्टौ' क। 2. 'सम्भार्यं च' क-ख-ग। 3. 'समान्' ग। 4. 'समा' घ। 5. 'चिह्न' क, 'कृतचिह्नान्' नास्ति ख-ग। 6. 'श्रुता' ग। 7. 'पाणौ' नास्ति घ। 8. 'पाणावाधाय' ग-घ। 9. 'कुमार्याः' नास्ति घ। 10. 'इत्यर्थः' नास्ति घ। 11. 'प्रथमम्' नास्ति घ। 12. 'इतिकरणान्तेन' नास्ति घ। 13. 'स्थाने' घ। 14. 'मन्त्रव्याख्या' घ। 15. 'प्रथमम्' नास्ति घ। 16. 'सर्वे मता कश्चन कश्चिदपि नात्येति नातिक्रामति' घ। 17. '-मनेऽपि' क-ग-घ। 18. पंक्तिरियं नास्ति घ। 19. 'इत्यर्थः' नास्ति घ। 20. 'उपनाम्य' ख।

## पूर्वेषां चतुर्णां गृह्णन्तीमुपयच्छेत् ॥ ७ ॥

पूर्वेषां वेद्यादीनां पिण्डानां चतुर्णामेकतमं गृह्णन्तीम् आददानामुपयच्छेद् विवाहयेद् [1]इत्यर्थः। गृह्णतीमिति प्राप्ते गृह्णन्तीमिति छान्दसो[2]ऽयं प्रयोगः।

## संभार्यमपि त्वेके ॥ ८ ॥

संभार्यमपि गृह्णतीमुपयच्छे[3]दित्येवमेके आहुः। [4]यतोऽत्र मिश्रं शुभाशुभमत उपयच्छेत्तथा। अत्र शाखान्तरोक्तः फलवादः प्रदर्श्यते—

गृह्णाना वेदिपिण्डं तु सुतान् सूतेऽग्निहोत्रिणः।
द्वितीयेन गृहीतेन सुतान् सूते कृषीवलान् ॥
सर्वकामसमृद्धांश्च तृतीयस्य परिग्रहात्।
गोष्ठपिण्डग्रहाच्चापि [5]गोमिनः सुखिनस्तथा ॥
इतश्चेतश्च गन्तारः पञ्चमे[6]नास्थिताः सुताः।
षष्ठेन तु गृहीतेन भवन्ति द्यूतसेविनः ॥
श्मशानपिण्डग्रहणाद् विधवा जायते ध्रुवम्।
वन्ध्या वा विधवा वा स्यादष्टमग्रहणादपि ॥
मिश्रमेतद् भवेत् सर्वं यतः पूर्वोदितं फलम्।
नवमस्य [7]ग्रहस्तस्माच्च शुभो वा यदि वाऽशुभः(A) ॥ इति।

कस्मात् पुनः कन्यापरीक्षायामेवमतिमहान् यत्नः क्रियते? [8]यस्मात् सर्वपुरुषार्थसिद्धौ प्रधानमेतदङ्गं यद् भार्येति।

---

A. "शाखान्तरेऽप्येवमेव प्रायः फलवादाः श्रूयन्ते, किन्तु तत्र क्रियावत्त्वादिकमपत्यगतमिति विशेषस्तथा चोक्तम्" इत्युक्त्वा पद्यानीमानि प्रमाणीकरोति चन्द्रकान्तः स्वभाष्ये।

अत्र च गृह्यासंग्रहोक्तः फलवादः—

वेदिमिश्रात् क्रियावती सीतायाः फलते कृषिः।
अक्षोभ्या च ह्रदे ज्ञेया गोष्ठे भवति गोमती ॥
चतुष्पथे प्रकीर्णा स्याद् द्यूतस्थाने कलिप्रिया।
श्मशाने म्रियते भर्त्ता वन्ध्या भवति चोषरे ॥
नवमे सर्वं एवैते कन्यायाः परिगृह्यन्ते। इति गृ० स० २।२१-२३।

---

1. 'इत्यर्थः' नास्ति घ। 2. 'अयं प्रयोगः' नास्ति घ। 3. '-दिव-' घ। 4. 'आयतोऽत्र' ख-ग। 5. 'गोमिनः' घ। 6. '-नास्थिताः' ख-घ, '-न स्थिताः' ख। 7. 'ग्रहात् त-' घ। 8. 'तस्मात्' क-ग।

तथा च स्मरणम्—

धर्मार्थकाममोक्षाणां दाराः संप्राप्ति[1]हेतवः।
परीक्ष्यास्ते प्रयत्नेन पूर्वमे[2]व करग्रहात्(A) ॥ इति।

मनुरपि च—

अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह(B) ॥ इति।

आसन्ने विवाहकर्मणि कथं कन्याप्लवनं कर्त्तव्यमित्यत आह—

**क्रीतकैर्यवैर्माषैर्वाप्लुतां सुहृत् सुरोत्तमेन सशरीरां त्रिर्मूर्धन्यभिषिञ्चेत् काम वेद ते नाम मदो नामासीति, समानयामुमिति पतिनाम गृह्णीयात् स्वाहाकारान्ताभिरुपस्थम् उत्तराभ्यां प्लावयेत् ॥ ६ ॥**

क्रीतकैः क्रयक्रीतैश्चूर्णीकृत्य द्रवीकृतैरित्यर्थः। [3]कैः? यवैर्माषैर्वा(C) आप्लुताम् उन्मार्द्रितसर्वाङ्गीम्, सुहृत् स्निग्धहृदयः, शरीरेण सह सशरीरां [4]तां [5]त्रिःकृत्वः, मूर्द्धनि [6]शिरसि [7]अभिषिञ्चेत्। केना[8]भिषिञ्चेत्? सुरोत्तमेन। धरुणं सुरा अरविन्दानीत्युदकनाम(D)। [9]सुपाठादुदकनामैतत्। उत्तमेने[10]ति क्षारादिदोषरहितेन। स्वादुना [11]गन्धवर्णरससंयुक्तेनेत्यर्थः। [12]उत्तमशब्दस्यैवमर्थत्वात्*। सुरैव कस्मान्नोच्यत[13]इति चेत्? न; ब्राह्मणस्य सुरागन्धाघ्राणेऽपि प्रायश्चित्तोपदेशात्।

A. प्रमाणीकृतं वचनमिदं रघुनन्दनेनापि ज्योतिस्तत्त्वे।

B. मनुसंहिता ९।२८। कुल्लूकभट्टोक्ता व्याख्या चास्य—"अपत्योत्पादनमुक्तमप्येतदधीनमित्यवज्ञापनार्थं पुनरभिधानम्। धर्मकार्याण्यग्निहोत्रादीनि, परिचर्या उत्कृष्टा रतिः, पितॄणामात्मनश्चापत्यजननादिना स्वर्ग इत्येतत् सर्वं भार्याधीनम्"। इति।

C. "एतेन मसूर-यव-माषाणां श्लक्ष्णचूर्णान्येकीकृत्ये"ति भवदेवभट्टवचनमप्रमाणमिति" तर्कालङ्कारः। क्रीतकशब्दस्य मसूरार्थः स्वीकृतो भवदेवेनेति सुब्रह्मण्याग्निहोत्री।

D. निरुक्ते नैघण्टुककाण्डे उदकनामसु।

1. '-क्रैमत्रे' ख। 2. '-वाक्यम्-' ख। 3. 'कैः' नास्ति क। 4. 'तां' नास्ति क-ख-घ। 5. 'त्रिःकृत्वा' क, 'त्रिःकृत्य' ख। 6. 'शिरसि' नास्ति घ। 7. 'चाभिषिञ्चेत्' ख। 8. 'चाभिषिञ्चेत्' नास्ति ग-घ। 9. 'सुराभावा-' ग, 'सुरापाठा-' ख। 10. 'इति' नास्ति घ। 11. 'गन्धवर्ण-' ख। 12. 'र्थाश्रितानां' नास्ति घ। 13. 'इति चेत्' नास्ति ख।

सुराया गन्धमाघ्राय स्नात्वाज्यं प्राश्य शुध्यति ।
स्पर्शे प्रतिग्रहे चैव ऽग्रहं पीत्वा तथोदकम्(A) ॥

इति वचनाद्दोष इति चेत्? न; अन्यथाऽपि वाक्यार्थस्य कल्पयितुं शक्यत्वात्। तस्मादुदकेनाभिषिञ्चेदित्यर्थः। किं तूष्णीमेवाभिषिञ्चेत्? न; कथं तर्हि? "काम वेद ते नाम मदो नामासी"ति(B) आभिर्ऋग्भिः, कतिभिः? 'स्वाहाकारान्ताभिः। यावत्योऽस्मिन् 'देशे'* स्वाहाकारान्तास्तावतीभिस्तिसृभिरित्यर्थः। एकैकया ऋचा एकैकोऽभिषेकः कार्यः। (1)उत्तराभ्यामृग्भ्यामुपस्थं योनिप्रदेशं प्लावयेत्।

A. प्रमाणीकृतं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये 'तथा च स्मर्यते' इत्युपोद्घातेन।

B. मन्त्रस्तु—

ॐ काम वेद ते नाम मदो नामासि समानयाऽमुं सुरा ते अभवत्।
परमत्र जन्माग्ने तपसो निर्मितोऽसि स्वाहा ॥

ऋगियं साममन्त्रब्राह्मणप्रथमप्रपाठकप्रथमखण्डस्य द्वितीया।

व्याख्या चास्याः—"हे काम, ते नामाहं वेद जाने मदो नामासि मदनाम्ना त्वं भवसि, ते त्वदीया सुरा मादकजलम् अभवदिह कन्यायां प्रादुर्भूतम्। अत एव एतन्नामिकां कन्याम्, अमुम् एतन्नामकं पतिं परिणेतारं समानय। अत्र कन्याशरीरे तव परं जन्म उत्कृष्टा जनिर्भूता, हे अग्ने कामाग्ने, त्वं तपसः स्त्रैणात् पुरुषप्रसादनार्थं निर्मितोऽसि विधात्रा, स्वाहा शोभनोक्तिरेषा भवतु"। एवमिति।

C. उत्तरे मन्त्रौ च—

ॐ इमन्त उपस्थं मधुना संसृजामि प्रजापतेर्मुखमेतद् द्वितीयम्।
तेन पुंसोऽभिभवासि सर्वानवशान् वशिन्यसि राज्ञी स्वाहा ॥

"हे कन्यके, ते तव, इममुपस्थमानन्देन्द्रियं मधुना रसोत्तमेन संसृजामि संयोजयामि, यत एतदुपस्थं प्रजापतेः चतुर्द्वितीयं मुखम्। तेन मुखप्रभावेण सर्वानवशानपि पुंसोऽभिभवासि वशीकरोषि। अतो वशिनी कान्तिमती त्वं राज्ञी पतिगृहस्यासि" इति चास्या व्याख्या।

ॐ अग्निं क्रव्यादमकृण्वन् गुहानाः स्त्रीणामुपस्थमृषयः पुराणाः।
तेनाऽऽज्यमकृण्वंस्त्रैशृङ्गं त्वाष्ट्रं त्वयि तद् दधातु स्वाहा ॥ इति।

"गुहाना उपगूहमानाः पुराणा आद्या, ऋषयो वशिष्ठाद्याः स्त्रीणामुपस्थं क्रव्यादमाममांस-भक्षकम् अग्निमिति अकृण्वन् स्वीकृतवन्तः, तेन संवृतं त्रिशृङ्गस्य पुरुषशिश्नस्येदं त्रैशृङ्गम्, त्वष्टृ-देवताकं त्वाष्ट्रं शुक्रम् आज्यम् इति अकृण्वन् स्वीकृतवन्तः। हे कन्ये, त्वयि त्वदीयोपस्थाग्नौ तद् शुक्ररूपं चाज्यं स्थापयतु पतिरिति। स्वाहा उक्तमेतत् साधु भवतु। इत्येवमस्या व्याख्या।

1. चिह्नितांशो नास्ति ख। 2. 'प्रदेशे' च।

समानयामुमिति पतिनाम गृह्णीयात्[1]। अमुमित्येतस्मिन् स्थानेऽभिषिक्तायाः कन्यायाः पत्युर्नाम गृह्णीयादुच्चारयेदि[2]त्यर्थः(A)। 'समानय देवदत्तम्' इति प्रयोगः॥

किमेतद्विवाहयितुः कर्म उत कन्यापितुरित्यत आह—

## ज्ञातिकर्मैतत्॥ १०॥

ज्ञातेः संज्ञानाद् मातापित्रोरन्यतरः कुलीनः, तस्यैतत् कर्म। अयञ्चाभिषेको दौर्भाग्याप लक्ष्म्युपसर्गाद्यपनोदनार्थं शाखान्त[3]रेऽप्यद्यापि पठ्यते, तस्मात् "प्रयत्नः कर्त्तव्य इति(B)॥

---

अनयोराकरस्थानन्तु साममन्त्रब्राह्मणप्रथमप्रपाठकस्य प्रथमः खण्डः।३।४

A. अत्र गृह्यासंग्रहः—

स्ववर्णाभिरनिन्द्याभिरद्भिरक्षतमिश्रितैः।
स्नानं चतुर्भिः कलसैः स्त्रीभिः स्त्रीं यत्र प्लावनम्॥ २।१९।

यत्र विवाहादौ स्त्रीभिः कर्तृभिः स्त्रीं कन्यां प्लावनं क्रियते तत्र समानवर्णाभिश्चतुर्भिः कलसैर्यवमिश्रिताभिरद्भिः स्नपनं कर्तव्यम्।

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।
पाणिकर्मणि गौडी स्यात् सत्या माध्व्यधमा सुरा॥ (गृ० स० २।१६)

पाणिकर्मणि विवाहे गौडी सुरा सत्या उत्तमा स्यात्। माध्वी पुनरधमा पैष्टी मध्यमेत्यर्थादुक्तमिति। सेयं विवाहे क्षत्रियादीनामाचारप्राप्ता सुरा विशेषिता, न तु ब्राह्मणानामिति। केचित्तु विवाहात् पूर्वं ज्ञातिकर्मणि क्षीतकैर्यवैरित्यादिसूत्रेण सुरोत्तमेन योऽयमभिषेक उक्तः स खलु सुरयैवेति मन्यमानास्तत्सुराविवरणपरतया श्लोकमिमं वर्णयन्ति, तदसमीक्षिताभिधानं तेषाम्, यतः स्वयमेवाऽऽचार्यपुत्र उक्तवानुपरिष्टात्—

सर्वयज्ञेषु विप्राणामद्भिः पूर्वं प्रवर्तते।
तस्मात् सुरोत्तमा ह्यापो अद्भिरेवाभिषेचयेत्॥ इति (गृ० स० २।२१)

यतः सर्वकर्मसु विप्राणां प्रथममद्भिः क्रिया प्रवर्तते तस्माद् आप एव सुरोत्तमाः। अतोऽद्भिरेव कन्यामभिषेचयेदिति।

B. अत्र रघुनन्दनः—"अत्र च विवाहात् पूर्वं ज्ञातिकर्तृकसमन्त्रककन्याभिषेकरूपस्य ज्ञातिकर्मणो भट्टभाष्ये काम्यत्वाभिधानेनेदानीं तथानाचरणात् तत्प्रमाणं न लिखितम्" इत्याह। भवदेवेन तु स्वनिबन्धे ज्ञातिकर्म लिखितमिति ज्ञातव्यम्।

---

1. इतः परं 'कथं भद्रतोदकेन मूर्द्धन्येव तथाऽभिषिञ्चेद् यथोपस्थोऽपि प्राप्यति' इत्यधिकः पाठः, च।
2. 'इत्यर्थः' नास्ति च। 3. '-लक्षणो-' च। 4. '-रेऽप्यपि' क। 5. 'प्र-' नास्ति च।

**पाणिग्रहणे पुरस्ताच्छालाया¹ अग्निरुपसमाहितो भवति ॥ ११ ॥**

पाणिग्रहणे कर्मणि प्रक्रान्ते "अर्हणेषु प्रारब्धेषु²* पुरस्तादग्रतो न दिक्तः, कस्याः ? शालायाः, गृहस्याग्निरुपसमाहितो भवति परिसमूहनादि पूर्वोक्तं कर्म कृत्वा वेदिमध्ये स्थापितो भवतीति (A) ॥

**अथ जन्यानामेको ध्रुवाणामपां कलसं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते ॥ १२ ॥**

एकः(B) ध्रुवाणां स्थावराणाम् अपाम् ³उदकस्य कलसं कुम्भं पूरयित्वा³* सहोदकुम्भः उदकुम्भं गृहीत्वा प्रावृतः कृतोष्णीषः । ⁴वाग्यतः संयतवाक्(C) । अत्रापि ⁵वाग्यमलोपे पूर्वोक्तमेव प्रायश्चित्तम्, तुल्यत्वात् कारणस्य(D) । एवं सर्वत्र ⁶द्रष्टव्यम् । ⁷अग्रेणाग्निं परिक्रम्य गत्वा दक्षिणतः, प्रकृतत्वादग्नेर्भ्रमणश्च । उदङ्मुखोऽवतिष्ठते ऊर्ध्वं तिष्ठति । अवपूर्वस्तिष्ठतिरूर्द्ध्वतां दर्शयति ॥

A. अनुपदेशात् कर्तुरनियम इति व्यक्तीभविष्यत्युपरिष्टात् २।१।२१ सूत्रभाष्ये ।

B. जन्यानां कन्याज्ञातिजनानां मध्ये एक इति । ध्रुवा आपो व्याकृताः कात्यायनेन गृह्यासंग्रहे—

महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च ।
गन्धवर्णरसैर्युक्ता ध्रुवास्ता इति निश्चयः ॥ २।२९ ।

C. उदकुम्भधारिणोऽवस्थानं दर्शयत्याचार्यपुत्रः—

गन्धमाल्यैरलङ्कृत्य सकुम्भो वाग्यतः शुचिः ।
धारयेत् त्रिषु वर्णेषु प्रावृतांसो द्विजोत्तमः ॥ इति (गृ० स० २।२६) ।

गन्धमाल्यैरुदकुम्भमलङ्कृत्य सकुम्भः, नियमितवचनः शुचिः प्रावृतांसो वस्त्राच्छादितस्कन्धयुगः, द्विजोत्तम उत्तमो ब्राह्मणः, त्रिषु वर्णेषु ध्रुवा अपो धारयेदित्यर्थः ।

D. पूर्वं ब्रह्मणोऽशिष्टवाग्व्यवहारे यदुक्तं तदिति भावः । ( द्रष्टव्यम् पृ० १९६ )

1. इतः परम् 'उपलिप्ते' इत्यधिकः पाठः क-ख-ग । 2. 'अर्हणे प्रारब्धे' क-ख-घ । 3. चिह्नितांशो नास्ति घ । 4. 'वाग्यतः' नास्ति घ । 5. 'वाग्यमन-' घ । 6. 'द्रष्टव्यम्' नास्ति घ । 7. 'अग्नेर्वा प्रदक्षिणमपि' घ । 'यथैव' स्थाने 'यथ' इति ग ।

किञ्च—

**प्राजनेनान्यः ॥ १३ ॥**

अन्यः अपरो जन्यः प्राजनेन प्रतोदेन गृहीतेन उदङ्मुखो दक्षिणतोऽवतिष्ठते ।

किञ्च—

**शमीपलाशमिश्रांश्च लाजांश्चतुरञ्जलिमात्राञ्छूर्पेणोपसादयन्ति पश्चादग्नेः ॥ १४ ॥**

[1]शमी प्रसिद्धा, तस्याः पलाशानि पत्राणि[1]* तन्मिश्रान् लाजान्, भृष्टा व्रीहयो लाजा इ[2]त्युच्यन्ते । तथा चोक्तम्—

अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते ।
भृष्टास्तु व्रीहयो लाजा घटाः खाण्डिक उच्यते(A) ॥ इति ।

लाजानुपसादयन्ति, बहुवचना[3]द्दासादनकर्तु[4]रनियमः । कियन्तः ? चतुरञ्जलिमात्रान् पाणिद्वयमञ्जलिः, चत्वारोऽञ्जलयो यावद्भिर्भवन्ति तावत उपसादयन्ति । [5]केन ? शूर्पेण[5]* । [6]क ? पश्चादग्नेः[6]* ।

**दृशत्पुत्रश्च ॥ १५ ॥**

दृशत् शिला पुत्र उपलः, लोष्टक इत्यर्थः । कुतः ?

प्रसिद्धार्थस्य सान्निध्ये योऽप्रसिद्धार्थ उच्यते[7] ।
तत् [8]सन्निधानसामर्थ्यात् तज्जातीयोऽनुगम्यते(B) ॥ इति न्यायात् ।

द्वन्द्वैकवद्भाव[9]श्चायम् । दृशत्पुत्रश्चोपसादयन्ति, पश्चादग्नेरिति वर्तते ।

**अथ यस्याः पाणिं ग्रहीष्यन् भवति सशिरस्का साप्लुता भवति ॥ १६ ॥**

---

A. छन्दोगपरिशिष्टम् । ३।९।१ ।

B. प्रमाणीकृतोऽयं न्यायस्तर्कालङ्कारेणापि स्वभाष्ये 'अनुगम्यते' इत्यत्र 'अवगम्यते' इति पाठभेदेन ।

---

1. 'शमीपलाशमिश्रान्' ।ख-ग, 'शम्याः पत्राणि' घ। 2. 'उच्यन्ते' नास्ति घ। 3. '-दासादन-' ख। 4. '-नियमः' क-ग। 5. चिह्नितांशो नास्ति घ। 6. चिह्नितांशो नास्ति घ। 7 'यः' इत्यधिकम् ख-ग। 8. 'सन्निधाने' ख-घ। 9. 'चायं' नास्ति घ।

अथेत्यानन्तर्ये, 'कथं नाम ?'[1]* पूर्वोक्ताद्भिषेकादनन्तरमेवाविधवा कृतज्ञानं दर्शयति(A)। किञ्च—

अहतेन वसनेन पतिः परिदध्याद् 'या अकृन्तन्नि'त्येतया ऋचा ॥ १७ ॥

अहतेनाधौतेनाक्षुण्णेन वसनेन वाससा(B) पतिः "कन्यां दत्तां सतीं परिदध्यात् परिधापयेद् (C)"या अकृन्तन्" इत्येतया ऋचा(D)।

'परिधत्त धत्त वाससे'ति च(E) प्रावृतां यज्ञोपवीतिनीम् अभ्युदानयञ्जपेत् सोमोऽददद् गन्धर्वायेति ॥ १८ ॥

---

A. पूर्वोक्तज्ञातिकर्मणि योऽभिषेक उक्तस्तदनन्तरमिदानीं पुनराप्लवनमुच्यते, अत्रापि गृह्यासंग्रहोक्तसवर्णाभिरविधवाभिरेवाप्लवनमिति ज्ञेयम्। अत्र रघुनन्दनः—"यस्याः कन्याया जामाता पाणिं ग्रहीष्यन् भवति पाणिग्रहणं करिष्यतीत्यर्थः। अथ तदारम्भदिने क्षारोद्वर्तनानन्तरमविधवाहृतमङ्गलोदकैः सा स्नाता भवती"त्याह।

B. अहतस्य वाससो लक्षणमुक्तं प्राक् ( पृ० १८ )।

C. मन्त्रस्तु—

ॐ या अकृन्तन्नवयन् या अतन्वत याश्च देव्यो अन्तानभितोऽततन्थ।
तास्त्वा देव्यो जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः॥

मन्त्रब्राह्मणम् १।१।५। विनियोगश्चास्य मन्त्रस्य खादिरगृह्येऽपि १।३।६।

अस्य व्याख्या—याः देव्यो द्युतिमत्यः स्त्रिय इदं वस्त्रम् अकृन्तन् कर्त्तितवत्यः सूत्राणि निर्मितवत्यः, याः अवयन् ऊतवत्यः, याः अतन्वत विस्तारितवत्यः, याश्च अन्तान् एतत्पटसक्तान् अभित उभयपार्श्वयोरततन्थ तेनुर्ग्रथितवत्यः, ता देव्यो दानादिगुणयुक्ताः, हे कन्ये त्वा त्वां जरसा जरान्तं यावत् संव्ययन्तु परिधापयन्तु। हे आयुष्मति, इदं वासः परिधत्स्व परिधानं कुरुष्व।

D. अत्र तर्कालङ्कारः—"अथ एतया इत्यवाच्यम् इति चेत् ? न; स्वरवर्णनियमार्थत्वात्। कथं नाम एतया एवम्भूतत्स्वरवर्णयैव न तु व्यत्यस्तस्वरवर्णयेत्यर्थः। तदनेन स्वरवर्णसम्पादनार्थमवधानं कर्तव्यम् इति दर्शयति। तथा चोक्तम्—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ इति" इत्याह।

E. एतन्मन्त्रं पूर्वसूत्रेणैव सह पठति तर्कालङ्कारः।

---

1. चिह्नितांशो नास्ति च। 2. 'तां कन्यां' च।

(A)परिधत्तेत्य[1]नेन मन्त्रेण प्रावृतां कृतोत्तरीयाम्। कथं प्रावृताम्? यज्ञोपवीतिनीम्, उपवीतवदित्यर्थः(B)। [2]कुतः? स्त्रीणामुपवीतस्याभावात्, अभ्युदानयन् गृहादग्नेरभि-

A. मन्त्रस्तु—

ॐ परिधत्त धत्त वाससैनां शतायुषीं कृणुत दीर्घमायुः।
शतञ्च जीव शरदः सुवर्चा वसूनि चाऽऽर्ये विभजासि जीवन्॥

मन्त्रब्राह्मणम् १।१।६।

व्याख्या—हे परिधापयितारः, यूयम् एनां कन्यां परिधत्त परिधापयत तथा वाससा एनां धत्त धारयत, वस्त्रावृतां कुरुत। शतायुषीं चिरकालजीविनीं कृणुत, दीर्घमायुः कुरुत। हे आर्ये, त्वं सुवर्चा तेजस्विनी सती, जीवन् जीवन्ती वसूनि धनानि विभजासि सम्भजस्व।

B. अत्र तर्कालङ्कारः—"यज्ञोपवीतवतीमित्येव कुतो न वर्ण्यते तदभावादित्याह, न खल्वस्ति योषितां यज्ञोपवीतं येनानूद्येत। अनुमीयतामिति चेत्, स्यान्मतम्, अस्मादेवानुवादाद् योषितामपि यज्ञोपवीतमनुमीयताम्, न, अन्यथोपपत्तेः, अन्यथैवोपपन्नोऽयमनुवादो न विधि-मनुमापयितुमलम्, अनन्यथासिद्धः खल्वनुवादो विधिमनुमापयति, सिद्धवदुपदेशाच्चासिद्धिः, सिद्धवत् खल्वेतदुपदिश्यते यज्ञोपवीतिनीमिति। सिद्धं खल्वासां यज्ञोपवीतशब्दमुत्तरीयं न यज्ञोपवीतम्, तस्मादसिद्धिर्योषितां यज्ञोपवीतस्य। तत्र ब्रूमः—यज्ञोपवीतिनीमित्यस्य यज्ञो-पवीतवतीमित्ययमेवार्थः शब्दस्य श्रवणमात्रादवगम्यते, स खल्वयमर्थः श्रुत्याऽवगम्यते इति न युज्यते विना कारणमुत्स्रष्टुम्, यज्ञोपवीतवद् विन्यासविशिष्टे चोत्तरीये यज्ञोपवीतशब्दो गौणः। न चात्र लक्षणाकारणमस्ति, प्रमाणान्तरावगम्या हि सा न खल्वपि प्रमाणान्तराभावे सेद्धुमर्हति, न चात्र प्रमाणान्तरमस्ति। तथा चोक्तम्—

गौणे यद्यपि सामर्थ्यं न प्रमाणान्तरं विना।
आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्॥
तात्पर्यञ्च स्वतो मुख्ये गौणार्थपरता पुनः।
प्रमाणान्तरविज्ञेया तदभावान्न सिध्यति॥ इति।

योषितां यज्ञोपवीताभावादनुवादानुपपत्तिरिति चेत्? न; प्रावृतामित्यनुवादेन प्रावरणस्येव यज्ञो-पवीतिनीमित्यनुवादेन यज्ञोपवीतस्यापि विध्यनुमानोपपत्तेः। अपि च पुराकल्पे किल पुंसामिव योषितामपि यज्ञोपवीतमासीत्। तदाह यमः—

पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनं च वेदानां सावित्रीवचनं तथा॥

1. '-नेन च' च। 2. 'कुतः' नास्ति घ।

मुखीमानयन् जपेत् "सोमोऽददत्(A)" इत्येतन्मन्त्रम्।

---

पिता पितृव्यो भ्राता वा नैनामध्यापयेत् परः।
स्वगृहे चैव कन्याया भैक्षचर्या विधीयते ॥
वर्जयेदजिनं चीरं जटाधारणमेव च ॥ इति।

तथा हारीतः—

"द्विविधाः स्त्रियः, ब्रह्मवादिन्यः सद्योवध्वश्च" इति।

तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्येति। वधूनां तूपस्थिते विवाहे कथञ्चिदुपनयनमात्रं कृत्वा विवाहः कर्तव्य इति माधवाचार्याः। तस्माद् यज्ञोपवीतिनी-मित्यस्य यज्ञोपवीतवतीमिति यथाश्रुतार्थ एवाऽऽदरणीयः" इत्याह। अत्र यद्यपि सूत्रस्यास्य पुराकल्पीयत्वात् पुराकल्पोक्ताचारप्रमाणमेव साधीय इति, तथाऽपि पुराकल्पीयाचाराभावादद्यत्वे किं कर्तव्यमित्यनुपदेशान्न्यूनत्वमेव स्यादिति भाष्यकारो यज्ञोपवीतवत् प्रावृतोत्तरीयामित्याहेति न तन्मते दोषः, रघुनन्दनाद्योऽप्येवम्; इति सुधीभिरवगन्तव्यम्।

अत्र वासःपरिधापनामाह रघुनन्दनः—"एवञ्च परिधापनानुरोधेन वध्वा उत्थितत्वं प्रतीयते, अत एव कटबर्हिषोर्मध्ये प्रापणानन्तरं वरदक्षिणे उपविशतीत्युक्तम्। एतदधरीयवस्त्र-परिधापने, उत्तरत्र प्रावृतामित्यनेनोत्तरीयलाभात्। स्त्रीपरिधाने शुक्लमित्यविवक्षितम्।

धारयेदथ रक्तानि नारी चेत् पतिसंयुता
विधवा च न रक्तानि कुमारी शुक्लवाससी ॥ इति मत्स्यपुराणात्।

परिधानप्रकारमाहतुः शङ्खलिखितौ—

"न नाभिं दर्शयेत् कुलवधूरागुल्फाभ्यां वासः परिदध्याद् न स्तनौ विवृतौ कुर्यात्" इति। वासोविन्यासविशेषस्तु तत्तद्देशाचारादवगन्तव्यः। रत्नाकरोऽप्येवम्। गोभिलः ( परिधत्त सू० १८ ) प्रावृतां यज्ञोपवीतिनीं यज्ञोपवीतवत् कृतोत्तरीयपरिधानात्।

तयोक्तं विद्याकरवाजपेयिधृतवचनेन यथा स्मृतिः—

यथा यज्ञोपवीतञ्च धार्यते च द्विजोत्तमैः।
तथा सन्धार्यते यत्नादुत्तराच्छादनं शुभम् ॥

न तु यज्ञोपवीतिनीमित्यनेन स्त्रीणामपि कर्माङ्गत्वेन यज्ञोपवीतधारणमिति हरिशर्मोक्तं युक्तम्, स्त्रीणां यज्ञोपवीतधारणानुपपत्तेः; सरलाभट्टभाष्ययोरप्येवम्। ततो वधूर्दक्षिणं श्रवणं स्पृशेत्—

क्षुते निष्ठीविते वान्ते परिधानेऽश्रुमोचने।
कर्मस्थ एषु नाऽऽचामेद् दक्षिणं श्रवणं स्पृशेत् ॥ इति स्मृतेः।

अभ्युदानयन् अग्नेरभिमुखीमानयन्" इति ॥

A. मन्त्रस्तु—ॐ सोमोऽददद् गन्धर्वाय गन्धर्वोऽददग्नये।
रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ इति।

सामसन्त्रब्राह्मणम् १।१।७

पश्चादग्नेः संवेष्टितं कटमेवं जातीयं वाऽन्यत् पदा प्रवर्तयन्तीं वाचयेत्—प्र मे पति या नः पन्थाः कल्पतामिति ॥ १९ ॥

पश्चादग्नेर्वेदिपश्चार्द्धे सम्यग्वेष्टितं कटम्, कट[1]स्तु प्रसिद्धस्तृणैर्ग्रथ्यते। अन्यद्वा किञ्चिदेवंजातीयं तृणवेष्टकादि। एतस्मादेव वचनाद्विधिरनुमीयते। कथं [2]नाम? वरवध्वोरुपवेशनार्थम्। [3]वेदिपश्चार्द्धे संवेष्ट्य स्थाच्छादितः कटो देय इति*। तं कटं [4]कटप्रतिनिधिं वा पदा पादेन प्रवर्तयन्तीम् [5]उपवेशनार्थमुद्वेष्टयन्तीम् अग्निसन्निधौ वा सारयन्तीं वधूं वाचयेद् भाणयेत् [6]इत्यर्थः। किं वाचयेत्? (A)प्र मे पति या नः पन्था इति एतं मन्त्रम्(B)।

स्वयं जपेदजपन्त्यां प्रास्या इति ॥ २० ॥

[7]बाल्यात् लज्जया वा तस्यामजपन्त्यां स्वयमेव जपेत्। किमेवंभूतं मन्त्रं जपेत्?

---

अस्य व्याख्या—सूयत इति सोमः तद्देवता इमां कन्यां गन्धर्वाय आदित्याय पाककाय पित्रे अददत् सोऽपि अग्नये अददत्, अग्निसमीपमनुना समर्पयत्, साक्षित्वेन स्थितोऽग्निर्मह्यं परिणेत्रेऽदात् अथो अपि रयिं धनं पुत्रांश्चादात् तत्सहैवेत्याशासे!

A. मन्त्रस्तु—ॐ प्र मे पति या नः पन्थाः कल्पतां
शिवा अरिष्टा पतिलोकं गमेयम् ॥ इति। मन्त्रब्राह्मणम् १।१।१८।

अस्य सायणकृता व्याख्या—"योऽस्माकं प्रति पतिः, मे मदर्थं पन्थाः पन्थानं प्रकल्पतां करोतु, या येन पथा अहं शिवा सुखावहा अहिंसिता, पतिलोकं पतिकुलम्, गमेयं गच्छामि" इति।

B. अत्र विशेषमाह गृह्यासंग्रहः—

यदा निष्कामयेत् कन्यां वरः पाणिं जिघृक्षवन्।
अग्निं प्रदक्षिणं कृत्वा कटस्तीर्णं पदं नयेत् ॥
पदा प्रपद्य पन्थानं पतियानं संजपेद् वधूः।
वरो वाऽत्र जपेन्मन्त्रमाकटान्तादिति स्थितिः ॥ इति २।२७-२८।

---

1. 'तु' नास्ति च। 2. 'नाम' नास्ति च। 3. चिह्नितांशो नास्ति ख। 4. 'कट-' नास्ति ख-ग। 5. 'उपवेशनार्थं' नास्ति ख। 6. 'इत्यर्थः' नास्ति ख-ग. 7. 'बाल्यात्' च।

नः कथं तर्हि ? (A)प्रास्या इति, 'प्रमे' इत्येतस्मिन् पदे 'प्रास्या' इति विशेषः कार्यः(B)। शेषं पूर्ववत्।

## बर्हिषोऽन्तं कटान्तं प्रापयेत् ॥ २१ ॥

[1]उक्तं पदा [2]प्रवर्तयन्तीमिति, तत् कियन्तं प्रवर्तयेत् ? उच्यते—कटस्य पूर्वोऽन्तस्तं किञ्चिद् बर्हिषोऽन्तस्योपरि कुर्यात्(C) [3]इति। एवञ्चैतस्मादेवैतद्दर्शयति यावद् वासः-परिधानादि कृत्वा वधूं संगृह्य वर आगच्छति तावत् पूर्वमेवाऽऽज्यसंस्कारान्तम् अन्येन कारयेदिति। इतरथा बर्हिषोऽन्तमिति नोपपद्यते।

एवं वरगृहीतकरा वेदिपश्चार्द्धसञ्चरेणागत्य(D)

## पूर्वे कटान्ते दक्षिणतः पाणिग्राहस्योपविशति ॥ २२ ॥

[4]ऋज्वर्थमेतत्।

## दक्षिणेन पाणिना दक्षिणमंसमन्वारब्धायाः षडाज्याहुती-र्जुहोत्यग्निरेतु प्रथम इत्येतत्प्रभृतिभिः ॥ २३ ॥

---

A. मन्त्रस्तु—ॐ प्रास्याः पति या नः पन्थाः कल्पतां
शिवा अरिष्टा पतिलोकं गम्याः ॥ इति मन्त्रब्राह्मणम् १।१।९

अस्य सायणकृता व्याख्या—"अस्याः कन्यायाः पतिर्या येन पथा याति तं पन्थानं नोऽस्मभ्यं कल्पताम् उपदिशतु, तेन पथा इयमपि कन्या गमिष्यति" इति।

B. उपलक्षणञ्चैतत् 'गमेयम्' इत्यत्र 'गम्याः' इति पाठस्याप्यूहनीयत्वादिति।

C. बर्हिष इति जात्याश्रयमेकवचनम्। बर्हिषामास्तृतानामन्तं कटस्यान्तं प्रापयेत्। तथा च वध्वा कटस्तथा पदा प्रवर्तयितव्यो यथा तदन्तभाग आस्तृतबर्हिषां किञ्चिदुपरि स्यादिति भावः। रघुनन्दनस्तु—"अन्तशब्दः समीपवचनः, तेन कटबर्हिषोरन्तरालरूपं समीपदेशं वधूं प्रापयेत् पतिः" इत्यर्थमस्य सूत्रस्य कल्पयामास, तदसङ्गतम्; सूत्रोपात्तं कर्मद्वयमुत्सृज्यानुपङ्गेण वध्वाः कर्मान्तरकल्पनाऽनौचित्यात्। नाप्यन्तरालदेशं गतया वध्वा किञ्चित् प्रयोजनमप्यस्ति, येन भाष्यकारव्याख्यानमुल्लङ्घ्य तथा कल्पयितव्यमिति। भवदेवभट्टस्तु कटं बर्हिस्तरणदेशसमीप-पर्यन्तं प्रेरयेदित्याहेत्यपि सुधीभिरवगन्तव्यम्।

D. अत्र भाष्यकारस्तर्कालङ्कारश्च विरूपाक्षजपान्ता कुशण्डिकोक्तासर्वाऽप्यावृदन्येन कारयितव्येत्याहतुः, रघुनन्दनस्तु साधारणी कुशण्डिका केन कर्त्तव्येति स्पष्टं किमपि नोक्तवान् संस्कारतत्त्वे, भवदेवभट्टस्तु वर एव विरूपाक्षजपान्तां कुशण्डिकां समाप्य तत उत्थाय गृहं प्रविश्य वधूं वासोयुगं परिधाप्य कन्यानयन-कटपादप्रवर्त्तनादिकर्म कुर्यादित्युक्तवान् स्वनिबन्धे, तदत्र कः पक्षः साधीयानिति भगवन्तोऽनूचानाः प्रमाणयन्तु।

---

1. 'उक्तं' नास्ति घ। 2. 'प्रावर्तयन्ती" क-ग। 3. 'इति' नास्ति घ। 4. 'ऋज्वेतत्' ग-घ, 'ऋर्वतत्' ख।

[1]दक्षिणेनेति स्त्रीणां वामाचारत्वात् सव्यस्य सामीप्याद् वा सव्येनैवान्वारम्भो मा भूदित्यतो दक्षिणेनेत्युक्तम्। "पाणिना हस्तेन दक्षिणं वरस्यांसं स्कन्धम्[2] अनु आरब्धायाः संलग्नायाः, षडाज्याहुतीर्जुहोति "[3]इति, प्रकृतत्वाद् वरः। (A)"अग्निरेतु

---

A. प्रथममन्त्रस्तु—

ॐ अग्निरेतु प्रथमो देवताभ्यः
सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्।
तदयं राजा वरुणोऽनुमन्यतां
यथेयं स्त्री पौत्रमघं न रोदात् स्वाहा॥ इति।

मन्त्रब्राह्मणम् १।१।१०।

अस्य व्याख्या—"देवताभ्यः देवतानाम्, प्रथमः प्रधानभूतः, अग्निः, एतु आगच्छतु। आगत्य च सोऽग्निः, अस्यै अस्याः कन्यायाः, प्रजां भाविनीं सन्ततिम्, मुञ्चतु मोचयतु, मृत्युपाशात् अकालमरणभयात्, अयं राजा वरुणः, तत् तथाऽनुमन्यतां यथा इयं स्त्री पौत्रमघं पुत्रसम्बन्धि पापमूलकं शोकं प्राप्य न रोदात् न रुद्यात्" इति॥ १॥

द्वितीयमन्त्रस्तु—

ॐ इमामग्निस्त्रायतां गार्हपत्यः
प्रजामस्यै जरदष्टिं कृणोतु।
अशून्योपस्था जीवतामस्तु माता
पौत्रमानन्दमभिविबुध्यतामियं स्वाहा॥ इति।

मन्त्रब्राह्मणम् १।१।११।

अस्य व्याख्या—"गार्हपत्योऽग्निः, इमां कन्यां त्रायतां पालयतु, अस्यै अस्याः, जरदष्टिं जराव्यापिनीम्, प्रजां सन्ततितति कृणोतु करोतु। किञ्च अशून्योपस्था अशून्यामन्देन्द्रिया नित्यं भर्तुः सङ्गता अस्तु, तथा जीवताम् आयुष्मतां माता अस्तु, अस्यां जातान्यपत्यानि अकाले मा म्रियन्तामित्याशास्यते। अत इयं पौत्रं पुत्रसम्बन्धिनम् आनन्दम् अभिविबुध्यतां विशेषेणानुभवतु" इति॥ २॥

तृतीयमन्त्रस्तु—

ॐ द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च।
स्तनन्धयस्ते पुत्रान् सविताभि-
रक्षत्वा वाससः परिधानाद्
बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु पश्चात् स्वाहा॥ इति।

मन्त्रब्राह्मणम् १।१।१२।

---

1. 'दक्षिणेनेति' नास्ति ख। 2. 'वरस्य दक्षिणं स्कन्धम्' ख। 3. 'इति' नास्ति क-ग।

अस्य व्याख्या—"हे कन्ये, ते तव पृष्ठं पश्चाद्भागं द्यौः सूर्यः अभिरक्षतु। वायुः अश्विनौ च तव ऊरू ऊरुदेशौ रक्षतु। किञ्च स्तनन्धयः स्तनपायिनः कुमारान् ते तव पुत्रान् सविता आदित्यः अभिरक्षतु। आ वाससः परिधानाद् वासःपरिधानयोग्याया दशायाः प्राक् तस्माच्च कालात् पश्चात् बृहस्पतिर्विश्वेदेवाश्च अभिरक्षन्तु। इति। केचित्तु आ वाससः परिधानाद् वासः-परिधानं यावत् प्रच्छन्नदेशं बृहस्पतिरभिरक्षतु पश्चात् ततोऽधस्तनस्थानानि पादाग्रादीनि उत्क्रम्य उपरितनस्थानानि ग्रीवादीनि च विश्वेदेवा अभिरक्षन्तु इति व्याचचक्षिरे" ॥ ३ ॥

चतुर्थमन्त्रस्तु—

ॐ मा ते गृहेषु निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु।
मा त्वं रुदत्युर आ वधिष्ठा जीवपत्नी पतिलोके विराज
पश्यन्ती प्रजां सुमनस्यमानां स्वाहा॥ इति।

मन्त्रब्राह्मणम् १।१।१३।

अस्य व्याख्या—"हे कन्यके, गृहेषु निशि रात्रौ ते तव, घोषः अतिशब्दः, मा उत्थाद् न उत्तिष्ठेत्, किञ्च त्वत् अन्यत्र त्वां त्यक्त्वा शत्रुगृहादौ रुदत्यः स्त्रियः संविशन्तु स्वपन्तु। रुदती सती त्वं उरो हृदयं मा आ वधिष्ठाः कदाचिदपि उरोघातं कुर्वती मा रोदीः। तथा जीवपत्नी जीवत्पतिका सती सुमनस्यमानां हृष्टचित्तां प्रजां सन्ततिततिं पश्यन्ती वीक्षमाणा पतिलोके पतिगृहे विराज शोभस्व" ॥ ४ ॥

पञ्चममन्त्रस्तु—

ॐ अप्रजस्यं पौत्रमर्त्यं पाप्मानमुत वा अघम्।
शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा॥ इति।

मन्त्रब्राह्मणम् १।१।१४।

अस्य व्याख्या—"हे वधु, अप्रजस्यं वन्ध्यात्वं, पौत्रमर्त्यं पुत्रसम्बन्धि मरणम्, पाशं बन्धनम्, पाप्मानं त्वदीयमपि मरणम् उत वै अथवा अन्यदपि अघं त्वदीयमनिष्टम्, एतत् सर्वं त्वत्तोऽपकृष्य शीर्ष्णः मूर्ध्नः स्रजं मालामिव उन्मुच्य अवतार्य, द्विषद्भ्यः द्वेष्टॄणां प्रति मुञ्चामि क्षिपामि" इति ॥ ५ ॥

षष्ठमन्त्रस्तु—

ॐ परैतु मृत्युरमृतं म आगाद् वैवस्वतो नो अभयं कृणोतु।
परं मृत्यो अनु परेहि पन्थां यत्र नो अन्य इतरो देवयानात्।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् स्वाहा॥ इति

मन्त्रब्राह्मणम् १।१।१५। विनियोगश्चैषां खादिरगृह्येऽपि १।३।११।

प्रथम" इत्येतत्प्रभृतिभिर्मन्त्रैः । पञ्चात्र द्व्यवसाना मन्त्राः(A) । षष्ठश्च त्र्यवसानः ।

## महाव्याहृतिभिश्च पृथक् ॥ २४ ॥

[1]'आज्याहुतीर्जुहोतीति वर्त्तते'* । [2]"पृथग् नाना इत्यर्थः । भूराद्यास्तिस्रो महाव्याहृतयः, ताभिश्चेति [3]"परिभाषासिद्धत्वात् । कस्मात् पुनर्वचनम् ? उच्यते—लाजाज्यस्य हविरन्तरस्येह दृष्टत्वाद् व्याहृतिहोमस्य संप्रापणार्थम् ।

किञ्च—"*

## समस्ताभिश्चतुर्थीम् ॥ २५ ॥

समस्ताभिरखिलाभिश्चतुर्थीमाज्याहुतिं जुहोतीति वर्तते । एवं [4]'चाग्निरेतु प्रथम इति षण्णामाहुतीनाम् उपरिष्टा[5]"देव ता महाव्याहृतयश्चतस्रो भवन्तीति(B) ।

इति [6]"भट्टनारायणकृते"* [7]'गोभिलीयगृह्यसूत्रभाष्ये'* द्वितीयप्रपाठकस्य प्रथमा कण्डिका ॥

---

अस्य व्याख्या—"कन्यका आशास्ते, मत्तो मृत्युः परैतु पराङ्मुखो गच्छतु, मे मम अमृतम् अमरणम् आगाद् आगच्छतु नाकालेऽहं म्रिये इति । वैवस्वतो यमः, नः अस्माकम् अभयं कृणोतु करोतु । हे मृत्यो, यत्र यः पन्थाः नोऽस्माकं गन्तव्यादन्यः भिन्नः किञ्च देवयानाद् देवमार्गादपि इतरो भिन्नः, तं परं भिन्नं पितृलोकीयं पन्थां पन्थानम्, अनु संलक्ष्य परेहि पराङ्मुखो गच्छ । चक्षुष्मते पश्यतः, शृण्वते शृण्वतः, प्रत्यक्षस्येव ते तव एतदहं ब्रवीमि प्रार्थये, नः अस्माकं प्रजाम् उत अपि विशेषतः वीरान् पुरुषान् मा रीरिषः मा हिंसीः" इति ॥ ६ ॥

A. अत्र षण्णां मन्त्राणामाद्याः पञ्च प्रत्येकं स्थानद्वये विरामयुक्ताः । षष्ठमन्त्रस्य तु स्थानत्रये विरामो दातव्यः पाठकाले इति भावः ।

B. होमस्य खल्वस्याऽऽज्यहविष्कतया आज्यतन्त्रविहितो महाव्याहृतिहोमः पुरस्तादपि भवति, आज्यभागौ स्विष्टकृच्च न भवन्तीत्यवगन्तव्यम् ।

---

1. भाष्यांश: ताभिश्चेत्यनन्तरं वर्त्तते च । 2. 'पृथगि'त्यादि···'किञ्चे'त्यन्तपाठो नास्ति ख ग । 3. 'परिभाषासिद्धत्वात्' नास्ति क । 4. 'चावाग्नि-' च । 5. '-देवैता' ख । 6. चिह्नितांशो नास्ति ख । 7. चिह्नितांशो नास्ति ग ।

# द्वितीयप्रपाठकस्य द्वितीया कण्डिका

## हुत्वोपोत्तिष्ठतः ॥ १ ॥

हुत्वा अनन्तरमेव [1]उत्तिष्ठतः, न तु [2]तन्त्रसमापनादि कृत्वेति। उपेति संहत-[3]हस्ताविति(A)।

## [4]अनुपृष्ठं पतिः परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते वध्वञ्जलिं गृहीत्वा ॥ २ ॥

"अनुपृष्ठम् अनुपश्चिमेन वध्वाः पतिः परिक्रम्य गत्वा [6]दक्षिणत उदङ्मुखोऽवतिष्ठते इत्युक्तार्थम्। किं कृत्वाऽवतिष्ठते"* ? वध्वा अञ्जलिं गृहीत्वा स्वेनाञ्जलिना।

## पूर्वा माता लाजानादाय भ्राता वा वधूमाक्रामयेदश्मानं दक्षिणेन प्रपदेन ॥ ३ ॥

पूर्वा बह्वीनां मातॄणां या प्रथमेति केचिद् वर्णयन्ति, तदयुक्तम्; [7]कुतः? एकमातृकायाः पूर्वशब्दस्याऽऽनर्थक्यात्(B)। [8]कथं तर्हि? उच्यते[8]*—पूर्वा पूर्वस्यां दिशि अवस्थितेत्यर्थः

---

A. दम्पती इति शेषः। नन्वत्रैककर्तृकत्वाभावात् कथं हुत्वेति क्त्वाप्रत्ययः पाणिग्राहो हि जुहोतीति? उच्यते—पूर्वापरीभावमात्रमत्र क्त्वाप्रत्ययार्थः न त्वेककर्तृकत्वमपि तत्राप्येष दृश्यते "आज्याहुतिं हुत्वा मुख्यं धनं दद्यात्" इत्येवमादौ बहुलम्, अत्र खल्वन्यो जुहोति अन्यश्च ददाति। अध्वर्युर्हि जुहोति, यजमानश्च ददातीति। "अंशस्पर्शनात् कन्याया होमानुकूल-चेष्टावत्त्वात् समानकर्तृकेण क्त्वा" इति च समाधीयते रघुनन्दनेन संस्कारतत्त्वे।

B. अत्र तर्कालङ्कारः—"असुकरत्वापत्तेः, अनन्यां हि मातृशब्दं स्मरन्ति, सा खल्वेकैव मातृशब्दस्य पितृपत्नीपरत्वे च कल्पनाप्रसङ्गः, स व्याख्यातव्यः। यः पुनरेवं समाधत्ते एकमातृकायां पूर्वपदस्यानर्थक्यप्रसङ्गादिति सोऽप्यनेनैव निरस्तः" इत्याह।

---

1. 'उपतिष्ठत:' क। 2. 'तन्त्र-' ख, 'तन्त्र' ग। 3. '-हस्ताभिरिति' क-ग। 4. 'अनुपृष्ठं' नास्ति ख। 5. चिह्नितांशो नास्ति ग। 6. 'दक्षिणतः' नास्ति ख। 7. 'कुतः' नास्ति ख। 8. चिह्नितांशो नास्ति ख।

माता जननी, प्रकृतत्वाद् वध्वाः, भ्राता वा पूर्वदिगवस्थित एव [1]'वधूं दक्षिणेन प्रपदेनाश्मानमाक्रामयेत्। किं कृत्वा ?'[1]* लाजानादाय [2]सव्येन लाजाशूर्पं गृहीत्वा [3]दक्षिणेन [4]च वधूमाक्रामयेदिति"*(A)। तथा चाश्मन्याक्रम्यमाणे—

## पाणिग्राहो जपति (B)इममश्मानमारोहेति ॥ ४ ॥

ऋज्वेतत्।

किञ्च—

## सकृत् संगृहीतं लाजानामञ्जलिं भ्राता वध्वञ्जलावावपति ॥ ५ ॥

[5]सकृत् सम्यग् गृहीतं [6]कृत्वा अविकिरन्नित्यर्थः[6]* [7]'लाजानामञ्जलिं'* भ्राता माता वा, पूर्वत्र विकल्पात्। वराञ्जलि[8]स्थितवध्वञ्जलौ आवपति(C)। पूर्वमाज्येनोपस्तीर्य अथ आवपेदुपरिष्टादभिघारयेच्च। कुतः ? उत्तरसूत्रात्।

---

A. यद्यप्यत्र सूत्रकारमतमवलम्ब्यैव भाष्यकार-भवदेव-रघुनन्दनादयः—"माता भ्राता वा (अन्यो वा ब्राह्मणः) वधूं दक्षिणेन पादाग्रेणाश्मानमाक्रामयेत्, मन्त्रञ्च वरो जपेदि"त्युक्तवन्तः, तथाऽप्यद्यत्वे व्यवहारस्तु वर एव मन्त्रं जपन् वधूमश्मानमाक्रामयेदिति। स चायं निबन्धविरोधी व्यवहारः कथं सर्वेष्वेव देशेष्वादृत इति भगवन्तोऽनूचानाः प्रमाणयन्तु।

B. मन्त्रस्तु—

ॐ इममश्मानमारोहाश्मेव त्वं स्थिरा भव।
द्विषन्तमपबाधस्व मा च त्वं द्विषतामधः॥ इति।

मन्त्रब्राह्मणम् १।२।१।

अस्य व्याख्या—"हे वधु, इमं प्रत्यक्षम्, अश्मानं शिलाखण्डम्, आरोह आक्राम, किञ्च त्वं अश्मा इव पाषाणवत् स्थिरा भव दृढा स्याः, किञ्च द्विषन्तममित्रम्, अपबाधस्व पीडय च त्वं द्विषतामधोभावे मैव भूः"। इति।

C. मातृभ्रात्रोरभावे चान्योऽपि ब्राह्मणः। कर्मणः प्रधानत्वात्। लाजहोमः खल्वत्र प्रधानम्, तत्राऽऽवापो गुणभावेनोपकरोति, तमपि माता भ्राता वा। न खलु गुणस्य गुणानुरोधेन प्रधानमेव न कर्तव्यमिति युक्तमिति। अत्र तर्कालङ्कारः—"भ्राता इत्यत्र माता भ्राता वेत्येवं वि केचित् पठन्ति तदा व्यक्त एवार्थः" इत्याह।

---

1. चिह्नितांशो नास्ति घ। 2. 'सव्ये' क-ग। 3. 'वधूं दक्षिणेन प्रपदेनाश्मानमाक्रामयेत्' घ। 4. 'च' नास्ति क। 5. 'सकृत्' नास्ति घ। 6 चिह्नितांशो नास्ति ख। 7. चिह्नितांशो नास्ति घ। 8. '-स्थे व-' ख।

**तं सोपस्तीर्णाभिघारितमग्नौ जुहोत्यविच्छिन्दत्यञ्जलिम्— इयं नार्युपब्रूते इति ॥ ६ ॥**

तं लाजाञ्जलिमुपस्तीर्णाभिघारितं(A) सा वधूः अग्नौ [1]समिद्धे जुहोति। कथम् ?

---

A. उपस्तीर्णाभिघारितमिति अञ्जलौ लाजावापस्य पुरस्तादुपरिष्टाच्च घृतस्रुवेणाप्लावनं कर्तव्यमित्यर्थः। तत्र लाजानां सकृन्मात्रावापस्य सूत्रितत्वात् त्रीण्याप्लावनान्यपेक्षितानि चतुरवत्तिनाम्, पञ्चावत्तिनान्तु चत्वारि। चतुरवत्तिनां तावत् पुरस्तादेकमाप्लावनं परस्ताद् द्वे आप्लावने, इतरेषान्तु पुरस्तादप्याप्लावनद्वयं परस्तादपि। स्विष्टकृदवदाने तथा दर्शनादिति। नन्वत्र को वा उपस्तृणुयादभिघारयेच्चेति चेदुच्यते, माता भ्राता वा उपस्तृणुयादभिघारयेच्च, यतो लाजावापे तयोरेव कर्तृत्वमत उपस्तरणाभिघारणयोरपि तयोरेव कर्तृत्वं सुव्यक्तमेव, भिन्नकर्तृकल्पने गौरवापत्तेः। न च वरस्तर्हि करोतु ? नेत्युच्यते। कुतः ? अशक्यत्वात्। अशक्यं हि वरस्योपस्तरणमभिघारणञ्च, वध्वञ्जलिपरित्यागापत्तेः। अपि च लाजानावपत उपस्तरणमप्यर्थादाक्षिप्यते, तद्विना तस्य कर्तुमशक्यत्वात्। एवञ्च भवदेवरघुनन्दनाभ्यां यदुक्तं 'वर एवोपस्तृणोत्यभिघारयति च', तदसङ्गतम्, गोभिलसूत्र( २।२।८ )भाष्यधृत"हुत्वाज्ये"त्यादिवचनविरोधात्, प्रमाणाभावाच्च।

अत्र च शमीपलाशमिश्राणां लाजानां पूर्वमासादितानामभिघारणार्हता, न केवलानामित्याह गृह्यासंग्रहः—

सोमः प्रकृतिरेषा हि लाजानाश्रित्य तिष्ठति।
विकृतमाज्यं सोमेन नाभिघारणमर्हति॥
शमीपलाशमिश्राणां लाजानामभिघारणम्।
पूर्वाणां घृतमिश्राणामाचार्यैः कल्पितं तथा॥ इति, २।३२—३३।

होमप्रकारश्च तत्रैव—

तथा लाजाञ्जलिर्वध्वा हूयतेऽङ्गुलिपर्वभिः।
एवं लाजहविःशेषं होतव्यं सूर्पजिह्वया॥ इति, गृ० स० २।३४।

कस्मात् पुनः कारणाद्व वरो मन्त्रं पठति न माता भ्राता वेति ? उच्यते—वरस्तु पठति तस्य पत्नी शरीरार्धत्वस्मरणात् "अर्धो ह वा एष आत्मनो यज्जाया" इति च वाजसनेये ब्राह्मणे। शरीरार्धेन चेत् क्रियते, तर्हि स्वयमेव क्रियते इति शक्यं वक्तुम्। पत्नीपाठ्यमन्त्राणामप्यस्य पाठः समाम्नायते। इति।

---

1. 'समिद्धे' क।

[1]अविच्छिन्दती विच्छेदमकुर्वती, कि[2]मविच्छिन्दती ? [3]वध्वञ्जलिम् । (A)इयं नार्युपब्रूते इत्यनेन मन्त्रेण वरेणोच्यमानेन । तस्या एवं मन्त्र इति चेत् ? न ; 'मन्त्रलिङ्ग-[4] [5]विप्रतिषेधादियं नारीति ।

## अर्यमणं नु देवं पूषणमित्युत्तरयोः ॥ ७ ॥

उत्तरयो[6]र्लाजहोमयोर्यथाक्रमेण (B)अर्यमणं नु देवं (C)पूषणमित्येतौ मन्त्रौ [7]विनियोक्तव्यौ । प्रसङ्गाल्लाघवा[8]थेव तस्मिन्* क्रम उक्तः ।

---

A. मन्त्रस्तु—

ॐ इयं नार्युपब्रूते अग्नौ लाजानावपन्ती ।

दीर्घायुरस्तु मे पतिः शतं वर्षाणि जीवत्वेधन्तां ज्ञातयो मम स्वाहा ॥ इति ।

मन्त्रब्राह्मणम् १।२।२ । विनियोगस्त्वस्य खादिरगृह्येऽपि १।३।२४ ।

मन्त्रव्याख्या—इयं नारी नववधूः लाजान् भ्रष्टव्रीहीन् अग्नौ आवपन्ती प्रक्षिपन्ती सती उपब्रूते वक्ति अग्निमुपेत्य प्रार्थयते—दीर्घायुरस्तु मे पतिः, तथा च शतं वर्षाणि जीवतु इति । किञ्च मम ज्ञातयः स्वजना धनपुत्रधान्यादिभिरेधन्तां परिवर्धन्ताम् । इति ।

B. मन्त्रस्तु—

ॐ अर्यमणं नु देवं कन्या अग्निमयक्षत ।

स इमां देवो अर्यमा प्रेतो मुञ्चातु माऽमुतः स्वाहा ॥ इति ।

इति मन्त्रब्राह्मणम् १।२।३ । विनियोगस्तु खादिरगृह्यसूत्रे १।३।२३ आपस्तम्बगृह्यसूत्रे १।७।१३ मानवगृह्यसूत्रे १।११।१२। च ।

व्याख्या चास्य—कन्याः पूर्वम् अर्यमणं नु देवमग्निं च, अयक्षत इष्टवत्यः । स इतः सन्नर्यमा देव इमां परिणीयमानाम् इतः पितृकुलात् प्रमुञ्चातु माऽमुतः पतिकुलात् । इति ।

C. मन्त्रस्तु—

ॐ पूषणं नु देवं कन्या अग्निमयक्षत ।

स इमां देवः पूषा प्रेतो मुञ्चातु माऽमुतः स्वाहा ॥ इति ।

मन्त्रब्राह्मणम् १।२।४। विनियोगस्तु खादिरगृह्यसूत्रे १।३।२३ आपस्तम्बगृह्यसूत्रे १।७।१३ मानवगृह्यसूत्रे १।११।१३। च ।

व्याख्यायामस्य सर्वं पूर्वेण समम्, पूषा देवताऽस्येति विशेषः ।

---

1. 'वराञ्जलिमविच्छिन्दती' घ । 2. 'चविच्छिन्दती' नास्ति क-ख । 3. 'वध्वञ्जलिम्' नास्ति च, 'वराञ्जलिम्' क-ख । 4. 'मन्त्रलिङ्ग-' क । 5. '-वि-' नास्ति क-ख । 6. '-र्लाजा-' ख । 7. 'वि-' नास्ति क-ख । 8. '-थाच्चिन्' घ ।

**हुते पतिर्यथेतं परिव्रज्य दक्षिणमग्निं परिणयति मन्त्रवान् वा ब्राह्मणः (A)कन्यला पितृभ्य इति ॥ ८ ॥**

हुते लाजाञ्जलौ पतिः [1]परिव्रज्य पुनरागत्य, [2]कथम्? [3]यथेतं यथा इतं गतं गमनं कृतं तथा वध्वाः पश्चिमेनेति। प्रदक्षिणमग्निं [4]वधूं [5]परिणयति। परि इति सर्वतोभावं सर्वतो नयेत्"*। अग्नेः प्रादक्षिण्येन भ्राम[6]यतीत्यर्थः। (B)मन्त्रवान्

A. अत्र तर्कालङ्कारः—"परिव्रज्येत्यत्र प्रतिक्रम्य परिक्रम्येति च पाठान्तरम्" इति, 'मन्त्रवान् वा' इत्यत्र "अस्मदवलोकितेषु सर्वेषु सूत्रग्रन्थेषु इत्थमेव पाठः, तत्त्वकारस्तु स्वमतरक्षणापेक्षी 'वा'शब्दं न पपाठ" इति चाह स्वभाष्ये। सामश्रमी तु सूत्रे 'वा'शब्दमपठित्वा—"मन्त्रवत्त्वेनैव ब्राह्मणत्वं पतियोग्यत्वञ्चेत्येव द्योतयितुमिह पत्युरेव विशेषणद्वयम्। क्वचिदिह 'वा'पदमपि, परं मदधीतादिपुस्तकेषु सर्वत्रैवात्र 'वा'शब्दस्यादर्शनात् परिणयकाले कथमपि पत्यनुपस्थितेरसम्भवात् प्रतिनिधेरत्यन्तानावश्यकत्वाच्चासङ्गत एव तादृशः पाठ इत्यनिच्छयाऽपि त्यक्तमिह, सुहृदो मतमादृतञ्च तत्त्वकारस्येति" इत्याह स्वप्रणीतगोभिलगृह्यसूत्रपादटीकायाम्।

B. अत्र रघुनन्दनः—"हुते लाजाञ्जलौ मन्त्रवान् ब्राह्मणः पतिर्यथा पूर्वमितं गतं तथैव परिक्रम्य वध्वाः पश्चिमेन प्रत्यावृत्य प्रदक्षिणं यथा स्यात् तथा यातीति। 'कन्यला पितृभ्य' इति मन्त्रं पठन् वधूमग्निं परिणयति, परि सर्वतोभावेन नयेत् प्रदक्षिणं कारयेदित्यर्थः। यत्तु सरलायां पत्युरशक्तावधीतवेदोऽन्यो वा परिणयतीत्युक्तं तन्मन्त्रलिङ्गविरोधाद् व्यवहारापरिगृहीतत्वाच्च हेयम्। अत्राग्निप्रदक्षिणे लाजादीनां प्रदक्षिणमाह भट्टभाष्यधृता स्मृतिः—

लाजामाज्यं स्रुवं कुम्भं प्राजनाभ्मानमेव च।
प्रदक्षिणानि कुर्वीतां दम्पती न विनाऽग्निकम्॥" इत्याह संस्कारतत्त्वे।

स्मृतिरियं तु नोपलब्धाऽस्मत्संगृहीतेषु भट्टभाष्यपुस्तकेषु। वचनमिदं तु चतुर्थचरणस्य "दम्पती तु विना ग्रही" इति पाठभेदेनोपलभ्यते गृह्यासंग्रहे (२।२९) इति।

तर्कालङ्कारस्तु—"कस्याञ्चिदाऽऽपदि पत्युरसामर्थ्ये अन्यो वा मन्त्रवानधीतवेदो ब्राह्मणः परिणयति। मन्त्रवान् वा ब्राह्मण इत्येकस्माद् 'वा'शब्दादवगम्यते जघन्योऽयं पक्ष इति। अस्मिन्नपि कल्पे पतिरेव मन्त्रं पठति, कस्मात्? 'त्वया वयं द्विषोऽतिगाहेमहि' इति मन्त्रलिङ्गात्। तस्मान्मन्त्रलिङ्गविरोधादन्यो न परिणयतीति रघुनन्दनमतमसङ्गतम्, अर्थवत्तोपपत्तेश्च। मन्त्रवान् वा ब्राह्मण इति वचनस्यार्थवत्त्वमेवं सत्युपपद्यते, अन्यथाऽनर्थकं स्यात्। यच्च मन्त्रवान् ब्राह्मणः पतिरिति वर्णितं तदप्यनर्थकमेव, न खल्वस्य विशेषणस्य कमप्यर्थमुपलभामहे। सोऽयमनर्थिकां योजनामकुर्वाणोऽर्थवतीञ्च प्रत्याचक्षाणः प्रेक्षावतामनपेक्षणीयवचनो भवति। यदपि व्यवहारा-

1. 'प्रतिव्रज्य' क, 'परिव्रज्य पुनरागत्य' नास्ति घ। 2. 'कथं' नास्ति ग। 3. 'यथेनं' क-ग। 4. 'वधूं' नास्ति क-घ। 5. 'परिणयति परि सर्वतो नयति' घ। 6. '-यती' ख-ग।

गुणवान् ब्राह्मणो वधूं परिणयति (A)'कन्यला पितृभ्य' इत्यनेन मन्त्रेण। अञ्जलिमवि-मुञ्चन् परिणयति, कुतः ?

परिगृहीतत्वादन्यो न परिणयतीत्युक्तम्, तदप्ययुक्तम्, आपत्कल्पत्वादेव तस्य कादाचित्कत्वाव-गमात्। अनाचाररूपस्य च व्यवहारापरिगृहीतत्वस्याप्रवर्तकत्वमेव परं न प्रवृत्तिनिरोधकत्वम्, अनाचारस्य श्रुतिकल्पनानिमित्तत्वानुपपत्तेः। आचारस्यापि शास्त्रमपेक्ष्य दुर्बलत्वं वक्ष्यामः" इत्याह स्वभाष्ये।

अत्र यद्यप्यस्मत्संगृहीतपुस्तकेषु सूत्रे 'वा'पदं वर्तते तथाऽपि भाष्यकारेण तस्य काऽपि व्याख्या न कृता न वा परिणयने मन्त्रवतोऽन्यस्य ब्राह्मणस्य प्रतिनिधित्वं तेन समर्थितमिति सार्थक'वा'पदघटितपाठस्तेनाप्युपेक्षित इति प्रतीयते, तदयं वर्तमानेऽपि लाजहोमादौ कर्तरि पत्यौ समर्थे मन्त्रवताऽन्येन कन्यापरिणयने तर्कालङ्कारस्य दुराग्रहः कथं जात इति न विद्मः, यदि नामैकस्मिन्नेव काले लाजहोमे समर्थः स्यात् पतिः स किं तत्क्षणमेव परिणयनेऽसमर्थो भवेत्? पुनश्च लाजहोमे समर्थो भवेत् पुनः परिणयनेऽसमर्थो भवेदिति किमैन्द्रजालिकोऽयं व्यापारः? एवम्भूता कल्पना तु सर्वथैवानुचितेति भवदेवगुणनन्दनादीनां मतमेव ज्यायः, सामश्रमस्याप्येवमेवाऽऽहेति सुधीभिरवगन्तव्यम्।

अत्र परिणयनविषये विशेषमाह गृह्यासंग्रहे कात्यायनः—

प्राजमाहमुदग्राहं ब्रह्माणमृत्विजं तथा।
एतानि बाह्यतः कृत्वा शेषाणान्तु प्रदक्षिणम्॥
दक्षिणां दिशमास्थाय यमो मृत्युश्च तिष्ठतः।
तयोस्तु रक्षणार्थाय तस्माद् ब्रह्मा बहिर्भवेत्॥ इति। २।३०-३१।

अत्रायं होमात् परतः परिणयः, सोऽयं ब्राह्मादिषु विवाहेषु द्रष्टव्यः। गान्धर्वादिषु पुन-र्विवाहेषु प्रथममेव परिणयस्ततो होमः करणीय इति। तदप्याह गृह्यासंग्रहे—

ब्राह्मस्यार्षस्य दैवस्य प्राजापत्यस्य याज्ञिकः।
पूर्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः॥
गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये।
तेषां परिणयः पूर्वं पश्चाद्धोमो विधीयते॥ इति। २।३६-३७।

स खल्वयमाचार्यो ब्राह्मादीन् प्रशस्तानेव विवाहानभिप्रेत्य होमात् परतः परिणयनं सूत्रया-ञ्चकारेत्यवगम्यते। ब्राह्मादीनां प्राशस्त्यञ्च—

'चतुरो ब्राह्मणस्याऽऽद्यान् प्रशस्तान् कवयो विदुः॥'

इत्यादिस्मृतिप्रमाणबलादवसेयमिति।

A. मन्त्रस्तु—

ॐ कन्यला पितृभ्यः पतिलोकं यतीयमपदीक्षामयष्ट।

कन्या उत त्वया वयं धारा उदन्या इवातिगाहेमहि द्विषः॥ इति॥

मन्त्रब्राह्मणम् १।२।६। विनियोगस्तु खादिरगृह्यसूत्रेऽपि १।३।२४।

हुत्वाज्यमथ जायाया अन्वारब्धाञ्जलिं पतिः ।
न विमुञ्चेदनापत्सु यावत् पाणिग्रहो जपः(A) ॥

इति [1]गृह्यान्तरवचनात् ।

**परिणीता तथैवावतिष्ठते तथाक्रामति तथा जपति तथा-वपति तथा जुहोति (B)एवं त्रिः ॥ ९ ॥**

परिणीता वधूः, तथैव भूता अनुपृष्ठगमनेन दक्षिणत उदङ्मुखावस्थितेन भर्त्रा गृहीताञ्जलिका प्राङ्मुखी अवतिष्ठते, [2]तथैव यथापूर्वं [3]तेनैव प्रकारेणाऽऽक्रामति अश्मानं दक्षिणेन प्रपदेन । तथा जपति पाणिग्राहः 'इममश्मानमि'ति । [4]'तथा आवपति वध्वञ्जलौ सकृत् संगृहीतं लाजानामञ्जलिम् । तथा जुहोति उपस्तीर्णाभिघारितमवि-च्छिन्दत्यञ्जलिम्'* । एवमनेन प्रकारेण [5]त्रिःकृत्वः । प्रथमेन सह त्रित्वम्, उत्तरत्र द्वयोरेव मन्त्रयोरुपदेशात्, अन्येषां त्रयाणामनुपपद्यमानत्वाच्च । कन्यला पितृभ्य इत्यस्य त्रिरावृत्तिः स्यात्(C) । चतुर्थ्यां वेलायाम् अनु पृष्ठं गत्वा ।

**शूर्पेण शेषमग्नावोप्य प्रागुदीचीमभ्युत्क्रामयन्ति एकमिषे इति ॥ १० ॥**

लाजाशेषं शूर्पेणैवाग्नावोप्य प्रक्षिप्य तूष्णीं(D) तथैवानुव्रजय प्रागुदीचीम् अपराजितां

---

*अस्य व्याख्या—इयं कन्यला कन्या, पितृभ्यः पितृकुलेभ्यः, पतिलोकं पतिकुलम्, यती गच्छन्ती, अपदीक्षां दीक्षां वर्जयित्वा, अयष्ट इष्टवती, ( दीक्षाशब्देन वैवाहिकं व्रतमुच्यते 'त्रिरात्रमक्षारलवणाशिनौ' [गो० सू० २।३।१५] इत्यादि ) तद्वर्जनं कृतवतीत्यर्थः । किञ्च कन्या हे कन्ये, उत अपि च त्वया सहिता वयं द्विषः शत्रून् अतिगाहेमहि अतिक्रमेमहि, धारा उदन्या इव, यथा जलधाराः कर्त्र्यः उदन्याः पिपासाः कर्मभूता अतिगाहन्ते । इति । ( सामश्रमी तु—"अपदीक्षां, सावित्रीदीक्षां विनैव अयष्ट आर्चीद् अग्निमिति" व्याचख्यौ ) ।

A. प्रमाणीकृतं गृह्यान्तरवचनमिदं रघुनन्दनेन संस्कारतत्त्वे "तथा च गृह्यान्तरम्" इत्युपोद्घातेन ।

B. "एवं त्रिः" इति पृथगेकं सूत्रमिति तर्कालङ्कारसामश्रमिणौ स्वीकुरुतः ।

C. 'इममश्मानमि'त्यस्यापीति बोध्यम् ।

D. अत्र तर्कालङ्कारः—"कथमिदं होतव्यम् ? तूष्णीमिति महानारायणोपाध्यायाः,

---

1. 'गृह्यान्तरवचनात्' नास्ति क-च । 2. 'तथैव' नास्ति च । 3. 'तथा तेनैव' च । 4. चिह्नितांशो नास्ति क-च । 5. 'त्रिःत्रिः' च ।

दिशम् 'आभिमुख्येन वराभिमुखीं गृहीताञ्जलिकामुत्क्रामयन्ति दक्षिणपादाङ्गुष्ठम् "उत्क्राम्योत्क्राम्याऽऽक्रामयन्ति। बहुवचनादनियतो य एव कश्चित्। (A)'एकमिष' इति पृथक् पृथक् सप्तभिर्मन्त्रैः "सप्तपदानि च।

कस्मात्? मन्त्रदेवतयोरनुपदेशात्। तस्मादत्र स्विष्टकृन्निवर्तते। इत्थमेव शेषस्योपक्षयात्। तथा गृह्यान्तरम्—'सूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम्' इति। 'चतुर्थवचनादत्र स्विष्टकृन्न स्यात्' इति गार्ग्यनारायणः। 'तूष्णींवचनं' प्रजापतिज्ञापनार्थमित्यपि स एव। युक्तञ्चैतत्। कुतः?

'मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः'

इति कर्मप्रदीपस्मरणात्। 'त्रिः परिणीता प्राजापत्यं जुहोती'ति च गृह्यान्तरम्। तस्माद् वधूः शेषं जुहोति वरश्च प्रजापतिं ध्यायतीति सिद्धम्। स्मरन्ति च—

सूर्पाग्रेणैव होतव्यं तूष्णीं निरवशेषतः।
तस्यां तूष्णीन्तु जुह्वत्यां वरो ध्यायेत् प्रजापतिम्॥ इति।
प्रजापतिं चतुर्थ्यन्तं स्वाहायुक्तं वरः स्मरेत्। इति चैवमादि।

तस्मात् 'अग्नये स्विष्टकृते स्वाहेति लाजशेषं जुहुयात्' इति भवदेवरघुनन्दनादिमतमसङ्गतम्, प्रमाणविशेषाभावाच्च। एतदनन्तरं वामदेव्यगानम् इति सरलाकल्पनायामपि प्रमाणं न पश्यामः।" इत्याह स्वभाष्ये।

A. सप्तपदीगमनमन्त्रास्तु—

एकमिषे विष्णुस्त्वा नयतु।
द्वे ऊर्जे विष्णुस्त्वा नयतु।
त्रीणि व्रताय विष्णुस्त्वा नयतु।
चत्वारि मायो भवाय विष्णुस्त्वा नयतु।
पञ्च पशुभ्यो विष्णुस्त्वा नयतु।
षड्रायस्पोषाय विष्णुस्त्वा नयतु।
सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वा नयतु।

इति मन्त्रब्राह्मणम् १।२।६-१२।

एतेषां व्याख्या—हे वधु, विष्णुस्त्वा त्वाम् एकं पदम् इषे अन्नाद्यये आनयतु कामयतु। द्वे ऊर्जे बलकामाय। त्रीणि व्रताय यज्ञकर्मणे। चत्वारि मायोभवाय सुखप्राप्तये। पञ्च पशुभ्यः पशुप्राप्तये। षट् रायस्पोषाय धनप्राप्तये। विष्णुः सप्त पदानि त्वां सप्तभ्यो होत्राभ्यो विविधभूतेभ्यः सप्तहोत्रा साध्यसोमयागसम्पत्तये नयतु। इति सप्तार्थमानि सम्यक्तानि। अत्र गुणविष्णुमते 'आनयतु' इति व्याख्या सायणाचार्यमते च 'नयत्वि'ति, अतः पदच्छेदः 'त्वा' इत्यस्यात्मार्थे रक्षितः। त्वाम् इति 'जार्मान्'मुद्रितपुस्तकधृतपाठान्तरम्।

1. 'अभिमुखीं' क। 2. 'उत्क्राम्योत्क्राम' क-ख। 3. 'सप्त' ख।

सा चाऽऽक्रममाणा—

**दक्षिणेन प्रक्रम्य सव्येनानुक्रामेत् ॥ ११ ॥**

दक्षिणेन पादेन प्रक्रम्य सव्येन [1]तस्यैव, दक्षिणस्य पादस्यानु पश्चात् क्रामेत्, सव्यं पादम् [2]अग्रतो न कुर्यादित्यर्थः ।

तां च क्रममाणां पतिः—

**मा सव्येन दक्षिणमतिक्रामेति ब्रूयात् ॥ १२ ॥**

ऋज्वेतत् । एवं (A)सप्तपदाक्रमणे कृते पाणिग्राहस्तत्रैव स्थितः—

**ईक्षकान् प्रति मन्त्रयेत्(B)सुमङ्गलीरियं वधूरिति ॥ १३ ॥**

---

A. तां च वधूं 'मा सव्येन दक्षिणमतिक्राम' इति पतिर्ब्रूयात्, ततश्च सप्तपदाक्रमणानन्तरमाशासनमन्त्रः । स च—

ॐ सखा सप्तपदी भव सख्यं ते गमेयम् ।
सख्यं ते मा योषाः सख्यं ते मायोष्ठ्याः ॥ इति ।

मन्त्रब्राह्मणम् १।२।१३ ।

अस्य व्याख्या—हे कन्ये, त्वं मम सखा सखी सहचारिणी भव, सप्तपदी सप्तपदाक्रान्तेषु अर्थेषु । किञ्च सख्यं ते गमेयम्, सख्यं मैत्रीं ते तव अहं गमेयं सखा तव भवेयमित्यर्थः । किञ्च सख्यं ते मा योषा मया सह तव सख्यम् अन्या योषाः स्त्रियो मा च्छिन्दन्तु इति शेषः । किञ्च सख्यं ते मायोष्ठ्याः मायः सुखं तस्योत्थानं मायोष्ठं तत्रभवा मायोष्ठ्याः सुखकारिण्यः स्त्रियः त्वया सह मम सख्यं कुर्वन्तु इति शेषः । इति ।

B. मन्त्रस्तु—

ॐ सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥ इति ।

मन्त्रब्राह्मणम् १।२।१४ । विनियोगश्चास्य आपस्तम्बगृह्यसूत्रे १।८।७ । जैमिनीयगृह्यसूत्रे ३२।१० । च ।

अस्य व्याख्या—हे प्रेक्षकाः, सुमङ्गलीः प्रशस्तमङ्गलफला इयं वधूः परिणीता यतः, अतो यूयं समेत समागच्छत, समागत्य च इमां पश्यत । अथानन्तरम् अस्यै सौभाग्यं दत्त्वाय दत्त्वा, यूयम् अस्तं स्वगृहं विपरेतन गच्छत । इति ।

---

1. 'तस्यैव' इत्यनन्तरं 'दक्षिणं प्रक्रम्य सव्येनानुक्रामेत् । दक्षिणेन पादेन प्रक्रम्य सव्येन तस्यैव' इत्यधिकः पाठः, क-ग । 'तस्यैव' नास्ति घ । 2. 'क्रती' क-ग ।

निगदव्याख्यातं सूत्रमेतत्(A)।

**अपरेणाग्निमौदकोऽनुसंव्रज्य [1]पाणिग्राहं मूर्धदेशेऽवसिञ्चति तथेतरां समञ्जन्त्वित्येतयर्चा ॥ १४ ॥**

अपरेण प्रदक्षिणेनाग्निम् अनुसंव्रज्य[1]* संवृतगतिरेत्यैकः, औदकः[2] गृहीतोदकुम्भः, पाणिग्राहं वरं मूर्धदेशे शिरसि अवसिञ्चति ध्रुवाभिरद्भिः(B)। [3]तथा इतरां वधूं मूर्धदेशेऽवसिञ्चतीति वर्त्तते। (C)समञ्जन्त्वित्येतया ऋचा वरेण जप्यमानया। विधि[4]-सामर्थ्यान्न पाणिग्राहस्यैव मन्त्र इति चेत्, न; [5]कुतः? मन्त्रलिङ्गविप्रतिषेधात्। "[6]समापो हृदयानि[6]* नौ', आवयोरित्युत्तमपुरुषप्रयोगः [7]कुतः; स च वध्वा सहौदकस्य नोपपद्यते। तस्मात् पाणिग्राहो मन्त्रं जपेत्(D) [8]औदकोऽवसिञ्चेदिति स्थितम्[8]*(E)।

---

A. "ईक्षकान् विवाहप्रेक्षकान्। प्रतिमन्त्रणमनुमन्त्रणमभिमन्त्रणमित्यनर्थान्तरम्। तथात्र ईक्षकानवलोकयता कर्तव्यम्। तदाह कर्मप्रदीपः—

स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि।
अनुमन्त्रणीयं सर्वत्र सर्वदैवानुमन्त्रयेत्॥" इत्याह तर्कालङ्कारः स्वीये भाष्ये।

B. ध्रुवाणामपां लक्षणमुक्तं प्राक् (पृ० २८६)।

C. मन्त्रस्तु—

समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ।
सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ॥ इति।

आकरस्थानन्तु मन्त्रब्राह्मणम् १।२।१९। विनियोगस्त्वस्य खादिरगृह्यसूत्रे १।३।३०। आश्वलायनगृह्यसूत्रे १।८।९ पारस्करगृह्यसूत्रे १।४।१४। च।

अस्य व्याख्या—हे वधु, नौ आवयोः हृदयानि हृदये विश्वेदेवाः समञ्जन्तु शोधयन्तु। तथा आपो जलानि, तथा मातरिश्वा वायुः, धाता प्रजापतिः, देष्ट्री उपदेष्ट्री देवता संदधातु एकीकरोतु। इति।

D. तदुक्तं गृह्यासंग्रहे—

विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः।
वरस्तु तान् जपेत् सर्वान् ऋत्विग् राजन्यवैश्ययोः॥ २।२४। इति।

E. अत्र विशेषमाह गृह्यासंग्रहः—

अवसिक्तन्तु विधिना पाणिग्राहन्तु प्राजनी।
रक्षणार्थमनुगच्छेत् सहाहं त्र्यहमेव वा॥ २।३९। इति।

---

1. चिह्नितांशो नास्ति ख। 2. 'औदकः' नास्ति घ। 3. 'इतरां वधूं तथा मू-' घ। 4. 'वध्वधि-' ख। 5. 'कुतः' नास्ति घ। 6. चिह्नितांशो नास्ति घ। 7. 'कुतः' नास्ति ख। 8. 'औदकः सिञ्चतीति' घ।

अथैतत् सन्दिह्यते—किं प्रत्येकं मन्त्राभ्यासेन वरवध्वोरभिषेकः स्यादुत तन्त्रेणोभयो-रप्यनभ्यस्तेनैव मन्त्रेणेति ? भेदेनेति ब्रूमः। [1]कुतः ? पाणिग्राहं मूर्धदेशेऽवसिञ्चति तथेतरामिति भेदेनैवोपदेशात्। इतरथा समासः स्यात्। तथा च सूत्रान्तरम्—'भेदे मन्त्रावृत्तिः [2]स्यान्निपातित्वादि'ति(A)।

किञ्च—

**अवसिक्तायाः सव्येन पाणिनाऽञ्जलिमुपोद्गृह्य दक्षिणेन पाणिना दक्षिणं पाणिं साङ्गुष्ठमुत्तानं गृहीत्वैताः षट् पाणि-ग्रहणीया जपति गृभ्णामि ते इति(B) समाप्तासु ॥ १५ ॥**

अवसिक्ताया इति [3]सिद्धत्वा[4]दवाच्यमिति चेत्, न[3]*; [5]स्थाननियमार्थमिद-मुच्यते। कथं [6]नाम ? यस्मिन् देशे अवस्थिताया अवसेकः कृतः, [7]तत्रस्थाया एवावसेकानन्तरं सव्येन पाणिना बध्वा अञ्जलिम्। उपेति सामीप्ये, मणिबन्धप्रदेशे उद्गृह्य गृहीत्वा [8]दक्षिणेन पाणिना स्वेन बध्वा दक्षिणं पाणिं साङ्गुष्ठम् अङ्गुष्ठेन सह साङ्गुष्ठम् उत्तानं गृहीत्वा (C)'गृभ्णामि ते इत्येताः षट् पाणिग्रहणीयाः पाणिग्रहण-कर्मणि वि[9]नियुक्ता जपति। प्रकृतत्वात् [10]पाणिग्राहः। ऋच्यवसानाश्चैता आखण्ड-समाप्तेः। समाप्तासु पाणिग्रहणीयासु। किम् ? तन्त्रं समापयेदिति वाक्यशेषः।

इति [11]भट्टनारायणकृतौ[11]* [12]गोभिलीयगृह्यसूत्रभाष्ये[12]* द्वितीयप्रपाठकस्य द्वितीया कण्डिका ॥

A. प्रमाणीकृतं सूत्रान्तरमिदं तर्कालङ्कारेण "स्यान्निपातित्वादि"त्यत्र 'सम्पातित्वात्' इति पाठभेदेन। प्रमाणान्तरमपि तेनोक्तम्—

तथा चोक्तम्, कर्मावृत्तौ तु मन्त्रस्याप्यावृत्तिर्गृह्यकर्मणि। इति।

B. अत्रैव सूत्रमेकं समाप्य समाप्तासूद्वहन्तीति द्वितीयं सूत्रं पठतः सामश्रमितर्कालङ्कारौ। तत्र पुनस्तर्कालङ्कार इत्थं लिखति स्वभाष्यपादटीकायाम्—"सर्वेषु सूत्रग्रन्थेषु इत्थमेव (समाप्ता-सूद्वहन्तीति) सूत्रम्, अत्रैव च खण्डिकासमाप्तिः। भट्टभाष्ये तु समाप्तास्वि इति सूत्रच्छेदः, खण्डिकासमाप्तिश्चात्रैव दृश्यते, उद्वहन्तीति परसूत्रावयवतया तत्रोपलभ्यते। तत्वकारेण तु समस्तमेव सूत्रमुत्तरसूत्रेण सहैकत्र लिखितम्" इति।

C. तत्र प्रथममन्त्रः—

ॐ गृभ्णामि ते सौभगत्वाय हस्तं
मया पत्या जरदष्टिर्यथाऽसः।

1. 'कुतः' नास्ति घ। 2. 'सान्निपातत्वा- ग। 3. चिह्नितांशो नास्ति घ। 4. '-दवाच्य' इति क। 5. 'स्थाननियमार्थं पुनरुक्तम्' घ। 6. 'नाम' नास्ति घ। 7. 'तत्रस्थाया' ख-ग। 8. 'स्वेन दक्षिणेन' घ। 9. 'वि-' नास्ति क-घ। 10. 'वरः' घ। 11. चिह्नितांशो नास्ति घ। 12. चिह्नितांशो नास्ति ग।

भगो अर्यमा सविता पुरन्धि-
र्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ इति ।

अस्य व्याख्या—हे कन्ये, पुरन्धिरग्रणीः भगः अर्यमा सविता च एते देवाः त्वा त्वाम्, गार्हपत्याय गार्हस्थ्यकार्यनिर्वाहाय मह्यम् अदुः, ततश्च मया पत्या सह जरदष्टिः जरान्तं यावत् यथा असः स्याः, तथा सौभगत्वाय सौभाग्याय ते तव हस्तं पाणिं गृभ्णामि गृह्णामि । इति ॥ १ ॥

द्वितीयमन्त्रः—

ॐ अघोरचक्षुरपतिघ्न्येधि
शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्जीवसूर्देवकामा स्योना
शं नो भव द्विपदे शं चतुष्पदे ॥ इति ।

अस्य व्याख्या—हे कन्ये, त्वम् अघोरचक्षुरक्रूरदृष्टिः, अपतिघ्नी अपतिघातिनी च तथा पशुभ्यः शिवा गोमहिष्यादीनां सुखावहा, सुमनाः कल्याणहृदया, सुवर्चास्तेजस्विनी सती एधि वर्धस्व । किञ्च वीरसूः सत्पुत्रप्रसवा, जीवसूर्जीवत्पत्या, देवकामा पञ्चमहायज्ञरता, स्योना सुखकरी, तथा नोऽस्माकं सम्बन्धिने द्विपदे तथा चतुष्पदे च शं कल्याणरूपा भव । इत्याशास्यते इति ॥ २ ॥

तृतीयमन्त्रः—

ॐ आ नः प्रजां जनयतु प्रजापति-
राजरसाय समनक्त्वर्यमा ।
अदुर्मङ्गलीः पतिलोकमाविश
शं नो भव द्विपदे शं चतुष्पदे ॥ इति ।

अस्य व्याख्या—हे कन्ये, प्रजापतिः स्रष्टा, नोऽस्माकम्, प्रजां पुत्रपौत्रादिरूपाम्, आ आभिमुख्येन, जनयतु उत्पादयतु । अर्यमा देवः, तां प्रजाम् आ-जरसाय जरापर्यन्तम्, समनक्तु प्रकटगुणां करोतु । मङ्गलीः मङ्गलवत्यो देवतास्त्वां मह्यम्, अदुर्दत्तवत्यः । अतस्त्वं पतिलोकं पतिकुलम् आविश । एवं सर्वथैव नोऽस्माकं द्विपदे भृत्यादिके शं कल्याणी, चतुष्पदे गवादौ च शं कल्याणी भव । इति ॥ ३ ॥

चतुर्थमन्त्रः—

ॐ इमां त्वमिन्द्रमीढ्वः सुपुत्रां सुभगां कृधि ।
दशास्यां पुत्रानाधेहि पतिमेकादशं कुरु ॥ इति ।

अस्य व्याख्या—हे इन्द्र, मीढ्वः सेचकस्तर्पयिता, त्वम् इमां कन्यां सुपुत्रां सत्पुत्रवतीं सुभगां

पतिप्रियां कुर्वि कुरु। किञ्च अस्यां कन्यायां दश पुत्रान् आधेहि आधापय गर्भीकुरु ; तथा चास्याः पतिं भर्तारम्, एकादशं तैः सह सङ्कलनया एकादश कुरु। इति ॥ ४ ॥

पञ्चममन्त्रः—

ॐ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥ इति।

अस्य व्याख्या—हे कन्ये, त्वं श्वशुरे श्वशुरविषये सम्राज्ञी प्रधानवासिनी भव। तथा श्वश्र्वां पत्युर्मातरि, तथा ननान्दरि पत्युर्भगिन्याम्, तथा देवृषु देवरेषु अधि अधिकृत्य सम्राज्ञी भव, ( सर्वेषामेव प्रीतिमवाप्य तेषु सर्वेष्वेव स्वाधिपत्यस्थापने समर्था भवेति भावः )। इति ॥ ५ ॥

षष्ठमन्त्रः—

ॐ मम व्रते ते हृदयं दधातु
मम चित्तमनुचित्तं ते अस्तु।
मम वाचमेकमना जुषस्व
बृहस्पतिस्त्वा नियुनक्तु मह्यम् ॥ इति।

एषामाकरो मन्त्रब्राह्मणम् १।२।१६-२१। विनियोगस्तु खादिरगृह्यसूत्रे १।३।३१ आपस्तम्ब-गृह्यसूत्रे १।८।९ पारस्करगृह्यसूत्रे १।६।३। च।

अस्य व्याख्या—हे कन्ये, बृहस्पतिः सुरगुरुः, ते तव हृदयं मम व्रते मदीये कर्मणि दधातु धारयतु, ते चित्तं मम अनुचित्तम् अस्तु तत्प्रसादादिति। त्वम् एकमनाः सती मम वाचं जुषस्व, सेवस्व, स एव बृहस्पतिस्त्वा त्वां मह्यं नियुनक्तु मां प्रसादयितुं प्रेरयतु। इति ॥ ६ ॥

अत्र पाणिग्रहणे तर्कालङ्कारः—"उत्तानमित्यनेन करस्य गृह्यमाणं प्रतीयते इति रघुनन्दन-वचनमस्वरसारमेव, नियमतस्तत्प्रतीतौ कारणविशेषाभावात्। नह्युत्तानस्य करस्योपरिष्टाद् ग्रहणं न सम्भवतीति शक्यं वक्तुम्, मानाभावात्। 'उत्तानेनोत्तानं संगृह्णाति नीचेन चोत्तानमि'ति शाखान्तरे चोत्तानस्यापि करस्योपरिष्टादपि ग्रहणोपदेशात्" इत्याह स्वभाष्ये। अत्र भवदेव-ब्राह्मणयोर्मिश्रयोरपि रघुनन्दनमतं पुष्णीतः, स्वशाखाशाखान्तरपूर्वार्धमपि तथेति कथमकारणमेव रघुनन्दनप्रतिपक्षित्वमिति भावयामः। नीचेन चोत्तानमिति शाखान्तरीयं वा स्यादिति।

---

# द्वितीयप्रपाठकस्य तृतीया कण्डिका

एतस्मिन् कर्मणि समाप्ते वरसहायास्तां वधूं स्कन्धेनाश्वादिना वा—

**उद्वहन्ति (A)प्रागुदीच्यां दिशि यद् ब्राह्मणं कुलमभिरूपम् ॥१॥**

उत्क्षिप्य वहन्ति नयन्ति, क ? प्रागुदीच्याम् अपराजितायां दिशि यद् ब्राह्मणकुलं गृहम् अभिरूपम्, तपःस्वाध्यायवृत्तादिभिराभिरूप्यं भवति(B)। यथोक्तायां दिशि यथोक्तब्राह्मणकुलाप्राप्तौ दिशमनपेक्ष्य यत्र ब्राह्मणकुलं तत्र गच्छेत्। अभावे वेद्यामेव कुर्यात्। कुतः ? 'अथोत्तरो विवाहः प्रागुदीच्यामन्यत्र ब्राह्मणकुले मन्त्रवति वेद्यां वे'ति गृह्यान्तरवचनात्(C)।

किञ्च—

**तत्राग्निरुपसमाहितो भवति ॥ २ ॥**

लक्षणं कृत्वा स्थापितो भवतीति। वेद्यामेव चेत् तन्त्रेण स्यात् ततश्च [1]'गणेष्वेकं परिसमूहनमि'ति(D) वचनात् प्रधानमेव कुर्यात्।

[2]किञ्च—

**अपरेणाग्निमानडुहं रोहितं चर्म प्राग्ग्रीवमुत्तरलोमाऽऽस्तीर्णं भवति ॥ ३ ॥**

अपरेणाग्निम् [3]'अग्नेः पश्चा[4]'दिति। आनडुहम् आर्षभं रोहितं लोहितवर्णम्।

---

A. "उद्वहन्ति" इति सूत्रांशो द्वितीयकण्डिकाशेषसूत्रान्तर्गत इति सामश्रमितकांकुरो।

B. गृह्यासंग्रहोक्तमभिरूपलक्षणमुक्तं प्राक् ( पृ० ८ )।

C. प्रमाणीकृतं गृह्यान्तरवचनमिदं रघुनन्दनेनापि संस्कारतत्त्वे।

D. गणेष्वेकमित्यादिसूत्रमुक्तं प्राक् १।८।१६ ( पृ० २२९ )।

---

1. 'गणेष्व परि-' क, 'गणेष्व कपरि-' ख। 2. 'किञ्च-' नास्ति ग। 3. 'अग्नेः' नास्ति ख। 4. 'इति' नास्ति च।

[1]लोहिताभावेऽन्यद्वा वा। [2]कुतः? कर्मणः प्राधान्याद् वर्णस्य [3]च गुणत्वात्(A)। प्राग्ग्रीवं पूर्व[4]शिरस्कम्। उत्तरलोम उपरिलोम, उपवेशनार्थमास्तीर्णं प्रसारितं भवति।

**तस्मिन्नेनां वाग्यतामुपवेशयन्ति ॥ ४ ॥**

[5]तस्मिन् चर्मणि एनां वधूं [6]वाग्यतां कृतमौनामुपवेशयन्ति। बहुवचनादुपवेशनकर्त्तुरनियमः। किञ्च—

**सा खल्वास्त एवा नक्षत्रदर्शनात् ॥ ५ ॥**

सा चोपविष्टा आस्त एव, मूत्रपुरीषकरणादन्यत्र नोत्तिष्ठेदिति। ततश्च वाग्यता अभुञ्जाना [7]चास्ते। एवशब्दस्यैवमर्थत्वात्। कियन्तं कालमेवमास्ते? आ नक्षत्रदर्शनात्।

**प्रोक्ते नक्षत्रे षडाज्याहुतीर्जुहोति 'लेखासन्धिष्वि'त्येतत्प्रभृतिभिः ॥ ६ ॥**

येन नक्षत्रेण दर्शनाभिसम्बन्धो विवक्षितः, तस्मिन् प्रोक्ते ध्रुवं दृश्यं वर्त्तते इति कथिते। (B)लेखासन्धिष्वित्येतत्प्रभृतिभिर्मन्त्रैः षडाज्याहुतीर्जुहोति।

---

A. अत्र रघुनन्दनः—"इदानीं तु—

यत्राधर्मश्चतुष्पादः स्याद्धर्मः पादविग्रहः।
कामिनस्तमसाच्छन्ना जायन्ते तत्र मानवाः॥
अहङ्कारगृहीताश्च प्रक्षीणस्नेहबान्धवाः।
विप्राः शूद्रसमाचाराः सन्ति सर्वे कलौ युगे॥

इति मत्स्यपुराणोक्तकलियुगस्वभावेन सम्यग्धर्माचरणरहितेनापि चर्मोपवेशनाद्यभावेऽपि कर्मणः प्राधान्यादाज्यहोमादिकं क्रियते" इत्याह।

B. तत्र प्रथममन्त्रः—

ॐ लेखासन्धिषु पक्ष्मस्वावर्त्तेषु च यानि ते।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहं स्वाहा॥ इति।

अस्य व्याख्या—हे वधु, ते तव लेखासन्धिषु रेखासंस्थानेषु भालकरतलादिषु, पक्ष्मसु

---

1. 'तदभावेऽ-' घ। 2. 'कुतः' नास्ति घ। 3. 'च' नास्ति ख। 4. '-शिरसम्' घ। 5. 'एतस्मिन्' ख-ग। 6. 'वाग्यतां' नास्ति घ। 7. 'च' नास्ति ख।

नेत्रपिजानेषु, च अपि, आवर्तेषु, कुकुन्दरादिषु यानि अलक्षणानि, सन्ति तानि सर्वाणि अशेषाणि पूर्णाहुत्या आज्यहोमेन अहं पाणिग्राहकः शमयामि वारयामि इति ॥१ ॥

द्वितीयमन्त्रः —

ॐ केशेषु यच्च पापकमीक्षिते रुदिते च यत् ।

तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहं स्वाहा ॥ इति ।

अस्य व्याख्या—हे वधु, यच्च पापकं पापमनुष्ठितमशुभकरं चिह्नम् अलक्षणं वा, ते तव, केशेषु चिकुरेषु, ईक्षिते दर्शने, रुदिते अश्रुविमोचने यत् अस्ति प्रकटीभवति, तानीत्यादि पूर्ववत् ॥ २ ॥

तृतीयमन्त्रः—

ॐ शीलेषु यच्च पापकं भाषिते हसिते च यत् ।

तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहं स्वाहा ॥ इति ।

अस्य व्याख्या—हे कन्ये, ते तव, शीलेषु व्यवहारेषु, भाषिते कथनक्रियायाम्, हसिते हसनक्रियायाम् , चकाराद् गमने च यत् किञ्चित् पापकम् अनुष्ठितम् अशुभचिह्नं वा प्रकटीभवति तानीत्यादि पूर्ववत् । अस्य गुणविष्णुव्याख्यायां 'शीले च' इत्येवं पाठ उपलभ्यते केषुचित्, केवलं 'शीले' इति, बहुष्वादर्शपुस्तकेषु 'शीलेषु इति पाठोऽपीति सुधीभिर्ज्ञातव्यम् ॥ ३ ॥

चतुर्थमन्त्रः—

ॐ आरोकेषु च दन्तेषु हस्तयोः पादयोश्च यत् ।

तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहं स्वाहा ॥ इति ।

अस्य व्याख्या—हे कन्ये, ते तव, आरोकेषु दन्तान्तरालेषु, चकारादोष्ठयोः, दन्तेषु दशनेषु हस्तयोः, पादयोः, चकाराद् गुल्फयोः, यच्च पापकमनुष्ठितं पापचिह्नं वा विद्यते तानीत्यादि पूर्ववत् ॥ ४ ॥

पञ्चममन्त्रः—

ॐ ऊर्वोरुपस्थे जङ्घयोः सन्धानेषु च यानि ते ।

तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहं स्वाहा ॥ इति ।

अस्य व्याख्या—हे कन्ये, ते तव, ऊर्वोः जानूपरिभागयोः, उपस्थे प्रजननेन्द्रिये, जङ्घयोः जान्वधोभागयोः चकारान्मुले च, सन्धानेषु जान्वादिसन्धिप्रभृतिषु यत् पापकमनुष्ठितं पापचिह्नं वा विद्यते तानीत्यादि पूर्ववत् ॥ ५ ॥

षष्ठमन्त्रः—

ॐ यानि कानि च घोराणि सर्वाङ्गेषु तवाभवन् ।

पूर्णाहुतिभिराज्यस्य सर्वाणि तान्यशीशमं स्वाहा ॥ इति ।

एषामाकरो मन्त्रब्राह्मणम् १।३।१-६ । विनियोगश्च खादिरे १।४।३ । जैमिनीयगृह्यसूत्रे च "यानि कानि च पापानि" इति षष्ठमन्त्रस्य पाठभेदेन विनियोगो वर्तते । जै० गृ० सू० २०।१७ ।

किञ्च—

**आहुतेराहुतेस्तु सम्पातं मूर्धनि वध्वा अवनयेत् ॥ ७ ॥**

[1]आहुतेराहुतेर्ह ताथाः पश्चात् संवृतः पततीति संपातो बिन्दुः, (A)तं मूर्धनि शिरसि वध्वा [2]अवनयेद् गालयेत्, तुशब्दात् 'लेखासन्धिष्वि'त्यादिषण्णामाहुतीनां यः सन्निपातस्तमवनयेत्। न च व्याहृतिसर्वप्रायश्चित्तानामपी[3]ति।

**हुत्वोपोत्थायोपनिष्क्रम्य ध्रुवं दर्शयति ॥ ८ ॥**

हुत्वा षडाज्याहुतीः, अनन्तरम् उपोत्थाय। उपेति सामीप्ये। कथं [4]नाम? वध्वाः [5]समीपस्थः अव्यवहित उत्थानादि कुर्यात्। कुतः? [6]तत्र तत्र उपशब्दप्रयोगात्। हुत्वोपोत्तिष्ठत इति। [7]तथा हुत्वोपस्थायोपनिष्क्रम्येति। अत एव लोके[8]ऽञ्चल-संदामनरूढिः(B)। उपनिष्क्रम्य परिवृताद् बहिः, [9]वध्वा ध्रुवं दर्शयति। प्रकृतत्वाद् वरः, 'ध्रुवं पश्ये'त्येवं सम्बोध्य। [10]सा चैवमुक्ता ध्रुव[10]* [11]मालोक्य—

**ध्रुवमसि ध्रुवाऽहं पतिकुले भूयासम् अमुष्यासाविति पतिनाम गृह्णीयादात्मनश्च ॥ ९ ॥**

ध्रुवं [12]स्थिरं त्वम् असि भवसि। यथा त्वं नक्षत्रचक्रमध्ये [13]ध्रुवः, तथा ध्रुवा स्थिरा अहं पतिकुले पतिगृहे भूयासम्। [14]अमुष्य असाविति चैतयोः सर्वनाम्नोः[14]* [15]अमुष्य एतस्मिन् पतिनाम वक्ष्यन्तं[15]* गृह्णीयात्। असावित्येतस्मिन् आत्मीयं

---

अस्य व्याख्या—हे वधु, तव सर्वाङ्गेषु समस्तशरीरांशेषु, यानि प्रकृतान्यप्रकृतानि च घोराणि क्रूराणि पापानि अनुष्ठितानि अशुभचिह्नानि वा अलक्षणानि अभवन् तानि सर्वाणि अहम् आज्यस्य घृतस्य पूर्णाहुतिभिः अशीशमम् उपशमितवानेव इति ॥ ६ ॥

A. प्रत्येकाहुत्यनन्तरं स्रुवविगलितघृतबिन्दुरिति यावत्, तथा च गृह्यासंग्रहः—

हुत्वाज्यं परिशेषेण यद् द्रव्यमुपकल्पितम्।
स्रुवेणैव तु तत् स्पृष्टं सम्पातश्चैव तं विदुः। २।११२।

B. वरवध्वोरञ्चलयोर्ग्रन्थिबन्धनव्यवहारः।

---

1. 'हुताया आहुतेः पश्चात्' घ। 2. 'अवनयेत्' नास्ति घ। 3. 'इति' नास्ति घ। 4. 'नाम' नास्ति घ। 5. 'समीपेस्थः' क-ग। 6. 'तत उप-' क-ग। 7. 'यथा' क-ग। 8. '-ऽचलसंदान-' ख-ग घ। 9. 'वधूं' घ। 10. चिह्नितांशो नास्ति ग। 11. 'सालोक्य' ग। 12. 'स्थिरं च' ग-घ। 13. 'ध्रुवं' ख। 14. चिह्नितांशो नास्ति घ। 15. 'अमुष्येति वक्ष्यन्तं' घ।

प्रथमान्तम्। 'सुखबोधार्थं प्रयोगः प्रदर्श्यते'[1]—"(A)ध्रुवमसि ध्रुवाऽहं पतिकुले भूयासं देवदत्तस्य "यशोदा"[2] इति वधूं वाचयेत्।

किञ्च—

## अरुन्धतीं च ॥ १० ॥

अधिकाराद् दर्शयतीति वर्त्तते(B)।

## रुद्धाऽहमस्मीत्येवमेव ॥ ११ ॥

अरुन्धतीं पश्येत्येवं वरेणोक्ते [3]सति तामालोक्य एवं ब्रूयात्। अरुन्धत्यसि (C)[4]रुद्धाऽहमस्मीत्युक्त्वा एवमेव पूर्ववदेव ब्रूयात्। अयमत्र विशेषः—पतिनाम तृतीयान्तं गृह्णीयात्।

प्रयोगस्तु—अरुन्धत्यसि रुद्धाऽहमस्मि देवदत्तेन [5]यशोदा इति (D)।

---

A. "ध्रुवमसि ध्रुवाऽहं पतिकुले भूयासम्" भागोऽयं व्याख्यातो गुणविष्णुना स्वीये छान्दोग्यमन्त्रभाष्ये। व्याख्या च—हे ध्रुव, त्वं ध्रुवमसि स्थिरो भवसि यतः, अतस्त्वद्दर्शनादहमपि पतिकुले ध्रुवा स्थिरा भूयासम् इति। जैमिनीयगृह्यसूत्रे च 'ध्रुवोऽसि' इति पाठविपरिणामेन विनियोगो वर्त्तते।

B. अरुन्धती नाम सप्तर्षिमण्डलसमीपवर्त्तिनी काचित् सूक्ष्मतमा तारा।

C. 'रुद्धाऽहमस्मि' मन्त्रोऽयं व्याख्यातो गुणविष्णुना। व्याख्या च "हे अरुन्धति, अहं भर्तरि कायवाङ्मनोभिः सन्निरुद्धा अस्मि त्वमिवेति तात्पर्यमरुन्धतीदर्शन इति।

D. अत्र प्रयोगे भाष्यकारमतमनुसृत्यैवाऽऽह गृह्यकर्मप्रकाशिकायामग्निहोत्री, भवदेवस्तु "रुद्धाऽहमस्मी"त्येतावन्मात्रं पठति। रघुनन्दनोऽपि "रुद्धाऽहमस्मीतिमात्रमन्त्रेण पश्येत्। न तु प्रागुक्तवदूहितेनेत्याह। तर्कालङ्कारस्तु भाष्यकाराणामेव मतमुरीकृत्यैवमाह—"इदमेव तावन्मतमनुमन्यामहे। कस्मात्? यस्मादेवमेवेत्यवचनेऽपि तावन्मात्रस्यैव पाठः स्यात् पत्युरात्मनश्च नामग्रहणस्य प्रापकाभावात्, तद्व्यावर्तनार्थम् 'एवमेव' वचनमनर्थकमेव स्यात्। तस्मादेवमेवशब्दस्यार्थवत्तार्थं व्यवहितस्यापि नामग्रहणस्य बुद्ध्या सन्निकृष्यैवमा परामर्शः" इत्याह। तदत्र कीदृशो मन्त्रः पठितव्य इति भगवन्तोऽनूचाना निर्दिशन्तु इति।

---

1. 'प्रयोगस्तु' ग, 'सुखावबोधार्थं प्रयोगः' ख। 2. 'यशोदा' क-ख। 3. 'सति' नास्ति ख।
4. 'रुद्धाऽस्मी-' ख। 5. 'यशोदा' क-घ।

## अथैनामनुमन्त्रयते ध्रुवा द्यौरित्येतयर्चा ॥ १२ ॥

अथे'त्यानन्तर्ये। अनन्तरमेनां वधूमनुमन्त्रयते "(A)ध्रुवा द्यौ"रित्येतया [2]ऋचा। प्रकृतत्वाद् वरः।

## अनुमन्त्रिता गुरुं गोत्रेणाभिवादयते ॥ १३ ॥

अनुमन्त्रयते इति सिद्धे पुनर्वचनमानन्तर्यार्थम्। अनुमन्त्रिता अनन्तरमेवाभिवादयते, न [3]तन्त्रसमाप्तिं प्रतीक्षेदिति। [4]कमभिवादयते? गुरुम्'*। "पतिर्गुरुः स्त्रीणामि"ति वचनाद् "गुरुं पतिम्'*, कथम्? गोत्रेण, [6]अत्र सन्देहः [7]किं पतिगोत्रेण उत पितृगोत्रेणेति'*। [8]पतिगोत्रेणैवेति भ्रमः(B)।

---

A. मन्त्रस्तु—

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्।
ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुले इयम्॥ इति।

मन्त्रब्राह्मणम् १।३।७।

विनियोगश्चास्य खादिरेऽपि गृह्ये १।४।४।

अस्य व्याख्या—हे प्रार्थ्यमानदेव, यथा इयं द्यौः ध्रुवा स्थिरा इयं पृथिवी ध्रुवा, इदं दृश्यमानं विश्वं सर्वं जगच्चराचरं ध्रुवम्, इमे दृश्यमानाः पर्वता गिरयश्च ध्रुवासः स्थिराः, इयं स्त्री अपि तथैव अत्र पतिकुले पतिगृहे ध्रुवा स्थिरा भवतु। इति।

B. अत्र तर्कालङ्कारः—"पितृगोत्रेणेति भ्रमः। कस्मात्? इदानीमपि तस्याः पितृगोत्रत्वात्। तत् कस्य हेतोः?

विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु।
एकत्वमागता भर्त्तुः पिण्डे गोत्रे च सूतके॥

इति भवदेवभट्टधृतमनुवचनात्, लिखितसंहितायामप्येतत् (लिः २६), वक्ष्यमाणबृहस्पतिवचनाच्च। यत् पुनर्हारीतस्मरणं 'स्वगोत्राद् भ्रश्यते' इत्यादि, तत् सप्तमे पदे हृताया अन्येन पुनर्भूकृताया बोद्धव्यम्। तदेतदाह स एव—

पदे तु सप्तमे या तु बलात् काचिद् हृता भवेत्।
स्वामिगोत्रं भवेत् तस्यास्तच्च भूयो विशिष्यते॥
पैतृकन्त्वप्रसूतायास्ततः पौर्विकभर्तृकम्।

---

1. 'इत्यानन्तर्ये' नास्ति ग-घ। 2. 'ऋचा' नास्ति ग। 3. 'तत्र' क-घ। 4. 'कं गुरुं पतिं' घ। 5. चिह्नितांशो नास्ति घ। 6. 'अत्र सन्देहः' नास्ति घ। 7. 'किं पितृगोत्रेण पतिगोत्रेण वा' घ। 8, नास्ति घ।

तत्र स्वामिगोत्रं भूयः पुनरपि विशिष्यते इति ब्रुवाणो विशेषान्तरमपि द्योतयति। तत्र प्राक्तनस्य वचनस्यैतद्वचनोक्तं पुनर्भूकरणमेव इत्यवधार्यते। अन्यस्य विशेषस्यानुपलम्भात् इत्यवधेयम्। यत्तु बृहस्पतिस्मरणम्—

पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः।
भर्तृगोत्रेण नारीणां देयं पिण्डादिकं ततः॥ इति।

तदपि पाणिग्रहणमन्त्राणां पितृगोत्रापहारकत्वमाह न तेषामेव। केषां तर्हि? तेषां चतुर्थीहोममन्त्राणाञ्च। कस्मात्? यस्मादनन्तरमेवाऽऽह बृहस्पतिः—

चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः।
भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत्॥ इति।

अथवा 'पाणिग्रहणिका मन्त्राः' इति वचनं सप्तमे पदे गतायां वध्वामवगन्तव्यम्, हारीतसमानार्थत्वात्। तथा च मनुः—

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे॥ ८।२२७।

इति सप्तमे पदे गतायां वध्वां पाणिग्रहणमन्त्राणां निष्ठां स्मरति। तदिदं पाणिग्रहणात् परं सप्तपदीगमनमन्येषामेव नास्माकम्, अस्मदाचार्यैः पाणिग्रहणात् पूर्वमेव तत्सूत्रणात्। आश्वलायनपारस्कराभ्यां हि पाणिग्रहणात् परं तत् सूत्रितम्। यदपि शातातपस्मरणम्—

संस्थितायान्तु भार्यायां सपिण्डीकरणान्तिकम्।
पैतृकं भजते गोत्रमूर्ध्वन्तु पतिपैतृकम्।
एकमूर्तित्वमायाति सपिण्डीकरणे कृते।
पत्नी पतिपितॄणान्तु तस्मात् तद्गोत्रभागिणी॥ इति।

तदपि चतुर्थीतः पूर्वमेव संस्थितायां बोद्धव्यम्। सपिण्डीकरणेनैकमूर्तित्वप्राप्तेस्तत्रवचने हेतुत्वकीर्तनात्। वृत्तायां खलु चतुर्थ्यां तथैव त्वगादिसंसर्गादेकमूर्तित्वं पूर्वमेव निष्पन्नमिति पुनरिदानीं सपिण्डीकरणस्य तत्र हेतुत्वोपन्यासो नोपपद्यते। एवमन्यान्यपि वचनानि व्याख्येयानि। सपिण्डीकरणपर्यन्तं पितृगोत्रभजनमासुरादिनिन्दितविवाहोढाविषयम् इति स्मृतिमञ्जरीकारादिमतम्। तदपि सङ्गतम्—

आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्।

इति वृद्धशातातपवचनात्। परं सपिण्डीकरणपर्यन्तमित्यवधिकीर्तनमप्रमाणम्, सपिण्डीकरणमपि तस्या न भर्त्रादिभिः किन्तु मात्रादिभिरित्यपि तेनैवोक्तम्। यथा—

तन्मात्रा तत्पितामह्या तत्प्रश्वश्वा वा सपिण्डनम्।
आसुरादिविवाहेषु विन्नानां योषितां भवेत्॥ इति।

तस्मादासुरादिविवाहोढानां पितृगोत्रमेव, अन्यासान्तु सप्तमे पदे वराधृताया अप्रसूताया: पितृ-

गोत्रम्, प्रसूतायाः पूर्वभर्तृगोत्रम्। इतरासां चतुर्थीहोमपर्यन्तं पितृगोत्रं ततः परं भर्तृगोत्रम्। चतुर्थीतः पूर्वं संस्थितायान्तु सपिण्डीकरणपर्यन्तं पितृगोत्रं सपिण्डीकरणात् परं भर्तृगोत्रमित्यास्थेयम्।

यच्च 'आसुरादिविवाहोढाया अप्यप्रजाया मृतायाः सपिण्डीकरणपर्यन्तं पितृगोत्रभागित्वं तद्धने पितुरधिकारस्मरणात्, गोत्रऋक्थयोश्च युगनद्धवाहित्वस्यौत्सर्गिकत्वात्' इति नारायणोपाध्यायवर्णनम्, तन्मन्दम्। मरणादनन्तरमेव पितुरधिकारेण सपिण्डीकरणपर्यन्तमित्यवधिकरणानुपपत्तेः। मरणात् प्रागेकतरगोत्रग्रहणानध्यवसायापत्तेश्च। कथम्? यदि नामेयमप्रजैव संस्थास्यते तर्हि सपिण्डीकरणादूर्ध्वं भर्तृगोत्रमेषा प्रतिपत्स्यते, अथ सप्रजास्तदा पूर्वमेव न खल्वादित एकतरदवधारयितुं शक्यते—सप्रजा वा संस्थास्यते, अप्रजा वा इति। तदिदानीमेकतरगोत्रपरिग्रहे न किञ्चित् कारणमस्ति, एतच्चानिष्टम्, तत्रैव व्यभिचाराच्च। अपुत्रस्य भर्तुरादितः संस्थाने खल्वेवैव तद्धनमधिकरोति—इति भवन्मते तत्रैव गोत्रऋक्थयोर्युगनद्धवाहित्वं व्यभिचरति। तस्माच्च किञ्चिदेतत्।

अपरे पुनरप्रजाया विवाहाष्टकोढाया एव भर्त्रा प्रेतकृत्ये क्रियमाणे तत्पितृगोत्रेण कर्त्तव्यमिति प्रकल्पन्ति; रघुनन्दनस्तु—हारीतवचनमवलम्ब्य सप्तपदीगमनात्, बृहस्पतिवचनञ्चाश्रित्य पाणिग्रहणाद् गोत्रापहारमभिधाय सपिण्डनस्य गोत्रापहारित्वप्रतिपादकवचनं शाख्यन्तरीयम्, शिष्टव्यवहाराभावादिति कल्पयामास। तदप्यनादरणीयम्—शिष्टव्यवहाराभावस्य शाख्यन्तरीयहेतुत्वे महाविप्लवापत्तेः। प्रादेशिकस्य च व्यवहाराभावस्याकिञ्चित्करत्वात्। मन्वादिवचनविरोधस्य तावताऽप्यपरिहाराच्च।

सेयं शिष्टव्यवहाराभावव्यपदेशेन शाख्यन्तरीयत्वकल्पना, वचनविरोधभयात् सुखपरिहारत्वाद्वा समुल्लसिता, न शिष्टव्यवहाराभावादिति क्षिप्यते। शिष्टव्यवहारस्यापि शास्त्रीयमर्थमन्यथयितुं नास्ति सामर्थ्यमिति वक्ष्यामः। अपि च पाणिग्रहणात् पूर्वमेव वध्वाः संस्थाने कतरद् गोत्रमेतस्या भवतामनुमतमिति नावगच्छामः। "ऊढानां भर्तृगोत्रता" इति सामान्यञ्चाभिधानं विशेषवचनमपेक्ष्यैव प्रवर्त्तमानं न स्वातन्त्र्येण कञ्चिदर्थं साधयितुं प्रभवति, विशेषवचनस्यानर्थक्यप्रसङ्गात्। अपि च विवाहादपि गोत्रापहारः सप्तमे पदे गतायामेव वध्वां भवति। कुतः?

स्वगोत्राद् भ्रश्यते नारी विवाहात् सप्तमे पदे।

इति वचनात्। विवाहाद् कारणाद् यः स्वगोत्रभ्रंशः स खल्वत्र सप्तमे पदे भवतीत्युच्यते, तत् कुत एव विवाहमात्राद् गोत्रभ्रंशः शक्यते वक्तुम्। न च भवत्कल्पनायां किञ्चित् प्रमाणमस्ति, तस्मादयमयुक्त एव वचनार्थः। यदपि पतिगोत्रेण पत्युरभिवादनं वर्णितं तदपि पूर्वोक्तवचनानामनवलोकनेनेति हेयमेव। सप्तमे पदे गोत्रापहारबोधकवचनस्य तु पुनर्भूविषयतया हारीतेनैव पतिपादनाच्च मदुक्ताकल्पितोऽयमर्थः प्रमाणपरतन्त्रैरतन्त्रीकर्त्तव्य एव विद्वद्भिरित्यस्तु किं विस्तरेण"इत्याह स्वभाष्ये।

अत्र रघुनन्दनः—"गोत्रेण पतिगोत्रेण, स्वगोत्राद् भ्रश्यते नारीत्यादिवचनात्। एतेन पितृगोत्रेण भर्तुरभिवादनं सरलाभवदेवभट्टाभ्यामुक्तं हेयमि"त्याह।

गोभिलीयगृह्यकर्मप्रकाशिकायामग्निहोत्रिब्रह्मण्येनाप्युक्तम्—"ततो वधूर्भर्तारं नमस्करोति भर्तृगोत्रेणे"ति।

अत्रेदं विचार्यते—विवाहलक्षणविचारावसरे यदुक्तं तर्कालङ्कारेणोद्वाहचन्द्रालोके "पाणिग्रहणं स्त्रीणां द्वितीयं जन्मेत्याह विद्याधरीविलासकृत्यचिन्तामण्योः—

'पाणिग्रहणं नाम स्त्रीणां जन्म द्वितीयमिच्छन्ति।
परिणेतुर्गोत्रमसौ यस्मादायाति तत्प्रभृति॥'

इति, 'पाणिग्रहणं विवाह इत्यवगम्यते' इति। तथा गोभिलः 'पुण्ये नक्षत्रे दारान् कुर्वीत' गृह्यासंग्रहः—

पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम्।

तदनेन गोभिलेन दारकरणोपदेशात् तत्पुत्रेण च पाणिग्रहणमन्त्राणां दारलक्षणत्वाभिधानात् पाणिग्रहणं दारकरणमित्यवगम्यते।" नारदः—

विवाहादिविधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्यते।
स्त्रीपुंसयोगो नामैतद् विवाहपदमुच्यते॥
स्त्रीपुंसयोस्तु सम्बन्धे वरणं प्राग् विधीयते।
वरणाद् ग्रहणं पाणेः संस्कारोऽयं विलक्षणः॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्।
पाणिग्रहणमन्त्रश्च नियतं दारलक्षणम्।

वशिष्ठः—

अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि।
न च मन्त्रोपणीता स्यात् कुमारी पितुरेव सा॥

मन्त्रोपनीता पाणिग्रहणमन्त्रजन्यसंस्कारवतीति तत्त्वकृतः।

पुनर्मनुः—'पाणिग्रहणिका मन्त्रा नियतमि'त्यादि। तेषां पाणिग्रहणमन्त्राणाम्, निष्ठा परिसमाप्तिः। सप्तपदीगमनं पाणिग्रहणस्याङ्गमित्यभिप्रायः।

तथा यमः—

नोदकेन न वाचा च कन्यायाः पतिरिष्यते।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे॥

लघुहारीतः—तत्रापि न पाणिग्रहणे जायापतित्वं कृतत्वं कृत्स्नम्, हि जायापतित्वं सप्तमे पदे इति।

हरिवंशेऽपि—'पाणिग्रहणमन्त्राणां निष्ठा स्यात् सप्तमे पदे' इत्युक्तम्। सप्तपदीगमनं पाणि-

ग्रहणञ्चाभिधाय गृह्यान्तरे अथोत्तरविवाह इत्यादिना पराचीनस्य कर्मकलापस्योत्तरविवाहत्वोक्तेश्च पाणिग्रहणस्य विवाहत्वमवगम्यते । किञ्च—

'पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः' इति ।

'स्वगोत्राद् भ्रश्यते नारी विवाहात् सप्तमे पदे'

इति चैवमादिबृहस्पतिलघुहारीतादिवचनतात्पर्यपर्यालोचनयाऽपि पाणिग्रहणस्य विवाहत्वमवगम्यते । पाणिग्रहणिका मन्त्रा विवाहकर्माङ्गभूता इति वदद्भी रत्नाकरकारैरपि भङ्ग्या पाणिग्रहणस्य विवाहकर्मत्वमङ्गीकृतम्, तत्रैव तेषामङ्गत्वात् । न चैवं गान्धर्वादिविवाहानां विवाहत्वं न स्यादिति वाच्यम्,

गान्धर्वादिविवाहेषु विधिर्वैवाहिको मतः ।
कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥

इति देवलवचनेन तत्रापि पाणिग्रहणादिविधानात् । अत एव गान्धर्वविवाहेनोढायाः शकुन्तलायाः पाणिग्रहणं श्रूयते, यथा महाभारते शकुन्तलोपाख्याने—

एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ।
जग्राह विधिवत् पाणावुवास च तया सह ॥

एवमन्यत्राप्यनुसन्धेयम् । न चैवं पित्रादिभिरदत्ताया अपि पाणिग्रहणाद् भार्यात्वं स्यादिति वाच्यम् ?

पाणिग्राहस्य भार्या स्याद् यस्य चाद्भिः प्रदीयते ।

इति महाभारतवचनेन प्रदत्ताया एव पाणिग्रहणाद् भार्यात्वावगतेः । अत एवाऽऽनुशासनिके पर्वण्यष्टावक्रदिक्संवादे—

यदि वा दोषजातं त्वं परदारेषु पश्यसि ।
आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मे द्विज ॥ इति ।

अष्टावक्रमुक्तं तत्रैव विवाहकथनाध्याये—

बन्धुभिः समनुज्ञाते मन्त्रहोमौ प्रयोजयेत् ।
तथा सिध्यन्ति ते मन्त्रा नादत्तायाः कथञ्चन ॥
यस्तत्र मन्त्रसमयो भार्यापत्योर्मिथः कृतः ।
तमेवाहुर्गरीयांसं यश्चासौ ज्ञातिभिः कृतः ॥

मन्त्रः पाणिग्रहणमन्त्र इति ।

अत्र विवाहे दानमसाधारणमङ्गम्, तस्य गरीयस्त्वाभिधानात् तदभावे मन्त्राणामसिद्ध्युक्तेश्च । दानस्य त्वभावे बलात् पाणिग्रहणं निवर्त्तनीयमेव । पठन्ति च—

अदत्ता तु यदा पित्रा बलात् कन्या विवाहिता ।
अन्यस्मै सा प्रदातव्या यथा कन्या तथैव सा ॥ इति ।

तथा च तावदङ्गोपेतं पाणिग्रहणं विवाहः, गृह्यकारैः पाणिग्रहणमुपक्रम्यान्यस्येति कर्तव्यतोपदेशात्। तत्रापि किञ्चिदारादुपकारकं किञ्चिच्च सन्निपत्योपकारकं तत्तद्वचनात् प्रतिपत्तव्यम्, तदेतत् कन्यादानोत्तरभावित्वात् कन्यादानमिति, 'समाहासूद्वहन्ती'ति गोभिलसूत्रोक्तोद्वहनयोगादुद्वाह इति, प्रदक्षिणमग्निं परिणयतीति तदुक्तपरिणयनयोगात् परिणय इति चैवमादि यथानिमित्तमाख्यायते" इत्यादि, तेन च पाणिग्रहणस्यैव विवाहत्वं प्रतिपादितम्, भवदेवभट्टेनापि पाणिग्रहणानन्तरमुत्तरविवाहकर्मणि षडाज्याहुतय उक्ताः, मन्त्राणामप्युत्तरविवाहकर्मणि विनियोग इत्युक्तं गुणविष्णुना। सायणाचार्येणापि विवाहादनन्तरभाविहोमे विनियोग उक्तः। एवञ्च पाणिग्रहणेनैव विवाहे सिद्धे "ऊढानां भर्तृगोत्रता" इति वचनबलात् तर्कालङ्कारमतेऽपि भर्तृगोत्रत्वमायात्येव, विवाहपदस्य सप्तपदीगमनसहितपाणिग्रहणार्थकत्वात्। यतो गोभिलीयानां पाणिग्रहणात् प्रागेव सप्तपदीगमनम्, अन्येषान्तु येषां पाणिग्रहणादनन्तरं सप्तपदीगमनं तेषामपि 'पाणिग्रहणिका मन्त्रा' इत्यादिमनुवचनबलादेव सप्तपदीगमनस्यापि पाणिग्रहणेऽन्तर्भाव इति प्रतिपादितम्। यत्तु भवदेवभट्टधृतमनुवचनत्वेनोक्तं तत्तु केनाप्यन्येन निबन्धकारेण मनुवचनत्वेनानुल्लेखान्नेदं मनुवचनमिति प्रतीयते, किन्तु लिखितसंहितायां वचनमिदमुपलभ्यते, परं तदुत्तरश्लोकस्तु हारीतवचनमेवानुकरोति—

स्वगोत्राद् भ्रश्यते नारी उद्वाहात् सप्तमे पदे।
भर्तृगोत्रेण कर्तव्यं दानं पिण्डोदकक्रिया॥ इति ( लि० स० २७ )

अत्र च हरणप्रकरणस्याभावाद् बलाद्धृतायामेव हारीतवचनस्यावकाशनिर्धारणमनैकान्तिकमेव भवति, बृहस्पतिवचनेनापि तथैव ज्ञायते, यत्तु 'विवाहे चैव निर्वृत्ते' इत्यादि लिखितवचनम्, चतुर्थीहोममन्त्रेणेत्यादि च बृहस्पतिस्मरणं तदुभयमपि न पाणिग्रहणस्य पितृगोत्रापहारकत्वे प्रतिबन्धकं स्वस्ववचनविरोधापत्तेः, किन्तु ज्ञापकमेव। एवञ्च यथा पाणिग्रहणमन्त्राणां पितृगोत्रापहारकत्वं तथा चतुर्थीहोममन्त्राणामपीति नान्येषां विवाहशब्दवाच्यकर्मभेदानामित्यभिप्रायः। तथा च विवाहशब्दार्थमभिप्रेत्याऽऽह कृत्यचिन्तामणौ—

कन्या विवाहसमयं परिचिन्त्य शास्त्राण्यत्र त्रिवर्गफलहेतुमभिव्यनक्ति।
तस्य स्मृता वचन-दान-शची-चतुर्थी-कर्माभिषेचनकरग्रहणानि भेदाः॥ इति।

यद्वा, यथा तृणारणिमणीनां वह्निं प्रति स्वातन्त्र्येण जनकत्वं यथा वा पराकादिव्रतानां धेनुदानादीनाञ्च पापनाशकत्वं परस्परविरोधमपरिकल्प्यैव स्वीक्रियते तथा पाणिग्रहणमन्त्राणां चतुर्थीहोमानाञ्च भर्तृगोत्रजनकत्वं विरोधकल्पनामकृत्वाऽपि सम्भवत्येव, एवञ्च तृणजन्ये वह्नावरणिसंयोगे यथा न कश्चिद्दोषः, यथा वा पराकव्रतनाश्यपापनाशार्थं पराकव्रतमाचर्य धेनुदानादावपि न दोषस्तथा पाणिग्रहणेनैव कन्याया भर्तृगोत्रोत्पत्तावपि चतुर्थीहोमादिकरणेऽपि न दोषः, यत्किञ्चित्सङ्कोचेनापि तन्निष्पाद्यभर्तृगोत्रोत्पत्तीतरकार्योत्पत्तिसम्भवात्। क्रमादकृतपाणिग्रहेऽपि विवाहे चतुर्थीहोमेनैव भर्तृगोत्रोत्पत्तिसम्भवात्, तत्रैव च चतुर्थीहोममन्त्राणां भर्तृगोत्रोत्पादकत्ववचनानां

तथा च हारीतः—

स्वगोत्राद् भ्रश्यते नारी विवाहात् सप्तमे पदे ।
पतिगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया(A) ॥ इति ।

[1]अभिवादनप्रयोगः शास्त्रान्तरप्रसिद्धः[1]* ।

तथा च मनुः—

भोः-शब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि भो-भाव ऋषिभिः स्मृतः (B) ॥ इति ।

"प्रयोगस्तु वत्ससगोत्रा यशदा अहं भो अभिवादयामी"ति ।

---

सावकाशत्वात् । अनन्तरमेव संस्थितायां वध्वां वन्मते चतुर्थीहोमं विना भर्तृगोत्रत्वं न सम्पद्यते तन्मतेऽपि भर्तृगोत्रेणैव सपिण्डीकरणादिसम्भवाच । तदयं चतुर्थीहोमात् प्राक् पतिगोत्रत्वं नोत्पद्यत एवेति तर्कालङ्कारस्य दुराग्रहः परास्त इति सुधीभिरवगन्तव्यमिति ।

A. मुद्रितहारीतसंहितायां नोपलभ्यते ।

B. मनुसंहिता २।१२४ । अस्य कुल्लूकभट्टोक्ता व्याख्या च—"अभिवादने यन्नाम प्रयुक्तम्, तस्यान्ते भोः-शब्दं कीर्तयेदभिवाद्यसम्बोधनार्थम् । अत एवाऽऽह नाम्नामिति, भो इत्यस्य यो भावः सत्ता सोऽभिवाद्यनाम्नां स्वरूपभाव ऋषिभिः स्मृतः । तस्मादेवमभिवादनवाक्यम्—"अभिवादये शुभशर्माऽहमस्मि भोः" इति । अत्र भाष्यस्थ "भोःशब्द" पाठस्थाने भोभाव इति पाठभेदो-ऽभिवादनप्रयोगभेदश्च द्रष्टव्यः । अत्राग्निहोत्री सुब्रह्मण्यस्तु भाष्यकारमतमाश्रित्य श्रीवत्स-गोत्रा लक्ष्मीरहं भो अभिवादयामीत्युक्त्वा 'आयुष्मती भव लक्ष्मी'ति प्रत्युक्तिमप्याह ।

रघुनन्दनस्तु—"अभिवादयेद् मनूक्तप्रकारेणाभिवादनं कुर्यात् । अभिवादने प्रत्यभि-वादनस्याप्यावश्यकत्वात् तदुक्तं प्रत्यभिवादनमपि क्रियते । तथा च मनुः—

अभिवादात् परं विप्रो ज्यायांसमभिवादयन् ।
असौ नामाहमस्मीति स्वनाम परिकीर्तयेत् ॥
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः ॥

अभिवादात् परं भो अभिवादये इत्युच्चारणानन्तरममुकोऽस्मीत्यत्र स्वकीयं नाम परि सर्वतोभावेन देवशर्मयुक्तेन कीर्तयेत् । अत्राभिवादये इति विशेषलाभो गौतमवचनात् 'यथा स्वं नाम प्रयोज्याऽऽह स्वयमभिवादये इति । अत्रायमित्यभिधानान्मनुवचनेऽयमित्यर्थेऽस्मीत्यव्ययं तेनाहमस्मीत्यव्ययं पुरोवर्तीत्यर्थः । एवञ्चाभिवादात् परमित्यनेनाभिवादय इत्यनन्तरप्राप्तस्य नामकीर्तनस्य मनूक्तस्य विरोधाद् गौतमोक्ताभिवादये इत्यन्तपाठो न ग्राह्यः,

---

1. 'अभिवादनप्रयोगे मनुः' च ।

[1]यत् तदुक्तं वाग्यतामुपवेशयन्तीति—

## सोऽस्या वाग्विसर्गः ॥ १४ ॥

[2]तस्य [3]वाग्यमनस्य अस्या अयं विसर्गकालः। एतस्मिन्नेव काले[4]ऽवकाशे व्याहृत्यादि तन्त्रं समापयेत्। तन्त्रेणापि क्रियमाणे पृथगेव दक्षिणाद्वयं ब्रह्मणे देयम्(A), पृथक्त्वात् कर्मणः; कर्मानुरूप्याच्च मूल्यप्राप्तेः। अनादेशाच्चोभयत्र पूर्णपात्रादिका स्यात्(B)।

---

वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम्।
मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते ॥

इति बृहस्पतिवचनात्। ततश्च कुल्लूकभट्टशूलपाण्युपाध्यायप्रभृतिभिः स्वनामादावभिवादये इति लिखितं युक्तम्, सरलाभवदेवभट्टप्रभृतिभिरन्ते लिखितं हेयम्। अभिवादने यः पादग्रहणविन्यासविशेषो मनुना विहितः स इह वध्वास्तथा नाऽऽचरणान्नाभिहितः।" इत्याह संस्कारतत्त्वे। तदत्राभिवादने कीदृशः प्रयोगो युक्तस्तत्तावद् भगवन्तोऽनूचानाः प्रमाणयन्तु।

A. पाणिग्रहणस्योत्तरविवाहस्य चेति भावः।

B. अत्र तर्कालङ्कारः—"अत्रोत्तरविवाहकर्मणः परिसमाप्तिरिति भट्टनारायणप्रभृतयो वृद्धाः। कथं ज्ञायते? परत्र समशनीयचरुहोमोपदेशात्, समशनीयचरुहोमः खलु कर्मान्तरम्

"चरुः समशनीयो यस्तथा गोयज्ञकर्मणि" इत्यादौ

गोयज्ञादिसाहचर्यात् तथाऽवगतेः। अर्घ्यमप्यन्तरालविहितं प्रक्रान्तस्य कर्मणः परिसमाप्तिं द्योतयति, स्वकर्मव्यापृतस्य तदनुपपत्तेः। उत्तरविवाहकर्मणो मध्ये ब्रह्मचर्यादिनियमविधानस्याश्लिष्टत्वाच्च। तस्माद्विवाहकर्मण इवोत्तरविवाहकर्मणः परिसमाप्तिः साक्षादसूत्रिताऽप्यर्थतः प्रतिपत्तव्या, तस्मात् तन्त्रसमापनमिदानीं करणीयम्, दक्षिणापूर्णपात्रादिका देया स्यादिति केचित्। अन्ये त्वाहुः—नात्रोत्तरविवाहकर्मणः परिसमाप्तिः, प्रमाणाभावात्; उत्तरसूत्रे ब्रह्मचर्यादिविधानादिति चेत्? एतदपि तादृगेव, न ह्युत्तरविवाहकर्मणः परत एव ब्रह्मचर्यादि विधातव्यम्, इत्यत्रापि किञ्चित् प्रमाणमस्ति। अपि च ब्रह्मचर्यादिसूत्रणादानुमानिकी खल्वत्र कर्मणः परिसमाप्तिः, समशनीयचरुहोमप्रतिपत्तेस्तु परतः प्रत्यक्षमेव तामुपलभामहे। न खल्वनुमानं प्रत्यक्षमपि बाधितुमीष्टे। अथाऽपि स्यात् तस्यैव कर्मणः सा परिसमाप्तिर्नोत्तरविवाहकर्मण इति, नेति ब्रूमः। कुतः? समशनीयचरोर्होमस्य प्रतिपत्तेश्च सूत्रणादेव तदपवर्गस्य सुखमवगमात्, तदर्थमपवर्गसूत्रणस्यानतिप्रयोजनत्वात्, तन्मात्रपरत्वे प्रमाणाभावाच्च। तस्मादुत्तरविवाहकर्मणोऽपवर्गस्यान्यत्रासूत्रितत्वात् तस्यैव सोऽपवर्ग इत्यवगच्छामः। दक्षिणा च गौः, एवं सति कर्मणोऽ-

---

1. ['यदुक्तं' घ। 2. 'तस्याः' ख-ग। 3. 'वाग्यमस्य' क-ख। 4. 'अवकाशे' नास्ति क-ख-घ।

किञ्च—

**तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम् ॥ १५ ॥**

तावुभौ दम्पती, तस्माद् विवाहकर्मण ऊर्द्ध्वं त्रिरात्रं त्रीण्यहोरात्राणि, रात्रिकादिक्षाररहितमक्षारम्, सैन्धवादिलवणरहितमलवणम्, अक्षारञ्च तदलवणञ्च अक्षारलवणम्(A), तदशनौ स्वभोजनकाले ब्रह्मचारिणाविति,

"त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम् ।"

इत्येतस्मिन् पक्षे मैथुनस्यापि सम्भवात् । विवाहोत्तरकालं च प्राप्तत्वात् प्रतिषेधः

---

कुरुया स्यात, अत इदानीं तन्त्रसमापनं न कर्त्तव्यमिति" इत्याह । रघुनन्दनेनापि तन्त्रसमापनमत्र नोक्तं संस्कारतत्त्वे । भवदेवभट्टेन तु तन्त्रसमापनमत्रोक्तम् । गोभिलीयगृह्यकर्मप्रकाशिकायान्तु—"ततो वध्वा सह वरोऽग्नेः पश्चादुपविश्य व्याहृतिचतुष्टयं पुनर्व्याहृतित्रयञ्च हुत्वा तूष्णीं समिधाधानप्रभृति पूर्णपात्रदक्षिणादानान्तं तन्त्रं समापयेत् । तेन वैवाह्य प्रातराहुतिर्हुता भवति । सायमाहुत्युपक्रम एवात ऊर्ध्वं गृह्येऽग्नौ होमो विधीयत इति सूत्रे विवाहहोमैरेव प्रातराहुतिनिवृत्तेः सायं होमारम्भस्य चोक्तत्वात् । विवाहदिने रात्रौ लेखाहोमानन्तरं सायमौपासनारम्भः कर्तव्य एव कौथुमीयानाम् । तदुक्तं गृह्यपरिभाषाकृद्भिः—"यदाऽह्नि विवाहहोमस्तदा सायंकाले होमारम्भः, यदा रात्रौ विवाहहोमस्तदा परेद्युः सायंकाले होमारम्भ" इति ।

शौनकोऽपि—

यस्मिन्नह्नि विवाहः स्यात् सायमारभ्य तस्य तु ।
परिचर्या विवाहाग्नेर्विदधीत स्वयं द्विजः ॥
यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात् तथा सति ।
उत्पन्नस्योत्तरस्याह्नः सायं परिचरेदमुम् ॥ इति

केचिच्चतुर्थीकर्मानन्तरं सायमौपासनारम्भं मन्यन्ते । तदुक्तं कर्मप्रदीपे—

वैवाहिकेऽग्नौ कुर्वीत सायं प्रातस्त्वतन्द्रितः ।
चतुर्थीकर्म कृत्वा तु ह्येतच्छाट्यायनेर्मतम् ॥ इति ॥

एवमुक्तं सुब्रह्मण्येन । तदत्र तन्त्रसमापनं कर्तव्यमकर्तव्यं नेति भगवन्तोऽनूचानाः प्रमाणयन्तु ।

A गोक्षीरं गोघृतञ्चैव धान्यं मुद्गास्तिला यवाः ।
अक्षारलवणा ह्येते क्षाराश्चान्ये प्रकीर्त्तिताः ॥

इति स्मृत्युक्तग्रहणं वा । यत्तु अक्षारलवणमकृत्रिमलवणमिति केषाञ्चिद् वर्णनं तदसङ्गतम्;

क्रियते(A)। भूमाविति खट्वाप्रतिषेधार्थः, न [1]स्वस्तरकम्बलादीनामपीति। सहेति एक[2]स्वस्तरनियमार्थम्। एवं शयीयाताम्।

**अत्रार्घ्यमित्याहुः ॥ १६ ॥**

[3]अत्रास्मिन्नवसरे वरस्यार्घ्यमर्हणं कन्यापित्रा कर्तव्यमित्याहुः[3]*। यच्च वक्ष्यति षडर्घ्यार्हा भवन्ति [ सू ४।१०।२२ ], अयं स विवाहस्तेषां मध्ये य उक्तः। तच्चार्हण-मुपरिष्टात् [4]स्वे तन्त्रक्रमे वक्ष्यति(B)।

**आगतेष्वित्येके ॥ १७ ॥**

लग्नसन्निधौ विवाहार्थमागतमात्रेष्वेवार्हणं कर्तव्यमित्येके मन्यन्ते(C)।

**हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत ॥ १८ ॥**

[5]हविष्यमन्नम् [6]इति उक्तार्थम् (D)[5]*। प्रथमं पूर्वं यत् परिविष्यते। परिजप-मन्त्रमुपरिष्टाद् वक्ष्यति—"[7]अन्नपाशेने"ति तेन "जपितं भुञ्जीत"[8]*।

**श्वो भूते वा समशनीयं स्थालीपाकं कुर्वीत ॥ १९ ॥**

अर्थाद् भोजनकालोपलक्षणार्थम्। लग्नवशाद् रात्रौ विवाहे एतद् द्रष्टव्यम्।

---

क्षारपदस्य कृत्रिमपरत्वे लक्षणाप्रसङ्गात्, यदि च क्षारमृत्तिकादिकृतं लवणं क्षारलवणमुच्यते एवमपि लक्षणैव स्यात्। अपि च, अकृत्रिमलवणाशनसमकालमन्यस्मिन्नपि क्षारादावशिते दोषो वा न स्यात् अकृत्रिमलवणादन्यद्वा किमपि नाशितव्यं स्यात्।

ननु हविष्यमन्नमित्यादि (२।३।१८) सूत्रयिष्यति तेनैवाक्षारलवणाशनं सेत्स्यति? नेति ब्रूमः, एतस्मिन्नसूत्रिते हि "हैमन्तिकं सितास्विन्नमि"त्यादिपारिभाषिकस्य हविष्यस्य

"हविष्ये गोघृतं मुख्यं तदभावे तु माहिषम्"

इत्येवमादिकस्य वा भोजनं स्याद् नाक्षारलवणस्य। अत इदानीमिदं सूत्रितम्।

A. विषयेऽस्मिन् किञ्चिद् वक्ष्यते 'नग्निका तु श्रेष्ठा' ( ३।४।९ ) इति सूत्रपादटीकायाम्।

B. चतुर्थप्रपाठकस्य दशमकण्डिकायाम्।

C. "इदानीं बहुवादिसम्मतमेवं व्यवह्रियते" इत्युक्तमत्र रघुनन्दनेन।

D. उक्तमिदं कण्डिकायामस्यां पञ्चदशसूत्रे ( पृ० ३२२ )।

---

1. 'कम्बर-' ख-ग। 2. '-स्वस्तर-' ख-ग। 3. चिह्नितांशो नास्ति क-ख-ग। 4. 'तन्त्रक्रमेण' ग। 5. चिह्नितांशो नास्ति घ। 6. 'इति' नास्ति क। 7. 'अन्नपाशेनेति' ख। 8. 'परिजपितं' ख-घ, 'परिजपितं भुञ्जीत' ग।

श्वः प्रभाते वा भूते सम्यगशनार्थं क्रियते इति समशनीयः, तं स्थालीपाकं कुर्वीत। न हि आत्मकारणात् पाकविधानमस्ति।

अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्।
यज्ञशिष्टाशनं ह्येव सतामन्नं विधीयते॥

इति मनु[1]वचनात्(A)। केवलाघो भवति केवलादीति श्रुतिश्च[2](B)। [3]तस्माद् देवतार्थमिदमाह।

## तस्य देवता अग्निः प्रजापतिर्विश्वेदेवा अनुमतिरिति ॥२०॥

तस्य समशनीयस्य, अग्न्याद्या देवताः, विसमासकरणं पृथङ्निर्वापहोमप्रदर्शनार्थम्। मेक्षणेन चायं होमः। तदेतदुक्तमधस्तात्(C)। देवतानां चात्र प्राधान्यात् त्रिस्तण्डुलानां प्रक्षालनम्।

यजनान्तं कर्म कृत्वा

## उद्धृत्य स्थालीपाकं व्यूह्यैकदेशं पाणिनाऽभिमृशेदन्नपाशेन मणिनेति ॥ २१ ॥

उद्धृत्य पात्रान्तरे कृत्वा स्थालीपाकं शेषं व्यूह्य स्वपात्रेऽवदाय एकदेशेन सर्वमपि भाण्डस्थ"मिति। पाणिनाऽभिमृषे'दन्नपाशेन(D) मणिने'ति मन्त्रेण पञ्चावसानेन।

A. मनुसंहिता ३।११८।

B. प्रमाणीकृतेयं श्रुतिः कुल्लूकभट्टेनापि मन्वर्थमुक्तावल्याम्।

C. प्रथमप्रपाठकस्याष्टमकण्डिकायां द्वितीयसूत्रे ( पृ० २१६ )।

D. मन्त्रास्तु—

ॐ अन्नपाशेन मणिना प्राणसूत्रेण पृश्निना
बध्नामि सत्यग्रन्थिना मनश्च हृदयञ्च ते॥
ॐ यदेतद्धृदयं तव तदस्तु हृदयं मम।
यदिदं हृदयं मम तदस्तु हृदयं तव॥
ॐ अन्नं प्राणस्य षड्विंशस्तेन बध्नामि त्वाऽसौ॥

मन्त्रब्राह्मणम् १।३।८-१०।

एषां व्याख्या—हे वधु, ते तव मनश्चित्तम्, चकाराद् बुद्धिश्च हृदयम् अन्तर्गतं करणम्, अहं परिणेता बध्नामि बन्धनं करोमि, स्ववशं नयामीति यावत्। कथमित्याह—मणिना मणितुल्येन अन्नपाशेन अन्नरूपबन्धनेन, अन्नेनैव यतः शरीरबन्धः; किञ्च पृश्निना चित्रवर्णरत्नसदृशेन प्राण-

1. 'मनु' नास्ति क-ख-ग। 2. 'एवस्माद' ग-घ। 3. 'श्रुति' नास्ति घ।

[1]असावित्येतस्मिन् सम्बोधनविभक्त्या भार्यानाम गृह्णीयात् "तेन बध्नामि त्वा [2]यशदे" इति प्रयोगः।

---

सूत्रेण किञ्च सत्यग्रन्थिना सत्यरूपग्रन्थिना। अयं भावः—तुभ्यं यानीमानि अन्नानि भोजनाय ददामि तदेतदन्नदानमेव तव हृदयस्य मनसश्च बन्धनाय पाशो ज्ञेयः। अत्र च पाशे मामकाः पञ्चविधाः प्राणा एव बहुवर्णशोभितानि चित्राणि सूत्राणि ज्ञेयानि, एवञ्च मत्प्राणानपि त्वदधीनानेव करोमि, एतादृशमानुगत्यमेव त्वद्धृदयमनसोर्वशीकरणे बीजमिति भावः। तादृशसूत्रैस्त्वद्धृदय-मनोबन्धने तु ग्रन्थिः सत्यवचनं प्रतिज्ञाकथनमिति। १॥ हे वधु, यदेतदनुभूतं तव सम्बन्धि हृदयं तन्मम सम्बन्धि अस्तु भवतु, किञ्च मम यत् इदं हृदयं तत् तव अस्तु, सर्वेष्वेव विषयेषु आवयोरैकमत्यं भवत्विति ॥२॥ हे वधु, अन्नम् अदनीयं वस्तुजातं प्राणस्य शरीरधारणस्य वायुराजस्य षड्विंशः बन्धनं यतः, अतस्तेन त्वा त्वाम् असौ अहं भर्ता बध्नामि वशीकरोमि। इति ॥ ३ ॥

पञ्चावसानत्वमङ्गीकृत्यैवैकत्वमुक्तं भाष्यकारेणेति। अत्र गुणविष्णुप्रभृतिमन्त्रव्याख्या-तॄणां मते असाविति पदस्याहमित्यर्थो भाष्यकारविरुद्धो नादरणीय इत्याह रघुनन्दनः— "अत्रासावित्यत्र सम्बोधनविभक्त्या भार्यानाम प्रयोज्यमिति भट्टनारायणैरुक्तम्, ततश्च यदसा-वित्येव भवदेवभट्टेनानेन मन्त्रेणोक्तं गुणविष्णुनाऽसावित्यहमिति व्याख्यातं तदयुक्तं भट्टभाष्य-विरोधात्, त्वेति युष्मत्पदप्रयोगात् सम्बोधनार्थं वधूनामप्रयोगस्य युक्तत्वाच्च। किन्त्विदानीं समशनीयचरुहोमाकरणाद् भवदेवभट्टेन न समशनीयचरुहोमादिकं लिखितम्, मयाऽपि प्रयोगे न लिखनीयमिति" इति ग्रन्थेन।

अत्र तर्कालङ्कारः—"अत्रासावित्यस्मिन् मन्त्रस्थाने सम्बोधनान्तं वधूनाम प्रयोक्तव्यम्। असाविति नाम गृह्णातीति सूत्रान्तरात्। अत्रासावित्यूहं विनैव, विनैव होममशनमात्रञ्च लिखन् भवदेवोऽनादेयवचन एवे"त्याह।

अथ भवदेवानुक्तः समशनीयस्थालीपाकप्रयोग उच्यते—यदि गृह्याग्निः स्थण्डिले तिष्ठति, तदा नोल्लेखनादिकम्, यदा भाण्डे समारोपितस्तदा स्थण्डिले उल्लेखनादिपूर्वकं भाण्डस्थोऽग्निः प्रतिष्ठा-पनीयः। परमेश्वरप्रीत्यर्थमनया पत्न्या सह समशनीयस्थालीपाकं करिष्ये, तेन परमेश्वरं प्रीणयानि। पार्वणस्थालीपाकवत् पर्युक्षणान्तं कुर्यात, चरुनिर्वापकाले, अग्नये त्वा जुष्टं निर्वपामि। एवं प्रजापतये, विश्वेभ्यो देवेभ्यः, अनुमतये। अथोपघातहोमो नाऽऽज्यभागौ न स्विष्टकृत्। चरावाज्यमानीय मेक्षणेन सकृद्बहुमवदाय जुहुयात्। अग्नये, प्रजापतये,··· । ततो महाव्याहृतिभि-राज्याहुतित्रयं स्रुवेण कृत्वा समिदाधानादियज्ञवास्त्वन्तं कर्म कुर्यात्। होमशेषं चरुं मेक्षणेन पात्रान्तरे गृहीत्वा दक्षिणहस्तेनाभिमृश्य अन्नपाशेनेति मन्त्रत्रयं पठेत्। अत्रासावित्येतस्य स्थाने सम्बोधनान्तं भार्यानाम गृह्णीयात्। ततोऽभिमन्त्रितस्यान्नस्यैकदेशं स्वयं भुक्त्वोच्छिष्टं

1. 'असाविति संबो-' घ। 2. 'यशोदे' घ।

भुक्तोच्छिष्टं वध्वै प्रदाय यथार्थ(A) गौर्दक्षिणा ॥ २२ ॥

यद् 'यत् परिजपितं तस्य किञ्चिद् भुक्त्वा उच्छिष्टम् उर्वरितं 'वध्वै जायायै प्रदाय दत्त्वा अन्यदपि तृप्त्यर्थं भुक्त्वा आचम्य यथार्थमिति प्रदक्षिणप्रणीतापूलीनां विमोकोद्-'पात्रपूरणानि कृत्वा गौर्दक्षिणा 'यस्मिन् कर्मणि तां च ब्रह्मणे दत्त्वा वामदेव्यं गायेदिति(B)। यदुक्तम्—'हविष्यमन्नं प्रथमं परिजपितं भुञ्जीते'ति [ सू २।३।१८ ]।

पत्न्यै प्रयच्छेत् अन्यदन्नं स्वयं पत्नी च तृप्तिपर्यन्तं भुक्त्वा हस्तौ पादौ च प्रक्षाल्याऽऽचम्य गोदक्षिणां ब्रह्मणे दत्त्वा वामदेव्यगानं कुर्यादिति।

A. अत्रैव सूत्रमेकं समाप्य गौर्दक्षिणेति पृथक् सूत्रं कल्पयतः सामश्रमितकौलङ्कारौ।

B. अत्र तर्कालङ्कारः—"यथोक्तं तत्त्वकारेण 'यथाशक्तेः कुलाचाराद् वा तद्दिन एव धृतिहोमादिचतुर्थीहोमान्तं कर्म क्रियते तदाऽभिमन्त्रितं कदलादिकं स्वयमाघ्राय वधूमाघ्रापयेदि'ति तदसङ्गतम्। कस्मात्? अशक्तेः स्वकालात् पूर्वं कर्मकरणे मानाभावात्, विहितकालादर्वाक् कृतस्यापि कर्मणः स्वस्वागते काले पुनः करणमेवानुशिष्यते—

'अकाले चेत् कृतं कर्म काले तस्य पुनः क्रिया'

इत्यादिवचनैः। एतच्च स्वयमपि वर्णितम्। तत् कथमत्र विपरीतमुच्यते इति स एव जानाति। अथास्तु कुलाचारादन्यत्रापि काले कर्मणः करणम्? नेत्युच्यते। न खल्वयमाजानिकः समाचारः, किन्तर्हि? आलस्यादर्वाचीनानामुपरिष्टादेव प्रवृत्त इत्यनुमीयते। न हि पूर्वेषा-मयथा क्रिया युक्ता सम्भावयितुम्, सोऽयमाचारः क्षाराद्यशनाचार इव दुराचार एव न कुलाचारः। अपि च स्मृतिमूलः खल्वाचारस्तया विरोधे स्वयमेव बाध्यते न जातुचिदपि तां बाधितुमीष्टे, न हि पश्चिमसिद्धेनाचारेण पूर्वसिद्धं शास्त्रमुपरोद्धव्यमिति युक्तम्। तथा चोक्तम्—

स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र च।

अनुमेया स्मृतिः स्मृत्या बाध्या प्रत्यक्षया तु सा॥ इति

गौतमोऽपि स्मरति—'देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम्' इति। तथा वशिष्ठः—'देशधर्म-जातिधर्म-कुलधर्मान् श्रुत्यभावादब्रवीन्मनुः' इति। येषामप्याचारमूलकत्वं स्मृतीनामिति दर्शनम्, तेषामपि स्मृत्युक्त एव प्राक्तनाचारोऽनुसरणीयः, न तूपरिष्टाद् यदृच्छया प्रवृत्त इत्यास्थेयम्। पूर्वम् ऋषयः साक्षात्कृतधर्माणः सर्वज्ञकल्पा लोकस्थितिचिकीर्षया यमाचारं प्रवर्तयन्ति स्म, नायमर्वाचीनानामतथाभूतानां यदृच्छया कल्पितमात्रेणाऽऽचारेणोपरोद्धुमुचितः। 'अथ खल्वावचा जानपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात्' 'यत्तु समानं तद्वक्ष्यामः' इति गृह्यान्तरसूत्राभ्यामपि गृह्योक्तधर्माणां जनपदादिधर्माणाञ्च विरोधे गृह्योक्तधर्माणामेव करणमिति

1. 'तत्' क। 2. 'वध्वै' नास्ति घ। 3. '-पात्र-' नास्ति ख। 4. 'यस्मिन्' ख।

[1]एतस्मिन्नपि पक्षे (A)व्यूहनोच्छिष्टप्रदानगोदक्षिणादानवामदेव्यगानानि स्युः । [2]कुतः ? अनु[3]षङ्गविधानात् ।

इति [4]महामहोपाध्यायभट्टनारायणकृतौ[4]* [5]गोभिलगृह्यसूत्रभाष्ये[5]*
द्वितीयप्रपाठकस्य तृतीयकण्डिका ॥

---

गृह्यकाराणां मतं विज्ञायते" इत्याह । सोऽयमेकदिन एवार्वाक् चतुर्थदिनाद् विवाहहोमानां समाप्तिः सदाचारोऽनाचारो वेति भगवन्तोऽनूचानाः प्रमाणयन्तु ।

A. समशनीयचरुशेषभोजनं हविष्यान्नभोजनञ्चेति पक्षद्वयम् ।

---

1. 'अस्मिन्नपि' ख । 2. 'कुत:' नास्ति ख-ग । 3. '-षङ्गाविधानात्' ख । 4. चिह्नितांशो नास्ति ख । 5. चिह्नितांशो नास्ति ग । 4-5. चिह्नितांशो नास्ति घ ।

# द्वितीयप्रपाठकस्य चतुर्थी कण्डिका

——:0:——

विवाहे निवृत्ते भर्तृकुलगमनार्थं[1] वध्वाः[2]—

**यानमारोहन्त्यां सु-किंशुकं शाल्मलिमित्येतामृचं जपेत् ॥१॥**

(A)प्रकृतत्वात् "पाणिग्राहो जपेत्"* । यानमित्यवाच्यमिति चेत्, न; "रथाप्रासा-[3]वश्वादियानेऽप्येतामेवंभूतामेव जपेत्। न विलापमूहं वा कुर्यात्"*।

[4]किञ्च—

**अध्वनि चतुष्पथान् प्रतिमन्त्रयेत, नदीश्च विषमाणि च महावृक्षान् श्मशानञ्च—'मा विदन् परिपन्थिन' इति ॥ २ ॥**

---

A. मन्त्रस्तु—

ॐ सु-किंशुकं शाल्मलिं विश्वरूपं
सुवर्णवर्णं सुकृतं सुचक्रम्।
आरोह सूर्ये अमृतस्य नाभिं
स्योनं पत्ये वहतुं कृणुष्व ॥ इति।

मन्त्रब्राह्मणम् १।३।११। विनियोगस्तु शाङ्खायनगृह्यसूत्रे १।१५।१३। कौशिकसूत्रे ७७।१। मानवगृह्यसूत्रे च १।१३।६। अत्र 'वहतु'मित्यत्र 'वहन्त'मिति गुणविष्णुः पठति व्याख्याति च तथैव स्वीये छान्दोग्यमन्त्रभाष्ये।

अस्य व्याख्या—हे सूर्ये हे वधु, यथा सूर्यपत्नी तेजोरूपा तद्वत् तेजस्वति; त्वम् इमं रथम् आरोह अधितिष्ठ। कीदृशं रथमित्याह—सु-किंशुकं शोभनपलाशपुष्पाभम्, शाल्मलिं शाल्मलिकाष्ठनिर्मितम्, विश्वरूपं चित्रितम्, सुवर्णवर्णं काञ्चनकान्तिम्, सुकृतं सुनिर्मितम्, सुचक्रं सुन्दरचक्रोपेतम्, अमृतस्य पानीयस्य (कल्याणस्य वा) नाभिम् उत्पत्तिस्थानम्, स्योनं सुखोपवेशनस्थानम्, आरुह्य च पत्ये पौरुषे (स्वपतिगृहमासुं वा) वहतुं वहनम्, आत्मनः कृणुष्व कुरुष्व। गुणविष्णुमते वहन्तं यान्तमिति रथविशेषणम्।

---

1. '-र्थं वध्वाः' नास्ति ख। 2. 'वधः' घ। 3. 'रथ्या शालावश्वादि-' क, इदं ख-पुस्तके प्रमादात् तृतीयसूत्रमध्ये लिखितम्। 4. 'किञ्च' नास्ति ख।

वध्वा सह पाणिग्राहः अध्वनि वर्त्तमानांश्चतुष्पथान् 'मा विदन्' (A)'इत्येतेन मन्त्रेण। नदीश्च "प्रतिमन्त्रयेत (B)इति प्रत्येकमनुषज्यते। विषमाणि सिंहव्याघ्रचौरादिभय-युक्तानि स्थानानि"*। महावृक्षान् अतिप्रवृद्धशाखान्, पथः समीपस्थान् दूरस्थान-पीति। श्मशानं समीप(स्थ)मेव।

**अक्षभङ्गे नद्धविमोक्षे यानविपर्यासेऽन्यासु चाऽऽपत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय [3]व्याहृतिभिर्हुत्वाऽन्यद् द्रव्यमाहृत्य 'य ऋते चिदभिश्रिष' इत्याज्यशेषेणाभ्यञ्जेत् ॥ ३ ॥**

'अक्षस्य भङ्गे विनाशे'* नद्धं योक्त्रादिबन्धस्तस्य विमोक्षे, यानविपर्यासे औत्तराधर्यप्रातिलोम्ये। अन्यासु चाऽऽपत्सु यानात् पतनसुवर्णनाशाद्यासु, "यमेव दाराहरणकालाग्निव्याहृतं तमग्निं हरन्ति "वहन्ति। तमेव परिसमूहनादि-विधिनोपसमाधाय, नित्य-नैमित्तिक-काम्यहोमार्थत्वादेव तस्याग्नेरवाच्यमिति चेत्? न, 'सायमाहुत्युपक्रम एवात ऊर्द्ध्वं गृह्येऽग्नौ होमो विधीयते' इति [ सू १।१।२३ ] वचनात्। प्राक् सायं होमादक्षभङ्गादिनिमित्त उत्पन्ने किमयं नैमित्तिको

A. मन्त्रस्तु—

ॐ मा विदन् परिपन्थिनो य आसीदन्ति दम्पती।
सुगेभिर्दुर्गमतीतामपद्रान्त्वरातयः॥ इति।

मन्त्रब्राह्मणम् १।३।१२। विनियोगस्तु आश्वलायनगृह्यसूत्रेऽपि १।८।६।

अस्य व्याख्या—ये परिपन्थिनश्चौराः, आसीदन्ति पथीति शेषः, ते इमौ रथारूढौ दम्पती जायापती इति मा विदन् मा जानन्तु। किञ्च इमौ दम्पती सुगेभिः सुगमैर्मार्गैः दुर्गं दुर्गमस्थला-दिकम्, अतीताम् अतिक्रामताम्, अन्येऽपि अरातयः शत्रवः, अपद्रान्तु अपगच्छन्तु। इति।

B. नदीलक्षणमुक्तं कर्मप्रदीपे—

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते।
न ता नदीशब्दवाच्या गर्तास्ते परिकीर्तिताः॥ इति १।१०।६।

धनुःप्रमाणञ्च विष्णुधर्मोत्तरे प्रथमकाण्डे—

द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयञ्च शयः स्मृतः।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रकः॥ इति।

1. 'इत्यनेन' घ। 2. 'प्रतिमन्त्रयते' क, चिह्नितांशो नास्ति ग-घ। 3. 'महाव्याहृतिभिः' क-ख-ग। 4. 'अक्षः प्रसिद्धः तस्य भङ्गे, नद्धविनाशे' क-ग। 5. 'यमेवोदाहरण-' क-ग। 6. 'वहन्ति' नास्ति ग।

होमस्तत्र कर्त्तव्य उत नेत्येतदाशङ्कानिवृत्त्यर्थमिदमुच्यते—तमेवोपसमाधायेति । अनाहिताग्निपक्षे तु यमेव किञ्चिदग्निं सन्निधौ बध्वा हरन्ति आनयन्ति तमेवोपसमाधायेति। व्याहृतिभिर्हुत्वेति व्याहृतिग्रहणं परिसंख्यानार्थम्, कथं नाम क्षिप्रहोमः स्यात्(A) न तन्त्रहोम इति । एवञ्च न्यञ्चकरण-पर्युक्षणे कृत्वा आज्यं संस्कृत्य समिधमाधाय प्रायश्चित्तार्थत्वात् व्याहृतिचतुष्टयं हुत्वाऽनुपर्युक्ष्य, अक्षादि यच्चि नष्टद्रव्यं वस्तु 'तदन्यदाहृत्य'* (B)'य ऋते चिदि'त्यृचा हुतशेषेणाभ्यञ्जेत्(C) । साम्नेति चेत् ? न ; ऋगधिकारात् साम्नेति वाऽवचनात् ।

## वामदेव्यं गीत्वारोहेत् ॥ ४ ॥

अपवृत्ते कर्मणीति सिद्धे पुनर्वामदेव्यग्रहणं क्रमार्थम् । [2]अन्यथाऽनुपर्युक्षणान्ते प्राप्नोति (D) ।

---

A. परिसमूहनादिवर्जितः क्षिप्रहोम इत्युक्तं प्राक् ( पृ० ४७—४९ ) ।

B. मन्त्रस्तु—

ॐ य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विहुतं पुनः ॥ इति

सामवेदसंहितापूर्वार्चिकः ३।२।६।३ ।

अस्य व्याख्या—यः इन्द्रः, अभिश्रिषः अभिश्लिषः, अभिश्लेषणात् सन्धानद्रव्यात् , ऋते चित् विनाऽपि, जत्रुभ्यो ग्रीवाभ्यः सकाशात्, आतृदः आतर्दनात् आरुधिरनिस्रवणात् , पुरा पूर्वमेव सन्धिं सन्धातव्यम्, तं सन्धाता संयोजयिता भवति । मघवा मघवान् , पुरुवसुः बहुधनः स इन्द्रः विहुतं विच्छिन्नं तं पुनः निष्कर्ता संस्कर्ता भवति । इति ।

C. हुतशेषाज्येन रथचक्रादिद्रव्यमानीय मन्त्रेण अभ्यञ्जेदभ्यञ्जयेत् म्रक्षयेदित्यर्थः । अभ्यक्तं च योजयेदिति कर्त्तव्यता । संस्कारतत्त्वे 'आज्येनाभ्युक्षयेदि'ति पाठस्तु लिपिकर-प्रमादजन्य इति मन्यामहे, न खलु रघुनन्दनोऽभ्यञ्जनस्याभ्युक्षणमर्थमकारणं कल्पयिष्यतीति । 'अक्षभङ्गादिनिमित्तहोमस्तु इदानीं तथाचाराभावात् भवदेवभट्टेन न लिखितः मयाऽपि प्रयोगे न लेख्य' इत्यप्यत्र रघुनन्दनलेखः सुधीभिरवगन्तव्यः ।

D. तथा च प्राग् वामदेव्यगानं कृत्वा ततोऽक्षाद्यभ्यञ्जनं प्राप्नोतीति सूत्रमेतत् तन्निषेधतीति भाष्यकाराणामाशयः । तर्कालङ्कारस्तु—'कर्मापवर्गविहिताद् वामदेव्यगानादपरस्यैव वामदेव्य-गानस्यैतदर्थत्वादि'त्याह, तदत्र द्विर्वामदेव्यगानं वा क्रमविपर्यासो वेति भगवन्तोऽनूचाना निर्दिशन्तु ।

---

1. विघ्नितांगो नास्ति ख-ग । 2. 'इतरथाऽ-' घ ।

## प्राप्तेषु वामदेव्यम् ॥ ५ ॥

गायेदिति वाक्यशेषः(A)।

## गृहागतां पतिपुत्रशीलसम्पन्ना ब्राह्मण्योऽवरोप्याऽऽनडुहे चर्मण्युपवेशयन्ति—इह गावः प्रजायध्वमिति ॥ ६ ॥

गृहागतां गृहप्राप्तां वधूं पतिसम्पन्ना अविधवाः पुत्रसम्पन्नाः शीलसम्पन्नाः ब्राह्मण्यः यानादवरोप्य उत्तार्य 'आनडुहे[1] चर्मण्युपवेशयन्तीत्युक्तार्थम्। किं तूष्णीमुपवेशयन्ति ? न ; कथं तर्हि[2] ? 'इह गावः प्रजायध्वम्' (B)इत्यनेन मन्त्रेण भर्त्रा जप्यमानेन।

## तस्याः कुमारमुपस्थ आदध्युः ॥ ७ ॥

तस्या उपविष्टायाः कुमारमकृतचौडं जटिलमिति[3] 'उपस्थे[4] उत्सङ्गे[5] आदध्युः स्थापयेयुस्ता एव ब्राह्मण्यः।

---

A. वध्वा प्राप्तेषु पतिगृहेषु 'गृहसमीपे आगतं यानं ज्ञात्वा' इत्यर्थं इति छब्राह्मण्यः। वामदेव्यं गायेत् पतिः। 'पतिगृहं प्रथमप्राप्तौ वामदेव्यं गीत्वा प्रवेशयेत्' इति तु रघुनन्दनवर्णनम्, अत्र 'रघुनन्दनवर्णनायां प्रमाणं नास्ती'त्युक्तं चन्द्रकान्तेन, साधितञ्च 'वधूश्चेदानीमपि यानस्थितैव वर्तते ब्राह्मण्यः खल्वेनां यानादवरोपयिष्यन्ती'ति हेतुना ; तत् कथमिति न विद्मः, वामदेव्यगानानन्तरं वध्वा गृहप्रवेशस्य सर्वसम्मतत्वात्, क्त्वाच आनन्तर्यमात्रार्थत्वात्। इति।

B. मन्त्रस्तु—

ॐ इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः।
इहो सहस्रदक्षिणोऽपि पूषा निषीदतु ॥ इति।

मन्त्रब्राह्मणम् १।३।१३।

अस्य व्याख्या—इह अस्मिन् दम्पत्योः सम्बन्धिनि गृहे, गावः प्रजायध्वं प्रजननेन बहुला भवन्तु, इह अश्वाः, इह पूरुषाः, प्रजायध्वम्। उ विशेषतः, इह पूषा देवता निषीदतु, किम्भूतः ? सहस्रदक्षिणः। अयमर्थः—यस्य पूष्णः प्रसादेन गोसहस्रदक्षिणा अपि क्रतवः सम्पद्यन्ते। यद्वा इह सहस्रदक्षिणोऽपि सहस्रदक्षिणादानसमर्थोऽपि सुतरां पूषा बहुपोषको जनः, निषीदतु अधितिष्ठतु। इति।

---

1. 'आनडुहे' नास्ति घ। 2. 'तर्हि' नास्ति घ। 3. 'इति' नास्ति घ। 4. 'तमुपस्थे' क-घ। 5. 'उत्सङ्गे' नास्ति क।

# तस्मै शकलोटानञ्जलावावपेयुः फलानि वा ॥ ८ ॥

तस्मै कुमाराय वधूत्सङ्गोपविष्टाय अञ्जलौ[1]शकलोटाः(A)कुमुदनीलोत्पलगोलकाः तानावपेयुस्ता एव ब्राह्मण्यः[1]*। [2]फलानि वार्तव्यान्यावपेयुः[2]*।

# उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोत्यष्टाविह धृतिरिति ॥ ९ ॥

उत्सङ्गादुत्थाप्य कुमारं वधूं सन्निधावुपवेश्य ध्रुवा आज्याहुतीर्जुहोति। ध्रुवा इति श्रुतेरविनाशित्वप्रदर्शनार्थम्। अथवा ध्रुवा नित्या अवश्यं होतव्या इत्यर्थः। कथं नाम? श्वशुरगृहनिवासपक्षेऽपि [3]ता अवश्यं होतव्या इति। अथवा आभिर्हु ताभिर्वध्वाः पतिगृहे ध्रुवत्वं स्थिरत्वं जन्यते इति ध्रुवाः। अष्टाविति। आम्नाये तु [4]द्व्यवसानत्वात् मन्त्रस्याऽऽहुतिद्वयमेकैव मा भूदित्यतोऽष्टावित्युक्तम्। अत्र केचित् सम्प्रदानार्थत्वात् चतुर्थीं कुर्वन्ति 'इह धृतये स्वाहे'ति, [5]तदयुक्तम्; कुतः[5]*? 'मन्त्रान्ते स्वाहाकार' इति वचनात् [सू १।९।२१]। सिद्धस्य हि समाम्नाये मन्त्रस्य स्वाहाकारमात्रमेवान्ते [6]विधीयते नान्यः [7]कश्चिद्विशेषः। तस्मान्न चतुर्थी स्यादिति। तथा चोक्तम्—

'धृतिहोमे न प्रयुञ्ज्याद् गोनामसु तथाऽष्टसु।
चतुर्थीम[8]त्र इत्येतद् गोनाम न हि हूयते(B)।' इति।

[9]प्रयोगस्तु—इह धृतिः स्वाहा, इह स्वधृतिः स्वाहा, इह रन्तिः स्वाहा, इह रमस्व स्वाहा, मयि धृतिः स्वाहा, मयि स्वधृतिः स्वाहा, मयि रमः स्वाहा, मयि रमस्व स्वाहा (C) इति।

---

A. शके कर्दमे लोटन्तीति शकलोटाः शालूकान्युच्यन्ते, तानि च कह्लारकुमुदनीलोत्पलमूलानीति चन्द्रकान्तकृता व्याख्या।

B. कर्मप्रदीपः ३।६।९। अत्र चतुर्थचरणे 'गोनाम्नी'ति चन्द्रकान्तधृतः, 'गोनामसु हि' इति 'वङ्गवासी'मुद्रितश्च पाठः।

C. मन्त्रस्तु—

ॐ इह धृतिरिह स्वधृतिरिह रन्तिरिह रमस्व।
मयि धृतिर्मयि स्वधृतिर्मयि रमो मयि रमस्व॥ इति।

आकरस्थानमस्यस्य मन्त्रस्य साममन्त्रब्राह्मणम् १।३।१४।

अस्य व्याख्या—हे वधु, इह अस्मिन् गृहे तव धृतिर्धैर्यमस्तु। इह तव स्वधृतिः स्वैरात्मीयैः

---

1. 'शकलोटानावपेयुस्ता एव ब्राह्मण्यः, शकलोटाः कुमुदनीलोत्पलगोलकाः' ख-ग। 2. चिह्नितांशो नास्ति च। 3. 'एता' ख-ग-च। 4. 'व्यवसानत्वात्' क-च। 5. 'तन्न' च। 6. 'वि-' नास्ति ख। 7. 'कश्चिदपि' च। 8. '-मन्त्रा' ख। 9. 'प्रयोगः' क-च।

**समाप्तासु समिधमाधाय यथावयसं गुरून् गोत्रेणाभिवाद्य यथार्थम् ॥ १० ॥**

समाप्तास्विति समिधमाधायेति च क्रमार्थं [1]पुनरुच्यते। कथं [2]नाम ? समाप्तासु ध्रुवाहुतिषु [3]अन्याहुतिषु अन्यासु च सर्वप्रायश्चित्ताद्यासु समिधमाधायाभिवादयेत्। ततोऽनुपर्यु[4]क्षणादि कुर्यादिति[5]। यथावयसं यो यो वयसा वृद्धस्तं तं पूर्वमिति। गुरूनिति विद्यागुरुमातृ-पितृप्रभृतीनि [6]इति। तत्रापि विद्यागुरुः पूर्वमभिवाद्यः। तथा च मनुः—

'न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत्' (A) इति।

---

धृतिर्धारणम् एकत्र मिलनमस्तु। इह तव रन्तिः रमणं वित्तस्यास्तु। इह रमस्व रममाणा तिष्ठ। किञ्च मयि भर्त्तरि तव धृत्यादिकं विशेषेणास्तु। इति।

A. मनुसंहिता २।२०५। तथा च—

लौकिकं वैदिकं वाऽपि तथाध्यात्मिकमेव च।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत्॥ इति मनुसंहिता २।११७।

पित्रोस्तु प्रथमं मातरमेव। तथा च मनुः—

उपाध्यायान् दशाऽऽचार्य आचार्याणां शतं पिता।
सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते॥ इति (२।१४५)।

न च पूर्वोक्तेन विरोधः, 'अत्रोपनयनपूर्वकसावित्रीमात्राध्यापयिताचार्योऽभिप्रेतस्तमपेक्ष्य पितुरुत्कर्षवचनात्। अनन्तरं च—

उत्पादक-ब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्॥

इत्यनेन मुख्याचार्यस्य पितरमपेक्ष्योत्कर्षवचनात्। अथ—

कृष्णोऽपि बलदेवस्य पादौ जग्राह सत्वरम्।
देवक्याश्च महाबाहुर्बलदेवसहायवान्॥

इति पौराणिकलिङ्गात् क्रमः कल्प्यताम् ? उच्यते—कल्पनीयः क्रम इति सत्यम्, स च तावद् स्मार्तेनैव लिङ्गेन कल्पयितुमुचितो न तु तदनादृत्य पौराणिकेन, मनुस्मृतेर्बलवत्त्वात् 'भगवानपि सर्वात्मा' इत्युपक्रम्य 'ननाम दण्डवद् भूमौ मातरं पितरं तथा' इति पुराणान्तरगतेन लिङ्गेन सत्प्रतिपक्षितत्वाच्च।

---

1. 'पुनरुक्तम्' घ। 2. 'नाम' नास्ति घ। 3. 'अन्याहुतिषु' नास्ति घ। 4. '-क्षणादीति' क। 5. इति नास्ति घ। 6. 'इति' नास्ति न।

गोत्रेणेति। अन्यत्रापि गुरोर्गोत्रेणाभिवाद्य इति दर्शयति। अभिवादनप्रयोगोऽधस्तादेव व्याख्यातः। एवमसावभिवादयेत्। वधूरपि पादवन्दनं कुर्यात्। एवमभिवाद्य यथार्थम्, अनुपर्युक्षणादितन्त्रं समापयेदित्यर्थः।

इति [1]भट्टनारायणकृतौ[1]* [2]गोभिलीयगृह्यसूत्रभाष्ये[2]* द्वितीयप्रपाठकस्य चतुर्थी कण्डिका॥

---

मातरं पितरञ्चोभौ दृष्ट्वा पुत्रस्तु धर्मवित्।
प्रणम्य मातरं पश्चात् पितरं प्रणमेद् गुरुम्॥

इति पुराण एव प्रथमं मातुः प्रणामाभिधानाच्च। तस्मात् पितुरादौ पादग्रहणं ततो मातुरिति तत्त्वकारमतमनुपादेयमिति।

---

1. चिह्नितांशो नास्ति ख। 2. चिह्नितांशो नास्ति ग। 1—2. नास्ति घ।

# द्वितीयप्रपाठकस्य पञ्चमी कण्डिका

---

## अथातश्चतुर्थीकर्म ॥ १ ॥

वर्तिष्यत इति वाक्यशेषः। अथशब्दः पूर्वप्रकृतार्थः। अथ विवाहादिदिवसाद् या चतुर्थी, नानन्तर्याद् ध्रुवहोमस्य, न च प्रतिपत्प्रभृतिका या चतुर्थी। इतरथा [1]चतुर्थीशब्दस्याविशेषादनन्तरकर्मचतुर्थी इतरा वा स्यात्। अतःशब्दो हेत्वर्थे। यत एतस्मिन्नक्रियमाणे अस्याः पापी लक्ष्मीः शरीरात् नापैति अत एतदवश्यं कर्त्तव्यमिति। यथोक्तायां चतुर्थ्यां कर्म चतुर्थीकर्म(A)।

## अग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति अग्ने प्रायश्चित्त इति चतुः ॥ २ ॥

[2]अग्निमुपसमाधायेत्युक्तार्थम्[3]*। प्रायश्चित्तलिङ्गैर्मन्त्रै[4]राऽऽज्याहुतयः प्रायश्चित्ता-[5]ज्याहुतयः, ता जुहोति 'अग्ने प्रायश्चित्त' इत्यनेन मन्त्रेण। [6]किं सकृत्? न; कथं तर्हि?[7]* चतुः। चतुश्चतुरिति वीप्सा कर्त्तव्या।

किं समाम्नायसिद्धमेवाभ्यस्य चतुश्चतुर्जुहोति? न; कथं तर्हि?

## अग्नेः स्थाने वायुचन्द्रसूर्याः ॥ ३ ॥

प्रथमा तावदाहुतिर्यथापठितेनैव मन्त्रेण भवति। अन्यासु तिसृष्वाहुतिषु अग्नेः स्थाने अग्निपदस्थाने वायु-चन्द्र-सूर्याः क्रमेण कर्त्तव्या इति वाक्यशेषः। एतावानेव विशेषः। शेषं पूर्ववत्। एवं चतसृ[6]ष्वाहुतिषु पापी लक्ष्मी[7]रिति स्यात्। [8]कुतः?

---

A. अत्र तर्कालङ्कारः—'चतुर्थी इति स्त्रीलिङ्गनिर्देशाच्चतुर्थी रात्रिरित्यवगम्यते। इतरथा चतुर्थकर्मेति निर्देशः स्यात्।......तस्मादनुमिनुमो विवाहाच्चतुर्थदिने रात्रावयं होम इति। एवं सत्यत्र रात्रेरपेक्षा दृष्टार्था भवति, अन्यथाऽदृष्टार्थत्वमस्याः कल्पनीयम्, तच्चानिष्टम्' इत्याह।

---

1. 'चतुर्थे-' ख। 2. चिह्नितांशो नास्ति घ। 3. '-राज्या-' ख-ग। 4. '-ज्या-' नास्ति ग। 5. चिह्नितांशो नास्ति घ। 6. '-ष्वाज्याहुतिषु-' घ। 7. 'इति' नास्ति घ। 8. 'कुतः' नास्ति ग-घ।

प्रथमस्यैव मन्त्रस्याभ्यासोपदेशात्। तस्य चाग्ने: स्थाने वायु-चन्द्र-सूर्या इत्येतावतो विशेषस्योक्तत्वात्।

किञ्च—

## समस्य पञ्चमीं बहुवदूह्य ॥ ४ ॥

तथैव समस्य बहुवत्, अग्नि-वायु-चन्द्र-सूर्या इत्यादि। पञ्चमीं पञ्चमीमाहुतिं जुहुयादित्यत्रापि वीप्सा द्रष्टव्या। ननु समाम्नाय[1]सिद्ध एव बहुवत् समासः कस्मादिह पुनरुच्यते? आह—ऊहविशेषकथनप्रसङ्गात् अनूद्यते ऊह्येति। कथं नाम? अत्रापि पापी लक्ष्मीरित्येतावदेव [2]कर्त्तव्यम्। शेषं पूर्ववत्। एवं [3]द्वितीयपञ्चके पतिघ्नीति विशेषः स्यात्, [4]शेषं पूर्ववदेव। तृतीये [5]त्वाहुतिपञ्चके अपुत्र्येति [6]विशेषः। चतुर्थे अ-पशव्येति। [7]मन्दधियां सुखावबोधार्थं प्रयोगः प्रदर्श्यते[7]*—

अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीस्तामस्या अपजहि स्वाहा ॥ १ ॥

[8]वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीस्तामस्या अपजहि स्वाहा[8]* ॥ २ ॥

चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीस्तामस्या अपजहि स्वाहा ॥ ३ ॥

सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीस्तामस्या अपजहि स्वाहा ॥ ४ ॥

अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ ब्राह्मणो वो नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीस्तामस्या अपहत स्वाहा(A) ॥ ५ ॥

---

A. मन्त्राणामेषां पञ्चानामाकरस्थानन्तु मन्त्रब्राह्मणम् १।४।१-९। विनियोगस्तु खादिरगृह्यसूत्रेऽपि १।४।१२। मन्त्रब्राह्मणे तु मन्त्राणां पाठभेदो वर्त्तते इति तेऽत्रोपस्थाप्यन्ते—

प्रथममन्त्रः—

अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीस्तामस्या अपजहि ॥

---

1. 'सिद्धमेव' क-ग। 2. 'वक्तव्यम्' घ। 3. 'द्वितीये चाहुतिपञ्चके' घ। 4. 'शेषं पूर्ववत्' 5. 'त्वाहुतिपञ्चके' नास्ति घ। 6. 'विशेषः' नास्ति घ। 7. 'प्रयोगस्तु व्याहृतिहोमान्तम्' घ। 8. चिह्नितांशो नास्ति ग।

(1)द्वितीये पञ्चके एव एव प्रयोगः। विशेषस्तु पापी लक्ष्मीरित्येतस्मिन् पदे पञ्चस्वपि

---

द्वितीयमन्त्रः—

वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पतिघ्नी तनूस्तामस्या अपजहि॥

तृतीयमन्त्रः—

चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अपुत्र्या तनूस्तामस्या अपजहि॥

चतुर्थमन्त्रः—

सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अ-पशव्या तनूस्तामस्या अपजहि॥

पञ्चममन्त्रः—

अग्नि-वायु-चन्द्र-सूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ।

ब्राह्मणो वो नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीर्या पतिघ्नी या अपुत्र्या य[1] अ-पशव्या तनूस्तामस्या अपहत॥

एतेषां गुणविष्णुकृता व्याख्या—"यजुःपञ्चकमिदं चतुर्थीहोमकर्मणि विनियुक्तम् आमन्त्र्यमाणाग्निवाय्वादिदैवतम्। हे अग्ने प्रायश्चित्ते दोषाणां निष्कर्तः, त्वं देवानाम् इन्द्रादीनाम्, प्रायश्चित्तिर्निष्कृतिः दोषस्यापहन्ता असि भवसि यतः, अतः ब्राह्मणः अहं त्वा त्वाम्, उपधावामि उपसर्पामि। किम्भूतः? नाथकामः याच्ञाकामः, तामेव याच्ञां दर्शयति—अस्याः कन्याया या पापी लक्ष्मीः अशुभसम्बन्धिनी शोभा, ताम् अपजहि अपहर। तस्यामपसारितायामस्याः शुभैव शोभा अवतिष्ठते। उत्तराणि चत्वार्येतेनैव व्याख्यातानि।

पतिघ्नीति 'लक्षणे जायापत्योष्टक्' (पा० ३।२।५२) भर्तृमारिणीति यावत्। तनूशब्दः समुदायवचनोऽपि अत्रावयवे वर्तते यथा ग्रामो दग्ध इति। अस्याः पतिघ्नीत्वं दूषणमपनीय जीवत्पतित्वं कुर्वित्यर्थः।

अपुत्र्येति पुत्रस्य निमित्तं पुत्र्या, 'पुत्राच्छ च' (पा० ५।१।४०) इति यत्, न पुत्र्या अपुत्र्या—पुत्रस्य निमित्तं या न भवतीत्यर्थः।

पशूनां गोमहिषादीनां निमित्तं पशव्या, 'गोद्व्यचो०' (पा० ५।१।३९) इत्यादिना यत्, न पशव्या अ-पशव्या पशुघातिनीत्यर्थः। पूर्वकैश्चतुर्भिर्मन्त्रैरग्न्यादयः प्रत्येकमभ्यर्थिताः, अनेन तु समुदितास्त एव प्रार्थ्यन्ते। 'मन्त्राम्नाये···इत्थमाहुतिविंशकम्' इति छन्दोगपरिशिष्टवचनात् पञ्चानामपि मन्त्राणां विंशतित्वं होमानुष्ठाने" इति।

A. द्वितीयादिपञ्चकानां मन्त्रास्तु—

---

1. '-येऽपि' च।

मन्त्रेषु पतिघ्नी स्यात्। एवं तृतीये पञ्चके अपुत्र्येति। चतुर्थे [1]पञ्चके अ-पशव्येति। एवमेताः प्रयोगकाले विंशतिराहुतयो भवन्तीति। [2]तथा चामुमेव सूत्रार्थं कर्म-प्रदीपकारः स्पष्टीकृतवान्—

. . . . . . . . . . . .

द्वितीयपञ्चके प्रथमः—

ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पतिघ्नी तनूस्तामस्या अपजहि स्वाहा॥

द्वितीयः—

ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पतिघ्नी तनूस्तामस्या अपजहि स्वाहा॥

तृतीयः—

ॐ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पतिघ्नी तनूस्तामस्या अपजहि स्वाहा॥

चतुर्थः—

ॐ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पतिघ्नी तनूस्तामस्या अपजहि स्वाहा॥

पञ्चमः—

ॐ अग्नि-वायु-चन्द्र-सूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ।

ब्राह्मणो वो नाथकाम उपधावामि याऽस्याः पतिघ्नी तनूस्तामस्या अपहत स्वाहा॥

तृतीयपञ्चके प्रथमः—

ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अपुत्र्या तनूस्तामस्या अपजहि स्वाहा॥

द्वितीयः—

ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अपुत्र्या तनूस्तामस्या अपजहि स्वाहा॥

तृतीयः—

ॐ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि।

ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अपुत्र्या तनूस्तामस्या अपजहि स्वाहा॥

---

1. 'पञ्चके' नास्ति क-ख-ग। 2. 'तथा चे'त्यादि···'विंशकम्' (३४० पृ०) इत्यस्य स्थाने 'अमुमेव सूत्रार्थं कात्यायनः स्पष्टीकृतवान् मन्त्रास्तेऽपि च इत्यादिभिः श्लोकैः' घ।

मन्त्राम्नायेऽग्न इत्येतत् पञ्चकं लाघवार्थिभिः ।
पठ्यते [1]यत्प्रयोगे स्यान्मन्त्राणामत्र विंशतिः ॥
अग्नेः स्थाने वायुचन्द्रसूर्या बहुवदूह्य च ।
समस्य पञ्चमीसूत्रे चतुश्चतुरिति श्रुतेः ॥
प्रथमे पञ्चके पापी लक्ष्मीरिति पदं भवेत् ।
अपि पञ्चसु मन्त्रेषु इति यज्ञविदो विदुः ॥

चतुर्थः—

ॐ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अपुत्र्या तनूस्तामस्या अपजहि स्वाहा ॥

पञ्चमः—

ॐ अग्नि-वायु-चन्द्र-सूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ ।
ब्राह्मणो वो नाथकाम उपधावामि याऽस्या अपुत्र्या तनूस्तामस्या अपहत स्वाहा ॥

चतुर्थपञ्चके प्रथमः—

ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अ-पशव्या तनूस्तामस्या अपजहि स्वाहा ॥

द्वितीयः—

ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अ-पशव्या तनूस्तामस्या अपजहि स्वाहा ॥

तृतीयः—

ॐ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अ-पशव्या तनूस्तामस्या अपजहि स्वाहा ॥

चतुर्थः—

ॐ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ।
ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अ-पशव्या तनूस्तामस्या अपजहि स्वाहा ॥

पञ्चमः—

ॐ अग्नि-वायु-चन्द्र-सूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ ।
ब्राह्मणो वो नाथकाम उपधावामि याऽस्या अ-पशव्या तनूस्तामस्या अपहत स्वाहा ॥

इति विंशतिमन्त्रा मन्त्रब्राह्मणानुक्ता भाष्यकार-भवदेवादिभिरनुमोदिता इति ।

1. 'तत्र' ग ।

द्वितीये तु पतिघ्नी स्याद्वपुत्र्येति तृतीयके ।
चतुर्थे त्वपशव्येति इत्यमाहुतिविंशकम्(A) ॥ इति ।

'कश्चिदत्र सूत्रार्थमविदित्वैव बहु व्याख्यानं कृतवान्[1]* । एकस्यां वर्णनायामष्टावाहुतयः। अपरस्यां सप्तदश। अन्यस्यामन्यथैव विंशतिः। अन्यस्यां पञ्चैवेति[2]। तदेतत् [3]सर्व एव प्रग्रन्थः[2]*। (B)किमर्थं ग्रन्थगौरव[4]जनकेन तद्व्याख्यानदूषणोपन्यासेन लिखितेन, यदि वः कौतूहलं तद् "वल्गुसोम"भाष्यादुपलब्धव्यम् ।

किञ्च—

## आहुतेराहुतेस्तु संपातमुदपात्रेऽवनयेत् ॥ ५ ॥

उक्तार्थमेतत्(C) ।

## [5]तेनैनां सकेशनखामभ्यज्य ह्रासयित्वा प्लावयन्ति ॥ ६ ॥

तेनोदपात्राज्येन [6]एनां वधूम् अभ्यज्य(D), केशैश्च नखैश्च सह सकेशनखां ह्रासयित्वा(E) उद्वर्त्तयित्वा [7]प्लावयन्ति [8]स्नापयन्ति । बहुवचनादनियतः कर्त्ता(F) ।

A. कर्मप्रदीपः ३।६।१-४ ।

B. यथादर्शं सन्निवेशितोऽयं पाठः ।

C. अत्र गृह्यकर्मप्रकाशिकायामितिकर्तव्यता—"ततो व्याहृतिहोमाद्युपरिष्टात् तन्त्रं पूर्णपात्रदक्षिणादानान्तं परिसमाप्य प्रदक्षिणनमस्कारं कृत्वा वामदेव्यं गायेत् । ततः सम्पाताज्ययुक्तजलेन वधूं सर्वाङ्गमभ्यज्योद्वर्त्तयित्वा स्नापयन्त्यन्याः" इति । एवञ्च भाष्यकारतर्कालङ्काररघुनन्दनादिभिरनुक्तमपि चतुर्थीहोमापवर्गकर्मानेन निर्धारितमिति । तथा च भवदेवोक्तं 'वधूस्नापनानन्तरमुदीच्यं कर्म कर्तव्यमि'ति तथाऽनाचरणादयत्नं नोपादेयमेवेति सुधीभिरवगन्तव्यम् ।

D. म्रक्षयित्वेत्यर्थः ।

E. ह्रासनं व्याकुरुते कात्यायनो गृह्यासंग्रहे—

उद्वर्तनं नखच्छेदो रोमच्छेदनमेव च ।
स्नपनं मेखलायाश्च ह्रासनानि विदुर्बुधाः ॥ इति गृ० स० २।३८ ।

ह्रासयित्वेत्यत्र रघुनन्दनः 'क्रामयित्वे'ति पठित्वा अग्निस्थानाद् देशान्तरं 'गमयित्वे'ति व्याचख्यौ ।

F. अत्र विवाहविषये अनुक्तमन्येषु गृह्येषु तस्मात् किञ्चिदुपादीयते । तथा च खादिरद्राह्यायणगृह्यसूत्रयोः—ब्राह्मणः सोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं गत्वोदङ्मुखस्तिष्ठेत् । स्नातामहतेनाच्छाद्य 'या अकृन्तन्नि'त्यानीयमानायां पाणिग्राहो जपेत् 'सोमोऽददद्'इति । पाणि-

1. 'कश्चित् सूत्रार्थमन्यथैव कृतवान्' ख। 2. 'इति तदेतत् सर्व एव प्रग्रन्थः' नास्ति ख। 3. 'स एव' क। 4. '-जनकेन' नास्ति ख ग, '-जापकेन' ख। 5. 'तेनैतां' क-ग। 6. 'एतां' क-ग। 7. 'प्लावयन्ति' नास्ति ख। 8. 'स्नापयन्ति' क-ग।

प्राहस्य दक्षिणत उपवेशयेत् । अन्वारब्धायां स्रुवेणोपघातं महाव्याहृतिभिराज्यं जुहुयात् । समस्तां ताभिश्चतुर्थीमेवं चौलोपनयगोदानेषु । अग्निरेतु प्रथम इति षड्भिश्च पाणिग्रहणे । नाऽऽज्यभागौ न स्विष्टकृत्, आज्याहुतिष्वनादेशे । सर्वत्रोपरिष्टान्महाव्याहृतिभिः । प्राजापत्यया च । प्रायश्चित्तं जुहुयात् । हुत्वोपोत्तिष्ठतः । अनुपृष्ठं गत्वा दक्षिणतोऽवस्थाय वध्वञ्जलिं गृह्णीयात् । पूर्वा माता शमी-पलाशमिश्रान् लाजान् शूर्पे कृत्वा पश्चादग्नेर्दृषत्पुत्रमाक्रामयेद् वधूं दक्षिणेन प्रपदेन 'इममश्मानमि'ति । सकृद् गृहीतमञ्जलिं लाजानां वध्वञ्जलावावपेद् भ्राता । सुहृद् वा कश्चित् । साग्नौ जुहुयात् अविच्छिद्याञ्जलिम् । सं इयं नारीति । 'अर्यमणं पूषणम्' इत्युत्तरयोः । हुते तेनैव गत्वा प्रदक्षिणमग्निं परिणयेत् कन्यला पितृभ्य इति । अवस्थानप्रभृत्येवं त्रिः । शूर्पेण शिष्टानग्नावोप्य प्रागुदीचीमुत्क्रमये'देकमिषे' इति । ईक्षकावेक्षणरथारोहणदुर्गानुमन्त्रणान्यभिरूपाभिः । अपरेणाग्निमौदको गत्वा पाणिग्राहं मूर्धन्यवसिञ्चेत् । वधूं च । समञ्जन्त्वित्यवसिक्तः । दक्षिणं पाणिं साङ्गुष्ठं गृह्णीयात् गृभ्णामि त इति षड्भिः । प्रागुदीचीमुद्वहेत् । ब्राह्मणकुलेऽग्निमुपसमाधाय पश्चादग्नेर्लोहितं चर्माऽऽनडुहमुत्तरलोम प्राग्ग्रीवमास्तीर्य वाग्यतामुपवेशयेत् । प्रोक्ते नक्षत्रेऽन्वारब्धायां स्रुवेणोपघातं जुहुयात् षड्भिर्लेखाप्रभृतिभिः सम्पातानवनयन् मूर्धनि वध्वाः । प्रदक्षिणमग्निं परिक्रम्य ध्रुवं दर्शयति 'ध्रुवा द्यौरि'ति । अभिवाद्य गुरून् गोत्रेण विसृजेद् वाचम् । गौर्दक्षिणा । अत्रार्घ्यम् । आगतेष्वित्येके । त्रिरात्रं क्षारलवणे दुग्धमिति वर्जयानौ सह शय्यातां ब्रह्मचारिणौ । हविष्यमन्नं परिजप्या'न्नपाशेने'त्यसाविति वध्वा नाम ब्रूयात् । भुक्तोच्छिष्टं वध्वै दद्यात् । ऊर्ध्वं त्रिरात्राच्चतसृभिराज्यं जुहुयादग्ने प्रायश्चित्तिरिति समस्य पञ्चमीं सम्पातानवनयन्नुदपात्रे । तेनैनां सकेशनखामाप्लावयेत् । ततो यथार्थं स्यात् ।

छान्दोग्यगृह्यसूत्रेऽप्येवं प्रायः सूत्राणामानुपूर्वीति न पृथगुच्यन्ते ।

जैमिनिगृह्यसूत्रे च—पाणिग्रहणेऽग्निमाह्रियमाणमनुमन्त्रयते 'अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदादि'ति प्रज्वलितमुपतिष्ठते 'इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियमि'ति पुरस्तादग्नेर्ब्राह्मणो वाग्यतः प्रत्यङ्मुख उदकुम्भं धारयंस्तिष्ठेद् दक्षिणतोऽग्नेः शमी-पलाशमिश्रान् लाजाञ्छूर्पं माता धारयेत् मातुरभावे तत्स्थानी प्रत्यगग्नेरेरकां तेजनीं वाऽन्यद्वैवं जातीयं संवेष्ट्य निदध्याद् यथा प्रसार्यमाणं पश्चार्द्धं बर्हिषः प्राप्नोत्यथास्यै वाससी प्रोक्ष्यानुमन्त्र्य ददाति 'या अकृन्तन्नवयन् या अतन्वत याश्च देवीरन्तामभितोऽददन्त । तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः' इति तां श्वग्निमामेरकां दक्षिणेन पादेनाभिजहीति 'प्र मे पतियानः पन्थाः कल्पतामि'त्यजपत्यां स्वयं जपेत् 'प्रास्या' इति दक्षिणत एरकायां भार्यामुपवेश्योत्तरतः पतिरुभावन्वारभेयातां स्वयमुखमुद्रुत्वा-ज्याघारावन्वारब्धायां महाव्याहृतिभिर्हुत्वा या तिरश्चीति सप्तभिर्जुहोति, संपातं प्रथमया मूर्धन्या-

सिञ्चेद् 'या तिरश्ची निपद्यसेऽहं विधरणी' इति। 'तां त्वा घृतस्य धारया संराधां राधयामसि संराधायै स्वाहा'। 'मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु। मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज प्रजां पश्यन्ती सुमनस्यमाना स्वाहा॥' 'अन्वद्यनोऽनुमतिर्यज्ञं देवेषु मन्यताम्। अग्निश्च हव्यवाहनस्तत्करोतु समृध्यतां स्वाहा॥' 'द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनन्धयतस्ते पुत्रान् सविताऽभिरक्षतु। आवाससः परिधानाद् बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु पश्चात् स्वाहा॥' अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम्। शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा॥' 'यानि कानि च पापानि सर्वाङ्गेषु तवाभवन्। पूर्णाहुतिभिराज्यस्य सर्वाणि तान्यशीशमं स्वाहा॥' प्रजापत इत्येका।

अथास्या दक्षिणेन पाणिना दक्षिणं पाणिं गृह्णाति प्रहस्तं पुंस अङ्गुली स्त्रियः साङ्गुष्ठं मिथुनकामो 'गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथा सत्। भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः॥' 'सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये। रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम्॥' 'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयोऽग्निष्टे पतिस्तुरीयोऽहं मनुष्यजा॥' इत्युपनयनावृताश्मानमधिष्ठापयेत् स्त्रीवत्। उत्तरपुरस्तादग्नेर्भार्यया संप्रेक्ष्यमाणो जपति 'अघोरचक्षुरपतिघ्नी म एधि शिवा पतिभ्यः सुमनाः सुवर्चाः। जीवसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे॥' 'आ नः प्रजां जनयतु प्रजावतीराजरसाय समनक्त्वर्यमा। अदुर्मङ्गलीः पतिलोकमाविश शं न एधि द्विपदे शं चतुष्पदे॥' 'तां पूषञ्छिवतमा मेरयस्व यस्यां बीजं मनुष्या वपन्ति। यान ऊरू उशती विश्रयातै यस्यामुशन्तः प्रहरेम शेफम्। अमोऽहमस्मि सा त्वं सामाहमस्म्यृक् त्वं मनोऽहमस्मि वाक् त्वं द्यौरहं पृथिवी त्वं तावेहि संभवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै मामनुव्रता भव सहशय्या मया भवासौ' इत्यथास्या नाम गृहीत्वाऽग्निं परिक्रमेयातामीर्त्वमस्यूर्क्ते माता नाम सा मामेहि सह प्रजया सह रायस्पोषेणेति तस्यां प्रत्याव्रजितायां भ्राताऽन्यो वा सुहृदभिघारितान् लाजाञ्छूर्पादञ्जलिनोपघातमञ्जलावावपेदुपस्तीर्णाभिघारितान् कृत्वा तानितराग्नौ जुहुयात् कन्यलेयं नार्यर्यम्णमिति, 'कन्यलापितृभ्यः पतिलोकं यतीयमव दीक्षामयक्षत स्वाहा॥' 'इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती। दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा॥' 'अर्यमणं नु देवं कन्याऽग्निमयक्षत। स इमां देवो अर्यमा प्रेतो मुञ्चातु मामुतः स्वाहा॥' इति होमान्तेषु जपति 'चतुर्विंशा उत त्वया वयं धारा उदन्या इव। अतिगाहेमहि द्विषः' इति तूष्णीं धारिकाकामायाऽऽवपेच्चतुर्थं दक्षिणं शूर्पपुटं काम इत्याचक्षते, उत्तरपुरस्तादग्नेः सप्तपद्यान्यभ्युत्क्रमयेदेकमिष इति। प्रतिमन्त्रम् 'एकमिषे विष्णुस्त्वाऽन्वेतु', 'द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु', 'त्रीणि रायस्पोषाय विष्णुस्त्वाऽन्वेतु', 'चत्वारि मयोभवाय विष्णुस्त्वाऽन्वेतु', 'पञ्च प्रजाभ्यो विष्णुस्त्वाऽन्वेतु', 'षड्ऋतुभ्यो विष्णुस्त्वाऽन्वेतु', 'सखा सप्तपदी भव' इति सप्तमं प्राचीमवस्थाप्योदकुम्भेन मार्जयेरन् आपोहिष्ठीयाभिस्तिसृभिः, प्रेक्षकाननुमन्त्रयेत—'सुमङ्गलीरियं वधूरिमां समेत पश्यत। सौभाग्यमस्यै दत्वा याथास्तं विपरेतने'ति प्रेक्षयेद् ध्रुवमरुन्धतीं सप्तऋषीन् पश्यानीति प्रतिजानानां ध्रुवोऽसीति ध्रुवमुपतिष्ठेत

ध्रुवोऽसि ध्रुवाऽहं पतिकुले भूयासममुष्येति पतिनाम गृह्णीयादसावित्यात्मनोऽरुन्धतीमरुन्धत्य-रुद्धाऽहं पत्या भूयासममुनेति पतिनाम गृह्णीयादसावित्यात्मनः ।

पूषा त्वेत इति प्रस्थितामनुमन्त्रयते पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन। गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासीति स्वं कुलं प्राप्तां कल्याणशीलाः कल्याण-प्रजाः समवजीर्णाः प्रत्यवरोपयन्तीह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि । एना पत्या तन्वं संसृजस्वाथाजीवी विदथमावदासीति प्रत्यवरोप्याऽऽनडुहे चर्मण्युत्तरलोमन्युप-वेशयेत्, 'इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणोऽभिपूषा निषीदत्वि'ति कुमार-मुपस्थ आधाय शकलोटानावपेत्, फलानि वोत्थाप्य कुमारमन्वारब्धायां जुहुयादिह धृतिरित्यष्टाभिः स्वाहाकारान्तैः, 'इह धृतिरिह स्वधृतिरिह रन्तिरिह रमस्व । मयि धृतिर्मयि स्वधृतिर्मयि रमो मयि रमस्वेति ॥' त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणावधःसंवेशिनावसंवर्तमानौ सह शयातामूर्ध्वं त्रिरात्रात् सम्भवो निशायां जायापतिकर्मण्यं प्रायश्चित्ती जुहुयात् 'अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि । ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्या अपजहि स्वाहा ॥' 'वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि । ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्या अपजहि स्वाहा ॥' 'सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि । ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्या अपजहि स्वाहा ॥' 'चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि । ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्या अपजहि स्वाहा ॥' 'अग्ने वायो चन्द्र सूर्य प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ । ब्राह्मणो वो नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्या अपहत स्वाहा ॥' इति स्थालीपाकादग्निं प्रजापतिं चेष्ट्वा संपातांश्चमस आनीय स्रोतांस्याङ्क्षेत्येनां मूर्ध्नाभि प्रथमं ततो यान्यूर्ध्वं ततो यान्यर्वाञ्चीति ।

अत ऊर्ध्वं गृह्यसूत्राणां मन्त्रांशान् विहाय केवलमितिकर्तव्यतोपादीयते—लौगाक्षिगृह्ये च—अनृक्षरा इत्युदाहारं प्रहिणोति । शमीशाखया सपलाशयाऽपिधायाऽऽहरेत् । एतासामेवापामुदकार्थान् कुर्वीत 'शन्न आप' इत्यकेवलाभिरद्भिः स्नातां 'या अकृन्तन्' इत्यहतं वासः परिधाप्याऽऽशासानेत्यन्त-रतो मौञ्जेन दार्भेण वा योक्त्रेण सन्नह्यति । 'प्रेतो मुञ्चातु' इत्युदानीयोक्तं वाससः कर्म । आचारि-काणि । तूष्णीं निर्मन्थ्यं भ्राष्ट्रात् सान्तपनं यत्र दीप्यमानं वा बहिरग्निमुपसमाधाय परिसमुह्य पर्युक्ष्य परिषिच्य परिस्तीर्याऽऽज्यं विलीनोत्पूतं कृत्वाघारावाज्यभागान्तं हुत्वाऽपरेणाग्निमनो रथं वाऽवस्थाप्य 'योगे योग' इति युनक्ति दक्षिणमितरमुत्तरमितराम् । तूष्णीं विमुञ्चति हिरण्यं निष्क्यं बद्ध्वाऽध्यधिमूर्धनि दक्षिणस्मिन् युगतर्मण्यद्भिरवक्षारयते शं ते हिरण्यमिति । दक्षिणतः पुमान् भवति । अथ जुहोति अग्नये स्वाहेति । आयुषः प्राणं संतन्विति संतनीर्जुहोति । जयाभ्यातानान् राष्ट्रभृतश्च तानि यथोक्तम् । आधिपत्यानि जुहोति । आकूत्या इति त्रिभिस्त्वेत्यन्तैर्हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचं भूः स्वाहेति महाव्याहृतिभिश्चतसृभिरग्न आयूंषीत्याग्निपावमानीभिस्तिसृभिर्हुत्वा हुत्वा मूर्ध्नि संपातानवनयेत् । या ते पतिघ्नी स्वाहेति त्रिभिः । उद्गमेर्दर्भेषु प्राचीमवस्थाप्य

शुचिः पुरस्तात् प्रत्यङ्कुपयन्ता देवस्य ते गृह्णामीति हस्तं गृह्णाति दक्षिणमुत्तानं साङ्गुष्ठं नीचारिक्त-मरिक्तेनैवं सव्यं सव्येन। गृह्णामीति चतस्रमिहुभावनुष्टुभौ जपति, ततो गाथा वाचयति सरस्वति प्रेदमवेत्यनुवाकमुभावित्येके यदि पृथक् तन्त्रम्। प्रदक्षिणमग्निमानीय तत्रैवोपवेश्य संस्थापयेत्। एककर्मणि तन्त्रे उत्तरेणाग्निं प्रत्येत्य ततो विवाहः। य इमे द्यावापृथिवीत्यादय उद्वाहहोमा जय-प्रभृतयश्च नैककर्मणि तन्त्रे स्विष्टकृदाज्यभागौ च। पश्चादग्नेर्दर्भेषु सा त्वमसीति वाचयति। अग्निमभिदक्षिणमानीयेह्यश्मानमिति दक्षिणेन पदाऽश्मानमास्थापयत्यातिष्ठेममश्मानमिति। आज्यस्याञ्जलावुपस्तीर्येदं हविरित्यभिघार्याथास्यै शमीलाजानावपति भ्राता ब्रह्मचारी वा। तान-विच्छिन्दती जुहोत्यर्यमणं नु देवमिति। अग्निर्मा जनिमानिति वाचयति। इयं नारीति सर्वत्रानुषजति। एवं त्रिरुत्तरम्। पर्ययणे पर्ययणे लाजाहोमो यजमानं चाश्मानं वाऽऽस्थापयति गन्धर्वं पतिवेदनमिति। सोमो मा ज्ञातिमानिति वाचयति। 'त्र्यम्बकं यजामहे' इति। पूषा मा पशुमानिति। शिष्टान् स्विष्टकृते जुहोति शूर्पेण कर्ता। वरो दक्षिणाम्। तूष्णीं हस्तौ विमुच्य वि ते मुञ्चामीति सन्नहनम्। उत्तरतोऽग्नेर्दर्भेषु प्राचीं प्रक्रामयत्येकमिषे द्वे ऊर्जे त्रीणि विष्णुस्त्वाऽन्वे-त्वित्यनुषङ्गः। तच्चक्षुरित्यादित्यमुपस्थापयति। अस्तमितेऽग्निम्। जीवन्तीं ध्रुवं स्वस्त्याग्नेयं दर्शयत्यरुन्धतीं च। एतेषामेकैकं पश्यसीत्याह। पश्यामीति प्रत्याह। सुमङ्गलीरिति वीक्षितानुमन्त्रयते। उदुत्तममिति प्रागुदीचीमावसथं यतीमनुमन्त्रयते यतो वा स्यात्। पुण्याहे युङ्क्ते योगे योग इति युनक्ति। अङ्क्न्यङ्का इति रथचक्रेऽनुमन्त्रयते। खे रथस्येति युगतर्मसु शमीशाखामवदधाति, सुकिंशुकमित्यारोपयते। मा विदन् परिपन्थिनः सुमङ्गलीरिति च प्रवाहयते। संकाशयेति वधूसङ्गमे। ये पथीनामिति चतुष्पथेषु जपतीमे चत्वार इति च। ये श्मशानेष्विति श्मशानेषु। ये वनेष्विति महावनं महावृक्षं च दृष्ट्वा जपति। नमो अस्तु सर्पेभ्य इति सर्पान्। ये तीर्थानीति तीर्थे ता मन्दमानेति च। शन्न इति नदीं तरति। य ऋत इति रथाङ्गे विशीर्णे। अपराह्णेऽधिवृक्षसूर्ये गृहानुपयायोर्जं बिभ्रतीति गृहान् प्रति हस्य जपति। उलपराजीं स्तृणात्या शयनीयात्। तया प्रविशति। अभ्याहिताग्निं सोदकं सौषधमावसथं प्रतिपद्यते। रोहिण्या मूलेन वा, यद्वा पुण्योक्तमपरेणाग्निमानडुहे रोहिते चर्मण्युपवेश्यापि वा दर्भेष्वेव जयप्रभृतिभिर्हुत्वाऽग्निरैतु प्रथम इति च। त्र्यायुषमित्याज्यस्यैकांशे कृत्वासिच्य दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा माणवकायोत्सङ्गे इहामग्न इति फलानि प्रददाति। तूष्णीमुपचरितं स्थालीपाकं श्रपयित्वा तस्याग्निमिष्ट्वा प्रजापतिं च शेषं प्राश्नीतः अन्नमिति मम चामुष्याश्च भूयादिति।

काठकगृह्यसूत्राण्यपि प्रायेण लौगाक्षिगृह्यसूत्रसमानुपूर्वीकाणीति न पृथगुपादीयन्ते। आपस्तम्बगृह्यसूत्रे च—सुहृदः समवेतान् मन्त्रवतो वरान् प्रहिणुयात्। तानादितो द्वाभ्यामभि-मन्त्रयेत। स्वयं दृष्ट्वा तृतीयां जपेत्। चतुर्थ्या समीक्षेत। अङ्गुष्ठेनोपमध्यमया चाङ्गुल्या दर्भं संगृह्योत्तरेण यजुषा तस्या भ्रुवोरन्तरं संमृज्य प्रतीचीनं निरस्येत्। प्राप्ते निमित्त उत्तरां जपेत्।

युग्मान् समवेतान् मन्त्रवत उत्तरयाऽद्भ्यः प्रहिणुयात्। उत्तरेण यजुषा तस्याः शिरसि दर्भेण्वं निधाय तस्मिन्नुत्तरया दक्षिणं युगच्छिद्रं प्रतिष्ठाप्य छिद्रे सुवर्णमुत्तरयाऽन्तर्धायोत्तराभिः पञ्चभिः स्नापयित्वोत्तरयाऽहतेन वाससाच्छाद्योत्तरया योक्त्रेण सन्नह्यति। अथैनामुत्तरया दक्षिणे हस्ते गृहीत्वाऽग्निमभ्यानीयापरेणाग्निमुदगग्रं कटमास्तीर्य तस्मिन्नुपविशत उत्तरो वरः। अग्नेरुपसमाधानाद्याज्यभागान्तेऽथैनामादितो द्वाभ्यामभिमन्त्रयेत। अथास्यै दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं गृह्णीयात्। यदि कामयेत स्त्रीरेव जनयेयमित्यङ्गुलीरेव गृह्णीयात्। यदि कामयेत पुंस एव जनयेयमित्यङ्गुष्ठमेव सोऽभीवाङ्गुष्ठमभीव लोमानि गृह्णाति। 'गृभ्णामि त' इत्येताभिश्चतसृभिः। अथैनामुत्तरेणाग्निं दक्षिणेन पदा प्राचीमुदीचीं वा दिशमभिप्रक्रमयति 'एकमिष' इति। सखेति सप्तमे पदे जपति। प्राग् होमात् प्रदक्षिणमग्निं कृत्वा यथास्थानमुपविश्यान्वारब्धायामुत्तरा आहुतीर्जुहोति 'सोमाय जनिविदे स्वाहा' इत्येतैः प्रतिमन्त्रम्। अथैनामुत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयत्यातिष्ठेति। अथास्या अञ्जलावुपस्तीर्य द्विर्लाजानोप्याभिघारयति। तस्याः सोदर्यो लाजानावपतीत्येके। जुहोति 'इयं नारी'ति। उत्तराभिस्तिसृभिः प्रदक्षिणमग्निं कृत्वाऽश्मानमास्थापयति यथा पुरस्तात्। होमश्चोत्तरया। पुनः परिक्रमणम्। आस्थापनम्। होमश्चोत्तरया। पुनः परिक्रमणम्। जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वोत्तराभ्यां योक्त्रं विमुच्य तां ततः प्र वा वाहयेत् प्र वा हारयेत्। समोप्यैतमग्निमनुहरन्ति। उत्तरा रथस्योत्तम्भनी। वाहावुत्तराभ्यां युनक्ति दक्षिणमग्रे। आरोहतीमुत्तराभिरभिमन्त्रयते। सूत्रे वर्त्मनोर्व्यवस्तृणात्युत्तरया नीलं दक्षिणस्यां लोहितमुत्तरस्याम्। ते उत्तराभिरभियाति। तीर्थस्थाणुचतुष्पथव्यतिक्रमे चोत्तरां जपेत्। नावमुत्तरयाऽनुमन्त्रयते। न च नाव्यां स्तरती वधूः पश्येत्। तीर्त्वोत्तरां जपेत्। श्मशानाधिव्यतिक्रमे भाण्डे रथे वा रिष्टेऽग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं करोति। गृहानुत्तरया सङ्काशयति। वाहावुत्तराभ्यां विमुञ्चति दक्षिणमग्रे। लोहितं चर्माऽऽनडुहं प्राचीनग्रीवमुत्तरलोम मध्येऽगारस्योत्तरयास्तीर्य गृहान् प्रपादयन्नुत्तरां वाचयति दक्षिणेन पदा। न च देहलीमभितिष्ठति। उत्तरपूर्वे देशेऽगारस्याग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वोत्तरया चर्मण्युपविशत उत्तरो वरः। अथास्याः पुंस्वोर्जीवपुत्रायाः पुत्रमङ्क उत्तरयोपवेश्य तस्यै फलान्युत्तरेण यजुषा प्रदायोत्तरे जपित्वा वाचं यच्छत आ नक्षत्रेभ्यः। उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्योत्तराभ्यां यथालिङ्गं ध्रुवमरुन्धतीं च दर्शयति। एतदहर्विजानीयाद् यदहर्भार्यामावहते। त्रिरात्रमुभयोरधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनञ्च। तयोः शय्यामन्तरेण दण्डो गन्धलिप्तो वाससा सूत्रेण वा परिवीतस्तिष्ठति। तं चतुर्थ्यापररात्र उत्तराभ्यामुत्थाप्य प्रक्षाल्य निधायाग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वाऽपरेणाग्निं प्राचीमुपवेश्य तस्याः शिरस्याज्यशेषाद् व्याहृतिभि-

रोङ्कारचतुर्थाभिरानीयोत्तराभ्यां यथालिङ्गं मिथः समीक्ष्योत्तरयाज्यशेषेण हृदयदेशौ संमृज्योत्तरास्तिस्रो जपित्वा शेषं समावेशने जपेत् ।" इति ।

आश्वलायनगृह्यसूत्रे च—"अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च, तान् विवाहे प्रतीयात् । यत् तु समानं तद् वक्ष्यामः । पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृह्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात्, यदि कामयीत पुंमास एव मे पुत्रा जायेरन्निति । अङ्गुलीरेव स्त्रीकामः । रोमान्ते हस्तं साङ्गुष्ठमुभयकामः । प्रदक्षिणमग्निमुदकुम्भञ्च त्रिः परिणयन् जपति अमोहमस्मीति । परिणीय परिणीयाश्मानमारोहयति 'इममश्मानमारोहाश्मेव त्वं स्थिरा भव । सहस्व पृतनायतोऽभितिष्ठ प्रतन्यत' इति । वध्वञ्जुला उपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति । त्रिर्जामदग्नानाम् । प्रत्यभिघार्य हविः । अवत्तञ्च । एषोऽवदानधर्मः । अर्यमणं...स्वाहेत्यविच्छिन्दत्यञ्जुलिं स्रुचेव जुहुयात् । अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम् । ओप्योप्य हैके लाजान् परिणयन्ति तथोत्तमे आहुती न सन्निपततः । अथास्यै शिखे विमुञ्चति यदि कृते भवतः । ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः । 'प्र त्वा मुञ्चामि वरुणस्य पाशादि'ति । उत्तरामुत्तरया । अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामय'तीष एकपदूर्जे द्विपदी...जरदष्टय' इति । उभयोः सन्निधाय शिरसी उदकुम्भेनावसिच्य । ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रिं वसेत् । ध्रुवमरुन्धतीं सप्तर्षीनिति दृष्ट्वा वाचं विसृजेत 'जीवपत्नी प्रजां विन्देये'ति । प्रयाण उपपद्यमाने, 'पूषा त्वेतो नयतु हस्तगृह्ये'ति यानमारोहयेत् । अश्मन्वतीरीयते संरभध्वमित्यर्धर्चेन नावमारोहयेत् । उत्तरेणोत्क्रमयेत् । जीवं रुदन्तीति रुदत्याम् । कल्याणेषु देशवृक्षचतुष्पथेषु 'मा विदन् परिपन्थिन' इति जपेत् । वासे वासे 'सुमङ्गलीरियं वधूरि'तीक्षकानीक्षेत । 'इह प्रियं प्रजया ते समृध्यतामि'ति गृहं प्रवेशयेत् । विवाहाग्निमुपसमाधाय पश्चादस्याऽऽनडुहं चर्माऽऽस्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम्, 'आ नः प्रजां जनयतु प्रजापतिरि'ति चतसृभिः प्रत्यृचं हुत्वा 'समञ्जन्तु विश्वे देवा' इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वाऽनक्ति हृदये । अक्षारलवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्याताम् । अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रम् । संवत्सरं वैक ऋषिर्जायत इति । चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात् । अन्नं ब्राह्मणेभ्यः । अथ स्वस्त्ययनं वाचयीत ।" इति ।

मानवगृह्यसूत्रे च—"दक्षिणतोऽग्नेर्ब्रह्मणे संस्तृणात्यपरं यजमानाय पश्चार्धे पत्न्या अपरमपरं शाखोदकधारयोर्लाजाधार्याश्च पश्चाद् युगधारस्य च । 'स्योना पृथिवी भवेत्ये'तयाऽवस्थाप्य शमीमयीः शम्याः कृत्वाऽन्तर्गोष्ठेऽग्निमुपसमाधाय भर्ता भार्यामभ्युदानयति । वाससोऽन्ते गृहीत्वा 'अघोरचक्षुरि'त्यभिपरिगृह्याभ्युदानयति । उत्तरेण रथं वाऽनो वाऽनुपरिक्रम्यान्तरेण ज्वलनवहनावतिक्रम्य दक्षिणस्यां धुर्युत्तरस्य युगतन्मनोऽधस्तात् कन्यामवस्थाप्य शम्यामुत्कृष्य हिरण्यमन्तर्धाय 'हिरण्यवर्णाः शुचय' इति तिसृभिरद्भिरभिषिच्य अत्रैव 'बाणशब्दं कुरुते'ति प्रेष्यति ।

अथास्यै वासः प्रयच्छति—'या अकृन्तन्नि'त्यहतं वासः परिधाप्यान्वारभ्याऽऽघारावाज्यभागौ हुत्वा, अग्नये जनविदे स्वाहेत्युत्तरार्धे जुहोति। सोमाय जनविदे स्वाहेति दक्षिणार्धे, गन्धर्वाय जनविदे स्वाहेति मध्ये। युक्तो वह यदाकूतमिति द्वाभ्यामग्निं योजयित्वा नक्षत्रमिष्ट्वा नक्षत्रदेवतां यजेत् तिथिं तिथिदेवतामृतुमृतुदेवतां च। 'सोमोऽददिति' 'हिरण्यगर्भ' इत्यष्टाभिः प्रत्यृचमाज्याहुतीर्जुहुयात्। येन च कर्मणेच्छेत् तत्र जयान् जुहुयात्—'प्रजापतय इति' च। शुचिः प्रत्यङ्ङुपयन्ता तां समीक्षस्वेत्याह। तस्यां समीक्षमाणायां जपति—'मम व्रते' इति। का नामासीत्याह। नामधेये प्रोक्ते 'देवस्य त्वा...हस्तं गृह्णाम्यसावि'ति हस्तं गृह्णन् नाम गृह्णाति। प्राङ्मुख्याः प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नासीनाया दक्षिणमुत्तानं दक्षिणेन नीचाऽरिक्तमरिक्तेन 'यथेन्द्रो हस्तमग्रहीन्...सुवीर्याय' इत्यभिदक्षिणमानीयाग्नेः पश्चात्—'एतमश्मानमि'ति दक्षिणाभ्यां पद्भ्यामश्मानमास्थापयति। 'यथेन्द्रः सहेन्द्राण्ये'त्येवं द्विरास्थापयति। चतुः परिणयति। 'समितं सङ्कल्पयामि'ति पर्याये पर्याये ब्रह्मा ब्रह्मजपं जपेत्। ततो यथार्थं कर्मसन्निपातो विज्ञेयः। अर्यमणेऽग्नये पूष्णे वरुणाय च व्रीहीन् यवान् वाऽभिनिरुप्य प्रोक्ष्य लाजा भृज्जति। मात्रे प्रयच्छति सजाताया अविधवायै। अथास्यै द्वितीयं वासः प्रयच्छति तेनैव मन्त्रेण। दर्भरज्वा इन्द्राण्याः संनहनमित्यन्तौ समायम्य पुमांसं ग्रन्थिं बध्नाति। 'सं त्वा नह्यामी'त्यन्तरतो वध्वस्य योक्त्रेण कन्यां संनह्यते। अथैनान्युपकल्पयते—शूर्पं लाजा इषीकाश्मानमाञ्जनम्। ततस्तिसृभिर्दर्भेषीकाभिः शरेषीकाभिर्वा समुञ्जाभिः सतूलाभिरित्येकैकया ग्रेककुभस्याञ्जनस्य संनिकृष्य 'वृत्रस्यासि कनीनिके'ति भर्तुर्दक्षिणमक्षि त्रिः प्रथममाङ्क्ते। तथाऽपरम्, तथा पत्न्याः, शेषेण तूष्णीम्। दिक्षि शलाकाः प्रविध्यति 'यानि रक्षांसी'ति। लाजाः पश्चादग्नेरुपसाद्य शमीपर्णैः संसृज्य शूर्पे समं चतुर्धा विभज्याग्रेणाग्निं पर्याहृत्य लाजाधार्यं प्रयच्छति। लाजा भ्राता ब्रह्मचारी वाऽञ्जलिनाऽञ्जल्योरावपति। उपस्तरणाभिघारणैः संपातं ता अविच्छिन्नैर्जुहुतः—'अर्यमणमि'ति। एवं 'पूषणं नु देवं वरुणं नु देवम्। येन द्यौरुग्रे'त्यादय उद्वाहे होमाः। जयाभ्यातानाः सन्ततिहोमा राष्ट्रभृतश्च। 'आकूताय स्वाहे'ति जयाः। 'प्राचीदिग्वसन्तऋतुरि'त्यभ्यातानाः। 'प्राणादपानं सन्तन्वि'ति सन्ततिहोमाः। 'ऋताषाडृतधामे'ति राष्ट्रभृतश्च। 'त्रातारमिन्द्रम्, विश्वादित्या' इति मङ्गल्ये। लाजाः कामेन चतुर्थं स्विष्टकृतमिति। अथैनां प्राचीं सप्तपदानि प्रक्रमयति। 'एकमिषे' इति सर्वत्रानुषजति। पश्चादग्ने रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुपवेशयत्यपि वा दर्भेष्वेव। 'इमं विष्यामी'ति योक्त्रपाशं विपाय वाससोऽन्ते बध्नाति। अनुमतिभ्यां...स्वाहाकारान्ताभिराज्याति। अक्षतसक्तूनां दध्नश्च 'समवदायेदं हविःप्रजननं म' इति च हुत्वा 'वि ते मुञ्चामी'ति च हुत्वा पवित्रेऽनुप्रहृत्याऽऽज्येनाभिजुहोति। 'एधोऽस्येधिषीमही'ति समिधमादधाति। 'समिदसी'ति द्वितीयाम्। 'अपोऽद्यान्वचारिषमि'त्युपतिष्ठते। कुम्भादुदकेनाऽऽपोहिष्ठीयाभिर्मार्जयन्ते। वरो दक्षिणा। 'सुमङ्गलीरि'ति प्रेक्षकान् व्रजतोऽनुमन्त्रयते। अत्रैव सीमन्तं करोति। त्रिश्वेतया शलल्या सतूलेन वा दर्भेण। संनाह नामेत्यतया। अथाभ्यञ्जन्ति, 'अभ्यज्य केशान् सुमनस्यमानाः'

इति जीवोर्णयोपसमस्यति 'समस्य केशानि'ति । अथैनौ दधिमधु समश्नुतः, यद्वा हविष्यं स्यात् । तस्य स्वस्ति वाचयित्वा 'समाना वा आकूतानी'ति सह जपन्ति । उभौ सह प्राश्नीतः ।

पुण्याहे युक्ते । 'युञ्जन्ति ब्रध्नमि'ति द्वाभ्यां युज्यमानमनुमन्त्रयते दक्षिणमथोत्तरम् । अहतेन वाससा दर्भैर्वा रथं संमार्ष्टि । 'अङ्क्न्यङ्कावि'ति चक्रेऽभिमन्त्रयते । 'वनस्पत' इत्यधिष्ठानम् । 'सु-किंशुकमि'त्यारोहयति । 'अनुमायन्त्वि'ति प्राङभिप्रयाय प्रदक्षिणमावर्तयति । 'प्रतिमायन्त्वि'ति यथास्तं यन्तमनुमन्त्रयते । अमङ्गल्यं चेदतिक्रामति 'अनुमायन्त्वि'ति जपति । 'नमो रुद्राय ग्रामसद' इति ग्रामे, 'इमा रुद्राये'ति च । 'नमो रुद्रायैकवृक्षसद' इति वृक्षे । 'नमो रुद्राय श्मशान-सद' इति श्मशाने । 'नमो रुद्राय चतुष्पथसद' इति चतुष्पथे । 'नमो रुद्राय तीर्थसद' इति तीर्थे । 'यत्रापस्तरितव्ये'त्यप्युदकाञ्जलीन् निनयति । 'अमृतं वे'ति त्रिः परिमृज्याऽऽचामति । यदि नावा तरेत् 'सुत्रामाणमि'ति जपेत् । यदि रथाक्षः शम्याणी वा रिष्येतान्यद् वा रथाङ्गं तत्रैवाग्निमुप-समाधाय जयप्रभृतिभिर्हुत्वा 'सुमङ्गलीरियं वधूरि'ति जपेत् । वध्वा सह । वधूं समेत पश्यत । 'व्युत्क्रामेत्यु'भावेव व्युत्क्रामतः । गोभिः सहास्तमिते ग्रामं प्रविशन्ति ब्राह्मणवचनाद् वा । अपरस्मिन्नह्नः सन्धौ गृहान् प्रपादयीत । 'प्रतिब्रह्मन्नि'ति प्रत्यवरोहति । मङ्गलानि प्रादुर्भवन्ति । गोष्ठात् सन्ततामुलपराजिं स्तृणाति । रथादध्योपासनात् । 'गेष्वन्ध्ये'ति तयाऽभ्युपैति । 'गृहान-हमि'त्यभ्याहिताग्निं सोदकं सौषधमावसथं प्रपद्यते रोहिण्या मूलेन वा यद्वा पुण्योक्तम् । पश्चा-दग्ने रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुपवेशयत्यपि वा दर्भेष्वेव । अथास्यै ब्रह्मचारिणमुपस्थ आवेशयति 'सोमेने'ति । अथास्य तिलतण्डुलानां फलमिश्राणामञ्जलिं पूरयित्वोत्थाप्य । अथास्यै ध्रुवमरुन्धतीं जीवन्तीं सप्तर्षीनिति दर्शयेत् । 'अच्युते'ति तस्यां समीक्ष-माणायां जपति । श्वो भूते प्राजापत्यं पयसि स्थालीपाकं श्रपयित्वा तस्य जुहोति । 'चक्रीवानि'ति यजमानश्चिः प्राश्नाति अवशिष्टं तूष्णीं पत्नी । संवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं त्रिरात्र-मेकरात्रं वा ।" इति । खादिरगृह्येऽप्येवंप्रायाणि सूत्राणि, केवलं शेषसूत्रस्थ'त्रिरात्रमेकरात्रम्' इति पदद्वयी नास्तीति ततोऽन्यन्नार्थान्तरं तेष्वतो न पृथगुल्लिखितानि ।

पारस्करगृह्ये च—"अथैनां वासः परिधापयति 'जरां गच्छ परिधत्स्व वास' इति । अथैनौ समञ्जयति 'समञ्जन्त्वि'ति । पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति 'यदैषी'ति । अथैनौ समी-क्षयति 'अघोरचक्षुरि'ति । प्रदक्षिणमग्निं पर्याणीयैके । पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्योपविशति । अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यं स्विष्ट-कृच्च । एतन्नित्यं सर्वत्र । प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः । सर्वप्रायश्चित्त-प्राजापत्यान्तरमेतदावापस्थानं विवाहे । राष्ट्रभृत इच्छन् जयाभ्यातानांश्च जानन् । येन कर्मणेर्त्स्येदिति वचनात् । चित्तं च चित्तिश्चाऽऽकूतं चाऽऽकूतिश्च विज्ञातञ्च विज्ञातिश्च मनश्च शक्वरीश्च दर्शश्च पौर्णमासश्च बृहच्च रथन्तरञ्च । प्रजापतिर्जयानिन्द्रायेति चैके प्राशनान्ते । कुमार्या भ्राता शमीपलाशमिश्राल्लाँजानञ्जलिनाऽञ्जलावावपति । ताञ्जुहोति संहतेन तिष्ठती 'अर्यमणमि'ति ।

अथास्यै दक्षिणं हस्तं गृह्णाति साङ्गुष्ठं 'गृभ्णामि ते' इति। अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेन 'आरोहेममश्मानमि'ति। अथ गाथां गायति 'सरस्वती'ति। अथ परिक्रामतः 'तुभ्यमग्रे' इति। एवं द्विरपरं लाजादि। चतुर्थं शूर्पकुष्ट्या सर्वांल्लाजानावपति 'भगाय स्वाहे'ति। त्रिःपरिणीतां प्राजापत्यं हुत्वा। अथैनामुदीचीं सप्तपदानि प्रक्रामयति 'एकमिषे' इति। 'विष्णुस्त्वा नयत्वि'ति सर्वत्रानुषजति। निष्क्रमणप्रभृत्युदकुम्भं स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवति। उत्तरत एकेषाम्। तत एनां मूर्धन्यभिषिञ्चति 'आपः शिवा' इति। 'आपो हि ष्ठे'ति च तिसृभिः। अथैनां सूर्यमुदीक्षयति 'तच्चक्षुरि'ति। अथास्यै दक्षिणां समधिहृदयमालभते 'मम व्रते' इति। अथैनामभिमन्त्रयते 'सुमङ्गलीरि'ति। तां दृढः पुरुष उन्मथ्य प्राग् वोदग् वाऽनुगुप्त आगारे आनडुहे रोहिते चर्मण्युपवेशयति 'इह गाव' इति। ग्रामवचनञ्च कुर्युः। विवाहश्मशानयोर्ग्रामं प्रविशतादिति वचनात्। तस्मात् तयोर्ग्रामः प्रमाणमिति श्रुतेः। आचार्याय वरं ददाति। गौर्ब्राह्मणस्य वरः। ग्रामो राजन्यस्य। अश्वो वैश्यस्य। अधिरथं शतं दुहितृमते। अस्तमिते ध्रुवं दर्शयति 'ध्रुवमसी'ति। सा यदि न पश्येत् पश्यामीत्येव ब्रूयात्। त्रिरात्रमक्षारलवणाशिनौ स्यातामधः शयीयातां संवत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः। राज्ञोऽक्षभेदे नद्धविमोक्षे यानविपर्यासेऽन्यस्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने तमेवाग्निमुपसमाधायाऽऽज्यं संस्कृ'त्येह रतिरि'ति जुहोति नानामन्त्राभ्याम्। अन्यद् यानमुपकल्प्य तत्रोपवेशयेद्राजानं स्त्रियं वा प्रतिक्षत्र इति यज्ञान्तेनान्वाहार्यमिति चैतया। धुर्यौ दक्षिणा। प्रायश्चित्तिः। ततो ब्राह्मणभोजनम्। चतुर्थ्यामपररात्रेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति 'अग्ने प्रायश्चित्ते त्वमि'ति। स्थालीपाकस्य जुहोति प्रजापतये स्वाहेति। हुत्वा हुत्वैतासामाहुतीनामुदपात्रे संस्रवान् समवनीय तत एनां मूर्धन्यभिषिञ्चति 'या ते पतिघ्नी'ति। अथैनां स्थालीपाकं प्राशयति 'प्राणैस्ते' इति। तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति।" इति।

बौधायनीयगृह्येऽपि—"स्नातामहतवाससं गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिषुहस्तां दत्तां वधूं समीक्षते 'अभ्रातृघ्नी'मिति। तयेक्ष्यमाणो जपति 'अघोरचक्षुरि'ति। अथैनामन्तरेण भ्रुवौ दर्भेण सम्मार्ष्टि 'इदमहमि'ति। दर्भं निरस्याप उपस्पृश्याथैनां दक्षिणे हस्ते गृह्णाति 'मित्रोऽसी'ति। अथैनां देवयजनमुदानयति 'एकमिषे' इति। सप्तमं पदमुपसंगृह्य जपति 'सखाय' इति। अथास्या उपोत्थाय दक्षिणेन हस्तेन दक्षिणमंसं प्रतिबाहुमन्ववहृत्य हृदयदेशमभिमृशति 'मम हृदये' इति। अथास्यै दक्षिणे कर्णे जपति 'मां ते मन' इति। अथास्यै दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं साङ्गुष्ठमभीव लोमानि गृह्णाति 'गृभ्णामि ते' इति। अथैनां प्रदक्षिणमग्निं पर्याणयति 'परि त्वाऽग्ने' इति। अथ तथोपविश्यान्वारब्धायामुपयमनीर्जुहोति 'अग्नेशर्ध' इति। अथैनामुत्थाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति 'आतिष्ठेममि'ति। अथास्या अञ्जलावुपस्तीर्य तस्याः सोदर्यो

द्विर्लाजानावपति। तानभिघार्य जुहोति 'इयं नारी'ति। अथैनां प्रदक्षिणमग्निं पर्याणयति 'तुभ्यमग्ने' इति। तथाऽस्थापयति तथा जुहोति। अथैनां पुनः प्रदक्षिणमग्निं पर्याणयति 'पुनः पत्नीमि'ति। तथैवाऽऽस्थापयति तथैव जुहोति। अथैनां पुनरेव पर्याणयति 'विश्वा' इति। अथ तथोपविश्यान्वारब्धायां 'जयानभ्यातानान् राष्ट्रभृत' इति हुत्वा अथामात्यहोमान् जुहोति। अथ प्राजापत्यान् जुहोति। अथ सौविष्टकृतं जुहोति। अथ स्रुवेण परिधीनक्ति। अथ परिस्तरात् समुल्लिप्याऽऽज्यस्थाल्यां प्रस्तरवद् बर्हिरक्त्वा तूर्णं प्रच्छायाग्नावनुप्रहरति। अथ शम्या अपोह्य तथैव परिषिञ्चति।

तां न मिथः संसाद्येदनादेशात्। अनुनयन्त्येतमग्निम्। अथैनां पितुरङ्कादुद्वहति गुरोर्वा 'ये वध्व' इति। अथैनां दक्षिणे हस्ते गृहीत्वा स्वरथमारोप्य स्वान् गृहानानयति 'पूषा त्वेत' इति। पन्थानमनुमन्त्रयते 'युग'मिति। ओषधिवनस्पतयो नद्यो वनान्यनुमन्त्रयते 'या ओषधय' इति। अथ जायामानीय स्वान् गृहान् प्रपादयति 'भद्राणी'ति। अथैनामानडुहे चर्मण्युपवेशयति 'इह गाव' इति। अत्राभ्याममात्याः स्तोकमाण्यारोपयन्ते। अथ वाचं यच्छतः आ नक्षत्राणामुदयात्। अथाहोरात्रयोः सन्धिमनुमन्त्रयते 'नीललोहित' इति। अथोदितेषु नक्षत्रेषूपनिष्क्रम्य ध्रुवमरुन्धतीं च दर्शयति 'ध्रुवोऽसी'ति। अथ विवाहस्याहन्यत्युपस्थानात् कृत्वा व्रतमुपैति 'अग्ने व्रतपत' इति। उभौ जायापती व्रतचारिणौ ब्रह्मचारिणौ भवतोऽधः शयाते। तयोः शय्यामन्तरेणोदुम्बरदण्डो गन्धानुलिप्तो वाससा सूत्रेण वा परिवीतस्तिष्ठत्या पक्वहोमात्। चतुर्थ्यां निशायां हुते पक्वहोमे व्रतं विसृज्य दण्डमुत्थापयति 'ऊर्जा' इति। अथैनं वध्वै प्रयच्छति 'प्रजया त्वे'ति। तं वधूः प्रतिगृह्णाति 'प्रजावती भूयासमि'ति। अथैनं वराय प्रयच्छति 'प्रजया त्वे'ति। तं वरः प्रतिगृह्णाति 'प्रजावान् पशुमान् भूयासमि'ति। अथैनं स्थूणादेशे निधायान्तिकेन प्रतिपद्यते।

प्रसिद्धमुपसंवेशनम् ( सूत्रमिदं नास्ति केषुचित् पुस्तकेषु )। श्वो भूते दण्डमादाय पुण्याहं वाचयित्वाऽप्सु विसर्जयति। अथास्तमित आदित्येऽन्योन्यमलङ्कृत्योपरि शय्यां शयाते। अथ वधूमभिमन्त्रयते 'सुमङ्गलीरि'ति। अथैनां सर्वसुरभिगन्धया मालया युनक्ति 'सं ना मनस्यमि'ति। आनयन्त्येतमग्निम्। अथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा पक्वमोदनं पायसं वा याचति। तमभ्युक्ष्याग्नावधिश्रयति। आज्यं निर्वपति। अथाऽऽज्यमधिश्रयति। उभयं पर्यग्नि कृत्वा मेक्षणं स्रुवञ्च संमार्ष्टि। अथैतं चरुं श्रपयित्वाऽभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति। परिधानप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति। स एवमेव सर्वेषां स्थालीपाकानां चरुकल्पः। 'यस्त्वा हृदे'ति याज्यया जुहोति। अथाऽऽज्याहुतीरुपजुहोति 'अग्ने प्रायश्चित्त' इति। पक्वादेव स्विष्टवतीभ्यां सौविष्टकृतम्। लाजैरितरत्र। 'हव्यवाहमि'ति। अत्रप्रभृतिमिवेमा धेनुवरप्रदानात्। अथाऽऽज्यशेषेण हिरण्यमन्तर्धाय मूर्ध्नि संस्रावं जुहोति 'भूः स्वाहे'ति। अथैनां प्रदक्षिणमग्निं पर्याणयति 'अर्यम्ण' इति।" इति।

## ऊर्द्ध्वं त्रिरात्रात् सम्भव इत्येके ॥ ७ ॥

स्नातकव्रतेषूपरिष्टात् प्रतिषेधं दर्शयति—'नाजातलोम्न्योपहासमिच्छेद्' इति [ सू० ३।५।३ ]। यद्यजातलोम्न्येवातीव [1]पुरुषभोगार्थिनी स्यात् तथा सति तद्रक्षार्थं [2]प्रकृतत्वात् त्रिरात्रादूर्ध्वं सम्भवः संयोगो मैथुनं कर्त्तव्यमित्येके आचार्या मन्यन्ते।

तथा च याज्ञवल्क्यः—

यथाकामी [3]भवेद् वाऽपि स्त्रीणां वरमनुस्मरन्।(A) इति।

A. याज्ञवल्क्यसंहिता १।८१। "स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः" इति चास्योत्तरार्धम्। अत्र तर्कालङ्कारः—"अथ सूत्रमिदं शक्यमवक्तुं सम्भवस्य रागत एव प्राप्तेः, विवाहात् प्रभृति त्रिरात्रं ब्रह्मचर्यविधानाच्च, तदूर्द्ध्वं ब्रह्मचर्यनियमाभावस्यावगतेः। उच्यते—उपरिष्टात् स्नातकव्रतेषु सूत्रयिष्यति—'नाजातलोम्न्योपहासमिच्छेदि'ति तदपवादार्थमिदमुच्यते। कथं नाम? यद्यजातलोम्न्येवातीव पुरुषोपभोगाभिलाषिणी भवति तर्हि त्रिरात्रादूर्द्ध्वं तद्रक्षार्थं सम्भवितव्यम्। अपि च ऋतुकालादन्यत्र रागमात्राधीनत्वात् सम्भवस्य स्त्रीणां तदभिलाषेऽपि पुंसो रागाभावादकरणमपि प्राप्नोति तदनेन निरस्यते, अन्यथा खल्वभिलाषपरवशा कदाचिदकार्यमपि कुर्यात्? तस्माद् विनाऽपि ऋतुकालं स्त्रीणां रक्षार्थं सम्भवितव्यमिति। रक्षणं खल्वासामवश्यमेव कर्त्तव्यम्, अकुर्वतो दोषश्रवणात्। तथा च मनुः—

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः॥ (९।५) इति

सोऽयं रक्षणोपायः सम्भवोऽपि नियम्यते, तथा च स्मरणम्—

यथाकामी भवेद् वाऽपि स्त्रीणां वरमनुस्मरन्।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः॥ इति
ऋतुकालाभिगमनं कार्यं पुंसा प्रयत्नतः।
सदैव वा पर्ववर्जं स्त्रीणामभिमतं हि तत्॥

इति चैवमादि" इत्याह स्वभाष्ये। परमेतन्न गोभिलाचार्यसम्मतम्। यतस्तन्मते प्रागृतूत्पत्तेः सम्भवो निषिद्धः, एतच्चोपपादयिष्यते 'नाजाते'त्यादि ३।५।३ सूत्रपाठटीकायाम्। अत एव 'इत्येके' इत्युपोद्घातेनाऽऽचार्योऽयमुक्तस्तेन। तदुक्तं गृह्यासंग्रहे—"आचार्यानुमतमि"त्यादि ( द्रष्टव्यम् पृ० ६७ )। अथ कदाचिदृतुमत्या विवाह एव पक्षोऽयं समाश्रयणीय इति चेत्? तदपि न; स्वयमेवोत्तरसूत्रेण सम्भवप्रारम्भकालस्य नियमनादिति। अन्यथा कदाचित् तद्दिने समर्थायाः संसर्गमात्रादेव गर्भसम्भवे अमन्त्रकनिषेकजनितगर्भोत्पन्नस्य पुत्रादेः शास्त्राद्यनधिकारित्वं स्यात्।

1. 'पुरुषोपभोगा-' ग। 2. 'प्रकृतात्' घ। 3. 'सम्भवेद्' वा ग।

किञ्च—

# यदर्त्तुमती भवत्युपरतशोणिता तदा सम्भवकालः ॥ ८ ॥

यदा यस्मिन् काले ऋतुमती रजस्वला भवति उपरतशोणिता अपगतरक्तयोनिद्वारा तदा सम्भवकालः मैथुनकालः(१) ।

---

तदुक्तं मनुसंहितायाम्—

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् ॥ (२।१६) इति ।

अत एव पक्षोऽयं गोभिलानुसारिणामन्येषाञ्च मनीषिणामनुपादेयमेव । वस्तुतस्तु द्वे एव सूत्रे एते गर्भाधानप्रकरणे पठितव्ये । तत्र च केचिदाचार्या ऋतुदर्शनतस्त्रिरात्रादूर्ध्वं शोणितस्यास्तित्वमनस्तित्वञ्चापेक्ष्य समन्त्रको निषेकः कार्य इति व्यवस्थापयन्ति । स्वयं तु उपरतशोणितायामेवोपगन्तव्यं स्वोक्तयावृता सहेति प्राहोत्तरसूत्रेणेति प्राकरणिकोऽर्थः । तत्र कृतं भाष्यकारस्य तच्छायावलम्बिनश्चन्द्रकान्तस्य च 'नाजाते'त्यादिसूत्रस्यापवादं प्रकल्प्य व्याख्यानायासेनेति सुधीभिः प्रणिहितव्यमिति ।

ऋतुविषयमधिकृत्याऽऽह याज्ञवल्क्यः—

षोडशर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥ इति या० स० १।७९।

मनुरपि च— ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ।
पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः ॥
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद् युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् ॥
पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥
निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्जयन् ।
ब्रह्मचार्येव भवति यत्र तत्राऽऽश्रमे वसन् ॥ इति ३।४५-५० ।
अमावास्यामष्टमीञ्च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यतौ स्नातको द्विजः ॥

षष्ठ्यष्टम्यौ त्वमावास्यामुभयत्र चतुर्दशीम् ।
वर्जयेत् पौर्णमासीं च तैले मांसे भगे क्षुरे ॥ ४।१२८ ।
नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्तवदर्शने ।
समानशयने चैव न शयीत तया सह ॥
रजसाऽभिप्लुतां नारीं नरस्य ह्युपगच्छतः ।
प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रहीयते ॥
तां विवर्जयतस्तस्य रजसा समभिप्लुताम् ।
प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रवर्धते ॥ इति ३।४१-४३।

अत्र गर्भाधानविषये यदुक्तं कमलाकरभट्टेन निर्णयसिन्धौ तस्मात् किञ्चिदुदाह्रियते—

तत्र प्रथमरजोदर्शने मदनरत्ने नारदः—

अमा-रिक्ताऽष्टमी-षष्ठी-द्वादशी-प्रतिपत्स्वपि ।
परिघस्य च पूर्वार्धे व्यतिपाते च वैधृतौ ॥
सन्ध्यासूपप्लवे विष्ट्यामशुभं प्रथमार्तवम् ।
रोगी पतिव्रता दुःखी पुत्रिणी भोगभागिनी ।
पतिव्रता क्लेशभागी सूर्यवारादिषु क्रमात् ॥
वैधव्यं सुतलाभश्च मैत्रं शत्रुविवर्धनम् ।
मित्रलाभः शत्रुवृद्धिः कुलर्द्धिर्बन्धुनाशनम् ॥
मरणं वंशवृद्धिश्च निराहारः कुलक्षयः ।
तेजश्च सुतनाशश्च कुलहानिस्तिथिक्रमात् ॥

गर्गः— सुभगा चैव दुःशीला वन्ध्या पुत्रसमन्विता ।
धर्मयुक्ता व्रतघ्नी च परसन्तानमोदिनी ॥
सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा ।
हीना प्रजावती चैव पुत्राढ्या चित्रकारिणी ॥
साध्वी पतिप्रिया नित्यं सुपुत्रा कष्टकारिणी ।
स्वकर्मनिरता हिंस्रा पुण्यपुत्रादिसंयुता ॥
नित्यं धनव्ययासक्ता पुत्रधान्यसमन्विता ।
मूर्खा चाज्ञा पुण्यवती दस्रर्क्षादेः क्रमात् फलम् ॥

नारदः— कुलीर-वृष-चापान्त्य-मृगेन्द्र-कन्या-तुला-घटाः ।
राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ॥

गर्गः— सुभगा श्वेतवस्त्रा स्याद् दृढवस्त्रा पतिव्रता ।
क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता ॥

दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा ।
नीलाम्बरधरा नारी पुष्पिता विधवा ततः ॥
वस्त्रे स्युर्विषमा रक्तबिन्दवः पुत्रमाप्नुयात् ।
समाश्चेत् कन्यकाश्चेति फलं स्यात् प्रथमार्तवे ॥

अत्र संसर्गवर्जनमाह वशिष्ठः—

प्रभूतदोषं यदि दृश्यते तत् पुष्पं तदा शान्तिककर्म कार्यम् ।
विवर्जयेदेव तदेकशय्यां यावद्रजोदर्शनमुत्तमेऽह्नि ॥

ज्योतिर्निबन्धे वशिष्ठः—

आद्यर्तौ पौष-शुक्रोर्ज-मधु-शुचि-नभस्याश्वयुक्पापवारा
रिक्तामार्काष्टषष्ठ्यः पितृपरसदने रात्रिसन्ध्यापराह्णाः ।
मिश्रोग्रा मूलतीक्ष्णं विवरमनरुणाल्पाधिकास्त्वंगराष्टोत्-
पाताः पापस्य लग्नं न सदरुणजरन्नीलरक्ताम्बरञ्च ॥
आद्यर्तौ दुर्भगा नारी विष्कम्भे चेद्रजस्वला ।
बन्ध्या चैवातिगण्डे च शूले शूलवती भवेत् ॥
गण्डे तु पुंश्चली नारी व्याघाते चाऽऽत्मघातिनी ।
वज्रे च स्वैरिणी प्रोक्ता पाते च पतिघातिनी ॥
परिघे मृतवन्ध्या च वैधृतौ पतिमारिणी ।
शेषाः शुभावहा योगा यथानाम फलप्रदाः ॥

अथ प्रथमर्तौ विशेषः । स्मृतिचन्द्रिकायाम्—

प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रवतीः स्त्रियः ।
अक्षतैरासनं कृत्वा तस्मिंस्तामुपवेशयेत् ॥
हरिद्रागन्धपुष्पादीन् दद्युस्ताम्बूलकं स्रजम् ।
दीपैर्नीराजनं कुर्यात् सदीपं वासयेद् गृहे ॥
लवणापूपमुद्गादि दद्यात् ताभ्यः स्वशक्तितः ॥ इति ।

द्वितीयाद्यृतुषु तन्नियमानाह मदनपारिजाते दक्षः—

अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् ।
न कुर्यात् सार्तवा नारी ग्रहाणामीक्षणं तथा ॥

अत्रिरपि—

वर्जयेन्मधु मांसञ्च पात्रे खर्वे च भोजनम् ।
गन्धं माल्यं दिवा स्वापं ताम्बूलं चाऽऽस्यशोधनम् ॥
दर्भे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत् ।

मदनरत्ने हारीतः—

रजःप्राप्ता चेत्त्रधः शयीत, भूमौ कार्ष्णायसे पाणौ मृन्मये वाऽश्नीयादिति ।

विष्णुधर्मे—　आहारं गोरसानाञ्च पुष्पालङ्कारधारणम् ।
अञ्जनं कङ्कतं गन्धान् पीठशय्याधिरोहणम् ।
अग्निसंस्पर्शनञ्चैव वर्जयेच्च दिनत्रयम् ॥　इति ।

तत्र ऋतौ गमनमाह याज्ञवल्क्यः—षोडशर्त्तुनिशा इत्यादि । अनृतावप्याह गौतमः—

ऋतावुपेयात् सर्वत्र वा प्रतिषिद्धवर्जम् ।　इति ।

मनुः—ऋतुः स्वाभाविक इत्यादि ।

मदनरत्ने देवलः—तस्मात् त्रिरात्रं चाण्डालीं पुष्पितां परिवर्जयेत् ।

तत्र तिथ्यादीनाह श्रीधरः—

षष्ठ्यष्टमीं पञ्चदशीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा ।
शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशाङ्कार्कसितेन्दुजानाम् ॥
विष्णुप्रजेशरविमित्रसमीरपौष्णमूलोत्तरावरुणभानि निषेककार्ये ।
पूज्यानि पुष्यवसुशीतकराश्विचित्रादित्याश्च मध्यमफला विफलाः स्युरन्ये ॥

याज्ञवल्क्येन तु—'एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्' इत्युक्तम् ।

( ज्येष्ठामूलामघाश्लेषारेवतीकृत्तिकाश्विनीः ।
उत्तरात्रितयं त्यक्त्वा पर्ववर्जं व्रजेदृतौ ॥　इति )

अत्र समासु पुत्रा विषमासु कन्येति ज्ञेयम्,

'युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु' ।　इति हेमाद्रौ शङ्खोक्तः । तत्राप्युत्तरोत्तराः प्रशस्ताः, तदाहाऽऽपस्तम्बः—'तत्राप्युत्तराः प्रशस्ता' इति ।

तत्रैव व्यासः—　रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः ।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः ॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः पुमान् ।
नवम्यां सुभगा नारी दशम्यां प्रवरः सुतः ॥
एकादश्यामधर्मा स्त्री द्वादश्यां पुरुषोत्तमः ।
त्रयोदश्यां सुता पापा वर्णसङ्करकारिणी ॥
धर्मज्ञश्च कृतज्ञश्च आत्मवेदी दृढव्रतः ।
प्रजायते चतुर्दश्यां पञ्चदश्यां पतिव्रता ॥
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ॥　इति ।

अत्र चतुर्थदिननिषेधेऽपि 'स्नातां चतुर्थे दिवसे रात्रौ गच्छेद् विचक्षणः' इति भारतोक्तः, 'चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भं संदधाति' इति हारीतोक्तेर्विकल्पो ज्ञेयः ।

तत्रापि—

स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते ।

गम्या निवृत्ते रजसि नानिवृत्ते कथञ्चन ॥ इत्यापस्तम्बोक्तंर्व्यवस्था ज्ञेया ।

प्रभासखण्डे मरीचिः—

शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।

दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥

श्रौतकर्ममध्ये रजस्वला चेत् तत्र चतुर्थदिनेऽप्यधिकारः—'अथ यदा त्रिरात्रिणी स्यादथैना-मुपह्वयेत्' इत्यापस्तम्बसूत्रात् । 'चतुर्थेऽहनि गोमूत्रमिश्राभिरद्भिः स्नाता वासोयोक्त्रजालानि मन्त्रैर्धारयेत्' इति सोमेऽप्युक्तम् । एवं सर्वत्र श्रौतकर्मणीति धूर्तस्वामिरामाण्डारादयः ।

अत्र सर्वासु युग्मासु गमनमावश्यकं युग्मास्विति बहुवचननिर्देशादिति विज्ञानेश्वरः । तत्रैकस्यां रात्रौ सकृदेव कार्यम्, 'सुस्थ इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान्' इति याज्ञ-वल्क्योक्तेः । इदं ऋतौ गमनमन्यकाले प्रतिबन्धादिना गमनासम्भवे श्राद्धैकादश्यादावपि कार्यम्, 'ब्रह्मचार्येवे'ति याज्ञवल्क्योक्तेः । व्याख्यातञ्चेदं मिताक्षरायाम्—'यत्र श्राद्धादौ ब्रह्मचर्यं विहितं तत्राप्यृतौ गच्छतो न ब्रह्मचर्यस्खलनदोषः' इति । 'पर्वाणीति बहुत्वेनाष्टमीचतुर्दश्योर्ग्रहणमि'ति च । मदनरत्नेऽप्येवम् ।

यत्तु हेमाद्रौ शिवरहस्ये—

दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती ।

श्राद्धं दत्त्वा च भुक्त्वा च श्रेयोऽर्थी न च पर्वसु ॥

इति, तदनृतुविषयम्, 'ब्रह्मचार्येवे'ति मनूक्तेः । दर्शादौ तु न भवत्येव पर्वणां पर्युदस्तत्वात् ।

माधवीये तु— ऋतुकाले नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित् ।

तत्र गच्छन् समाप्नोति ह्यनिष्टफलमेव तु ॥

इति वृद्धमनूक्तेः श्राद्धे ब्रह्मचर्यं नियतमित्युक्तम् । पृथ्वीचन्द्रोदयेऽप्येवम् । एतत् सति सम्भवे ज्ञेयम् ।

अनेकभार्यत्वर्तुयौगपद्ये हेमाद्रौ कश्यपः—

यौगपद्ये तु तीर्थानां विवाहक्रमशो व्रजेत् ।

रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा ॥ इति ।

ग्रहणम् ऋतुग्रहणम् । अगमने दोषमाह पराशरः—

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।

घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ ( ४।१४ )

अस्यापवादमाह मदनरत्ने व्यासः—

व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।

ऋतुकालेऽपि नारीणां भ्रूणहत्या प्रमुच्यते ॥

वृद्धां वन्ध्यामसद्वृत्तामनपत्यामपुष्पिणीम् ।
कन्याजां बहुपुत्राञ्च वर्जयन्मुच्यते भयात् ॥

गर्भाधानञ्च मलमासगुरुशुक्रास्ताद्यावपि कार्यम्—

उत्सवेषु च सर्वेषु सीमन्त ऋतुजन्मसु ।
सुराद्युरेज्यरयोश्चैव मौढ्यदोषो न विद्यते ॥ इति ज्योतिर्निबन्धे भृगूक्तेः ।

अथ रजस्वलास्नानम् । दैवज्ञवल्लभः—

मघानुराधाश्विनसौम्यभेषु हस्तानिलाखण्डलवासवेषु ।
विश्वार्यमर्क्षोत्तरभाद्रभेषु वराङ्गनास्नानविधिः प्रदिष्टः ॥

ज्वरे तूशनाः— ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात् केन कर्मणा ॥
चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचैलाऽवगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दशद्वादशकृत्वो वा आचामेच्च पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धा भवेत् तु सा ॥ इति ।

विशेषस्तु ज्योतिस्तत्त्वे—पर्वाण्याह विष्णुपुराणम्—

चतुर्दश्यष्टमी चैव अमावस्याऽथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
नन्दा भद्रा भवेत् पुंसि स्त्रीषु पूर्णा जया स्मृता ।
रिक्तां नपुंसके त्वाहुस्तस्मात् तां परिवर्जयेत् ॥
युग्मायामपि रात्रौ चेच्छोणितं प्रचुरं तदा ।
कन्या च पुंवद् भवति शुक्राधिक्ये पुमान् भवेत् ॥
कन्यैवायुग्मरात्रौ च प्राधान्यं समवायिनः ।
निमित्तकारणात् कालाच्छुक्रशोणितयोर्यतः ॥

पीडाराशौ भौमदृष्टे शशाङ्के मासं मासं योषितामार्तवं स्यात् ।
त्र्यंशे शान्तं यच्च रक्तं जवाभं तद् गर्भार्थं वेदनागन्धहीनम् ॥

गर्भयोग्यत्वनिरूपणम्—

पापासंयुतमध्यगेषु दिनकृल्लग्नक्षपास्वामिषु
सद्यूनेष्वशुभोज्झितेषु विकुजे छिद्रे विपापे सुखे ।
सद्युक्तेषु त्रिकोण-कण्टक-विधुष्वायत्रिषष्ठान्विते
पापे युग्मनिशास्वगण्डसमये पुंशुद्धितः सङ्गमः ॥

पुमान् विंशतिवर्षश्चेत् पूर्णषोडशवर्षया ।
स्त्रिया सङ्गच्छते गर्भाशये शुद्धे रजस्यपि ॥
अपत्यं जायते भद्रं तयोर्न्यूनेऽधमं स्मृतम् ।
मासेशैः सितकुज-गुरु-रवि-शनि-सौम्यलग्नशशीनैः ।
कलुषैः पीडा गर्भस्य पीडितैः पतनमन्यथा पुष्टिः ॥ इति ।

आह्निकाचारतत्त्वेऽपि—

'षष्ठ्यष्टमीममावास्यामुभे पक्षे चतुर्दशीम् ।
मैथुनं नोपसेवेत द्वादशीञ्च मम प्रियाम् ॥

हारीतः—चतुर्थेऽहनि स्नातायां युग्मासु च गर्भाधानवदुपेतो ब्रह्मगर्भं दधातीति । अत्र चतुर्थ्यां रात्रौ यद् गर्भाधानमुक्तं तद्रजोनिवृत्तौ बोद्धव्यम् ,

'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला'

इति मनुवचनैकवाक्यत्वात् । साध्वी गर्भाधानादिविहितकर्मयोग्येत्यर्थः । आद्यास्तस्रो वर्जये-दिति तु रजोनिवृत्तीतरपरम् । स्नानानन्तरं पुनरपि रजोदर्शने विशेषमाह हारीतः—

रजस्वला यदि स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥
एकोनविंशतेरर्वागेकाहं स्यात् ततो द्व्यहम् ।
विंशप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥

वशिष्ठः—

त्रिरात्रं रजस्वलाऽशुचिर्भवति । सा नाञ्ज्यात् नाभ्यञ्ज्यात् नाप्सु स्नायात् अधः शयीत न दिवा स्वप्यात् न रज्जुं विसृजेत् नाग्निं स्पृशेत् न दन्तान् धावयेत् न मांसमश्नीयात् न गृहान्निरीक्षेत न हसेत् न किञ्चिदाचरेत् नाञ्जलिना जलं पिबेत् न लोहितायसेन न खर्वेण वे'ति ।

(लोहितायसेन ताम्रपात्रेण, खर्वेण वामपाणिना) अनृतावपि कामुकीगमनमाह विष्णुपुराणम्—

मृतो नरकमभ्येति हीयतेऽत्रापि चायुषः ।
परदाररतिः पुंसामुभयत्रापि भीतिदा ॥
इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत् ।
यथोक्तदोषहीनेषु सकामेष्वनृतावपि ॥

प्रौढगर्भामपि अत्यन्तकामामुपेयात् । तदाह वशिष्ठः—

'अपि च काठके प्रवचने विज्ञायते अद्य श्वो वा विजनिष्यमाणाः पतिभिः सह शयन्त इति स्त्रीणामिन्द्रदत्तो वर' इति ।

गौतमः— ऋतावुपेयात् सर्वत्र वा प्रतिषिद्धवर्जम् । इति ।

ननु विधिस्तावदयं न भवति, स्वरसेनैव प्राप्तत्वात् ;

विधिर्विधायकं वाक्यं [1]चोदनाख्यं प्रवर्त्तकम् ।
अत्यन्ताप्राप्तिविषये [2]कर्त्तव्या त्वष्टका यथा(A) ॥

एवञ्च— ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोर्दोषमयोनौ यश्च गच्छति ॥

इति बौधायनीयमनृतौ दोषाभिधानमकामविषयम् ।

विष्णुः—

पर्वानारोग्यवर्जमृतावगच्छन् पत्नीं त्रिरात्रमुपवसेदिति ।

वृद्धशातातपः—

स्त्रीणां संप्रेक्षणात् स्पर्शात् ताभिः सङ्कथनादपि ।
ब्रह्मचर्यं विपद्येत न दारेष्वृतुसङ्गमात् ॥

श्राद्धानन्तरन्तु निषेधमाहतुः शङ्खलिखितौ—

"ऋतुस्नातां तदहोरात्रं परिहरेत्, नाऽऽतुरो न दिवा मैथुनं व्रजेत्, क्षीणा अल्पवीर्याश्च दिवा प्रसूयन्ते अल्पायुष्यश्च, तस्मादेतद् विवर्जयेत् । प्रजाकामः पितॄणां नो ह वै तन्तुं विच्छिन्द्यात् प्रयतेतात्च्छेदाय येनाप्रतिष्ठो भवति, तस्मात् प्रतिष्ठाकामः प्रजया प्रतिष्ठेतेति । एवञ्च श्राद्धदिने यदभिगमनं प्रागुक्तयाज्ञवल्क्यवचनादुक्तं मिताक्षरायाम्, तद्ध्येयम् ।

पुत्रोत्पत्तिपर्यन्तम् ऋत्वभिगमननियममाह विष्णुपुराणम्—

ऋतुकालाभिगामी स्याद् यावत् पुत्रो न जायते ।
ऋणापकर्षणार्थं हि पुत्रस्योत्पादनं प्रति ॥ यतितव्यमिति शेषः ।

मैथुनशुद्धेः पूर्वं मलमूत्रोत्सर्गं न कुर्यात्,

तैलाभ्यङ्गे तथा वान्ते श्मश्रुकर्मणि मैथुने ।
मूत्रोच्चारं यदा कुर्यादहोरात्रेण शुद्ध्यति ॥ इति यमवचनात् ।

अत्र सम्यगाधानहेतुतया उत्तानकरचरणामेव कुर्वीत न तिर्यगाहितकरचरणाम् ; स्त्रियमृत्वभिगमनानन्तरं दक्षिणपार्श्वेन स्वापयेत्, पुरुषायिते तु गर्भानुत्पत्तिरिति शेषः । इति ।

संस्कारमयूखे च—

सम्मार्जनीकाष्ठतृणादिशूर्पान् हस्ते दधाना कुलटा तदा स्यात् ।
तल्पोपभोगे तपसि स्थिता चेद् दृष्टं रजो भाग्यवती तदा स्यात् ॥ इति ।

A. प्रमाणीकृतं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये । लक्षणमिदमपूर्वविधेः, तत्राप्यत्यन्ताप्राप्तौ अपूर्वविधिरिति धर्मदीपिकायामुक्तत्वात् ।

1. 'चोदनार्थं' क, 'चोदनाख्यं' ख-ग । 2. 'कर्त्तव्या त्वष्टका' नास्ति ग-घ ।

इत्येवंरूपत्वात्तु विधेः। परिसंख्या[1]ऽपि न भवति। कुतः? "यदि परिसंख्या स्यात् तथा सत्यनृतौ गमनमेव न प्राप्नोति"*, निषेधपरत्वात् परिसंख्यायाः।

अन्यथा श्रूयमाणा तु याऽन्यार्थप्रतिषेधिका।
[2]परिसंख्या हि सा ज्ञेया यथा प्रोक्षितभक्षणम् (A)॥ इति।

स्मृत्यन्तरविरोधाच्च,

ऋतौ [3]तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम्।
अनृतौ तु [4]यदा गच्छेच्छौचं मूत्रपुरीषवत् (B)॥ इति।

तस्मान्नेयं परिसंख्या[1]*। किं तर्हि? नियमोऽयम्। कथं नाम? ऋताववश्यं सम्भवः कार्यः, अकुर्वतः प्रत्यवायो भवतीति। तथा च स्मृत्यन्तरम्—

ऋतुमतीं [5]च यो भार्यां सन्निधौ नोपगच्छति।
अवाप्नोति स मन्दात्मा भ्रूणहत्यामृतावृतौ (C)॥ इति।

तस्मादृतावश्यं सम्भवेदिति, एवंरूपत्वान्नियमस्य।

---

A. प्रमाणत्वेन वचनमिदमुपन्यस्योक्तं चन्द्रकान्तेन—"तथात्वे 'सदैव वा' इत्यादि स्मृत्यन्तरविरोधापत्तेः। अकरणे दोषश्रवणानुपपत्तेश्च। दोषत्रयदुष्टा च सा न सत्याश्रयितुमुचिता सम्भवन्त्यां गतौ। तथा चोक्तम्—

श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका॥" इति।

B. प्रमाणीकृतं वचनमिदं निर्णयसिन्धौ—'ऋतौ गमने पराशरः' इत्युपोद्घातेन। "स्त्रीणां तु न स्नानम्,—

उभावप्यशुची स्यातां दम्पती शयनं गतौ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्॥

इति वृद्धशातातपोक्तेः" इत्यप्युक्तं तत्रैव कमलाकरभट्टेन।

C. प्रमाणीकृतं वचनमिदं चन्द्रकान्तेनापि स्वभाष्ये। संवदति चात्र पराशरप्रमाणम् ऋतुस्नातामित्यादि। (द्रष्टव्यमधस्तात् पादटीकायाम्, ३९६ पृ०)।

---

1. '-पि न भवति' इत्यत आरभ्य 'तस्मान्नेयं परिसंख्या' इत्यन्तः सन्दर्भो नास्ति ख। 2. चिह्नितांशो नास्ति ग। 3. 'गर्भशङ्कितत्वात्' ग। 4. 'सदा शौचं कायमूत्रपुरीषवत्' ग। 5. 'तु' ख।

तथा चोक्तम्—

'स्वयं चाक्रियमाणे तु [2]यत्राचम्यं क्रिया भवेत् ।
नियमः सोऽत्र विज्ञेयः श्राद्धे मांसाशनं यथा(A) ॥ इति ।

दक्षिणेन पाणिनोपस्थमभिमृशेद् विष्णुर्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि सिनीवालीति च ॥ ६ ॥

[3]यदा प्रथमं [4]सम्भवेत् तदा दक्षिणेन पाणिना उपस्थं गुह्यम् अभिमृशेत् (B)"विष्णुर्योनिं" "गर्भं धेहि"त्याभ्याम्[5] ऋग्भ्याम् ।

A. प्रमाणीकृतं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये । धर्मदीपिकायाञ्च—"तत्राप्यत्यन्ता-प्राप्तावपूर्वविधिः । पक्षतोऽप्राप्तौ नियमविधिः । विधेयतत्प्रतिपक्षयोः प्राप्तौ परिसंख्याविधिः । अत एवोक्तम्—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्या विधीयते ॥

तत्र प्रधानस्य विधिभेदो यथा 'अहरहः सन्ध्यामुपासीत' इत्यादिरपूर्वविधिः, अत्र विधेयस्य सन्ध्यादेः शास्त्रतो रागतो न्यायतो वा कथिदप्यप्राप्तेः । तथा 'ऋतौ भार्यामुपेयात्' इत्यादिर्नियम-विधिः, विधेयस्य भार्याभिगमनस्य रागतः प्राप्तावपि रागाभावात् पक्षतोऽप्राप्तेः । तथा 'प्रोक्षितं मांसं भुञ्जीत' इत्यादिः परिसंख्याविधिः, विधेयस्य प्रोक्षितमांसभक्षणस्य तत्प्रतिपक्षस्याप्रोक्षित-मांसभक्षणस्य च रागतः प्राप्तेः ।" इत्युक्तम् ।

B. मन्त्रौ तु—

ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥
ॐ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ इति ।

मन्त्रब्राह्मणम् १।४।६-७ । विनियोगस्तु खादिरगृह्यसूत्रे १।४।१९ जैमिनिगृह्यसूत्रे २३।१८ हिरण्यकेशिगृह्यसूत्रे च १।२५।१ । अनयोर्व्याख्या—हे वधु, विष्णुः वासुदेवः ते तव योनिं गर्भस्थानं कल्पयतु गर्भग्रहणोपयुक्तां करोतु, त्वष्टा देवविशेषः तत्र रूपाणि गर्भाकारान् पिंशतु प्रकाशयतु, प्रजापतिः तमेव गर्भम् आसिञ्चतु पोषयतु, धाता आदित्यः ते गर्भं दधातु धारयतु ।

1. 'स्वयन्त्वाऽक्रिय···' घ । 2. 'यत्रावश्या क्रिया क्वचित्' घ । 3. 'यदा' ग । 4. 'संविशेत्' ख-ग-घ । 5. '-मिमिन्त्याभ्याम्' क-घ ।

ननु—

यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां [1]पारगः करः(A) ॥ इति ।

दक्षिणेन पाणिना कृत्य[2]मनादेशे स्यात् । तत्र सिद्धे[3]* दक्षिण[3]ग्रहणं कस्मात् ? उच्यते—कुत्सितत्वात् प्रदेशस्य मूत्रपुरीषस्य च पाय्वादीनां सव्येनैव शौचस्य दृष्टत्वात् । अतोऽत्रापि सव्येनैवाभिमर्शनम् । मा भू[4]दित्यतो दक्षिणग्रहणम्(B) ।

## समाप्यर्चौ सम्भवतः ॥ १० ॥

[5]समाप्येत्युपदेशादेव सिद्धे आनन्तर्यार्थं पुनर्वचनम् । कथं नाम ? समाप्य सम्भवत एव । इतरथा [6]कर्मापवर्गत्वाद् वामदेव्यगानं स्यात्, तदनिष्टम्, अतः समाप्येत्युक्तम् । गर्भसंस्कारश्चायं गर्भाधानाख्यः पात्रद्वारेण स्यात् । ततश्च [7]सकृत् संस्कृते स्त्रीद्रव्ये यो यस्तत्र [8]गर्भ उत्पद्यते स स संस्कृत एव भवति । तस्मात् सकृदेव स्याद् न प्रतिगर्भमपीति । एवं पुंसवनसीमन्तोन्नयनयोरपि द्रष्टव्यम् (C) ।

इति श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये
द्वितीयाध्यायस्य पञ्चमी कण्डिका ॥

---

हे सिनीवालि पृथुष्टुके, अस्यां वध्वां गर्भं धेहि वन्ध्यतामपनय । हे सरस्वति, त्वं गर्भं धेहि, किञ्च हे वधु, पुष्करस्रजौ पद्ममालिनौ अश्विनौ देवौ ते गर्भम् आधत्तां धारयताम् इति ।

A. कर्मप्रदीपः १।१।६ । अस्य प्रकाशकारोक्ता व्याख्या—यत्र स्मृत्यादौ कर्म कर्त्तव्यत्वेनोच्यते कर्त्तुः पुनः सव्यं दक्षिणं वाऽङ्गं नोच्यते, तत्र दक्षिणपाणिः कर्माङ्गतया ज्ञातव्यः । यस्मादसौ साङ्गकर्मनिष्पादकतया पारगः । सव्येन तु विगुणं कर्मेति । एतेन गोभिलोक्तकर्मसु बलिदानहोमादिषु अन्योक्तेषु चानुपदिष्टकर्त्रङ्गविशेषेषु अङ्गविशेषनियमेनानुष्ठानं स्फुटीकृतम् । इति ।

B. अत्र तर्कालङ्कारः—"दक्षिणेन पाणिना योनिमभिमृशेत् स्पृशेत् विष्णुर्योनिमित्येतया ऋचा गर्भं धेहीत्येतया च । पृथङ्निर्देशात् पृथगेव स्पर्शः । स खल्वयं स्पर्शो मन्त्रपाठसमकालमेव स्यात् । कुतः ? उत्तरसूत्रात् ; अत एव 'उपस्थं स्पृशन् जपति' इति भवदेवभट्टोऽप्याह स्म । तस्मात् 'मन्त्रपाठानन्तरं स्पर्शः' इति रघुनन्दनमतमसङ्गतम्" इत्याह ।

C. अत्र रघुनन्दनः—"दक्षिणेनेत्यादि समाप्यर्चौ सम्भवतः, कुत्सितदेशस्य सव्येन पाणिना शौचदर्शनात् तद्वारणाय दक्षिणेनेति । उपस्थं योनिं स्पृशेत् विष्णुरिति मन्त्रेण प्रथमं ततो

---

1. 'धरतः' घ । 2. '-मनादेश इति च सिद्धे' घ । 3. '-ग्रहणं' नास्ति ख-ग । 4. '-दित्यतो द-' ख । 5. 'समाप्य-' घ । 6. 'कर्मापवर्गत्वात्' क । 7. 'सकृत्कृते' ख । 8. 'गर्भ' नास्ति ख ।

गर्भं धेहीत्यादिमन्त्रेण च । 'मन्त्रान्ते कर्मादिसन्निपात' इति न्यायात् पाठानन्तरं स्पर्शः, न तु भवदेवभट्टोक्तं स्पृशन् जपति । ऋचौ समाप्यैव संयोगं कुरुतः, न मध्ये वामदेव्यजपः ।

देवलः—

'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।
यं यं गर्भं प्रसूयेत स गर्भः संस्कृतो भवेत् ॥ इति ।

तेन गर्भाधान-पुंसवन-सीमन्तोन्नयनानि सकृदेव कर्त्तव्यानि ।

छन्दोगपरिशिष्टम्—

विवाहादिः कर्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते ।
विवाहादावेकमेवात्र कुर्यात् श्राद्धं नाऽऽदौ कर्मणः कर्मणः स्यात् ॥

विवाहादिगर्भाधानान्तकर्मसु एकमेव श्राद्धम्, न तु प्रतिकर्मादौ, एकेनैव श्राद्धेन कृतेन सर्वाणि श्राद्धवन्तीति । अन्तशब्दोऽत्रावयवार्थः, दशान्तः पट इतिवत्, समीपार्थे उपलक्षणं स्यात्, ततश्च विशेषणोपलक्षणसन्देहे विशेषणत्वेन ग्रहणं कार्यान्वितत्वात् । यत्तु—

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥

इत्यनेन भविष्यपुराणेन श्राद्धं कर्माङ्गत्वेन विहितं तच्छन्दोगेतरपरम् । अत एव भवदेवभट्टेनापि न लिखितम् । अत्र श्राद्धोत्तरगमनेऽपि न दोषः, उक्तभविष्यपुराणात् ।

'नित्ये नान्दीमुखश्राद्धे कृते दानावर्जनम्'

इति वचनान्तराच्च" इत्याह संस्कारतत्त्वे ।

अत्र तर्कालङ्कारः—"ननु समाप्यर्चौ इति शक्यमवक्तुम्, उच्यते—समाप्य सम्भवत एव नेतरत् किमपि कुर्यात्, इतरथा कर्मापवर्गविहितं वामदेव्यगानम् अत्र स्यात् इति भट्टनारायणः । नैतत् सारम्, कुतः ? यतो न खल्वभिमर्शोऽत्र कर्म येन तदन्ते कर्मापवर्गविहितं वामदेव्यगानं प्रसज्येत । किन्तर्हि ? सम्भव इति ब्रूमः । कस्मात् ? तथैवोपक्रमात्, अतः सूत्राच्च । तत् कुत एवेदानीं वामदेव्यगानं प्रसज्येत येन तन्निरासार्थमेतत् सूत्रितमुच्यते । सम्भवात् परतः खल्वेतत् स्यात्, "गर्भाधानवदुपेतो ब्रह्मगर्भं सन्दधाती"ति शाखान्तरमपि गर्भाधानविधिना विष्णुर्योनिं कल्पयत्वित्यादिना, उपेतः नियमुपगतः, इति सम्भवादन्यदावृदिति दर्शयति, तस्मात् गर्भारम्भणीययोरिव कालार्थं वचनं वर्णनीयम् । कथं नाम ? ऋचौ समाप्य सम्भवत एव न पुनरन्तरा किञ्चिदन्यत् कुर्यादिति । तेन पूर्वत्र सूत्रितोऽभिमर्शोऽपि ऋचोः परतो न स्यात्, किन्तु तत्पाठसमकालमेवेति सिध्यति । यत्तु तत्त्वकारेण ऋचोरन्तरे (?) स्पर्शं व्याख्यायापि ऋचौ समाप्यैव संयोगं कुरुतः न मध्ये इति वर्णितम्, तदप्यसङ्गतम्, न हि लभ्यते ऋचोरन्तरभाविनोऽभिमर्शादपि परावीनस्य सम्भवस्य ऋचोर्मध्ये प्रसङ्गः शक्यते वक्तुं येन तन्निरासार्थं समाप्यैव इति नियमनमर्थवत् । तस्मादस्मदुक्तैवावधारणा ।

तद्दस्य गर्भाधानस्य पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होतव्यम् । कस्मात् ?

'अग्नेस्तु मारुतो नाम गर्भाधाने विधीयते'

इति गृह्यासंग्रहोक्तस्याग्नेरर्थवत्तोपपत्तेः । यत्र यत्र खल्वग्निरुच्यते न होमः तत्र तत्रैवमवोचाम 'आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होमः' [ सू० १।९।२३ ] इत्यत्र । तदत्र पूर्णाहुतिर्न कर्तव्या । कुतः ?

विवाहे व्रतबन्धे च शालायां चौलकर्मणि ।
गर्भाधानादिसंस्कारे पूर्णाहुतिं न कारयेत् ॥

इति स्मरणात् । केचिदत्र 'विवहादिरि'ति कर्मप्रदीपवचनं पश्यन्तः श्राद्धं निषेधन्ति, तदसङ्गतम्; यतो न खल्वेतद् गर्भाधाने श्राद्धं निषेधति । कुत्र तर्हि ? गर्भाधानादर्वाचीनेषु विवाहादिषु प्रत्येकमिति ब्रूमः । कुतः ? यस्य कर्मगणस्यान्ते गर्भाधानं शुश्रुम इति गणाद् बहिर्भूतस्यैव गर्भाधानस्य गणलक्षणत्वावगतेः । तुकारार्थेन चकारेण तस्य गणबाह्यत्वप्रज्ञापनाच्च । ननु यथा विवाहो गणान्तर्भूत एव तदादित्वलक्षणः, तथा गर्भाधानमपि तथैवान्तलक्षणमस्तु ? नैष दोषः; उक्तादेव हेतोस्तस्य गणबाह्यत्वप्रतिपत्तेः । वैयधिकरण्येन चोपदेशात् । यस्यान्ते गर्भाधानं शुश्रुम इति वैयधिकरण्येनोपदिश्यते । तेनावगच्छामः—गणाद् बहिर्भूतमेव सद् गर्भाधानं तदन्तलक्षणम् इति । शुश्रुम इति करणाच्च गर्भाधानस्य गणान्ते श्रवणमेव परं न पुनरिदमपि तदन्तर्गतमिति दर्शयति । सन्दिग्धश्च शास्त्रार्थः शाखान्तरादवधार्यते । स्फुटमत्र शाखान्तरेषु श्राद्धमुपलभ्यते—निषेककाले सोमे चेत्यादि ।

अन्नमन्यथोपनयने विवाहे पुत्रकन्ययोः ।
पितृनान्दीमुखान्नाम तर्पयेद् विधिपूर्वकम् ॥
देवव्रतेषु चाऽऽधानयज्ञपुंसवनेषु च ।
नवान्नभोजने स्नान ऊढायाः प्रथमार्तवे ॥

इति वैजवापादौ बहुलम् । यच्चोक्तं तत्त्वकारेण 'अन्तशब्दोऽत्र गणस्यावयवार्थः वृक्षान्तः पट इतिवत्, समीपार्थत्वे उपलक्षणं स्यात् । ततश्च विशेषणत्वोपलक्षणत्वसन्देहे विशेषणत्वेन ग्रहणं कार्यान्वितत्वात् । गर्भाधाने श्राद्धविधायकं वचनं छन्दोगेतरविषयमि'ति, तदसमीचीनम्; सिद्धे हि श्राद्धविधायकवचनस्य छन्दोगेतरविषयत्वेऽन्तशब्दोऽवयवार्थः स्यात्, सिद्धे चावयवार्थत्वे अन्तशब्दस्य श्राद्धविधायकवचनं छन्दोगेतरविषयमित्यन्योन्याश्रयापत्तेः । स्मृत्यर्थसन्देहे स्मृत्यन्तरसंवादादेवार्थनिर्णय इति च स एवाऽऽह । तत् कथमत्रैव ब्रवीतीति न खल्ववगच्छामि । गर्भसंस्कारश्चायं गर्भाधानाख्यः पात्रद्वारेण स्यात्, ततश्च सकृत्संस्कृते इत्यादि भट्टनारायणप्रभृतयः । त्रयोऽप्यमी संस्काराः प्रतिगर्भमावर्तन्ते, अन्यथा परेषां गर्भाणामसंस्कारः स्यादिति कर्कोपाध्यायाः । गर्भाधानं प्रति गर्भमावर्तते न पुंसवनसीमन्तोन्नयने इति मिताक्ष-

श्वरः। सीमन्तोन्नयनं प्रति गर्भं नाऽऽवर्त्तते, गर्भाधानपुंसवने आवर्त्तेते एव इति शूलपाणि-गार्ग्य-नारायणप्रभृतयः। किं पुनरत्र युक्तम्? गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिर्न सीमन्तकरणस्येति भ्रमः। कुतः पुनरियमवधारणा परतो वक्ष्यामः (सीमन्तकरणप्रकरणे)। गर्भाधानमपि प्रतिगर्भं नाऽऽवर्त्तते इति तु विप्रतिपिद्धमेव, सम्भवरूपत्वादस्य। तदन्तरेण गर्भसंस्थितेरेवाभावात् प्रत्यृतु त्वस्यैतदावर्त्तते, 'ऋतावृतौ' इति स्मरणात्, अभिमर्शो ह्यावृत्तिरित्यवोचाम। परमन्वाहार्यश्राद्धस्य नाऽऽवृत्तिः—

असकृद् यानि कर्माणि क्रियेरन् कर्मकारिणः।
प्रतिप्रयोगं नैव स्युर्मातरः श्राद्धमेव च ॥

इति कर्मप्रदीपवचनात्। प्रतिमासकर्त्तव्यदर्शपौर्णमासादीनामिव प्रतिऋतुकर्त्तव्यगर्भाधानस्याप्य-विशेषात्। 'ऊढायाः प्रथमार्त्तवे' इति वचनाच्च" इत्याह स्वभाष्ये। तदत्र गर्भाधाने वृद्धिश्राद्धं सामगैर्न कर्त्तव्यमिति रघुनन्दनः। भवदेवभट्टेनापि स्वनिबन्धे न लिखितमिति तस्यापि स एवाशय इति। अत्र च विवदति तर्कालङ्कार इति तस्य पङ्क्तिरुद्धृत्य दर्शिता। परमत्र किं कर्त्तव्यमित्यपेक्षायां वृद्धिश्राद्धमभिकृत्य यदाह निर्णयसिन्धौ कमलाकरभट्टस्तस्मात् किञ्चिदुपा-दीयते—"अथ वृद्धिश्राद्धम्, तन्निमित्तं पृथ्वीचन्द्रोदये ब्राह्मे—

जन्मन्यथोपनयने.................
.........................प्रथमार्त्तवे।
देवारामतडागादिप्रतिष्ठासूत्सवेषु च।
राजाभिषेके बालान्नभोजने पितृसंज्ञकान् ॥
वनस्थाश्रमं गच्छन् पूर्वेद्युः सद्य एव वा।
पितॄन् पूर्वोक्तविधिना तर्पयेत् कर्मसिद्धये ॥

बोपदेवकालादर्शे—

सीमन्त-व्रत-चौल-नामकरणान्नप्राशनोपायन-
स्नानाधान-विवाह-यज्ञ-तनयोत्पत्ति-प्रतिष्ठासु च।
पुंसूत्यावसथप्रवेशन-सुतास्यावलोकाश्रम-
स्वीकार-क्षितिपाभिषेक-दयितायर्तौ च नान्दीमुखम् ॥

श्राद्धकौमुद्यां निर्णयामृते च मात्स्ये—

अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके।
पुंसवे च निषेके च नवे वेश्मप्रवेशने ॥
देववृक्षजलादीनां प्रतिष्ठायां विशेषतः।
तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् ॥

वृद्ध्याश्रयकम्—

वृद्धौ न तर्पिता ये वै पितरो गृहमेधिभिः।
तद्धीनमफलं ज्ञेयमासुरो विधिरेव सः॥

इति शातातपोक्तेः।

अत्र चौलादीनां यौगपद्ये तन्त्रतोक्ता छन्दोगपरिशिष्टे—

गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत्।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु॥

मातृभ्य इति षष्ठ्यर्थे चतुर्थी। गणशः एकानेकपुत्राणां संस्कारेष्वेकस्मिन्ने एकदेशकालकर्त्रैक्यादित्यर्थः। तथा 'असकृद् यानी'त्यादि (द्रष्टव्यम् पृ० ८)। कर्मावृत्तावपि कुत्र श्राद्धं कार्यं क च नेत्युक्तं तत्रैव 'आधाने' इत्यादि (द्रष्टव्यम् पृ० ८)। एतेषु प्रतिप्रयोगं नाऽऽवर्तते किन्त्वादौ, एतद्भिन्ने सोमयागादौ प्रतिप्रयोगमावर्तते एव श्राद्धमित्यर्थः। क्वचिदादावपि निषेधमाह स एव 'नाष्टकास्वि'त्यादि (पृ० ८)। सोष्यन्त्या आसन्नप्रसवायाः। 'सोष्यन्तीमभ्युक्ष्य' इत्युक्तं कर्म। कात्यायनोक्तस्य श्राद्धस्य पाकस्य प्राधान्यात्, तस्य च—

जातश्राद्धं न दद्यात् तु पक्वान्नं ब्राह्मणेष्वपि।

इति निषेधान्न जातकर्मणि नान्दीश्राद्धमित्याशार्कः। आमान्नेन वा कार्यमित्यपि तेनैवोक्तम्। गौडास्तु जातकर्मण्येव निषेधः। पुत्रजन्मनिमित्तकं तु कार्यमेव। 'जन्मन्यथोपनयने' इत्युक्तेः—

नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम्।
पुत्रजन्मनि तत् कार्यं जातकर्मसमं नरैः॥

इति मार्कण्डेयपुराणाच्चेत्याहुः। अथ निषेककाले इति वचनाद् गर्भाधाने न निषेधः।

निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं विधिवत् कृतम्॥

इति पारस्करः। प्रोषितेति प्रोष्येत्य गृहानुपतिष्ठते पुत्रं दृष्ट्वा जपतीति विहितं कर्म। विवाहादिगर्भाधानान्तो यो गृहप्रवेशचतुर्थीकर्मादिकर्मसमूह उक्तः सूत्रकारेण तत्रापि प्रतिकर्म नेत्यर्थः। अन्येऽपि हलाभियोगादयोऽपवादविषयास्तत्रैव ज्ञेयाः, न इहाप्रचारान्नोच्यन्ते"इति। 'विवाहादि-दि'त्यस्य व्याख्यायां च प्रकाशकारः—"विवाह आदिर्यस्य, 'दक्षिणेन पाणिनोपस्थमभिमृशेदि'ति सूत्रोक्तं गर्भाधानं चान्ते यस्य कर्मगणस्य चतुर्थीहोम-ममशनीयचरुहोम-गृहप्रवेश-यानारोहण-चतुष्पथामन्त्रणाक्षभङ्गसमाधानार्थहोमादिरूपस्य श्रुतवन्तः स्म। अत्र कर्मगणे विवाहादौ एकमेव श्राद्धं कुर्यात् न प्रतिकर्माऽऽदौ। एकेनैव कृतेन श्राद्धेन सर्वाण्येतानि श्राद्धवन्ति भवन्तीति।" इत्याह। एवञ्च पर्यालोचनया गर्भाधाने नान्दीमुखश्राद्धस्य कर्तव्यत्वप्रतिपादकानि प्रमाणानि बाहुल्येनैवोपलभ्यन्ते इति रघुनन्दनमतं दुर्बलमेव प्रतिभाति, वस्तुतोऽत्र गर्भाधाने गोभिलाचार्यानुसारिभिर्नान्दीमुखं कर्तव्यमकर्तव्यं वेति भगवन्तोऽनचाना निर्दिशन्तु।

अथात्र गर्भाधाने होमः कर्तव्यो न वेति विप्रतिपत्तिस्तत्र च भाष्यकारादिभिर्नोक्तो होमः, आचार्यसूत्रेष्वनुपदेशात्। यथा पुंसवनसीमन्तोन्नयनादौ 'पश्चादग्नेः' इत्यादि सूत्रितं न तथा गर्भाधाने इति केवलमत्र समन्त्रमुपस्थस्पर्शनमात्रम्, नात्र मन्त्रपाठात् प्राक् किमपि वेदोक्तं कर्म स्वस्तिवाचनादि कर्तव्यम्, नवाऽन्ते वामदेव्यगानादि अपवर्गविहितं कर्म कर्तव्यम्, केवलमेतावदेव समाप्य सम्भवत इति सूत्रकारस्याऽऽशयः। एवञ्च 'इत्येतयर्चा अभिमृशेत्' इत्युक्तौ स्पृशन् जपति इत्यर्थबोधो वा भवति स्पर्शानन्तरं मन्त्रजप इत्यर्थो वा भवतीति अधिकृत्य यदुक्तं रघुनन्दनेन यच्चोक्तं तर्कालङ्कारेण तद् द्वयमपि न तयोः प्रौढतां प्रतिपादयति। यतः समाप्य इति ल्यप आनन्तर्यमात्रार्थत्वमेव, अतो मन्त्रसमापनानन्तरमन्यत् किमपि न कुर्यादिति निर्धारणमनुचितमेव; सूत्रे विशिष्यानुक्तत्वात्। निर्धारणे सति पुनर्गात्रकण्डूयनादिकमपि प्रतिषिध्येत, तत् किं पानभोजन-नर्मालापकथाचारादिभिः कदाचित् दण्डद्विदण्डादिसमयेऽतिवाहिते सम्भव अशास्त्रीयः स्यात्? एवम्भूता कल्पना तत्र प्रह्वीभावश्च सर्वथैवानुचित एव प्रतिभाति। यच्चोक्तं तर्कालङ्कारेण (आचार्यानुक्तोऽपि) 'गर्भाधाने होमः कर्तव्य एव—

'अग्नेस्तु मारुतो नाम गर्भाधाने विधीयते'

इत्याचार्यपुत्रेण गृह्यासंग्रहे नामकरणात्। यदि नाम गोभिलीयानां गर्भाधाने होमो न प्रसज्येत नामकरणमपि न स्यादिति'। किमयं विचारसहः पक्षः? गृह्यासंग्रहे यदेव लिखितं तदेव सर्वं गोभिलीयानामेव यदि स्यात् तदा 'वरस्तु तान् जपेत् सर्वानृत्विग्राजन्यवैश्ययोः' इत्यादौ राजन्यादीनामुपदेशो व्यर्थ एव स्यात्। तस्माद् नामप्रसङ्गे नामकरणादेव आचार्यानुक्तोऽप्याहुत स्वीकर्तव्येति दुराग्रह एव, मारुतनामप्रदेशस्तु शाख्यन्तरीय एव स्यादिति काऽस्माकमनुपपत्तिः। यदुक्तं 'यत्र यत्र खल्वग्निरुच्यते न होमः' इति तेनाप्येतदेवायाति—यत्र आचार्येणाग्निरुक्तस्तत्रैव महाव्याहृतिहोम इति, अत्र तु अग्निर्नोक्त इति कथमत्र महाव्याहृतिहोमकल्पना स्यादिति महदाश्चर्यमेव। यदप्युक्तं 'गर्भाधानस्य पुरस्तादुपरिष्टाच्च महाव्याहृतिभिर्होम' इति, तदपि न मनोरमम्; यतो रात्रौ वह्निस्थापनाद्यनन्तरं प्रकृतकर्मारम्भे व्याहृतिहोमं समाप्य स्त्रीपुंसौ शयनीयगृहं प्रविशताम्, ततः—'ऋतौ तु गर्भशङ्कित्वादि'त्यादिवचनबलात् स्नानादिकं विधायाऽऽगत्य ततः पुनर्महाव्याहृत्यादिनन्त्रं समापयेदित्येवमितिकर्तव्यता जनानाम् अतीव व्रीडामावहेत् तावत्कालमग्निरक्षार्थं ब्रह्मण ऋत्विजो वा प्रयोजनं स्यात्। नैव आचारः कदाचिच्छ्रुतपूर्वश्च। यैः कैश्चिदपि निबन्धकारैर्गर्भाधाने होम उक्तः, तैरपि प्रातरेव होमः कर्तव्य इति तत्र चोपस्थस्पर्शनमेव प्रधानकर्मत्वेनोल्लिखितं न सम्भव इति। एवञ्च गोभिलाचार्य-भट्टनारायण-भवदेवभट्ट-रघुनन्दनादिभिः प्रामाणिकैरनङ्गीकृतत्वाद् वयं न गोभिलीयानां गर्भाधाने होमानुमोदामह इति। (द्रष्टव्यमपि सू० १।९।२३ भा० पृ० २७२)।

गर्भाधानमधिकृत्य यदुक्तं गृह्यान्तरेषु तदुपादीयते—

छन्दोगगृह्य-खादिरगृह्य-द्राह्यायणगृह्येषु समानानुपूर्वीकाणि सूत्राणि—ऋतुकाले दक्षिणेन पाणिनोपस्थमालभेद् विष्णुर्योनिं कल्पयत्विति, समाप्तायां सम्भवेद् गर्भं धेहीति।

जैमिनिगृह्ये च—ऊर्ध्वमधरात्रात् संवेशनं विष्णुर्योनिं कल्पयत्वित्येतेन त्र्यृचेन विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते। गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥ हिरण्ययी अरणी यं निर्मन्थतामश्विनौ। तं ते गर्भं दधाम्यहं दशमे मासि सूत वा, इत्यृतावृतावेवमेव संवेशने हुत्वाचार्याय गां दद्याद्दर्शने ब्राह्मणेभ्यो गां दद्यात्।

लौगाक्षि-काटकगृह्ययोश्च—तौ संविशतः अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम्। इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकामः। अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम्। उपमामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे॥ प्रजापते तन्वं मे जुषस्व त्वष्टृदेवेभिः सहसा न इन्द्रः। विश्वैर्देवैर्यज्ञियैः संविदानः पुंसां बहूनां मातरः स्याम। अहं गर्भमादधाम्योषधीष्वहं विश्वेषु भुवनेष्वन्तः। अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अवरीषु पुत्रान्' इति स्त्र्याङ्गिरस्यास्तं जपतः। एवमेवतौ प्रजाकामौ संविशतः। करदिति भसदमभिमृशति। भसदित्युपरिजननम्। बृहदिति जातम्। इति गर्भाधानम्।

आपस्तम्बगृह्यसूत्रे च—"यदा मलवद्वासाः स्यादथैनां ब्राह्मणप्रतिपिन्नानि कर्माणि संशास्ति यां मलवद्वाससमि"त्येतानि। रजसः प्रादुर्भावात् स्नातामृतुसमावेशने उत्तराभिरभिमन्त्रयेत। चतुर्थिप्रभृत्या षोडशीमुत्तरामुत्तरां युग्मां प्रजानिःश्रेयसमृतुगमन इत्युपदिशन्ति। इति।

आश्वलायनगृह्ये च—उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनञ्च। जायोपेयेत्येके। प्राजापत्यं तत्। इति।

मानव-वाराहगृह्ययोश्च—अथास्यै गृहान् विसृजेत्। योक्त्रपाशं विपाय तौ सन्निपातयेत्। अपश्यं त्वेत्यादि स्त्र्याङ्गिरस्यास्तं जपति। करदिति भसदभिमृशति। 'जननी'त्युपजननम्। 'बृहदिति' जातं प्रतिष्ठितम्। एतेन धर्मेण ऋतावृतौ सन्निपातयेत्। इति।

पारस्करगृह्ये च—तामुदुह्य यथर्तुप्रवेशनम्। यथाकामी वा काममाविजनितोः सम्भवामेति वचनात्। अथास्यै दक्षिणांसमधि हृदयमालभते। यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम्। वेदाहं तन्मां तद् विद्यात् पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतमिति। एवमत ऊर्ध्वम्। इति।

बौधायनीयगृह्ये च—अथ श्रीमन्तमगारं संमृष्टोपलिप्तं गन्धवन्तं पुष्पवन्तं धूपवन्तं दीपवन्तं तल्पवन्तं साधिवासं विक्षु सर्पिःसूत्रेन्धनप्रक्षोभिसमुदकुम्भादर्शाञ्जिरमं प्रपाद्य तस्मिन्नेनां संवेश्य तस्या अन्तिके जपति 'उदीर्ष्वातो' इति। अथैनामुपसंवेशयति 'प्रजापतिः स्त्रियां यशः' इत्येतया। अथास्याः स्तोकोर्ति विवृणोति 'प्रजायै त्वे'ति। सा यद्यश्रु कुर्यात् तामनुमन्त्रयते जीवां-

भवन्तीति। ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीयते। उपनीतमात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य ब्राह्मणः। एकां शाखामधीत्य श्रोत्रियः। अङ्गाध्याय्यनूचानः। कल्पाध्यायी ऋषिकल्पः। सूत्रप्रवचनाध्यायी भ्रूणः। चतुर्वेदादृषिः। अत ऊर्ध्वं देवः। अथ यदि कामयेत श्रोत्रियं जनयेयमित्यारभ्यर्त्तुपस्यागमात् कृत्वा त्रिरात्रमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणावासाते। अहतानां च वाससां परिधानं सायं प्रातश्चालङ्करणमिषु-प्रतोदयोश्च धारणमग्निपरिचर्या च। चतुर्थ्यां पक्वहोम उपसंवेशनं च। अथ यदि कामयेतानूचानं जनयेयमिति द्वादशरात्रमेतद् व्रतं चरेत्। व्रतान्ते पक्वहोम उपसंवेशनञ्च।

अथ यदि कामयेत ऋषिकल्पं जनयेयमिति मासमेतद् व्रतं चरेत्। व्रतान्ते पक्वहोम उपसंवेशनञ्च। अथ यदि कामयेत भ्रूणं जनयेयमिति चतुरो मासानेतद् व्रतं चरेत्। व्रतान्ते पक्वहोम उपसंवेशनञ्च। अथ यदि कामयेत ऋषिं जनयेयमिति षण्मासानेतद् व्रतं चरेत्। व्रतान्ते पक्वहोम उपसंवेशनञ्च। अथ यदि कामयेत देवं जनयेयमिति संवत्सरमेतद् व्रतं चरेत्। व्रतान्ते पक्वहोम उपसंवेशनं च। अथ यदैषा मलवद्वासाः स्यात् नैनया सह संवदेत न सहाऽऽसीत नास्या अन्नमद्याद् ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्तेऽथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यम्। काममन्यत्। इति।

नैनामुपेयात्। नारण्ये। न पराचीम्। न स्नाति। नाभ्यङ्क्ते। न प्रलिखते। नाङ्क्ते। न दतो धावते। न नखानि निकृन्तते। न कृणत्ति। न रज्जुं सृजति। न पर्णेन पिबति। न खर्वेण पिबति। तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय इति ब्राह्मणम्। चतुर्थ्यां स्नातायां निशायामलङ्कृत्य शयनेऽभिमन्त्रयते 'विष्णुर्योनिमि'ति। यथाऽग्निगर्भा पृथिवी द्यौर्यथेन्द्रेण गर्भिणी। वायुर्यथा दिशां गर्भ एवं गर्भं दधातु ते। गर्भं धेहीति। हिरण्मयीति।

अथैनां परिष्वजति 'अमूहमस्मी'ति। आत्मानं प्रत्यभिमृशते 'अहं गर्भमि'ति। अथैनामुपैति 'तां पूषञ्छिवतमे'ति। स एवमेव चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मामुपैति। प्रजानिःश्रेयसमृतुगमनमित्याचार्याः। सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनः। यथाऽऽसौ यथर्ताविति शाकिकिः।" इति।

## द्वितीयप्रपाठकस्य षष्ठी कण्डिका

गर्भाधानानन्तरं पुंसवनप्रदर्शनार्थमिदमाह—

**तृतीयस्य गर्भमासस्याऽऽदिसदेशे पुंसवनस्य कालः ॥ १ ॥**

तृतीयस्य गर्भमासस्य 'आदिसदेशे आदिसमीपप्रदेशे'*(A) तृतीयभागे' इत्यर्थः । एतस्मिन् काले वर्त्तमाने यत् पुण्यमहः तत्र पुंसवनस्य कालः,(B) यदि

A. "आदिमदेशे इति पाठान्तरम्, तदा व्यक्त एवायमर्थः" इति ( च० त० ) ।

B. पुंसवनमधिकृत्याऽऽह निर्णयसिन्धौ—"प्रयोगपारिजाते जातूकर्णः—

द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् ।
अव्यक्ते गर्भे भवेत् कार्यं सीमन्तेन सहाथवा ॥

बृहस्पतिः—

तृतीये मासि कर्तव्यं गृष्टेरन्यत्र शोभनम् ।
गृष्टेश्चतुर्थे मासे तु षष्ठे मास्यथवाऽष्टमे ॥

सकृत्प्रसूता गृष्टिः । एतेन प्रतिगर्भमपि भवतीति ज्ञायते ।

बह्वृचकारिकाऽपि—

कर्ता स्याद् देवरस्तस्या पत्न्याः पत्युरसम्भवः ।
आवर्तत इदं कर्म प्रतिगर्भमिति स्थितिः ॥

ब्राह्मे—

गर्भाधानादिसंस्कर्ता पिता श्रेष्ठतमः स्मृतः ।
अभावे स्वकुलीनः स्याद् बान्धवोऽन्यत्र गोत्रजः ॥

मदनरत्ने सत्यव्रतः—

मृतो देशान्तरगतो भर्ता स्त्री यदसंस्कृता ।
देवरो वा गुरुर्वाऽपि वंश्यो वाऽपि समाचरेत ॥

हेमाद्रौ यमः—

प्रथमे मासि द्वितीये वा यदा पुंनक्षत्रेण चन्द्रमा युक्तः स्यादिति ।

१, 'आदिदेशे आदिसमीपे' क, 'समीपे' ख-ग ।

दैवाद् वा मानुषाद् वा यथोक्तकालातिपातः स्यात्, तत्र कथमिति ? उच्यते—प्रायश्चित्तान्तरानुपदेशात् सर्वप्रायश्चित्तं हुत्वा [1]ततः क्रियेरन्। उपनयने तु [2]प्रायश्चित्तान्तरं [3]स्मृत्यन्तरे व्रात्यस्तोमाख्यं पठ्यते(A)। तत्र [4]दोषस्य गुरुत्वात् तदेव द्रष्टव्यम्। एवं सीमन्तोन्नयनादिष्वपि द्रष्टव्यम्।

तथा चोक्तम्—

देवतानां विपर्यासे जुहोतिषु कथं भवेत्।
सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात् पुनः॥

---

वराहः—

हस्तो मूलं श्रवणः पुनर्वसुर्मृगशिरस्तथा पुष्यः।
पुंसंज्ञकेषु कार्येष्वेतानि शुभानि धिष्ण्यानि।

अनुराधाऽपि पुन्नक्षत्रम् 'अनुराधान् हविषा वर्धयन्त' इति श्रुतेः।

गर्गोऽपि—

पुन्नामश्रवणस्तिष्यो हस्तश्चैव पुनर्वसुः।
अभिजित् प्रौष्ठपाच्चैव अनुराधा तथाऽश्वयुक्॥

नृसिंहः—

रिक्तां पर्व च नवमीं त्यक्त्वा पुंसवने शुभाः।

ज्योतिर्निबन्धे वशिष्ठः—

मृत्युश्च सौरेस्तनुहानिरिन्दोर्मृतप्रजा पुंसवने बुधस्य।
काकी च वन्ध्या भवतीह शुक्रे स्त्रीपुत्रलाभो रविभौमजीवैः॥

अनवलोभनस्याप्ययमेव कालः। दीपिकायान्तु चतुर्थेऽनवलोभनम् इत्युक्तम्'' इति। वस्तुतस्तु गर्भाधानप्रकरणोक्तभाष्योक्तेः प्रमाणान्तरैश्च नाऽऽवृत्तिर्गर्भाधानादीनां गोभिलीयानामिति प्रतिपादितमेवेति।

A. प्रमाणमत्र गरुडपुराणम्—

अत ऊर्ध्वं पतन्त्येते सर्वधर्मविवर्जिताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥

इति ग० पु० पू० ९४।२३।

याज्ञवल्क्यसंहितायामपि १।३८। तत्र च 'विवर्जिता' इत्यत्र 'बहिष्कृता' इति पाठः। आश्वलायनगृह्यस्य गार्ग्यनारायणवृत्तौ तु 'पतितसावित्रीक उद्दालकव्रतं चरेदि'त्युक्तम्। प्रायश्चित्तन्तु उपनयनप्रकरणे २।१०।४ सूत्रपदटीकायां वक्ष्यामः।

---

1. 'ततः' नास्ति ख-ग। 2. 'प्रायश्चित्तान्तरं' क। 3. 'स्मृत्यन्तरे' नास्ति ग। 4. 'दोषस्यगुरुत्वात्' च।

संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन ।
हुत्वैतदेव कर्त्तव्या ये तूपनयनादधः(A) ॥ इति ।

किञ्च—

**प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ॥ २ ॥**

प्रागावर्त्तनादह्नः (B) इति सिद्धत्वात् प्रातरित्युदयसन्निधावित्यर्थः । उदगग्रेषु दर्भेषूपविश्य सशिरस्का आप्लुता [2]स्नाता, पश्चादग्नेरुदगग्रेषु दर्भेषु प्राची प्राङ्मुखी उपविशति; दक्षिणतः पाणिग्राहस्योपविशति इति दर्शनात् अन्यत्राप्यविशेषः । एतदेवोपवेशनस्थानमस्याः ।

एवं तस्यामुपविष्टायां व्याहृतिहोमान्तं कृत्वा

ततः—

**पश्चात् पतिरवस्थाय दक्षिणेन पाणिना दक्षिणमंसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत् (C)पुमांसौ मित्रावरुणावित्येतयर्चा ॥ ३ ॥**

तूष्णीमंसाभिमर्शनम् । मन्त्रेण नाभिदेशस्य । शेषमृज्वर्थम् । (D)

---

A. कर्मप्रदीपः ३।६।१६-१७ । 'उपनयनादधः' इति करणात् चूडाकरणपर्यन्तमेव सर्वप्रायश्चित्तहोमः प्रायश्चित्तमिति भावः ।

B. प्रकृष्यमत्र सूत्रम् 'उदगयने पूर्वपक्षे' इत्यादि १।१।३ । पृ० ५ ।

C. पुमांसाविति मन्त्रस्तु—

ॐ पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।
पुमानग्निश्च वायुश्च पुमान् गर्भस्तवोदरे ॥ इति ।

मन्त्रब्राह्मणम् १।४।८ । विनियोगस्त्वस्य खादिरे गृह्ये २।२।१९ । पारस्करगृह्यसूत्रेऽपि १।९।५ ।

अस्य व्याख्या—

हे वधु, यथा मित्रावरुणौ आदित्यप्रचेतसौ पुमांसौ, यथा च अश्विनौ देववैद्यौ पुमांसौ, यथा च पुमान् अग्निः, यथा च पुमान् वायुः, तथा तवोदरे अयं गर्भः पुमान् अस्तु । इति ।

D. पश्चात् पृष्ठदेशे पतिः प्राङ्मुख ऊर्ध्वः स्थित्वा दक्षिणमंसं स्पृष्ट्वा, अनन्तर्हितम् अव्यवहितं वस्त्राद्यनाच्छादितम्, नाभिदेशम् अभिमृशेत् स्पृशेत् । यद्यप्यत्र मन्त्रानादेशे व्याहृतयः

1. -'दधः' ग । 2. 'स्नाता' नास्ति ग ।

## अथ यथार्थम् ॥ ४ ॥

यथार्थवचनं सर्वप्रायश्चित्तादितन्त्रसमाप्त्यर्थम् ।

## अथापरम् ॥ ५ ॥

अथेत्यनन्तरोक्तकालानुकर्षणार्थम् । यस्मिन् काले '[1]पूर्वं कर्म इदमपि तस्मिन् काले इति । अपरम् अन्यत् द्वितीयं '[2]पुंसवनं शुङ्गाकर्म'*, वर्तिष्यते इति वाक्यशेषः । एवञ्च तन्त्रेणैव स्यादपरेषु[3]वेति । तन्त्रेण क्रियमाणे '[4]वृद्धिश्राद्ध'[5]स्यापि तन्त्रमेव स्यात् । कुतः ? देवतादेशकालकर्त्रैक्ये तन्त्रमिति न्यायात् ।

तथा च कर्मप्रदीपः—

गणशः क्रिय[6]माणेषु मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु(A) ॥ इति ।

## प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतःफलामस्रामामकृमिपरिसृप्तां त्रिःसप्तैर्यवैर्माषैर्वा परिक्रीयोत्थापयेत् ॥ ६ ॥

'[7]न्यग्रोधो वटः तस्य प्रागुदीच्यां दिशि स्थिता या शुङ्गा तां '[8]परिक्रीय क्रीत्वा, उत्थापयेत्'* गृह्णीयात् । शुङ्गा मुकुलितः पल्लवः ।

---

प्रयोक्तव्या इति 'यत्र मन्त्रा न विद्यन्ते' इत्यादिगृह्यासंग्रह(२।६)वचनबलात् समायाति, प्रतिपादितश्चैवमेव तर्कालङ्कारेण गृह्यासंग्रहप्रमाणमुपन्यस्य 'तस्मात्तु व्याहृतिभिस्ताभिस्सर्वं मन्त्रेण नाभिदेशस्येत्यावरणीयम्' इति ग्रन्थेन स्वभाष्ये, तथाऽपि भवदेवभट्टरघुनन्दनमहामहोपाध्यायादिभिः प्रामाणिकैरनुल्लेखान्नैव व्याहृतिप्रयोगो भविष्यतीत्यवधारयामः । तदत्र भगवन्तोऽभियुक्ताः प्रमाणम् ।

A. कर्मप्रदीपः १।९।१० । अस्य प्रकाशोक्ता व्याख्या—"गणशः समुदायेन क्रियमाणेषु मातृभ्यः पूजा सर्वदा सकृदेव । यथा एकस्मिन्नहनि नित्ये अन्नप्राशनचूडाकरणगोदानादिषु समुदायेन क्रियमाणेषु श्राद्धमपि तेषु गणादौ एकमेव न कर्मसंख्यानुसारेण श्राद्धान्यपि तावत्संख्यानीति" । इति ।

---

1. 'पूर्वकर्म' घ । 2. 'शुङ्गाकर्म पुंसवनम्' ख, नास्ति च । 3. '-वेति' घ । 4. 'वृद्धि-' क-घ । 5. '-मपि' क-ग । 6. '-माणे तु' क-ग । 7. चिह्नितांशो नास्ति ख । 8. 'परिक्रीता' घ ।

तथा चोक्तम्—

लताग्र[1]पल्लवादूर्ध्वं शुक्लेति परिकीर्त्यते ।
पतिव्रता व्रतवती ब्रह्मबन्धुस्तथाऽश्रुतः(A) ॥ इति ।

कियता मूल्येन परि[2]क्रीय ? उच्यते—त्रिःसप्तैः, सप्तभिस्त्रिगुणैरेकविंशतिभिर्यवैर्माषैर्वा । कीदृशीं शुक्लाम् ? उभयतः[3]फलिताम् । अम्लामाम् [4]अम्लानाम्, कृमिभिः परिसृप्ता सर्वतो व्याप्ता कृमिपरिसृप्ता, न कृमिपरिसृप्ता अकृमिपरिसृप्ता [5]तामिति ।

किं तूष्णीमेव [6]क्रय उत्थापनं [7]चोत मन्त्रेणेत्यत आह—

यव्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि(१), यव्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि(२), यव्यसि वसुभ्यो वसुभ्यस्त्वा परिक्रीणामि(३), यव्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि(४), यव्यस्यादित्येभ्य आदित्येभ्यस्त्वा परिक्रीणामि(५), यव्यसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि(६), यव्यसि विश्वेभ्यो देवेभ्यो विश्वेभ्यो देवेभ्यस्त्वा परिक्रीणामि(७), ओषधयः सुमनसो भूत्वाऽस्यां वीर्यं [8]समाधत्तेयं कर्म करिष्यति (८) इत्युत्थाप्य तृणैः परिधायाऽऽहृत्य वैहायसीं निदध्यात् ॥ ७ ॥

यव्यसीत्येतत्प्रभृतिभिः क्रयलिङ्गैः सप्तभिर्मन्त्रैर्यवान् वा माषान् वा वृक्षमूले [9]प्रक्षिप्य, तत ओषधय इत्यनेन मन्त्रेणेतिकरणान्तेन उत्थाप्य तृणैः परिधाय [10]वेष्टयित्वा आहृत्य आनीय [11]वैहायसीम् आकाशस्थां निदध्यात् [12]धारयेत्"*(B) ।

A. कर्मप्रदीपः ३।६।६ । अत्र 'पल्लवो गुढ' इति 'बङ्गवासी'मुद्रितः पाठः ।

B अत्र 'परिक्रीणामी'त्यन्ताः सप्त मन्त्राः सौत्रा एवेति अत्रैव द्रष्टव्याः । 'ओषधयः' इत्यादिमन्त्रोऽपि सौत्र एवेति न पृथगत्रोल्लिखितः । परमत्र 'ओषधय' इतिमन्त्रे 'इयं'पदस्थाने 'इद'मिति पठितं गुणविष्णुना व्याख्यातञ्च तथैवेति व्याख्योपादीयते—"हे ओषधयः, यूयं सुमनसः प्रसन्नचेतसो

1. 'पल्लवोऽवुधः' घ । 2. 'क्रीयते' घ । 3. '-फलाम्' ख-ग-घ । 4. 'अम्लानाम्' ग । 5. 'क्रिमिभिरपरिव्याप्तैः' इत्यधिकम् घ । 6. 'परिक्रय' घ । 7. 'चोत' ख, 'तं मन्त्रेण-' ग । 8. 'समाधत्त' घ । 9. 'परिक्षिप्य' ख । 10. चिह्नितांशो नास्ति घ । 11. 'विहायसी' ख-ग । 12. 'धारयेत्' नास्ति ख ।

व्याहृतिहोमान्ते [1]तां शुङ्गाम्—

दृषदं प्रक्षाल्य ब्रह्मचारी व्रतवती वा ब्रह्मबन्धुः कुमारी वाऽप्रत्याहरन्ती पिनष्टि ॥ ८ ॥

"दृषत् शिला, तां"* प्रक्षाल्य शोधयित्वा शुङ्गां पिनष्टि [3]चूर्णीकरोति। ब्रह्मचारी प्रथमाश्रमी। व्रतवती पतिव्रता स्त्री [4]सा वा। ब्रह्मबन्धुः, ब्रह्म ब्राह्मण्यं"* यस्त्वात्मना न किञ्चिदप्यधीते स [5]वा। कुमारी अपरा कन्या [6]सा वा पेषणं करोति(A)। कथम ? अप्रत्याहरन्ती प्रत्याहरणमकुर्वती। कथं नाम ? उत्क्षिप्य प्रत्याहरेदिति।

प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेष दर्भेषु प्राक्शिराः संविशति ॥ ९ ॥

प्राक्शिराः पूर्वशिरस्का। संविशति स्वपिति। [7]शेषमुक्तार्थम्"*।

पश्चात् पतिरवस्थाय दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य दक्षिणे नासिकास्रोतस्यवनयेत्—पुमानग्निः पुमानिन्द्र इत्येतयर्चा ॥ १० ॥

संविष्टायाः पश्चादवस्थाय, अग्नेस्तस्याश्चान्तराऽवस्थाय, पतिर्यथोक्तेन प्रकारेण तां शुङ्गामभिसंगृह्य दक्षिणे सव्येतरे नासिकास्रोतसि नासिकाच्छिद्रे अवनयेत् (B)पुमानग्निरित्यनेन मन्त्रेण।

---

भूत्वा अस्यां क्रीतायां वटशुङ्गायां वीर्यं सामर्थ्यं समाधत्त अर्पयत। यत इदं कर्म पुंसवनलक्षणं करिष्यति"। इति।

A. अस्य व्याख्यायां कर्मप्रदीपप्रमाणमुक्तं प्राक् वह-सूत्रभाष्ये। एवञ्च भवदेवपद्धतौ 'गर्भवती'ति पाठः प्रामादिको लेखकानां मुद्रणसम्पादकानाञ्चेत्यवधारयामः। अत्र तर्कालङ्कारः—"अब्रह्मबन्धुः इति केचित् पठन्ति तदा अधीतवेद इत्यर्थः। कथं पिनष्टि ? अप्रत्याहरन्ती प्रत्याहरणमकुर्वती। कथं नाम ? तिर्यक्पुत्रकेण न पेषणं कर्तव्यम्। एवं सत्यप्रत्याहरणं पुत्रकस्य स्यात्। कथन्तर्हि ? उच्छ्रितपुत्रकेण आहत्याऽऽहत्य पेषणं कर्तव्यम्। अथवा सकृत् प्रयोगेणैव यथा पेषणं निर्वहति तथा कर्तव्यम् इत्यप्रत्याहरणस्यार्थः"। इत्याह।

B. पुमानग्निरित्यादि मन्त्रस्तु—

---

1. 'क्रते तां' ध। 2. 'दृषदं शिलां' च। 3. चिह्नितांशो नास्ति च। 4. 'सा' नास्ति च। 5. 'वा' नास्ति च। 6. 'सा' नास्ति च। 7. चिह्नितांशो नास्ति च।

## अथ यथार्थम् ॥ ११ ॥[1]

उक्तार्थमेतत्(A) ।

इति 'भट्टनारायणकृतौ'* "गोभिलीयगृह्यसूत्रभाष्ये"* द्वितीयप्रपाठकस्य षष्ठी कण्डिका ।

---

ॐ पुमानग्निः पुमानिन्द्रः पुमान् देवो बृहस्पतिः ।
पुमांसं पुत्रं विन्दस्व तं पुमाननु जायताम् ॥ इति ।

मन्त्रब्राह्मणम् १।४।९ । विनियोगस्तु खादिरगृह्यसूत्रेऽपि २।२।२३ ।

अस्य व्याख्या—हे वधु, यथा पुमान् अग्निः, पुमान् इन्द्रः, बृहस्पतिर्देवः पुमान्, तथा तद्रूप-बुद्धिविभवादिलक्षणं पुत्रं विन्दस्व लभस्व । किञ्च तमनु तस्य पुत्रस्य जातस्य पश्चादन्योऽपि पुमान् पुत्रस्तव जायताम् । इति ।

A. द्रष्टव्यम् सू० २।६।४ पृ० ३७३ । पुंसवनमधिकृत्य यदुक्तं गृह्यान्तरेषु तस्मादृ विद्‌मात्रमुपन्यस्यते । तथा च छन्दोग-खादिरद्राह्मायणगृह्येषु—प्रथमगर्भे तृतीये मासि पुंसवनम् । स्नातामहतेनाऽऽच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठेत् । दक्षिणमंसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत् 'पुमांसावि'ति । अथापरं न्यग्रोधशुङ्गामुभयतःफलामस्रामामक्रिमिपरिसृप्तां त्रिःसप्तैर्यवैः परिक्रीयोत्थापयेन्माषैर्वा, सर्वत्रौषधयः सुमनसो भूत्वाऽस्यां वीर्यं समाधत्तेयं कर्म करिष्यतीति । आहृत्य वैहायसीं कुर्यात् । कुमारी ब्रह्मचारी व्रतवती वा ब्राह्मणी पेषयेदप्रत्याहरन्ती । स्नातां संवेश्य दक्षिणे नासिकास्रोतस्यासिञ्चेत् 'पुमानग्निरि'ति । इति ।

जैमिनिगृह्ये च—पुंसवनं तृतीये मास्यन्यत्र गृहेः, घृते चरुं श्रपयित्वा पुष्पवाज्यं वा स्थाली-पाकवत् संस्कृत्य पुरुषसूक्तेन जुहुयात्, माषौ च यवौ च पुंल्लिङ्गं कृत्वा दधिद्रप्सेनैनां प्राशयेत् 'प्रजापतिः पुरुषः परमेष्ठी स मे पुत्रं ददात्वायुष्मन्तं यशस्विनं सह पत्या जीवसूर्भूयासमि'ति न्यग्रोधशुङ्गं फलाभ्यामुपहितं शुक्लकाभ्यां सूत्राभ्यां ग्रथित्वा कण्ठे धारयेत् ध्रुवकुमारायेत्याचक्षते । वासो दक्षिणा । इति ।

लौगाक्षिगृह्ये च—अथ पुंसवनम् । (सीमन्तोन्नयनानन्तरं पुंसवनसंज्ञकं गर्भसंस्कारं कर्म कर्त्तव्यमिति व्याख्यायाम्) भूयिष्ठगतेषु गर्भमासेषु त्रीन् स्थालीपाकान् श्रपयेदाग्नेयमैन्द्रं वैष्णवं च ; तेषां यथादेवतं जुहोति । अग्निस्तु विश्ववस्तमम् इन्द्रमन्नं प्रतद्विष्णुः पुमान् इत्यभिजुहोति । इति ।

काठकगृह्येऽप्येवमेव सर्वं ज्ञातव्यम् ।

आश्वलायनगृह्ये च—उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनञ्च । यदि नाधीयात् तृतीये गर्भमासे तिष्येणोपोषितायाः सरूपवत्साया गोर्दधनि द्वौ द्वौ माषौ यवञ्च दधि प्रसृतेन प्राशयेत् । किं पिबसि किं पिबसीति पृष्टा पुंसवनं पुंसवनमिति त्रिः प्रतिजानीयात् । एवं

---

1. चिह्नितांशो नास्ति ग । 2. चिह्नितांशो नास्ति च । 1-2. चिह्नितांशो नास्ति ख ।

श्रीन् प्रसूनान्। अथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तः करोति। प्रजावज्जीवपुत्राभ्यां हैके, 'आ ते गर्भो योनिमेतु पुमान् बाण इवेषुधिम्। आवीरो जायतां पुत्रस्ते दशमास्यः॥'

अग्निरेतु...इति। प्राजापत्यस्य स्थालीपाकस्य हुत्वा हृदयदेशमस्या आलभेत 'यत्ते सुसीम' इति।

आपस्तम्बगृह्ये तु—( सीमन्तोन्नयनानन्तरं ) पुंसवनं व्यक्ते गर्भे तिष्येण। न्यग्रोधस्य या प्राच्युदीची वा शाखा ततः सवृषणां शुङ्गामाहृत्य सीमन्तवदग्नेरुपसमाधानादि। अव्रतया कुमार्या दृषत्पुत्रे दृषत्पुत्रेण पेषयित्वा परिप्लाव्यापरेणाग्निं प्राचीमुत्तानां निपात्योत्तरेण यजुषाऽङ्गुष्ठेन दक्षिणे नासिकाच्छिद्रेऽपिनयति। पुमांसं जनयति। इति।

मानवगृह्ये तु—( सीमन्तोन्नयनानन्तरम् ) अष्टमे गर्भमासे जयप्रभृतिभिर्हुत्वा फलैः स्नापयित्वा या ओषधय इत्यनुवाकेनाहतेन वाससा प्रच्छाद्य गन्धपुष्पैरलङ्कृत्य फलानि कण्ठे वै संसृज्याग्निं प्रदक्षिणं कुर्यात् 'प्रजां मे नर्य पाही'ति मन्त्रेणोपस्थानं कृत्वा गुणवतो ब्राह्मणान् भोजयेत्। फलानि दक्षिणां दद्यात्। ततः स्वस्त्ययनं च यो गुरुस्तमर्हयेत्। इति।

वाराहगृह्ये च—अथास्यास्तृतीये गर्भमासे पुंसा नक्षत्रेण यदहश्चन्द्रमा न दृश्यते तदहर्वोपोष्याऽऽप्लाव्याहतं वास आच्छाद्य न्यग्रोधावरोहशुङ्गान् उदपेषं दक्षिणस्मिन्नासिकाच्छिद्रे आसिञ्चेत्। 'हिरण्यगर्भो'ऽ'द्भ्यः सम्भूतः' इत्येताभ्याम्। अथास्या दक्षिणं कुक्षिमभिमृशेत् 'पुमानग्निः पुमानिन्द्रः पुमान् देवो बृहस्पतिरि'ति, 'पुमांसौ मित्रावरुणावि'ति चेत्येताभ्याम्।

पारस्करगृह्ये च—अथ पुंसवनम्। पुरा स्पन्दत इति मासे द्वितीये तृतीये वा। यदहः पुंसा नक्षत्रेण चन्द्रमा युज्येत तदहरुपवास्याऽऽप्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गांश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनं 'हिरण्यगर्भो'ऽ'द्भ्यः सम्भृत' इत्येताभ्याम्। कुशकण्टकं सोमांशुं चैके। कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान्स्यादिति विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः। इति।

बौधायनीयगृह्ये तु—विज्ञाते गर्भे तिष्ये पुंसवनम्। ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा। अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति प्रजापते नत्वमिति। अथाऽऽज्याहुतीरुपजुहोति—गर्भोऽस्योषधीनां गर्भो वनस्पतीनाम् इति तिसृभिरनुच्छन्दसम्। स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात्। अथास्या आज्यशेषमास्ये प्रच्योतयति—अस्मै देवासो वपुषे चिकित्सत इति चतसृभिरनुच्छन्दसम्। इति।

अत्र रघुनन्दनोक्तसंस्कारतत्त्वे विशेषस्तु—"आदिमदेशे दशमदिनाभ्यन्तरे...पञ्चादित्यभिधानादग्निस्थापनं लभ्यते।...यदि स्वशाखादेशाचारात् कुलाचाराद् वा एकस्मिन् दिने द्वितीयपुंसवनमपि क्रियते तदा गणेष्वेकमित्यादिसूत्रान्तरात् उभयकर्मान्ते उदीच्यं कर्म।...अप्रत्याहरन्ती तिर्यक्पुत्रकेण पेषणमकुर्वती किन्तूच्छ्रितपुत्रकेण पुनः पुनः पेषणं कुर्वती।...तेनाङ्गुष्ठानामिकाभ्यां

पिष्टां शुङ्गां वस्त्रबद्धां गृहीत्वा निष्पीड्य दक्षिणनासारन्ध्रे क्षिपेत्। पुंसवनकर्म आधानकर्तु-रसन्निधानेऽन्येनापि कर्तव्यम्—

अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम्।
पिता कुर्यात् तदन्यो वा तस्याभावेऽपि तत्क्रमात्॥

इति स्मृतेः। भुजबले—

उपलञ्च करे कृत्वा स्थिरे तत्राऽऽसने तथा।
गृह्योदितेन होमञ्च शान्तिञ्चैव च कारयेत्॥
ऊर्णासूत्रेण संग्रथ्य जीवं जातीञ्च विद्रुमम्।
गुवाकं रजतं हेम दद्यात् स्तनतटान्तरे॥ इति।

ततः प्रभृति नदीतीरं देवखातोदकं त्यजेत्,

'सन्ध्याटनं तरोर्मूलं तथा देवगृहं त्यजेत्'

इति वचनात्" इति।

---

# द्वितीयप्रपाठकस्य सप्तमी कण्डिका

---

## अथ सीमन्तकरणम्(A) ॥ १ ॥

अथेति पूर्वसूत्रोपादानार्थम्। सीमन्तः केशरचनाविशेषः, तस्य करणं वक्ष्यमाणेन विधिना 'सीमन्तकरणम्'। वर्तिष्यते इति वाक्यशेषः।

कस्मिन् काले तत् कर्त्तव्यमित्यत आह—

## प्रथमगर्भे चतुर्थे मासि षष्ठेऽष्टमे वा ॥ २ ॥

प्रथमो गर्भः, तस्मिन् प्रथमे गर्भे(B), "चतुर्थे मासि, षष्ठे, अष्टमे वा"*। वाशब्दैकत्वाच्च न तुल्यविकल्पः। कथं "नाम ? एतेषां विकल्पानां यत्रोद्गयनाद्युपलभ्यते स एव पक्ष आश्रयणीयः। नन्विह प्रथमगर्भशब्दोपादानात् (C)पूर्वकर्मणी अपि प्रतिगर्भं दर्शयति। अन्यार्थः प्रथमशब्दः। कथम् ? यदि कथञ्चित् अकृत एतस्मिन् संस्कारे गर्भस्य विनाशः स्यात्, तत्र पुनर्गर्भोत्पत्तावयं कालविकल्पो न स्यात्। तत्र आ प्रसवात् पारिभाषिक एव स्यात्, न प्रथमगर्भवद् विकल्प इति(D)।

---

A. सूत्रेणानेन सहैव 'प्रथमगर्भे' इति भागं पठति चन्द्रकान्तः, मोक्षमूलरस्यानुवादेऽपि तथेति।

B. प्रथमे गर्भे इत्याहाऽऽचार्यपुत्रोऽपि गृह्यासंग्रहे—

यथा सीमन्तिकेत्यादिना ( गृ० स० १।१०८ द्रष्टव्यम् पृ० २११ )

C. पूर्वकर्मणी गर्भाधानपुंसवने इत्यर्थः।

D. अत्र तर्कालङ्कारः—"तदिदं सीमन्तकरणं प्रथमगर्भे सूत्रयताचार्यो गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिं दर्शयति। तथा हारीतः—

सकृच्च कृतसंस्काराः सीमन्तेन कुलस्त्रियः।
यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत् ॥

इति सीमन्तेन सकृत्कृतसंस्कारत्वे सर्वेषां गर्भाणां संस्कृतत्वं स्मरन्नेतदेवाऽऽह। अन्यथा सीमन्तेनेत्यस्याऽऽनर्थक्यापत्तेः। तथा आश्वलायनगृह्यपरिशिष्टम्—'सीमन्तोन्नयनं प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कार इति श्रुतिरिति; गर्भश्च पात्रञ्च गर्भपात्रे तयोरयं गार्भपात्रः, स चासौ संस्कारश्चेति स तथा। गर्भ उदरस्थमपत्यम्। पात्रं तदाधारः स्त्री। तदत्र सीमन्तोन्नयनं प्रथमे गर्भे इति छन्यकमुपदेशात् गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिरवगम्यते। अन्यथा सीमन्तोन्नयनपदस्य प्रमत्तगीतता स्यात्। श्रौतश्चास्य गार्भपात्रसंस्कारत्वश्रुत-

---

1. 'सीमन्तकरणम्' नास्ति च। 2. चिह्नितांशो नास्ति च। 3. 'नाम' नास्ति च।

न्यस्यन्मुनिरन्ययोः पात्रसंस्कारत्वं नास्तीति ज्ञापयति। यथा सीमन्तिनीत्याद्याचार्यपुत्रवाक्येऽपि सीमन्तिन्या नार्याः पूर्वगर्भेण संस्कृतत्ववचनादेवमवगम्यते। सीमन्तोन्नयनं प्रथमगर्भे इति च गृह्यान्तरम्। तथा स्मृत्यन्तरम्—

विज्ञाते गर्भे तिष्येण पुंसवनं सत् तृतीये मास्यन्यत्र गृष्टेः, इति। गृष्टिः प्रथमगर्भ इति नारायणः। तदत्र प्रथमगर्भादन्यत्र तृतीये मासि पुंसवनम् इति स्फुटमस्य प्रतिगर्भमावृत्तिः स्मर्यते। न चैतत्संस्कृतप्रथमगर्भविषयमिति मन्तव्यम्, तन्मात्रपरत्वे प्रमाणाभावात्। तिष्येण पुंसवनम्, इति शाखान्तरविषयं स्मरणम्। तिष्येणोपोषितायाः, इत्यादिशाखान्तर-गृह्यकारसूत्रणात्। अन्यत्र गृष्टेस्तृतीये मासीत्यपि नादरणीयम्, आचार्यसूत्रविरोधात्; केवल-मस्यावृत्तिप्रदर्शनार्थमिदमुक्तम्।

तस्माद् गर्भाधानपुंसवनयोर्गर्भसंस्कारतैव परं न तु पात्रसंस्कारताऽपि, तस्मात् ते प्रतिगर्भमावर्त्तनीये। कुतः पुनर्गर्भसंस्कारतैव तयोर्न पात्रसंस्कारताऽपि? पात्रसंस्कारतायां प्रमाणाभावात् समाख्यानाच्च गर्भसंस्कारताऽवगतेः। गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरणान्नप्राशन-चौडोपनयनम्, इति गौतमादिभिः पुरुषसंस्कारमध्ये गणनाच्च। तथाऽन्यत्र—गर्भाधानवदुपेतो ब्रह्मगर्भं सन्दधाति, पुंसवनात् पुंसीकरोति, इति। वैदिकैः कर्मभिरिति गार्भैर्होमैरिति च मनुः। ननु उपस्थमभिमृशेत् इति वचनादभिमर्शो उपस्थमपि संस्करोति, संस्करोतु नाम, किमतो भविष्यति? यद्येवमेतदतो भविष्यति, उपस्थस्य संस्कृतत्वात् सीमन्तकरणस्येव गर्भाधानस्यापि न पुनरावृत्तिरिति। नैवम्, न खल्वेतावता गर्भाधानस्याऽऽवृत्तिः शक्यते वारयितुम्, तस्य गर्भसंस्कारत्वात् सम्भवरूपत्वाच्च। तदावृत्तौ तु प्रयोगवचनेन प्राप्तत्वाद् दीक्षादिसंस्काराणामिवाभिमर्शस्याप्यावृत्तिर्भवत्येव। उलूखलादिसंस्कारवच्चैतदवगन्तव्यम्। यथा हि यागसाधनानामुलूखलादीनां संस्कारकर्माणि प्रोक्षणादीन्यपूर्वप्रयुक्तानि, इति संस्कृता अप्युलूखलादय उपादीयमानाः प्रयोगवचनबलात् पुनः प्रोक्षणादिभिः संस्क्रियन्ते, यथा चावघातस्य वितुषीकरणार्थत्वेऽपि प्रयोगवचनेन प्राप्तत्वात् तण्डुलमप्युपादीयमानमवहन्यते, तथाऽत्रापि गर्भाधानसाधनस्योपस्थस्य संस्कारकर्मणोऽभिमर्शस्याप्यपूर्वप्रयुक्तत्वात् गर्भाधानान्तरे संस्कृतोऽप्युपस्थः प्रयोगवचनबलाद् गर्भाधानान्तरे पुनः संस्करिष्यते। तस्मात् अङ्गत्वादेव यावत्प्रधानमभिमर्शोऽप्यावर्त्तनीय इति न किञ्चिदनुचितम्। पुंसवनेऽप्ययमेव न्यायश्चिन्तनीयः।

सीमन्तकरणमपि तर्हि प्रतिगर्भं क्रियताम्? ननु प्रयोगवचनबलात् स्त्र्यपि पुनः संस्करिष्यते, नेति ब्रूमः। कस्मात्? यस्मात् सीमन्तकरणमिति समाख्यानात् प्राधान्येन स्त्रीसंस्कारतैवास्यावगम्यते, इति नैतत्प्रतिगर्भं क्रियते, शास्त्रप्रामाण्याच्च। सोऽयं शास्त्रोपोद्बलितोऽर्थः शास्त्रैकशरणैरादरणीयः।

यत् पुनर्देवलवचनम्—सकृच्च संस्कृतेत्यादि, तदपि सीमन्तकरणाभिप्रायमेव वर्णनीयम्। सकलवचनानां सामञ्जस्यात्, सकृत् संस्कृता नारी इत्यस्योद्देश्यानुवादकतया च यथाप्राप्त-

नुवादस्यैव वर्णयितुमुचितत्वात्। न खल्वत्र सकृत् संस्कृतत्वं भार्यां विधित्सितम्, अपि तु सकृत् संस्कृतायाः सर्वगर्भेषु संस्कृतत्वम्, इत्यनुवाद एवायम्। तस्मात् संस्कारोऽत्र सीमन्तकरणमेव, तद्धि सकृत् क्रियते, 'संस्कृता नारी'ति वचनाच्च। सीमन्तकरणेन हि सा संस्क्रियते, न गर्भाधानपुंसवनाभ्यामित्यवोचाम। तस्माद् गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिर्न सीमन्तकरणस्येति सिद्धम्। दैवाच्च सीमन्तकरणादर्वागेव गर्भनाशे पुनर्गर्भोत्पत्तौ तत् करणीयम्, अन्यथा खल्वस्य संस्कारस्याभावेनासंस्कृतं पात्रमपत्यञ्च स्यात्, न चैतदुचितम्। शाखान्तरबलाच्च।

तथा च स्मरणम्—

पूर्वश्च स्रावितो यत्र गर्भो यत्राप्यसंस्कृतः।
द्वितीये गर्भसंस्कारस्तेन शुद्धिर्विधीयते॥ इति।

तदिदं सीमन्तकरणविषयं वचनम्। न खल्वत्र प्रतिगर्भमावृत्तिर्निषिध्यते संस्कारस्य, किन्तर्हि? प्रथमगर्भविहितस्य संस्कारस्य दैवादकरणे गर्भान्तरे करणमुपदिश्यते, सीमन्तकरणञ्च प्रथमगर्भे विहितं न गर्भाधानपुंसवने।

तथा स्मृत्यन्तरम्—

या नार्यकृतसीमन्ता प्रसूयेत कदाचन।
अङ्के निधाय तं बालं पुनः संस्कारमर्हति॥ इति।

असंस्कृतगर्भप्रसवे द्वितीयगर्भे संस्कारस्तु प्रकृतबालविनाशविषयो बोद्धव्यः।

केचित् पुनर्गर्भाधानपुंसवनयोरपि प्रतिगर्भमावृत्तिमसहमानाः प्रथमगर्भे इति पूर्वसूत्रप्रतीकेनास्यैकसूत्रतां कल्पयन्तो वर्णयन्ति—'प्रथमगर्भे इत्युपादानात् प्रथमगर्भे एव सीमन्तकरणे चतुर्थमासादिकालविकल्पः, कथञ्चिदकृत एवैतस्मिन् संस्कारे गर्भनाशे गर्भान्तरोत्पत्तौ तु नायं कालविकल्पः। किन्तु गर्भस्पन्दने सीमन्तोन्नयनं यावद्वा बालप्रसवः' इति शङ्खलिखितोक्तकाल एव ग्राह्यः, तदिदमर्थं प्रथमगर्भे इति वचनं न गर्भाधानपुंसवनकर्मणोरावृत्तिप्रज्ञापनार्थमिति। तदप्रमाणमसङ्गतञ्च। यदि तावद् इयं वचनव्यक्तिराश्रीयते सीमन्तकरणस्य प्रथमगर्भे एते कालविकल्पा इति, तदा गर्भान्तरे सीमन्तकरणं न प्राप्नोत्येव। कुतः? विहितस्य सीमन्तकरणस्य प्रथमगर्भे चतुर्थमासादिकालविधानात्, तदपि प्रथमगर्भे एवावतिष्ठते, अकाधिकरणन्यायात्, न हि विहितकालादन्यत्र कर्मणः करणमस्ति; सन्दिग्धोपक्रमं हि वाक्यमुपसंहारवशान्नीयते इति च पूर्वोत्तरमीमांसयोरसकृदुपलभ्यते। तथा च सीमन्तकरणमात्रस्य प्रथमगर्भे विधानात् सिद्धा गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिरित्यफलः प्रयासः। अथ प्रथमगर्भे एवैते कालविकल्पाः; द्वितीये तु गर्भे नायं कालविकल्प इत्यभिप्रायः, तर्हि द्वितीयादिष्वपि गर्भेषु कालान्तरे सीमन्तकरणं स्यादेव, तथा च वृद्धिमिष्टवतो मूलमपि ते नष्टमित्यहो प्रमादः। स्यान्मतं

शाखान्तरबलान्न द्वितीयादिषु गर्भेषु सीमन्तकरणमिति। एवं तर्हि प्रथमे एव गर्भे सीमन्तकरणं शाखार्थ इति 'प्रथमगर्भे' इति पूर्वसूत्रस्यैव प्रतीकमिति सिध्यति। एतत्सूत्रप्रतीकत्वे खल्वभिप्रेयमाणे भवन्मते गर्भान्तरेष्वप्यनेर्नकाले नित्यवत् सीमन्तकरणमायाति, तच्चानिष्टम्। न चाकृते एव संस्कारे प्रथमगर्भविनाशविषयं तदिति वाच्यम्, तन्मात्रपरत्वे प्रमाणाभावात्। अथ शाखान्तरादन्यत्र सीमन्तकरणाभावावगमादगत्या एवं कल्प्यते, तर्हि शाखान्तरे सीमन्तकरणमात्रस्य प्रथमगर्भे उपदेशाद् गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिरिष्यताम्, न हि तयोरनावृत्तावस्मच्छाखमस्ति येन तद्विरोधात् शाखान्तरमनादरणीयं स्यात्, न च परशाखमपि तयोरावृत्तिनिषेधकमुपलभामहे। स्वशाखञ्च किञ्चिदस्यार्थस्योपोद्वलकमुदाहरामः। प्रथमगर्भनाशे तु विशेषशाखान्तरादपरगर्भे तत्करणमुक्तम्, तच्च भवतामप्यवलम्बनीयमेव। अन्यथा खल्वेतत् सीमन्तकरणं प्रथमगर्भविनाशेऽपि गर्भान्तरे वा न स्यात् सर्वेष्वेव वा गर्भेष्वविशेषेण स्यात्, न चैवमिष्यते। नापि गर्भान्तरे सीमन्तकरणे कालान्तरकल्पना युक्ता। प्रथमगर्भविनाशे लाघवेनापरगर्भमात्रविधिपरतया शाखान्तरस्य वर्णयितुमुचितत्वात्, कालश्चावृद्धिव स एवानुवर्तिष्यते; यदि पुनः प्रथम एव गर्भे एव कालविकल्पो द्वितीयगर्भे नैवानुवर्तितुमर्हति इति निर्बन्धातिशयः क्रियते, तथाऽप्येष एव कालस्तत्र कल्पयितुमुचितः स्वशाखानुग्रहात्, प्रथमगर्भस्थाने द्वितीयगर्भमात्रविधानेन तदनुवृत्तौ बाधकाभावाच्च। शङ्खलिखितोक्तस्तु कालो नास्माकमाम्नायते, केषां तर्हि? येषाममी सूत्रकारः येषां वा पारस्करीयादीनां संस्कार एव परमाम्नायते न कालः, तेषामिति भ्रमः। न च तद्वचनस्य द्वितीयगर्भमात्रविषयतायां प्रमाणमस्ति, सीमन्तोन्नयनस्य खल्वेष कालो विहितः, स च शाखान्तरबलात् प्रथमगर्भविषय एव, न ह्येकस्य वचनस्य प्रथमगर्भे एकेषां कालविधायकत्वं गर्भान्तरेषु तेषामन्येषाञ्च, इत्यर्धजरतीयमुचितम्। तस्मादन्येषामेवैष कालविधिः, स खल्वयं कालोऽस्माकं विकल्पयिषितः। तद् वरं स्वशाखोक्त एव कल्प्यताम्, तस्मात् शाखान्तरानुमतं स्वशाखोपोद्वलितञ्च सूत्रच्छेदमननुजानानाः अन्यादृशमेव यदृच्छया कल्पयन्तो न न्यायेन सङ्गच्छन्ते तदिदं शाखैकशरणैरनादरणीयमि"त्याह स्वभाष्ये।

गृह्यकर्मप्रकाशिकायाञ्च—"एतच्च सीमन्तोन्नयनं प्रथमगर्भे उत द्वितीयगर्भादावपि? अत्र वदन्ति प्रतिगर्भमावर्तनीयमेतत्, अन्यथा गौतमादिभिः प्रतिपुरुषं परिगणितगर्भाधानाद्यष्टाचत्वारिंशत्संस्कारविरोधापत्तेः। परे तु न तत् प्रतिगर्भमावर्तनीयं सीमन्तकरणं 'प्रथमगर्भे' इति गोभिलाचार्यैः सूत्रितत्वात्। न च द्वितीयापत्यादेः संस्कारन्यूनतेति शङ्कनीयम्, गर्भपात्रसंस्कारेण तत्र जातानामपत्यानामपि संस्कृतत्वात्। यत्तु सीमन्तकरणं प्रथमगर्भे इति सूत्रकृदुक्त्या गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिरिति, तन्न; तयोरपि पात्रसंस्कारकत्वात्। अत एव गर्भाधाने दक्षिणेन पाणिनोपस्थमभिमृशेदित्युक्तः पात्रसंस्कारः सङ्गच्छते। भट्टनारायणादयोऽपि—'सकृत् संस्कृते स्त्रीद्रव्ये' इत्याचाह कमलाकरोऽग्निहोत्री। एवञ्च यद्यपि तर्कालङ्कारेण बहून्युक्तावचनानि प्रयुक्तानि विषयेऽस्मिन् तथाऽप्येतदाम्नातमेव यद् गर्भाधानपुंसवनसीमन्तोन्नयनानां पात्रसंस्कारत्वमस्त्येव,

प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ॥ ३ ॥

उक्तार्थमेतत्(A) ।

पश्चात् पतिरवस्थाय युग्मं तमौदुम्बरं शलाटुग्रथ्नमाबध्नाति —अयमूर्जावतो वृक्ष इति ॥ ४ ॥

'पश्चादित्युक्तार्थम्'[1]* । युग्मानि यस्मिन् स्तवके फलानि स युग्मः, [2]तमाबध्नाति इत्यनेन सह सम्बन्धः । किं यमेव कञ्चित् ? न ; औदुम्बरम्[2]*, उदुम्बरस्यैव औदुम्बरस्तम् । [3]शलाटुशब्देन नीलमुच्यते । [4]ग्रथ्नशब्देन च स्तवकः । शलाटुश्चासौ ग्रथ्नश्च शलाटुग्रथ्नः, नीलस्तवक इत्यर्थः ।

[5]तथा च कर्मप्रदीपः—

शलाटु नीलमित्युक्तं ग्रथ्नः स्तवक उच्यते[6] ।

[7]कपुच्छिकाऽभितः केशा मूर्ध्नि पश्चात् कपुच्छलम्[7]* ॥ [8]इति(B) ।

[9]तं यथोक्तं शलाटुग्रथ्नम्[9]*, (C)'अयमूर्जावतो वृक्ष' इत्यनेन मन्त्रेण भार्यायाः [10]कण्ठे आबध्नाति ।

---

तथा सति 'सकृच्च संस्कृते'त्यादिवचनबलाद् यन्निर्णीतं रघुनन्दनेन, यच्च मतं भाष्यकारभवदेवहलायुधादीनाम् यच्चास्मद्देशेषु सर्वथा सदाचारत्वेन गृहीतमेतेषां प्रतिगर्भमनावृत्तिरिति तदशास्त्रीयमिति न श्रद्दधीमहि । परमत्र भगवन्तोऽनूचानाः प्रमाणम् ।

A. पुंसवनप्रकरणे (पृ० ३७२) ।

B. कर्मप्रदीपः ३।६।७ ।

C. मन्त्रस्तु— ॐ अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव ।

पर्णं वनस्पते नुत्वा नुत्वा सूयतां रयिः ॥ इति ।

मन्त्रब्राह्मणम् १।५।१ । विनियोगस्तु खादिरगृह्ये—२।२।२९ । शाङ्खायनगृह्ये १।२२।१० । पारस्करगृह्येऽपि १।१५।६ ।

अस्य व्याख्या—हे वधु, अयं वृक्षः उदुम्बराख्यः ऊर्जावतः ऊर्जावान् प्रभूतफलः, तथा प्रशस्ततरः, यतः, अतस्त्वम्, ऊर्जीव उदुम्बरीव, फलिनी पुत्रिणी भव, किञ्च हे वनस्पते उदुम्बर, अस्मा

---

1. चिह्नितांशो नास्ति घ । 2. 'तमाबध्नाति······औदुम्बरम्' इत्यंशो नास्ति घ । 3. 'शलाटु नीलम्' घ । 4. 'ग्रथ्नः स्तवकः' घ । 5. 'तथा चोक्तम्' घ । 6. 'अनन्तरम् इति' इत्यधिकम् क-ख । 7. चिह्नितांशो नास्ति घ । 8. 'इति' नास्ति घ । 9. 'तं शलाटुग्रथ्न' घ, 'तं शलाटुग्रथ्नं' नास्ति क । 10. 'कण्ठे' नास्ति क ।

**अथ सीमन्तमूर्ध्वमुन्नमयति(A) भूरिति दर्भपिञ्जूलीभिरेव प्रथमं भुवरिति द्वितीयं स्वरिति तृतीयम् ॥ ५ ॥**

'अथेति स्थाननियमार्थम्। तत्रस्थ एव सीमन्तो व्याख्यातः'[1]। तमूर्द्ध्वमुन्नमयति दर्भपिञ्जुलीभिरेव(B)। एवकारकरणात् यावन्ति उन्नयनानि तावतीभिरेव तिसृभि-रित्यर्थः(C)। "ॐ भूरित्यनेन मन्त्रेण प्रथममुन्नमयति। "भुवरिति द्वितीयम्। स्वरिति तृतीयम्"[2]। "अथेति स्थाननियमार्थम्। तत्रस्थः"[3] प्रथमं द्वितीयं

---

प्रस्तुतायां स्त्रियां त्वया रयिः पुत्रधनम्, सूयतां प्रसूयताम्। किमिव? पर्णमिव, किं कृत्वा? तुत्वा तुत्वा प्रेर्य प्रेर्य। इति।

A. ऊर्ध्वं नयतीति तर्कालङ्कारधृतं पाठान्तरम्।

B. पिञ्जुलीलक्षणमुक्तं प्राग् भाष्ये ( द्रष्टव्यम् पृ॰ २०४ )।

C. अत्र तर्कालङ्कारः—"कतमाभिर्दर्भपिञ्जुलीभिरुन्नयति? तिसृभिरित्याह। कुतः? कपिञ्जलन्यायेन बहुवचनस्य तदर्थस्यौत्सर्गिकत्वात, तद्दिदं प्रथममुन्नयनम्। भुवरिति द्वितीयं दर्भपिञ्जुलीभिरेव। स्वरिति तृतीयं तथैव। तदेवं तिसृभिस्तिसृभिरेकैकमुन्नयनमित्युन्नयन-त्रित्वात् दर्भपिञ्जूल्योऽपि नवैव सम्पद्यन्ते, तासाञ्च तिसृभिरेकमुन्नयनं तावतीभिरपरं तावतीभि-रेवापरमिति भवदेवभट्टमतम्। अत एव भूरिति दर्भपिञ्जुलीभिरिति सूत्रयित्वा प्रथममिति सूत्रितम्। यदि पुनस्तिस्र एव दर्भपिञ्जुल्यः स्युस्तर्हि आदित एव दर्भपिञ्जुलीभिरिति सूत्रयित्वा भूरिति प्रथमं भुवरिति द्वितीयम् इति विनियोगममूषाममूत्रयिष्यत ; न चैवम्। तस्मादनुमिमीमहे भूरिति प्रथम एवोन्नयने तिस्रो दर्भपिञ्जुल्यो व्याप्रियन्ते, एवमुत्तरयोः। तत्र ब्रूमः—यत तावदुक्तं प्रथम एवोन्नयने तिस्रो दर्भपिञ्जुल्यो व्याप्रियन्त एवमुत्तरयोरिति, एतद् गृह्णीमः ; यत पुनरुक्त-मुन्नयनत्रित्वाद् दर्भपिञ्जुल्योऽपि नवैव सम्पद्यन्त इति, एतन्नानुजानीमः। किं कारणम्? भूरित्यादिवचनादेवकाराच्च ; या एव दर्भपिञ्जुल्यः प्रथमेनोन्नयनेन संबध्यन्ते ता एव द्वितीयेन ता एव तृतीयेनेति यावत् प्रतीयते ; प्रतीयते चेन्न युज्यते विना कारणमुत्स्रष्टुम्। तस्मात् तिस्र एव दर्भ-पिञ्जुल्यस्ताभिरेव प्रथममुन्नयनं ताभिरेव द्वितीयं ताभिरेव तृतीयमिति न दर्भपिञ्जुलीनां नवत्वं न वा एकैकया पिञ्जुल्या एकैकमुन्नयनमिति। तथा च गृह्यासंग्रहः—

'सीमन्ते दर्भपिञ्जुल्यस्तिस्रस्ताभिस्त्रिरुन्नयेत' इति" २।१३।

इत्याह स्वभाष्ये। रघुनन्दनोऽप्येवमेवाऽऽह संस्कारतत्त्वे। गृह्यकर्मप्रकाशिकायामपि 'तत-स्तस्मिन्नेव स्थाने पतिर्दर्भपिञ्जुलीः समदाय भूरिति मन्त्रेण प्रथमं सीमन्तमूर्ध्वं नयति, ताभिरेव पिञ्जुलीभिर्भुवरिति द्वितीयम्, ताभिरेव स्वरिति तृतीयम्' इत्याह। तदत्र केवलं भवदेवानुसारेण

---

1. 'अथेति......व्याख्यातः', इति नास्ति घ। 2. 'ॐ' नास्ति ख। 3. चिह्नितांशो नास्ति ग।
4. 'स्थाननियमार्थम्' ख।

तृतीयमिति व्याहृतीनां पिञ्जुलीनां च ¹विनियोगात्। इतरथा तिसृभिरपि पिञ्जुलीभिरविहृताभिर्व्याहृतिभिश्चाऽऽकृत्यांन्नयनं स्यात्।

## अथ वीरतरेण येनादितेरित्येतयर्चा ॥ ६ ॥

अथेति पूर्ववत्। वीरतरस्तरुविशेषः।

तथा च कर्मप्रदीपः—

श्वाविच्छलाका ²शल्ली तथा वीर³तरस्तरुः।
⁴तिलतण्डुलसंपक्वः कृशरः सोऽभिधीयते(A) ॥ इति।

अन्ये त्वेवं पठन्ति—'तथा वीरतरः शर इति'(B)। गुरुसोमाजातशत्रुभ्यामप्येवं ⁵व्याख्यातम्। अवतरत्यनेन वीराः संग्राममिति वीरतरः शर इति। वाजसनेयिनां तु वृत्ते स्थितिः। तत्र 'भगवन्तो भूमिदेवाः प्रमाणम्। तेन वीरतरेण 'येनादिते'-रित्येतया ऋचा (C)सीमन्तमूर्द्ध्वमुन्नयतीति प्रकृतम्।

## अथ पूर्णचात्रेण राकामहमित्येतयर्चा ॥ ७ ॥

(D)सूत्रार्थमेतत्।

तत्र दर्भपिञ्जुल्यो वा प्रहीनव्याम्ितसो वा भाष्यकाराभिसम्मता इति भगवन्तोऽनूचाना निर्दिशन्तु।

A. कर्मप्रदीपः ३।६।८। मुद्रितपुस्तकयोस्तु 'वीरतरस्तरुः' इति पाठो नोपलभ्यते।

B. तथा च गृह्यासंग्रहे—

'त्रिभिः श्वेतैश्च शल्ली प्रोक्तो वीरतरः शरः' इति १५९.३।

C. सा च ऋक्—

ॐ येनादितेः सीमानं नयति प्रजापतिर्महते सौभगाय।
तेनाहमस्यै सीमानं नयामि प्रजामस्यै जरदष्टिं कृणोमि ॥

मन्त्रब्राह्मणम् १।५।२।

अस्या व्याख्या—प्रजापतिर्जगतः स्रष्टा येन शरेण वीरतरेण अदितेः देवमातुः सीमानं सीमन्तं नयति नीतवान्। महते बृहते सौभगाय तेन शरेण अहं भर्ता अस्यै अस्याः स्त्रियाः सीमानं सीमन्तं नयामि करोमि। प्रजां पुत्रपौत्रादिकां जरदष्टिं जरापर्यन्तां दीर्घकालजीविनीं कृणोमि करोमि। इति।

D. पूर्णचात्रेणेति सूत्रपूर्णतर्कुणेत्यर्थः। तथा च तेन सीमन्तस्योन्नयनं कर्तव्यम्।

---

1. 'विनियोगाच्च' ग-घ। 2. 'चौक्रम्' क-ग। 3. 'तरुरी' क-ख। 4. '-तरः शरः' ख। 5. यत्रार्द्धमिदं नास्ति घ। 6. 'व्याख्यानं कृतम्' क-ख। 7. 'संभवन्ती' क।

त्रिश्वेतया च शलल्या यास्ते राके सुमतय इति ॥ ८ ॥

त्रिषु स्थानेषु श्वेता शुक्ला त्रिश्वेता तया [1]त्रिश्वेतया [2]शलल्या, शलली सेधा-शलाका (A)'यास्ते [3]राक' इत्यनेन मन्त्रेण सीमन्तमुन्नयति ।

---

मन्त्रस्तु—

ॐ राकामहं सुहवां सुष्टुती हुवे
शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याऽच्छिद्यमानया
ददातु वीरं शतदायुमुक्थ्यम् ॥ इति ।

मन्त्रब्राह्मणम् १।५।३ । विनियोगस्तु आपस्तम्बगृह्यसूत्रेऽपि १।१४।३ ।

अत्र 'सीव्यत्वयः' इति गुणविष्णुः पठति व्याकरोति च 'अयः' इति अदसो दकारस्य व्यत्ययेन यकारः इति ।

अस्य व्याख्या—अहं भर्ता सुहवां शोभनाह्वानयोग्यां राकाम् उत्तरां पौर्णमासीं देवीं सुष्टुती सुष्ठुस्तुत्या हुवे आह्वये । सुभगा सौभाग्यवती सा देवी नः अस्माकम् एतदाह्वानं शृणोतु । किञ्च त्मना आत्मना, स्वयमेव बोधतु बुध्यतु, एतदाह्वानाभिप्रायमिति भावः । बुद्ध्वा च सैव देवी अच्छिद्यमानया अभज्यमानया सूच्या सङ्घटनशीलया अपः सीमन्तलक्षणं व्रतं सीव्यतु यथा चेयं बहुशुभकर्मक्षमा भवेदिति । किञ्च शतदायुमुक्थ्यं शतसंख्याकदानवतां मध्ये मुख्यं प्रधानं वीरं पुत्रं ददातु, अस्यै गर्भिण्यै इति शेषः । गुणविष्णुस्तु—'अयः' एतत् पुत्रजननकर्म पुत्रपौत्रादिलक्षणमित्याह ।

A. मन्त्रस्तु—

ॐ यास्ते राके सुमतयः सुपेशसो
याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि
सहस्रपोषं सुभगे रराणा ॥ इति ।

मन्त्रब्राह्मणम् १।५।४ । विनियोगप्रमाणञ्चास्य हिरण्यकेशिगृह्यसूत्रेऽपि २।१।३ ।

अस्य व्याख्या—हे सुभगे सर्वलोकवल्लभे, राके उत्तरपौर्णमासि, ते तव, याः सुपेशसः सुरूपाः, सुमतयः शोभनबुद्धयः, याभिः सुरूपसुमतिभिः, त्वं दाशुषे हविर्दानशीलाय यजमानाय, वसूनि धनानि ददासि, ताभिरेव उपेता सुमनाः प्रसन्नचित्ता त्वं नः अस्मभ्यं सहस्रपोषं बहुजनप्रतिपालकं पुत्रं रराणा ददाना सती अद्य सीमन्तोन्नयनक्षणे उपागहि समागच्छ । इति ।

1. 'त्रिश्वेतया' नास्ति ख । 2. 'शलल्या सेधाशलाकया' ख । 3. 'राक' नास्ति क-ख ।

## कृसरः स्थालीपाक उत्तरघृतस्तमवेक्षयेत् ॥ ९ ॥

कृसरो व्याख्यातः [1]"तिलतण्डुलसम्पक्वः कृसरः सोऽभिधीयते' इति[1]*। स्थालीपाकश्चरुः। उत्तरम् उपरि घृतं यस्यासावुत्तरघृतः, तमवेक्षयेद् दर्शयेत्। प्रकृतत्वाद् वध्वाः। स्थालीपाकग्रहणं चरुस्थाल्यां स्थालीपाकमात्रस्य श्रपणार्थम्। [2]मनुष्यत्वाद् [3]"द्विः प्रक्षालनम्। ततश्च य एव कश्चित् महानसे श्रपयित्वा अवेक्षणार्थमेव तत्राऽऽसादयेत्"*। (A)

ननु—आज्यं हव्यमनादेशे जुहोतिषु विधीयते।

मन्त्रस्य देवतायाश्च प्रजापतिरिति [4]स्थितिः॥ (B)

इति वचनात् मन्त्रदेवतयोरनादेशाच्च [5]प्राजापत्य एवायम्, स्थालीपाकः कस्मान्न भवतीति? उच्यते—यत्र होमश्चोत्पद्यते मन्त्रदेवतयोश्चानादेशस्तत्र प्राजापत्यहोमः स्यात्, यथा पूर्णाहुतौ। इह चरुहोमस्याप्यनादेशः, न केवलं मन्त्रदेवतयोरिति। [6]उत्तरत-स्तमवेक्षयेदिति स्यात्। ननु यथा चूडाकरणे वक्ष्यति वृथापक्व इति (C), अत्रापि कस्मान्नैवमुच्यते [7]इत्याह—इह मन्त्रेणावेक्षणस्य दृष्टत्वाद् भक्षणोपदेशाच्च न वृथापक्वः स्यात्, तस्माद् यथोक्त एवार्थः।

दर्शयित्वा च वध्वाः—

## किं पश्यसीत्युक्त्वा प्रजामिति वाचयेत् ॥ १० ॥

[8]ऋज्वेतत् (D)।

A. निर्वपणन्त्वत्र नास्ति। तथा च गृह्यासंग्रहः—

चूडाकर्मणि सीमन्ते यस्तु पाकः सदा गृहे।
विवाहे चैव लाजानां नोक्तो निर्वपणो विधिः॥ इति २।३९।

तथा च अमुष्मै त्वा जुष्टं निर्वपामीत्येवंरूपो विधिराचार्यैर्नोक्त इति भावः।

B. कर्मप्रदीपः १।८।१६। उक्तमिदं भाष्यं, व्याख्यातञ्च प्राक् (पृ० ५७)।

C. 'आनडुहो गोमयः कृसरः स्थालीपाको वृथापक्व इत्युत्तरतः' इति गो० सू० २।९।९।

D. ऋज्वेतदित्यस्य विवृतिस्तु—यदा सा वधूस्तं कृसरं पश्यति तदैव पतिः पृच्छेत् किं पश्यसि? इति। ततश्च पतिः पत्नीं 'प्रजां पशून् सौभाग्यं मह्यं दीर्घायुष्ट्वं पत्युः' इति इमं मन्त्रं वाचयेत्। मन्त्रस्यास्याऽऽकरस्तु मन्त्रब्राह्मणम्। १।५।९। विनियोगप्रमाणञ्चास्य जैमिनीयगृह्यसूत्रेऽपि ७।९।

1. चिह्नितांशो नास्ति क-ख-ग। 2. चिह्नितांशो नास्ति ख-ग। 3. 'चात्र द्विः-' घ। 4. 'स्थितिः' नास्ति ख। 5. 'अत्र प्राजापत्यं वाच्य स्थाली-' क। 6. 'उत्तरघृत-' ग, 'उत्तर-' घ। 7. 'इति' नास्ति घ। 8. 'ऋज्वेतत्' नास्ति ग।

## तं सा स्वयं भुञ्जीत ॥ ११ ॥

'घृतवदभ्युज्ज्येव ।

## वीरसूर्जीवसूर्जीवपत्नीति ब्राह्मण्यो मङ्गल्याभिर्वाग्भिरुपासीरन् ॥ १२ ॥

वीरान् विक्रान्तान् पुत्रान् सूते इति वीरसूः, त्वं भवेति वाक्यशेषः । प्रतिपदं 'स्यात् । जीवसूः जीवतो दीर्घायुषः पुत्रान् सूते इति । जीवतः पत्नी जीवपत्नी, अविधवेत्यर्थः । इत्येवं'प्रकाराभि'र्मङ्गल्याभिर्वाग्भिर्ब्राह्मण्य उपासीरन्"* गायेयुः । असाविति तन्त्रं समापयेदिति । (A)

अस्य व्याख्या—भर्ता पृच्छेत्—हे वधु, किं पश्यसि ? अत्र स्थालीपाके इति शेषः । तत उत्तरं वध्वा कथनीय एव मन्त्रः । प्रजामिति, प्रजां पुत्रादिसन्ततिम्, पशून् गवादीन्, पत्युस्तव दीर्घायुष्ट्वं चेति मह्यं मम सौभाग्यं पश्यामीति शेषः । अत्र भवदेवभट्टस्तु "किं पश्यसीत्यादि सर्वमेव मन्त्रं पतिः प्रश्नपूर्वमुच्चारयेत् । सर्वं भवदुक्तं पश्यामीति वधूर्ब्रूयात्" इत्याह । तत्पदाङ्कानुसारिणो गुणविष्णवोऽपि—'हे कल्याणि, अस्मिन् स्थालीपाके आत्मसम्बन्धित्वेन प्रजां पुत्रपौत्रादिकां पशून् गोमहिषादिकान् सौभाग्यं मह्यं मम पत्युर्दीर्घायुष्ट्वं बहुकालजीवित्वं किं पश्यसि ? एवं प्रश्नपूर्वमुक्ता सती उत्तरमाह—सर्वं भवदुक्तं पश्यामी'ति इत्याहुः स्वकीयच्छन्दोगमन्त्रभाष्ये । परमत्र सूत्रसङ्गतिः कथं भवतीति त एव जानन्ति । इति दिक् ।

A. तदत्र सीमन्तोन्नयनप्रकरणे यदुक्तं गृह्यान्तरेषु तेभ्यो यथासम्भवं किञ्चिदुपस्थाप्यते—तथा च छन्दोगद्राह्यायणखादिरगृह्येषु प्रायः समानानुपूर्वीकाणि सूत्राणीति तानि समस्योल्लिख्यन्ते—"अथास्याश्चतुर्थे मासि षष्ठे वा सीमन्तोन्नयनम् । स्नातामहतेनाऽऽच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठन्ननुपूर्वया फलवृक्षशाखया सकृत् सीमन्तमुन्नयेत्, त्रिश्वेतया च शलल्या 'अयमूर्जावतो वृक्ष' इति । कृसरः स्थालीपाकः । उत्तरघृतमवेक्षन्तीं पृच्छेत् किं पश्यसीति । प्रजामिति वाचयेत् ।

जैमिनिगृह्यसूत्रे च—सीमन्तोन्नयनं चतुर्थे मासि षष्ठेऽष्टमे वा पूर्वपक्षे पुण्ये नक्षत्रे हस्तोत्तराभिर्वा कुर्यात् । तिलमुद्गमिश्रं स्थालीपाकं श्रपयित्वाऽन्वारब्धायां जुहुयान्महाव्याहृतिभिर्हुत्वा प्राजापत्यया चाथैनां पश्चादग्नेर्भद्रपीठ उपवेश्यैरकायां वाऽहतोत्तरायां तस्यै त्रिशुक्लया शलल्या प्राणसम्मितं सीमन्तं कुर्यात्कुशेन आ मूर्ध्नः 'प्राणाय त्वा' 'अपानाय त्वा' 'व्यानाय त्वे'ति । अथास्या दक्षिणं केशान्तं सगिभरलङ्कृत्य तयोत्तरं हिरण्यवतीनामपां कांस्यं पूरयित्वा तत्रैनामवेक्षयन्

1. 'घृतमेतदपि' घ । 2. 'स्यात्' नास्ति घ । 3. '-प्रकाराभिरुपासीरन्' घ । 4. '-र्मङ्गल्याभि-' नास्ति क-घ ।

पृच्छेदिति, 'भूर्भुवः स्वः किं पश्यसीति', परा प्रत्याह 'प्रजां पशून् सौभाग्यं मह्यं दीर्घमायुः पत्युरि'ति। वासो दक्षिणा हिरण्यं वा। इति।

लौगाक्षिकाठकगृह्ययोश्च—(पुंसवनात् प्रागेव सीमन्तोन्नयनम्) तृतीये गर्भमासे सीमन्तं कारयते शुक्लपक्षस्य पुण्याहे पर्वणि वा। यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चादग्नेर्दर्भेषु प्राक्कासीनायाः सर्वान् केशान् संप्रमुच्य प्रसाधयते। यं सीमन्तं कङ्कतस्ते चकार यद्वा क्षुरः परीवपर्ज वपंस्ते। स्त्रीषु रूपमश्विनौ तन्निधत्तं पौंस्नेनेमं संसृजतं वीर्येण। इन्द्राणी चक्रे कङ्कतं स सीमन्तं विसर्पतु। पुनः पतिभ्यो जायां दा अग्ने प्रजया सह। पुनः पत्नीमग्निरदादायुषा सह वर्चसा। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् इति। त्रिःश्वेतया शलल्या शमीशाखया सपलाशया वा सीमन्तं विचिनोति 'यास्ते राक' इति। अथास्याः पृथक् केशपक्षौ सन्नह्यति नील-लोहितेन सूत्रेण नीललोहितं भवति कृत्या सक्तिर्व्यज्यते। एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यत इति। यो गुल्कतमर्हयेत्। एतदेव कुमारीणां सटोद्धरणमत्रैवानुलेपनम्। इति।

आश्वलायनगृह्ये च—चतुर्थे गर्भमासे सीमन्तोन्नयनम्। आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्। अथाग्निमुपसमाधाय पश्चादस्याऽनडुहं चर्माऽऽस्तीर्य प्राग्ग्रीवमुत्तर-लोम, तस्मिन्नुपविष्टायां समन्वारब्धायां 'धाता ददातु दाशुष' इति द्वाभ्यां 'राकामहमि'ति द्वाभ्यां 'नेजमेष' इति तिसृभिः 'प्रजापते न त्वदेतान्यन्य' इति च। अथास्यै युग्मेन शलाटुग्लप्सेन त्र्येण्या च शलल्या त्रिभिश्च कुशपिञ्जुलैरूर्ध्वं सीमन्तं व्यूहति 'भूर्भुवः स्वरोमि'ति त्रिः, चतुर्वा। वीणा-गाथिनौ संशास्ति 'सोमं राजानं संगायेतामि'ति। सोमो नो राजाऽवतु मानुषीः प्रजा निविष्ट-चक्राऽसाविमां नदीमुपवसिथा भवन्ति। ब्राह्मण्यश्च वृद्धा जीवपत्न्यो जीवप्रजा यद् यदुपदिशेयुस्तत् तत् कुर्युः। वृषभो दक्षिणा। इति।

आपस्तम्बगृह्ये च—सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि। ब्राह्मणान् भोजयित्वाशिषो वाचयित्वाऽग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वाऽपरेणाग्निं प्राचीमुपवेश्य त्र्येण्या शलल्या त्रिभिर्दर्भपुञ्जीलैः शलालुग्लप्सेनेत्यूर्ध्वं सीमन्तमुन्नयति व्याहृतीभिरुत्तराभ्यां च। गायतमिति वीणागाथिनौ संशास्ति। उत्तरयोः पूर्वा साल्वानां ब्राह्मणानामितरा। नदीनिर्देशश्च यस्यां वसन्ति। यवान् विरूढानाबध्य वाचं यच्छत्या नक्षत्रेभ्यः। उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य वत्समन्वारभ्य व्याहृतीश्च जपित्वा वाचं विसृजेत्। इति।

मानवगृह्ये च—(पुंसवनात् प्राक्) तृतीये गर्भमासे अरणी आहृत्य षष्ठेऽष्टमे वा। जय-प्रभृतिभिर्हुत्वा पश्चादग्नेर्दर्भेष्वासीनायाः पश्चात् सर्वान् प्रमुच्य केशान् नवनीतेनाभ्यज्य त्रिश्वेतया शलल्या शमीशाखया च सपलाशया पुनः पत्नीमग्निरदादिति सीमन्तं करोति। इति।

वाराहगृह्ये च सीमन्तोन्नयनं विवाहसंस्कारान्तर्गतं मानवगृह्यसमानुपूर्वीकमिति तत्र तल्लिखितं द्रष्टव्यम् (पृ० ३४७)।

बौधायनीयगृह्ये च—प्रथमगर्भायाश्चतुर्थे मासि सीमन्तोन्नयनम्। ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा। अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति। धाता ददातु न इति पुरोऽनुवाक्यामनूच्य धाता प्रजाया उत राय ईशे इति याज्यया जुहोति। अथाऽऽज्याहुतीरुपजुहोति। धाता ददातु नो रयिं प्राचीम् इत्याऽन्ताद्नुवाकस्य। स्विष्टकृत्प्रभृतिसिद्धमा धेनुवरप्रदानात्। अथास्यास्त्र्येण्या शलल्या त्रिभिर्दर्भपुञ्जीलैरुदुम्बरप्रसूनैर्यवप्रसूनैरिति केशान् विभजन् सीमन्तमुन्नयति 'राकामहं' 'यास्ते राके' इति द्वाभ्याम्। अथास्य यवप्रसूनान्याबध्नाति 'यवोऽसी'ति। अथैनौ वीणागाथिनाविति प्रतिगृह्णीते। अथैनौ संशास्ति 'गायतमि'ति। तावेतां गाथां गायतः सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः। विवृत्तचक्रा आसीनास्तीरेणासौ तवेति। यस्यै नद्यास्तीरे संश्रिता वसन्ति तस्यै नाम गृह्णाति। अष्टमे मासि विष्णव आहुतीर्जुहोति। विष्णोर्नु कम् इत्येतेन सूक्तेन। विष्णवे बलिमुपहरति, वैष्णवो ह्येष मासो विज्ञायते। विष्णुर्हि गर्भस्य देवता। इति।

पारस्करगृह्ये तु—अथ सीमन्तोन्नयनम्। पुंसवनवत्। प्रथमगर्भे मासे षष्ठेऽष्टमे वा। तिलमुद्गमिश्रं स्थालीपाकं श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टायां युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जुलैस्त्र्येण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति 'भूर्भुवः स्वरि'ति। प्रतिमहाव्याहृतिभिर्वा। त्रिवृतमाबध्नाति। अयमूर्जावतो वृक्ष इति। अथाऽऽह वीणागाथिनौ 'राजानं सङ्गायेतां यो वाऽप्यन्यो वीरतर' इति। नियुक्तामप्येके गाथामुपोदाहरन्ति। सोम एव नो राजेमा मानुषीः प्रजाः। अविमुक्तचक्र आसीरंस्तीरे तुभ्यमसाविति यां नदीमुपावसिता भवति तस्या नाम गृह्णाति। ततो ब्राह्मणभोजनम्। इति।

सीमन्तोन्नयनमधिकृत्य यदुक्तं निर्णयसिन्धौ कमलाकरभट्टेन तस्मात् किञ्चिदिहोपस्थाप्यते—'हेमाद्रौ बैजवापः—अथ सीमन्तोन्नयनं चतुर्थे पञ्चमे षष्ठे वे'ति। वशिष्ठः—

चतुर्थे सप्तमे मासि षष्ठे वाऽप्यथवाऽष्टमे।

हेमाद्रौ शङ्खः—

गर्भस्पन्दने सीमन्तोन्नयनं यावद्वा न प्रसवः।

कार्ष्णाजिनिः—

गर्भलम्भनमारभ्य यावन्न प्रसवस्तदा।
सीमन्तोन्नयनं कुर्याच्छङ्खस्य वचनं यथा॥

मासश्चात्र सौरः सावनो वा।

कालविधाने—

चतुर्थषष्ठाष्टममासभाजि सौरेण गर्भे प्रथमं विधेयम्।
सीमन्तकर्म द्विजभामिनीनां मासेऽष्टमे विष्णुबलिं च कुर्यात्॥

वशिष्ठः—

चतुर्थे सावने मासि षष्ठे वाऽप्यथवाऽष्टमे।

ज्योतिर्निबन्धे नारदः—

अरिक्ता पर्वदिवसे कुजजीवार्कवासरे ।

कालविधाने—

सीमन्ते तिष्यहस्तादितिहरिशशभृत्पौष्णविष्णुत्तराख्याः ।
पक्षच्छिद्रं च रिक्तापितृतिथिमपहायापराः स्युः प्रशस्ताः ॥

पक्षच्छिद्रं चाऽऽह वशिष्ठः—

चतुर्दशी चतुर्थी च अष्टमी नवमी तथा ।
षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वयाः स्मृताः ॥
क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः ।
भूताष्टमनुतत्त्वाङ्कदश शेषास्तु शोभनाः ॥

कालनिर्णये—

शुभसंस्थे निशानाथे चतुर्थीं च चतुर्दशीम् ।
पौर्णमासीं प्रशंसन्ति केचित् सीमन्तकर्मणि ॥

बृहस्पतिः—

पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।
चतुर्दशी चतुर्थी च शुक्लपक्षे शुभप्रदे ॥

नारदः—

विप्रक्षत्रिययोः कुर्याद् दिवा सीमन्तकर्म तत् ।
वैश्यशूद्रकयोरेतद् दिवा निश्यपि केचन ॥

वाराः पुंसवनोक्ता एव ।

एतच्च सकृदेव कार्यमिति विज्ञानेश्वरः—'सकृच्च संस्कृता नारी'त्यादि देवलोक्तेः। 'सकृत् प्रतिगर्भं वा कार्यमि'ति हेमाद्रिः, 'सकृच्च कृतसंस्कारे'त्यादि हारीतोक्तेः,

सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते ।
केचिद् गर्भस्य संस्कारान् प्रतिगर्भं प्रयुञ्जते ॥

इति हेमाद्रौ विष्णुवचनाच्च । इति ।

अथात्र प्रसक्तो गर्भिणीतत्पतिधर्मा उच्यन्ते—

निर्णयसिन्धौ वराहः—

सामिषमशनं यत्नात् प्रमदा परिवर्जयेदतः प्रभृति ।

गृह्यकारिकायाम्—

अङ्गारभस्मास्थिकपालचुल्लीशूर्पादिकेषूपविशेन्न नारी ।
सोलूखलाख्ये दृषदादिके वा यन्त्रे तुषाख्ये न तथोपविष्टा ॥

नो मार्जनीगोमयपिण्डकादौ कुर्यान्न वारिण्यवगाहनं सा ।
अङ्गारभूत्या न नखैर्लिखेत् क्ष्मां कलिं वपुर्भङ्गमथो न कुर्यात् ॥
नो मुक्तकेशी विवशाऽथवा स्याद् भुङ्क्ते न सन्ध्यावसरे न शेते ।
नामङ्गलं वाचमुदीरयेत् सा शून्यालयं वृक्षतलं न यायात् ॥

विष्णुधर्मोत्तरे—

कटुतीक्ष्णकषायाणि अत्युष्णलवणानि च ।
आयासञ्च व्यवायञ्च गर्भिणी वर्जयेत् सदा ॥

हेमाद्रौ कौण्डिन्यः—

मुण्डनं पिण्डदानञ्च प्रेतकर्म च सर्वशः ।
न जीवत्पितृकः कुर्याद् गुर्विणीपतिरेव च ॥

मिताक्षरायाम्—

उदन्वतोऽम्भसि स्नानं नखकेशादिकर्तनम् ।
अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा जायते ध्रुवम् ॥

प्रयोगपारिजाते कश्यपः—

गर्भिणी कुञ्जराश्वादिशैलहर्म्याधिरोहणम् ।
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥
शोकं रक्तविमोक्षञ्च साध्वसं कुक्कुटासनम् ।
व्यवसायं दिवा स्वापं रात्रौ जागरणं त्यजेत् ॥

मदनरत्ने स्कान्दे—

हरिद्रां कुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् ॥
केशसंस्कारकवरीकरकर्णविभूषणम् ।
भर्तुरायुष्यमिच्छन्ती वर्जयेद् गर्भिणी न हि ॥

बृहस्पतिः—

चतुर्थे मासि षष्ठे वाऽप्यष्टमे गर्भिणी यदा ।
यात्रा नित्यं विवर्ज्या स्यादाषाढे तु विशेषतः ॥

याज्ञवल्क्यः—

दौर्हृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणञ्चापि तस्मात् कार्यं प्रियं स्त्रियाः ॥ ( या० स्मृ० ३।७९ ) ।

तत्रैवाऽऽश्वलायनः—

वपनं मैथुनं तीर्थं वर्जयेद् गर्भिणीपतिः ।
श्राद्धं च सप्तमान्मासादूर्ध्वं नान्यत्र वेदवित् ॥

## अथ सोष्यन्तीहोमः ॥ १३ ॥

अथेत्यपूर्वप्रकरणोपन्यासार्थः। प्रसुषूयते (?) सोष्यन्तीं शूलायन्तीम् आसन्नप्रसवां ज्ञात्वा होमः सोष्यन्तीहोमः, कर्त्तव्य इति [1]वाक्यशेषः।

कस्मिन् काले [2]कथं कर्त्तव्य इत्यत आह—

**प्रतिष्ठिते वस्तौ(A)परिस्तीर्याग्निमाज्याहुती जुहोति—या तिरश्चीत्येतयर्चा विपश्चित् पुच्छमभरदिति च ॥ १४ ॥**

---

श्राद्धं तद्भोजनमिति प्रयोगपारिजातः। कालविधाने मुहूर्तदीपिकायाञ्च—

क्षौरं शवानुगमनं नखकृन्तनञ्च युद्धादिवास्तुकरणं त्वतिदूरयानम्।

उद्वाहमौपनयनं जलधेश्च गाहमायुःक्षयार्थमिति गर्भिणिकापतीनाम्॥

रत्नसंग्रहे गालवः—

दहनं वपनञ्चैव चौलं वै गिरिरोहणम्।

नाव आरोहणं चैव वर्जयेद् गर्भिणीपतिः॥

अव्यक्तगर्भापतिरब्धियानं मृतस्य वाहं क्षुरकर्म सङ्गम्।

तस्यां तु यत्नेन गयादितीर्थं यागादिकं वास्तुविधिं न कुर्यात्॥

प्रव्यक्तगर्भा वनिता भवेन्मासत्रयात् परम्।

षण्मासात् परतः सूतिर्नवमेऽरिष्टवासिनी॥ इति।

सूतिकागृहप्रवेशश्च कदा कर्त्तव्य इत्यपेक्षायामुक्तं तत्रैव।

गर्गः—

रोहिण्यैन्द्रपौष्णेषु स्वातीवरुणयोरपि।

पुनर्वसौ पुष्यहस्तधनिष्ठासूत्तरासु च॥

मैत्रे त्वाष्ट्रे तथाऽश्विन्यां सूतिकागारवेशनम्॥

एतच्च सम्भवे, 'प्रसूतिसमये काले सद्य एव प्रवेशयेत्' इति वशिष्ठोक्तेः। तच्च नैर्ऋत्यां कार्यम्।

'वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम्'

इति वशिष्ठोक्तेः। विष्णुधर्मे—

दशाहं सूतिकागारमायुधैश्च विशेषतः।

वह्निना तिन्दुकालातैः पूर्णकुम्भैः प्रदीपकैः॥

मुसलेन तथा वारिवर्णकैश्चित्रितेन च॥ इति।

A. अत्रैव सूत्रमेकं समाप्य 'परिस्तीर्ये'त्यादि सूत्रान्तरं पठति सामश्रमी।

---

1. 'शेषः' घ। 2. 'कथं' नास्ति ख-ग।

वस्तिर्योनिद्वारम्। वस्तौ [1]'प्रतिष्ठिते स्थिते गर्भे, [2]प्रतीत्युपसर्गः। परिस्तीर्याग्निमिति सिद्धे पुनर्वचनं परिसंख्यानार्थम्(A)। [3]कथं नाम? परिस्तरणमात्रमेव स्यात्। न तु ब्रह्मोपवेशनाद्यपीति। ततश्च क्षिप्रहोमः स्यात्, परिस्तरणाज्यसंस्कारावेवाधिकौ अल्पत्वात् कालस्य। या तिरश्चीत्याभ्यामृग्भ्याम्(B) आज्याहुती जुहोति। भेदेनोपन्यासः प्रथमाया ऋचोऽवसानज्ञापनार्थः।

---

A. परिसंख्यालक्षणमुक्तं प्राक् ( पृ० ३६० )

B. ऋचौ च—

ॐ या तिरश्ची निष्पद्यते अहं विधरणी इति।
तां त्वा घृतस्य धारया यजे संधारणीमहम्॥
संराधन्यै देव्यै देष्ट्र्यै स्वाहा।
ॐ विपश्चित् पुच्छमभरत् तद्धाता पुनराहरत्।
परे हि त्वं विपश्चित् पुमानयं जनिष्यतेऽसौ नाम॥ इति।

मन्त्रब्राह्मणम् १।५।६-७। विनियोगप्रमाणञ्च खादिरगृह्येऽपि २।२।३०। अनयोर्व्याख्या च—या देवी तव शुभे कर्मणि प्रस्तूयमाने अहं विधरणी प्रसवबाधनसमर्था इत्येवं मन्यमाना तिरश्ची वक्रा विरुद्धभावापन्ना सती वाञ्छितफलविघ्नकरी निष्पद्यते सम्पद्यते आगच्छति च प्रसवबाधां कर्तुं तां त्वा देवीं संराधनीं प्रसवसाधिनीं मत्वा कर्तुं वा अहं पतिः घृतस्य धारया अनया यजे अर्चयामि, तदर्चनमन्त्रश्चायं व्यवह्रियते—संराधन्यै प्रसवकार्यसाधिन्यै देष्ट्र्यै यथाकालगर्भातिसर्जनानुकूलविज्ञै देव्यै तुभ्यं स्वाहेति।

विपश्चिदिति। अस्य व्याख्यायां सायणाचार्यः—विपश्चिदाख्यो देवः पुच्छं गर्भस्य पुच्छप्रदेशं शिश्नम् अभरत्, यथा गर्भो न निर्गच्छति तथा निराकर्षणमकरोदित्यर्थः। अभरत् आहृतवान्, पुनर्निर्गमाभिमुखमकरोत्। गुणविष्णुस्तु—"विपश्चिद् देवविशेषः स पुच्छं शिश्नं शिशूनाम् अभरत् हृतवान्, तत् पुच्छं धाता प्रजापतिः, विपश्चिता हृतं पुनः आहरत् आनीतवान् यतः, अतः हे विपश्चित्, त्वं परश्रेष्ठ, एहि अस्मिन् कर्मणि सन्निहितो भव येनायं पुमान् जनिष्यते उत्पत्स्यते असौ नाम देवदत्ताभिधान इत्यर्थः। सामश्रमी तु—यः कश्चन जीवः पूर्वजन्मनि विपश्चिद् विद्वान् भूत्वा पुच्छं प्रतिष्ठां यावतीम्, अभरत् संगृह्णाति, विद्वत्तयैवेति भावः। तत् संगृहीतं तावदेव पुच्छं धाता विधाता, तदर्थं पुनः जन्मान्तरेऽपि आहरत् आहरतीति ( सिद्धान्तः )। अतोऽत्र गर्भे विपश्चिद् विद्वानेव पुत्रः त्वं परे हि प्रत्यागतो भव। अस्मिन्न गर्भाशये पुमान् एव अयं गर्भः जनिष्यते प्रसूतः, स च असौ नाम एतन्नामको भविष्यति, इत्येवमुत्प्रेक्षते" इत्येवं व्याचख्यौ। तदत्र व्याख्यानानां साधुत्वे भगवन्तोऽनूचानाः प्रमाणम्।

---

1. 'प्रतिष्ठिते' नास्ति क-च। 2. 'प्रतीत्युपसर्गः' नास्ति च। 3. 'कथं' नास्ति च।

पुमानयं जनिष्यतेऽसौ नामेति नामधेयं गृह्णाति(A) यत् तद् गुह्यमेव भवति ॥ १५ ॥

'पुमानयं जनिष्यतेऽसौ नामेति एतस्मिन् सर्वनाम्नि'[1]* 'देवदत्तशर्मा नाम स्वाहे'त्येवं [2]नामधेयं गृह्णाति। यत् तत् [3]गुह्यमेवाप्रकाशनीयं भवतीति। एवकार-करणात् यावज्जीवमस्य गुह्यमेवाऽऽचष्टे। पुरुषस्य हि कदाचित् कश्चिदभिचारं कुर्वन् नाम्ना करोति। दृष्टश्च नाम्न्यभिचारः। तथा च सामविधौ वशीकरणाभिचारे 'अयमसावि'ति प्राक्शिरसमग्नौ प्रतिष्ठाप्येति(B)। असंविज्ञानाच्चास्य गुह्यनाम्नोऽभिचारकृतो दोषो न भवतीति अतो यावज्जीवमेवास्य गुह्यतेति। (C)

यदाऽस्मै कुमारं जातमाचक्षीरन्नथ ब्रूयात् काङ्क्षत नाभिकृन्तनेन स्तनप्रतिधानेन चेति ॥ १६ ॥

यदा यस्मिन् काले अस्मै पित्रे [4]'कुमारं जातं शिष्यादयः केचित् आचक्षीरन् कथयेयुः, अथानन्तरम् इमं प्रैषम् इतिकरणान्तमुच्चैर्ब्रूयात्। कथम्? काङ्क्षतेत्या[5]र्त्विकमुच्चार्य च प्रैषार्थं बोधयेत्। काङ्क्षत प्रतिपालयत [6]नाभिकृन्तनेन नालच्छेदनेन स्तनप्रतिधानेन च [7]काङ्क्षतेति। कथं नाम, स्तनधानं नाभिकृन्तनं च मा तावत् करिष्यते इत्यर्थः।

---

A. यत् तत् गुह्यमेवेति सूत्रान्तरं स्वीकुर्वन्ति सामश्रमितर्कालङ्कारमोक्षमूलराः।

B. तथा च सामविधानब्राह्मणे द्वितीयाध्यायस्य पञ्चमखण्डे—अथैकमनुष्याणामावर्तनेन इत्युपक्रम्य—"सर्वेषामयमसाविति प्राक्शिरसमग्नौ प्रतिष्ठाप्यौदुम्बरेण स्रुवेणाऽऽज्येनाभिजुहुयाद्दुच्छाय इती निधनेन गुणीहास्य भवती"त्यादिग्रन्थ उक्तः।

C. सोष्यन्तीहोममधिकृत्य यदुक्तं गृह्यान्तरेषु तस्मात् किञ्चिदुपादीयते—

खादिरद्राह्यायणच्छन्दोगगृह्येषु—प्रतिष्ठिते वस्तौ सोष्यन्तीहोमः। या तिरश्चीति द्वाभ्याम्। असाविति नाम दध्यात्। तद् गुह्यम्। इति।

लौगाक्षिकाठकगृह्ययोश्च—अथ सोष्यन्तीसवनम्। विजनिष्यमाणाया अद्भिः पाणिं समन्तं शिरस्याधाय आहृत्यादभिमृशेत्। यथायं वातः पवते यथा समुद्र एजति। एवं ते गर्भ एजतु सह जरायुणाऽवपद्यतामिति। क्षिप्रमेव प्रजायते। इति।

आपस्तम्बगृह्ये च—क्षिप्रं सुवनम्। अनाप्रीतेन शरावेणाऽनुस्रोतसमुदकमाहृत्य पत्न्याः पादयोर्निधाय मूर्धन्सोष्यन्तीमुत्तरेण यजुषाऽभिमृश्यैताभिरद्भिरुत्तराभिरवोक्षेत्। यदि जरायु न पतेदेवं विहिताभिरेवाद्भिरुत्तराभ्यामवोक्षेत्। इति।

---

1. चिह्नितांशो नास्ति घ। 2. 'नाम' घ। 3. 'गुह्यमेवा-' ग-घ। 4. 'कुमारं जातं' नास्ति घ। 5. '-त्यार्त्विकमु-' क-ग। 6. 'नाभिकृन्तनेन' नास्ति घ। 7. 'काङ्क्षतेति' नास्ति घ।

संयोज्य च—

## व्रीहियवौ पेषयेत् तयैवाऽऽवृता यथा शुङ्गाम् ॥ १७ ॥

[1]ऋज्वर्थम्(A)।

पारस्करगृह्ये च—सोष्यन्तीमद्भिरभ्युक्षति। एजतु दशमास्य इति प्राग् यस्यैत इति। अथावरावपतनम्। अवैतु पृश्निशेवलं शुने जरास्वत्तवे। नैवमांसेन पीवरीं न कस्मिंश्च नायतनमवजरायु पद्यताम् इति।

A. व्रीहिश्च यवश्च व्रीहियवौ, समासकरणादुभावपि मिलितौ पेषयेत् न त्वेकैकश इति। तयैवाऽऽवृता तयैव परिपाट्या यथा पुंसवने शुङ्गां पेषयेत्। इति सूत्रस्यार्थः।

अत्र रघुनन्दनः—

ततः पिता परिहितवस्त्रसहितः स्नायात्।

'जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते' इति संवर्त्तात्,

ततः पुत्रजन्मनिमित्तं वृद्धिश्राद्धं तन्त्रेण कुर्यात्।

नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयार्थकम्।
पुत्रजन्मनि तत् कार्यं जातकर्मसमं नरैः ॥ इति मार्कण्डेयपुराणात्,

सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही ॥ इति विष्णुपुराणाच्च।

साङ्गश्राद्धकरणाशक्तौ अन्नोत्सर्गमात्रं कर्त्तव्यम्।

मिताक्षरायां पितामहः—

अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

दानदर्पणे वराहपुराणम्—

यावत्कालं सुते जाते न नाडी छिद्यते पुनः।
चन्द्रसूर्योपरागेण तमाहुः समयं समम् ॥

कृत्यचिन्तामणौ देवलः—

जाते पुत्रे पिता श्रुत्वा सचेलं स्नानमाचरेत्।
ब्राह्मणेभ्यो यथाशक्ति दत्त्वा बालं विलोकयेत् ॥

गर्गः—

श्रुत्वा बालस्य वै जन्म कृत्वा वेदोदिताः क्रियाः।
अच्छिन्ननालं पश्येत् तं दत्त्वा रुक्मं फलान्वितम् ॥

1. 'ऋज्वर्थमेतत्' ग, 'ऋज्वेतत्' च।

**दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य कुमारस्य जिह्वां निर्माष्टि इयमाज्ञेति ॥ १८ ॥**

'कुमारस्य जिह्वायां रसनायां निर्माष्टि निश्च्योतयति' "यथोक्तेन मन्त्रेण(A)। मेधजननार्थम्" (B) ॥ १८ ॥

---

पुनः स्नानमाहाऽऽदिपुराणम्—

सूतकं तु मुखं दृष्ट्वा जातस्य जनकस्ततः।

कृत्वा सचेलं स्नानन्तु शुद्धो भवति तत्क्षणात् ॥ इति

गोभिलः—व्रीहियवाविति व्रीहिः शारत्पक्वधान्यं तदभावे हैमन्तिकं धान्यं यवालाभे गोधूमाः।

तथा च छन्दोगपरिशिष्टम्—

यथोक्तवस्त्वसम्पत्तावित्यादि (पृ० ५८)।

उभयालाभे प्रत्येकम्—

यथालाभोपपन्नेषु रौप्येषु तु विशेषतः (या० स० १।२३७)।

इति याज्ञवल्क्यवचने पात्रे तद्दर्शनात् अत्राप्यशक्त्या तथा कल्प्यते"। इत्याह।

सत्कालङ्कारस्तु—"अन्यतरालाभेऽपि तत्प्रतिनिधिरुपादेयः, न तु प्रत्येकमेवाऽऽदाय कर्म करणीयम्, इतरेतरप्रयोगस्यार्थवत्त्वोपपत्तेः, तथा च कर्मप्रदीपः 'यथोक्तवस्त्वि'त्यादि। यच्च उभयालाभे प्रत्येकं 'यथालाभोपपन्नेष्वि'ति याज्ञवल्क्यवचनं पात्रे तथा दर्शनेनान्यत्राप्यशक्त्या तथा कल्प्यते' इति रघुनन्दनमतम्, तदसङ्गतम्। कस्मात्? यस्मात् न खलु याज्ञवल्क्येन श्राद्धपात्राणि वचनान्तरेणोक्तानि, नापि मिलितानां पात्राणां प्रत्येकमुपादानमनेन वचनेनोच्यते, न हि शास्त्रान्तरेऽपि समुच्चयेन पात्रविधिरस्ति। वैकल्पिकानां पात्राणां खल्वत्र यथालाभोपपन्नत्वमुच्यते, व्रीहियवौ त्वाचार्येण मिलितावुच्येते, तत् कथमत्र दर्शनं कल्पनामूलमिति कल्पयितैव जानाति। न ह्यत्रोद्गयनादिवदेकैकानुगुण्यद्योतकं वचनमस्ति, सेयं यदृच्छाकल्पना आचार्यवचनविरोधाद् बुद्धिमद्भिरनादरणीया" इत्याह स्वभाष्ये।

A. मन्त्रश्च—

ॐ इयमाज्ञेदमन्नमिदमायुरिदममृतम्। इति।

मन्त्रब्राह्मणम् १।५।८। विनियोगप्रमाणञ्चास्य खादिरगृह्येऽपि २।२।३४।

अस्य व्याख्या—हे बालक, इदं प्रत्यक्षम् अन्नम्, इयम् आज्ञा प्रज्ञा, आ समन्तात् सम्यक्प्रकारेण ज्ञानहेतुत्वात्, इदम् आयुः प्राणधारणम्, इदम् अमृतम्, अनेन विधिना उपयुज्यमानम्, अमरणधर्मि तत्वं तवास्तु इति शेषः। इति।

B. सूत्रेऽत्र कुमारग्रहणं किमर्थमिति चेत्, कुमारीनिवृत्त्यर्थमित्येके; तदसत् एतच्चैवाऽऽवृता

---

1. 'कुमारस्य जिह्वायां रसनायां' नास्ति ख। 2. 'इति जातकर्म, 'अथ मेधाजननम्' इत्यधिकं ग-पुस्तके। 3. निश्च्योतयति नास्ति ख।

**तथैव मेधाजननं सर्पिः प्राशयेत् जातरूपेण वा आदाय कुमारस्य मुखे जुहोति—मेधां ते मित्रावरुणावित्येतयर्चा सदसस्पतिमद्भुतमिति च ॥ १६ ॥**

तथैव तेनैव दक्षिणस्य पाणेरित्यादिना प्रकारेणाभिसंगृह्य, मेधां श्रुतनिगादित्वं जनयतीति मेधाजननम्। [1]किं तत्? सर्पिर्घृतं प्राशयेत् (A)मेधां ते इत्य[2]नेन मन्त्रेण।

---

स्त्रियास्तूष्णीम् (२।९।२१) इति चूडाकरणान्तसंस्काराणां कुमार्या अपि सूत्रणात्। एवञ्च कुमारग्रहणमधिकारार्थमिति ब्रूमः। तेनोपनयनादीनि व्रतानि कुमारस्यैव भवन्ति न कुमार्या इति। ननु गर्भाष्टमेषु ब्राह्मणमुपनयेत् इति सूत्रयिष्यति, तेनैव च पुंलिङ्गनिर्देशेन स्त्रियं व्यावर्तयिष्यतीति चेत्? न; यतोऽत्र ब्राह्मणो न विविक्षितः, किन्तूपनयनव्रतम्, तदर्थञ्च ब्राह्मणोऽनूद्यते। तस्य जातिनिर्देशाल्लिङ्गमविवक्षितं स्यात्, यथा ब्राह्मणो न हन्तव्य इति ब्राह्मण्यपि न हन्यते। तस्मात् कुमारग्रहणमुपनयनादिषु व्यावर्तनार्थम्। तथा च मनुः—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥
वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिष्क्रिया॥

इत्याभ्यां वचनाभ्यां स्त्रिया जातकर्मादिसंस्कारमुपनयनादिव्रताभावञ्चाऽऽहेति। तदत्र जातकर्मणि वृद्धिश्राद्धाभिधानं भवदेवस्य न युक्ततरमुत्पश्यामः।

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते।
न सोष्यन्ती जातकर्म प्रोषितागतभर्तृषु॥

इति कर्मप्रदीपकृता निषेधात्। इति।

A. मेधां ते इत्यादिमन्त्रस्तु—

ॐ मेधां ते मित्रावरुणौ मेधामग्निर्दधातु ते।
मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥ इति।

मन्त्रब्राह्मणम् १।५।९। विनियोगप्रमाणञ्च खादिरगृह्येऽपि २।२।३५।

अस्य व्याख्या—हे बालक, मित्रावरुणौ देवौ ते तव, मेधां पाठश्रवणविषयां शक्तिम्, आधत्तां धारयतां पोषयताञ्च, अग्निरपि देवः ते मेधां दधातु पुष्करस्रजौ पद्ममालिनौ अश्विनौ देवावपि ते मेधाम् आधत्ताम्। इति।

---

1. 'किं तत् सर्पिः' नास्ति च। 2. 'अनेन मन्त्रेण' नास्ति च।

(A)सदस इति च मेदेनोपन्यासो मेदेनैव प्राशनार्थः। प्राशयेद्र जुहोतीति च मेदेनैवोपदेशात्। [1]अथवा जातरूपेण सुवर्णेनाऽऽदाय कुमारस्य मुखे जुहोति[1]*। [2]सोऽयं विकल्पः हस्तेन वा जातरूपेण वेति[2]*। अन्ये तु च-शब्दमध्याहृत्य व्याचक्षते—ब्राह्मचादि यन्मेधाजननं तन्त्रान्तरे प्रोक्तं तत् प्राशयेत् सर्पिश्च। तदसत्; [3]कुतः? सर्पिषोऽपि मेधाजननत्वात्(B)। [4]अत्र कश्चिदाह[4]*—

A. मन्त्रस्तु—

ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।
सनिं मेधामयासिषम्॥ इति।

सामसंहितापूर्वार्चिके २।८।७।

विनियोगप्रमाणञ्चास्य खादिरगृह्येऽपि २।५।३४।

अस्य व्याख्या—सदसः सभायाः पतिं मुख्यम्, अद्भुतम् आश्चर्यरूपम्, प्रियम् इन्द्रस्य इन्द्रस्य वल्लभम्, काम्यम् अभीष्टार्थसम्पादकम्, मेधां सनिं धीर्धारणावती मेधा, तस्या दातारं छरावार्यम् अहम् अयासिषं शरणत्वेन प्राप्तवानस्मि। सा अस्मै कुमाराय मेधां ददातु इत्याशंसा-वाक्यार्थः।

B. जातकर्मणि विशेषस्तु मदनपारिजाते—

जातकर्म ततः कुर्यात् पुत्रे जाते यथोदितम्। इति।

यथोदितं स्वस्वगृह्योक्तविधिनेत्यर्थः। तच्च स्नानानन्तरम्। एतच्च स्नानं रात्रावपि भवति। तदाह व्यासः—

रात्रौ स्नानं न कुर्वीत दानञ्चैव विशेषतः।
नैमित्तिकन्तु कुर्वीत स्नानं दानञ्च रात्रिषु॥ इति।

नैमित्तिकस्नानान्यपि स एवाऽऽह—

ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति॥

जातकर्म च नाभिनालच्छेदनात् पूर्वमेव। तथा च मनुः—

प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते। इति।

जैमिनिः—

यावन्न छिद्यते नालं तावन्नाऽऽप्नोति सूतकम्।
छिन्ने नाले ततः पश्चात् सूतकन्तु विधीयते॥

---

1. 'सुवर्णेन वादाय जुहोति' च। 2. 'हस्तेन सुवर्णेन वेति तुल्यविकल्पोऽयम्' च। 3. 'कुतः' नास्ति च। 4. चिह्नितांशो नास्ति ग।

यच्च विष्णुधर्मोत्तरे—

अच्छिन्ननाभ्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि ।
अशौचोपरमे कार्यमथवा नियतात्मभिः ॥ इति,

तत्तु कर्तृप्रधानाद्यपेक्षया वेदितव्यम् ।

तथा च बैजवापः—

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालश्चेदतीते सूतके भवेत् ॥ इति ।

तच्च श्राद्धमामेन । अत एव प्रचेताः—

स्त्री शूद्रः श्वपचश्चैव जातकर्मणि चाप्यथ ।
आमश्राद्धं सदा कुर्याद् विधिना पार्वणेन तु ॥ इति ।

आमाभावे हेम्ना । तथाच व्यासः—

द्रव्यालाभे द्विजालाभे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥

द्रव्यालाभे आमद्रव्यालाभे, यस्य यजमानस्य भार्या ऋतुमती तत्र पाककर्त्रभावेनेति । प्रतिग्रहश्च नाभिवर्धनात् पूर्वं तदहर्वा । यथाह शङ्खः—

कुमारप्रसवे नाभ्याममच्छिन्नायां गुडतिलहिरण्यवस्त्रगोधान्यादिप्रतिग्रहेष्वदोषस्तदहरित्येके कुर्वत इति ।

सर्वेषां सकुल्यानां द्विपदचतुष्पदो धान्यानि हिरण्यानि च दद्यात् ।

अशौचमध्येऽप्येतत् कार्यमित्याह प्रजापतिः—

अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति ॥ इति ।

यत्तु ज्योतिःशास्त्रे—

मृदुध्रुवक्षिप्रचरेषु भेष्वेषामुदयेऽपि वा ।
गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम वा ॥ इति ।

तद् दैवाज्जातकर्मनामकरणोत्कर्षे वेदितव्यम् । 'अनुत्कर्षे तु नायं नियमः । इति ।

अत्र जातकर्मविषये यदुक्तं गृह्यान्तरेषु तद् यथासम्भवमुच्यते—

तथा च छन्दोग-खादिर-द्राह्यायणगृह्येषु—प्राङ्नाभिकृन्तनात् स्तनदानाच्च व्रीहियवौ पेषयेच्छुक्लावृता । अङ्गुष्ठेनानामिकया चाऽऽदाय कुमारं प्राशयेद 'इयमाज्ञे'ति, सर्पिश्च 'मेधां त' इति ।

जैमिनिगृह्ये च—कुमारे जाते जातकर्म प्राक् स्तनपाशनाद् व्रीहिं च यवं च जातरूपेणावघृष्येदमन्नमिति प्राशयेदिदमन्नमयं रस इदं प्राणेनामृतं सह पृथिवी ते माता द्यौः पिता जीवाहि शरदः शतं पश्याहि शरदः शतमिति । अथैनमभिमन्त्रयते—'अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे ।

आत्मा वै पुत्रनामाऽसि स जीव शरदः शतं पश्याहि शरदः शतम्' इत्यथैनं परिददाति अह्ने त्वा परिददाम्यहस्त्वा रात्र्यै परिददातु रात्रिस्त्वाऽहोरात्राभ्यां परिददात्वहोरात्रौ त्वाऽर्धमासेभ्यः परिदत्तामर्धमासास्त्वा मासेभ्यः परिददतु मासास्त्वर्तुभ्यः परिददत्वृतवस्त्वा संवत्सराय परिददतु संवत्सरस्त्वा जरायै मृत्यवे परिददात्विति, कोऽसि कतमोऽसीत्याहलं मासं प्रविशासावित्यथास्य गुह्यं नाम ददाति वेदोऽसीति। अथास्य मूर्धानमुपजिघ्रति 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव पशूनां त्वा हिङ्कारेणाभिजिघ्रामी'त्येवमेव प्रवासादेत्य पुत्राणां मूर्धानमुपजिघ्रति फलीकरणमिश्रान् सर्षपान् दशरात्रमग्नौ जुहुयात्, शण्डायेति द्वाभ्यां शण्डाय मर्कायोपवीराय शौण्डिकेर उलूखलो मलिम्लुचो द्रुणाशिच्यवनो नश्यतादितः स्वाहा। आलिखन् विलिखन् निमिषन् किं वदन्त उपश्रुतिर्हर्यक्ष्णः कुम्भीशत्रुः पात्रपाणिर्निपुणहान् श्रीमुखः सर्षपारुणो नश्यतादितः स्वाहेति। दशरात्रं दम्पती सूतकौ भवतः, तस्यान्ते स्नात्वोत्थानम्। इति।

लौगाक्षिकाठकगृह्ययोश्च—पुत्रे जाते नाम धीयते। घोषवदाद्यन्तरन्तस्थं चतुरक्षरम्। यथोपपत्ति वा। अग्निमन्त्राऽऽसीय तस्मिन्नाज्यभागान्तं हुत्वा सहिरण्ये कांस्ये संपातानवनयेत्, हिरण्यगर्भः, संवत्सरस्य प्रतिमाम्, काय स्वाहा, कस्मै स्वाहा, कतमस्मै स्वाहा, प्रजापतये स्वाहा, प्रजापते न हि त्वदिति च द्वाभ्याम्। अग्नेरायुरसीति हिरण्येन मुखं मेध्यं कृत्वा पाणिना मुखमद्भिः संमृज्य प्रक्षाल्य स्तनावनुमन्त्रयते 'मधुवात-' इति तिसृभिः प्रत्याच-मुभावुत्तमया। हिरण्येन सम्पातान् सन्निमृज्य मधु चेत्येके तन्मुखे कृत्वा प्रपाययत्यायुर्धेव जरां धय, सत्यं धय, श्रियं धय, ऊर्जं धय, रायस्पोषं धय, ब्रह्मवर्चसं धय। जीव शरदः शतमिति मूर्धनि निघ्राप्य स्वस्त्ययनं वाचयति। सर्षपान् फलीकरणमिश्रान् दध्यां जुहोति 'शण्डोमर्कोपवीतः' आलिखन्, हर्यक्ष्णः, केशिनी इति। समानं पूर्वेणैतत्। एवं सायं प्रातर्दशाहं जुहुयात्। इति।

आश्वलायनगृह्ये च—कुमारं जातं पुराऽन्यैरालम्भात् सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत् प्र ते ददामीति। कर्णयोरुपनिधाय मेधाजननं जपति मेधान्ते देवा इति। अंसावभिमृशति अश्मा भव परशुर्भवेति।

आपस्तम्बगृह्ये च—जातं वात्सप्रेणाभिमृश्योत्तरेण यजुषोपस्थ आधायोत्तराभ्यामभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणे कर्णे जापः। नक्षत्रनाम च निर्दिशति। तद्रहस्यं भवति। मधुघृतमिति संसृज्य तस्मिन् दर्भेण हिरण्यं निष्कर्ष्यं बध्वाऽवदायोत्तरैर्मन्त्रैः कुमारं प्राशयित्वोत्तराभिः पञ्चभिः स्नापयित्वा दधिघृतमिति संसृज्य कांस्येन पृषदाज्यं व्याहृतीभिरोङ्कारचतुर्थाभिः कुमारं प्राशयित्वाऽद्भिः शेषं संसृज्य गोष्ठे निनयेत्। उत्तरया मातुरुपस्थ आधायोत्तरया दक्षिणं स्तनं प्रतिधाप्योत्तराभ्यां पृथिवीमभिमृश्योत्तरेण यजुषा संविष्टम्। उत्तरेण यजुषा शिरस्त उदकुम्भं निधाय सर्षपान् फलीकरणमिश्रानञ्जलिनोत्तरैस्त्रिभिः प्रति स्वाहाकारं हुत्वा संशास्ति प्रविष्टे प्रविष्ट एव तूष्णीमग्नावावपतेति। एवमहरहरानिर्दशतायाः। इति।

मानवगृह्ये च—पुत्रे जाते वरं ददाति। अरणिभ्यामग्निं मथित्वा तस्मिन्नायुष्यहोमान् जुहोति। अग्नेरायुरसीत्यनुवाकेन प्रत्यृचं प्रतिपर्यायमेकविंशतिमाज्याहुतीर्जुहोति। आज्यशेषे दधिमध्वपो हिरण्यशकलेनोपहत्य त्रिः प्राशयति। अश्मा भव परशुर्भव हिरण्यमस्तृतं भव। वेदो वै पुत्र-नामासि स जीव शरदः शतम्। इति प्रादेशेनाध्यधि प्रतिमुखं प्रदक्षिणं सर्वतोऽभ्युदिशति। पलाशस्य मध्यमपर्णं प्रवेष्ट्य तेनास्य कर्णयोर्जपेत्—भूस्ते ददामीति दक्षिणे। भुवस्ते ददामीति सव्ये। स्वस्ते ददामीति दक्षिणे। भूर्भुवः स्वस्ते ददामीति सव्ये। इषं पिन्वोर्जं पिन्वेति स्तनौ प्रक्षाल्य प्रधापयेत्। इति।

वाराहगृह्ये च—प्राक्मुखमुदक्मुखं वा सूतिकालयं कल्पयित्वा ध्रुवं प्रपद्ये शुभं प्रपद्ये इति काले प्रपादयेत्। ऐतो मूत्रमिति च्यावनीभ्यां दक्षिणकुक्षिमभिमृशेत्। श्रावयेद् वा पुत्रं जात-मन्वक्षं जातं न मातोपहन्यात् आमन्त्रप्रयोगात्। अग्नेरभ्याहितस्य परिसमूहस्य परिस्तीर्णस्य पश्चादहते वाससि कुमारं प्राक्शिरसमुत्तानं संवेश्य पालाशस्य मध्यमपर्णं प्रवेष्ट्य तेनास्य कर्णावाजपेत्—भूस्त्वयि दधामीति दक्षिणे, भुवस्त्वयि दधामीति सव्ये, स्वस्त्वयि दधामीति दक्षिणे, भूर्भुवः स्वस्त्वयि दधामीति सव्ये। अथैनमभिमन्त्रयेत्—अश्मा भवेति, अङ्गादङ्गा-दिति। यत्र शेते तदभिमृशेत्। वेद ते भूमिहृदयं दिवि चन्द्रमसि श्रितम्। वेदामृतस्य देवानहं पुत्रमहं हृदमित्याज्यं संस्कृत्य ब्राह्मणमामन्त्र्य समिधमाधायाघारावाघार्याज्यभागौ हुत्वा व्याहृतिभिश्चतस्र आज्याहुतीर्जुहुयात्। जयाभ्यातानानां राष्ट्रभृतश्चैके। कांस्ये चमसे वाहुति-सम्पातानवनीय तस्मिन् सुवर्णं सन्निघृष्य व्याहृतिभिः कुमारं चतुः प्राशयेदत्यन्तमेके। सुवर्ण-प्राशनमुदके निघृष्य आ द्वादशवर्षतायाः इषं पिन्वोर्जं पिन्वेति स्तनौ प्रदापयेत्। दक्षिणं पूर्वं सव्यं पश्चात् स्विष्टकृतं हुत्वा प्रायश्चित्ताहुतीश्च समिधमाधाय पर्युक्षति। एष कर्मान्तो बहिर्द्वारे-ऽग्निर्नित्यः। कणसर्षपयवानां होमः। व्याहृतिभिर्जुहुयात्। अप्रतिरथं जपेत्। इन्द्रो भूतस्येति वर्षं च सूतिकालयं यथाकालं समन्तादुदकेन परिषिञ्चेत्। इति।

बौधायनीयगृह्ये तु—जातं कुमारमभिमन्त्रयते अङ्गभ्यः सम्भूत इत्येतेनानुवाकेन। अथैनं स्नापयति 'क्षेत्रियै त्वा निरृत्यै त्वा इति षड्भिरनुच्छन्दसम्। अथैनं स्वोपस्थ आदधाति अङ्गादङ्गादिति। अथैनं मूर्ध्न्यभिजिघ्रति अश्मा भवेति। अथास्य दक्षिणे कर्णे जपति अग्निरायुष्मान् इति पञ्चभिः पर्यायैः। अथैनं दधिमधुघृतमिति समुदायुत्य हिरण्येन प्राशयति प्राणो रक्षति विश्वमेजत् इत्येतेनानुवाकेन प्रत्यृचम्। अतिशिष्टं गोपदे निनयति व्याहृतीभिः। अथैनं मातुरुपस्थ आदधाति सीद त्वं मातुरस्या उपस्थे इति चतसृभिः सहंसाभिः। स्तनमभि-मन्त्रयते—यस्ते स्तनः शशयो यो मयो भूर्येनेति। धयन्तमनुमन्त्रयते यौस्ते पृष्ठं रक्षत्विति। अथास्योदकुम्भमुच्छिरसि निदधाति आपः सुप्तेषु जाग्रत रक्षांसीति। अथ देवयजनोल्लेखन-प्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति हरिं हरन्तमनुयन्ति देवाः इति पुरोऽनुवाक्यामनूच्य मा च्छिदो मृत्यो मा वधीः इति याज्यया जुहोति। अथाऽऽज्याहुतीरुपजुहोति 'सद्यश्च कमानाय'

अन्नप्राशनञ्च[1] तदेव क्रम्[2]योगानाम् [2]अन्यस्याविधानात्। "तदसत्; कुतः"*? यद्येत-दन्नप्राशनम्, जातकर्म 'कतरत् तर्हि? एतच्चेत् जातकर्म'* तदा अन्नप्राशनेनान्येन भवि-तव्यम्। [5]कुतः? (A)स्मृत्यन्तरेष्वपि पुरुषसंस्कारेषु पृथगेवास्य विधानात्। गर्भा-धान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरणान्नप्राशन-[6]चौडोपनयनमिति; नियत-कालत्वाच्चान्नप्राशनस्य, "षष्ठेऽन्नप्राशनं मासी"ति; नामकरणेन च व्यवहितत्वात्। यत् षष्ठे मासि विहितं नामकरणेन च व्यवहितं तत् प्राङ्नाभिवर्धनात् भवतीति, एतच्च

इत्यान्तादनुवाकस्य। स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात्। अथानोयुगं रथयुगं वा आच्छा-च्छायालङ्कृत्याग्रेणाग्निमुद्धृत्य तस्याग्रं णाश्वत्थपर्णेषु हुतशेषं निदधाति नम आव्याधिनीभ्य इति। अथास्तमित आदित्ये गौरसर्षपान् फलीकरणमिश्रानञ्जलिना जुहोति कृणुष्व पाजः प्रसितिं न पृथ्वीम्, इत्येतेनानुवाकेन प्रत्यृचम्। अथौदनं तिलसक्तुमिश्रं तेनेरि. समुदायुत्य गोष्ठेऽश्वत्थ-पर्णेषु हुतशेषं निदधाति अघोराय महाघोराय नमो नम इति। अथातिशिष्टं सर्वा दिशः सम्प्र-किरन्ति 'आग्नेशिने'ति। स एवमेव फलीकरणहोमप्रभृति सायं प्रातर्दशरात्रं करोति। नानु-त्थितायां सूतिकायां भोज्यान्नता। दशम्यामुत्थानम्। इति।

पारस्करगृह्ये तु—जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति। अनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति। अथास्यायुष्यं करोति। नाभ्यां दक्षिणे वा कर्णे जपति अग्निरायुष्मानिति। त्रिस्त्रिस्त्र्यायुषमिति। स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत्। दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टि। प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणितेति। पूर्वो ब्रूयात् प्राणेति। व्यानेति दक्षिणः। अपानेत्यपरः। उदानेत्युत्तरः। समानेति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात्। स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु। स यस्मिन् देशे जातो भवति तमभिमन्त्रयते वेद ते भूमिहृदयमिति। अथैनमभिमृशत्यश्मा भवेति। अथास्य मातरमभिमन्त्रयते इडासीति। अथास्यै दक्षिणं स्तनं प्रक्षाल्य प्रयच्छतीमं स्तनमिति। यस्ते स्तन इत्युत्तरमेताभ्याम्। उदपात्रं शिरस्तो निदधात्यापो देवेषु जाग्रथेति। द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात् सन्धिवेलयोः फलीकरण-मिश्रान् सर्षपानग्नावावपति शण्डामर्का उपवीर इति। यदि कुमार उपद्रवेज्जालेन प्रच्छाद्यो-त्तरीयेण वा पिताऽङ्क आधाय जपति कूर्कुरः सुकूर्कुरः इति। अभिमृशति न नामयति न हृष्यति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसीति। इति।

A. गौतमसंहितायामष्टमाध्याये गर्भाधानादिचौडोपनयनमित्यन्तभाष्योक्तवचनमिद-मुपलभ्यते।

1. 'च' नास्ति ख। 2. 'अन्यस्य विधानात्' ख। 3. 'तत्र' इति च। 4. चिह्नितांशो नास्ति ख। 5. 'कुतः' नास्ति ग-घ। 6. '-चूडोप-' ग।

युक्ततरमिव मन्यामहे। न चैकेन संस्कारेण क्रियमाणेन संस्कारद्वयनिर्वृत्तिर्भव-तीति(A)। यच्चैतदुक्तम् 'अन्यस्याविधानादिति। अत्र का युक्तिः? यद् यत् स्वशाखायां न विहितं तदयाक्रियेतयेवं चेदनवस्था स्यात्। कथम्? छन्दोगशाखायामग्निहोत्रस्यैवा-विधानमतस्तेषाम् अग्निहोत्रस्यैवाभावः, तदभावे अग्निष्टोमादीनां [2]क्रतूनामभाव एव भवेदेतदत्यन्तायुक्तम्। अतोऽस्मादेवाग्निहोत्रदर्शनात् सर्वशाखाप्रत्ययमेकं कर्मेति न न्यायादध्वर्युभ्यो गृह्णीयात्। [3]तथा च कर्मप्रदीपः—

यन्नाऽऽम्नातं स्वशाखायां परोक्तमविरोधि च।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्(B)॥

इति प्रतिविधाने होमदेवतामात्रमेवाध्वर्युभ्यो गृह्णीयात् इतिकर्तव्यताकलापश्च स्वगृह्योक्त एव स्यात्। कथं कर्मेति उच्यते—ब्रह्मोपवेशनान्तं कृत्वा स्वगृह्योक्तेन विधिना चरुं श्रपयेत्। निर्वापप्रयोगस्तु प्रागेवोक्तः। यथा जुष्टं निर्वपामि[5]। प्राणाय त्वा अपानाय त्वा, चक्षुषे त्वा, श्रोत्राय त्वा। तत आज्यभागान्तं कृत्वा श्रुवेण आज्या-हुतिद्वयं जुहुयात्, 'देवीं वाचमित्यनया वाजो नो अद्येति च[7]।

A. अत्र सुब्रह्मण्यः "अत्र केचिद् व्रीहि-यव-मार्जनं सर्पिःप्राशनं चैकं कर्म, अन्नप्राशनं चैतत्, व्रीहि-यव-ग्रहणात् सूत्रान्तरे दर्शनात्। जाते यत् कर्म तज्जातकर्मेत्यस्यैव नामान्तरम्, वचनादेकेन कर्मणा संस्कारद्वयनिष्पत्तिरपि नानुचिता। गौतमोक्तचत्वारिंशत्सङ्ख्यापूर्तिश्चन्द्र-दर्शनेनान्येन वा भविष्यति; तस्मादध्वर्युशाखोक्तमन्नप्राशनं न कुर्यादित्याहुः, अस्मिन् पक्षे जातकर्मण्यन्नप्राशने च पृथक् पृथगग्निनामकरणप्रतिपादकगृह्यासंग्रहवचनविरोधः स्पष्ट एव" इत्याह स्वनिबन्धे।

B. कात्यायनसंहिता १।३।३।

अस्य व्याख्यायां प्रकाशकारः—"स्वशाखायां यन्नोक्तं परशाखोक्तं, यथा छन्दोगानां याजु-र्वैदिकमग्निहोत्रम्। यद्वा स्वशाखोक्तस्याऽऽकाङ्क्षापूरकत्वेन स्वरूपतो वा अविरोधि।

यथा मनुनोक्तस्य—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥

इत्यस्य मन्त्राकाङ्क्षापूरकं गृह्यान्तरे मन्त्राभिधानं तद्गृह्यैः कर्तव्यमेव। पौराणिकादि तु साधारणत्वान्न पारक्यमिति तदपि स्वशाखोक्तादधिकमनुष्ठेयमेव। यथा देवताभ्य इति मन्त्र-जपादि।

1. 'अन्यस्य विधानात्' ख। 2. 'क्रतूनाम्' नास्ति घ। 3. 'तथा चोक्तम्' घ। 4. [illegible] गौ नास्ति च। 5. 'त्वा जुष्टं निर्वपामि' घ। 6. 'आहुति-' घ। 7. 'चि[illegible]' नास्ति घ।

तत्र [1]मन्त्रः—

देवीं वाचमजनयन्त देवास्तां [2]विश्वरूपाः पशवो वदन्ति ।

सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु स्वाहा(A) ॥

"एका तावदेतया ऋचा हुत्वा[3]*हुतिर्भवति । तथा वाजो नो अद्येति[3]* च—

वाजो नो अद्य प्रसुवाति दानं वाजो देवाम् ऋतुभिः कल्पयाति ।

वाजो हि मा सर्ववीरं जजान विश्वा आशा वाजपतिर्जयेयं स्वाहा(B) ॥

इति द्वितीया । अथ हविष उपस्तरणाभिघारणन्यायेन(C) । प्राणेनान्नमशीय

---

यत्तु गृह्यपरिशिष्टोक्तम्—

बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रतिष्ठितम् ।

तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥

तत् साधारणानां परोक्तानाञ्च नावश्यमनुष्ठानमित्येवंपरम् । न तु स्वगृह्योक्तमात्रमेवानुष्ठेयमिति तस्यार्थः । गृह्यानुक्तानां साधारणानामुपदेशानर्थक्यापत्तेः । शाखान्तराधिकरणविरोधाच्च" इत्याह ।

अत्र संवादिप्रमाणमुक्तं गृह्यसंग्रहे—

आत्मतन्त्रेषु यन्नोक्तं तत् कुर्यात् पारतन्त्रिकम् ।

विशेषाः खलु सामान्या ये चोक्ता वेदवादिभिः ॥ इति । गृ० स० २।९१ ।

A. पारस्करगृह्यधृतोऽयं मन्त्रः । आकरस्थानन्तु तैत्तिरीयब्राह्मणम् । २।४।६।१० ।

अस्य सायणाचार्यकृता व्याख्या—देवाः सर्वे वाचं देवीमजनयन्त उत्पादितवन्तः, तां वाचं विश्वरूपाः द्विपाच्चतुष्पात्सदवान्तरभेदेन पशवः स्वस्वभावरूपेण वदन्ति, सा वाग्रूपा धेनुः नोऽस्मदर्थं इषमन्नं ऊर्जम् अकारादिरसं दुहाना सम्पादयन्ती सुष्टुता अस्माभिः सुष्टु वैदिकैः स्तोत्रैः स्तुता, मन्द्रा हृष्टा सती, अस्मान् प्रत्यागच्छतु । इति ।

B. आकरस्थानन्तु वाजसनेयिसंहिता १८।३३ ।

अस्य व्याख्या—अद्यास्मिन् दिने वाजोऽन्नमन्नाधिष्ठात्री देवता नोऽस्मान् प्रसुवाति प्रेरयतु, अनुजानातु दानार्थमिति शेषः, अन्नदानेच्छाऽस्माकं भवत्वित्यर्थः । वाजः ऋतुभिः कालैः सह देवान् कल्पयाति यथास्थानं कल्पयतु, यस्मिन् काले यो देवो यष्टव्यस्तं तत्र यजत्वित्यर्थः । हिश्चकारार्थः, वाजश्च मा मां सर्ववीरं सर्वे वीराः पुत्रपौत्रादयो यस्य स सर्ववीरस्तादृशं जजान जनयतु, पुत्रादियुतं मां करोत्वित्यर्थः । ततो वाजपतिः सन्नहमन्नः सन्नहं विश्वा आशा सर्वा दिशो जयेयम्, अन्नदानेन सर्वा दिशो वशीकुर्यामित्यर्थः ।

C. उपस्तरणाभिघारणन्यायश्चोक्तः प्रथमप्रपाठकस्याष्टमकण्डिकायाम् ( पृ० २१७ ).

---

1. 'मन्त्रौ' च । 2. 'विश्वरूपाः' ख-च । 3. चिह्नितांशो नास्ति ख ।

स्वाहा। 'इति प्रथमा'*। अपानेन "गन्धानशीय स्वाहा। "इति द्वितीया"*। चक्षुषा रूपाण्यशीय स्वाहा। 'इति तृतीया'*। श्रोत्रेण[3] यशोऽशीय स्वाहा। [6]इति चतुर्थी[6]*।[7] ततः स्विष्टकृतादि तन्त्रं समाप्य हविष्यमन्नं गृहीत्वा कुमारमाशयेत् तूष्णीं हन्तेति वा इति(A)[8]अलमतिप्रसङ्गेन। प्रकृतमधुनोच्यते—जातकर्मणि यथोक्तेन प्रकारेण व्रीहियवप्राशनं कृत्वा सर्पिषश्च पश्चात्।

---

A. विधिरयं भाष्ये पारस्करगृह्योक्त इति। अत्र तर्कालङ्कारः—"अत्रैके वर्णयन्ति अन्नप्राशनञ्चैतदेव छन्दोगानाम्, अन्यस्याविधानादिति, तेषामयमाशयः—सर्पिषः प्राशनोपदेशस्तावदिहोपलभ्यते, सर्पिश्चान्नम्; तस्मादन्नप्राशनमेतत्। तदिह कर्मान्तरोपदेशादितः पूर्वमेव जातकर्मणः परिसमाप्तिरवगम्यते, अतो नानयोरैक्यमाशङ्कनीयम्, शास्त्रप्रामाण्यबलादेकेनापि कर्मणा संस्कारद्वयनिष्पत्तावपि न किमप्यनुचितम्। ननु 'षष्ठेऽन्नप्राशनं मासी'ति नियतकालमन्नप्राशनस्य स्मर्यते नामकरणेन व्यवहितत्वञ्च? उच्यते—अस्मच्छाखे खल्विदानीमेवान्नप्राशनमुपदिश्यते, इत्यन्येषामेव नियतकालत्वं नामकरणेन व्यवहितत्वञ्च, नास्माकम्। नापि नियतकालत्वमस्त्यन्नप्राशनस्य।

अत एव यमः— ततोऽन्नप्राशनं षष्ठे मासि कार्यं यथाविधि।
अष्टमे वाऽथ कर्तव्यं यद्वेष्टं मङ्गलं कुले॥

इति कालद्वयमुपदिश्य कालान्तरमपि कुलानुगतमुपदिशति। आचार्यः किलोपदेष्टा छन्दोगकुलधर्माणाम्।

मनुरपि— षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले।

इति तदेवोपदिशति। अन्ये तु मन्यन्ते जातकर्मरूपत्वादेतस्य नान्नप्राशनत्वम्। न खल्वेकेन कर्मणा संस्कारद्वयनिष्पत्तिर्युक्ता, नियतकालत्वादन्नप्राशनस्य नामकरणेन व्यवहितत्वाच्च प्राङ्नाभिवर्धनात् करणं न युक्ततरम्, स्वशाखायामन्यस्य विधानाभावेऽपि पारशाखिकमेवानुष्ठेयम्। तस्मादध्वर्युभ्यो गृह्णीयात्, प्रधानहोमदेवतामात्रमेवाध्वर्युभ्यो ग्रहीतव्यम्, पूर्वापरेतिकर्तव्यताकलापस्तु स्वशाखोक्त एव स्यादिति, तदत्र भगवन्तो भूमिदेवाः प्रमाणम्" इत्याह स्वभाष्ये।

रघुनन्दनस्तु—"अथान्नप्राशनम्, यद्यपि गोभिलगृह्येऽन्नप्राशनसंस्कारो नाभिहितः, तथाऽपि—

अन्नस्य प्राशनं कार्यं मासि षष्ठेऽष्टमे बुधैः।
स्त्रीणान्तु पञ्चमे मासि सप्तमे प्रजगौ मुनिः॥

इति कृत्यचिन्तामणिधृतवचनेन सर्वशाखिकर्तृकत्वेनाऽऽकाङ्क्षितः, 'यत्राऽऽम्नातं स्वशाखाया'मित्यादिछन्दोपरिशिष्टादन्यशाखोक्तप्रकारेण छन्दोगेन कर्तव्यः। पूर्वापरेतिकर्तव्यताकलापस्तु स्वगृह्यानुसारेण कार्यः' इति भट्टनारायणप्रभृतयः।

---

1. नास्ति च। 2. 'गन्धमशी-' क-ख-ग। 3. नास्ति च। 4. नास्ति च। 5. '-वायशोऽशीय' क-ग। 6. नास्ति च। 7. 'इति मेधाजननं' इत्यधिकं च, टि। 8. 'अलमतिप्रसङ्गेन' ख।

भुजबलभीमे— षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वा तिथौ
सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च कृष्णेतरे ।
प्राजेशादितिपौष्णवैष्णववसुमैर्हस्ताश्विचित्रोत्तरै-
राग्नेयाप्पतिपित्र्यभेषु नितरामन्नादिभक्ष्यं शुभम् ॥

कृत्यचिन्तामणौ— द्वादशी-सप्तमी-नन्दा-रिक्तासु पञ्चपर्वसु ।
बलमायुर्यशो हन्यात् शिशूनामन्नभक्षणम् ॥

भुजबलभीमे— वृषद्वन्द्वधनुर्मीनकन्यालग्नेऽन्नभक्षणम् ।
त्रिकोणाद्युगास्तेषु ग्रहा यद्वद् यत् तथा फलम् ॥
दुष्टः शशधरो लग्नात् षष्ठाष्टस्थोऽन्नभक्षणे ।

मत्स्यपुराणम्— अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके ।
पुंसवने निषेके च प्रवेशे नववेश्मनः ॥
देववृक्षजलादीनां प्रतिष्ठासु विशेषतः ।
तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् ॥

मार्कण्डेयः— देवतापुरतस्तस्य पितुरङ्कगतस्य च ।
अलङ्कृतस्य दातव्यमन्नं पात्रे च काञ्चने ॥
मध्वाज्यकनकोपेतं प्राशनं शंसते ततः ।
कृतप्राशनमुत्सङ्गे मातुर्बालन्तु तं त्यजेत् ॥
देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्वशः ।
शस्त्राणि चैव शास्त्राणि ततः पश्येत् तु लक्षणम् ॥
प्रथमं यत् स्पृशेद् बालः शिल्पभाण्डं स्वयं तथा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥" इत्याह संस्कारतत्त्वे ।

मदनपारिजाते विशेषः—

"लौगाक्षिः— षष्ठे मासेऽन्नप्राशनं जातदन्तेषु वेति ।
शङ्खः— संवत्सरेऽन्नप्राशनमिति व्यवस्था पूर्ववत् ।
कुलाचारानुरूपेणेत्यर्थः", इति ।

निर्णयसिन्धौ तु—"पारिजाते नारदः—
जन्मतो मासि षष्ठे स्यात् सौरेणान्नाशनं परम् ।
तदभावेऽष्टमे मासि नवमे दशमेऽपि वा ॥
द्वादशे वाऽपि कुर्वीत प्रथमान्नाशनं परम् ।
संवत्सरे वा सम्पूर्णे केचिदिच्छन्ति पण्डिताः ॥

ज्योतिर्निबन्धे नारदः—

षष्ठे वाऽप्यष्टमे मासि पुंसां स्त्रीणान्तु पञ्चमे ।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ॥
रिक्तां दिनक्षयं नन्दां द्वादशीमष्टमीममाम् ।
त्यक्त्वाऽन्यतिथयः प्रोक्ताः सितजीवज्ञवासराः ॥
चन्द्रवारं प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना ।

श्रीधरः—

आदित्यतिष्यवसुसौम्यकरानिलाश्विचित्राजविष्णुवरुणोत्तरपौष्णमित्राः ।
बालान्नभोजनविधौ दशमे विशुद्धे छिद्रां विहाय नवमीं तिथयः शुभाः स्युः ॥

वसिष्ठः—

बालान्नभुक्तौ व्रतबन्धने च राजाभिषेके खलु जन्मधिष्ण्यम् ।
शुभं त्वनिष्टं सततं विवाहे सीमन्तयात्रादिषु मङ्गलेषु ॥

मार्कण्डेयविष्णुधर्मयोः—

ब्रह्माणं शङ्करं विष्णुं चन्द्रार्कौ च दिगीश्वरान् ।
भुवं दिशश्च संपूज्य हुत्वा वह्नौ तथा चरुम् ॥
देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ।
अलङ्कृतस्य दातव्यमन्नं पात्रे सकाञ्चनम् ॥
मध्वाज्यदधिसंयुक्तं प्राशयेत् पायसं तु वा ॥" इति ।

मुहूर्तचिन्तामणौ तु—

"रिक्तानन्दाऽष्टदर्शं हरिदिवसमथो सौरिभौमार्कवारान्
लग्नं जन्मर्क्षलग्नाष्टमगृहलवगं मीनमेषालिकञ्च ।
हित्वा षष्ठात् समे मास्यथ हि मृगदृशां पञ्चमादोजमासे
नक्षत्रैः स्यात् स्थिराख्यैः समृदुलघुचरैर्बालकान्नाशनं सत् ॥" इति ।

अत्र भाष्यकारेणान्नप्राशने यादृशी आवृदुक्ता, यद्यपि ततः किञ्चिदिव विभिन्ना भवदेव-भट्टोक्तेति साऽत्र प्रदर्शयितुमुचिता, तथाऽपि प्रायः सर्वे एव मन्त्राः पुत्राभिपन्नकामाधिकरणादौ चतुर्थप्रपाठके ४।९।१४ सूत्रादौ धृता इति ते तत्रैव द्रष्टव्याः । एवञ्च न मन्त्रनिरपेक्षतिकर्तव्यता प्रकृतोपयोगिनीति नोल्लिखिता । किन्तु यत्र च भाष्यकारेण हविष्यमन्नं गृहीत्वा तूष्णीं कुमार-माशयेदित्युक्तं तत्र च भवदेवेन 'उदीच्यकर्मानन्तरं कुमारस्य मुखेऽन्नं दद्यादनेनेति वाजसनेयिनां मन्त्र उक्तो व्याख्यातश्च गुणविष्णुना ।

स च मन्त्रः—ॐ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ इति ।

वाजसनेयसंहिता ११।८३ ।

अस्य महीधरकृता व्याख्या—हे अन्नपते अन्नस्य पालकाग्ने, नोऽस्मभ्यमन्नस्य देहि अन्नं प्रयच्छ, यद्वाऽन्नस्य स्वमंशं देहि। कीदृशस्यान्नस्य ? अनमीवस्य, नास्ति अमीवा व्याधिर्येन तदनमीवम्, तस्य, शुष्मिणः शुष्ममिति बलनाम, शुष्मं बलं विद्यते यस्मात् तत् शुष्मि, तस्य, रोगनाशकं बलहेतुवन्नं प्रयच्छेत्यर्थः। किञ्च दातारं प्रतारिषः अन्नस्य दातारं प्रकर्षेण वर्धय, पादपूर्त्यै प्रोपसर्गस्य द्वित्वम्, अतिशयार्थं वोपसर्गाभ्यासः, 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति यास्कोक्तेः। किञ्च नोऽस्माकं द्विपदे मनुष्ये पुत्रादौ, चतुष्पदे गवादौ च ऊर्जमन्नं धेहि धारय, यद्वा द्विपदे मनुष्याय, चतुष्पदे गवाद्ये अन्नं धेहि सर्वेभ्यो नरपशुभ्योऽन्नं देहीत्यर्थः। गुणविष्णुस्तु मन्त्रस्य द्वितीयार्धम्—'प्रदातारं तार्ष ऊर्जं नो धेहि द्विपदे शं चतुष्पदे' इत्येवं पठति, व्याकरोति चेत्थम्—हे अन्नपते सूर्य, अन्नस्य अदनीयस्य, अनमीवस्य आरोग्यकरस्य, शुष्मिणः अग्निवृद्धिकरस्य ऊर्जं बलं धेहि, किञ्च अन्नस्य प्रदातारं तार्षः तारय। तथा नः अस्माकं द्विपदे चतुष्पदे च शं सुखं धेहि। इति।

गोभिलाचार्येणानुक्तमप्यन्नप्राशनमन्त्र जातकर्माधिकरण एवोक्तं भाष्यकारेणेति अत्रैव येषु गृह्येष्वन्नप्राशनमस्ति तेभ्यः सूत्राणि यथासम्भवमुल्लिख्यन्ते। तथा च

जैमिनिगृह्ये—अथातः प्राशनकर्म, पूर्वपक्षे पुण्ये नक्षत्रे ब्राह्मणान् भोजयित्वा हविष्यमन्नं प्राशयेत्—'अन्नपतेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः। प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे शं चतुष्पदे।' इति।

लौगाक्षिगृह्ये च—षष्ठे मास्यन्नप्राशनम्। सर्वाण्यन्नानि संयूय 'आयुर्दा देव' घृतप्रतीक इति हुत्वा 'अन्नपते अन्नस्ये'ति कुमारमन्नं प्राशयेत्। इति।

काठकगृह्ये तु—षष्ठे मासेऽन्नप्राशनं दन्तेषु वा जातेषु। सर्वाणि हविष्यान्नानि संयूय 'आयुर्दा देव' घृतप्रतीक इति हुत्वा 'अन्नपते अन्नस्ये'त्येतयैव कुमारमन्नं प्राशयेत्। इति।

आश्वलायनगृह्येऽपि—षष्ठे मास्यन्नप्राशनम्। आजमन्नाद्यकामः। तैत्तिरं ब्रह्मवर्चसकामः। घृतौदनं तेजस्कामः। दधि-मधु-घृतमिश्रमन्नं प्राशयेत् 'अन्नपते' इति।

आपस्तम्बगृह्ये च—जन्मनोऽधि षष्ठे मासि ब्राह्मणान् भोजयित्वाशिषो वाचयित्वा दधि-मधु-घृतमोदनमिति संसृज्योत्तरैर्मन्त्रैः कुमारं प्राशयेत्। तैत्तिरेण मांसेनेत्येके। इति।

मानवगृह्ये च—अथान्नप्राशनम्। पञ्चमे षष्ठे वा मासि पयसि स्थालीपाकं श्रपयित्वा स्नातमलङ्कृतमहतेन वाससा प्रच्छाद्य 'अन्नपतेऽन्नस्य नो धेही'ति हुत्वा हिरण्येन प्राशयेत् 'अन्नात् परिस्रुत इत्यृचा। रजतसुवर्णोपस्कराण्यायुधानि दर्शयेत्। यदिच्छेत् तदुपसंगृह्णीयात्। ततो ब्राह्मणभोजनम्। वासो दक्षिणा। इति।

वाराहगृह्ये तु—पुत्राभिमन्त्रणमन्नप्राशनञ्च। पुत्रस्य जाते दन्ते यजेताग्निं गवाऽपशुना वा। विप्रोषितः प्रत्येत्य पुत्रस्य मूर्धानं त्रिराजिघ्रेत् 'पशूनां त्वा हिङ्कारेणाभिजिघ्रामी'ति। जातकर्मवदनामिकाङ्गुलीं प्रवेश्य तेनास्य कर्णावाजपेत्। अथैनमभिमन्त्रयते 'अश्मा भवे'ति 'अग्नि-

कृन्तत नाभिमिति ब्रूयात् स्तनञ्च प्रतिधत्तेति ॥ २० ॥

कृन्तत नाभिं स्तनं च प्रतिधत्त इति ब्रूयात्(A)।

अत ऊर्ध्वमसमालम्भनम् आ दशरात्रात् ॥ २१ ॥

यत् स्मृत्यन्तरे विहितं सूतिकां स्पृष्ट्वा सचेलः स्नायादिति तत् अस्मान्नाभिवर्धनादूर्द्ध्वम् आ दशरात्रात्समालम्भनमस्पर्शनं द्रष्टव्यम्। ततश्च पितुरपि 'पुत्रे जाते पितुः स्नानमि'ति(B) यत् तदस्मात् कर्मणः पूर्वमेव द्रष्टव्यम्।

इति 'भट्टनारायणकृतौ'* 'गोभिलीयगृह्यसूत्रभाष्ये'* द्वितीयप्रपाठकस्य सप्तमी कण्डिका।

---

धन्वन्तरी' इति। पुत्रवच्छागमेषाभ्यामिष्ट्वा दीर्घाणां व्याहृतिभिः कुमारं चतुः प्राशयेत्। 'आयुर्दा देवे'ति च कुमारकर्मणि शुक्ल उदगयने पुण्ये नक्षत्रे नवमीवर्ज सर्वे ऋतवो विवाहे माघचैत्रौ मासौ परिहाप्योत्तरं च नैवायमन्वारम्भयित्वा हवनम्। इति।

बौधायनीयगृह्ये तु—षष्ठे मास्यन्नप्राशनम्। ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा, अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा अन्नसूक्तेन जुहोति—'अहमास्मि प्रथमजा ऋतस्य' इत्यष्टाभिरनुच्छन्दसम्। जयप्रभृति सिद्धमाधेनुवरप्रदानात्। अथौदनं दध्ना मधुना घृतेनाद्भिरिति समुदायुत्य हिरण्येनौषधस्य कुमारं प्राशयति 'या जाता ओषधयः' इति षड्भिरनुच्छन्दसम्। भूर्भुवः सुवरपां त्वौषधीनां रसं प्राशयामि शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयः सन्त्वसौ, इति सर्वास्वनुषजति।' इति।

पारस्करगृह्ये च—षष्ठे मासेऽन्नप्राशनम्। स्थालीपाकं श्रपयित्वाज्यभागाविष्ट्वाज्याहुती जुहोति—देवीं वाचमिति। वाजो नो अद्येति च द्वितीयाम्। स्थालीपाकस्य जुहोति प्राणेनान्नमशीय स्वाहाऽपानेन गन्धानशीय स्वाहा चक्षुषा रूपाण्यशीय स्वाहा श्रोत्रेण यशोऽशीय स्वाहेति। प्राशनान्ते सर्वान् रसान् सर्वमन्नमेकत उद्धृत्याथैनं प्राशयेत्। तूष्णीं हन्तेति वा, हन्तकारं मनुष्या इति श्रुतेः। भारद्वाज्या मांसेन वाक्प्रसारकामस्य। कपिञ्जलमांसेनान्नाद्यकामस्य। मत्स्यैर्जवनकामस्य। कृकषाया आयुष्कामस्य। आट्या ब्रह्मवर्चसकामस्य। सर्वैः सर्वकामस्य। अन्नपर्याय वा ततो ब्राह्मणभोजनमन्नपर्यायं वा ततो ब्राह्मणभोजनम्।

A. पितेति शेषः।

B. तथा च शुद्धितत्त्वे संवर्त्तः—

जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते।
माता शुध्येद् दशाहेन स्नानात् तु स्पर्शनं पितुः॥ इति।

---

1. चिह्नितांशो नास्ति घ। 1-2. चिह्नितांशो नास्ति ख। 2. चिह्नितांशो नास्ति ग।

## द्वितीयप्रपाठकस्य अष्टमी कण्डिका

——:*:——

### जननाद् यस्तृतीयो ज्यौत्स्नस्तस्य तृतीयायां प्रातः सशिरस्कं कुमारमाप्लाव्यास्तमिते वीते लोहितिम्नि अञ्जलिकृतः पितोपतिष्ठते ॥ १ ॥

जन्माद् जन्मत आरभ्य यस्तृतीयो ज्यौत्स्नः शुक्लपक्षः, तस्य तृतीयायां तिथौ 'प्रातः, रात्रौ कर्मण उपदेशाद् रात्रावेव स्नानं मा भूदित्यतः प्रातरित्युक्तम्। सशिरस्कमित्येतस्मादेव कुमाराणामशिरस्कं स्नानं दर्शयति। कुमारं ²बालकम् आप्लाव्य स्नापयित्वा, अस्तमिते सवितरि, वीते विगते, लोहितिम्नि लोहितभावे, सन्ध्योपरमे इत्यर्थः। अञ्जलिकृतः कृताञ्जलिः, पिता उपतिष्ठते(A), दिगनुपदेशात् प्राङ्मुखः। ³कुतः ? 'प्राङ्मुखकरणं चानादेश' इति सूत्रकारवचनात्(B)। तथा चोक्तम्—

'यत्र दिङ्नियमो न स्या'⁴जपहोमादिकर्मसु' इत्या⁵दि।(C)

---

A. चन्द्रमसमिति शेषः।

B. सूत्रकारवचनादिति श्रौतसूत्रकारवचनादित्यर्थः, तथाच लाट्यायनश्रौतसूत्रम् 'प्राङ्मुखकरणञ्चानादेशे' ( १।२।१६ ) इति।

अत्र तर्कालङ्कारः—"पिता उपतिष्ठते आराधयति चन्द्रमसं तदभिमुखः सन्, कुतः ? 'पितोपतिष्ठते...अभिमुखश्चन्द्रमसम्' ( सू० २।८।६ ) इति लिङ्गात्। यत्तु दिशोऽनादेशात् 'प्राङ्मुखकरणञ्चानादेशे' इति सूत्रकारवचनात् प्राङ्मुख उपतिष्ठते इति वर्णनम्, तदसङ्गतम्। शुक्लतृतीयायां चन्द्रमसः पश्चिमदिगवस्थितत्वेन प्राङ्मुखेन पित्रा तदाराधनवर्णनस्यानुचितत्वात्, लिङ्गविरोधाच्च" इत्युक्त्वा भाष्यकारमाक्षिपति।

C. अस्योत्तरार्धन्तु—

तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्रीसौम्याऽपराजिताः ॥ इति क० प्र० १।१।७।

अस्य व्याख्यायां प्रकाशकारः—"यत्र जपादिकर्मोक्तम्, तेषु कर्मसु दिग्विशेषमुखतानियमो नोक्तः, तत्र पूर्वा उत्तरा ऐशानीति तिस्रो दिशो मुनिभिरुक्ताः" इत्याह। एवञ्च भाष्यकारस्योपरि तर्कालङ्कारस्याक्षेपोऽप्रमाणकः। यतः, अत्र कर्मद्वयं चन्द्रदर्शनं चन्द्रायाञ्जलिदानञ्च, एवञ्च

---

1. 'प्रातः' नास्ति घ। 2. 'बालकम्' नास्ति घ। 3. 'कुतः' नास्ति घ। 4. 'जपहोमादिकर्मसु' नास्ति ख। 5. 'आदि' नास्ति ख।

**अथ माता शुचिना वसनेन कुमारमाच्छाद्य दक्षिणत उदञ्चं पित्रे प्रयच्छत्युदक्शिरसम् ॥ २ ॥**

अथानन्तरमेव [1]माता शुचिना निर्णिक्तेन वसनेन वाससा [2]कुमारमाच्छाद्य । आङिति मर्यादायाम् । [3]कथम् ? मुखवर्जमाच्छाद्येति । दक्षिणतो भूत्वा उदञ्चम् उत्तानं पित्रे उदक्शिरसं प्रयच्छति । प्रदाय च—

**अनुपृष्ठं परिक्रम्योत्तरतोऽवतिष्ठते ॥ ३ ॥**

[4]ऋज्वर्थम्(A) ।

**अथ जपति—यत्ते सुसीम इति यथाऽयं न प्रमीयेत पुत्रो जनित्र्या अधि इति ॥ ४ ॥**

[5]अथेत्यानन्तर्यार्थः । परिक्रम्योपस्थितायाम् अथानन्तर[6]मेव जपति—परिक्रममाणाया[7]मेवेति[7]*, (B)यत्ते सुसीम इति त्र्यृचम् । किमन्तोऽयं [8]मन्त्र [8]इति ज्ञापनार्थम् इदमुक्तम्[9]* । 'यथाऽयं न प्रमीयेत पुत्रो जनित्र्या अधी'त्येव मन्त्र इति ।

---

कुमारं विना प्रवासस्थोऽपि पिता चन्द्रायापामञ्जलिं दद्यादिति भवताऽपि स्वीकारात्, एवञ्च कर्मणोः पृथक्त्वात् पूर्वत्र चानुपदेशात् प्राङ्मुखतैव युक्ता, परत्र च चन्द्राभिमुखतोपदेशात् तत्र तथैवाचरणीयम् इति भाष्यकाराणामाशयः । भवदेवरघुनन्दनादयस्तु उभयत्रैव चन्द्राभिमुखतां पितुर्वर्णयन्ति स्वेषु निबन्धेष्विति सुधीभिर्ज्ञेयम् ।

A. अनुपृष्ठं पत्युः पृष्ठदेशेन परिक्रम्य गत्वा, उत्तरतः पत्युरुत्तरस्यां दिशि अवतिष्ठते ऊर्द्धा तिष्ठतीत्यर्थः ।

B. मन्त्रत्रयी च—

ॐ यत्ते सुसीमे हृदयं हितमन्तः प्रजापतौ ।
वेदाहं मन्ये तद् ब्रह्म माऽहं पौत्रमघं निगाम् ॥
ॐ यत् पृथिव्या अनामृतं दिवि चन्द्रमसि श्रितम् ।
वेदामृतस्याहं नाम माऽहं पौत्रमघं रिषम् ॥
ॐ इन्द्राग्नी शर्म यच्छतं प्रजायै मे प्रजापती ।
यथाऽयं न प्रमीयेत पुत्रो जनित्र्या अधि ॥ इति ।

मन्त्रब्राह्मणम् १।५।१०—१२ । विनियोगप्रमाणञ्चास्य खादिरे गृह्ये २।३।४ ।

---

1. 'कुमारं माता' ग-घ । 2. 'कुमारमाच्छाद्य' नास्ति घ । 3. 'कथम्' नास्ति घ । 4. 'ऋज्वेतत्' घ । 5. 'अथेत्यानन्तर्यार्थः' नास्ति घ । 6. 'एव' नास्ति ख । 7. चिह्नितांशो नास्ति घ । 8. 'मन्त्र इत्येतत् ज्ञापनार्थमिदमुक्तम्' ख । 9 'इत्यस्य' घ ।

एवं मन्त्रं जपित्वाऽथ कुमारम्—

## उदञ्चं मात्रे प्रदाय यथार्थम्[(1)] ॥ ५ ॥

ऋज्वर्थम् ।

---

मन्त्राणामेतेषां व्याख्या—हे चन्द्र, सुसीमे अतिशीतले, ते तव, प्रजापतौ प्रजापोषके अन्तः मध्ये यद् हृदयं ब्रह्मस्थानं हितं निहितम्, तद् ब्रह्म अहं वेद जानामि, तत् मन्ये एवमेवेति मन्ये, यस्मात् तस्मात् पौत्रम् पुत्रसम्बन्धि, अघं व्यसनम्, अनिष्टयोगव्याधिनाशादिरूपम्, अहं मा निगाम्, न निगच्छेयं मा प्राप्नुयाम् । इति ।१।

हे चन्द्र, पृथिव्याः सम्बन्धि पार्थिवशरीरग्राहीति यावत्, यत् अनामृतम् आभिमुख्येन न मृतम्, दिवि सूर्ये चन्द्रमसि त्वयि च श्रितम्, आश्रितं भवति, तत् तु अमृतस्य नित्यस्य परब्रह्मणः अंशस्वरूपं रक्षणीयं वेति अहं वेद जानामि, अतश्च सम्भावयामि पौत्रं पुत्रसम्बन्धि, अघं पापफलम्, रिषं रिष्टं विघ्नं मा गामित्यनुषज्यते । इति ।

अत्र द्वितीयमन्त्रे 'पौत्रमघं ऋषमि'ति गुणविष्णुः पठति, व्याकरोति च—'अघं' अहं मा ऋषम् 'मा गमम्'...अघं ऋषमिति छान्दसत्वात् अव्ययपि ऋकारेऽनुस्वारः' इति ।२।

हे इन्द्राग्नी देवौ, युवां मे मम, प्रजायै सन्तत्यै शर्म कल्याणं यच्छत दत्तम् । किम्भूतौ युवाम् ? प्रजापती लोकपालौ, तथा शर्म यच्छतं यथा अयं कुमारः जनित्र्याः अधि उत्सङ्गे स्थितो न प्रमीयेत न हिंस्येत । इति ।३।

(1). यथार्थमिति कर्मणः परिसमाप्तिरुच्यते । तेन वामदेव्यगानमिदानीं कर्तव्यम् । तदाह कर्मप्रदीपः—अहोमकेष्वपीत्यादि १।९।७ । व्याख्यातं प्राक् ( पृ० ७२ ) । तदिदं कर्म चन्द्र-दर्शनमिति निष्क्रमणमिति चाऽऽख्यायते । अत्र कल्पतरुप्रभृतयः—

'सूर्येन्द्वोः कर्मणीये तु तयोः श्राद्धं न विद्यते' ।

इति कर्मप्रदीपवचनशेषाधं पश्यन्तो वृद्धिश्राद्धं निषेधन्ति । तदयुक्तम् ; पूर्वार्धानवलोकनात् । तथा चास्य वचनस्य पूर्वार्धम्—

'बृहत्पत्रक्षुद्रपशुस्वस्त्यर्थं परिविश्यतोः' इति ।

व्याख्या चास्य वचनस्य प्रकाशकारकृता—'वृक्ष इवेति पञ्चर्च इति प्रकृते द्वितीयया आदित्ये परिविश्यमानेऽक्षततण्डुलान् जुहुयात् बृहत्पत्रस्वस्त्ययनकामः । तृतीयया चन्द्रमसि तिल-तण्डुलान् क्षुद्रपशुस्वस्त्ययनकाम इति सूत्राभ्यां परिविशति सूर्ये हस्त्यश्वादिबृहद्वाहन-स्वस्त्ययनार्थम्, चन्द्रे परिविशति अजमेषादिक्षुद्रपशुस्वस्त्ययनार्थं होमात्मककर्मद्वयमुक्तम् । तयोः श्राद्धं नास्ती'ति । श्राद्धविवेकेऽप्येवम् । एवञ्च सर्वमवदातमिति स्पष्टं संस्कारतत्त्वे, आद्यश्च सिद्धं निष्क्रमणे सर्वाण्येवान्वाहार्यवन्तीति सामान्यसूत्रेण इति ।

**अथ येऽत ऊर्द्ध्वं ज्यौत्स्नाः प्रथमोद्दिष्ट एव तेषु पितोपतिष्ठतेऽपामञ्जलिं पूरयित्वाऽभिमुखश्चन्द्रमसम् ॥ ६ ॥**

अथशब्दोऽधिकारानुवृत्त्यर्थः। [1]कथं नाम? [2]अद्यापि चन्द्रदर्शनमेवैतद्पीति। अतोऽस्मात् तृतीयात् कर्मण ऊर्द्ध्वं ये ज्यौत्स्नाः शुक्लपक्षाः, तेषु [3]प्रथमोद्दिष्ट एव प्रथमोदित एव चन्द्रमसि द्वितीयायां प्रतिपदि वा, न यथा पूर्वत्र तृतीयायाम्, पिता उपतिष्ठते। अभिमुखश्चन्द्रमसम्। किं कृत्वा? अपामञ्जलिं पूरयित्वा।

तञ्चाञ्जलिम्—

**यददश्चन्द्रमसीति सकृद् यजुषा द्विस्तूष्णीमुत्सृजन्य यथार्थम् ॥७॥**

(A)यदद इत्यनेन यजुषाऽपामञ्जलिं चन्द्रमसं प्रति उत्सृज्य अन्यदञ्जलिद्वयं तूष्णीमुत्सृजेदिति। न चात्र मातृकुमारौ। ततश्च देशान्तरस्थोऽप्येतत् कर्म कुर्यात्। कियन्तं कालम्(B)? अत ऊर्द्ध्वं [4]ज्यौत्स्नेष्वेतत् संवत्सरम्। कुतः? संवत्सरेणैव कृतत्वात्। ऊर्द्ध्वं च ततो यावन्त एव मासा भूयोऽप्यावर्तन्ते(C)।

---

A. मन्त्रस्तु—

ॐ यददश्चन्द्रमसि कृष्णं पृथिव्या हृदयं श्रितम्।
तदहं विद्वांस्तत् पश्यन् माऽहं पौत्रमघं रुदम् ॥ इति।

मन्त्रब्राह्मणम् १।५।१३। विनियोगप्रमाणञ्चास्य खादिरगृह्येऽपि। २।३।४।

अस्य व्याख्या—यत् अदः एतत्, कृष्णं कृष्णवर्णं लाञ्छनम्, चन्द्रमसि त्वयि श्रितम् आश्रितम्, तत् एतत्, पृथिव्याः हृदयं छायारूपमेवेति विद्वान् तद्विषयकज्ञानवान् अहं तत् कार्ष्ण्यं पश्यन् तत्त्वतो जानन् (अस्मि यतः ततः) पौत्रम् पुत्रसम्बन्धि, अघं पापफलं शोकादिकं भुञ्जानो, मा रुदम् न रुद्याम्। इति।

B. 'अत ऊर्द्ध्वं ज्यौत्स्नेष्वेतत् कर्माऽऽसंवत्सरम्' इति ग्रन्थभागस्तु सूत्रतयैव धृतो रघुनन्दनेन संस्कारतत्त्वे, परमत्र तर्काङ्कुरः—'अस्मदवलोकितेषु सर्वेषु सूत्रग्रन्थेषु भाष्यपुस्तकद्वये च तद्दर्शनाद् युक्त्या तन्निर्णयस्य भाष्ये दर्शनाच्च भाष्यप्रतीकमेव तत्' एवमाह। वयमप्येवं मन्यामहे।

C. निष्क्रमणमधिकृत्य यदुक्तं निर्णयसिन्धौ तस्मात् किञ्चिदिहोपस्थाप्यते—

1. '-दित' घ'। 2. 'कथं नाम' नास्ति घ। 3. 'प्रथमोद्दिष्ट एव' नास्ति ख। 4. 'ज्यौत्स्ने-ष्व' क-ख।

"ज्योतिर्निबन्धे—

तृतीये वा चतुर्थे वा मासि निष्क्रमणं भवेत् ।

यमः—

ततस्तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनम् ।
चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥

व्यासः—

मैत्रे पुष्यपुनर्वसुप्रथमभे पौष्णेऽनुकूले विधौ ।
हस्ते चैव सुरेश्वरे च मृगभे तारासु शस्तासु च ॥
कुर्यान्निष्क्रमणं शिशोर्बुधगुरौ शुक्रे विरिक्ते तिथौ ।
कन्याकुम्भतुलामृगारिभवने सौम्यग्रहालोकिते ॥

मदनरत्ने—

अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियाम् ।

विष्णुधर्मे—

दिगीशानां दिने तत्र तथा चन्द्रार्कयोर्द्विजैः ।
पूजनं वासुदेवस्य गगनस्य च कारयेत् ॥
बहिर्निष्काशयेद् गेहाच्छङ्खपुण्याहनिस्वनैः ।
चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च ॥
निक्षेपार्थमिमं दद्मि ते मे रक्षन्तु सर्वदा ।
अप्रमत्तं प्रमत्तं वा दिवारात्रमथाऽपि वा ॥
रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः ॥" इति ।

मदनपारिजाते विशेषः, "भविष्यपुराणे उत्तरार्धे—

द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात् ।
चतुर्थे मासि कर्त्तव्यं यथाऽन्येषां मतं विभो ॥

मनुरपि—

चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् । इति ।

अत्र विशेषमाह यमः—

ततस्तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनम् ।
चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥

लौगाक्षिः—

तृतीये मासे आदित्यस्य दर्शनमिति । अत्रापि पूर्ववदेव व्यवस्था ।

सुरेश्वरः—

जीवभार्गवसौम्यानां शिशुनिष्क्रमणक्रिया ।
दिवसे शस्यते नित्यमायुर्बुद्धिर्बलं प्रजा ॥
अश्विनी रेवती हस्ता धनिष्ठा रोहिणी तथा ।
श्रवणं पुष्यसंयुक्तं मृगेणोत्तरफल्गुनी ॥
अनुराधोत्तराषाढा तथा चैव पुनर्वसुः ।
इमानि भानि शस्तानि शिशुनिष्क्रमणे विधौ ॥" इति ।

जोतिस्तत्त्वे तु "विष्णुधर्मोत्तरे—

चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ।

दीपिकायाम्—

आर्द्राधोमुखवर्जितानुपहतेष्वृक्षेष्वरिक्ते तिथौ
वारे भौमशनीतरे घटतुलाकन्यामृगेन्द्रोदये ।
सद्दृष्टेऽथ चतुर्थमासि यदि वा मासे तृतीये विधा-
वक्षीणे शुभदे शिशोरभिनवं निष्क्रामणं कारयेत् ॥

अधोमुखानि भानि च—

अश्लेषवह्नियमपित्र्यविशाखयुक्तं पूर्वात्रयं शतभिषा च नवाप्युडूनि ।
एतान्यधोमुखगणानि शिवानि नित्यं विद्यार्थभूमिखननेषु च भूषितानि ॥

चतुर्थे मासीति ऋग्वेदयजुर्वेदिनोः । यथाह विष्णुः—'चतुर्थे मास्यादित्यदर्शनम्' इति । शौनकोऽपि—

चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं शिशोः ।

मासे तृतीये इति तु छन्दोगानां गोभिलेन जननानन्तरं तृतीयशुक्लपक्षतृतीयायां चन्द्रदर्शनरूप-निष्क्रमणविधानात् ।

अत्रैव कृत्यचिन्तामणिः—

तस्मात् स्वस्वविधानतोऽर्कशशिनोरर्घ्यं शिशुं दापयेत् ।

अर्घ्यमन्त्रश्च—

एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ।
अनुकम्पय मां भक्तं गृहाणार्घ्यं दिवाकर ॥ इति ।

चन्द्रार्घ्यमन्त्रश्च—

क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव ।
गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम ॥" इति ।

**जननाद् दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम् ॥ ८ ॥**

जननाज्जन्मदिवसादारभ्य दशरात्रे व्युष्टे अतिक्रान्ते एकादशेऽहि, नामधेयकरणम्। नामैव नामधेयम्, तस्य करणं नामधेयकरणम्। यदि [1]विष्टि-व्यतीपातादिना तदेकादशमहरुपहतं स्यात् तदा द्वादशेऽहि त्रयोदशे वा कर्तव्यम्।

तथा च मनुः—

नामधेयं दशम्यान्तु द्वादश्यां वाऽस्य कारयेत्।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ।(A) इति।

यदि दैवान्मानुषाद् वा नामकरणं दशरात्रपक्षे न सम्पद्यते तदा शतरात्रे व्युष्टे कर्तव्यम्। अत्रा[2]प्यसंप्राप्तौ संवत्सरे व्युष्टे इति।

**अथ यस्तत् करिष्यन् भवति पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङुपविशति ॥ ९ ॥**

अथेति तद्गृहनियमार्थम्। कथं [3]नाम? यस्मिन् गृहे कुमारो जातस्तस्मिन्नेवैतत् कर्म स्यात्। इतरथा प्रागेव चन्द्रदर्शनात् कुमारस्य बहिःशालादिगमनं स्यात्(B)। यः कश्चित् पित्रादिस्तत् कर्म करिष्यन् कर्तुमुद्यतो भवति स '[4]पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङुपविशति'*(C)।

---

A. मनुसंहिता २।३०। अस्य व्याख्यायां कुल्लूकभट्टः—जातकर्मेति पूर्वश्लोके जन्मनः प्रस्तुतत्वाज्जन्मापेक्षयैव दशमे द्वादशे वाऽहनि अस्य शिशोर्नामधेयं स्वयमसम्भवे कारयेत्। अथवा 'आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते' इति शङ्खवचनाद् दशमेऽहन्यतीते एकादशाह इति व्याख्येयम्। तत्राप्यकरणे प्रशस्ते तिथौ प्रशस्ते एव मुहूर्त्ते नक्षत्रे च गुणवत्येव ज्योतिषावगते कर्तव्यम् इत्याह।

B. यद्यपि गृह्यसूत्रे निष्क्रमणादनन्तरं नामकरणस्योल्लेखो वर्तते, तथाऽपि भाष्यभागेणानेन प्रतीयते यन्नामकरणानन्तरमेव शिशोर्निष्क्रमणं कर्तव्यमिति। पृथक् स्वस्वकालयोरेतयोरकरणे कीदृशः पौर्वापर्यभाव आवश्यक इति भगवन्तोऽनूचाना निर्दिशन्तु।

C. अत्र विशेषस्तु—अग्निर्लौकिक एव बोद्धव्यः न पुनः स्वयमाहितः। गर्भसंस्कारहोमानामेव तत्रानुज्ञानात् नामधेयादौ लौकिकाग्नेरुपदेशाच्च।

तथाच कर्मप्रदीपः—

न स्वेऽग्नावन्यहोमः स्यादित्यादि १।१।२१ सूत्रभाष्ये (पृ० २२)।
अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः।
न हि पित्रा समानीतः पुत्रस्य भवति क्वचित् ॥ इति (२।८।१६-१७)

---

1. 'विशिष्ट-' घ। 2. '-प्यसंपत्तौ' क-ग। 3. 'नाम' नास्ति घ। 4. चिह्नितांशो नास्ति घ।

**अथ माता शुचिना वसनेन कुमारमाच्छाद्य दक्षिणत उदञ्चं कर्त्रे प्रयच्छत्युदक्शिरसम् ॥ १० ॥**

व्याख्यातमेतत्(A) ॥ १० ॥

**अनुपृष्ठं परिक्रम्योत्तरत उपविशत्युदगग्रेष्वेव दर्भेषु ॥११॥**

ऋज्वेत[1]दपि(B) ॥ ११ ॥

**अथ जुहोति प्रजापतये तिथये नक्षत्राय देवताया इति ॥१२॥**

"अथेत्यानन्तर्यार्थः"[2]* । उपविष्टायाः(C) कुमारं प्रदाय, अथानन्तरं जुहोति । इतरथा गृहीत[3]कुमारस्य हवनासम्भवात्"* (D) कस्मै जुहोति? प्रजापतये, तिथये, नक्षत्राय, देवतायै [4]इति । कस्य देवतायै? अनन्तरोक्तत्वात् तिथिनक्षत्रयोः । अर्थात् कुमारस्य जन्मतिथिर्जन्मनक्षत्रं च द्रष्टव्यम् । तथा च [5]बह्वृचां गृह्ये—त्रीणि च भानि सदैवतानि तन्मध्ये जुहुयात्, यस्मिन् जातः स्यात् इति । तिथिनक्षत्र[6]देवतायोऽत्र"* क्वचिदेकवत् क्वचिद् द्विवत् क्वचिद् बहुवदिति ।

तथाचोक्तम् [7]कर्मप्रदीपे—

नामधेये मुनिवसु[8]पिशाचा बहुवत् सदा ।
यक्षाश्च पितरो देवा यष्टव्यास्तिथिदेवताः ॥
आग्नेयाद्येऽथ सर्पाद्ये विशाखाद्ये तथैव च ।
आषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च ॥
द्वन्द्वान्येतानि बहुवन्नक्षत्राणां जुहुयात् सदा ।
द्वन्द्वद्वयं द्विवच्छेषमवशिष्टान्यथैकवत् ॥
देवतास्वपि हूयन्ते बहुवत् सर्प[9]पित्रपः ।
देवाश्च वसवश्चापि द्विवद्देवाश्विनौ सदा(E) ॥[10] इति ।

---

A. द्वितीयसूत्रे, प्रायः समानुपूर्वीत्वादेतयोरिति ।
B. तृतीयसूत्रे व्याख्यातम् । उपवेशनं विशेषः ।
C. मातुः क्रोडे, इति शेषः ।
D. 'गृहीतकुमार एव जुहोत्येवमपरे' इति चात्र चन्द्रकान्तः ।
E. कर्मप्रदीपः, ३।६।९-१२ ।

---

1. 'अपि' नास्ति ख । 2. चिह्नितांशो नास्ति घ । 3. 'कुमारस्यैव होमः स्या१' ख । 4. 'इति' नास्ति घ । 5. 'बह्वृचानां' ख-घ । 6. '-देवताहोमोऽत्र' ख । 7. 'कर्मप्रदीपे' नास्ति घ । 8. 'इत्यादि' घ । 9. 'पित्र्यपः' ख । 10. 'इति' नास्ति घ ।

[1]सुबोधार्थं प्रयोगः प्रदर्श्यते—प्रतिपदे स्वाहा, द्वितीयायै, एवं [2]तृतीयायै, चतुर्थ्यै, पञ्चम्यै, षष्ठ्यै, सप्तम्यै, अष्टम्यै[3], नवम्यै, दशम्यै, एकादश्यै, द्वादश्यै, त्रयोदश्यै, चतुर्दश्यै, अमावास्यायै, [4]पौर्णमास्यै पञ्चदश्यै वा इति। [5]प्रतिपदादिदेवताप्रयोग उच्यते[6]* तिथिहोमप्रयोगः। ब्रह्मणे स्वाहा, त्वष्ट्रे, विष्णवे, यमाय, सोमाय, कुमाराय, मुनिभ्यः, वसुभ्यः, पिशाचेभ्यः, धर्माय, रुद्राय, [5]वायवे, मन्मथाय, यक्षेभ्यः, पितृभ्यः, विश्वेभ्यो देवेभ्य इति तिथिदेवताः। अश्विनीभ्यः स्वाहा, भरणीभ्यः, कृत्तिकाभ्यः, रोहिणीभ्यः, मृगशिरसे, आर्द्रायै, पुनर्वसवे, पुष्याय, अश्लेषाभ्यः, मघाभ्यः [7]पूर्वाभ्यां फल्गुनीभ्याम्, उत्तराभ्यां [8]फल्गुनीभ्याम्; हस्ताय, चित्रायै, स्वात्यै, विशाखाभ्यः, अनुराधाभ्यः, ज्येष्ठायै, मूलाय, पूर्वाभ्योऽषाढाभ्यः, उत्तराभ्योऽषाढाभ्यः, श्रवणाय, धनिष्ठाभ्यः, शतभिषाभ्यः, पूर्वाभ्यां प्रोष्ठ[9]पदाभ्याम्, उत्तराभ्यां प्रोष्ठ[10]पदाभ्याम्, रेवत्यै [11]स्वाहा। इति नक्षत्रहोमप्रयोगः। अश्विभ्याम्, यमाय, अग्नये, प्रजापतये, सोमाय, रुद्राय, अदितये, बृहस्पतये, सर्पेभ्यः, पितृभ्यः, भगाय, अर्यम्णे, सवित्रे, त्वष्ट्रे, वायवे, इन्द्राग्निभ्याम्, मित्राय, इन्द्राय, निर्ऋतये, अद्भ्यः, विश्वेभ्यो देवेभ्यः, विष्णवे, वसुभ्यः, वरुणाय, [12]अजैकपदे, अहिर्बुध्न्याय, पूष्णे। इति नक्षत्रदेवताप्रयोगः। अनादेशा[13]दाज्यं द्रव्यम्[13]*। विसमासकरणं पृथग् [14]होमार्थमेतेषामेव।

[15]एवं हुत्वाऽथ[15]*—

## तस्य मुख्यान् प्राणान् संस्पृशन् कोऽसि कतमोऽसीत्येतन्मन्त्रं जपति ॥ १३ ॥

तस्य कुमारस्य मुखे भवा मुख्याः, सप्त प्राणाः तानभिमृशेत्। (A)कोऽसीत्येतं मन्त्रं त्र्यवसानं जपति।

---

A. मन्त्रस्तु—

ॐ कोऽसि कतमोऽसि।
एषोऽस्यमृतोऽसि।
आहस्पत्यं मासं प्रविशासौ। इति।

मन्त्रब्राह्मणम् १।५।१४। विनियोगप्रमाणन्तु खादिरगृह्येऽपि। २।३।१९।

---

1. 'सुब धार्थं' नास्ति घ, 'सुखावबोधनार्थः प्रयोगश्च' ग, 'सुखावबोधार्थं' ख। 2. 'तृतीयादि' घ। 3. 'षष्टम्येपर्यन्तं स्वाहाऽस्ति' ख। 4. 'पञ्चदश्यै पौर्णमास्यै' ग। 5. नास्ति क-ग-घ। 6. 'इत्यर्थः' क-ग। 7. 'पूर्वाभ्यः फाल्गुनीभ्यः' ख। 8. 'फाल्गुनीभ्याम्' ख। 9. '-पदभ्यां' क-ख-ग। 10. '-पदभ्यां' क-ख-ग। 11. 'स्वाहा' नास्ति ख। 12. 'अहिर्बुध्न्याय, अजाएकपादे' ख। 13. '-दाज्य-संस्कारवद् द्रष्टव्यम्' ख। 14. 'होमार्थं-' क-ग। 15. 'अथाहुत्यामेव अनन्तहुतार्थः'।

तस्मिंश्च मन्त्रे—

**आहस्पत्यं मासं प्रविशासावित्यन्ते च मन्त्रस्य घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं कृतं नाम दध्यात् ॥ १४ ॥**

'आहस्पत्यं मासम्'* । प्रविशासावित्येतस्मिन् सर्वनाम्नि अन्ते च (A)मन्त्रस्य यत् सर्वनाम "जरायै"* परिदद्दात्वसाविति, "एतयोरुभयोरपि स्थाने 'नाम वक्ष्यमाणलक्षणं'* दध्यात् गृह्णीयादित्यर्थः । कीदृशं नाम ? "उच्यते"*—वर्गान्त्यास्त्रयस्त्रयो घोषवन्तः । घोषवदक्षरमादौ यस्य नाम्नस्तद् घोषवदादि, अन्तस्था यरलवाः । अन्तर्मध्ये अन्तस्थमक्षरं यस्य नाम्नस्तदन्तरन्तस्थम्, दीर्घं द्विमात्रम् । "अभिनिष्ठानं विसर्जनीयमक्षरम् । 'राणायनीयानाम् "अकृतन्त्रे प्रसिद्धा "विसर्जनीयस्याभिनिष्ठानाख्या"* इति । (B)अर्थाद् द्वयोरसम्भवे विकल्पः । दीर्घमक्षरमन्ते यस्य नाम्नस्तद् दीर्घान्तम् । यथा

अस्य व्याख्या—

हे बालक, त्वं कोऽसि, कस्त्वमसीति स्वरूपप्रश्नः । कतमोऽसि, किंप्रकारोऽसीति विशेषप्रश्नः । अकालमरणधर्माऽसि उत पूर्णायुर्भागसीति । एवमुक्तवान् स्वयमेवोत्तरं ब्रूते । एषोऽसि, एष ब्राह्मणत्वादिजात्या शैशवाद्यवस्थया युक्तः, त्वमसि । किञ्च अमृतोऽसि अनकालमरणधर्मा भवसि चिरं जीविष्यसि, यतः अतस्त्वम् आहस्पत्यं अहस्पतेः सूर्यस्य मासं संक्रान्तिचिह्नितं कालं प्रविश, सौरमासानुसारेणैव तव वयोऽब्दगणनं भवत्विति ।

A. अत्र च नामकरणशेषत्वेन विनियुक्तो मन्त्रब्राह्मणगृहीतमन्त्रश्च—ॐ स त्वाऽह्ने परिदद्दात्वहस्त्वा रात्र्यै परिददातु रात्रिस्त्वाऽहोरात्राभ्यां परिददात्वहोरात्रौ त्वाऽर्द्धमासेभ्यः परिदत्तामर्द्धमासास्त्वा मासेभ्यः परिददतु मासास्त्वर्तुभ्यः परिददत्वृतवस्त्वा संवत्सराय परिददतु संवत्सरस्त्वायुषे जरायै परिददात्वसौ । इति मन्त्रब्राह्मणम् १।५।१५ ।

अस्य व्याख्या—आहस्पत्यमासप्रवेशस्य फलमेतत् । असौ हे कुमार, सः अहस्पतिः त्वा त्वाम्, अह्ने दिवसाय परिददातु, एकाहपरिमितं जीवनं प्रापयतु, अहश्च स्वकालेन संवर्द्ध्य त्वा त्वाम्, रात्र्यै संवर्धनार्थं परिददातु, रात्रिः त्वा, अहोरात्राभ्यां परिददातु (एवंक्रमेण) संवत्सरोऽपि त्वा आयुषे जरायै परिददातु त्वां जरान्तमायुः प्रापयतु इति ।

B. 'अभिनिष्ठानशब्दोऽपि विसर्जनीयेऽक्षरे मतः' इति विश्वः । क्रमदीश्वरस्तु 'अभिनिरस्तनो विसर्गे' (सन्धि पा० सू० २७३) अत्र गोयीचन्द्रः—'विसर्गे वाच्ये इति भागवृत्तिकृतो मतम्, विसर्गे वर्णे च वाच्ये इति वामनस्य मतम्, अभिनिष्ठानो वर्ण इति चन्द्रमतम्, तथाच माघः—

1. चिह्नितांशो नास्ति घ । 2. चिह्नितांशो नास्ति घ । 3. 'इयोक-' घ । 4. 'वक्ष्यमाणं नाम' घ । 5. नास्ति घ । 6. 'अभिनिष्ठानाम' क । 7. 'राणायनीयानां' नास्ति ग-घ । 8. 'अकृतन्त्रे प्रसिद्धा' नास्ति ख । 9. 'विसर्जनीयाभ्यभिनिष्ठानाम्ना' ग ।

गोविन्दशर्मा इति। अभिनिष्ठानं विसर्जनीयमन्ते यस्य [1]नाम्नः तदभिनिष्ठानान्तम्। यथा गोविन्दः, स एव सामर्थ्याद् विकल्पः। दीर्घान्तं विसर्जनीयान्तं वा इति। अन्ये त्वेवं पठन्ति—दीर्घाभिनिष्ठानं [2]कृतं नाम दध्यादिति। तेषामर्थं [3]उच्यते। [4]दीर्घेणाक्षरेणाभि-[5]नितिष्ठते'* [6]परिसमाप्यते यन्नाम तद् दीर्घाभिनिष्ठानम्। यथा गोविन्दशर्मा इति। [7]तथ कृतं दध्यात्, कृतं'* कृत्प्रत्ययान्तम्, अन्ये तु पूर्वपुरुषाणां यत् कृतमासीत् तत् कुर्यादिति(A)।

'वचः स्पष्टानभिष्टानमिदमादाय माधवः' इत्याह। एवञ्च व्याकरणेषु अभिनिष्टानपदस्य सत्त्वात् सूत्रग्रन्थेषु च, अभिनिष्ठानपदस्य सद्भावात्, भाष्यकारेणापि अभिनितिष्ठते परिसमाप्यते इति व्याख्यानात् विश्वप्रकाशत्रिकाण्डशेषादिषु च सत्त्वात् अभिनिष्ठानाभिनिष्ठानेति पदद्वयी विसर्गार्थेति ज्ञायते, तदत्रावधातव्यं सुधीभिः।

A. अत्र तर्कालङ्कारः—तदिदं नाम्नः प्रतीकत्रयमादिमध्यान्तभेदेन सूत्रितम्। ये त्वाहुः शर्मादीनां न नामावयवत्वम्, किन्तु नामभिन्नत्वं तदुपपदत्वञ्चेति, ते तु न्यायेन न सङ्गच्छन्ते परमप्रेक्षावान् खल्वाचार्यो नाम्न आदिं मध्यं चावयवं सूत्रयित्वा क्रमागतमवश्यसूत्रयितव्यमन्त्य-मवयवमुपेक्ष्य नाम्न उपपदं सूत्रितवानित्यस्यासम्भवदुक्तिकत्वात्। को हि प्रेक्षावानेवमाचक्षीत ? 'अयुग् दान्तं स्त्रीणाम्' इत्यग्रिमसूत्रे दाकारस्य नामावयवत्वस्य तेषामप्यनुमतत्वेनात्रापि तथैव वर्णयितुमुचितत्वाच्च। तात्पर्यभेदकल्पनस्यान्याय्यत्वात् उत्तरसूत्रे दाकारस्य दीर्घाभिनिष्ठा-नयोरपवादरूपेण प्रवृत्तेस्तस्येव तयोरपि नामप्रतीकत्वप्रतीतेश्च। पाठान्तरे तु शर्मेत्यस्य नामावयवत्वे न सन्देहगन्धोऽपि।

तथा स्नानसूत्रपरिशिष्टम्—

गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि।
गोत्रस्तु तर्पणे प्रोक्तः कर्ता एवं न मुह्यति॥
सर्वत्रैव पितः प्रोक्तं पिता तर्पणकर्मणि।
पितुरक्षय्यकाले तु अक्षयां तृप्तिमिच्छता॥
शर्मन्नर्घ्यादिके कार्ये शर्मा तर्पणकर्मणि।
शर्मणोऽक्षय्यकाले च पितॄणां दत्तमक्षयम्॥ इति।

तदत्र गोत्रसम्बन्धनाम्नामुल्लेखप्रकारोपदेशपरे ग्रन्थे गोत्रसम्बन्धयोरुल्लेखप्रकारमुपदिश्य 'शर्म-न्नर्घ्यादिके कार्ये' इत्याद्यभिधानात् शर्मशब्दस्य नामप्रतीकत्वं स्पष्टमवगम्यते, तस्य नामभिन्नत्वे तदुपपदत्वे च क्रमागतस्य नाम्न उल्लेखप्रकारमनभिधाय तदुपपदस्योल्लेखप्रकाराभिधानमसङ्गतं भवेत्। न च सङ्गतं शास्त्रमसङ्गतं कर्तुमुचितम्। तथा मनुः—

1. 'नाम्नः' नास्ति क-ग-घ। 2. 'कृतं' नास्ति ग-घ। 3. 'उच्यते' नास्ति ग। 4. 'दीर्घा-क्षरेणाभिनितिष्ठते' ग। 5. 'निविष्ठते' ख। 6. 'परि-' नास्ति ख-घ। 7. चिह्नितांशो नास्ति क-घ।

नामधेयमित्यादि

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥
शर्मवद् ब्राह्मणस्य स्याद् राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम् ॥ इति ।

नामधेयमिति विशेष्यमुत्तरवचनद्वयेऽनुवर्त्तनीयम् । शङ्खस्त्वन्तिमं वचनमन्यथा पठितवान्, तद् यथा—

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य च ।
धनान्तञ्चैव वैश्यस्य दासान्तञ्चान्त्यजन्मनः ॥ इति ।

शातातपस्याप्येतत् । यथाऽऽह यमः—

शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः ।
भूतिर्गुप्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥ इति ।

भूतिर्दत्तश्चेति पाठान्तरम् । तदनेन शर्मा देवश्चेत्यनयोर्विकल्पेनोत्तरप्रतीकत्वं विप्रनाम्नामिति तस्य मतं लक्ष्यते, अस्मिन् विषये मुनीनां मतभेदोपलम्भात् । यथैव तावद् 'धनान्तञ्चैव वैश्यस्य' इति, 'भूतिर्गुप्तश्च वैश्यस्य' इति चैवमादि ; चकारात् समुच्चयावगतिस्तु 'ब्राह्मणो वैल्वपालाशौ' इत्यादिवत् समर्थनीया । तथाच 'ब्राह्मणो वैल्वपालाशौ' इत्यत्र व्याख्यातं कुल्लूकभट्टेन—वैल्वः पालाशो वा दण्ड इति । वाशिष्ठे विकल्पदर्शनादेकस्यैव दण्डस्य धारणम् । विकल्पितयोरेवैकब्राह्मणसम्बन्धात् समुच्चयो दण्डेनानूद्यते इति । तद्वदत्रापि स्यात् । कस्य-चिद्विप्रस्य शर्मा इति कस्यचिच्च देव इति, सर्वथाऽपि खलु द्वयमेतद् विप्रस्यैव भवति न क्षत्रिया-देरिति । न त्वेकस्मिन् नाम्नि देवशर्मणोः समुच्चयः, मन्वादिविरोधात् । तथात्वे वर्मत्रात्रोर्भूति-गुप्तयोरपि समुच्चयः स्यात् । वस्तुतस्तु मन्वादिभिः कैरपि देवशब्दस्य नामप्रतीकत्वानुपदेशात् प्रतीकद्वयाभिप्रायेण यमवचनं वर्णनीयम्, मन्वादिस्वरसात् । तथाच शर्मादीनामेकप्रतीकत्वं देवाद्यबोधकत्राणाद्यद्योतकभूत्यभिव्यञ्जकशब्दानामपरप्रतीकत्वं तस्यार्थः । प्रतीकयोः पौर्वापर्यन्तु वचनान्तरानुसारेणावसेयम् ।

विष्णुपुराणम्—

ततश्च नाम कुर्वीत पितैव दशमेऽहनि ।
देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम् ॥
शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रियस्य च ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ इति ।

नराख्यमेव प्रतीकद्वयेन विशिनष्टि—देवपूर्वमिति, शर्मवर्मादिसंयुतमिति च । तत्र च 'देवपूर्वं श्राद्धं कुर्वीत' इति, 'देवपूर्वं पितृभ्योऽन्नम्' इति चैवमादिवत् देवः पूर्वो यस्येति बहुव्रीहिसमासाश्रयणेन

देवबोधकशब्दस्य पूर्वप्रतीकत्वं शर्मवर्मादेश्चोत्तरप्रतीकत्वं पारिशेष्यादवसीयते। तथाच शङ्ख-लिखितौ—

'देवतानक्षत्रादिसंबद्धं पिता नाम कुर्यात्' इति।

तथा शङ्खः—

'कुलदेवतासंबद्धं पिता नाम कुर्यात्' इति।

इदं कुलसंबद्धं देवतासंबद्धं वा इति मदनपारिजाते व्याख्यातम्। आचार्योऽप्यभिवादनीये नाम्नि सूत्रयिष्यति 'देवताश्रयं वा नक्षत्राश्रयं वा गोत्राश्रयमप्येके' इति।

न च देवात् पूर्वं देवपूर्वमिति व्याख्यानं युक्तमिति वाच्यम्, पूर्वलिखितशाखान्तरानुसारेण बहुव्रीहिसमासस्यैव युक्तत्वात्। तन्मते शर्मा देवश्च विप्रस्येति यमवचनानुसारेण विप्रनाम्न एव देवशब्दपूर्ववर्तित्वेन वर्मादेश्च क्षत्रियादिनाममात्रविषयत्वेन देवपूर्वस्य नाम्नो वर्मादि-संयुतत्वानुपपत्तेश्च। क एवमाह देवपूर्वस्य नाम्नो वर्मादिसंयुतत्वमिति, तस्य शर्मासंयुतत्वमेव ब्रूमः। तच्चैतद् विप्रविषयमिति मन्यामहे। सत्यमेवं ब्रवीति भवान्, मन्यते चैवम्, न त्वेवं वाक्यार्थो घटते, किं कारणम्? देवपूर्वस्यैव नाम्नः शर्मवर्मादिसंयुतत्वस्य वचनादवगतेः। किञ्च भवता देवपूर्वस्य नाम्नो विप्रविषयतया उपात्ते देवपूर्वे नाम्नि शर्मयुतत्वमन्वीयते इति वक्तव्यम्। उक्तञ्चैवमेव भवद्भिः। एवञ्च नामान्तरस्यानुपादानात् वर्मादियुतत्वमिदानीं कुत्रान्वीयताम्। न ह्यनन्वितमेवेदमिति शक्यं वक्तुम्, तथा सति बाकोन्मत्तादिवाक्यवदपार्थकमेतदित्यापतति। न चैतदुचितम्, नवावृत्तिशब्दैकदेशार्थस्यैवमभिसम्बन्धोऽनुमतः प्रामाणिकानाम्। तस्मात् देव-पूर्वस्य नाम्नः शर्मवर्मादिसंयुतत्वान्वयोपपत्तये पूर्वोक्तैव व्याख्या धीमद्भिरादरणीया। तदत्र शर्मादि-पदोत्तरमितिकारकरणात् 'गुप्तदासात्मकं नाम' इति चाभिधानात् तावन्मात्रस्यैव परप्रतीकत्वं न देवादिशब्दसमुच्चितस्य, तथा शर्मादीनां नामावयवत्वञ्च सुव्यक्तं प्रतीयते इत्याह स्वभाष्ये।

रघुनन्दनस्तु—"तथाच गर्गः—

आदौ घोषवदक्षरान् यरलवान् मध्ये पुनः स्थापये-
दन्ते दीर्घविसर्जनीयसहितं नाम प्रयत्नात् कृतम्।
ऋक्षे तिष्यकराश्विसौम्यवसुभे चित्रानुराधोत्तरे
पौष्णे चादितिरोहिणीषु शुभकृत् पुंसां समैरक्षरैः॥

नारायणपद्धतौ—

नामकरणं स्थिरलग्ने केन्द्रे पञ्च नवमस्थिते सौम्ये।
ऽयायषष्ठमथिस्थितपापे जीवशुक्रशशिसौम्यदिनेषु॥

प्रसादप्रासनाम्नप्येवम्। व्यासः—

न आयादुत्सवेऽतीते निर्वर्त्यापि च मङ्गलम्।
अनुज्ञाप्य सुहृद्बन्धून् पूजयित्वेष्टदेवताः॥ इति।

[1]किञ्च—

## एतदतद्धितम् ॥ १५ ॥

[2]एतदतद्धितं कुर्यादिति। अन्यत्र [3]तु तद्धितमपि* दध्यादिति, यथा तद् गुह्यमेव भवति। अभिवादनीयं नामधेयं कल्पयित्वेति च।

## अयुग्दान्तं स्त्रीणाम् ॥ १६ ॥

स्त्रीणामयं विशेषः। अयुक् अयुग्माक्षरम्, दान्तं [4]दाकारान्तम्, नाम दध्यादिति [5]वर्त्तते, यथा [6]वसुदा यशोदा इति(A)।

---

गोभिलः—एतदतद्धितम्। एतन्नाम तद्धितरहितम्, एतच्च स्वगृह्योक्तत्वात् प्रशस्तपरं कुलदेवनक्षत्राभिसम्बद्धं पिता नाम कुर्यात् तदन्यो वा कुलवृद्धः, इति कल्पतरुशङ्ख-लिखितवचनान्नामान्तरकरणव्यवहारः। अत्र नक्षत्रसम्बन्धेन नामकरणं शतपदचक्रानुरोधात् स्वनक्षत्रपादानुसारेण, तच्च देवशर्माद्युपपदान्तत्वेन कर्त्तव्यम्। तथाच विष्णुपुराणम्—'ततश्च नाम कुर्वीते'त्यादि। नरमाचष्टे इति नराख्यं नरनाम, देवात् पूर्वं तच्च विशिष्टं शर्मयुतम्। 'शर्मा देवश्चे'ति यमवचने समुच्चयोपलब्धेः। 'शर्मान्तं ब्राह्मणस्य स्यात्' इति शातातपीयेन शर्मान्तता च।

देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्।
सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्॥

इति राघवभट्टधृतप्रयोगसारदर्शनात्, स्वर्गगामित्यादिना सिद्धोऽधिकारो येषां नराणामित्यनेन जीवतां श्रीशब्दादित्वं मोक्षो न मृतानां तथेति शिष्टाचारः" इत्याह संस्कारतत्त्वे। एवञ्च यद्यपि 'गिरिशर्मैवमुक्तवान्' इति कर्मप्रदीपे, भव इति विष्णुशर्मा इति चैवमादिकं द्व्यक्षरस्य चतुरक्षरस्य च नाम्न उदाहरणतया गृह्यान्तरवृत्तिकारैर्लिखितम्, तथाऽपि 'श्रीभवदेवदेवशर्मा' इत्यादि वङ्गदेशादि-प्रसिद्धा नामकथनशैली न शास्त्रप्रबन्धकाराद्यनुमोदितेति प्रतीम इति सुधीभिरवगन्तव्यम्।

A. स्त्रीणां नामकरणे मनुः—

स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्।
माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्॥ इति।

अस्य व्याख्यायां कुल्लूकभट्टः—सुखोच्चार्यमक्रूरार्थवाचि व्यक्ताभिधेयं मनःप्रीतिजननं मङ्गलवाचि दीर्घस्वरान्तम्, आशीर्वाचकेनाभिधानेन शब्देनोपेतं स्त्रीणां नाम कर्त्तव्यम्। यथा यशोदादेवीति। इत्याह।

---

1. 'किञ्च' नास्ति ख। 2. 'ए' नास्ति क-ग-घ। 3. '-तूर्ध्वं तमपि' क। 4. 'दकारान्तं' क-ग। 5. 'वर्त्तते' नास्ति क-ग-घ। 6. 'वसुदा' नास्ति घ।

## मात्रे चैव प्रथमं नामधेयमाख्याय यथार्थम् ॥ १७ ॥

प्रथमं पूर्वं [1]तावज्जनन्यै[1]* नामधेयम् [2]आख्याय कथयित्वा यथार्थं [3]सर्वप्रायश्चित्तादि-तन्त्रं समापयेत्। चशब्दात् [4]स्त्रीनामधेयञ्च[4]* मातुरेव पूर्वं कथयेत् [5]इति। [6]एवशब्दो मातुरेव प्रथम[7]कथननियमार्थः[7]*।

[8]अस्य च [9]कर्मणोऽन्ते [10]ब्रह्मणः—

## गौर्दक्षिणा ॥ १८ ॥

[11]इति नामकर्म(A) ॥

---

अत्र तर्कालङ्कारः—"यत्तु 'देव्यन्तास्तु स्त्रियः स्मृताः' इति वचनम्, तत् कौथुमादि-व्यतिरिक्तविषयम्। दा-देव्योः समुच्चयमिच्छन्त्यन्ये उदाहरन्ति च 'गौरी देवी दा' इति" इत्याह स्वभाष्ये। परमत्र कथं तेन निर्णीतं 'देवी'त्युपपदं कौथुमादिव्यतिरिक्तविषयमिति न निर्णेतुं शक्यते, वयं तु—यथा पुरुषनामसु देवशर्मेत्याद्युपपदं शास्त्रयुक्त्या निर्णीतं रघुनन्दनेन, तथा कुल्लूक-भट्टादिसम्मते दान्तानां स्त्रीनाम्नामवसाने देवीत्याद्युपपदप्रयोगे न कश्चिद् दोषलेशोऽपि पदमाधातुं प्रभवतीति निर्णयामहे, तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

A. नामकर्मविषये बहूक्तं निर्णयसिन्धौ तस्मात् किञ्चित् प्रदर्श्यते—

"मदनरत्ने बृहस्पतिः—

द्वादशे दशमे वाऽपि जन्मतोऽपि त्रयोदशे।
षोडशे विंशतौ चैव द्वात्रिंशे वर्णतः क्रमात्॥

याज्ञवल्क्यः—

अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः। इति।

हेमाद्रौ भविष्ये—

नामधेयं दशम्यां तु द्वादश्यां वाऽपि केचन।
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः॥

दशम्यामतीतायामिति ज्ञेयम्, 'आशौचापगमे नामधेयम्' इति विष्णूक्तेः। गृह्यपरिशिष्टेऽपि—

जननाद् दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणम्।

ज्योतिर्निबन्धे गर्गः—

अमा-संक्रान्ति-विष्ट्यादौ प्राप्तकालेऽपि नाऽऽचरेत्।

---

1. 'तावन्मात्रे' ख। 2. 'आख्याय' नास्ति क-ग-घ। 3. 'सर्वप्रायश्चित्तादि' नास्ति ख। 4. 'स्त्रीनामैव' ग-घ। 5. 'इति' नास्ति क-ख। 6. 'एवशब्दो' नास्ति ग। 7. 'कथनीय-नियमः' ख। 8. 'अस्य च' क, 'अस्य च' नास्ति ख। 9. 'कर्मान्ते' ख। 10. 'ब्रह्मणे' ख-घ। 11. 'इति नामकर्म' नास्ति ख।

श्रीधरः— मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्युत-
प्राजेशाश्विशशाङ्कपौष्णदिनकृत्पुष्येषु राशौ स्थिरे ।
छिद्रां पञ्चदशीं विहाय नवमीं शुद्धेऽष्टमे भार्गव-
ज्ञाचार्यामृतपादभानुदिवसे नामानि कुर्याच्छिशोः ॥

मदनरत्ने नारदीये—

सूतकान्ते नामकर्म विधेयं स्वकुलोचितम् ।
नाम पूर्वं तु मासस्य मङ्गलं सुसमाक्षरैः ॥

तत्रैव गार्ग्यः—

मासनाम गुरोर्नाम दद्याद् बालस्य वै पिता ।

स्मृतिसंग्रहे—

कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥

अत्र मार्गशीर्षादिश्चैत्रादिर्वा क्रम इति ।

मदनरत्ने— तन्मासनाम प्रथमं दद्यात् संबुध्य चैव हि ।
देवालयगजाश्वानां वृक्षाणां वापि-कूपयोः ॥
सर्वापणानां पुण्यानां चिह्नार्थं योषितां नृणाम् ।
काव्यानां च कवीनाञ्च पदवादीनाञ्च सर्वशः ।
राजप्रासादवास्तूनां नामकर्म विशिष्यते ।

नाक्षत्रमपि नाम कार्यम्, अभिवादनीयं समीक्षेत तन्मातापितरौ विद्यातामौपनयनात् । इत्या-श्वलायनोक्तेः, कुलदेवतानाक्षत्रसंबद्धं पिता नाम कुर्यात्, इति मदनरत्ने शङ्खोक्तेः । तच्च नक्षत्रपादाक्षराद्यक्षरं कुर्यादित्युक्तं परिशिष्टे—

तदक्षरादिकं नाम यस्मिन् धिष्ण्ये यदक्षरम् । इति ।

सुदर्शनभाष्ये तु—

रोरेमकृज्येविषुवृद्धिरादौ हान्त्ये च वान्त्ये श्रवसादवयुक्षु ।
शेषेषु नाम्नोः कपरः स्वरोऽन्त्यः स्वाप्योर्दीर्घः सविसर्ग इष्टः ।

इत्युक्तम् । हान्त्येति प्रोष्ठपदेत्यत्रादौ हात् परे च वृद्धिः प्रौष्ठपाद इति ।

अन्त्यमपभरणीशब्दः श्रुतावुक्तः । तत्र श्रवणादौ च वादिवृद्धिः । अपभरण आपभरण इत्यादि । मदनरत्ने वसिष्ठः—

जन्माहे द्वादशाहे वा दशाहे वा विशेषतः ।
उत्तरारेवतीहस्तमूलपुष्याः सवारुणाः ॥

कुमारस्य मासि मासि संवत्सरे सांवत्सरिकेषु वा पर्व-स्वग्नीन्द्रौ द्यावापृथिवी विश्वान् देवांश्च [A]यजेत ॥ १६ ॥

जननाद् यस्तृतीयो ज्यौत्स्न इति, जननाद् दशरात्रे व्युष्टे इति च। जन्मन एवाधिकृतत्वात्, जन्मतिथौ कुमारस्य मासि मासि अग्नीन्द्राद्या देवता यजेत, कियन्तं कालं [1]यावत् ? संवत्सरे प्रथमे [2]इति शेषः। प्रतिमासं घृतादिसम्पादनाशक्तौ सांवत्सरिकेषु वा [3]पर्वसु यजेत। संवत्सरस्येमानि सांवत्सरिकाणि, तेषु [4]सांवत्सरिकेषु पर्वसु

---

श्रवणादितिमैत्रं च स्वातीमृगशिरस्तथा।

प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि ॥ इति।

मदनपारिजाते विशेषः। शङ्खः—

अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते। इति।

न चायं नियमः, तथाच 'नामधेयं दशम्यामि'त्यादिवचनविरोधात्, तत'श्चाहन्येकादशे नामे'त्यादीनां विवक्षितार्थत्वमेव, तेनाशौचमध्येऽपि कार्यं स्वगृह्यानुसारेण वैते पक्षा व्यवस्थिता विशेषाः।

शङ्खलिखितौ—

दशम्यामुत्थाप्य पिण्डवर्धनं पितॄणां तत्र सान्निध्यम्

इति श्रुतेः ब्राह्मणे वाऽऽहुतिं पूर्वं पितॄननुमान्य तदहरेव नामकरणं कुर्यात् देवताश्रयमभिसम्बद्धं पिता नाम कुर्यादन्यो वा कुलवृद्धश्चतुरक्षरं द्व्यक्षरं वा घोषवदाद्यन्तस्थं पुंसाम्, ईकारान्तं स्त्रीणाम्। एवं कृते नाम्नि शुचि तत्कुलं भवतीति। पिण्डवर्धनमिति नामकर्म, तत् कुर्यात्। बैजवापः—

पिता नाम करोत्येकाक्षरं द्व्यक्षरं त्र्यक्षरं चतुरक्षरं परिमितञ्चेति।

अत्र समसंख्या पुंसः। शङ्खः—

अयुग्माक्षरमाकारान्तं स्त्रियैतद्धितमपि।

ईकारान्तं स्त्रीणामिति स्वकुलसम्बद्धं कुर्यात्।

तथाच शङ्खः—

कुलदेवतासम्बद्धं पिता नाम कुर्यादिति।

कुलसम्बद्धं देवतासम्बद्धं वेत्यर्थः" । इति।

मुहूर्तमञ्जर्यां च—

चित्रानुराधामृगरेवतीषु धात्रश्विनीत्र्युत्तरहस्तपुष्ये।

पुनर्वसौ च श्रवणत्रिकेषु बुधार्कचन्द्रेज्यसितेषु नाम ॥ इति।

A. 'यजेत' इत्यत्र सूत्रे भाष्यस्थे च पदे सर्वत्र 'यजेत्' इति क-पुस्तकपाठः।

---

1. 'यजेत' ख। 2. 'इति वाक्यशेषः' ख। 3. 'वा मासि' ग-घ। 4. 'सांवत्सरिकेषु' नास्ति घ।

त्रयाणां तिथिषु, कार्त्तिकीफाल्गुन्याषाढीष्वित्यर्थः। अथवा त्रय एवैते समानविकल्पाः। सांवत्सरिके जन्मतिथौ कुमारस्य मासि मासि वा यजेत वर्षं यावत्। कुतः? ऊर्द्ध्वं वर्षान्त एवर्तवस्त एव [1]मासाः पुनरप्यावर्त्तन्ते। संवत्सरे [2]वा पूर्णे इति शेषः। संवत्सरे वा पूर्णे प्रकृतायां तिथौ यजेत, सांवत्सरिकेषु वा पर्वसु[3]। अग्निश्चेन्द्रश्चाग्नीन्द्रौ, [4]सेयं द्वन्द्वदेवता। अग्नीन्द्राभ्यां स्वाहा, [5]इति प्रयोगः, द्यौश्च पृथिवी च [6]द्यावापृथिवी, इयमपि द्वन्द्वदेवता[7]*। द्यावापृथिवीभ्यां स्वाहेति। [8]विश्वे देवाः सर्वे देवाः, तांश्च विश्वेभ्यो देवेभ्यः स्वाहेति[9]*।

किञ्च—

**देवतमिष्ट्वा तिथिं नक्षत्रं च यजेत ॥ २० ॥**

जन्मतिथिदेवतमिष्ट्वा जन्मतिथिं यजेत। जन्मनक्षत्रदेवतमिष्ट्वा जन्मनक्षत्रं यजेत। इति।

**विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्द्धानं परिगृह्य जपेत्, यदा वा पिता म इति विद्यादुपेतस्य वा अङ्गादङ्गात् संश्रवसीति ॥ २१ ॥**

विप्रोष्य प्रवासमनुभूय आगतः [9]ज्येष्ठस्य पुत्रस्य उभाभ्यां द्वाभ्यां पाणिभ्यां मूर्द्धानं* शिरः[9] परिगृह्य गृहीत्वा "अङ्गादङ्गादि"ति षडवसानं त्र्यचं जपेत्(A), [10]"यदा वा कुमार एवं विद्यात् जानीयात्, पिता मे, जनयिता ममायमिति। उपेतस्य [11]उपनीतस्य वा पुत्रस्य।

A. मन्त्रास्तु—

ॐ अङ्गादङ्गात् संश्रवसि हृदयादधिजायसे।
प्राणं ते प्राणेन सन्दधामि जीव मे यावदायुषम्॥
ॐ अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे।
वेदो वै पुत्र नामासि स जीव शरदः शतम्॥
ॐ अश्मा भव परशुर्भव हिरण्यमस्तृतं भव।
आत्माऽसि पुत्र मा मृथाः स जीव शरदः शतम्॥ इति।

मन्त्रब्राह्मणम् १।५।१६-१८। विनियोगप्रमाणञ्च खादिरगृह्येऽपि २।३।१३।

1. '-आर्त्ता' ग-घ। 2. 'वा' नास्ति ग। 3. 'पर्वसु यजेतेति' ख-ग। 4. 'सेयं द्वन्द्वदेवता' नास्ति ग-घ। 5. 'इति प्रयोगः' नास्ति ग-घ। 6. नास्ति ग। 7. नास्ति क-ग-घ। 8. 'नास्ति' ख। 9. '-शो गृहीत्वा परिगृह्य' क-ग। 10. 'यथा वा' घ। 11. 'वा पुत्रस्य उपनीतः' ख।

**पशूनां त्वा हिङ्कारेणाभिजिघ्रामीत्यभिजिघ्रय यथार्थम् ॥२२॥**

'पशूनां(१)मित्यनेन मन्त्रेण अभिजिघ्रय आघ्राय, प्रकृतत्वात् मूर्द्धानमेव। यथार्थं वामदेव्यं गायेदिति। असावित्ति एतस्मिन् सर्वनाम्नि सम्बोधनविभक्त्या पुत्रनाम गृह्णीयादभिजिघ्रामि विष्णुशर्मन्निति।

**एवमेवावरेषां (२)यथाज्येष्ठं यथोपलम्भं वा ॥ २३ ॥**

अवरेषां तदनुजातानां एवमेव मूर्द्धालम्भोऽभिघ्राणञ्च। अयं विशेषः--यथाज्येष्ठं वा यथोपलम्भं वा। यो यो ज्येष्ठस्तस्य पूर्वम्, यो यः पूर्वं सन्निधावागच्छति तस्य तस्य वा।

---

हे पुत्र, त्वं मे मम, अङ्गादङ्गात् शिरोग्रीवादिसमस्तावयवात् संभवसि संभूतोऽसि तथा हृदयात् सर्वगात्रेभ्यः प्रधानभूतात्, अधिजायसे उत्पन्नोऽसि। अस्य इत्थम्भूतस्य ते तव प्राणं वायुम्, प्राणेन आत्मीयेन एव सन्दधामि सततमविच्छिन्नं करोमि, तत्सन्धानात् यावदायुः श्रुत्युक्तं शतवर्षपर्यन्तं जीव प्राणिहि। (१)

हे पुत्र, यः त्वम् अङ्गादङ्गात् मदीयात् प्रत्यवयवात् सम्भवसि समुत्पन्नोऽसि, हृदयात् मदीयात् अधिजायसे अधिजातोऽसि, अतः त्वं वै निश्चयो वेदः वेदाध्येता, नाम प्रसिद्धः, असि भवसि लोके, सः त्वं शरदः शतं शतं वर्षाणि जीव प्राणिहि। (२)

हे पुत्र, अश्मा भव पाषाण इव दृढो निर्व्याधिः भव, परशुर्भव, परशुवत् स्वयमच्छेद्यः शत्रूणां छेदकश्च भव, अस्तृतम् अन्यैस्ताम्रादिभिरपद्रव्यैरनाच्छादितं हिरण्यं सुवर्णं भव, त्वम् आत्माऽसि मत्स्वरूपोऽसि अतो मा मृथाः न म्रियस्व, अपि तु सः त्वं शरदः शतं शतं वर्षाणि जीव। इति।

A. मन्त्रस्तु—

ॐ पशूनां त्वा हिङ्कारेणाभिजिघ्राम्यसौ। इति।

मन्त्रब्राह्मणम् १।५।१९। विनियोगस्त्वस्य जैमिनीयगृह्ये ७।१८। खादिरगृह्येऽपि २।३।१४।

अस्य व्याख्या—असौ एतन्नामक हे पुत्र, त्वा त्वां त्वदीयं मूर्धानमिति यावत्, अहं पिता पशूनां गवादीनामिव हिङ्कारेण आनन्दप्रकाशकाव्यक्तध्वनिना चुम्बनपूर्वकम् अभिजिघ्रामि, त्वदीयमूर्धगन्धग्रहणं करोमीत्यर्थः।

B. यथाज्येष्ठमित्यादि सूत्रान्तरमिति कल्पतः सामश्रमितकाङ्कारौ।

---

1. 'पशूनां त्वा हिंकारेणे-' ख-ग। 2. '-मिजिघ्रणं च' ख।

**स्त्रियास्तूष्णीं मूर्द्धन्यभिजिघ्रणं मूर्द्धन्यभिजिघ्रणम् ॥ २४ ॥**

ननु 'तूष्णीं मूर्द्धन्यभिजिघ्रणमित्युच्यमाने आलम्भोऽपि तूष्णीं न प्राप्नोति, तथायुक्तम्। [1]कुतः,

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥

इति "स्मृत्यन्तर"* वचनात्(A)। [4]एवं चेत् स्त्रियास्तूष्णीमित्येतावति वक्तव्ये'* मूर्धनीति कथमुच्यते ? तस्मादालम्भोऽपि तूष्णीमेव स्यात्। स्त्रियास्तूष्णीमित्युच्यमाने' होमादीन्य"प्यधस्तात् प्रोक्तानि"* तूष्णीमेव स्युः। तदनिष्टम्, कुतः ? 'मन्त्रेण तु होम' इति [गो० सू० २।६।२२] वक्ष्यमाणत्वात्। आलम्भस्तु मन्त्रलिङ्गप्रतिषेधादेव तूष्णीं स्यात्। तस्मान्मूर्द्धनीत्युक्तम्। अन्ये तु चशब्दमध्याहृत्य व्याचक्षते— 'स्त्रियास्तूष्णीं मूर्द्धन्यभिजिघ्रणम्, च-शब्दादालम्भश्चेति। अभ्यासः प्रकरणसमाप्त्यर्थः(B)।

इति "भट्टनारायणकृतौ"* "गोभिलीयगृह्यसूत्रभाष्ये"*
द्वितीयप्रपाठकस्य अष्टमी कण्डिका ॥

---

A. मनुसंहिता २।६६। इयमावृत्, अयं जातकर्मादिक्रियाकलापः समग्र उक्तः कालक्रमेण शरीरसंस्कारार्थं स्त्रीणाममन्त्रकः कार्य इति कुल्लूकभट्टः।

B. अत्र निष्क्रमण-नामकरण-मूर्धाभिघ्राणप्रकरणेषु यदुक्तं गृह्यान्तरेषु तेभ्यः किञ्चिद्विशेषोपस्थाप्यते—तथाच छन्दोगखादिरद्राह्यायणगृह्येषु—जननाज्ज्यौत्स्ने तृतीये तृतीयायां प्रातः स्नाप्य कुमारमस्तमिते शान्तासु दिक्षु पिता चन्द्रमसमुपतिष्ठेत् प्राञ्जलिः। शुचिनाच्छाद्य माता प्रयच्छेदुदक्शिरसम्। अनुपृष्ठं गत्वोत्तरतस्तिष्ठेत्। यत्ते सुसीम इति तिसृभिरुपस्थायोदञ्चं मात्रे प्रदाय यदद इत्यपामञ्जलिमवसिञ्चेत्। द्विस्तूष्णीम्। जननादूर्ध्वं दशरात्राच्छतरात्रात् संवत्सराद्वा नाम कुर्यात्। स्नाप्य कुमारं करिष्यत उपविष्टस्य शुचिनाच्छाद्य माता प्रयच्छेदुदक्शिरसम्। अनुपृष्ठं गत्वोत्तरत उपविशेत्। हुत्वा कोऽसीति तस्य मुख्यान् प्राणानभिमृशेत्। असाविति नाम कुर्यात्। तदेव मन्त्रान्ते मात्रे प्रथममाख्याय विप्रोष्याङ्गादङ्गादिति पुत्रस्य मूर्द्धानं परिगृह्णीयात्। पशूनां त्वेत्यभिजिघ्रेत्। तूष्णीं स्त्रियाः। इति।

जैमिनिगृह्ये च—अथातो नामकर्म। पूर्वपक्षे पुण्ये नक्षत्रे द्वादश्यां वा पिता नाम कुर्यादाचार्यो

---

1. 'तूष्णीं' नास्ति ख। 2. नास्ति क-घ। 3. नास्ति क-ग-घ। 4. 'एवं स्त्रियां तूष्णीमित्येतावति वक्तव्ये', ग। 5. '-मादीन्यपि होमा- क। 6. '-प्यधस्तात्प्रोक्तानि' ख। 7. 'स्त्रियास्तूष्णीं' नास्ति ख। 8. 'चिह्नितांशो नास्ति ख-ग। 9. चिह्नितांशो नास्ति ख-घ।

वा। तमहतेन वाससा समनुपरिगृह्य पिताऽङ्केनासीत तस्य नामधेयं दध्यात् द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थमनुनक्षत्रमनुदैवतम् अनुनामातद्धितम् आकारान्तं स्त्रियै यथार्थं वा; कुमारवत्तेषु च नक्षत्रं नक्षत्रदैवतं तिथिमिति यजतेऽष्टावन्या जुष्टा देवता यजते अग्निधन्वन्तरिप्रजापतिमिन्द्रं वसून् रुद्रानादित्यान् विश्वान् देवानित्येतासु स्विष्टासु सर्वा देवता अभीष्टा भवन्ति। इति।

लौगाक्षिकाठकगृह्ययोश्च—दशम्यां तस्मिन्नेवाग्नौ पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कं स्नापयित्वाऽहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति कया नश्चित्र इति द्वाभ्यां 'कया तच्छृण्वे प्रजापतये स्वाहा, प्रजापते न हि त्वदिति च द्वाभ्याम्। अग्नेरायुरसीति तुल्यमा ललाटाभिमर्शनात्। तदेव नाम धीयते। अन्यदित्येके। प्राक् स्विष्टकृतः कंसे घृतमाज्य-मासिच्य हिरण्यं चाबन्धनीयमग्नेरायुरित्यवधाय तस्य जुहोतीन्द्रस्य प्राण इति पञ्चभिः। प्राक् संस्थितयजुषो ब्रह्मा घृते हिरण्यमवपश्यते सर्वे चर्त्विजो यदसर्प इति। पावमानेनेत्युद्धृत्य देवा आयुष्मन्त इति यजमानाय प्रयच्छति। तत् पिबति निरवधयेत्। हिरण्यात् घृतं प्रक्षाल्येममग्न इति हिरण्यमाबध्नाति। तस्य ललाटमभिमृश्याश्विनोः प्राण इति जपति। अङ्गादङ्गादिति मूर्धनि निघ्राय स्वस्त्ययनं वाचयति। एवमत ऊर्ध्वं विप्रोष्य। एवं मासि मासि स्थालीपाक-स्येष्ट्वा जातकर्मणा वाज्यस्य। एवं संवत्सरम्। मांसं तु नाश्नीतः। समाप्ते संवत्सरे-ऽजाविभ्यां वाऽग्निधान्वन्तरी इष्ट्वा सर्पिष्मदन्नं ब्राह्मणान् भोजयेत्। तृतीयेऽर्धमासे दर्शन-मादित्यस्य। पुण्याहे पर्वणि चोदिते स्वादित्ये रथचक्रमात्रं स्थण्डिलमुपलिप्य तस्मिन् यथोक्त-मुपसमाधाय जयप्रभृतिभिर्हुत्वा 'तरणिः' 'दिवो रुक्म' 'उरु त्वं' 'चित्रं देवानामि'त्याज्यस्य जुहोति। 'मित्रो जनान्' 'प्र स मित्रे'ति स्थालीपाकस्य। अभ्यावर्तस्वेति कुमारमन्वावर्तयति। द्रष्ट्रे नम इत्युपस्थानमादित्यस्याहश्चक्षस्येति च। सर्पिष्मदन्नं ब्राह्मणान् भोजयेत्। एवं चन्द्र-दर्शनम्। मधूधाता मातरिश्वा भूयो जात इति च द्वाभ्यामाज्येन चतुर्गृहीतेनाऽऽज्यभागान्ते जुहोति। आप्यायस्वेति सं ते पयांसीति च द्वाभ्यां स्थालीपाकस्य। नवो नव इत्युपस्थानं चन्द्रमसः। प्रकाशो दक्षिणा। इति।

आश्वलायनगृह्ये तु—नाम चास्मै दद्युः। घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा। द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः। युग्मानित्येव पुंसाम्। अयुजानि स्त्रीणाम्। अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामौपनयनात्। प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति अङ्गादङ्गादिति। आवृतैव कुमार्यै। इति।

आपस्तम्बगृह्ये च—दशम्यामुत्थितायां स्नातायां पुत्रस्य नाम दधाति पिता मातेति। द्व्यक्षरं चतुरक्षरं वा नाम पूर्वमाख्यातोत्तरं दीर्घाभिनिष्ठानान्तं घोषवदाद्यन्तरन्तस्थम्। अपि वा यस्मिन् स्वित्युपसर्गः स्यात् तद्धि प्रतिष्ठितमिति हि ब्राह्मणम्। अयुजाक्षरं कुमार्याः। प्रवासादेत्य पुत्रस्योत्तराभ्यामभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणे कर्णे उत्तराद् मन्त्रान् जपेत्। कुमारीमुत्तरेण यजुषाऽभिमन्त्रयते। इति।

मानवगृह्ये च—दशम्यां रात्र्यां पुत्रस्य नाम दध्यात्। घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वा। त्र्यक्षरं दान्तं कुमारीणाम्। तेनाभिवादयितुं त्यक्त्वा पितुर्नामधेयं यत्सत्यं नामधेयं देवताश्रयं नक्षत्राश्रयं देवतायाश्च प्रत्यक्षं प्रतिषिद्धम्। स्नात्वा सहपुत्रोऽभ्युपैति। अथैनमभिमृशति। अंशुना तेजसा सूर्यस्य वर्चसा विश्वेषां त्वा देवानां क्रतुनाऽभिमृशामीति प्रक्षालितपाणिर्नवनीतेनाभ्यज्याग्नौ प्रताप्य ब्राह्मणाय प्रोच्याभिमृशेदिति श्रुतिः। वरं कर्त्रे ददाति। अङ्गादङ्गादिति प्रवासादेत्य पुत्रस्य मूर्धनि जपेत्। न मधुमांसे प्राश्नीयाद्‌ा पञ्चबन्धात्। संवत्सरे वाजाविभ्यामग्निधन्वन्तरी यजेत्। अथाऽऽदित्यदर्शनम्। चतुर्थे मासि पयसि स्थालीपाकं श्रपयित्वा तस्य जुहोति। आदित्यः शुक्र उदगात् पुरस्तात् हंसः शुचिषत् यदेदेनमिति सूर्यस्य जुहोति। उदु त्यं जातवेदसमित्येतयोपस्थायाऽऽदित्यस्याभिमुखं दर्शयेत्। नमस्ते अस्तु भगवन्निति। अथ ब्राह्मणतर्पणम्। ऋषभो दक्षिणा। इति।

वाराहगृह्ये च—एवमेव दशम्यां कृत्वा पिता माता च पुत्रस्य नाम दध्याताम्। घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं कृतं न तद्धितं द्व्यक्षरं चतुरक्षरं वा त्यक्तपितृनामधेयं नक्षत्रदेवतेष्टनामानो वा। द्विनामा तु ब्राह्मणो नामैवं कन्याया अकारव्यवधानमाकारान्तमयुग्माक्षरं नदीनक्षत्रचन्द्रसूर्यपूषादेवदत्तरक्षितावर्जम्। नवनीतेन पाणी प्रलिप्य सोमस्य त्वा द्युम्नेनेत्येनमभिमृशेत्। सर्वेषु कुमारकर्मसु आग्नेयः स्थालीपाकः प्राजापत्यो वा सर्वत्रामादेषेऽग्निः पुंसामर्यमा स्त्रीणाम्। संवत्सरं मातापितरौ न मांसमश्नीयाताम्। इति।

बौधायनीयगृह्ये च—दशम्यां द्वादश्यां वा नामकरणम्। प्राजापत्येन सूक्तेन हुत्वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयन् नामास्मै दधाति। द्व्यक्षरं चतुरक्षरं षडक्षरमष्टाक्षरं वा। घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम्। अपि वा यस्मिन् स्विष्टकृत्सर्गः स्यात् तद्धि प्रतिष्ठितमिति विज्ञायते। ऋष्यणूकं देवताणूकं वा। यथैवैषां पूर्वपुरुषाणां नामानि स्युः। अयुगक्षरं कुमार्याः। अमुष्मै स्वस्तीति। चतुर्थे मास्युपनिष्क्रमणम्। ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा। अथ देवयजनोल्लेखनप्रभृत्याभिमुखात् कृत्वा स्वस्त्यात्रेयं जुहोति। स्वस्ति नो मिमीतेति, स्वस्ति न इन्द्र इत्यष्टाभिरनुच्छन्दसम्। अतःप्रभृति सिद्धमाधेनुवरप्रदानात्। अथोपनिष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याऽऽशिषो वाचयित्वा प्रदक्षिणीकृत्य स्वान् गृहानानयति। इति।

पारस्करगृह्ये च—दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति। द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठान्तं कृतं कुर्यान्न तद्धितम्। अयुजाक्षरमाकारान्तं स्त्रियै तद्धितम्। शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य। चतुर्थे मासि निष्क्रमणिका। सूर्यमुदीक्षयति तच्चक्षुरिति। प्रोष्येत्य गृहानुपतिष्ठते पूर्ववत्। पुत्रं दृष्ट्वा जपति अङ्गादङ्गादिति। अथास्य मूर्धानमवजिघ्रति प्रजापतेष्ट्वेति। गवां त्वा हिङ्कारेणेति च त्रिर्दक्षिणेऽस्य कर्णे जपति। अस्मै शतमिति। इन्द्र श्रेष्ठानीति सव्ये। स्त्रियै तु मूर्धानमेवावजिघ्रति तूष्णीम्। इति॥

## द्वितीयप्रपाठकस्य नवमी कण्डिका

—:o:—

**अथातस्तृतीये वर्षे चूडाकरणम् ॥ १ ॥**

अथेति पूर्वप्रकृतार्थः[1]। अथ पूर्वप्रकृतस्य जन्मनस्तृतीये वर्षे वर्तमाने यद्वोक्तव नार्दीनां समुच्चयः स्यात्, [2]तदैव चूडाकरणं कर्तव्यमिति [3]वाक्यशेषः। '[4]कपुच्छिका-कपुच्छलाख्याः केशाश्चूडाः, तासां वक्ष्यमाणेन विधिना संस्करणं चूडाकरणम्' इति कर्मणो नामधेयम्। अतःशब्दो हेत्वर्थे। यस्मात् श्रुत्यन्तरे अन्योऽपि पक्षः श्रूयते 'प्रथमेऽब्दे' इति, अतः सोऽपि द्रष्टव्यः।

तथाच मनुः—

> चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।
> प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्(A) ॥ इति।

**पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति ॥ २ ॥**

उक्तार्थम् [5]एतत्(B) ॥ २ ॥

**तत्रैतान्युपकॢप्तानि भवन्ति ॥ ३ ॥**

तत्र तस्मिन्नुपलिप्ते [6]एतानि वक्ष्यमाणानि उपकॢप्तान्यासादितानि भवन्ति।

कानि [7]पुनस्तानीत्यत आह—

**एकविंशतिर्दर्भपिञ्जुल्य उष्णोदककंस औदुम्बरः क्षुर आदर्शो वा क्षुरपाणिर्नापित इति दक्षिणतः ॥ ४ ॥**

---

A. मनुसंहिता २।३५। अस्य व्याख्यायां कुल्लूकभट्टः—'चूडाकर्म प्रथमे वर्षे तृतीये वा द्विजातीनां धर्मतो धर्मार्थं कार्यम्। श्रुतिचोदनात् "यत्र बाणाः संपतन्ति कुमारा विशिखा इव" इति मन्त्रलिङ्गात्; कुलधर्मानुसारेणायं व्यवस्थितविकल्प' इत्याह।

B. द्रष्टव्यं सूत्रम् २।१।११ (पृ० २८६)।

---

1. नास्ति ग। 2. 'तदैव' क। 3. 'वाक्य-' नास्ति ख। 4. 'चूडा कपुच्छिका-' ख। 5. '-मोदनम्' ख-घ। 6. 'एतत्' नास्ति ग। 7. 'एतानि' नास्ति क, 'उपरि' ग। 8. 'पुनः' नास्ति क-ग-घ।

[1]उकलक्षणा पिञ्जुली तासां समानां समानाम्[1]* उदगग्राणां [2]तत्राऽऽसादनं स्यात्, भेदेनैव विनियोगस्य दर्शनात्। एवमेकविंशतिस्ता भवन्ति। उष्णमुदकं यस्मिन् कंसे स उष्णोदककंसः पात्रविशेषः। उदुम्बरस्यैव औदुम्बरः। अविशेषेऽपि ताम्रमयो न दारुमयः। [3]कुतः ? [4]प्राञ्चं प्रोहत्य प्रच्छिन्दन् इत्युपरिष्टाच्छेदनस्याऽऽशङ्क्यमानत्वात्। न हि दारवेण च्छेदनं केशानां कर्त्तुं शक्यते। तदभावे [5]आदर्शो वा। [6]आदर्शो दर्पणः, मुखं यत्रावलोक्यते[6]*। क्षुरः पाणौ यस्यासौ क्षुरपाणिर्नापितः। [7]इत्येतानि पिञ्जुल्यादीनि दक्षिणत उपक्लृप्तानि भवन्ति। [8]कस्य दक्षिणतः[8]* ? अधिकाराद्ग्नेः। एतेषाञ्च[9] प्रत्यक्संस्थानामासादनं [10]स्यात्(A), प्रादक्षिण्योपपत्तेः।

## आनडुहो गोमयः कृसरः स्थालीपाको वृथापक इत्युत्तरतः ॥ ५ ॥

[11]अनड्वान् वृषभः[11]*, तस्यायमानडुहः, गोमयः [12]गोः पुरीषम्। [13]कृसरोऽधरतादेवोक्तः[13]*। वृथापक [14]इति सर्वसं[15]स्काररहित इत्यर्थः। [16]इत्येतानि आनडुहादीनि उत्तरत उपक्लृप्तानि भवन्ति[16]*।

## व्रीहियवैस्तिलमाषैरिति पृथक् पात्राणि पूरयित्वा पुरस्तादुपनिदध्युः ॥ ६ ॥

व्रीह्यादयः प्रसिद्धाः, पृथगित्येकपात्रशङ्का[17]निरासार्थम्[17]*। इतिकरणादासामोषधीनामलाभे अन्यासामपि पूरयित्वा पुरस्ताद् दक्षिणसंस्थानि उपनिदध्युः। बहुवचनादनियतकर्त्तृकमासादनम्।

## कृसरो नापिताय सर्वबीजानि चेति ॥ ७ ॥

[18]आसादनप्रसङ्गात् प्रतिपत्तिरुच्यते। न त्वेष एव कर्मक्रमः। [19]कुतः ? कृते

---

A. प्राक्संस्थानाममीषामासादनं स्यादिति च० त०।

---

1. 'दर्भपिञ्जुलीनां त्रिःसमानां' क। 2. 'तत्राऽऽसादनं' नास्ति च, 'भेदेनाऽऽसादनं' ख। 3. 'कुतः' नास्ति च। 4. 'प्राञ्चं' नास्ति ख-ग-च। 5. 'दर्पणो वा' च। 6. नास्ति च। 7. 'इति' नास्ति च। 8. नास्ति च। 9. 'च' नास्ति ख। 10. 'च स्यात्' ख। 11. 'अनडुद्वृषभः' ख, 'अनड्वान् वृषः' च। 12. 'गोः' नास्ति ख। 13. नास्ति च। 14. 'इति' नास्ति च। 15. '-स्काररहित' क, '-हीन', ख। 16. 'इत्येतदयं प्राक् संस्थमुत्तरत उपक्लृप्तं भवति' ख। 17. '-निरासार्थम्' ख-च। 18. 'आसादनं प्रसङ्गात्' ख। 19. 'कुतः' नास्ति च।

कर्मणि मूल्यदानप्रसिद्धेः। तस्मान्निवृत्ते कर्मणि कृसरो व्रीह्यादिपात्राणि च नापिताय देयानि(A) ॥ ७ ॥

**अथ माता शुचिना वसनेन कुमारमाच्छाद्य पश्चादग्नेरुदग्ग्रेषु दर्भेषु प्राङ्युपविशति ॥ ८ ॥**

अथे'त्याज्यसंस्कारानन्तरम् "इत्यर्थः। शेषमुक्तार्थम्'*(B)।

**अथ यस्तत् करिष्यन् भवति पश्चात् प्राङवतिष्ठते ॥ ९ ॥**

अथशब्दः किञ्चित् पूर्वं प्रकृतं स्मारयति। कथं नाम? "यत् तदुक्तं महाव्याहृतिभिर्होमो यथा पाणिग्रहणे तथा चूडाकर्मणीति(C)। इदं तच्चूडाकर्म, अत्र चूडाकर्मणि पुरस्ताच्चोपरिष्टाच्च' चतस्रो व्याहृतयो भवन्ति। यस्तत् करिष्यन् भवति स चतस्र आहुतीर्हुत्वा अथानन्तरं गृहीतकुमारायाः पश्चात् प्राङवतिष्ठते।

**अथ जपत्यायमगात् सविता क्षुरेणेति सवितारं मनसा ध्यायन् नापितं प्रेक्षमाणः ॥ १० ॥**

अथावस्थानानन्तरमेव (D)आयमगादिति जपति। किं कुर्वन्? सवितारं मनसा ध्यायन् नापितं चावलोकयन्।

**उष्णेन वाय उदकेनैधीति वायुं मनसा ध्यायन्नुष्णोदककंसं प्रेक्षमाणः ॥ ११ ॥**

---

A. सूत्रं इतिपदादन्यदपि नापिताय पारितोषिकं दद्यादिति बोध्यम्।

B. निष्क्रमणे पुंसवने चेति। ( द्र० पृ० ४१२ तथा पृ० ३७२ )।

C. 'आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होमः' 'यथा पाणिग्रहणे तथा चूडाकर्मण्युपनयने गोदाने च' इति १।९।२३-२४ सूत्रे द्रष्टव्ये। ( पृ० २७२-७४ )।

D. मन्त्रस्तु—

आयमगात् सविता क्षुरेण।

मन्त्रब्राह्मणम् १।६।१। विनियोगस्तु खादिरे २।३।२०। जैमिनीये ९।२।

अस्य व्याख्या—हे कुमार, सविता सवितृस्वरूपः, अयं नापितः क्षुरेण केशवपनाङ्गेण सह, क्षुरं गृहीत्वेत्यर्थः। आ अगात् आगत इति।

---

1. 'इति' नास्ति च। 2. नास्ति च। 3. 'यत् तदुक्तम्' नास्ति क-ग। 4. 'च' नास्ति ख।

(A)उष्णेन वायविति जपति। ¹कथं? ²वायुं ³मनसा ध्यायन्। उष्णोदकपात्रं चावलोकयन्।

**दक्षिणेन पाणिनाऽप आदाय दक्षिणां कपुष्णिकाम् उन्द-त्याप(B) उन्दन्तु जीवसे इति ॥ १२ ॥**

³कस्मात्? प्रकृतत्वात्* कंसपात्रात्, 'दक्षिणेन पाणिना'* अप आदाय कुमारस्य दक्षिणां कपुष्णिकाम् उन्दति क्लेदयति। कं शिरः शीतातपादिरक्षणेन पुष्णातीति कपुष्णिका, शिरःपार्श्वकेशजूटिका ⁵उच्यते। उक्तं च—

कपुष्णिकाऽभितः केशान् मूर्ध्नि पश्चात् कपुच्छलम्(C)। इति।

**विष्णोर्दंष्ट्रोऽसीत्यौदुम्बरं क्षुरं प्रेक्षत आदर्शं वा ॥ १३ ॥**

⁶निगद(D)व्याख्यातमेतत्।

---

A. मन्त्रस्तु—

'उष्णेन वाय उदकेनैधि।'

मन्त्रब्राह्मणम् १।६।२। विनियोगस्तु खादिरे २।३।२१। 'उदकेनैहि' इति पाठभेदेन जैमिनीयगृह्ये ९।४। आपस्तम्बगृह्ये १।१७।६। पारस्करगृह्ये २।१।६।

अस्य व्याख्या—हे वायो, वायुस्वरूप नापित, उष्णेन उदकेन गृहीतेन कुमारशिरः क्लावयितुम्, एधि आगच्छ। इति

B. मन्त्रस्तु—

'आप उन्दन्तु जीवसे।'

इति मन्त्रब्राह्मणम् १।६।३। विनियोगस्तु खादिरगृह्ये २।३।२२। जैमिनीयगृह्ये ९।६। आपस्तम्बगृह्ये च १।१७।७।

अस्य व्याख्या—आपः जलदेवताः या वायुना आनीताः ( नापितेनानीतानि जलानीत्यर्थः ) कुमारस्यास्य जीवसे जीवनाय उन्दन्तु क्लेदयन्तु इदं वपनस्थानम्। इति।

C. कर्मप्रदीपः ३।६।११।

D. 'ॐ विष्णोर्दंष्ट्रोऽसि' इति।

मन्त्रब्राह्मणीयमिमं १।६।४। मन्त्रं पठन् ताम्रक्षुरं दर्पणं वा प्रेक्षते इत्यर्थः। विनियोग-प्रमाणमस्य खादिरगृह्येऽपि २।३।२३।

अस्य व्याख्या—हे क्षुर, त्वं विष्णोर्देवस्य दंष्ट्रोऽसि बृहद्दन्तो भवसि। इति।

---

1. 'कथं' नास्ति च। 2. 'मनसा' नास्ति च। 3. 'तस्मात् प्रकृतात्' ख, 'प्रकृतात्' च। 4. नास्ति ख। 5. 'उच्यते' नास्ति च। 6. 'निगदव्याख्यानमेतत्' ख, 'स्पष्टं तत्' च।

**ओषधे त्रायस्वैनमिति सप्त दर्भपिञ्जुलीर्दक्षिणायां कपुष्णिकायामभिशिरोग्रा निदधाति ॥ १४ ॥**

पूर्वासादितानामेक¹विंशतेः पिञ्जुलीनां मध्यात् सप्त दर्भपिञ्जुलीर्गृहीत्वा दक्षिणायां कपुष्णिकायाम् (A)'ओषधे त्रायस्वैनमि'त्यनेन मन्त्रेण निदधाति। कथम्? अभिशिराग्राः शिरसोऽभिमुखाग्रा इत्यर्थः।

**ता वामेनाभिगृह्य दक्षिणेन पाणिनौदुम्बरं क्षुरं गृहीत्वादर्शं वाऽभिनिदधाति स्वधिते मैनं हिंसीरिति ॥ १५ ॥**

ताः कपुष्णिकाः पिञ्जुलीश्च वामेन पाणिनाऽभिगृह्य गृहीत्वा दक्षिणेन पाणिनौदुम्बरं क्षुरं गृहीत्वा आदर्शं वा गृहीत्वा (B)'स्वधिते मैनमि'त्यनेन मन्त्रेण अभिनिदधाति, संलग्नं धारयतीत्यर्थः²।

**येन पूषा बृहस्पतेरिति त्रिः प्राञ्चं प्रोहत्यप्रच्छिन्दन् सकृद् यजुषा द्विस्तूष्णीम् ॥ १६ ॥**

निधाय च त्रिः त्रिकृत्वः प्राञ्चं ³प्राङ्मुखं प्रोहति³* प्रेरयति सारयती⁴त्यर्थः।

---

A. मन्त्रस्तु—

'ॐ ओषधे त्रायस्वैनम्।' इति।

मन्त्रब्राह्मणम् १।६।९। विनियोगप्रमाणमस्य खादिरगृह्यसूत्रे २।३।२४। आपस्तम्बगृह्यसूत्रेऽपि १।१७।८।

अस्य व्याख्या—हे ओषधे दर्भपिञ्जुलीरूप, एनं बालकं त्रायस्व रक्ष क्षुरघातजभयात्। इति।

B. मन्त्रस्तु—

'ॐ स्वधिते मैनं हिंसीः।' इति।

मन्त्रब्राह्मणम् १।६।६। विनियोगप्रमाणन्त्वस्य खादिरगृह्यसूत्रे २।३।२९। हिरण्यकेशिगृह्यसूत्रे १।९।४। मानवगृह्यसूत्रे च १।२१।९।

अस्य व्याख्या—हे स्वधिते क्षुर, एनं कुमारं मा हिंसीः न हिंस्याः, अस्य रक्तबिन्दुपातो यथा न स्यादिति भावः।

---

1. '-विंशतीनां मध्यात्' ख। 2. 'यथं:' नास्ति ख। 3. 'प्राङ्मुखं येन पूषेत्यनेन यजुषा सकृत् प्रोहति' ख। 4. '-त्यर्थः, द्विस्तूष्णीम्' घ।

'कथम्? अप्रच्छिन्दन् छेदनमकुर्वन्। "तूष्णीमेव प्रोहति"*। "न। कथं तर्हि? (A)'येन पूषे'त्यनेन 'मन्त्रेण सकृत् प्रोहति, द्विस्तूष्णीम्। इति"*।

## अथाऽऽयसेन प्रच्छिद्याऽऽनडुहे गोमये निदधाति ॥ १७ ॥

"अथेति पूर्वप्रकृतार्थः। यः स पूर्वप्रकृतः"* क्षुरपाणिर्नापितः तदीयेनाऽऽयसेन लोहमयेन क्षुरेण प्रच्छिद्य प्रकर्षेण पिञ्जुलीभिः सह कपुष्णिकां छित्वा उत्तरत आसादिते गोमये निदधाति।

## एतयैवाऽऽवृता कपुच्छलम्, एतयैवोत्तरां कपुष्णिकाम्(B)॥१८॥

"एतयैवाऽऽवृता अनयैव"* पूर्वोक्तया क्रियया कपुच्छलम् उत्तरां कपुष्णिकां च संस्कुर्यादिति 'वाक्यशेषः। के शिरसि पुच्छवत् पश्चाद्भागे यः केशसमूहः स कपुच्छलसंज्ञः।

किमेतया समस्तयाऽप्यावृता 'अथ जपत्यायमगादि'त्यादिकया संस्कुर्यात्? न। कथं तर्हि? उच्यते—

## उन्दनप्रभृति [8]त्वेवाभिनिर्वर्तयेत् ॥ १९ ॥

'दक्षिणेन पाणिना अप आदाय' इत्येतत्प्रभृत्येव निर्वर्तये[9]दावर्तयेत्। तु-शब्दो विशेषणार्थः। कथं नाम? कपुच्छले संस्क्रियमाणे कुमारमुदङ्मुखं धारयेत्, यथा प्राङ्मुखं प्रोहणादि कर्तुं शक्यते।

---

A. मन्त्रस्तु—

ॐ येन पूषा बृहस्पतेर्वायोरिन्द्रस्य चावपत्।
तेन ते वपामि ब्रह्मणा जीवातवे
जीवनाय दीर्घायुष्ट्वाय वर्चसे।

मन्त्रब्राह्मणम् १।६।७। विनियोगप्रमाणमस्य खादिरगृह्यसूत्रे २।३।२१। जैमिनीयगृह्यसूत्रेऽपि, १खं० ७पं०। गुणविष्णुस्तु दीर्घायुष्ट्वायेत्यनन्तरं 'वकाये'त्यधिकं पठति। इति।

अस्य व्याख्या—येन यद्विधेन ब्रह्मणा ब्रह्मभूतेन क्षुरेण पूषा देवः, बृहस्पतेः वायोरिन्द्रस्य च देवस्य चूडाकरणकाले अवपत् वपनं कृतवान् केशानामिति; तेनोक्तप्रकारेण क्षुरेण ते तव जीवातवे जीवनाय, दीर्घायुष्ट्वाय नीरोगबह्वायुर्लाभाय, वर्चसे तेजोविवृद्ध्यर्थञ्च वपामि मुण्डीकरोमि शिरस्थान् केशानिति।

B. सूत्रमिदं कपुच्छलमित्यत्र विभज्य पठतः सामश्रमिचन्द्रकान्तौ।

---

1. 'कथं' नास्ति च। 2. नास्ति च। 3. नास्ति च। 4. 'वञुषा' खं। 5. 'अथेति यः पूर्वप्रकृतः' च। 6. 'एतयैवानयैवाऽऽवृता' च। 7. नास्ति च। 8. 'चैवा-' च। 9. 'चावर्तयेत्' नास्ति च।

उभाभ्यां पाणिभ्यां मूर्द्धानं [1]परिगृह्य जपेत् त्र्यायुषं जमदग्नेरिति ॥ २० ॥

[2]ऋज्वर्थमेतत्(A) ।

एतयैवाऽऽवृता स्त्रियास्तूष्णीम्(B) ॥ २१ ॥

एतयैवाऽऽवृता क्रियया स्त्रिया अधस्तनोक्ताः सर्वे संस्कारा भवन्ति । नाऽऽमन्तर्याच्चूडाकरणमेव । कुतः—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।(C)

इति मनु[3]स्मरणात् । [4]किमेवम्भूतयैव ? न । कथं तर्हि[4]* ? तूष्णीं मन्त्रवर्जमित्यर्थः ।

[5]किं सर्वत्र तूष्णीम् ? न । कथं तर्हि[5]*—

मन्त्रेण तु होमः ॥ २२ ॥

यो यत्र होम उक्तः स मन्त्रेण भवति । [6]तुशब्दः च-शब्दस्थाने समुच्चयार्थो द्रष्टव्यः[6]* । वृद्धिश्राद्धं च मन्त्रवदेव भवतीत्यर्थः(D) ।

---

A. इत्थं बालकस्य कपुष्णिकादयं कपुच्छलादि छेदयित्वा उभाभ्यां पाणिभ्यां मूर्द्धानं परिगृह्य—

"ॐ त्र्यायुषं जमदग्नेः । कश्यपस्य त्र्यायुषम् ।
अगस्त्यस्य त्र्यायुषम् । यद् देवानां त्र्यायुषम् ।
तत्ते अस्तु त्र्यायुषम् ॥

इति मन्त्रब्राह्मणीय- १।६।८ मन्त्रं जपेत् । मन्त्रस्यास्य विनियोगप्रमाणन्तु खादिरगृह्येऽपि, २।३।२६ । त्रियायुषमिति पाठभेदेन जैमिनीयगृह्यसूत्रेऽपि, ( प्र० ११ ) ।

अस्य व्याख्या—जमदग्नेर्महर्षेः कश्यपस्य, अगस्त्यस्य, देवानाम् इन्द्रादीनाम्, यत् त्र्यायुषम्, त्रीणि आयूंषि बाल्ययुवस्थविरत्वानि तत् त्र्यायुषम्, हे माणक ते अस्तु, तव भवतु । इति ।

B. 'तूष्णीम्' इति पृथक् सूत्रं मन्येते सामश्रमितकोलब्रूकौ ।

C. मनुसंहिता २।६६ ।

D. अत्र रघुनन्दनः—"एतयैवाऽऽवृता स्त्रियास्तूष्णीम्, मन्त्रेण तु होमः—आवृता प्रक्रियया तूष्णीमधस्तनोक्ताः सर्वे संस्कारा मन्त्रवर्जं भवन्ति, 'अमन्त्रिके'ति मनुवचनात्,

---

1. 'परिगृह्य' क-ख-ग । 2. 'ऋज्वेतत्' च । 3. '-वचनात्' ख । 4. किमेवावृतयैव ? क, नास्ति च । 5. नास्ति ख । 6. 'तुशब्दस्यार्थे' च ।

[1]उदङ्ग्नेरुत्सृप्य कुशलीकारयन्ति यथागोत्रकुलकल्पम् ॥२३॥

उदङ् उत्तरतः अग्नेः उत्सृप्य गत्वा कुमारं कुशलीकारयन्ति । नापितहस्ता

---

'तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः'

इति याज्ञवल्क्यवचनाच्च । होमस्तु मन्त्रेण ; तुशब्दश्चार्थे तेन वृद्धिश्राद्धञ्च मन्त्रवदेव भवतीत्यर्थः" । इत्याह संस्कारतत्त्वे । विषयमिममधिकृत्याह मलमासतत्त्वटीकायां कृष्णनाथ-न्यायपञ्चाननमहोदयः—"ननु कन्यान्नप्राशनाद्यर्थं कथं सपिण्डतापकर्षो नाऽऽचर्यते ? सोऽप्यावश्यक इति चेन्न, तत्र वृद्धिश्राद्धाभावेन प्रधानस्यामन्त्रकतया च लौकिककर्मतुल्यत्वेन देहाशुद्धि-प्रतिबन्धस्याभावात् । न चात्रापि वृद्धिश्राद्धमावश्यकमिति वाच्यम् ? गोभिलेन पुत्रजन्मक्रमे जातकर्मादिसंस्काराभिधानात् , कन्यासंस्कारेषु गृह्यानुक्ततया श्राद्धाप्राप्तेः ।

कुतस्तर्हि कन्यायाः संस्कारप्राप्तिरिति चेन् , 'तूष्णीमेताः क्रियाः स्त्रीणामि'ति याज्ञवल्क्य-वचनात् 'अमन्त्रिका तु कार्येयमि'ति मनुवचनाच्च । 'स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म-स्वि'त्यत्र सुतपदोपादानात् कन्यासंस्कारे श्राद्धनिवृत्तेश्च । न च सुतपदं कन्या-पुत्रोभयपरमिति मन्वर्कसुव्याख्यानविरोध इति वाच्यम् ? तद्व्याख्यानस्य 'कन्या-पुत्रविवाहेष्वि'ति विष्णु-पुराणवचनैकवाक्यतामूलकत्वेन विवाहमात्रविषयत्वात् । संस्कारान्तरे तथाविधैकवाक्यता-ऽभावेन उभयपरत्वे मानाभावात् , अत एव विष्णुपुराणे—

नामकर्मणि बालानां चूडाकर्मादिके तथा ।

इत्यत्र चूडाकर्मादिक इत्यनेन विवाहस्यापि प्राप्तावपि, उत्तरत्र कन्या-पुत्रविवाहेष्वित्युक्तम् । चूडाकर्मादिक इत्यनेन पुंमात्रविषयकेण कन्याविवाहस्यालाभात्, चूडाकर्मादिक इत्यस्योभय-परत्वे तु कन्या-पुत्रविवाहेष्विति पुनरुक्तं स्यात् । एवमेव विवेकटीकायां गोविन्दानन्दः । यत्तु 'एतयैवाऽऽवृता क्रियास्तूष्णीं, मन्त्रेण तु होम' इति गोभिलसूत्रम्, यदपि तुल्यत्वाद् वृद्धिश्राद्धमपि स्त्रीसंस्कारे समन्त्रकमिति तत्सूत्रे शूलपाणिव्याख्यानं संस्कारतत्त्वव्याख्यानञ्च तद् गौडानामाचारापरिगृहीतम् , अतस्तथाविधकन्यासंस्कारकुलाचारविरहात् तदर्थं सपिण्डताप-कर्षोऽपि न युक्त" इति । गृह्यकर्मप्रकाशिकायां सुब्रह्मण्याग्निहोत्रिणस्तु—"स्त्रीणामप्यमन्त्रकं सावित्रजपप्रभृतिगोमयनिधानान्तं कर्म, होमो नान्दीमुखश्राद्धञ्च मन्त्रेणे"ति । सतीर्थास्तु—यथा शूद्राणाममन्त्रका गर्भाधानादिविवाहान्तसंस्कारा भवन्ति, होमवृद्धिश्राद्धे च समन्त्रके भवतस्तथा वचनबलात् स्त्रीणामपि सम्भवत्येव, नहि देशविशेषाचारः प्रमाणत्वेन शक्नोति वचन-बलमन्यथयितुम्, इत्याचार्यगोभिलमतानुयायिनां कन्यासंस्काराणामवश्यकर्तव्यताऽस्त्येवेति प्रमाणयन्ति । तदत्र स्त्रीणां विवाहादयः संस्काराः कर्तव्या न वा, तेषु होमो वृद्धिश्राद्धञ्च कर्तव्ये न वेति भगवन्तोऽनूचाना निर्दिशन्तु इति ।

---

1. 'उदगग्ने-' घ ।

न्मुण्डापयन्तीत्यर्थः। 'कथम् यथागोत्रकुलकल्पम्(A)। यद्गोत्राणां य आचारस्तथेति। यथा—

वाशिष्ठाः पञ्चचूलाः स्युस्त्रिचूलाः कुण्डपायिनः। इति।

कुलकल्पो यथा—

भद्रादित्यादीनाम् "आयतनसन्निधाविति(B)।

कौथुमराणायनीयादीनां तु प्राक् "समावर्त्तनाद् विशिखमेव वपनम्। कुतः? केशश्मश्रुरोमनखानि वापयीत शिखावर्जमिति (C) तत्र दर्शनात्।

तथाचोक्तम्—

सशिखं वपनं कार्यमा स्नानाद् ब्रह्मचारिणाम्।

आशरीरविमोक्षाय ब्रह्मचर्यं न चेद् भवेत्॥ (D) इति।

## आनडुहे गोमये केशान् कृत्वाऽरण्यं हृत्वा निखनन्ति ॥२४॥

समस्तानपि केशान् आनडुहे गोमये कृत्वा अरण्यं नीत्वा निखनन्ति। 'बहुवचन-"मनियतकर्त्तृकत्वद्योतनार्थम्"*।

## स्तम्बे हैके निदधति ॥२५॥

"ह इति निपातः। एके"* 'आचार्या व्रीहियवादिस्तम्बे'* निदधति। तान् केशान् प्रक्षिपन्तीत्यर्थः॥

## यथार्थं(E) गौर्दक्षिणा ॥२६॥

---

A. अत्र तर्कालङ्कारः—कल्पो विधिरित्यनर्थान्तरम्। यथागोत्रविधिर्यथा च कुलविधिस्तदनतिक्रमेणेत्यर्थः। गोत्रकल्पस्तावद् वाशिष्ठाः पञ्चचूलाः...। कुलकल्पोऽपि यथा—भद्रादित्यानामायतन...। इत्याह स्वभाष्ये।

B. वर्तते च भाष्यकारोक्तविशेषविधिव्यतिरिक्तविषयकमपि गृह्यासंग्रहोक्तं प्रमाणम्—

दक्षिणाकपर्दाः शिष्टा आत्रेयास्त्रिकपर्दिनः।

आङ्गिरसः पञ्चचूडा मुण्डा भृगोः शिखिनोऽन्ये॥ इति। गृ० स० २।४०।

C. समावर्त्तनप्रकरणे सूत्रमिदम् "ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा केश...वर्जम् ३।४।२२। इति।

D. छन्दोगपरिशिष्टम् ३।६।१४।

E. यथार्थमिति सूत्रमेकं समाप्य गौर्दक्षिणेति सूत्रान्तरं कल्पयतः सामश्रमितर्कालङ्कारौ।

---

1. 'त्रि' क-ग। 2. 'भवन-' क-ग-घ। 3. 'समासावर्त्तनाद्' क। 4. 'बहुवचनादनियतः कर्त्ता' घ। 5. '-मनियमकर्त्तृक-' क, '-मनियतकर्त्तृकद्योतनार्थम्' ग। 6. 'ह नूनं एके' घ। 7. 'आचार्यास्तु तर्वादिस्तम्बे' क।

यथार्थमिति यस्य येन अर्थः प्रयोजनम् स तत् कुर्यादिति । कथं 'नाम ? "त्र्यायुष-मित्यादिना मूर्द्धपरिग्रहे"*कृते उत्तरतोऽग्नेः कुमारं कुशलीकारयन्ति । असावपि(A) शेषं समापयेदिति(B) । अस्य च कर्मणोऽन्ते गौर्दक्षिणा भवति ।

इति "भट्टनारायणकृतौ"* 'गोभिलीयगृह्यसूत्रभाष्ये'*
द्वितीयप्रपाठकस्य नवमी कण्डिका ॥

---

A. होमकर्ताऽपीत्यर्थः ।

B. चूडाकरणविषये बहुर्क्त रघुनन्दनेन तस्मात् किञ्चिदिहोपस्थाप्यते—

श्रुतिलिखितौ— तृतीये वर्षे चूडाकरणं पञ्चमे वेति ।

ज्योतिषे— अयुग्माब्दे तथा मासि चूडा सौम्यायनीतरे ।
अर्केन्दुकाव्यगुरौ च जन्ममासेन्दुभाहते ॥
रिक्ताद्यर्काष्टमीषष्ठीप्रतिपद्वर्जिते सिते ।

वृद्धः— षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥
श्रवणादित्रयस्वातीचित्रापुष्याश्विचन्द्रभे ।
आदित्यरेवतीहस्तज्येष्ठामूले च चौलकम् ॥
मेषसिंहतुलाकर्किवृश्चिकेतरलग्नके ।

अत्रापि तिथ्यन्तादिविरुद्धं विवर्जयेत् ।

सूर्ये दक्षिणमार्गगामिनि हरौ सुप्ते निरंशे रवौ
क्षीणे शीतरुचौ महीज-यमयोर्वारे निशासन्ध्ययोः ।
शुक्रेऽस्तगते मिथुनसमयेऽलङ्कारयुक्ते शिशौ
क्षौराद्रोगभयं वदन्ति यवना मृत्युं तथाऽन्ये जगुः ॥

भोजराजः— उत्तरवर्त्मनि सवितरि चूडाकरणं जगुः शुभं यवनाः ।
चैत्रे मासि दिवाकरवारे शिखिसन्निधाने च ॥

रविवारेतरत्र गर्गः—

जन्मर्क्षे जन्ममासे च युग्मे मासि च वत्सरे ।
न कुर्यात् प्रथमं क्षौरं विशेषाच्चैत्रपौषयोः ॥

ज्योतिषे— कृत्तिकास्थं रविं त्यक्त्वा ज्यैष्ठे ज्येष्ठस्य कारयेत् ।
उत्सवानि च कार्याणि दिग्दिनानि च वर्जयेत् ॥

---

1. 'नाम' नास्ति च । 2. 'त्र्यायुषमिति शिरसः परिग्रहे' ख । 3. चिह्नितांशो नास्ति ख-च ।
4. चिह्नितांशो नास्ति ख-ग ।

कुशलीकारयन्ति नापितहस्तेन मुण्डयन्ति यथा गोत्रकुलाचारस्तथा।

राजमार्तण्डः— प्राचीमुखः सौम्यमुखोऽपि भूत्वा कुर्यान्नरः क्षौरमनुत्कटस्थः।

वृद्धगर्गः— केशवमानर्तपुरं पाटलीपुत्रं पुरीमहिच्छत्राम्।
दितिमदितिञ्च स्मरतां क्षौरविधौ भवति कल्याणम्॥ इति।

निर्णयसिन्धौ तु—अथ चौलम्। प्रयोगपारिजाते वहृचकारिकायां— (?)

जाताधिकाराजन्मादितृतीयेऽब्दे तु चौलकम्।
आद्येऽब्दे कुर्वते केचित् पञ्चमेऽब्दे द्वितीयके॥
उपनीत्या सहैवेति विकल्पाः कुलधर्मतः।

बृहस्पतिः— तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः।
पञ्चमे सप्तमे वाऽपि स्त्रियाः पुंसोऽपि वा समम्॥

तत्रैव नारदः— जन्मतस्तु तृतीयेऽब्दे श्रेष्ठमिच्छन्ति पण्डिताः।
पञ्चमे सप्तमे वाऽपि जन्मतो मध्यमं भवेत्॥
अधमं गर्भतः स्यात् तु नवमैकादशेऽपि वा॥ इति।

पारिजाते बृहस्पतिः—

उत्तरायणगे सूर्ये विशेषात् सौम्यगोलके।
शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरत्॥
अशुभान्यत्रिभागः स्यात् कृष्णपक्षे त्रिधा कृते।

तत्रैव वसिष्ठः—

द्वित्रिपञ्चमसप्तम्यामेकादश्यां तथैव च।
दशम्याञ्च त्रयोदश्यां कार्यं क्षौरं विजानता॥

नृसिंहीये— षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी।
द्वादशी दर्शपूर्णे द्वे प्रतिपच्चैव निन्दिताः॥

वसिष्ठः— रवेरङ्गारकस्यैव सूर्यपुत्रस्य चैव हि।
निन्दिता दिवसाः क्षौरे शेषाः कार्यकराः स्मृताः॥

ज्योतिर्निबन्धे बृहस्पतिः—

पापग्रहाणां वारादौ विप्राणां शुभदं रवौ।
क्षत्रियाणां क्षमासूनौ विट्शूद्राणां शनौ शुभम्॥
हस्तादित्रिविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यकम्।
सौम्यचित्रे नवक्षौरे उत्तमा नव तारकाः॥
त्रीण्युत्तराणि वारुण्यं रोहिणी वारुणं तथा।
क्षौरे चलचलाः प्रोक्ताः शेषा द्वादश गर्हिताः॥

निधने जन्मनक्षत्रे वैनाशे चन्द्रभेऽशुभे ।
विपत्करे वधे क्षौरं प्रत्यरौ च विवर्जयेत् ॥

एतच्च शिशोर्मातरि गर्भिण्यां न कार्यम् । तदाह ज्योतिर्निबन्धे मदनरत्ने च वृद्धगार्ग्यः—

पुत्रचूडाकृतौ माता यदि सा गर्भिणी भवेत् ।
शस्त्रेण मृत्युमाप्नोति तस्मात् क्षौरं विवर्जयेत् ॥

अस्यापवादमाह तत्रैव नारदः—

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चाब्दात् प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥
यदि गर्भे विपत्तिः स्याच्छिशोर्वा मरणं यदि ।
सहोपनीत्या कुर्याच्चेत् तदा दोषो न विद्यते ॥

बृहस्पतिः— गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत् ।
व्रताभिषेक एवं स्यात् कालो वेदव्रतेष्वपि ॥

अभिषेकः समावर्तनम् । गर्भिण्यामपि पञ्चमासपर्यन्तं न दोष इत्युक्तम् मुहूर्तदीपिकायां गर्गेण—

पञ्चममासादूर्ध्वं मातुर्गर्भस्य जायते मृत्युः । इति ।

मदनरत्ने बृहस्पतिः—

पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत् ।
विपद्यते गुरुस्तत्र दम्पती शिशुरब्दतः ॥
गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु ।
पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥

गर्गः— ज्वरस्योत्पादनं यस्य कर्म तस्य न कारयेत् ।
दोषनिर्गमनात् पश्चात् स्वस्थो धर्मं समाचरेत् ॥

कर्ममिति मङ्गलोपलक्षणम् ।

ज्योतिर्गर्गः— विवाहोत्सवयज्ञेषु माता यदि रजस्वला ।
तदा स मृत्युमाप्नोति पञ्चमं दिवसं विना ॥

वशिष्ठः— यस्य माङ्गलिकं कार्यं तस्य माता रजस्वला ।
तदा स मृत्युमाप्नोति पञ्चमं दिवसं विना ॥

तत्रैव बृहस्पतिः—

प्राप्तमभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि ।
पत्नी रजस्वला चेत् स्यान्न कुर्यात् तत्पिता तदा ॥

पितेति कर्तृमात्रोपलक्षणम् । संकटे तु चाक्यसारे उक्तम्—

अलाभे सुमुहूर्तस्य रजोदोषे ह्युपस्थिते ।
श्रियं संपूज्य विधिवत् ततो मङ्गलमाचरेत् ॥

एतच्च मण्डनोत्तरं कार्यम्,

न मण्डनाचापि हि मुण्डनं च गोत्रैकतायां यदि नाब्दभेदः ।
इति मदनरत्ने वसिष्ठोक्तेः ।

तत्रैव कात्यायनः—

कुले ऋतुत्रयादर्वाङ्मण्डनान्न तु मुण्डनम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ॥

तथा वृद्धमनुः— एकमातृजयोरेकवत्सरे पुत्रकन्ययोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥

आशौचे तु संग्रहे—

सङ्कटे समनुप्राप्ते सूतके समुपागते ।
कूष्माण्डीभिर्घृतं हुत्वा गां च दद्यात् पयस्विनीम् ॥
चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् ॥

ज्योतिर्निबन्धे—

षष्ठेऽब्दे षोडशे वर्षे विवाहाब्दे तथैव च ।
अन्तर्वत्न्यां च जायायां नेष्यते मुण्डनं क्वचित् ।

दीपिकायाम्— न चूडा जन्मभाग्नेयद्वाक्येषु सनौ कुजे ।
प्रतिपद्भद्ररिक्तासु विवारम्भस्तु पञ्चमे ॥

प्रयोगरत्ने— मध्ये शिरसि चूडा स्याद्वासिष्ठानां तु दक्षिणे ।
उभयोः पार्श्वयोरत्रिकश्यपानां शिखा मता ॥

माधवीयेऽप्येवम् । आपस्तम्बस्त्वाह—

तूष्णीं केशान् विनीय यथर्षि शिखा निदधाति, यथर्षि प्रवरसंख्यया, तासां मध्यशिखावर्जमुपनयने वपनं कार्यम् । प्रतिदिशं प्रवपतीति उपनयने तेनैवोक्तेः । 'रिक्तो वा एषो न पिहितो यन्मुण्डस्तस्मै तदपिधानं यच्छिखा' इति श्रुतेः ।

'विशिखो व्युपवीतश्च यत् करोति न तत् कृतम् ।

इति निषेधाच्च । सत्रे तु वचनात् सशिखं वपनमिति सुदर्शनभाष्ये उक्तम् । यत्तु—कुमारा विशिखा इव इति लिङ्गं तच्छन्दोगपरम् ।

स्मृतिदर्पणे— एका शिखा दक्षिणतो वसिष्ठगोत्रस्य पञ्चाङ्गिरसो भृगोस्तु ।
नैका शिखा कश्यपगोत्रजानां शिखोभयत्रापि यथाकुलन्तु ॥

एतच्छूद्रातिरिक्तविषयम्, 'शूद्रस्यानियताः केशवेशाः' इति वशिष्ठोक्तेः ।

यत्तु पाद्मे— न शिखी नोपवीती स्यान्नोच्चरेत् संस्कृतां गिरम् ।

इति शूद्रमुपक्रम्योक्तम्, तदसच्छूद्रस्येति केचित्; विकल्प इति तु युक्तम् ।

अत एव हारीतः—

स्त्रीशूद्रौ तु शिखां छित्त्वा क्रोधाद् वैराग्यतोऽपि वा ।
प्राजापत्यं प्रकुर्यातां निष्कृतिर्नान्यथा भवेत् ॥

एतत् परिग्रहपक्षे, अत्र देशभेदाद् व्यवस्थेति ।

ज्योतिर्निबन्धे— गर्भदोसरंद्रे तु सिंहस्थे देवमन्त्रिणि ।
शुभकर्म न कुर्वीत निषेधो नास्ति गृहिणे ॥

अत्र भोजने प्रायश्चित्तमुक्तं पराशरमाधवीये—

निष्क्रमे चूडहोमे तु प्राक् नामकरणात् तथा ।
चरेत् सान्तपनं भुक्त्वा जातकर्मणि चैव हि ॥
अतोऽन्येषु तु संस्कारेषूपवासेन शुध्यति ।

एते संस्काराः स्त्रीणाममन्त्रकाः कार्याः, होमस्तु समन्त्रक इति प्रयोगपारिजाते ।

आश्वलायनोऽपि—

होमकृत्यं तु पुंवत् स्यात् स्त्रीणां चूडाकृतावपि । इति ।

मनुरपि— अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः । इति ।

होमोऽप्यमन्त्रक इत्येके, संस्काराः स्त्रीणामहोमकास्तूष्णीं स्युरिति स्मृत्यर्थसारे, होमो नेति दृसिंहः ।" इति ।

मदनपारिजाते विशेषः—

"यमः— तथा संवत्सरे पूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ।

शङ्खलिखितौ— तृतीये चूडाकर्म पञ्चमे वा ।

लौगाक्षिः—

तृतीयस्य वर्षस्य भूयिष्ठे गते चूडां कारयेत् । दक्षिणतः कमुजा वशिष्ठानामुभयतोऽत्रिकश्यपानां मुण्डा भृगवः पञ्चचूडा अङ्गिरसो राजिमेके मङ्गलार्थं शिखिनोऽन्ये च वटपत्रवत् यथाकुलधर्मं वा शुद्धपक्षस्य पुण्याहे पर्वणि चेति । ( संवादय मूलेन—पृ० ४४९ ) कमुजा चूडा, राजिं केशपङ्क्तिं मङ्गलार्थमिति, अन्ये तु मङ्गलार्थं शिखामात्रं वटपत्राकृतिं केचन कुर्वन्ति । अत्रापि यथागृह्यं व्यवस्था ।

व्यासः— अश्विनी श्रवणा स्वाती चित्रा पुष्यपुनर्वसू ।
धनिष्ठारेवतीज्येष्ठामृगहस्तेषु कारयेत् ॥

क्षौरमिति शेषः। तथा—

नक्षत्रे न तु कुर्वीत यस्मिञ्जातो भवेन्नरः।
न प्रोष्ठपदयोः कार्यं नैवाऽऽग्नेये च भारत॥
दारुणेषु च सर्वेषु दुष्टतारांश्च वर्जयेत्।

स्त्रीसंस्कारे तु मनुः—अमन्त्रिकेति। आवृज्जातकर्मादिक्रिया। यथाक्रममित्यभिधानात् क्रमातिक्रमो न कर्तव्य इत्युक्तं भवति। अत एव कालातिक्रमणे कात्यायनेन प्रायश्चित्तमभिहितम्। व्रतानामिति, संस्कारा इति च ( द्र० पृ० ३७१-७२ )। सर्वप्रायश्चित्तमपि स एवाऽऽह—

सर्वप्रायश्चित्तयश्च पञ्चभिः प्रत्यृचं त्वन्नोऽग्न इति।
द्वाभ्यामयाश्चाग्नेश्चेति शतमुत्तममिति चेति॥

उपनयनकालातिपत्तौ तु व्रात्यस्तोमादेव। एतेष्वेकैकलोपे पादकृच्छ्रम्, चौडलोपेऽर्धकृच्छ्रम्।

स्त्रीसंस्कारे गोभिलो विशेषमाह—

'तूष्णीमेताः क्रियाः स्त्रीणां मन्त्रेण तु होम" इति।

मुहूर्तचिन्तामणौ विशेषः—

"गीर्वाणाम्बुप्रतिष्ठापरिणयदहनाधानगेहप्रवेशाः
चौलं राज्याभिषेको व्रतमपि शुभदं नैव याम्यायने स्यात्।
नो वा बाल्यास्तवार्धे सुरगुरुसितयोर्नैव केतूदये स्यात्
पक्षं चार्धं च केचिज्जहति तमपरे यावदीर्षां तदुग्रम्॥

चण्डेश्वरः— 'केतोरस्तदिनादूर्ध्वं सप्ताहं मङ्गलं त्यजेत्।
यावत् केतूदयस्तावदशुभः समयो हि सः॥' इति।
पुरः पश्चाद् भृगोर्बाल्यं त्रिदशाहश्च वार्धकम्।
पक्षं पञ्चदिनं ते द्वे गुरोः पक्षमुदाहृते॥
ते दशाहं द्वयोः प्रोक्ते कैश्चित् सप्तदिनं परैः।
त्र्यहं स्यात्त्यविकेऽन्यैरथाहं च त्र्यहं विधोः॥

चूडा वर्षात् तृतीयात् प्रभवति विषमेऽष्टार्करिक्ताद्यषष्ठी-
पर्वोनाहे विचैत्रोदगयनसमये ज्येन्दुशुक्रेज्यकानाम्।
वारे लग्नांशयोश्च स्वभनिधनतनौ नैधने शुद्धियुक्ते
शाक्रोपेतैर्विमैत्रैर्मृदुचरलघुभैरायषट्त्रिस्थपापैः॥
क्षीणचन्द्रकुजसौरिभास्करैर्मृत्युशस्त्रमृतिपङ्गुताज्वराः।
स्युः क्रमेण बुधजीवभार्गवैः केन्द्रगैश्च शुभमिष्टतारया॥

पञ्चमासाधिके मातुर्गर्भे चौलं शिशोर्न सत् ।
पञ्चवर्षाधिकस्येदं गर्भिण्यामपि मातरि ॥
ऋतुमत्याः सूतिकायाः सूनोश्चौलादि नाऽऽचरेत् ।
ज्येष्ठापत्यस्य न ज्यैष्ठे चैत्रिमार्गेऽपि नेष्यते ॥" इति ।

विशेषस्तु ज्योतिस्तत्त्वे—

"चूडाकार्ये तृतीयाब्दः सर्वगृह्यादिसम्मतः ।
तत्कालेऽशौचवृद्ध्या मुख्य इत्यवगम्यते ॥
पौष्णाश्विपुष्यवसुवासववासुदेवब्रह्मार्कचन्द्रवरुणादितिचित्रभेषु ।
वारेषु सोमबुधवाक्पतिभार्गवाणां क्षौरं करोति कुशलं खलु मानवानाम् ॥

इति वचनात् रोहिण्यामपि चूडाकरणम् ।

राजमार्तण्डे—

मासं हरेत् क्षौरमिहाऽऽयुषोऽर्कः शनैश्चरः पञ्च कुजस्तथाऽष्टौ ।
आचार्यभूविन्दुबुधाः क्रमेण ददुर्दशैकादश सप्त पञ्च ॥

नित्यक्षौरे तु राजमार्तण्डः—

न स्नानमाचरमनोत्सुकभूषितानामभ्यक्तभुक्तरणकालनिरासनानाम् ।
सन्ध्यानिशाशनिकुजार्कदिनेषु रिक्ते क्षौरं हितं प्रतिपदह्नि न चापि विष्ट्याम् ॥
उत्तरात्रितयवारुणरोहिणीरौद्रसर्पपितृभेषु चाग्निभे ।
श्मश्रुकर्म सकलं विवर्जयेत् प्रेतकार्यमपि बुद्धिमान् नरः ॥
चन्द्रशुद्धिर्यदा नास्ति तारायाश्च विशेषतः ।
अष्टोरिभेऽपि कर्त्तव्यं चन्द्र-चन्द्रजयोर्दिने ॥
मासं हन्ति गुरुः क्षौरे शुक्रं शुक्रो धनं रविः ।
आयुरङ्गारको हन्ति सर्वं हन्ति शनैश्चरः ॥

श्रीपतिरत्नमालायाम्—

आज्ञया नरपतेर्द्विजन्मनां दारकर्म मृतसूतकेषु च ।
बन्धमोक्षमखदीक्षणेष्वपि क्षौरमिष्टमखिलेषु चोडुषु ॥
देवकार्ये पितृश्राद्धे रवेरंशपरिक्षये ।
क्षुरिकर्म न कुर्वीत जन्ममासे च जन्मभे ॥" इति ।

चूडाकरणमधिकृत्य यदुक्तं गृह्यान्तरेषु तस्मात् यथासम्भवमुपस्थाप्यते—

तत्र च छन्दोगब्राह्मणसर्वादिगृह्येषु प्रायः समानानुपूर्वीकाणि सूत्राणि—तृतीये वर्षे चौलम् । तत्र नापित उष्णोदकमादर्शः क्षुरो चौदुम्बरः पिञ्जूलय इति दक्षिणतः । आनडुहो गोमयः कृसरः स्थलीयको दृषावक इत्युत्तरतः । माता च कुमारमादाय । हुत्वाऽग्नमगादिति नापितं

प्रेक्षन् सवितारं ध्यायन्। उष्णेनेत्युष्णोदकं प्रेक्षेद् वायुं ध्यायन्। आप इत्युन्देत्। विष्णो-रित्यादर्शं प्रेक्षेदौदुम्बरं वा। ओषधय इति दर्भपिञ्जूलीः सप्तोर्ध्वाग्रा अभिनिधाय। स्वधित इत्यादर्शेन क्षुरेणौदुम्बरेण वा। येन पूषेति दक्षिणतस्त्रिः प्राञ्चं प्रोहेत्। सकृद्यायसेन प्रच्छिद्याऽऽन-डुहे गोमये केशान् कुर्यात्। उन्दनप्रभृत्येवं पश्चादुत्तरतश्च। त्र्यायुषमिति पुत्रस्य मूर्धानं परिगृह्य जपेत्। उदङ्ङुत्सृप्य कुशली कारयेद् यथागोत्रकुलकल्पम्। अरण्ये केशान् निखनेयुः। स्तम्बे निदधत्येके। गौर्दक्षिणा। इति।

जैमिनिगृह्ये च—तृतीये संवत्सरे जटाः कुर्वीत, गर्भतृतीय इत्येके उदगयने पूर्वपक्षे पुण्ये नक्षत्रे ब्राह्मणान् स्वस्ति वाच्यापराह्णेऽग्निं प्रणयित्वा दक्षिणतोऽग्नेश्चत्वारि पूर्णपात्राणि निदध्याद् व्रीहियवानामभितो मध्ये तिलमाषाणाम्, आघारान्तोदकेऽन्वारब्धे जुहुयान्महाव्याहृतिभिर्हुत्वा विरूपाक्षेणाद्य पञ्चमीं जुहोति सर्वौषधीभिस्काण्टमुदकमानयन्ति, व्रीहियवास्तिलमाषा इत्येतत् सर्वौषधम्, 'आयमगान् सविता क्षुरेणे'ति क्षुरमादत्त, 'आयमगात् सविता क्षुरेण विश्वे देवैरनुमतो मरुद्भिः। स नः शिवो भवतु विश्वकर्मा यूयं पात स्वस्तिभिः सदा न' इत्युष्णेन वाय उदकेने-हीत्युदकमादत्त, 'उष्णेन वाय उदकेनेह्यदितिः केशान् वपतु' इति, 'आप उन्दन्तु जीवस' इति दक्षिणं केशान्तमभ्युन्द्यात्। 'आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे' इति तस्मिंस्त्रिस्रो दर्भ-पिञ्जूलीरुपदधात्येकां वा धारयतु प्रजापतिरिति धारयेत्, धारयतु प्रजापतिः पुनः पुनः सुवस्तवा इत्यूर्ध्वं त्रिरादर्शेन स्पृष्ट्वा येन धातेति क्षुरेण छिन्द्यात्। येन धाता बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत्। तेन त आयुषे वपामि सुश्लोक्याय स्वस्तये इति। येन सत्प्रजापतिर्मनुष्यो गृहमेधिभ्योऽवपत्। तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय इति। येन भूयश्चरात्ययं ज्योक् च पश्याति सूर्यम्। तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय इत्येवं पश्चात् तथोत्तरतः। प्रतिमन्त्रं केशांश्च दर्भपिञ्जूलीशेषांश्चाऽऽनडुहे गोमयेऽभूमिस्पृष्टे निदध्यात्, ब्राह्मणस्य पुरस्तात् पश्चादितरयो-र्वर्णयोः, यत् क्षुरेणेति नापिताय क्षुरं प्रयच्छेत्। 'यत् क्षुरेण मज्जा वप्त्रा वपसि नापिताङ्गानि शुद्धानि कुर्वायुर्वर्चो मा हिंसीर्नापिते'ति यथैषां गोत्रकल्पः कुलकल्पो वा प्लुते प्रायश्चित्ती-र्जुहुयादावृतैव स्त्रियाः कुर्यादमन्त्रं समन्त्रं चेत् पश्चाज्जुहुयात्। अथास्य मूर्धानमारभ्य जपति त्रियायुषं कश्यपस्य, जमदग्नेस्त्रियायुषम्, यद्देवानां त्रियायुषम्, तत्ते अस्तु त्रियायुषमिति धान्यपल्वले गोष्ठे वा केशान् निखनेत् कुशली कर्ता। पूर्णपात्राणि हरेत्। गौर्दक्षिणा। इति।

लौगाक्षिकाठकगृह्ययोश्च—तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयते। दक्षिणतः कपुजा वसिष्ठानाम्। उभयतोऽत्रिकश्यपानाम्। मुण्डा भृगवः। पञ्चचूडा अङ्गिरसः। वाजिमेके। मङ्गलार्थं शिखिनोऽन्ये। यथाकुलधर्मं वा। शुक्लपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वाऽऽयमगात् सविता क्षुरेणोष्णेन वाय उदकेन एहि। आदित्या रुद्रा इत्युष्णा अपोऽभिमन्त्रयते। उष्णाश्च शीताश्च समेत्य सर्वा बृहस्पतिरित्यभ्युन्देत्। दक्षिणे केशान्ते ओषधे त्रायस्वेति दर्भमन्तर्धाय स्वधित इति क्षुरेणाभिनिधाय येनावपत् सवितेति प्रदक्षिणं प्रतिदिशं प्रति-

मन्त्रं दर्भक्षुरकर्म । यत् क्षुरेण वर्तयतेति लोहायसं क्षुरं केशवापाय प्रयच्छति । मा ते केशानिति प्रवपतोऽनुमन्त्रयते । उहृत् परिग्राह्यानुप्यमानान् हरितगोमये समवचिनोति । उप्त्वाय राज्ञो वरुणस्येति प्रागुदीचीं ह्रियमाणाननुमन्त्रयते । 'अरिक्ते पर्याश्लेषयत' इति श्रुतिः । कर्त्रे वरं ददाति । पक्वगुणं तिलपेशलं केशवापाय प्रयच्छति । सर्पिष्मदन्नं ब्राह्मणान् भोजयेत् ।

आश्वलायनगृह्ये च—तृतीये वर्षे चौलम् यथाकुलधर्मं वा । उत्तरतोऽग्नेर्व्रीहियवमाषतिलानां पृथक् पूर्णशरावाणि निदधाति । पश्चात् कारयिष्यमाणो मातुरुपस्थ आनडुहं गोमयं नवे शरावे शमीपर्णानि चोपनिहितानि भवन्ति । मातुः पिता दक्षिणत एकविंशतिकुशपिञ्जूलान्यादाय । ब्रह्मा वै तानि धारयेत् । पश्चात् कारयिष्यमाणस्यावस्थाय शीतोष्णा अपः समानीयोष्णेन वा य उदकेनेहीति । तासां गृहीत्वा नवनीतं दधिद्रप्सान् वा प्रदक्षिणं शिरस्त्रिरुन्दति, अदितिः केशान् वपत्वाप उन्दन्तु वर्चस इति । दक्षिणे केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति ओषधे त्रायस्वैनमिति । स्वधिते मैनं हिंसीरिति लौहेन क्षुरेण । प्रच्छिनत्ति येनावपदिति । प्रच्छिद्य प्रच्छिद्य प्रागग्राञ्छमीपर्णैः सह मात्रे प्रयच्छति तानानडुहे गोमये निदधाति । येन धातेति तृतीयम् । सर्वैर्मन्त्रैश्चतुर्थम् । एवमुत्तरतस्त्रिः । क्षुरतेजो निमृजेत् यत्क्षुरेणेति । नापितं शिष्याच्छीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षुन्वन् कुशली कुर्विति । यथाकुलधर्मं केशवेशान् कारयेत् । आवृतैव कुमार्यै । इति ।

आपस्तम्बगृह्ये च—जन्मनोऽधि तृतीये वर्षे चौलं पुनर्वस्वोः । ब्राह्मणानां भोजनमुपायनवत् । सीमन्तवदग्नेरुपसमाधानादि । अपरेणाग्निं प्राङ्मुखपवेश्य त्रेण्या शलल्या त्रिभिर्दर्भपुञ्जीलैः शलालुग्लप्सेनेति तूष्णीं केशान् विनीय यथर्षि शिखा निदधाति । यथा वैषां कुलधर्मः स्यात् । अपां संसर्जनाद्याकेशनिधानात् समानम् । क्षुरं प्रक्षाल्य निदधाति । तेन त्र्यहं कर्मनिवृत्तिः । वरं ददाति । इति ।

मानवगृह्ये च—तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयेत् । उदगयने ज्यौत्स्ने पुण्ये नक्षत्रेऽन्यत्र नवम्याः । जयप्रभृतिभिर्हुत्वा उष्णेन वायुरित्युष्णा अपोऽभिमन्त्रयते । अदितिरित्यभ्युन्दति । ओषधे त्रायस्वैनमिति दक्षिणस्मिन् केशान्ते दर्भमन्तर्दधाति । स्वधिते मैनं हिंसीरिति क्षुरेणाभिनिदधाति । येनावपदिति तिसृभिस्त्रिः प्रवपति । यत् क्षुरेणेति लौहायसं क्षुरं केशवापाय प्रयच्छति । मा ते केशानिति प्रवपतोऽनुमन्त्रयते । उहृत्परिग्राहं हरितगोशकृत्पिण्डे समवचिनोति । उप्त्वाय केशानिति प्रागुदीचो ह्रियमाणाननुमन्त्रयते । अरिक्ते पत्न्याश्लेषयेदिति श्रुतिः । वरं कर्त्रे ददाति । पक्वगुडं तिलपिष्टं च केशवापाय । इति ।

वाराहगृह्यप्रकरणे च—तृतीयवर्षस्य जटाः कुर्वन्ति यथा वा कुलकल्पः । अग्निमुपसमाधाय परिसमुह्य पर्युक्ष्य परिस्तीर्य दक्षिणतोऽग्नेर्ब्राह्मणमुपवेश्योत्तरत उदकपात्रं शमीशमकवत् । अथैनमभिमन्त्रयते हिरण्यवर्णाः शुचय इति चतसृभिर्या ओषधय इत्यनुवाकेन शन्नो देवीरभीष्टय इति शश्न आपो धन्वन्या इति द्वाभ्यामिति च । तासामुदकार्थान् कुर्वीत । पर्युक्षणे अभ्युन्दने

स्नापने च । आज्यं संस्कृत्य ब्राह्मणमामन्त्र्य समिधमाधायाऽऽघारावाघार्याऽऽज्यभागौ हुत्वा अग्न आयूंषि पवस इति सहभिः सह जुहुयात् । आयुर्दा देवेति च ये केशिन इति व्याहृतिभिश्चोक्तः कर्मान्तः पूर्वेण । शीतेन वा उदकेनेत्युष्णेन वा उदकेनेति तथा इतराभिः संसृज्य आर्द्रदानवस्थ-जीवदानवस्थोन्दतीषमावदेत्यपोऽभिमन्त्र्य अदितिः केशान् इति दक्षिणं केशान्तमभ्युन्दति । ओषधे त्रायस्वैनमिति दक्षिणस्मिन् केशान्ते ऊर्ध्वाग्रं दर्भमन्तर्दधाति स्वधिते मैनं हिंसीरिति क्षुरेणाभिनिदधाति । येनावप···द्दहमसाविति प्रवपति । दक्षिणतो माताऽन्या वाऽविधवा आन-डुहेन गोमयेन आभूमिगतान् केशान् परिगृह्णीयात् । मा ते केशामिति प्रवपतोऽनुमन्त्रयते । तेन धर्मेण पुनरपोऽभिमन्त्र्यापरं केशान्तमभ्युन्द्यात् । उत्तरं च । अन्यौ तु प्रवपनौ । येन पूषेति पश्चात् । येन भूयश्चरत्ययमित्युत्तरतः । यत् क्षुरेणेति लोहायसं क्षुरं केशवापाय प्रयच्छति । यथार्थं केशयत्नान् कुर्वन्ति, दक्षिणतः कपर्दो वसिष्ठानाम् उभयतोऽत्रिभार्गवकाश्यपानां पञ्चचूडाङ्गि-रसां शिखिनोऽन्ये वाजिमेके मङ्गलार्थम् । त्र्यायुषं जमदग्नेः, कश्यपस्य त्र्यायुषम्, अगस्त्यस्य त्र्यायुषम्, यद्देवानां त्र्यायुषं तन्मे अस्तु शतायुषमिति शिरःप्रभृति परिगृह्य गोमयेन केशानुत्तर-पूर्वस्यां गृहस्यामुष्यामन्तरा गेहात् पलदं निदध्यात् । अतिरिक्ते वा वपने उप्त्वाय केशानिति । कर्त्रे वरं ददाति । पक्ष्मगुणं तिलपिशितं च केशवापाय प्रयच्छति । संवत्सरं माता नाम्राय धारयेद्दोषाय नाश्नीयात् । लवणवर्जं तूष्णीम् । कन्याया आहुतिवर्जं विदुषो ब्राह्मणार्थसिद्धिं वाचयेत् । एवमुत्तरेषु । इति ।

बोधायनीयगृह्यविषये च—संवत्सरे चूडाकर्म त्रिषु वा संवत्सरेषु । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पक्वाज्जुहोति ये केशिन इति पुरोऽनुवाक्यामनूच्य नर्ते ब्रह्मण इति याज्यया जुहोति । अथाऽऽज्याहुतीरुपजुहोति आरोह प्रोष्ठं विषहस्व शत्रून् इत्यान्तादनुवाकस्य । स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् । अथाग्रेणाग्निमुदुम्बरपर्णेषु हुतशेषं निदधाति नमो हिरण्यबाहव इति । अपरेणाग्निमुभयो-रपस्संसिञ्चति । उष्णासु शीता आनयति उष्णेन वायवुदकेनेह्यदितिः केशान् वपत्विति । ताभिरस्य शिर उनत्ति आप उन्दन्त्विति । उर्ध्वाग्रं बर्हिरनुच्छ्रयति ओषधे त्रायस्वैनमिति । क्षुरमभिमन्त्रयते ज्योक् च सूर्यं दृशे इति । अथैनं तिर्यञ्चं निदधाति स्वधिते मैनं हिंसीरिति । अथास्य केशान् वपति येनावपत् सविता क्षुरेणेति । प्रवपतोऽनुमन्त्रयते मा ते केशाननुगाद् वर्च एतदिति । अथैनान् समुच्चित्य दर्भस्तम्बे निदधाति तेभ्यो निधानं बहुधा व्यैच्छन् इति । अथैनमुष्णोदकेनाऽऽप्लावयति बलं ते बाहुवोः सविता दधातु इति । अथैनमेकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मः स्यात् । यथर्षि शिखां निदधातीत्येके । अथैनं स्नाप्या-ऽऽच्छाद्यालङ्कृत्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याऽऽशिषो वाचयति । इति ।

पारस्करगृह्ये च—सांवत्सरिकस्य चूडाकरणम् । तृतीये वाऽप्रतिहते । षोडशवर्षस्य केशान्तः यथामङ्गलं वा सर्वेषाम् । ब्राह्मणान् भोजयित्वा माता कुमारमादायाऽऽप्लाव्याहते वाससी

परिधाप्याङ्क आधाय पश्चादग्नेरुपविशति । अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्ते शीतास्वप्सूष्णा आसिञ्चत्युष्णेन वाय उदकेनेत्यग्निते केशान् वपेति । केशश्मश्रुति च केशान्ते । अथात्र नवनीत-पिण्डं घृतपिण्डं दध्नो वा प्रास्यति । तत आदाय दक्षिणं गोदानमुन्दति सवित्रा प्रसूतेति । त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध इति । शिवो नामेति लोहक्षुरमादाय निवर्तया-मीति प्रवपति येनावपदिति । सकेशानि प्रच्छिद्याऽऽनडुहे गोमयपिण्डे प्रास्यत्युत्तरतो ध्रियमाणे । एवं द्विरपरं तूष्णीम् । इतरयोश्चोन्दनादि । अथ पश्चात् त्र्यायुषमिति । अथोत्तरतो येन भूरिश्चरेति । त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति समुखं केशान्ते । यत् क्षुरेणेति मुखमिति च केशान्ते । ताभि-रद्भिः शिरः संमृद्य नापिताय क्षुरं प्रयच्छति अक्षण्वन् परिवपेति । यथामङ्गलं केशशेषकरणम् । अनुगुप्तमेतं सकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल उदकान्ते वाचार्याय वरं ददाति । गां केशान्ते संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः । इति ।

---

## द्वितीयप्रपाठकस्य दशमी कण्डिका

———:०:———

अत ऊर्द्ध्वमुपनयनलिङ्गा मन्त्राः(A), तेषां विधिविवक्षयेदमाह—

**गर्भाष्टमेषु ब्राह्मणमुपनयेत् ॥ १ ॥**

गर्भं[1]वर्षमष्टमं येषां वर्षाणां तानि[1]* गर्भाष्टमानि, तेषु गर्भाष्टमेषु वर्त्तमानं ब्राह्मणमुपनयेत्। अध्ययनार्थम् आचार्यस्य उप समीपं नीयते येन कर्मणा तदुपनयनम्(B); [2]कुर्यादिति।

क्षत्रियवैश्ययोरपि उपनयेदिति योजयेदित्येवम्—

**गर्भैकादशेषु क्षत्रियं (C)गर्भद्वादशेषु वैश्यम् ॥ २ ॥**

यदि दैवान्मानुषाद् वा यथोक्तेषु कालेषु एतेषाम् उपनयनं न स्यात्[3] तत्र[4] कथम् इत्यत आह—

**आ षोडशाद् वर्षाद् ब्राह्मणस्यानतीतः कालो भवति आ द्वाविंशात् क्षत्रियस्य आ चतुर्विंशाद् वैश्यस्य ॥ ३ ॥**

---

A. मन्त्रब्राह्मणे इति भावः।

B. अत्र तर्कालङ्कारः—"तथाचाऽऽहुः—

गृह्योक्तकर्मणा येन समीपं नीयते गुरोः।
बालो वेदाय तद्योगाद् बालस्योपनयं विदुः ॥

इति। अपि चाऽऽहुः—

गुरोर्व्रताय वेदस्य यमस्य नियमस्य च।
देवतानां समीपं वा येनासौ नीयते द्विजः ॥ इति"

इत्युद्धृतवान् स्वभाष्ये।

C. गर्भद्वादशेष्वित्यादि पृथक् सूत्रं कल्पयतः सामश्रमितर्कालङ्कारौ।

---

1. '-वर्षमपि प्रथमं कृत्वा यानि तानि' क-ग। 2. 'कुर्यात्' नास्ति ख। 3. 'तस्या' क। 4. 'तत्र' क।

आङ्'शब्दोऽभिविधौ "न मर्यादायाम्। कुतः? अभिविधावपि सम्भवात्"*। असम्भवे हि मर्यादायां कल्प्यते। यथा आ पर्वतात् क्षेत्राणीति(A)। "न चैवं कश्चिद् विरोधः। शेषमृज्वर्थम्"*।

A. अत्र रघुनन्दनः—"आ षोडशादित्यभिविधावाङ्, तथाच विष्णुधर्मोत्तरम्—

षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः।
विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता॥
सावित्री नातिवर्त्तेत अत ऊर्ध्वं निवर्त्तते॥

अत्र षोडशवर्षाणामुपनयनाकृता प्रतीयते—

पतिता यस्य सावित्री दशवर्षाणि पञ्च च॥
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः।
प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः॥

इति यमवचनेन तदनकृता प्रतीयते, अनयोर्गर्भजन्मगणनाभ्यामविरुद्धता।

तथाच माण्डव्यः—व्रतबन्धविवाहे च वत्सरपरिगणनमाहुराचार्याः।

आधानपूर्वमेके प्रसूतिपूर्वं सदाऽन्ये तु॥

यत्तु द्विजानामित्युपक्रम्य पैठिनसिवचनम्—

द्वादशषोडशविंशतिश्चेदतीता अवरुद्धकाला भवन्तीति।

तस्माद् द्वादशवर्षादुपरि ब्राह्मणादीनां महाव्याहृतिहोमरूपप्रायश्चित्तार्थं षोडशवर्षोपरि गुरुप्रायश्चित्तमिति। तथाच शङ्खलिखितौ—

'व्रात्यश्चान्द्रायणं चरेद् गोप्रदानञ्च कुर्यात्, चान्द्रायणाशक्तौ धेन्वष्टकं तन्मूल्यं वा'सार्द्ध-द्वाविंशतिकार्षापणी गोमूल्यं कार्षापणमेकं मिलित्वा सार्द्धत्रयोविंशतिकार्षापणी देया।

पितृमातृरहितस्य निःस्वस्य देशोपप्लवादिना पतितसावित्रीकस्य वा विषये तु मनुविष्णू—

येषां द्विजानां सावित्री नानूच्येत यथाविधि।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्॥"

( मनु० ११।१९१ ) इत्याह।

तत्कालङ्कारस्तु—तथाच स्मृत्यन्तरम्—

औपनायनिकः कालः परः षोडशवार्षिकः।
द्वाविंशतिः परेऽन्यस्य स्याच्चतुर्विंशतिः परः॥ इति।
विप्रस्य षोडशाद् वर्षाद् राज्ञो द्वाविंशतेः परम्।
वैश्यस्याष्टत्रिकादब्दात् सावित्रीपतनं भवेत्॥ इति

1. 'शब्दो' नास्ति घ। 2. नास्ति घ। 3. नास्ति च।

षोडशाब्दो हीति । पतिता यस्य सावित्रीति ।

विवस्वतः सुतः श्रीमान् यमो धर्मार्थतत्त्ववित् ।
सशिखं वपनं कृत्वा व्रतं कुर्यात् समाहितः ॥
हविष्यं भक्षयेदन्नं ब्राह्मणान् पञ्च सप्त वा ।
एकविंशतिरात्रन्तु पिबेत् प्रसृतयावकम् ॥
अतो यावकशुद्धस्य तस्योपनयनं स्मृतम् ॥

इति । तत् पतितसावित्रीकत्वाभावेऽपि पञ्चदशवर्षोपरि प्रायश्चित्तविशेषोपदेशार्थम् । न पुनः पञ्चदशवर्षोपरि पतितसावित्रीकत्वमस्यार्थः, तथाविधवचनव्यक्तेरभावात्, लघुनः प्रायश्चित्तस्योपदेशाच्च । पतितसावित्रीकाणां हि व्रात्यस्तोमः क्रतुः प्रायश्चित्तम् , राजन्यवैश्ययोश्चाविशेषात् । 'तथा राजन्यवैश्ययोः' इति ब्राह्मणवत् क्षत्रियवैश्ययोरपि पञ्चदशवर्षोपरि तत्प्रायश्चित्तमविशेषेणोपदिश्यते, तयोश्च पतितसावित्रीकत्वाभावेऽपि वचनबलात् तत्प्रायश्चित्तमित्यकामेनापि वाच्यम् । तत् सामान्याद् ब्राह्मणस्यापि तथैव वर्णयितुं युक्तम्, तस्मात् 'पतिता यस्य सावित्री'-त्यस्य यस्य सावित्रीग्रहणं न सम्पन्नमित्ययमर्थः । नहि दश पञ्च च वर्षाणि सावित्री पततीति शक्यते वक्तुम्, भवतामपि तदूर्ध्वमेव पतनस्यानुमतत्वात् । विज्ञानेश्वरेणापि यस्योपनयने आपद्भावेन तत्कालातिक्रमस्तस्य यमोक्तप्रायश्चित्तमभिधाय, अनापद्यतिक्रमे तु मानवं त्रैमासिकम् , तत्रैव पञ्चदशवर्षादूर्ध्वमपि कियत्कालातिक्रमे तूद्दालकव्रतं व्रात्यस्तोमो वा इति वदता एतदेव मतमङ्गीकृतमित्यवगम्यते । तस्मात्, अस्माद् यमवचनादाङो मर्यादार्थतां ब्रुवन् शूलहस्तः परास्तः । व्रात्यस्तोमे सपादनवधेनूनाम्, अत्र तु सपादधेनुत्रयाणां स्वयमेव सङ्कलितत्वेन वैषम्यापत्तेः । याज्ञवल्क्यटीकायां स्वयमेवाभिविध्यर्थतया वर्णनाच्च । पतितसावित्रीकपरतया वर्णने च क्षत्रियवैश्ययोरपि तावतैव पतितसावित्रीकतापत्तेः । न चैवमिष्यते । रघुनन्दनस्तु यमवचनस्य प्रथमश्लोकार्धत्रयमात्रमुपन्यस्यन् परप्रतीकञ्चापह्नुवानः, 'एभिः षोडशवर्षोपरि यमेन पञ्चदशवर्षोपरि यत् पतनमभिहितं तद् गर्भजन्मप्रभृतिगणनयाऽविरुद्धमित्याह, तदप्यनादरणीयम्, पूर्वोक्तयुक्त्या यमेन पञ्चदशवर्षोपरि पतनस्यानभिहितत्वाद् गर्भप्रभृतिगणनयाऽपि षोडशवर्षान्तिममासत्रयस्यासंग्रहाच्च । किञ्च, पतितसावित्रीकत्वाभावेऽपि द्वादशषोडशविंशतीश्चेदतीता अवरुद्धकाला भवन्तीति पैठिनसिवचनाद् द्वादशवर्षादुपरि प्रत्यवायाल्पत्वज्ञापनं स्वयमेव वर्णितम्, तत् किमत्रापि तथैव न वर्णितमिति स एव जानाति । तस्मात् तन्मतेऽपि द्वादशवर्षोपरि ब्राह्मणस्य महाव्याहृतिहोमः प्रायश्चित्तम्, पञ्चदशवर्षोपरि यमोक्तमेकविंशतिरात्रव्रतम्, व्रात्यप्रायश्चित्तं पुनरतोऽप्यूर्ध्वं भवितुं युक्तम्, ब्राह्मणस्य द्वादशवर्षोपरि महाव्याहृतिहोमः प्रायश्चित्तमपि स्वयमेवोक्तम् । ब्राह्मणस्य विशेषेण प्रायश्चित्तमिति वदन् यमोऽपि पुरस्तात् सामान्यप्रायश्चित्तमस्य बोधयति ।

वयन्तु पश्यामः ब्राह्मणस्य द्वादशवर्षोपरि महाव्याहृतिहोमप्रायश्चित्ताभिधानमप्यनुचितमेव

अष्टवर्षोपरि खल्वेतत् स्यात्। कस्मात् कारणात्? तस्य मुख्यकालत्वात्। कुतस्तस्य मुख्यकालत्वम्? प्रथमोपदिष्टत्वात्। समर्थस्य क्षेपायोगादिति न्यायात्, अष्टवर्षं ब्राह्मणमुपनयीत इति च श्रुतेः। तस्माद् ब्राह्मणस्याष्टवर्षोपरि क्षत्रियस्यैकादशवर्षोपरि वैश्यस्य द्वादशवर्षोपरि महाव्याहृतिहोमः प्रायश्चित्तम्। तथाच स्मरणम्—

गौणेषु तेषु कालेषु कर्म चोदितमारभेत्।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्॥ इति

यत्तु—

'संस्कारा अतिपत्येरन्नि'ति, कर्मप्रदीपे 'उपनयनादधः' इति करणादुपनयनकालातिपातेन महाव्याहृतिहोमः प्रायश्चित्तमिति प्रतीयते, तद् गौणकालस्याप्यतिपाते बोद्धव्यम्। कुतः? अविरोधात्। उपनयनकालातिपाते च तदभावावगतेः। षोडशवर्षादिपर्यन्तं खल्वनतीतकालता उपनयनस्याऽऽचार्येणोच्यते, एतदेवेत्येवकारकरणात् चोपनयनात् पूर्वं महाव्याहृतिहोम एव प्रायश्चित्तम्, उपनयने तु न तावन्मात्रम् अपि तु व्रात्यस्तोमोऽपीति वा वर्णनीयम्, एतच्च भवतोऽप्यनुमतम्। पैठिनसिवचनेन तु ब्राह्मणस्य द्वादशवर्षोपरि प्रायश्चित्तान्तरम्। यमवचनात् तु सर्वेषामेव पञ्चदशवर्षोपर्येकविंशतिरात्रव्रतम्, क्षत्रियवैश्ययोः पुनः षोडशविंशतिवर्षादूर्ध्वं प्रायश्चित्तान्तरं पैठिनसिवचनादुन्नेयम्। सर्वेषान्तूत्तरावधेरूर्ध्वं व्रात्यस्तोम इति बोद्धव्यम्। अस्मिंस्तु पक्षे पञ्चदशवर्षोपरि यथा ब्राह्मणस्य विशेषेण प्रायश्चित्तं भवेत्, तथा राजन्यवैश्ययोरपि विशेषेण प्रायश्चित्तं भवेदिति यमवचनस्यार्थः। तदनेन सर्वेषामेव सामान्यप्रायश्चित्तं पुरस्तादस्तीति वर्णयति। वस्तुतस्तु पैठिनसिवचनं शाखान्तरविषयमेव नास्मच्छाखाविषयम्, विभिन्नशाखिनः खल्वाचार्या भिन्नानि वचनानि रचयाम्बभूवुः। तन्नास्ति सर्वेषामेकविषयत्वम्, अत एव अवरुद्धकाला भवन्तीत्युक्तम्। भिन्नौ खल्विमावधी यत्र कालावरोधो यथाल्पप्रायश्चित्तमिति। एवमन्यान्यपि वचनानि व्याख्येयानि। केचित् पुनर्निबन्धारः एतदननुसन्धानाद् वा लोकप्रशंसाग्रहाद्वा पाण्डित्यातिशयख्यापनाद् वा विभिन्नशाखाविषयाणामपि वचनानां सामञ्जस्याय व्यायासमकुर्वन्त। तदस्माभिरपि कथञ्चित् सामञ्जस्यकरणाय कृतः प्रयत्नः। अन्यथा त्वर्वाचीनाः प्राचीननिबन्धृषु बहुमानात् पक्षपाताच्चास्मत्कृते व्याख्याने न श्रद्दध्युरुपालम्भञ्च कुर्युरिति। परमार्थतस्तु विभिन्नविषयाणां वचनानां नास्त्येकविषयत्वम्, अशक्यसम्पादञ्च सर्वेषां सामञ्जस्यमिति सक्षमो वयं प्रदर्शयितुम्। परन्तु ग्रन्थगौरवभयादत्र मूकीभवामः, धीमद्भिरेव तदूहनीयमित्यस्तु किं विस्तरेणे"त्याह।

कमलाकरस्तु—आश्वलायनः—

गर्भाष्टमेऽष्टमे वाऽब्दे पञ्चमे सप्तमेऽपि वा।
द्विजत्वं प्राप्नुयाद् विप्रो वर्षे त्वेकादशे नृपः॥

## अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥ ४ ॥

अत ऊर्ध्वमस्मात् कालादूर्ध्वं त्रयोऽप्येते पतितसावित्रीका भवन्ति। स्वकाले अनुच्यमानया सावित्र्या गायत्र्या ये पतन्ति, प्रायश्चित्तिनो भवन्ति ते पतितसावित्रीकाः।

तथाच 'स्मृत्यन्तरे—

"पतितसावित्रीकेषूपपातकम्" इति।

एतं ते पतितसावित्रीका ये एतस्मिन् काले नोपनीयन्ते।

## नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्विवहेयुः ॥ ५ ॥

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥

विष्णुः— षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे।
अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः ॥

आपस्तम्बः— गर्भाष्टमेषु ब्राह्मणमुपनयति।

बहुवचनं गर्भषष्ठ-गर्भसप्तमयोः प्राप्त्यर्थमिति सुदर्शनभाष्ये। केचित्तु विप्रस्य षष्ठं न मन्यन्ते। आपस्तम्बः—

अथ काम्यानि, सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकाममुपनयेत्। गौणकालमाह मनुः—

आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।
आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥

ज्योतिर्निबन्धे— अग्रजा बाहुजा वैश्याः स्वावधेरूर्ध्वमव्रताः।
अकृतोपनयाः सर्वे वृषला एव ते स्मृताः ॥" इति जगौ निर्णयसिन्धौ।

आ षोडशादित्यस्य व्याख्यायां कुल्लूकभट्टः—

आ षोडशादिति, अभिविधावाङ्, ब्राह्मणक्षत्रियविशामुक्ताष्टमैकादशद्वादशवर्षद्वैगुण्यस्य विवक्षितत्वात्। षोडशवर्षपर्यन्तं ब्राह्मणस्य सावित्र्यर्थं वचनम्, उपनयनं नातिक्रान्तकालं भवति। क्षत्रियस्य द्वाविंशतिवर्षपर्यन्तम्, वैश्यस्य चतुर्विंशतिवर्षपर्यन्तम्। अत्र मर्यादायामाङ् केचिद् व्याख्यापयन्ति यमवचनदर्शनात्। तथाच यमः—'पतिता यस्य सावित्री'त्यादाह। मेधातिथिविद्यारत्नौ तु गर्भादारभ्य षोडशवर्षपर्यन्तमभिविध्यर्थकमाऽऽङिति व्याचक्षाते। तत्र तत्त्वकृतां रघुनन्दनानां तर्कालङ्काराणां वा मतं श्रेय इति भगवन्तोऽनूचानाः प्रमाणयन्तु।

1. 'स्मृत्यन्तरम्' ख।

एतान् पतितसावित्रीकान् अचीर्णप्रायश्चित्तान्(A) नोपनयेयुः । [1]न चाध्यापयेयुः[1]* । न च याजयेयुः । अविशेषात् पाकयज्ञैरपीति । न च एभिः सह [2]विवहेयुः [3]विवाहं कुर्युः(B) । 'उपनयेयुरित्यादिषु[4] सर्वत्रैकवचने प्राप्ते बहुवचनं तत्कर्त्तृसंसर्गे प्रायश्चित्त[5]ज्ञापनार्थम् ।

A. व्रात्यस्तोमो नाम व्रात्यानां प्रायश्चित्तक्रतुः । तेन चोद्दालकव्रतादिना कृतप्रायश्चित्ता उपनीता धर्माधिकारिणो भवन्ति । इति मिताक्षराटीकायाम् । उद्दालकव्रतविधिस्तु—

अथ व्रात्यविधिं देवि प्रायश्चित्तन्तु यद् भवेत् ।
तत् शृणुष्व महेशानि सर्ववर्णे विशेषतः ॥
दशवर्षाणि पञ्चैव ब्राह्मणश्चोपनीयते ।
एकविंशतिवर्षाणि यावद्वर्षमुपावसत् ॥
अत ऊर्द्ध्वं पतत्येव सर्वधर्मबहिष्कृतः ।
गायत्रीपतिता व्रात्या व्रात्यस्तोमेन संस्कृताः ॥
अशक्तौ चैव यज्ञस्य चरेदौद्दालिकं व्रतम् ।
द्वौ मासौ यावकाहारो मासमेकं पयः पिबेत् ॥
दध्ना च पक्षमेकन्तु सप्तरात्रं घृतेन तु ।
अयाचितेन षड्रात्रं त्रिरात्रं वर्त्तयेज्जलैः ॥
अहोरात्रं न भुञ्जीत ततः संस्कारमर्हति ।
पतिता यस्य गायत्री दशवर्षाणि पञ्च च ॥
प्रायश्चित्तं भवेत् तस्य प्रोवाच भगवान् शिवः ।
सशिखं वपनं कृत्वा व्रतं कुर्यात् समाहितः ॥
हविष्यं भोजयेदन्नं ब्राह्मणान् सप्त पञ्च वा ।
एकविंशतिरात्रन्तु पिबेत् प्रसृतियावकम् ॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् ।
व्रतस्याऽऽचरणाशक्तौ कुर्याच्चान्द्रायणत्रयम् ॥
सावित्री पतिता येषां देशकालादिविप्लवात् ।

B. सूत्रे विवाहयेयुरिति पाठे एभिः सह विवाहं न कारयेयुरिति व्याख्येयमिति केचित् । अत्र च उपनयनप्रतिषेधादेव सर्वत्र प्रतिषेधे सिद्धे यदि केनचिल्लोभादज्ञानाद् वा उपनीताः स्युः, तथाऽपि नैवोत्तराणि कर्माणि पतितसावित्रीकाणां कुर्यादिति सर्वेषां नाध्यापयेयुरित्यादिपदानां ग्रहणम् इति भावः ।

1. नास्ति घ । 2. 'यवहरेयुः' ख, 'विवाहयेयुः' घ । 3. 'विवाहं न कुर्युः' ख । 4. 'नैनानुपनयेदिति' ख । 5. '-प्रदर्शनार्थम्' ख ।

तथाच स्मृत्यन्तरम्—

व्रात्याचार्यस्य भुक्त्वाऽन्नं कृच्छ्रपादेन शुध्यति।
यश्चोपनयते व्रात्यांस्त्रिभिः कृच्छ्रैः स शुध्यति(A)। इति।

**यदहरुपैष्यन्माणवको भवति प्रग एवैनं तदहर्भोजयन्ति कुशलीकारयन्त्याप्लावयन्त्यलंकुर्वन्त्यहतेन वाससा-च्छादयन्ति ॥ ६ ॥**

यदहः यस्मिन्नहनि (B)उपैष्यन् उपनयनं कारयिष्यन् माणवको 'नुद्रयुक्तो'* भवति

---

चान्द्रायणं चरेद् यस्तु व्रतान्ते धेनुमुत्सृजेत्।
क्षीरं वाऽपि पिबेन्मासं दद्याद् गां वत्सशालिनीम् ॥

इति मत्स्यसूक्ते प्रायश्चित्तप्रकरणेऽष्टात्रिंशपटले।

A. प्रमाणीकृतं वचनमिदं रघुनन्दनेनापि संस्कारतत्त्वे।

B. उपनयनदिनमाह रघुनन्दनः संस्कारतत्त्वे—"भुजबलभीमकृत्यचिन्तामण्योः—

स्वातीशक्रधनाश्विमित्रकरभे पौष्णेज्यचित्राहरि-
ष्विन्दौ तोयपतौ भगे दितिसुते आद्रद्वये सागरे।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते चन्द्रे च तारे शुभे
कर्त्तव्यं व्रतकर्म मङ्गलतिथौ वाराः सितार्केज्यकाः ॥

दीपिकायाम्—

जीवार्केन्दू डुशुद्धौ हरिशयनबहिर्भास्करे चोत्तरस्थे
स्वाध्याये वेदवर्णाधिप इह शुभदे क्षौरभे नाविदौ च।
शुक्रार्केज्यर्क्षलग्ने रविमदमतिथिं प्रोज्झ्य षष्ठाष्टमेन्दुं
नो जीवास्तास्तिचारेऽर्कसितगुरुदिने कालशुद्धौ व्रतं स्यात् ॥

कृत्यचिन्तामणौ—

माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः।
चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥
ज्यैष्ठे गहननीतिज्ञ आषाढे क्रतुभाजनः।
शेषेष्वन्येषु रात्रिः स्यान्निषिद्धं निशि च व्रतम् ॥

राजमार्तण्डे— पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति।

आश्वलायनः—

उदगयने आपूर्यमाणपक्षे कल्याणे नक्षत्रे चूडोपनयनगोदानविवाहाः।

---

1. 'नुद्गतो' ख, चिह्नितांशो नास्ति च।

वृद्धगर्गः—

स्मृतिभूक्तानध्यायान् सप्तमीञ्च त्रयोदशीम् ।
पक्षयोर्माघमासस्य द्वितीयां परिवर्जयेत् ॥

श्रीपतिव्यवहारसमुच्चये—

कार्त्तिकस्याऽऽश्विनस्यापि फाल्गुनाषाढयोरपि ।
कृष्णपक्षे द्वितीयायामनध्यायं विदुर्बुधाः ॥

भुजबलः—

चैत्रकृष्णद्वितीयायां तिसृष्वेवाष्टकासु च ।
मार्गे च फाल्गुने चैव आषाढे कार्त्तिके तथा ॥
पक्षयोर्माघमासस्य द्वितीयां परिवर्जयेत् ।
नाकालवृष्टौ कुर्वीत व्रतबन्धशुभक्रियाम् ॥

उपनयने उत्तरायणशुक्लपक्षयोर्विधानात् कार्त्तिकादौ कृष्णपक्षे च द्वितीयाया निषेधः पुनः संस्कारमर्हतीत्युक्तप्रायश्चित्तरूपोपनयनपरः । वैश्योपनयनपरश्च । तथाच गर्गः—

विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे ।
दक्षिणे च विशां कार्या नानध्याये न संक्रमे ।
अनध्यायेऽपि कुर्वीत यस्य नैमित्तिकं भवेत् ॥

अपिना दक्षिणायनकृष्णपक्षयोः समुच्चयः । नैमित्तिकं प्रायश्चित्तरूपम् । चैत्रशुक्लतृतीया आषाढशुक्लदशमी मन्वन्तरादित्वेन निषिद्धा वैशाखशुक्लतृतीया युगादित्वेन निषिद्धा ।

षष्ठ्यामशुचिरग्भार्यो रिक्तासु बहुदोषभाक् ।

सामगानां कुजवारेऽप्युपनयनं शाखाधिपत्वात् । तथाच—

शाखाधिपे बलिनि केन्द्रगतेऽथ वाऽस्मिन् वारेऽस्य चोपनयनं कथितं द्विजानाम् ।
नीचस्थितेऽरिगृहगेऽथ पराजिते वा जीवे भृगावुपनयः स्मृतिकर्महीनः ।

कृत्यचिन्तामणौ—

"जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा ।
व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविशेषैः प्रथितः पृथिव्याम् ॥
अस्तं गते दैत्यगुरौ गुरौ वा ऋक्षेऽपि वा पापयुतेऽप्यनुक्ते ।
व्रतोपनीतो दिवसैः प्रणाशं प्रयाति देवैरपि रक्षितो यः ॥" इति ।

निर्णयसिन्धौ कमलाकरस्तु—"गर्गः—

विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् ।
माघादिशुक्लान्तिकपञ्चमासाः साधारणा वा सकलद्विजानाम् ॥

हेमाद्रौ ज्योतिषे—माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते ।

कालादर्शे वृद्धगार्ग्यः—

माघादिमासषट्के तु मेखलाबन्धनं मतम् ।
चूडाकरणमन्नं च श्रावणादौ विवर्जयेत् ॥

मैत्रेयसूत्रेऽपि—

वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण माघादिषण्मासा वा सर्ववर्णानामेतदुदगयनमनयो-विकल्प इति ।

पारिजाते बृहस्पतिः—

झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद् विवाहोपनयादिषु ॥

वृत्तशते— न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीयदिने विदध्यात् ।
ज्येष्ठं न मासि प्रथमस्य सूनोस्तथा सुताया अपि मङ्गलानि ॥

राजमार्तण्डः—

जातं दिनं दूषयते वसिष्ठो ह्यष्टौ च गर्गो नियतं दशात्रिः ।
जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासि ॥
जन्ममासे तिथौ भे च विपरीतदले सति ।
कार्यं मङ्गलमित्याहुर्गर्गभार्गवसौनकाः ॥
जन्ममासनिषेधेऽपि दिनानि दश वर्जयेत् ।
आरभ्य जन्मदिवसाच्छुभाः स्युस्तिथयोऽपरे ॥

ग्रन्थान्तरे— व्रते जन्मत्रिरवारिस्थो जीवोऽपीष्टोऽर्चनात् सकृत् ।
शुभोऽतिकाले तूर्याष्टव्ययस्थो द्विगुणार्चनात् ॥
शुद्धिर्नैव गुरोर्यस्य वर्षे प्राप्तेऽष्टमे यदि ।
चैत्रे मीनगते भानौ तस्योपनयनं शुभम् ॥
जन्मभादष्टमे सिंहे नीचे वा शत्रुभे गुरौ ।
मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ ॥

नारदः— बालस्य बलहीनोऽपि शान्त्या जीवो बलप्रदः ।
यथोक्तवत्सरे कार्यमनुक्ते चोपनायनम् ॥

ज्योतिर्निबन्धे नृसिंहः—

तृतीया पञ्चमी षष्ठी द्वितीया चापि सप्तमी ।
पक्षयोरुभयोश्चैव विशेषेण सुपूजिताः ॥
धर्मकामौ सिते पक्षे कृष्णे च प्रथमा तथा ।
शुक्लत्रयोदशीं केचिदिच्छन्ति मुनयस्तथा ॥

टोडरानन्दे वशिष्ठः—नैमित्तिकमनध्यायं कृष्णे च प्रतिपद् दिनम् ।

मेखलाबन्धने शस्तं चौले देवव्रतेष्वपि ॥

प्रशस्ता प्रतिपत् कृष्णे न पूर्वापरसंयुता ।

एतदतीतकालस्याऽऽर्तस्य बटोरुपनयनविषयम् ।

प्रशस्ता प्रतिपत् कृष्णे कदाचिच्छुभगे विधौ ।

चन्द्रे बलयुते छन्दवर्णानामपि लङ्घने ॥

इति व्यासोक्तेरित्याहुः ; एवं सप्तम्यपि, तस्या गलग्रहत्वोक्तेः ।

बृहस्पतिः— शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।

तथा— मिथुने संस्थिते भानौ ज्येष्ठमासो न दोषकृत् ।

मदनरत्ने नारदः— विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।

अपराह्णे चोपनीतः पुनः संस्कारमर्हति ॥

अपराह्णस्त्रिधाविभक्तदिनतृतीयांश इत्युक्तं तत्रैव । वसन्ते गलग्रहो न दोषायेत्यर्थः ।

नारदः— कृष्णपक्षे चतुर्थी च सप्तम्यादि दिनत्रयम् ।

त्रयोदशीचतुष्कञ्च अष्टावेते गलग्रहाः ॥

वशिष्ठः— पापांशकगते चन्द्रे अरिनीचस्थितेऽपि च ।

अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥

अनध्यायस्य पूर्वेद्युस्तस्य चैवापरेऽहनि ।

व्रतबन्धं विसर्गञ्च विद्यारम्भं न कारयेत् ॥

राजमार्तण्डः— आरम्भानन्तरं यत्र प्रत्यारम्भो न सिध्यति ।

गर्गादिमुनयः सर्वे तमेवाऽऽहुर्गलग्रहम् ॥

ज्योतिर्निबन्धे— अष्टकासु च सर्वासु युगमन्वन्तरादिषु ।

अनध्यायं प्रकुर्वीत तथा सोपपदास्वपि ॥

सोपपदास्तु स्मृत्यर्थसारे—

सिता ज्यैष्ठे द्वितीया च आश्विने दशमी सिता ।

चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥

एवं प्रदोषलक्षणमाह गोभिलः—

षष्ठी च द्वादशी चैव अर्धरात्रोनना़डिका ।

प्रदोषमिव कुर्वीत तृतीया तूनयामिका ॥

ज्योतिर्निबन्धे व्यासः—

या चैत्रवैशाखसितातृतीया माघस्य सप्तम्यथ फाल्गुनस्य ।

कृष्णे तृतीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥

अत्रापि कृष्णप्रतिपद्वर्ज्ज्ञेयम्। यत्तु बृहद्गार्ग्यः—

अनध्याये प्रकुर्वीत यत्तु नैमित्तिको भवेत्।

सप्तमी माघशुक्ले तु तृतीया चाक्षया तथा॥

बुधत्रयेऽम्बुवाराश्च शस्तानि व्रतबन्धने।

इति तत्प्रायश्चित्तार्थोपनयनविषयम्।

स्वाध्यायविधुरो यस्तः कृष्णप्रतिपदादयः।

प्रायश्चित्तनिमित्ते तु मेखलाबन्धने मताः॥ इति तेनैवोक्तेः।

निर्णयामृतकालादर्शौ—

यद्यप्ययोपेतपूर्वस्येत्युक्त्वा अनिरुक्तं परिदानं कालश्चेत्याश्वलायनेन पुनरुपनयने कालनियम उक्तस्तथाऽपि निमित्तान्तरमेव सः। तदानीमकरणे तु पूर्वोक्तकालो ज्ञेयः। प्रतिवेदमुपनयने कालानियम इति तु युक्तम्। गर्गः—

ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे।

व्रते दशाहानि वदन्ति तज्ज्ञास्त्र्योदशाहानि वदन्ति केचित्॥

सङ्कटे तु चण्डेश्वरः—दाहे दिशां चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे च।

केतौ तथोल्कांशुकणप्रपाते त्र्यहं न कुर्याद् व्रतमङ्गलानि॥

तत्रैव— वेदव्रतोपनयने स्वाध्यायाध्ययने तथा।

न दोषो यजुषां सोपपदास्वध्ययनेऽपि च॥

हेमाद्रौ ज्योतिषे—हस्तत्रये पुष्यधनिष्ठयोश्च पौष्णादितिसौम्यादिति विष्णुभेषु।

शस्ते तिथौ चन्द्रबलेन युक्ते कार्यो द्विजानां व्रतबन्धमोक्षौ॥

ज्योतिर्निबन्धे नारदः—

श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च।

विष्णुत्रयाश्विमित्राब्जयोनिभान्यौपनायने॥

बृहस्पतिः— त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे।

त्वाष्ट्रे सौम्यपुनर्वस्वोरुत्तमं ह्युपनायनम्॥

ज्योतिर्निबन्धे— पूर्वाहस्तत्रये सार्पश्रुतिमूलेषु बह्वृचाम्।

यजुषां पौष्णमैत्रार्कादित्यपुष्यध्रुवाश्रुवैः॥

सामगानां हरीशार्कवसुपुष्योत्तराश्विभैः।

धनिष्ठादितिमैत्रार्केन्द्विन्दुपौष्णेष्वथर्वणाम्॥

राजमार्तण्डस्तु ब्राह्मणस्य पुनर्वसुं निषेधति—

ताराचन्द्रानुकूलेषु ग्रहाब्देषु शुभेष्वपि।

पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति॥

ज्योतिर्निबन्धे नारदः—

सर्वेषां जीवशुक्रज्ञवाराः प्रोक्ता व्रते शुभाः ।
चन्द्रार्कौ मध्यमौ ज्ञेयौ सामबाहुजयोः कुजः ॥
शाखाधिपतिवारश्च शाखाधिपबलं तथा ।
शाखाधिपतिलग्नं च दुर्लभं त्रितयं व्रते ॥

शाखाधिपाश्च रत्नसंग्रहे—

ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः ।
जीवसितौ विप्राणां क्षत्रस्याऽऽरोष्णगू विशां चन्द्रः ॥

पारिजाते बृहस्पतिः—

बह्वृचानां गुरोर्वारे यजुर्वेदजुषां बुधे ।
सामगानां धरासूनोरथर्वविदुषां रवेः ॥

[illegible]:— व्रतेऽह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति ।
तद्दिने स्यादनध्यायो व्रतं तत्र विवर्जयेत् ॥

ज्योतिर्निबन्धे—

नान्दीश्राद्धं कृतं चेत् स्यादनध्यायस्त्वकालिकः ।
तदोपनयनं कार्यं वेदारम्भं न कारयेत् ॥

एतद् बह्वृचातिरिक्तानाम्, तेषां तद्दिने वेदारम्भाभावात् । अतस्तेषामुपनयनं न भवत्येव ; ऐतरेयोपनिषदि मृगादिज्येष्ठान्तं वर्षर्तुः, तं विना वर्षादौ त्रिरात्रमनध्याय इति वेदभाष्ये उक्तम्, एतच्च प्रातः स्तनिते, सायं स्तनिते तु दिवैव चरुं श्रपयित्वा सायं सन्ध्योत्तरं होमं कुर्यात् ।

न सन्ध्यागर्जिते काले न वृष्ट्युत्पातदूषिते ।
ब्रह्मौदनं पचेदग्नौ पक्वमन्नं न दुष्यति ॥

इति संग्रहोक्तेः प्रयोगरत्ने भट्टचरणैः ।

अत्र शान्तिरप्युक्ता नृसिंहप्रसादे—

ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं यदि ।
तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् ॥
तस्य शान्तिप्रकारं तु वक्ष्ये शास्त्रानुसारतः ।
प्रधानं पायसं साज्यं द्रव्यं शान्तिमखे भवेत् ॥
सूक्तं बृहस्पतेर्विद्वान् पठेत् प्रज्ञाविवृद्धये ।
गायत्री चैव मन्त्रः स्यात् प्रायश्चित्तं तु सर्पिषा ॥
धेनुं सवत्सकां दद्यादाचार्याय पयस्विनीम् ।
ब्राह्मणान् भोजयेत् पश्चात् ततो ब्रह्मौदनं चरेत् ॥

उपनयने चाधिकारिणो माधवीये वृद्धमनुनोक्ताः—

पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपनायेऽधिकारी स्यात् पूर्वाभावे परः परः ॥

प्रयोगरत्ने— पितैवोपनयेत् पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥

पितेति विप्रपरम्, न क्षत्रियादेः, तेषां पुरोहित एव, उपनयनस्य दृष्टार्थत्वात्, तेषां चाध्यापनेऽधिकारात् । अत्र पितृव्यस्य ज्येष्ठभ्रात्रभावेऽधिकारः,

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।

इति याज्ञवल्क्योक्तेः । तेनेदमविभक्तपरम्, पूर्वं तु विभक्तपरम्, मातृ रजोदोषे तु चूडाप्रकरणे प्रागुक्तम् ।

षण्डमूकादीनां तु विशेषः—प्रयोगपारिजाते ब्राह्मे—

"ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ।
तस्माच्च षण्डबधिरकुब्जवामनपङ्गुषु ।
जडगद्गदरोगार्तशुष्काङ्गिविकलाङ्गिषु ॥
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।
ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ॥
मत्तोन्मत्तौ न संस्कार्याविति केचित् प्रचक्षते ।
कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः ॥
तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा ।
संस्कारमन्त्रहोमादीन् करोत्याचार्य एव तु ॥
उपनेयांश्च विधिवदाचार्यस्य समीपतः ।
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ॥
कन्यास्त्रीकरणादन्यत् सर्वं विप्रेण कारयेत् ।
एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ ॥" इति ।

मदनपारिजातेऽत्र विशेषः—"तथा मासविशेषादपि फलविशेषः, तत्र ज्योतिःसारे—

माघे मासि महाधनो धनपतिः प्राज्ञो बली फाल्गुने
मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः ।
वैशाखे सुभगः सुखी पटुमतिर्ज्यैष्ठे वरिष्ठो बुध
आषाढेऽपि महाविपक्षविजयी ख्यातो महापण्डितः ॥

तथा नक्षत्रादिविशेषा अपि—

हस्तत्रये दैत्यरिपुत्रये च शाक्रेन्दुपुष्याश्विनिरेवतीषु ।
वारेषु शुक्रार्कबृहस्पतीनां हिताबुबन्धी द्विजसूनुबन्धः ॥

तृतीयैकादशी ग्राह्या पञ्चमी दशमी तथा ।
द्वितीयायाञ्च मेधावी भवेद् दर्पबलान्वितः ॥
रिक्तायामर्थहानिः स्यात् पौर्णमास्यां तथैव च ।
प्रतिपद्यपि चाष्टम्यां कुलबुद्धिविनाशकृत् ॥
सप्तम्यामष्टम्याञ्च प्रतिपदि रिक्ताचतुर्दश्याम् ।
आयुर्विद्यानाशो व्रतबन्धे पञ्चदश्यां वा ॥
न च षष्ठ्यामथाष्टम्यां पञ्चदश्यां न पर्वणि ।
प्रतिपत्सु न कर्तव्यो न विष्टिकरणे तथा ॥
रिक्तासु च न कर्तव्यस्त्र्यहस्पृग्दिवसे तथा ।
न विपज्जन्मतारासु नैधने प्रत्यरौ तथा ॥
सम्पत्करे तथा क्षेमे साधके मित्रसंज्ञके ।
मित्रं परममित्रञ्च ताराः सर्वत्र शोभनाः ॥
मेषे भवति हरायो धीमान् गवि रोगशोकपरिहीनः ।
गन्धवान् मन्मथलग्ने विधुरोऽधीरः कुलीरे च ॥
करिकुलवैरिणि बलवान् विद्यावान् नैव योषिति क्रूरः ।
सुभगः सुखोपभोक्ता तौलिनि कीटे विनाशमुपयाति ॥
धनुषि धनाढ्यः श्रेयान् यादसि स घटे धनैः परित्यक्तः ।
षट्कर्माभिरतः स्यान्मीने धनवान् प्रवक्ता च ॥
वृषभश्च तुला कन्या ब्राह्मणानामुदाहृताः ।
सिंहो धन्वी तथा मीनः क्षत्रियाणां प्रकीर्तितः ।
मुरजं तथा कर्कटको वैश्यानां परिकीर्तितः ॥
कुम्भाश्चाकालवर्षे च व्रतोपनयनं द्विजः ।
नानध्याये न भूकम्पे निर्घाते न गलग्रहे ॥" इति

वटुबन्धनेऽपि मुहूर्तमञ्जर्याम्—

"हस्ताश्विनीपुष्यभुजङ्गमार्द्रामूलत्रिपूर्वादितिरेवतीषु ।
श्रुतित्रये स्वातिमृगानुराधाचित्रासु सार्के सदहे व्रतं सत् ॥
द्वितीया च तृतीया च दशम्येकादशी तथा ।
द्वादशी पञ्चमी चैव व्रतबन्धे शुभप्रदा ॥" इति

मुहूर्तचिन्तामणौ विशेषस्तु—

विप्राणां व्रतबन्धनं निगदितं गर्भाज्जनेर्वाऽष्टमे
वर्षे वाऽप्यथ पञ्चमे क्षितिभुजां षष्ठे तथैकादशे ।

वैश्यानां पुनरष्टमेऽप्यथ पुनः स्याद् द्वादशे वत्सरे
कालेऽथ द्विगुणे गते निगदिते गौणं तदाहुर्बुधाः ॥

क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेऽर्कविद्गुरुसितेन्दुदिने व्रतं सत् ।
द्वित्रीषुरुद्ररविदिक्प्रमिते तिथौ च कृष्णादिमत्रिलवकेऽपि न चापराह्णे ॥

करीज्यचन्द्रलग्नपा रिपौ मृतौ व्रतेऽधमाः ।
व्ययेऽब्जभार्गवौ तथा तनौ मृतौ सुते खलाः ॥

व्रतबन्धेऽष्टषड्रिष्फवर्जिताः शोभनाः शुभाः ।
त्रिषडाये खलाः पूर्णो गोकर्कस्थो विधुस्तनौ ॥

विप्राधीशौ भार्गवेज्यौ कुजार्कौ राजन्यानामोषधीशो विशां च ।
शूद्राणां ज्ञश्चान्त्यजानां शनिः स्याच्छाखेशाः स्युर्जीवशुक्रारसौम्याः ॥

शाखेशवारतनुवीर्यमतीव शस्तं शाखेशसूर्यशशिजीवबले व्रतं सत् ।
जीवे भृगौ रिपुगृहे विजिते च नीचे स्याद् वेदशास्त्रविधिना रहितो व्रतेन ॥

जन्मर्क्षमासलग्नाद्यौ व्रतं विद्याधिको व्रती ।
आद्यगर्भेऽपि विप्राणां क्षत्रादीनामनादिमे ॥

षट्कन्या जन्मराशेस्त्रिकोणायद्विसप्तगः ।
श्रेष्ठो गुरुः स्वषट्त्र्याद्ये पूजयाऽन्यत्र निन्दितः ॥

प्राच्यास्तु गोचरबलाभावेऽष्टवर्गबलमाहुः—राजमार्तण्डः—

अष्टवर्गविशुद्धेषु गुरुशीतांशुभानुषु ।
व्रतोद्वाहौ तु कर्तव्यौ गोचरं न कदाचन ॥ इति ।

अन्यच्च— अष्टवर्गेण ये शुद्धास्ते शुद्धाः सर्वकर्मसु ।
सूक्ष्माऽष्टवर्गसंशुद्धिः स्थूला शुद्धिस्तु गोचरे ॥

गुरुदोषापवादमाह—

स्वोच्चे स्वभे स्ववर्गे वा स्वांशे वर्गोत्तमे गुरुः ।
रिष्फाष्टतुर्यगोऽपीष्टो नीचारिस्थः शुभोऽप्यसत् ॥

व्रतबन्धे वर्ज्यानाह—

कृष्णे प्रदोषेऽनध्याये शनौ निश्यपराह्णके ।
प्राक् सन्ध्यागर्जिते नेष्टो व्रतबन्धो गलग्रहे ॥

क्रूरो जडो भवेत् पापः पटुः षट्कर्मकृद् बटुः ।
यज्ञार्थभाक् तथा मूर्खो रव्याद्यंशे तनौ क्रमात् ॥

विद्यानिरतः शुभराशिलवे पापांशगते हि दरिद्रतरः ।
चन्द्रे स्वलवे बहुदुःखयुतः कर्णादितिभे धनवान् स्वलवे ॥

माणवक इत्यनधीतवेदस्येयं संज्ञा। तथा चोक्तम्—

अनृचो माणवको ज्ञेयः 'एणः [2]कृष्णमृगः स्मृतः।

रुरुर्गौरमृगः प्रोक्तस्ताम्बलः शण उच्यते'*(A) ॥ इति।

कथं नाम? यस्मिन्नहनि उपनयनमस्य क्रियते [3]"तदहस्तस्मिन्नेवाहनि"*। [4]'एवं माणवकं प्रगे एव प्रातरेव भोजयन्ति तृप्तं कुर्वन्ति(B)। बहुवचनात् य [5]एव कश्चित्।

---

राजसेवी वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः।

प्राज्ञोऽर्थवान् म्लेच्छसेवी केन्द्रे सूर्यादिखेचरैः॥

शुक्रे जीवे तथा चन्द्रे सूर्यभौमार्किसंयुते।

निर्गुणः क्रूरचेष्टः स्यान्निर्घृणः संयुते पटुः॥

विधौ सितांशगे सिते त्रिकोणगे तनौ गुरौ।

समस्तवेदविद् व्रती धर्मांशगेऽतिनिर्घृणः॥

वेदविशेषेण नक्षत्राणि—

वेदक्रमाच्छशिशिवाहिकरत्रिमूलपूर्वाश्च पौष्णकरमैत्रमृगादितीज्ये।

श्रौवेषु चाश्विवसुपुष्यकरोत्तरेशकर्णे मृगान्त्यलघुमैत्रधनादितौ सत्॥

स्मृत्यन्तरे च—

मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा।

ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः॥

पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे।

श्रौवेषु च प्रशस्तं स्याद् यजुषां मौञ्जिबन्धनम्॥

पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम्।

प्रशस्तं मेखलाबन्धे वटूनां सामगायिनाम्॥

मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम्।

अथर्वपाठिनां शस्तो भगणोऽयं व्रतार्पणे॥ इति।

A. कर्मप्रदीपः ३।८।११। अत्र 'ताम्बलः शण उच्यते' इति चन्द्रकान्तधृतपाठः।

B. सूत्रस्यास्य व्याख्यायां रघुनन्दनस्तु—प्रगे प्रातः, तत्र—

'चतस्रो घटिकाः प्रातररुणोदय उच्यते' इति ब्रह्मवैवर्तपुराणोक्तम्।

---

1. नास्ति घ। 2. 'कृष्ण-' क-घ। 3. 'तस्मिन्नहनि' घ-ग। 4. 'एवं' ख। 5. 'एव' नास्ति ख।

[1]कुशली कारयन्ति[1]* वपनं कारयन्ति [2]आप्लावयन्ति स्नपयन्ति। अलङ्कुर्वन्ति कुण्डल-केयूरकङ्कणादिभिः। अहतेन अमृदितेन वाससा वक्ष्यमाणेन आच्छादयन्ति। वाससा इत्येकवचनात् अधरीयमेतत्। उत्तरीयञ्चोपरिष्टादजिनं वक्ष्यति। विसमास-करणान्नैव एव क्रम एतेषाम्। [3]कुतः? ज्योतिःशास्त्रेण [4]सह विरोधात्, तत्र हि भुक्तस्य क्षुरकर्म प्रतिषिद्धम्—

न[5] स्नातमात्रगमनोन्मुखभूषितानां
नाभ्यक्तभुक्तरणकालनिरासनानाम्।
सन्ध्यानिशाकुजदिने च तिथौ च रिक्ते
क्षौरं हितं न नवमेऽह्नि न चापि विष्ट्याम्(A)॥ इति।

तस्मात् पूर्वं [6]तावत् कुशलीकारयन्ति, तत आप्लावयन्ति, [7]ततो भोजयन्ति [8]इति। उपवीत[9]मप्येतस्मिन्नेव [10]क्रमे देयम्[10]*। [11]कुतः? यज्ञोपवीतिना आचान्तोदकेन कृत्यमिति परिभाषासामर्थ्यात्।(B) आचमनं तर्हि विधिपूर्वकमेव भवति। [12]इह यज्ञा-

---

अत्र घटिका दण्डः—त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते॥

इति तत्रैवोक्तेः। भोजयन्ति क्षीरादिकमिति शेषः।

तथाच ब्रह्मचारिकाण्डे कल्पतरुधृतशङ्खलिखितौ—

पयोयवाग्वामिक्षाहाराः क्रमशो द्विजातीनाम्।

इत्याह संस्कारतत्त्वे।

A. प्रमाणीकृतं वचनमिदं रघुनन्दनेनापि ज्योतिस्तत्त्वे 'नित्यक्षौरे तु राजमार्तण्ड' इत्युपोद्घातेन। अत्र तर्कालङ्कारः—"वयन्तु पश्यामः असमासकरणम् एकैकक्रियासमापना-नन्तरमपरापरा क्रिया यथा स्यादित्येवमर्थम्। तेन पाठक्रमादेवामूषां क्रियाणां क्रमः प्रत्येतव्यः। ज्योतिःशास्त्रनिषेधस्तु नात्र निविशते, कुतः? आचार्यसूत्रावगतक्रमविरोधात्। सामान्य-शास्त्रस्य विशेषेतरपरतायाः न्याय्यत्वाच्च। अत एव समावर्तनेऽप्यमुमेव क्रममभूषां क्रियाणां सूत्रयिष्यती"त्याह स्वभाष्ये। पूर्वाह्णोदये प्राक्सूर्योदयात् प्रातर्माणवकस्य भोजनं देशविशेषेषु प्रसिद्धमिति वयं तर्कालङ्कारमतमाद्रियामहे इति।

B. गृह्यम् सू० १।१।२। (पृ० ९)। अत्र तर्कालङ्कारः—"यज्ञोपवीतमपीदानीमेव देयम्।

---

1. नास्ति घ। 2. 'चाप्लावयन्ति' नास्ति घ। 3. 'कुतः' नास्ति घ। 4. 'सह' नास्ति ग। 5. 'स्नानमात्र-' ख। 6. 'तावत्' नास्ति घ। 7. 'ततो भोजयन्ति' नास्ति ग। 8. 'इति' नास्ति क-ग-घ। 9. '-निवीत-' क-ग। 10. 'च कर्मणि स्यात्' क-ग, 'च क्रमेण स्यात्' घ। 11. 'कुतः' नास्ति घ। 12. नास्ति ग-घ।

पवीतमन्त्रानुपदेशात् '[1]श्रुत्यन्तरादुपादानात्'[12]*। "[2]यज्ञोपवीतमन्त्रः श्रुत्यन्तरे— "यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामी"ति(A)।

वाससाच्छादयन्ति इत्युक्तम्[2]*, कानि पुनस्तानि ब्राह्मणादीनां वासांसीत्यत आह-

**क्षौमशाणकार्पासौर्णान्येषां वसनानि ॥ ७ ॥**

क्षुमा अतसी, तस्या इदं क्षौमम्। शणस्येदं शाणम्। [3]कर्पासस्येदं कार्पासम्। ऊर्णाया इदम् और्णम्। एतान्येषां यथाक्रमेण वसनानि। ननु ब्राह्मणादयस्त्रयो ब्रह्मचारिणः प्रकृताः। चत्वारि चेमानि वसनानीति, अत्र सन्देहः। सत्यम्। किन्तु एतदुपरिष्टादयमेव वक्ष्यति आद्यस्य वासोद्वयस्य ब्राह्मणविषयत्वं विकल्पेन, "क्षौमं शाणं वा वसनं ब्राह्मणस्ये"ति ( गो० सू० २।१०।११ )।

**ऐणेयरौरवाजान्यजिनानि ॥ ८ ॥**

'एणस्यैतदैणेयम्'[4]*,(B) 'एणः [5]कृष्णमृगः स्मृतः', [6]रुरोरिदं रौरवम्, रुरुर्गौर-

कुतः ? यज्ञोपवीतिनाचान्तोदकेन कृत्यमिति वचनाद् इति केचित्। तदसङ्गतम्, प्रमाणाभावात्, यज्ञोपवीतिना कृत्यमिति वचनञ्च पुरुषार्थस्यैव सतो यज्ञोपवीतस्य कर्मार्थतामात्रमुपदिशति न तु तदपि विदधाति इति स्वल्पबोधाम। किन्तु द्विराचमनमिदानीं कर्तव्यम्। छुत्वा भुक्त्वा क्षुत्वा स्नात्वा विपरिधाय चेति वचनात्। यज्ञोपवीतधारणक्रमं परतो वक्ष्यामः" इत्याह स्वभाष्ये। विवेचयिष्यते चेदमुपरिष्टान्मेखलाधारणसूत्र( सू० २।१०।३३ )पाददीकायाम्।

A. शाङ्खायनगृह्यसूत्रे २।२।३। मन्त्रस्यास्य व्याख्या—हे सूत्र, त्वं यज्ञोपवीतं यज्ञेन यज्ञकर्मणा उप अधिकं वेति शोभते इति यज्ञोपवीतं तथाभूतमसि भवसि, त्वा त्वां यज्ञस्य यज्ञपुरुषस्य सम्बन्धिना उपवीतेन, उपनह्यामि अधिकं बध्नामि एकीभूतं करोमि। इति।

B. अत्र निर्णयसिन्धौ कमलाकरः—"यद्यपि ऐणेयशब्देन मृगीचर्मैवोच्यते एण्या ढञ् इति पाणिनिस्मृतेः।

ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु।

इत्यमरकोशाच्च। तथाऽपि 'कृष्णरुरुबस्ताम्यजिनानी'ति शङ्खोक्तेः 'सर्वेषां वा रौरवम्' इति यमोक्तेश्च मृगचर्मणा सह विकल्पो ज्ञेयः। वस्त्राजिनयोस्तु विकल्पः कार्पासं वा विकृतम् इति गौतमोक्तेः" इत्याह। वस्तुतस्तु

ऐणेयमेणचर्माद्यौ रतबन्धान्तरे स्त्रियाः।

इति विश्वकोशाद् भाष्योक्तमेव साधु इत्यवगन्तव्यम्।

1. 'श्रुत्यन्तरा-' ख। 2. नास्ति क-ग। 3. 'कार्पास-' ख। 4. 'एणः श्यामवर्णमृगस्तस्येद-मैणेयम्' घ। 5. 'श्यामा-' क-घ। 6. 'रुरुर्गौरमृगस्तस्येदं रौरवम्' घ।

मृगः<sup>d</sup>*, [1]अजस्येदम् आजम् अजश्छागः[1]*। अजिनं चर्म, एतान्येषां यथाक्रमेणाजिनानि(A)।

मुञ्जकाशताम्बल्यो रशनाः(B) ॥ ९ ॥

मुञ्जकाशौ प्रसिद्धौ, तम्बलः शण [2]उच्यते।

तथाच मनुः—

मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी(C) ॥ इति।

मौञ्ज्याद्या यथाक्रमेणैषां रशना मेखलाः।

पार्णवैल्वाश्वत्था दण्डाः ॥ १० ॥

[3]पर्णः पलाशः, विल्वाश्वत्थौ प्रसिद्धौ। [4]पालाशाद्य एषां यथाक्रमेण दण्डाः(D)।

---

A. उत्तरीयाणीति यावत्। वसनाजिनविषये विशेषो मनुसंहितायाम्—

कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥ २।४१

व्याख्यायाञ्चास्य कुल्लूकभट्टः—कार्ष्ण इति विशेषानभिधानेऽपि मृगविशेषो लब्धाह्चर्यात्। 'हारिणमैणेयं वा कार्ष्णं वा ब्राह्मणस्य' इत्यापस्तम्बवचनाच्च कृष्णमृगो गृह्यते ; कृष्णमृगरुरुच्छागचर्माणि ब्रह्मचारिण उत्तरीयाणि वसीरन् ; चर्माण्युत्तरीयाणि इति गृह्यवचनात्। तथा शणक्षुमामेषलोमभवान्यधोवसनानि ब्राह्मणादयः क्रमेण परिदधीरन् इत्याह। एवञ्चाधोवसनविषये गोभिलाचार्यस्य मनुना मतविरोधो द्रष्टव्यः सुधीभिरिति।

B. रघुनन्दनस्तु मुञ्जकाशतासून्यो रसना इति पठति, व्याकरोति च "मुञ्जः शरः, तासुः शणस्तद्भवा रसना मेखला तासूनी" इति।

C. मनुसंहिता २।४२। अस्य व्याख्यायां कुल्लूकभट्टः—मुञ्जमयी त्रिगुणा समगुणत्रयनिर्मिता सुखस्पर्शा ब्राह्मणस्य मेखला कर्तव्या, क्षत्रियस्य मूर्वामयी ज्या धनुर्गुणरूपा मेखला, अतो ज्यात्वविनाशापत्तेस्त्रिवृत्त्वं नास्तीति मेधातिथिगोविन्दराजौ। वैश्यस्य शणसूत्रमयी अत्र त्रैगुण्यमनुवर्तत एव, 'त्रिगुणाः प्रदक्षिणा मेखला, इति सामान्येन प्रचेतसा त्रैगुण्याभिधानात् इत्याह।

D. भवति चात्र मनुसंहिता प्रमाणम्—

---

1. 'चजम्छागलस्येदमाजम्' च। 2. 'उच्यते' नास्ति घ। 3. 'पर्णः' नास्ति क-ग-घ। 4. 'पलाशादयः' ख।

दण्डो 'दधातेर्धारयतिकर्मणः। दण्डप्रमाणं लक्षणञ्च स्मृत्यन्तरोक्तं द्रष्टव्यम्—

केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः।
ललाटसम्मितो राज्ञः स्यात् तु नासान्तिको विशः॥
ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः।
अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः॥(A) इति।

**क्षौमं शाणं वा वसनं ब्राह्मणस्य कार्पासं क्षत्रियस्याऽऽविकं वैश्यस्य ॥ ११ ॥**

उक्तमधस्तादेवैतत्।

**एतेनैवेतराणि द्रव्याणि व्याख्यातानि ॥ १२ ॥**

एतेनैवानुसारेण इतराणि द्रव्याणि 'अजिनरशनादण्डाख्यानि व्याख्यातानि उक्तानि यथाक्रमेण।

**अलाभे वा सर्वाणि सर्वेषाम् ॥ १३ ॥**

स्वस्य स्वस्यालाभे सर्वाणि क्षौमादीनि सर्वेषां ब्राह्मणादीनां यथा'लाभं भवन्ति।

---

ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ।
पैल्वोदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः॥

व्याख्यायामस्य कुल्लूकभट्टः—यद्यपि द्वन्द्वनिर्देशेन समुच्चयावगमाद्धारणमपि समुचितस्यैव प्राप्तम्, तथाऽपि 'केशान्तिको ब्राह्मणस्य दण्डः कार्य' इति, 'प्रतिगृह्येप्सितं दण्डम्' इति विधावेकस्यस्य विवक्षितत्वात्, बैल्वः पालाशो वा दण्ड इति वाशिष्ठे विकल्पदर्शनादेकस्यैव दण्डस्य धारणविकल्पितयोरेवैकब्राह्मणसंबन्धात् समुच्चयो द्वन्द्वेनानूद्यते। ब्राह्मणादयो विकल्पेन द्वौ द्वौ दण्डौ कर्तुमर्हन्ति। अत्र पूर्वत्राधोवसनविषये भाष्याचार्येण मनुमतविरोधो द्वयोरनयोः शाख्यन्तरीयविषयतां प्रतिपादयतीति सुधीभिरवसेयम्।

A. कर्मप्रदीपः ३।८।१२-१३। मनुसंहिता च २।४६-४७।

केशललाटनासिकापर्यन्तपरिमाणक्रमेण ब्राह्मणादीनां दण्डाः कर्तव्याः; ते दण्डाः अव्रणाः अक्षताः, शोभनदर्शनाः सवल्कला अग्निदाहरहिता भवेयुः, न च तैः प्राणिजातमुद्वेजनीयमित्याह—'अनुद्वेगकरा नृणामि'ति। इति चानयोः कुल्लूकभट्टोक्ता व्याख्या।

---

1. 'दधाते-' ख, 'ददते-' क-ग। 2. '-ञ्च' क। 3. '-चो नाग्नि-' क-ख। 4. 'अजिनदण्डरशनाख्यानि' ख। 5. '-कालं' ख।

**पुरस्ताच्छालाया उपलिप्ते अग्निरुपसमाहितो भवति ॥ १४ ॥**

उक्तार्थमेतत्(A) ।

**अग्ने व्रतपते इति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङाचार्योऽवतिष्ठते ॥ १५ ॥**

'अग्ने व्रतपते'(B) इति पञ्चाऽऽहुतीर्हुत्वा 'आतिदेशिकं[1] व्याहृतिचतुष्टयं च हुत्वा

---

A. विवाहप्रकरणे ( सू० २।१।११ पृ० २८६ ) इति शेषः ।

B. अग्ने व्रतपते इत्यादि पञ्चसु मन्त्रेषु—

प्रथममन्त्रः—

ॐ अग्ने व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् ।
तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥

द्वितीयमन्त्रः—

ॐ वायो व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् ।
तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥

तृतीयमन्त्रः—

ॐ सूर्य व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् ।
तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥

चतुर्थमन्त्रः—

ॐ चन्द्र व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् ।
तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥

पञ्चममन्त्रः—

ॐ व्रतानां व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तच्छकेयम् ।
तेनर्ध्यासमिदमहमनृतात् सत्यमुपैमि स्वाहा ॥ इति ।

मन्त्रब्राह्मणम् १।६।१०-१४ । विनियोगप्रमाणन्तु खादिरगृह्यसूत्रेऽपि २।४।७ ।

एतेषां व्याख्या— उपनीयमानो माणवकोऽग्निं प्रार्थयते, व्रतपते ब्रह्मचर्यादिव्रतस्याधिपते, हे अग्ने, व्रतं चरिष्यामि उपनयनाख्यं कर्मानुतिष्ठामि, तत् ते प्रब्रवीमि ईदृशम् अनुष्ठास्यामीति तव प्रकर्षेण कथयामि, यथा प्रब्रवीमि अतः तत् कर्म शकेयं कर्तुं शक्तो भूयासम्, तेन त्वदनुज्ञातेन कर्मणा ऋध्यासं समृद्धो भूयासम्, ( एवमाशायुक्तः ) अहम्, अनृतात् अलीकवचनात् पृथक् भूत्वा इदं व्रतं सत्यं सत्यवचनस्वरूपम् उपैमि उपगच्छामि । अयमर्थः—योऽहं प्रागुपनयनात्

---

1. 'प्रातिदैविकं' क-ग, 'चातिदि-' ख ।

(A)आचार्यः पश्चादग्नेरुदगग्रेषु दर्भेषु 'प्राङवतिष्ठते। "सह होमेनाऽऽचार्यस्य"* सम्बन्धः। "कुतः? हुत्वाचार्योऽवतिष्ठते इति क्त्वाप्रत्यययोगात्। मन्त्रं तु माणवको जपेत्। कुतः? मन्त्रलिङ्गात्। व्रतं चरिष्यामीत्याद्युत्तमपुरुषप्रयोगोऽन्यथा नोपपद्यते (B)। अत्र कश्चिदाह—व्रतं चरिष्यामीति साकाङ्क्षत्वात् मन्त्रस्य निराकाङ्क्षीकरणाय नाम-कालपरिमाणयोरादेशः कर्त्तव्य इति, एतद् व्रतमियत्कालिकमिति। 'तदसत्, कुतः? आचार्यानुरोधाद् यत्र यत्र साकाङ्क्षीकरणाय व्रतकालपरिमाणमन्त्रस्तत्र तत्र निराकाङ्क्षीकरणार्थमभ्याहारो वचनं विना भवतीत्येवं चेत्, अनवस्था स्यात्, तस्माद् यथापठितैरेव मन्त्रैर्होम इति स्थितिः, इति युक्तम्। न'* युक्तं चैतत्, कुतः?

यथेष्टाचार आसम्, सोऽहम् अधुना परित्यक्तानृतवादः सत्यभूतमिदं व्रतं चरिष्यामि। गुणविष्णुमते तु सर्वत्र तेनर्द्ध्या इति पदच्छेदः ऋद्ध्येति द्वितीयार्थे तृतीया ऋद्धया समृद्धिं प्राप्नुयाम् इति शेषः। इति। उपैमि इत्यत्र च 'सम्' पदस्य दूरस्थेन उपैमिना संयोज्य व्याख्या समुपैमि सम्यगुपैमीति व्यवहितोपसर्गसम्बन्धः। एवं सर्वत्र, वायुसूर्यचन्द्रदेवताके। पञ्चमे तु—

व्रतानां यज्ञानां व्रतस्य नियमस्य पतिः इन्द्रः, इति गुणविष्णुः। व्रतानां सृष्ट्यादिकार्याणां मध्ये विशेषतः व्रतपते ब्रह्मचर्यादिव्रतस्याधिपते हे परमेश्वर; इति सामश्रमी। इति।

A. अतिदेशसूत्रञ्च 'यथा पाणिग्रहणे तथे'त्यादि ( गृ० सू० १।९।२४, पृ० २७४ )। एतच्च उपनयनकर्मणः पुरस्तादुपरिष्टाच्च व्यस्तसमस्तमहाव्याहृतिभिर्व्रतञ्च आहुतयो भवन्तीति।

B. अत्र रघुनन्दनः—"अत्र हुत्वाचार्य इत्येककर्तृकत्वादेव एव हुत्वा तिष्ठेत्, होमकरणत्वान्मन्त्राणां होमकर्तुराचार्यस्य मन्त्रपाठो न माणवकस्य। यत्र च ब्रह्मचारिणामुच्चारणं तत्र ब्रह्मचर्यमागामिति वाचयतीति वचनात्। अग्ने व्रतपते व्रतं चरिष्यामीति मन्त्रलिङ्गेषु ऋत्विक्स्थानीयत्वान्माणवकस्य मन्त्रैराद्यादिप्रार्थना ब्रह्मचारिणो नाऽऽचार्यस्य। तथाच 'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते सा यजमानस्यैवे'ति सरला। तन्न, ऋत्विग्यजमानपदयोराचार्यमाणवकपरत्वे मानाभावात्" इत्युक्त्वा सह होमेनेत्यादिभाष्यभागं प्रमाणत्वेनोपन्यस्तवान्। तर्कालङ्कारोऽपि—"तस्मात् करणत्वादाचार्य एव मन्त्रं जपतीति ब्रुवती सरलाऽनादेयवचनैव। व्रतान्ते व्रतमचार्षमित्यादेर्ब्रह्मचारिपाठस्य स्वयमेव वर्णनादत्रापि तथैव वर्णयितुमुचितत्वाच्च। व्रतं चरिष्यामीति मन्त्रलिङ्गे तु ऋत्विक्स्थानीयत्वादाचार्यस्य याज्यस्थानीयत्वाच्च माणवकस्य मन्त्रैराद्यादिप्रार्थना ब्रह्मचारिणो नाऽऽचार्यस्य। तथाच 'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते सा यजमानस्यैवे'त्यपस्थान एव तस्याः संरम्भः। आचार्यमाणवकयोरृत्विग्यजमानस्थानीयत्वे आचार्यस्य मन्त्रपाठे च प्रमाणस्यैवाभावात्।" इत्याह।

1. 'प्राङ् चतिष्ठति' ख। 2. 'सह' नास्ति ख, 'होमेन सहाऽऽचार्यस्य' च। 3. 'कुत:' नास्ति च।
4. नास्ति क-ग-च।

ब्रह्मचारी व्रतादेशे व्रतनाम प्रचाचयेत् ।
चरिष्ये यावदन्ताय सावित्रे चान्तकीर्तनम् (A) ॥

इति वचनात् ।

**अन्तरेणाग्न्याचार्यौ माणवकोऽञ्जलिकृतोऽभिमुख आचार्य-मुदगग्रेषु दर्भेषु ॥ १६ ॥**

[1]अग्न्याचार्यौ अन्तरेण अन्तरा अवान्तर इत्यर्थः, माणवकः ; [2]अवतिष्ठते इति वर्त्तते । कावन्तरेण ? अग्न्याचार्यौ । कथमवतिष्ठते[2]* ? अञ्जलिकृतः कृताञ्जलिः । अञ्जलि-

---

A. गृह्यासंग्रहः २।४२ । अस्य व्याख्यायां तर्कालङ्कारः—"व्रतस्याऽऽदेशो यत्र तस्मिन् व्रतादेशे 'अग्ने व्रतपते व्रतं चरिष्यामी'त्यादिमन्त्रपञ्चके, ब्रह्मचारी व्रतस्य नाम प्रचाचयेत् प्रकथयेत, यावदन्ताय व्रताचरणं तस्यान्तस्यापि कीर्तनं कुर्यात् । व्रतादेशशब्दात् 'समिधमाधेही'त्यादि-सूत्रोक्तं व्रतानामादेशं मा प्रसाङ्क्षीदिति 'सावित्रे च' इत्याह । सावित्रे व्रते सहप्रवचनीयापर-नामधेये उपनयनव्रते इत्येतत् । तस्य सावित्र्यध्ययनार्थत्वात् सावित्रत्वम् । चशब्दादनुप्रवच-नीये च गोदानादौ । तत्रोदाहरणम्—अग्ने व्रतपते व्रतं चरिष्यामीत्येवमादयः पञ्च मन्त्राः पञ्च-माममन्त्रकाण्डे समाम्नायन्ते, तत्र च अग्ने व्रतपते व्रतं सावित्रम्, अष्टवर्षम् अष्टमासम् अष्टदिनं वा चरिष्यामीति ब्रूयात् । एवमपरेष्वपि मन्त्रेषूहनीयम् । एवं गोदानादिव्रतेष्वप्यूहनीयम्" इत्याह । प्रमाणीकरोत्यग्निहोत्री सुब्रह्मण्योऽपि वचनमिदं गृह्यकर्मप्रकाशिकायाम्—ततः समिधमाधायोदका-ञ्जलित्रयं दत्वा पर्युक्ष्य व्यस्ताभिः समस्ताभिर्व्याहृतिभिश्चतस्र आज्याहुतीर्हुत्वा माणवकेनान्वा-रब्धो अग्ने व्रतपते इत्यादिभिर्माणवकानुपठितैर्व्रतनामव्रतपरिमाणोहयुक्तैः पञ्चभिः पञ्चाऽऽज्याहुती-र्जुहोति । अग्ने व्रतपत इत्यादिमन्त्राणां प्रजापतिर्ऋषिर्गिंगदाग्निवायुसूर्यचन्द्रेन्द्रा देवता उपनयना-ज्यहोमे विनियोगः । ॐ अग्ने व्रतपते व्रतं सावित्रमष्टवर्षमष्टमासमष्टदिनं वा चरिष्यामि तत् ते··· स्वाहा । एवमग्रिमेषु मन्त्रेषु व्रतनामव्रतपरिमाणमूह्यम् । इत्येवं निबन्धनमिति । इदमत्र विचार्यते यद्यपि भवदेवभट्टेन "तत आचार्यः स्रुवेणाऽऽज्यं गृहीत्वा पञ्चभिर्मन्त्रैः पञ्चाहुतीर्जुहुयादित्युक्तं स्वनिबन्धे विद्यावारिधिना च तन्मुद्रणावसरे यां कामयेति सरलोक्तां श्रुतिमुपन्यस्य, यद्यपि आचार्य-कर्तृकेयं प्रार्थना तथाऽपि माणवकस्यैव बोद्धव्येति निर्णीतम् । तथाऽपि भाष्यकारतत्त्वकारादीना-मुक्तियुक्त्या तदसङ्गतमेव प्रतिभाति ; नहि यथा यजमानेन स्वयमशक्तौ होमादौ ऋत्विग् वृतः स्यात् तथा माणवकेन वृत आचार्य इति कथं यां कामयेति श्रुतेरवसरः । तस्मान्माणवकस्यैव मन्त्रपाठ आवश्यक इति । तत्र भगवन्तोऽनूचानाः प्रमाणम् ।

---

1. 'अग्न्याचार्यौ' नास्ति क-ख-च। 2. 'अवतिष्ठन्' क, नास्ति च ।

आत्र प्रसारितो न [1]मुकुलः। [2]कुतः? उपरिष्टादपां पूरणोपदेशात्। अभिमुख आचार्यम् [3]अर्थात् प्रत्यङ्मुखोऽवतिष्ठते। उदगग्रेषु दर्भेषु।

## तस्य दक्षिणतोऽवस्थाय मन्त्रवान् ब्राह्मणोऽपामञ्जलिं पूरयत्युपरिष्टाच्चाऽऽचार्यस्य(A) ॥ १७ ॥

[4]तस्य अनन्तरोक्तत्वान्मा[*]णवकस्य दक्षिणतः दक्षिणस्यां दिशि। न दक्षिण-पार्श्वे। [5]कुतः? माङ्गलिकत्वात्। (B) परिभाषानुग्रहत्वात् उदङ्मुखो येन स्यात्। इतरथा दक्षिणाभिमुखः स्यात्। अवस्थाय [6]स्थित्वा, कः? मन्त्रवान् अध्ययनयुक्तो ब्राह्मणः माणवकाञ्जलिं पूरयति, [7]अपामुदकस्य। [8]तत उपरिष्टा[9]दूर्ध्वं पश्चात्[*]। आचार्यस्य अञ्जलिं पूरयतीति चकारेणानुकृष्यते। [10]कस्य द्रव्यस्य? अपाम् उदकस्य।

## प्रेक्षमाणो जपत्यागन्त्रा समगन्महीति ॥ १८ ॥

[11]कं प्रेक्षमाणः को जपति? माणवकं प्रेक्षमाण आचार्य (C)'आगन्त्रेति' [12]अवसानं मन्त्रं जपति। कुतः? 'स्वस्ति चरतादयम्' इति।

---

A. उपरिष्टादित्यादि पृथक् सूत्रं कल्पयतः सामश्रमितकोङ्कारौ।

B. एवञ्च प्रत्यङ्मुखस्य माणवकस्य दक्षिणपार्श्वे तस्यावस्थाने दक्षिणामुखत्वमवस्थातुः स्यात् तच्चामङ्गलम्। तस्मात् प्राचीसौम्यापराजिता इति छन्दोगपरिशिष्टोक्तत्वात् यथोदङ्मुखत्वं भवति तथाऽवस्थातव्यमिति भाष्यग्रन्थस्याऽऽशय इति।

C. अत्र मन्त्रावुक्तौ—

ॐ आगन्त्रा समगन्महि प्रसुमर्त्यं युयोतन।
अरिष्टाः सञ्चरेमहि स्वस्ति चरतादयम्॥
ॐ अग्निस्ते हस्तमग्रहीत् सविता हस्तमग्रहीत्।
अर्यमा हस्तमग्रहीन्मित्रस्त्वमसि कर्मणा॥

अग्निराचार्यस्तव। इति

मन्त्रब्राह्मणम् १।६।१४-१९। विनियोगप्रमाणमागन्त्रादिमन्त्रस्य खादिरगृह्यसूत्रेऽपि २।४।११। अत्र गुणविष्णुस्तु "स्वस्ति सञ्चरतादयम्" इति पठति। अग्निस्ते इत्यादि-मन्त्रोऽपि तेन गृहीतमाणवकहस्ताचार्यजपे विनियुक्त इत्युक्तम् इति।

---

1. 'मुकुलितः' घ। 2. 'कुतः' नास्ति घ। 3. '-र्थं सामर्थ्यात् प्र-' ख। 4. 'अनन्तरोक्तत्वात् तस्य मा-' घ। 5. 'कुतः' नास्ति घ। 6. 'स्थित्वा' नास्ति ख। 7. 'अपामुदकस्य' नास्ति क-ख-घ। 8. 'ततः' नास्ति ख। 9. '-दूर्ध्वः पश्चात्पश्चात्' ख। 10. 'पश्चादाचार्यस्य' ख। 11. 'कं' नास्ति घ। 12. 'अवसानं' क-ग।

मन्त्रद्वयं जपित्वा आचार्यो माणवकम्—

(A)ब्रह्मचर्यमागामिति वाचयति ॥ १९ ॥

ऋज्वर्थम् ।

को नामासीति नामधेयं पृच्छति तस्याऽऽचार्यः ॥ २० ॥

यथैव ग्रन्थस्तथैवार्थः, 'माणवकोऽपि असौ नामास्मीति स्वं नाम कथयेत् ।
"किं पूर्वकृतमेव नाम कथयेत्"* ? न, कथं तर्हि ?

अभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं वा नक्षत्राश्रयं वा गोत्राश्रयमप्येके(B) ॥ २१ ॥

अभिवादः संवदनम् अभिभाषणमित्यर्थः । कथं "नाम यत्र यत्राभिवादः सम्भाषण-मध्ययनार्थं तत्र तत्रानेन माणवकमभिवदेत्—"भो देवदत्त उपविशाधीष्व इति, अथवा

---

अनयोर्व्याख्या—आचार्यो ब्रह्मचारिणं पश्यन् जपति—हे अग्न्यादयो देवताः युष्मत्प्रसादात् वयम् आचार्या आगम्ना उपनयनार्थमागच्छता माणवकेन समगन्महि सङ्गच्छामहि, तदर्थं सुमर्त्यं शोभनमनुष्यं माणवकम्, प्रयुयोतन प्रकर्षेणास्माभिः सह विमिश्रयत । किञ्च वयं अरिष्टाः अविघ्नाः सञ्चरेमहि, स्वस्ति अविनाशम्, एतत् अविनाशं यथा स्यात् तथा अयं ब्रह्मचारी चरतात् अध्ययनम् उपतिष्ठतु । इति ।

हे बालक, अग्निर्देवस्ते तव हस्तं करमग्रहीत् गृहीतवान्, त्वद्रक्षणाय पूर्वमेवेति भावः । तथा सविता देवः हस्तं ते अग्रहीत्, तथैव अर्यमा देवश्च हस्तं ते अग्रहीत्, हे बालक त्वं कर्मणा अहिंसादिव्यवहारेण मित्रः सर्वेषां मित्रभूतः असि भव । तव आचार्यः वेदोपदेशकोऽयमहम् अग्निः देवः इति जानीहि मामग्नितुल्यमवगच्छेति भावः । इति ।

A. मन्त्रस्तु—

ॐ ब्रह्मचर्यमागामुप मा नयस्व । इति

मन्त्रब्राह्मणम् १।६।१६ ।

विनियोगप्रमाणञ्चास्य जैमिनिगृह्यसूत्रे ( पृ० ११ पं० ७ ) । पारस्करगृह्यसूत्रेऽपि २।२।६ ।

अस्य व्याख्या—हे आचार्य, अहं ब्रह्मचर्यं व्रतम् आगाम् उपागमम् अथ मा माम्, उपनयस्व आत्मसमीपं प्रापय । इति ।

B. सूत्रमिदं—कल्पयित्वेत्यत्र, नक्षत्राश्रयं वेत्यत्र, अप्येके, इत्यत्र च विभज्य सितांश्वर्कं कृतवन्तौ सामश्रमितकाकङ्कारौ ।

---

1. 'पिं नाव-' क-ग । 2. नास्ति क-ग-घ । 3. 'नाम यत्र' नास्ति घ ।

अभि[1]वादनं पादोपसंग्रहणम्[1]* । तदर्थमभिवादनीयम् । यत्र यत्राऽऽचार्यमभिवादयेत् तत्र तत्रानेने[2]ति । अमुक[3]गोत्रः अमुकशर्माऽहं भो अभिवादयामीति । वक्ष्यति च प्रातरभिवाद्य इत्यादि(A) । एवमन्यदभिवादनीयं नामधेयं कल्पयित्वा [4]कृत्वा आचार्यस्य कथयेत् । कीदृशं नाम "कल्पयित्वा"[5]* ? देवताश्रयं वा यथा विष्णुदत्तनामाऽस्मीति । नक्षत्राश्रयं वा यथा फाल्गुननामाऽस्मीति । गोत्राश्रयं वा यथा वत्सस[6]गोत्रोऽस्मीति(B) ।

[7]माणवकेनामुकनामाऽस्मीति एवं नाम्नि कथिते—

**उत्सृज्यापामञ्जलिमाचार्यो दक्षिणेन पाणिना दक्षिणपाणिं साङ्गुष्ठं गृह्णाति—"देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां [8]हस्तं गृह्णाम्यसावि"ति ॥ २२ ॥**

उत्सृज्य विमुच्य अपामञ्जलिम् आचार्यः स्वेन पाणिना दक्षिणेन माणवकस्य दक्षिणमेव पाणिम् अङ्गुष्ठेन सह साङ्गुष्ठम्, (C)'देवस्य' इत्यनेन मन्त्रेण गृह्णाति । असाविति

---

A. तथाच नित्यधर्मसूत्रम्—'मेखलाधारणभैक्षचर्यदण्डधारणसमिदाधानोदकोपस्पर्शनप्रातरभिवादा इत्येते नित्यधर्माः' इति, सू० ३।१।२९ ।

B अत्र मन्त्रब्राह्मणस्थो मन्त्रः—

ॐ को नामासि, असौ नामास्मि । इति १।६।१७ ।

विनियोगप्रमाणमस्य खादिरगृह्ये २।४।१२ जैमिनिगृह्येऽपि १।१।७ ।

अस्य व्याख्या—आचार्यः पृच्छति कः नाम किंनामधेयः त्वम् असि भवसि, माणवकः पुनः तमाह—हे गुरो अहम् असौ नाम एतन्नामकः अस्मि भवामि । इति ।

C. मन्त्रस्तु—

ॐ देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ ॥ इति

मन्त्रब्राह्मणम् १।६।१८ । विनियोगप्रमाणमस्य खादिरगृह्यसूत्रेऽपि २।४।१३ ।

अस्य व्याख्या—हे असौ अमुकदेवशर्मन्, ते तव हस्तं सवितुर्देवस्य प्रसवे अभ्यनुज्ञाने सति अश्विनोः देववैद्ययोः बाहुभ्यां पूष्णः च देवस्य हस्ताभ्याम्, अहम् आचार्यः पाणिना गृह्णामि । इति ।

---

1. '-पादोपसंग्रहणम्' ख । 2. 'इति' नास्ति ख । 3. '-नामाऽमुकगोत्रः' क, '-सगोत्रः' क-ख । 4. 'कृत्वा' नास्ति ख । 5. नास्ति ख । 6. '-गोत्रः वत्सनामाऽस्मीति' ख । 7. 'माणवकेनामुकनामाऽस्मीति' नास्ति ख । 8. 'हस्तं' नास्ति ख ।

सम्बोधनविभक्त्या माणवकस्य 'नाम गृह्णीयात्—"हस्तं गृह्णामि देवदत्तशर्मन्" इति(A)।

## अथैनं प्रदक्षिणमावर्तयति "सूर्यस्याऽऽवृतमन्वावर्तस्वासौ" इति ॥ २३ ॥

अथेति तद्देशनियमार्थम्। "अथ तस्मिन्नेव देशे व्यवस्थितः, एनं माणवकं प्रदक्षिणमावर्तयति। प्रत्यङ्मुखं सन्तं प्रादक्षिण्येन प्राङ्मुखं करोति। (B) 'सूर्यस्ये'त्यनेन मन्त्रेण। "अत्राप्यसाविति पूर्ववन्नामग्रहणम्"*।

## दक्षिणेन पाणिना दक्षिणमंसमन्ववमृष्यानन्तर्हितां नाभिमभिमृशेत् "प्राणानां ग्रन्थिरसो"ति ॥ २४ ॥

---

A. अत्र रघुनन्दनः—"इदानीं गृहीतमाणवकहस्तस्याऽऽचार्यस्य अग्निष्टे हस्तमग्रहीदिति मन्त्रपाठे प्रमाणं गोभिले नास्ति अन्यत्र बोध्यमि"त्याह। तेनात्रैव मन्त्रस्यास्य पाठोऽस्य सम्मत इति प्रतिभाति, भवदेवेनाप्यत्रैव अग्निष्टे इत्यादि मन्त्रपाठः स्वनिबन्धे उद्धृतः, गुणविष्णुनाऽपि मन्त्रब्राह्मणपाठमुल्लङ्घ्य भवदेवोक्तविनियोगक्रमानुसारेणैव मन्त्रो व्याख्यात इति। भाष्यकारस्तु मन्त्रब्राह्मणीयपाठानुसारेण आगन्त्रेति मन्त्रानन्तरमेव अग्निष्टे इत्यादिमन्त्रस्य विनियोगमङ्गीकृतवान्। ब्रह्मण्योऽपि तथैवाह स्वनिबन्धे। सायणाचार्यस्तु—अग्निष्टे इति...आचार्यो ब्रह्मचारिणो हस्तं गृह्णीयात् इत्याह मन्त्रब्राह्मणभाष्ये।

तर्कालङ्कारस्तु—"इदानीं गृहीतमाणवकहस्तस्याऽऽचार्यस्य अग्निष्टे हस्तमग्रहीदिति मन्त्रजपो भवदेवमहाद्यनुमतः, प्रमाणन्तु मृग्यम्" इत्याह।

अत्र मन्त्रब्राह्मणानुसारेण भाष्यकारादिमतमादरणीयं वा भवदेवादिमतमनुसरणीयं वेति भावयन्तोऽनूचाना निर्दिशन्तु।

B. मन्त्रस्तु—

ॐ सूर्यस्यावृतमन्वावर्तस्वासौ ॥ इति।

मन्त्रब्राह्मणम् १।६।१९। विनियोगप्रमाणन्तु खादिरगृह्येऽपि २।४।१४।

अस्य व्याख्या—असौ हे अमुकदेवशर्मन्, त्वं सूर्यस्य आवृतं प्रदक्षिणं यथा स्यात् तथा अनु अनुलक्ष्य, आ आभिमुख्येन वर्तस्व। इति। गुणविष्णुमते तु—"अयमर्कः यावद् भानोरावर्तनं तावद् त्वमपि तिष्ठ"[1]। इति।

---

1. 'नाम' नास्ति क। 2. 'च' नास्ति ग। 3. नास्ति च।

दक्षिणेन पाणिना आचार्यो माणवकस्य दक्षिणमंसं तूष्णीम् अन्ववमृश्य(A) आलभ्य अनन्तर्हिताम् अन्तर्धानरहितां नाभिं (B)'प्राणानामि'ति मन्त्रेणाभिमृशेत्। 'असु-मित्येतस्मिन् सर्वनाम्नि'[1]* द्वितीयया माणवकनाम गृह्णीयात्, इदं ते परिददामि विष्णुशर्माणम् '[2]इति। अन्यत्रापि यत्रासाविति मन्त्रावयवस्तत्र प्रथमया सम्बोधनेन नामग्रहः, यत्रामुमिति '[3]तत्र द्वितीयया।

## उत्सृप्य नाभिदेशमहुर इति ॥ २५ ॥

'जपेदिति वाक्यशेषः'[4]*। उत्सृप्य करम्। सर्पतेर्गत्यर्थत्वात् '[5]ऊर्द्ध्वं नीत्वा नाभिदेशम्। '[6]समीपार्थे द्वितीया। नाभिदेशसमीप ध्वोदरेऽवस्थाप्य करम्

---

A. अत्र

यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत्। ( २।६ )

इति गृह्यासंग्रहवचनबलात् तर्कालङ्कारः—"अन्ववमृश्य स्पृष्ट्वा व्याहृतिभिरित्यर्थः" इति व्याचख्यौ। परं कैरपि निबन्धकारैरगृहीतत्वाद् भाष्यकारेणाप्यनुक्तत्वाच्च नात्र व्याहृतिपाठो युक्त इति मन्यामहे, तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

B. मन्त्रस्तु—

ॐ प्राणानां ग्रन्थिरसि मा विस्रसोऽन्तक

इदं ते परिददाम्यमुम ॥ इति मन्त्रब्राह्मणम् १।६।२०।

विनियोगप्रमाणन्तु खादिरगृह्यसूत्रे २।४।१९। जैमिनिगृह्यसूत्रेऽपि (पृ० ११। प० १३)।

अस्य व्याख्या—हे नाभे, अस्य ब्रह्मचारिणः त्वं मा विस्रसः मा विस्रंसिष्यसि, स्वस्थानात् न विचलिष्यसि यः त्वं प्राणानां देहधारकाणां ग्रन्थिः प्रतिबन्धः असि। हे अन्तक यम, इदम् अस्य ब्रह्मचारिणः शरीरम्, अमुं च ब्रह्मचारिणम्, ते तव परिददामि समर्पयामि। त्वयि समर्पित एव रोगजरामरणादिकं न अनुप्राप्नुयादिति, विस्रंस इति संसेर्लुङ् पुषादित्वात् अङ्। इति गुणविष्णुकृता। अत्र सायणाचार्यः—"माणवकनाभ्यालम्भे विनियोगो यजुर्नाभिर्देवता। अन्तकेति। एतस्मन्त्रप्रभृतिकानि सर्वाणि यजूंषि लोकोक्तदेवताकानि। अत्रामुमित्यस्य स्थाने तत्पदं निर्दिशेत्। अस्मिन् मन्त्रे अमुम् इत्युदरं निर्दिशेत्। इदं माणवकस्योदरं ते तुभ्यं परिददामि।" इत्याह।

---

1. 'अमुमिति' ख। 2. 'इति' नास्ति ख। 3. 'तत्र' नास्ति ख। 4. नास्ति ख। 5. 'ऊर्ध्वं तां' ख। 6. 'समीपार्थो' ख।

(A)अङ्कुर इति जपेत्। कुतः? मन्त्रलिङ्गात्। अङ्कुर इति जाठरोऽग्निरुच्यते, 'तस्मात् नाभेरुत्सृप्य करं नाभिदेश एव उदरं जठराग्निस्थानमालभ्य'[1]* अङ्कुर इति जपेत्। अत्रापि द्वितीययैव नामग्रहः।

## उत्सृप्य हृदयदेशं कृशन इति ॥ २६ ॥

[2]जपेदिति वर्त्तते[3]*। जठरादुत्सृप्य [4]ऊर्ध्वं नीत्वा करं हृदयदेशं हृदयमेवाऽऽलभ्य (B)कृशन इति जपेत्[4]। कृशनशब्देन हृदय एव [5]पुरुषो यत उच्यते। अतो हृदयमेवाऽऽलभ्य जपतीति, तदधिष्ठानत्वात् तस्य पुरुषस्य। तथाच श्रुतिः स [6]वा एष आत्मा हृदीति। अत्रापि द्वितीययैव[7] नामग्रहः।

---

A. मन्त्रस्तु—

ॐ अङ्कुर इदं ते परिददाम्यमुम्। इति

मन्त्रब्राह्मणम् १।६।२१। मन्त्रस्यास्य विनियोगे तु खादिरगृह्यसूत्रम्—"अथैनं परिदद्या-दष्टकप्रभृतिभिः" इति। तत्र रुद्रस्कन्दीयव्याख्यायान्तु—"अष्टक इदन्ते परिददाम्युदरम्' इत्युदरम्। 'अङ्कुर इदं ते परिददाम्युरः' इत्युरः। 'कृशन इदन्ते परिददामि कण्ठम्' इति कण्ठम् इति वर्त्तते इति।"

अस्य व्याख्या—हे अङ्कुर अकुटिल अग्ने पाकाशयाधिष्ठातृदेव, अमुम् एतन्नामकम्, इदं बालकशरीरं च ते तुभ्यं परि सर्वतः ददामि तद्रक्षणापन्नं करोमीति। अत्र सायणः—अङ्कुरः कलुषः क्रूर इत्यर्थः, अत्रामुमित्यस्य स्थाने उरो निर्दिशेत्, इदमुरस्ते परिददामीत्याह स्वव्याख्यायाम्। गुणविष्णुकृतव्याख्याने च पाठभेद उपलभ्यते—'नाभ्युपरिदेशस्पर्शने विनियुक्तमिदं यजुर्वायव्यम्। आङ्कुरिर्नाम वायुः तस्याऽऽमन्त्रणम्। हे अङ्कुरे, शेषं पूर्ववत्, अङ्कुरे इति छान्दसं ह्रस्वत्वम्' इत्येकः। अङ्कुरिर्वायुः, अमुरिर्वायुः इति च द्वाविति। रघुनन्दनस्तु "उत्सृप्य करमित्यादिभट्टभाष्य-दर्शनात् वायुदेवता इति भवदेवगुणविष्णूक्तं निरस्तम्, अ इव बिभर्तीति व्युत्पत्त्या अङ्कुर इति समाख्या" इत्याह। तदत्र कीदृशो मन्त्रः पठितव्य इति भगवन्तोऽनूचानाः प्रमाणयन्तु।

B. मन्त्रस्तु—

ॐ कृशन इदन्ते परिददाम्यमुम्। इति

मन्त्रब्राह्मणम् १।६।२२।

अस्य व्याख्या—हे कृशन कृशकारिन् वायो हृदयाधिष्ठातृदेव, अमुम् एतन्नामकम्, इदं बालकशरीरं ते तुभ्यं परि सर्वतः, ददामि इति। गुणविष्णुस्तु हृदयदेशस्पर्शने विनियुक्तमाग्नेयं

---

1. 'यतः, तस्मात्जठराग्निस्थानमुदरमालभ्य' च। 2. नास्ति च। 3. 'अनुवृत्ता' च। 4. 'जपेदिति' च। 5. 'पुरुषीय' क। 6. 'वा' नास्ति ग। 7. 'एव' नास्ति च।

[1]दक्षिणेन पाणिना दक्षिणमंसमन्वालभ्य (A)प्रजापतये त्वा परिददाम्यसाविति ॥ २७ ॥

जपेदिति [2]वर्तते[2]*। [3]शेषमृज्वर्थम्[3]*। अत्र प्रथमया नामग्रहः।

सव्येन सव्यं देवाय त्वा सवित्रे परिददाम्यसाविति ॥२८॥

सव्येन पाणिना सव्यम् अंसमन्वालभ्य(B) देवाय त्वेति जपे[4]दिति वर्तते[4]*। अत्रापि प्रथमयैव।

अथैनं सम्प्रेष्यति ब्रह्मचार्यस्यसाविति ॥ २९ ॥

[5]अथ अंसयोरेव गृहीतम् एनं माणवकं [6]संप्रेष्यति सम्यगाचार्यः प्रैषैर्बोधयति। अद्यदिवसादारभ्य (C)ब्रह्मचार्यसि विष्णुशर्मन्निति।

---

यजुः, कृशन इति कृशानुरग्निः तस्यानुमन्त्रणम्, हे कृशानो अग्ने इति। सायणस्तु 'कृशनः प्राणानां क्रोशनकर्ता, इदं कण्ठमित्यर्थः, परिददामि। अमुमित्यत्र स्थाने कण्ठं निर्दिशेत्' इत्याह।

A. मन्त्रस्तु—

ॐ प्रजापतये त्वा परिददाम्यसौ। इति

मन्त्रब्राह्मणम् १।६।२३। विनियोगप्रमाणमस्य खादिरेऽपि गृह्ये २।४।१७।

अस्य व्याख्या—हे असौ देवशर्मन्, त्वा त्वां प्रजापतये स्रष्ट्रे ( यकृदधिष्ठातृदेवाय ) परिददामि। इति।

B. मन्त्रस्तु—

ॐ देवाय त्वा सवित्रे परिददाम्यसौ। इति

मन्त्रब्राह्मणम् १।६।२४। विनियोगप्रमाणमस्य गृह्ये खादिरेऽपि २।४।१८।

अस्य व्याख्या—हे असौ अमुकनामधेय ब्रह्मचारिन्, त्वा त्वां सवित्रे सर्वविधप्रसवकार्यनिर्वाहयित्रे हृद्यन्त्राधिष्ठात्रे देवाय परिददामि सर्वथैव सवितृशरणापन्नं करोमि। इति।

C. मन्त्रस्तु—

ॐ ब्रह्मचार्यस्यसौ। इति। मन्त्रब्राह्मणम् १।६।२५।

असौ अमुकदेवशर्मन्, अद्यप्रभृति त्वं खलु ब्रह्मचारी असि भवसि, इति जानीहीति प्रेषणम्। इति चास्य व्याख्या। गुणविष्णुस्तु 'ब्रह्मचार्यसौ' इति पठति।

---

1. 'दक्षिणपा-' घ। 2. नास्ति घ। 3. नास्ति घ। 4. 'इति वर्तते' नास्ति घ। 5. 'अथ' क·ग। 6. 'प्रेष्यति' ख।

किमेक एवायं प्रैषः ? न ; कथं तर्हि ?

**समिधमाधेह्यपोऽशान कर्म कुरु मा दिवा स्वाप्सीरिति ॥३०॥**

यत् तद् वक्ष्य'त्यस्तमिते समिधमादधाती'ति(A), तां सायं प्रातः समिधमाधेहि । यत् श्रुतावुक्तम् 'तस्माद् वा एतद्ब्रमशिष्यन्' पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधाती'ति(B) तदिदमादिश्यते—सायंप्रातर्भोजनयोरपि पुरस्ताच्चोपरिष्टाच्च पृथक् मन्त्राभ्याम् । अपोऽशान, कर्म कुरु, हे ब्रह्मचारिन् इति । मन्त्रौ तु शाखान्तरादुपादेयौ—(C) अमृतस्योपस्तरणमसि स्वाहेति पुरस्तात् । (D)अमृतस्यापिधानमसि स्वाहेति उपरिष्टादिति । मा दिवा स्वाप्सीः, दिवा स्वापं मा कार्षीरित्यर्थः । (E)माणवकश्च सर्वेषु

---

A. उपरिष्टात् ( २।१०।४२ ) सूत्रम् ।

B. प्रमाणीकृतेयं श्रुतिस्तकालङ्कारेण तत्त्वकृता रघुनन्दनेन च ।

C. मन्त्रस्तु—

ॐ अमृतोपस्तरणमसि स्वाहा । इति

तैत्तिरीयारण्यकम् १०।३२।१ । विनियोगप्रमाणन्तु आश्वलायनगृह्यसूत्रे १।२४।१२ । हिरण्यकेशिगृह्यसूत्रे १।१३।६ । मानवगृह्यसूत्रेऽपि १।९।१९ ।

अस्य व्याख्या—हे गण्डूषरूप जल, अमृतस्य पञ्चयज्ञावशिष्टस्य अन्नस्य उपस्तरणं शय्येव त्वमसि । इति ।

D. मन्त्रस्तु—

ॐ अमृतापिधानमसि स्वाहा । इति ।

तैत्तिरीयारण्यकम् १०।३३।१ । विनियोगप्रमाणन्त्वस्य आपस्तम्बश्रौतसूत्रे १९।७।३ । मानवश्रौतसूत्रेऽपि ९।२।४ ।

अस्य व्याख्या—हे गण्डूषजल, अमृतस्य भुक्तस्य अन्नस्य अपिधानम् आवरणम् आच्छादनमिव त्वमसि । इति । आश्वलायनगृह्यपरिशिष्टे च द्वावपि मन्त्रौ ।

ॐ प्राणाय स्वाहा, ॐ अपानाय स्वाहा, ॐ समानाय स्वाहा, ॐ उदानाय स्वाहा, ॐ व्यानाय स्वाहा ।

इति पञ्चानां मन्त्राणामाद्यन्तस्थितौ परिगृहीतौ गुणविष्णुना, व्याख्यातावपि छान्दोग्यमन्त्रभाष्ये । अमृतस्येति विसमासकरणं भाष्यकारतकालङ्कारयोः सम्मतमिति ।

E. मन्त्रस्तु—

ॐ समिधमाधेहि । अपोऽशान । कर्म कुरु । मा दिवा स्वाप्सीः । इति ।

मन्त्रब्राह्मणम् १।६।२६ । विनियोगप्रमाणन्तु आपस्तम्बगृह्यसूत्रे १।२२।२ । पारस्कर-

---

1. '-तः पुरस्ता-' क-ग ।

[1]एव प्रैषेषु बाढमोमिति [2]वा प्रतिवचनं दद्यात्। [3]तथाच कर्मप्रदीपः—

ब्रह्मचारी समादिष्टो गुरुणा व्रतकर्मणि।
बाढमोमिति वा ब्रूयात् तत्तथैवानुपालयेत् (A)॥ इति।

---

गृह्यसूत्रेऽपि २।३।२। अस्य गुणविष्णुकृता व्याख्या संवदति भाष्यकारमतेन। तथा हि—प्रैष्ये विनियुक्तं यजुः। हे ब्रह्मचारिन्, अग्नौ समिधं काष्ठम् आधेहि अग्निकार्यं कुरु। अपः अशान प्राग् भोजनादुपरिष्टाच्च मन्त्रवज्जलं भक्षय। कर्म गुरुशुश्रूषादिलक्षणं कुरु, तथा दिवा दिवसे मा स्वाप्सीः न स्वपिहि। इति। सायणस्तु 'अपोऽशान, तत्कर्मावसरे शुद्ध्यर्थमाचमनं कुरु। कर्म कुरु शुश्रूषादिलक्षणम्' इत्याह। अस्य सामश्रमिकृता व्याख्या तु—हे आयुष्मन्, समिधं समित्काष्ठम् आधेहि आनीय धारय, अग्नाविति शेषः, प्रत्यहं सायंप्रातरिति विवेकः। अपः उदकानि अशान पिब, आचमनादिना शरीरशौचं यथाप्रयोजनं यथोपदेशञ्च व्यवहरेति भावः। कर्म अध्ययनादि कुरु नित्यमिति। दिवा अहनि मा स्वाप्सीः स्वापं मा कार्षीः इति। रघुनन्दनस्तु "सायं-प्रातर्भोजनयोरपि पुरस्ताच्चोपरिष्टाच्च पृथङ्मन्त्राभ्याम् अपोऽशान हे ब्रह्मचारिन्" इति जगौ।

अत्र विशेषः—ब्रह्मचारिणामुक्तचतुष्टयप्रतिज्ञाञ्च आ समावर्तनात् समिदाधानं विहितम्, दिवानिद्रा च निषिद्धा। तदूर्ध्वं तु दिवानिद्रादौ न दोषः, अत एव वैद्यकेषु पठ्यते—

'मध्याह्ने शीतले स्वप्यान्निशि वातहिमाश्रिते।' इति। परं समन्त्रकाणडूषजलपानं सन्ध्यावन्दनादि कर्म च यावज्जीवमेव कर्तव्यमिति। तदुक्तं काशीखण्डे—

विधायाचमनम् तदुपरिष्टादधस्तथा।
आपोऽशनं विधानेन कृत्वाऽश्नीयात् सुधीर्द्विजः। इति। ( ३५।२२० )

ब्रह्मपुराणे च—

आपोऽशनञ्च गृह्णीयात् सर्वतीर्थमयञ्च यत्॥ इति।

सन्ध्यावन्दनादीनां नित्यत्वे प्रमाणन्तु—

'अहरहः सन्ध्यामुपासीते'ति श्रुतिः।
अनादित्याञ्च यः पूर्वां सादित्याञ्चैव पश्चिमाम्।
नोपासीत द्विजः सन्ध्यां स शठोऽब्राह्मणः स्मृतः॥

इति शातातपवचनञ्चेति सुधीभिरवगन्तव्यम्।

A. कर्मप्रदीपः ३।६।१३। अत्र गुणविष्णुः—गुरुणा प्रैष्ये विनियुक्तः प्रतिवक्ति ब्रह्मचारी ॐ बाढम्। इति।

---

1. 'एव' नास्ति क-ग-च। 2. 'वा' नास्ति ख। 3. 'तथाचोक्तं' च।

**उदङ्ग्नेस्तूत्सृप्य प्राङाचार्य उपविशत्युदगग्रेषु दर्भेषु ॥३१॥**

[1]ऋज्वर्थमेतत् ।

**[2]प्रत्यङ् माणवको दक्षिणजान्वक्तोऽभिमुख आचार्यमुदगग्रेष्वेव दर्भेषु ॥ ३२ ॥**

[3]'उपविशतीति वर्त्तते'* । 'माणवकः प्रत्यङ्मुख[4]'* उपविशति आचार्याभिमुखः । दक्षिणं जानु अक्तं भूमौ गतं यस्य [5]स दक्षिणजान्वक्तः'*, अञ्जतेर्गत्यर्थत्वात्; [6]उत्तरत एवाग्नेः ।

**अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलां परिहरन् वाचयतीयं दुरुक्तात् परिबाधमानेति, ऋतस्य गोप्त्रीति च ॥ ३३ ॥**

अथ तथैवोपविष्टमेनं[7] माणवकम् आचार्यो वाचयति—(A)'इयं दुरुक्तात् परिबाध-

---

A प्रथममन्त्रस्तु—

ॐ इयं दुरुक्तात् परिबाधमाना
वर्णं पवित्रं पुनती म आगात् ।
प्राणापानाभ्यां बलमाहरन्ती
स्वसा देवी सुभगा मेखलेयम् ॥ इति

मन्त्रब्राह्मणम् १।६।२७ । विनियोगप्रमाणन्तु खादिरगृह्यसूत्रे २।४।२० । जैमिनिगृह्यसूत्रे च (पृ० १२ प० ८) । अत्र 'पुनती म आगात्' इति गुणविष्णुधृतः पाठश्छान्दोग्यमन्त्रभाष्ये ।

द्वितीयमन्त्रस्तु—

ॐ ऋतस्य गोप्त्री तपसः परस्वी
घ्नती रक्षः सहमाना अरातीः ।
सा मा समन्तमभिपर्येहि भद्रे
धर्तारस्ते मेखले मा रिषाम ॥ इति

मन्त्रब्राह्मणम् १।६।२८ । विनियोगप्रमाणन्तु जैमिनिगृह्यसूत्रे पाठभेदेन ।

मन्त्रयोरनयोर्व्याख्या—ब्रह्मचारी ब्रूते इयं प्रत्यक्षा मेखला मौञ्जी रशना, दुरुक्तात् असम्बद्धप्रलापादितः, ब्रात्यनामदुरपवादवचनाद् वा, परिबाधमाना निवारयन्ती पवित्रं विशुद्धं वर्णं ब्राह्मणादिरूपं पुनती संस्कुर्वती शोधयन्तीति यावत्, मे ममान्तिके (गुणविष्णुमते तु नः अस्मान्)

---

1. 'ऋज्वं तत्' च । 2. 'प्रत्यङ्मुखो' च । 3. नास्ति च । 4. 'प्रत्यङ्मुखो माणवकः' ख । 5. 'इति' च । 6. 'उत्तर' क-ग । 7. 'एनं' नास्ति क ।

माने'ति, 'ऋतस्य गोप्त्री'ति 'च मन्त्रद्वयम्। "किं कुर्वन्"* वाचयति? कटिदेशस्य मुञ्ज-मेखलां "परिहरन् परिवेष्टयन्। कथं परिहरन्"* ? त्रिः प्रदक्षिणम्, त्रिकृत्वः प्रादक्षिण्येनेति। परिहरणस्याऽऽवृत्तावपि सत्यां सकृदेव मन्त्रः स्यात्, "एकद्रव्ये कर्मावृत्तौ सकृदेव मन्त्रवचनं कृत्वा" (A)इति वचनात्" ।

---

आ अगात् आगतवती। इयं मेखला देवी प्राणापानाभ्यां प्राणस्य अपानस्य च वायोः बलं वीर्यम् आहरन्ती आनयन्ती तथा स्वसा भगिनी च देवी पूज्या, सुभगा सर्वलोककाम्या च भवति। इति।

हे मेखले, त्वम् ऋतस्य ब्रह्मचारिसम्बन्धिनः सत्यस्य यज्ञस्य वा गोप्त्री पालयित्री, तपसः ब्रह्मचर्यस्य वेदाध्ययनस्य वा पत्नी सर्वस्वभूता ( उत्कृष्टसाधनरूपा तपसो मूलधनेत्यर्थः। इति सायणः ) रक्षः रक्षांसि ब्रह्मचर्यविघ्नकारीणि घ्नती विनाशयन्ती अरातीः क्रोधादीन् शत्रून् सहमाना अभिभवन्ती सा एवम्भूता त्वं समन्तं समन्तात् मा माम् अभिपर्येहि आभिमुख्येन आगच्छ वेष्टय, हे भद्रे शोभने मेखले ते तव धर्तारः धारणकारिणः वयं मा रिषाम केनापि रिपुणा मा हिंसिष्म। इति।

A. प्रमाणीकुरुतो वचनमिदं रघुनन्दनचन्द्रकान्तौ। अत्र रघुनन्दनः—"मुञ्जालाभे कुशेनेति प्रागुक्तं गृह्यानुक्तमपि, यज्ञोपवीतमस्मिन्नेव समये परिधापयेत्, मेखलानन्तरं 'कार्पास-मुपवीतं स्याद्वि'ति मनूक्तेः, 'पवित्रं चास्मै प्रयच्छती'ति जातूकर्ण्यात्। 'यज्ञोपवीतिनं कुर्यादि'ति शाङ्खायनाच्च।

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥

इति मनुवचनेनोपवीताजिनयोरपि धारणे समन्त्रत्वावधारणात् गृह्ये तदनुपदेशात् शाखान्तरा-दुपादानात्।...अस्मिन्नेवावसरे अजिनमुत्तरीयमित्यापस्तम्बः। एवञ्च—

दण्डाजिनोपवीतानि मेखलाञ्चैव धारयेत्।

इति याज्ञवल्क्यवचनं द्रव्यधारणविधायकम्, एतदनन्तरमाचमनं कुर्यात्, यज्ञोपवीतिनेति गोभिलसूत्रात्। आचामेदित्यनुवृत्तौ—

शिखां बद्ध्वा वसित्वा द्वे निर्णिक्ते वाससी शुभे।
तूष्णीं भूत्वा समासीय नो गच्छन् न विलोकयन्॥

इति देवलवचनाच्च। हरिशर्माऽप्येवम्" इत्याह। भवदेवोऽपि अस्मिन्नेव क्रमे यज्ञोपवीत-मजिनञ्च दद्यादिति निबबन्धेति तर्कालङ्कारः, "अस्मिन्नेवावसरे प्रसिद्धया यज्ञोपवीतमिच्छन्ती"ति कर्कोपाध्यायाः, इत्यप्यस्मिन् यज्ञोपवीतदानस्य प्रमाणान्तरमुपस्थापयति सः।

---

1. 'च' नास्ति ख। 2. नास्ति ग। 3. 'अनन्तरं परिवेष्टयन् इति' घ। 4. 'क्रतत्वात्' ख। 5. अनन्तरं 'मन्त्रद्वयं तु' इति क-ग-घ।

अथोपसीदत्यधीहि भोः सावित्रीं मे भवाननुब्रवीत्विति ॥३४॥

अथ तथैवोपविष्टो माणवक उपसीदति कृताञ्जलिपुट आचार्यगतचक्षुरुपसन्नो भवति "अधीहि भोः सावित्रीं मे भवाननुब्रवीत्वित्यनेन [1]द्वारेण। अधीहि अध्यापय मामित्युक्ते, अध्ययनानेकत्वात् सन्देहे 'सावित्रीं मे भवान् अनुब्रवीतु' इत्याह।

एवमुक्तो माणवकेनाऽऽचार्यः—

तस्मा अन्वाह—पच्छोऽर्द्धर्चश ऋकूश इति ॥ ३५ ॥

तस्मै माणवकाय अन्वाह अनुब्रूयात् (A)पूर्वं तावत् पच्छः पादशः, ततोऽर्द्धर्चशः, तत ऋक्शः। सर्वामिति सवितृदेवताका सावित्री तामेवानुब्रूयात्"।

वस्तुतस्तु भवदेवपद्धतौ यज्ञोपवीतधारणस्य कृष्णसाराजिनधारणस्य च कीदृशः क्रमः, प्रयोगे मन्त्रपाठोऽप्यस्ति न वेति संशय एवोदेति। यतः सर्वेषामेव भवदेवपद्धत्युक्तमन्त्राणां गुणविष्णुकृत-छान्दोग्यमन्त्रभाष्ये व्याख्यानं वर्तते। तत्र तत्र च भवदेवोक्तं पाठं क्रमञ्चावलम्ब्यैव व्याख्या कृता उपेक्षितौ मन्त्रब्राह्मणक्रमपाठाविति बहुशः परीक्षित सुधीभिः। परमत्र यज्ञोपवीतधारणमन्त्रस्य कृष्णाजिनधारणमन्त्रस्य च उल्लेखो व्याख्याऽपि नास्तीति, अतो यद्यपि भवदेवपद्धतौ यज्ञोपवीत-धारणमजिनधारणं च स्यात्, तथाऽपि अमन्त्रकमेव तदिति निर्णेतव्यम्। प्रमाणमत्र पारस्कर-गृह्यसूत्रव्याख्यानावसरे कर्कोपाध्यायोक्तिः—"अस्मिन्नवसरे प्रसिद्धा यज्ञोपवीतमेवेच्छन्ति, अथ तूष्णीमैणेयमुत्तरीयमजिनं करोती"ति। केषुचिन्मुद्रितपुस्तकेषु 'यज्ञोपवीतमसी'त्यादि यज्ञोपवीत-धारणमन्त्रस्य, 'मित्रस्य चक्षुरि'त्याद्यजिनधारणमन्त्रस्य चोल्लेखो भट्टनारायणरघुनन्दनादिग्रन्थाद् गृहीतमन्त्राणामादर्शानां दर्शनेनेति प्रतीमः। अन्यथा भट्टगुणविष्णुरवश्यमेव व्याकरिष्यन्मन्त्रा-वेताविति तददर्शनमेव संशयबीजमिति सुधीभिरवगन्तव्यम्। एवञ्च भवदेवोक्तक्रमस्य संशयित-त्वाद् भाष्यकारेण यदुक्तं माणवकस्य प्रागेव यज्ञोपवीतधारणं यच्च सुब्रह्मण्याग्निहोत्रिभिः स्वनिबन्धे निबद्धं मानवबौधायनगृह्यसम्मतं तद् युक्ततरमेव मन्यामहे ( द्र० मानवगृह्योद्धृतिः, पृ० ५०२ बौधायनगृ० पृ० ५०४-५ )। न हि 'यज्ञोपवीतिने'त्याद्याचार्यसूत्राद् रघुनन्दनादिभि-रुपक्षिप्त मेखलावचनानन्तरयज्ञोपवीतवचनं मनोर्मेखलायज्ञोपवीतयोर्धारणक्रमे प्रबलतरं प्रमाणं भवितुमर्हतीति। तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

A. पूर्वं तावद् गायत्रीं त्रिखण्डं कृत्वा ब्रूयात्, ततोऽर्धमर्धं ब्रूयात्, ततः सम्पूर्णाम् इति। गायत्री च प्रसिद्धा मन्त्रब्राह्मणे १।६।२९।

तस्या व्याख्या—तत् तस्य सवितुः जगत्प्रसवितुः, देवस्य सर्वत्र द्योतमानस्य, वरेण्यं वरणीयं भर्गः भर्गं तेजः, धीमहि ध्यायामः चिन्तयामः, कस्य इत्याह—यः देवः नः अस्माकं धियः बुद्धीः, प्रचोदयात् प्रकृष्टं यथा स्यात् तथा चोदयति प्रेरयति। इति।

1. 'मन्त्रेण' ख।

किमेतावदेवानुब्रूयात्? न; कथं तर्हि?

## महाव्याहृतीश्च विहृता ॐकारान्ताः ॥ २६ ॥

महाव्याहृतीश्चानुब्रूयात्। कथम्? 'विहृताः पृथक् पृथ'गिति। ॐकारः प्रणवः अन्ते यासां ता इमाः ॐकारान्ताः। "अत्र सन्देहः"—किमन्ते सकृदेवायमोङ्कारः स्यादुत प्रतिव्याहृतीति? प्रतिव्याहृतीति 'ब्रूमः। शिष्टाचाराद् 'गुणविशेषे फलविशेष' "इति न्यायाच्च। इतरथा विहारोऽनर्थक एव स्यात्, तस्मात्(A) भूः ॐ, भुवः ॐ, स्वः ॐ, इत्येवमनुब्रूयात्।

## वार्क्षं चास्मै दण्डं प्रयच्छन् वाचयति—सुश्रवः सुश्रवसं मा कुर्विति ॥ २७ ॥

वृक्षस्यायं वार्क्षः, "तमस्मै माणवकाय दण्डं प्रयच्छन्(B) 'सुश्रव' इत्येतं मन्त्रं

---

A. मन्त्रब्राह्मणे तु "भूर्भुवः स्वरोम्" इति (म० ब्रा०) १।६।३०।

B. मन्त्रस्तु—

ॐ सुश्रवः सुश्रवसं मा कुरु यथा त्वं सुश्रवः सुश्रवाः।
देवेष्वेवमहं सुश्रवः सुश्रवा ब्राह्मणेषु भूयासम् ॥ इति

मन्त्रब्राह्मणमाकरस्थानम् १।६।३१। विनियोगप्रमाणन्तु खादिरगृह्येऽपि २।४।२६।

अस्य व्याख्या—हे सुश्रवः सुष्ठु श्रवो यशो यस्य तथाविध दण्ड, मा माम्, सुश्रवसं कुरु। हे सुश्रवः, त्वं यथा देवेषु दीप्यमानेषु पदार्थसमूहेषु सुश्रवाः सुविख्यातः। हे सुश्रवः, एवमहम् अपि ब्राह्मणेषु सुश्रवाः भूयासम्। इति।

अत्र गुणविष्णुधृतः पाठस्तु—

ॐ सुश्रव सुश्रवसं मा कुरु यथा त्वमग्ने सुश्रवाः।
देवेष्वेवमहं सुश्रव सुश्रवा ब्राह्मणेषु भूयासम् ॥ इति ४।७३।

गुणविष्णुकृता व्याख्या च—दण्डं गृह्णन् ब्रह्मचारी तमग्निञ्च प्रार्थयते, शोभनं श्रवो यशो यस्य स सुश्रवाः। छान्दसः सकारलोपः। हे सुश्रव शोभनकीर्ते, यथा त्वं वेदधारणार्थज्ञानादिना लोके सुश्रवाः प्रख्यातयशाः, एवं मामपि सुश्रवसं कुरु। यद्यपि अचेतने दण्डे वेदधारणादिकं न सम्भवति तथाऽपि अधिष्ठात्रीदेवताभिप्रायेणाभिधीयते। एवमग्निं प्रार्थयते—हे अग्ने सुश्रव, पुनरामन्त्रणेन दण्डाद् अग्नेः सुश्रवस्त्वातिशयः ख्याप्यते। यथा त्वं देवेषु मध्ये सुश्रवाः, एवं मनुष्येषु अहं सुश्रवा भूयासम्। इति।

---

1. 'तत्कृताः' ख। 2. '-मित्यर्थः' घ। 3. नास्ति घ। 4. 'ब्रूमः' नास्ति ख। 5. 'इति च न्यायात्' क-ख-ग। 6. 'तस्मै' ग-घ।

वाचयति। चशब्दात् यदुपरिष्टाद् वक्ष्यति—"चार्त्ते चास्मै दण्डं प्रयच्छन् आदिशति" "आचार्याधीनो भवान्यत्राधर्मचरणादि"ति(A), [1]तत्रातिदिशति। ते च द्वादशाऽऽदेशाः, तेष्वपि पूर्ववद् बाढमोमिति वा माणवको ब्रूयात्। तांश्चाऽऽदेशान् उपरिष्टादेव वक्ष्यामः(B)।

## अथ भैक्षं चरति॥ ३८॥

अथशब्दः स्मृत्यन्तरप्राप्तं तूष्णीमादित्योपस्थानम् अग्नेः [2]प्रदक्षिणीकरणं च स्मारयति। तथाच मनुः—

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्[3]।
प्रदक्षिणं परीत्याग्निं चरेद् भैक्षं यथाविधि(C)॥ इति।

भिक्षाणां समूहो भैक्षम्, तच्चरति सेवते आहरतीत्यर्थः।

"किं यामेव काञ्चित् प्रथमं प्रार्थयेत्? न; कथं तर्हि"[3]?

## मातरमेवाग्रे द्वे चान्ये सुहृदौ यावत्यो वा सन्निहिताः स्युः॥ ३९॥

[4]मातरमेव जननीमेव अग्रे प्रथमं प्रार्थयेत् इति [5]वाक्यशेषः। द्वे चान्ये सुहृदौ [6]स्निग्धहृदये स्वस्रादी। तथाच मनुः—

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भैक्षं प्रथमं या चैनं न विमानयेत्(D)॥ इति।

---

A. गो० सू० ३।१।१२-१३।

B. गो० सू० ३।१।१३-२४। एषु सूत्रेषु।

C. मनुसंहिता २।४८।

D. मनुसंहिता २।५०। अत्र 'न विमानयेत्' इति मेधातिथिसम्मतः पाठः, 'नावमानयेत्' इति च कुल्लूकभट्टसम्मतः पाठः। व्याख्या चास्य वचनस्य मेधातिथिकृता—'मातादयः शब्दाः प्रसिद्धार्थाः, निजा सोदर्या, या चैनं न विमानयेत्, विमानना अवज्ञानं न दीयत इति प्रत्याख्यानम्। तथाच गृह्यम्—अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं चेति। तदेव हि मुख्यं प्राथम्यं यदुपनीयमानस्य, अहरहस्तु न विमाननाभयमाश्रयणीयम्'। इति।

---

1. 'तत्राऽऽदिशति' ख-ग। 2. नास्ति ख। 3. नास्ति च। 4. 'मातरमेव' नास्ति च। 5. 'वाक्य-' नास्ति च। 6. '-सुहृदये' ख।

यावत्यो वा सन्निहिताः सन्निधौ स्त्रियः स्युः, तावती'र्वा भिक्षेत। '²भवति भिक्षां देही'ति ब्राह्मणस्य ³भिक्षणप्रयोगः। 'भिक्षां भवति देही'ति क्षत्रियस्य। 'भिक्षां देहि भवती'ति वैश्यस्य। तथाच मनुः—

भवत्पूर्वं चरेद् भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्(A)॥ इति।

---

A. मनुसंहिता २।४९। अस्य मेधातिथिकृता व्याख्या—

भिक्षाप्रार्थनवाक्यमत्र भैक्षशब्देनोच्यते, तस्य हि भवच्छब्दपूर्वता सम्भवति न भक्तादेरर्थस्य। स्त्रीणाञ्च प्रथमं भिक्ष्यमाणतयोपदेशात् प्रार्थनायां च प्रार्थ्यमानस्य सम्बोध्यत्वात् सम्बुद्धि-विभक्त्यन्तः स्त्रीलिङ्गो भवच्छब्दः प्रयोक्तव्यः, क्रम एव चात्रादृष्टार्थो नियम्यते। यथार्थं तु शब्द-प्रयोगो 'भवति भिक्षां देही'ति, कुतः पुनः संस्कृतशब्दार्थलाभः, यावता स्त्रियः सम्बोध्यन्ते, ताश्च संस्कृतं नावबुध्यन्ते। नित्यमुपनयनम्, तस्य च शब्दोच्चारणमङ्गत्वेनोक्तमिति, अनित्याश्चापभ्रंशाः, न तैर्नित्यस्य संयोग उपपद्यते, तथैव च शिष्टा असाधूनुपश्रुत्यैकदेशसादृश्येन साधून् संस्मृत्यार्थं प्रतियन्ति। असाधुरनुमानेन वाचक इति दर्शनेन गाशब्दो हि सादृश्याद् गोशब्दमनुमापयति ततो-ऽर्थप्रतिपत्तिः, एवं स्त्रियः सादृश्यादसाधुभ्यः साधूनुत्पन्नसम्बन्धान् स्मृत्वा तेभ्योऽर्थं प्रत्येष्यन्ति। 'भवति भिक्षां देहि' इति, स्वल्पाक्षरं चैतत् पदत्रयं सर्वत्र प्रसिद्धं स्त्रीभिरपि सुज्ञातम्। एवं भवन्मध्यं क्षत्रियः 'भिक्षां भवति देही'ति। तथा वैश्यो भवच्छब्द उत्तरमस्येति भवदुत्तरं वाक्यं समाचरेत्। उपनीत इति भूतप्रत्ययनिर्देशादान्वहिकेऽपि वृत्त्यर्थं भैक्षचरणेऽयमेव विधिरिति दर्शयति।

'एष प्रोक्तो द्विजातीनामौपनायनिको विधिः'

इत्यत्रोपनयनप्रकरणमुपसंहरन्नुपनयनाङ्गस्यापि भैक्षस्यायमेव विधिरित्याह। अन्यथाकरणा-दुपनयनाङ्गमेवैतत् स्याद् यदि वा भूतप्रत्ययसामर्थ्यात् प्रकरणं बाधित्वा वृत्त्यर्थ एव भैक्षे उपनीय-मानस्य तदङ्गं यद् भैक्षं यच्चाहरहर्वृत्त्यर्थं तत्र सर्वत्रायं धर्मः। इति। अत्र तर्कालङ्कारः—'भवति भिक्षां मे देही'ति ब्राह्मणस्य भैक्षचरणप्रयोगः, 'भिक्षां भवति मे देही'ति क्षत्रियस्य, 'भिक्षां मे देहि भवती'ति वैश्यस्य। तथाच गृह्यान्तरम्—'भवत्पूर्वां ब्राह्मणो भिक्षेत, भवन्मध्यां राजन्यो भवदन्त्यां वैश्यः। इति।

आदिमध्यावसानेषु भवच्छब्दोपलक्षिता।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम्॥

इति च स्मृत्यन्तरम्।' इत्याह। परमत्र 'मे' इति पदं कथं कस्मादुपलब्धं तेनेति न प्रमाण-मुपलब्धमिति मे-पदघटितं भिक्षाप्रार्थनवचनमनादेयमेवेति सुधीभिर्विवेचनीयम्।

---

1. 'वा' नास्ति च। 2. 'चौं भवति' ख। 3. '-भिक्षण-' नास्ति ख।

गौतमश्च—आदिमध्यान्तेषु भवच्छब्दः प्रयोज्यो वर्णानुपूर्व्येणेति(A)।

## आचार्याय भैक्षं निवेदयते ॥ ४० ॥

ऋज्वर्थम्। संस्कारार्थं भैक्षस्य निवेदनमात्रमेव न त्वा[1]चार्याय दानम्। [2]कुतः? वृत्त्यर्थत्वाद् भैक्षचरणस्य। तथाच मनुः—

समाहृत्य तु तद् भैक्षं यावदर्थममायया।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः(B)॥ इति।

'भैक्षं [3]भोः' इति निवेदनप्रयोगः"*। [4]कुतः? "भैक्षं भो इत्याचार्याय निवेद्य दत्तं प्रतिगृह्णीयादि"ति गृह्यान्तरवचनात्(C)। तस्मादाचार्यः पुनरस्मै भैक्षं प्रदद्यात्र कर्मशेषं समापयेत् (D)।

## तिष्ठत्यहःशेषं वाग्यतः ॥ ४१ ॥

माणवको[5]ऽहःशेषं वाग्यतः संयतवागास्ते।

---

A. गौतमसंहिताद्वितीयाध्याये।

B. मनुसंहिता २।५१। अस्य व्याख्यायां मेधातिथिः—"समाहृत्येतिशब्दो बहुभ्य आहरणं दर्शयति नैकस्याः सकाशाद् बह्व्यो ग्रहीतव्याः। तदिति यस्यानन्तरं शब्दसंनिधि- वृत्त्यर्थस्य न प्राकरणिकस्योपनयनाङ्गस्य तस्य हि गृह्यकारैरनुप्रवचनीयं श्रपयेदिति विहितं न भैक्षभोजनम्, तिष्ठेदहःशेषमिति च कृतप्रातराशस्य चोपनयनम्, अतो नोपनयनाङ्गं भैक्षभोजनम्। यावदर्थं यावता भैक्षेण तृप्त्याख्यप्रयोजननिर्वृत्तिः, न बहु भिक्षितव्यम्, अमायया निवेद्य गुरवे न कदन्नेन संस्कृतमन्नं प्रच्छाद्य कदन्नं गुरोः प्रकाशयेत्। कदन्नं किलैव न ग्रहीष्यतीत्यनया बुद्ध्या निवेदनमिदं प्राप्तमिति प्रकटीकरणम्। अगृहीते गुरुणाऽनुज्ञातो नाश्नीयात्, कथं पुनर्निवेदन- मदृष्टसंस्कारार्थमेव न भवति, इतिहासप्रामाण्यात्, तथाच भगवान् व्यासः त्रितकूपाख्याने गुरुणा गृहीतमिति दर्शितवान्। अनुज्ञातो भुञ्जीतेति यत् कचिद् गृह्ये श्रूयते। आचम्य प्राङ्मुखः आचमने प्राङ्मुखतेयमानन्तर्यादिति केचित्। तदयुक्तम्, प्रागुदङ्मुख इत्याचमने दिङ्नियमो भविष्यति तस्माद् भोजनेनैव सम्बन्धः। शुचिः, चाण्डालादिदर्शनमशुचिदेशाक्रमनिष्ठीवनादि, कृताचमनस्य भोजनकालेऽनेन निषिध्यते। 'अन्नं यावदन्नम्' इति मुद्रितमनुसंहितापाठः प्रामादिक एव प्रतिभाति।

C. प्रमाणीकृतं गृह्यान्तरवचनमिदं रघुनन्दनचन्द्रकान्ताभ्याम्।

D. कुतोऽत्र समापनमिति चेत् परतो ब्रह्मचारिण एव कर्मोपदेशादिदानीमाचार्य- कर्मणोऽवसानावगतेरिति बोध्यम्।

---

1. 'चार्ये च' ख। 2. 'कुतः' नास्ति च। 3. 'भोजनम् इति निवेदनमन्त्रः' ख। 4. 'कुतः' नास्ति च। 5. '-ऽतः शेषं' क-ग।

## अस्तमिते समिधमादधात्यग्नये समिधमाहार्षमिति ॥ ४२ ॥

अस्तमिते सवितरि, स्मृत्यन्तरप्राप्तं सन्ध्योपासनं कृत्वा (A) अग्नये समिधमिति(B) मन्त्रेणाग्नौ यथोक्तलक्षणां (C)समिधमादधाति। इयमेवात्र प्रधानाहुतिः। ततश्चास्याः पुरस्तादुपरिष्टाच्च समिद् भवति। [1]तथाचोक्तम्—

समिदादिषु होमेषु मन्त्रदैवतवर्जिता।
पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद् भवेत् (D)॥ इति।

त्रिप्रहोमश्चायम्। ततश्च न्यञ्चकरणादि स्यात्। अस्तमिते समिधमादधातीति वीप्सा द्रष्टव्या। इतरथा सकृत्करणमेव स्यात्। तदयुक्तम्। [2]कुतः? आ समावर्तनात् समिदाधानाभ्यासस्य दृष्टत्वात्। [3]तथाच मनुः[3]*—

---

A. सन्ध्योपासनविधिरुक्तः प्राक् ( पृ० ६४-६९ )।

B. मन्त्रस्तु—

ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे।
यथा त्वमग्ने समिधा समिध्यस्येवमह-
मायुषा मेधया वर्चसा प्रजया पशुभि-
र्ब्रह्मवर्चसेन धनेनान्नाद्येन समेधिषीय स्वाहा ॥ इति।

मन्त्रब्राह्मणम् १।६।३२। विनियोगप्रमाणन्तु खादिरगृह्ये २।४।२७। शाङ्ख्यायनगृह्यसूत्रे २।१०।३। जैमिनिगृह्यसूत्रे ११ पृ०, प० २१। आपस्तम्बगृह्यसूत्रे १।२१।१। पारस्करगृह्यसूत्रे २।४।३। हिरण्यकेशिगृह्यसूत्रेऽपि १।७।२।

अस्य व्याख्या—यजुरिदमाग्नेयम्, समिदाधाने विनियुक्तम्। ब्रह्मचारी ब्रूते—बृहते महते, जातवेदसे जातप्रज्ञाय अग्नये अहम्, समिधम् आहार्षम् आहृतवान्। हे अग्ने, यथा त्वम् अनया समिधा समिध्यसि दीप्यसे, एवम् अनेन प्रकारेण अहम् आयुषा मेधया बुद्ध्या वर्चसा तेजसा, प्रजया पुत्रपौत्रादिरूपया, पशुभिः गवादिभिः, ब्रह्मवर्चसेन ब्राह्मणतेजसा, धनेन वित्तेन, अन्नाद्येन व्रीहियवादिना, समेधिषीय सम्यग्वृद्धियुक्तो भूयासम्। इति।

C. समिधो लक्षणमुक्तं प्राक् सू० १।१।७ ( पृ० ९ )।

D. कर्मप्रदीपः १।८।२१। अस्य व्याख्या—ब्रह्मचारिणो यत् सायंप्रातःसमिदाधानमुक्तं तदिह समित्पदेन गृह्यते समिदादिषु सर्वेषु होमेषु देवतामन्त्राभ्यां रहिताऽग्निसमिन्धनार्था प्रादेशमात्रा या समिदुक्ता सा होमात् पूर्वं पश्चाच्च भवेदिति। उक्तं भाष्यकारेण वचनमिदं प्राक् ( १।३।६ सूत्रे पृ० ५१ )।

---

1. 'तथाचोक्तम्' नास्ति घ। 2. 'कुतः' नास्ति घ। 3. 'उक्तञ्च' ख।

अग्नीन्धनं भैक्षचर्यमधःशय्यां गुरोर्हितम् ।
आ समावर्त्तनात् कुर्यात् कृतोपनयनो द्विजः(A) ॥ इति ।

अयमपि चोपरिष्टाद् वक्ष्यति—मेखलाधारणभैक्षचर्यदण्डसमिदाधानोदकोपस्पर्शनप्रातरभिवादा इत्येते नित्यधर्मा इति [ सू० ३।१।२५ ] ।

अत्र कश्चिदाह—अवचनात् प्रातः समिदाधानं न स्यात्, तदयुक्तम् । कुतः ? सायमारम्भकत्वात् कर्मणः प्रातरप[1]वर्गोऽर्थादेवानुक्तेऽपि भविष्यती[2]त्यतो लाघवार्थे प्रातरित्यवचनम् । तस्मात् सायंप्रातःसमिधमादध्यादिति स्थितम् ।

तथाच मनुः —

दूरादाहृत्य समिधः सन्निदध्याद् विहायसि ।
सायं प्रातश्च जुहुयात् ताभिरग्निमतन्द्रितः(B) ॥ इति ।

समिदा[3]धानानन्तरं चाग्निमभिवादयेत् । तथाच गृह्यान्तरम्—उभयत्राग्निं समिध्य गोत्रनामनी प्रोच्याभिवाद्याऽऽचार्यमभिवादयेदिति(C) ।

---

A. मनुसंहिता २।१०८ । अस्य मेधातिथिकृता व्याख्या—सायं प्रातः समिद्भिरग्नेरादीपनमग्नीन्धनम् । अपर्यङ्कारोहणमधःशय्या न तु स्थण्डिलशायित्वमेव । गुरवे हितम् उदकुम्भाद्याहरणं शुश्रूषालक्षणम्, यत्तु तदुपकारकरणं तद्यावज्जीविकम्, एतदा ब्रह्मचर्यसमाप्तेर्गुरुकुलनिवृत्तिलक्षणात् स्नानात् कर्तव्यम्, स्वाध्यायाध्ययनविध्यर्थत्वात्, ब्रह्मचर्यस्य तद्धर्माणाञ्च यावद्ग्रहणमनुवृत्तिस्तन्निवृत्त्या च निवृत्तिः सिद्धैवेति । अग्नीन्धनादीनां पुनर्वचनं तद्व्यतिरिक्तस्यातिक्रान्तस्य धर्मकलापस्योत्तरेषामप्याश्रमिणामनुष्ठानार्थम् । तथाच गौतमः—उत्तरेषाञ्चैतदविरोधीति । अथैवं कस्मान्न भवत्येते यावद् ब्रह्मचर्यभाविनोऽन्ये पुनरर्वागपि निवर्तन्त इति स्मृत्यन्तरमत्र दर्शितम् प्रधानकालानुवर्तिनश्च नियमा इत्येष न्यायः सत्यां गतौ स्यात् । इति ।

B. मनुसंहिता २।१८६ । मेधातिथिकृता व्याख्या चास्य—दूरग्रहणमपरिगृहीतदेशोपलक्षणार्थम्, ग्रामात् किल दूरमरण्यं न च तत्र कस्यचित् प्रतिग्रहः, अनुपलक्षणे हि दूरार्थे कियद्दूरमित्यनवस्थितः शास्त्रार्थः स्यात् । आहृत्य आनीय, संनिदध्यात् स्थापयेत्, विहायसि गृहस्योपरि, नहि निरवलम्बेऽन्तरिक्षे निधानं सम्भवति, ताभिः सायं प्रातर्जुहुयात्, आहरणं तु तात्कालिकमन्यदा वेच्छया विहायसि निधानमदृष्टार्थमित्याहुः । अन्ये तु ब्रुवते—संप्रत्यानीयमानं भूम्याद्दाह आर्द्रं भवतीति गृहस्योपरि अन्यस्य वा प्रकारादेस्तत एवावगन्तव्यम् । इति ।

C. प्रमाणीकृतं गृह्यान्तरवचनमिदं रघुनन्दनचन्द्रकान्ताभ्याम् ।

---

1. '-वर्गादेवानुक्ते...' ख । 2. '-ष्यती' क-ग । 3. '-धानादनन्तरं' ख ।

उपनयनकर्मण ऊर्ध्वं माणवकः—

**त्रिरात्रमक्षारलवणाशी भवति ॥ ४३ ॥**

ऋज्वर्थम् ॥ ४३ ॥

**तस्यान्ते सावित्रश्चरुः ॥ ४४ ॥**

तस्य [1]व्रतस्य न कर्मणः न च सन्निधानात् त्रिरात्रस्यान्ते, कुतः ? [2]अव्यक्तं प्रधानगामीति वचनात् । इतरथा अस्यान्ते [3]इत्यवक्ष्यत् (A) । तथाच गृह्यान्तरम्— सह [4]प्रवचनान्ते सावित्रश्चरुर्गोदानादीन्यनुप्रवचनीयानि व्रतान्यैन्द्रस्थाली[5]पाकान्तानि भवन्तीति(B) । सविताऽस्य देवतेति सावित्रश्चरुः । सवित्रे त्वा जुष्टं निर्वपामी[6]ति निर्वापः[6]* । सवित्रे स्वाहेति प्रधानहोम [7]इति । (C)

---

A. अत्र रघुनन्दनः—'तस्यान्ते सावित्रश्चरुः, तस्य उपनयनरूपव्रतस्य न तु सन्निधानात् त्रिरात्रस्य, अव्यक्तशब्दस्य प्रधानेन सह सम्बन्धदर्शनात् । अन्यथा तस्यान्ते इत्यवचनीयं स्यात् अस्यान्ते इति वक्तुं युक्तम् । भट्टभाष्येऽप्येवम् । ततश्चतुर्थेऽहनि सावित्रीचरुरिति भवदेवभट्टोक्तं चतुर्थेऽह्नि सावित्रचरुः कार्य इति सरलोकश्च हेयम्, सविताऽस्य देवतेति सावित्रः ।' इत्याह ।

B. अत्र तर्कालङ्कारः—"तच्छब्देनोपनयनस्य परामर्शः । तस्योपनयनव्रतस्य न पुनरुपनयनकर्मणः, न वा सन्निहिततरस्य त्रिरात्रस्य । कुतः ? तदग्रेत्यस्यानर्थक्यापत्तेः । अन्ते इत्येतावतैव निर्वाहाद् गोदानादिव्रतान्तराणामन्ते होमान्तरस्य वक्ष्यमाणत्वादुपनयनव्रतान्तेऽपि कस्यचिदभ्युपगन्तुमुचितत्वाच्च । तथाच गृह्यान्तरम्" इत्युपोद्घातेन प्रमाणीकरोतीदं गृह्यान्तरम् । "तस्मादुपनयनकर्मणश्चतुर्थेऽह्नि सावित्रीचरुहोम इति भवदेवभट्टमतम्, उपनयनकर्मदिन एव आचार्यो माणवकाय भैक्षं प्रदाय सावित्रचरुहोमं कुर्यादिति रघुनन्दनमतञ्चासङ्गतमेव । 'उपनयनरूपव्रतस्यान्ते सावित्रश्चरुः' इति रघुनन्दनस्य स्वव्याख्याऽप्येवं व्याकुप्येत । किञ्च स स्वयं व्रतान्ते सावित्रं चरुं व्याख्याय पुनरुपनयनकर्मणोऽनन्तरमेव तं वर्णयन् व्रतकर्मणोऽविवेकमविद्वांसमिवाऽऽत्मानं ख्यापयति" इत्यप्याह ।

C. यदुक्तं सावित्रव्रतान्ते सावित्रश्चरुरिति तत्र सावित्रव्रतं कियन्तमवधिं यावत् कर्तव्यमित्याह गृह्यसंग्रहे कात्यायनः—

समा मासा अहोरात्रास्तुल्या ब्राह्मणचोदिताः ।
सावित्रमष्टभिर्वर्षैः कार्यं मासैर्दिनैश्च वा ॥ इति २।४३।

1. 'व्रतस्यानी कर्मणो न च सन्नि···' ख । 2. 'अव्यक्तशब्दस्य प्रधानेन सह सम्बन्धदर्शनात् अव्यक्तं' ख । 3. 'इत्यवचनीयं' ख । 4. 'वचनव्रतान्ते' ख । 5. 'पाकानि' ख । 6. नास्ति घ । 7. नास्ति घ ।

# यथार्थं गौर्दक्षिणा(A) ॥ ४५ ॥

अस्य व्याख्या—समाः संवत्सराः मासाः, अहोरात्राश्च ब्राह्मणेन तुल्याः कथिताः, अतः सावित्रं व्रतमष्टभिर्वर्षैरष्टभिर्मासैरष्टभिर्दिनैरपि वा करणीयम्। अयमर्थः, आचार्येण गर्भाष्टमेषु ब्राह्मणमुपनयेत् इति गर्भाष्टमे उपनयनं सूत्रयित्वा 'अथातः षोडशे वर्षे गोदानमि'ति षोडशवर्षे गोदानस्य सूत्रणात् अष्टौ वर्षाः सावित्रव्रतस्य काला लभ्यन्ते। ब्राह्मणेन तु समामासाहोरात्राणां तुल्यत्ववचनात् अष्टौ मासाः अष्टौ दिनान्यपि तस्य काल इति निर्णीयते, तस्मात् आ षोडशाद् ब्राह्मणस्यानतीतः कालो भवति, इत्येतस्मिन्नपि कल्पे अन्ततोऽष्टौ दिनान्यपि सावित्रव्रतमाचरणीयमिति सिद्धम्, तथाच ब्राह्मणम्—यो वै मासः स संवत्सर इति। आदित्यो वा सर्व ऋतवः स यदैवोदेत्यथ वसन्तः यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदाऽपराह्णोऽथ शरत् यदाऽस्तमेत्यथ हेमन्तशिशिरौ इति च। अत्र खलु सर्वान् ऋतून् अहनि सम्पादयति सर्वे च ऋतवः संवत्सरः, तस्माद् अहः संवत्सरशब्देनोच्यते इति पूर्वमीमांसाभाष्ये शबरस्वामिनः। केचित् पुनरेतदविद्वांसः द्वादश वै रात्रयः संवत्सरस्य प्रतिमा इति ब्राह्मणवाक्यमिहोदाहरन्ति। तदसङ्गतम्, कस्मात्? तत्र संवत्सरशब्दस्य साक्षात् प्रतिमाशब्देन संयोगात्। इति।

A. सूत्रमिदं द्विधा विभज्याभ्यस्य च पठति तर्कालङ्कारः।

तत्कृता व्याख्या च—यथार्थमिति उपनयनकर्मणः समाप्तिरनेनोच्यते। गौर्दक्षिणा, उपनयनकर्मण एव नोपनयनव्रतस्य। कुतः? उपनयनकर्मणोऽनन्तरम् आचार्याय वरो दक्षिणा इति गृह्यान्तरसूत्रणात्, अस्माच्च गृह्यान्तरात् दक्षिणेयमाचार्याय दातव्या, तस्माद् ब्रह्मचारिणे भैक्षप्रदानानन्तरमेवाचार्यः कर्मशेषं समापयेत् इति भट्टनारायणाद्यनुमतं समीचीनमवोचाम। समिदाधानस्य प्रधानकर्मान्तरतयोपनयनकर्मानङ्गत्वात् अहःशेषस्थितेस्ताद्रूप्याच्च। इयमपरा सूत्रद्वययोजना, 'यथार्थम्', प्रकृतस्य सावित्रचरोरवसाने यथार्थं यथाप्रयोजनं यथाप्राप्तमित्येतत्। किमनेनोक्तं भवति? एतदनेनोक्तं भवति उपनयव्रतान्ते सावित्रहोमं कृत्वा अग्ने व्रतपते इत्यादिमन्त्रैः सूत्रयिष्यमाणविशेषैराज्येन व्रतसमापकहोमञ्च कृत्वा तन्त्रं समापयेदिति। स खल्वयमाज्यहोमः सर्वेष्वेव व्रतान्तेषु स्यादिति वक्ष्यामः। गौर्दक्षिणा इयं दक्षिणाऽप्युपनयनव्रतस्यैव, एतदपि परस्तादुपपादयिष्यामः। अस्यामपि वर्णनायामुपनयनकर्मणः प्राचीनैव परिसमाप्तिः, दक्षिणा च गौरेव स्यात् पूर्वोक्तकारणादिति न कश्चिद् विरोधः, परन्तु सावित्रचरोः कर्मक्रमस्यासूत्रणाद् यथार्थमित्यस्य कर्मापवर्गपरत्वावगतेश्च पूर्वैव योजना समीचीनेति प्रतिपद्यामहे। अतिक्रान्तसम्बन्धश्चाचार्यस्यानुमत इत्यावेदितमधस्तादिति। अत्र च भाष्यकार-रघुनन्दन-सामश्रमि-मोक्षमूलरादीनां लेखानुसारेणैवमनुमीयते नात्र प्रपाठकसमापकसूत्रस्याभ्यासो वर्तते। अत एव तर्कालङ्कारस्य सूत्राभ्यासप्रयोगः, अभ्यस्तस्य पृथगर्थकरणञ्च न सङ्गतमिति मन्यामहे। प्रमाणमत्र भगवन्तोऽनूचाना इति।

उक्तार्थ[1]मेतत्। [2]इयञ्च औपनयन[3]कर्मणि दक्षिणा। न तु व्रतान्तदक्षिणा (A)। [4]कुतः? यथार्थशब्दस्यानन्तरोक्तत्वात्, अस्याश्च कर्मशेषसमापनार्थत्वात्। कथं [5]नाम? कर्मशेषे समाप्ते गौराचार्याय देया। ब्रह्मणे पूर्णपात्रादीनि, व्रतान्ते त्वनादेशा-दुभाभ्यामपि पूर्णपात्राद्येवेति (B)। नन्वजिनमन्त्रः प्रकरणान्तरेऽप्यत्र च न श्रूयते। तत् किमजिनं तूष्णीमेव देयम् उत कश्चिन्मन्त्रोऽस्ति कस्मिंश्च क्रमे तदजिनं ब्रह्मचारिणे देयमिति? अत्रैक आहुः— क्रममन्त्रयोरनुपदेशात् तूष्णीमेव [6]च यस्मिन् कस्मिंश्च क्रमे देयमिति।

---

A. अत्र रघुनन्दनः—"यथार्थमुदीच्यं महाव्याहृत्यादि कर्म। इयं दक्षिणा उपनयन-कर्मणः, न तु सावित्रचरोः, प्रधानस्योपनयनकर्मणो दक्षिणान्तरानभिधानात्। अत एव उपनयनानन्तरमाचार्याय वरो दक्षिणेति गृह्यान्तरमिति सरला। इदानीमुपनयनातिरिक्तव्रताना-चरणादन्यद् व्रतादि न लिखितम्, भवदेवभट्टेनापि न लिखितम्। कर्मक्रमस्तु उपनयनव्रतान्ते सावित्रचरुहोम इति व्याचख्यौ।

B. अत्र यद्यपि भाष्यकारेणैवमुक्तं तथाऽपि—

येषां व्रतानामन्तेषु दक्षिणा न विधीयते।
वरस्तत्र भवेद् दानमपि वाच्छादयेद् गुरुम्॥ (२।८।१९)

इति कर्मप्रदीपवचनबलात् सावित्रादिव्रतान्तेऽपि गुरवे गौर्दक्षिणा देया, अथवा वास इति बोध्यम्। न च महानाम्निकव्रतान्ते एव अनड्वान् कंसो वासो वर इति दक्षिणाः ३।२।३८। इत्याचार्यसूत्रम्। अतस्तत्रैवैवं दक्षिणा नान्यत्रेति भाष्यकारोक्तमेव ग्रहीतव्यमिति युक्तम्—

अथातो गोभिलोक्तानामन्येषाञ्चैव कर्मणाम्।
अस्पष्टानां विधिं सम्यग् दर्शयिष्ये प्रदीपवत्॥

इति कर्मप्रदीपप्रतिज्ञाश्लोकानुसारेणैव आचार्यानुक्तविषयाणां छन्दोगपरिशिष्टगृहीतानां कर्तव्य-तोपदेशादिति। तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

सावित्रचरुप्रयोगमाह गृह्यकर्मप्रकाशिकायाम्—"अथ सावित्रचरुप्रयोगः, स च सावित्र-व्रतान्ते कार्यः, तदङ्गमाभ्युदयिकश्राद्धं कृत्वा विधिवदग्निं प्रतिष्ठाप्य प्रकृतिस्थालीपाकवदाज्य-भागान्तं कुर्यात्। चरुनिर्वापकाले सवित्रे त्वा जुष्टं निर्वपामीति विशेषः। सवित्रे स्वाहेति चरुं जुहोति ततोऽग्ने व्रतपते व्रतं सावित्रमष्टवर्षमष्टमासमष्टदिनं वा अचारिषमित्यादिभिः पञ्चाऽऽज्या-हुतयः। तन्त्रशेषं समापयेत्, ब्रह्मणे गौर्दक्षिणा, आचार्यायेति केचित्। उपनयनकर्मणश्चतुर्थे-ऽहनि सावित्रचरुं कुर्यादिति भवदेवभट्टः। त्रिरात्रव्रतान्ते सावित्रचरुः कर्तव्य इति भट्ट-नारायणोऽपीममर्थमनुजानाति। उपनयनदिने माणवकाय भैक्षदानादनन्तरं सावित्रचरुरिति रघुनन्दनः" इत्युक्तं सामब्रह्मण्याग्निहोत्री।

---

1. 'एतत्' नास्ति च। 2. 'अयञ्च' ख। 3. '-कर्मदक्षिणा' ख। 4. नास्ति च। 5. नास्ति च। 6. 'च' नास्ति च।

अन्ये त्वाहुः—

अविरोधात् क्रममन्त्रौ शाखान्तरादुपलब्धव्यौ।

तथाच मनुः—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।

अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः(A) ॥ [1]इति।

तस्मान्मन्त्रेण देय[2]मिति। [3]कस्तर्हि मन्त्र इति उच्यते[3]*—

"मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम्।

अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥" (B)

इत्ययमजिनप्रदानमन्त्रः तैत्तिरीय[4]शाखापठितो द्रष्टव्यः[4]*। क्रमोऽपि तदुक्त एव। अथवा सुश्रव इति दण्डं प्रदायाजिनं प्रयच्छतीति [स्वशाखाभेदे पठितत्वादयमेव क्रम [5]इति (C)।

इति [6]भट्टनारायणकृतौ[6]* [7]गोभिलीय-गृह्यसूत्रभाष्ये[7]*

द्वितीयप्रपाठकस्य दशमी कण्डिका।

द्वितीयप्रपाठकः समाप्तः।

---

A. मनुसंहिता २।६४। अत्र 'मन्त्रवत्' इति मुद्रितमनुसंहितापाठः। अस्य कुल्लूकभट्टोक्ता व्याख्या—मेखलादीनि विनष्टानि भिन्नानि छिन्नानि च जले प्रक्षिप्य अन्यानि नवानि स्वस्वगृह्योक्तमन्त्रैर्गृह्णीयात्। इति। अत्र संवादिप्रमाणमुक्तं गृह्यासंग्रहे—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।

अप्सु प्रास्येद् विनष्टानि गृहीत्वाऽन्यानि मन्त्रतः ॥ (गृ० स० २।४७) इति।

B. मन्त्रस्यास्य विनियोगप्रमाणन्तु आपस्तम्बगृह्ये ४।१०-११। हिरण्यकेशिगृह्ये १।४।६। शाङ्खायनगृह्येऽपि २।१।३०।

अस्य व्याख्या—अहं ब्रह्मचारी मित्रस्य सूर्यस्य, चक्षुः दर्शकम्, धरुणं धारकम्, बलीयः दृढतरम्, तेजो यशस्वि तेजो-यशोदधानम्, स्थविरं स्थूलम्, समिद्धम् उज्ज्वलम्, अनाहनस्यं मलापकर्षणार्थं पाषाणाद्यै न आहन्तव्यम्, जरिष्णु जरणशीलं दीर्घकालस्थायि, वाजि यज्ञार्हम्, इदम् अजिनं परिदधे धारयामि। इति।

C. अत्र तर्कालङ्कारः—"चाक्षं चास्मै दण्डं प्रयच्छतीति सूत्रे चशब्दादजिनमपि दण्डदानानन्तरमेव प्रयच्छतीति। 'कस्मात्? सुश्रव इति दण्डं प्रदायाजिनं प्रयच्छतीति स्वशाखाभेदे पठितत्वात्, तस्मादाचार्येणानुपदेशादिच्छया यस्मिन् कस्मिन्नपि क्रमे धारणमजिनस्येत्यसङ्गतं

---

1. 'इति' नास्ति घ। 2. 'इति' नास्ति ख। 3. 'मन्त्रश्च' च। 4. 'शाखायां पठितः' च। 5. 'इति' नास्ति च। 6. नास्ति ग। 6.-7. नास्ति ख।

वचनम्। अजिनधारणस्यापि मनुना मन्त्रवस्त्वोपदेशात् तन्मन्त्रश्च स्वशाखायामभावात् मित्र-स्येति तैत्तिरीयशाखापरिपठितो ग्रहव्यः। अपरे पुनरेतदविद्वांसो भाषन्ते मन्त्रानुपदेशादमन्त्रक-मजिनस्य धारणम् इति"। इत्याह।

अथोपनयनविषये छन्दोगखादिरग्राह्यायणगृह्याणां समानुपूर्वीकाणि सूत्राण्युपस्थाप्यन्ते— अष्टमे वर्षे ब्राह्मणमुपनयेत्। तस्या षोडशादनतीतः कालः। एकादशे क्षत्रियम्। तस्या द्वाविंशात्। द्वादशे वैश्यम्। तस्या चतुर्विंशात्। कुशलीकृतमलङ्कृतमहतेनाऽऽच्छाद्य हुत्वाऽग्ने-व्रतपत इति। उत्तरतोऽग्नेः प्रत्यङ्मुखमवस्थाप्याञ्जलिं कारयेत्। स्वयं चोपरि कुर्यात्। दक्षिणत-स्तिष्ठन् मन्त्रवान् ब्राह्मण आचार्यायोदकाञ्जलिं पूरयेत्। आगन्त्रेति जपेत् प्रेक्षमाणे। को-नामासीत्युक्तो देवताश्रयं नक्षत्राश्रयं वाऽभिवादनीयं नाम ब्रूयादसावस्मीति। उत्सृज्यापो देवस्य त इति दक्षिणोत्तराभ्यां हस्ताभ्यामञ्जलिं गृह्णीयादाचार्यः। सूर्यस्येति प्रदक्षिणमावर्तयेत्। दक्षिणमंसमन्ववमृश्यानन्तर्हितां नाभिमालभेत् प्राणानामिति। अथैनं परिदद्यादन्तक-प्रभृतिभिः। दक्षिणमंसं प्रजापतये त्वेति। सव्येन सव्यं देवाय त्वेति। ब्रह्मचार्यसीति। संप्रेष्योप-विश्य दक्षिणजान्वक्तमञ्जलिकृतं प्रदक्षिणं मुञ्जमेखलामाबध्नन् वाचयेत् इयं दुरुक्तादिति। 'अधीहि भो' इत्युपसीदेत्। तस्मा अन्वाह सावित्रीं पच्छोऽर्द्धर्चशः सर्वामिति। महाव्याहृतीश्चैकैकशः। ॐकारञ्च। प्रयच्छत्यस्मै वार्क्षं दण्डम्। सुश्रवः सुश्रवसं मेति। समिधमादध्यादग्नये समिध-मिति। भैक्षं चरेत्। मातरमग्रे। अथान्याः सुहृदः। आचार्याय भैक्षं निवेदयेत्। तिष्ठेदा-ऽस्तमयात् तूष्णीम्। त्रिरात्रं क्षारलवणदुग्धमिति वर्जयेत्। इति।

जैमिनिगृह्यसूत्राणि—सप्तमे ब्राह्मणमुपनयीत पञ्चमे ब्रह्मवर्चसकामं नवमे त्वायुष्काममेकादशे क्षत्रियं द्वादशे वैश्यं नातिषोडशमुपनयीत प्रसृष्टवृषणो ह्येष वृषलीभूतो भवतीति तत एनं स्नात-मलङ्कृतमाक्ताक्षं कृतनापितकृत्यमानयन्ति समहतेन वाससा परिदधीत परीमं सोमेति यथावर्णं परीमं सोम ब्रह्मणा महे श्रोत्राय दध्मसि। यथेमं जरिमाण याज्योक्श्रोत्रे अधिजागराज्जीवाहि शरदः शतं पश्याहि शरदः शतमिति परीममिन्द्र ब्रह्मणा महे राष्ट्राय दध्मसि। यथेमं जरिमाण याज्योग्राष्ट्रे अधिजागराज्जीवाहि शरदः शतं पश्याहि शरदः शतमिति परीमं पोषब्रह्मणा महे पोषाय दध्मसि। यथेमं जरिमाण याज्योक् पोषे अधिजागराज्जीवाहि शरदः शतं पश्याहि शरदः शतम्। इत्यथैनं पश्चादग्नेः प्राङ्मुखमुपवेश्य यज्ञोपवीतिनमाचार्य आचामयत्याचान्तमुत्थाप्यो-त्तरतोऽग्नेः प्राचो दर्भानास्तीर्य तेष्वक्षतमश्मानमत्याधाय तत्रैनं दक्षिणेन पादेनाश्मान-मधिष्ठापयेत् 'इममश्मानमारोहाश्मेव त्वं स्थिरो भव, द्विषन्तमपबाधस्व मा च त्वा द्विषतो वधीत्। इत्यथैनं पश्चादग्नेः प्राङ्मुखमुपवेश्योत्तरत आचार्योऽन्वारब्धे जुहुयान्महाव्याहृतिभि-र्हुत्वा वेदाहुतिभिश्च संवांतमात्स्ये भूर्भुवः स्वाहेति प्रतिमन्त्रं भूर्भुवः स्वाहा, भुवो यजूंषि स्वाहा, स्वः सामानि स्वाहेति प्राशितमाचान्तमुत्थाप्य नमो वातायेत्येनं प्रदक्षिणमग्निं परिणयेत्, नमो वाताय, नमोऽस्त्वग्नये, नमः पृथिव्यै, नम ओषधीभ्यः,

नमो वोऽष्टाय जुहते करोमीत्यभिगन्तरभिगच्छ प्रदातः प्रयच्छासावमुष्मै वेदम्। इत्यथैनं पश्चादग्नेः प्राङ्मुखमवस्थाप्य पुरस्तादाचार्यः प्रत्यङ्मुखस्तावञ्जली कुरुत उत्तरत आचार्यस्त-मन्योऽद्भिः पूरयेञ्जिलावेनेतरस्य पूरणमथैनं संशास्ति, ब्रह्मचर्यमगामुपमानयस्वेति को नामासीत्यसाविति नामधेयं दद्यात्। तत्राचार्यो जपति हिंभूर्भुवः स्व रागन्म समगन्महि प्र सु मर्त्यं युयोतन। अरिष्टाः सञ्चरेमहि स्वस्ति चरतादयम्। इत्यथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं गृह्णाति, इन्द्रस्ते हस्तमग्रभीद्धाता हस्तमग्रभीत् पूषा हस्तमग्रभीत् सविता हस्तमग्रभीत् अर्यमा हस्तमग्रभीत् मित्रस्त्वमसि धर्मणाऽग्निराचार्यस्तवेति। प्राणानां ग्रन्थिरसीति नाभिदेशमारभ्य जपति प्राणानां ग्रन्थिरसि मा विस्रसाऽन्तक मृत्योरन्तरं कुर्विति दक्षिणमंसमन्ववमृश्य मयि व्रत इति हृदयदेशमारभ्य जपति मयि व्रते हृदयं ते अस्तु, मम चित्तमनुचित्तं ते अस्तु। मम वाचमेकव्रतो जुषस्व बृहस्पतिस्त्वा नियुनक्तु मयीति। अथैनं परिददाति अग्नये त्वा परिददामि, वायवे त्वा परिददामि, देवाय त्वा सवित्रे परिददाम्यद्भ्य-स्त्वौषधीभ्यः परिददामि सर्वेभ्यस्त्वा देवेभ्यः परिददामि, सर्वेभ्यस्त्वा भूतेभ्यः परिददा-म्यरिष्ट्या इति। अथैनं संशास्ति ब्रह्मचार्यसि समिध आधेहि, अपोऽशान, कर्म कुरु, मा दिवा स्वाप्सीरिति। अग्नये समिधमाहार्षमिति घृतेनाक्ताः समिध आदधात्यग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्य स एवमहमायुषा वर्चसा तेजसा सन्या मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसे नान्नाद्येन धनेन समेधिषीय स्वाहा। अप्सरासु या मेधा गन्धर्वेषु च यन्मनः। दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषतां स्वाहा। भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा, भूर्भुवः स्वः स्वाहा इति। इयं दुरुक्तादिति मेखलामाबध्नीत, इयं दुरुक्तात् परिबाध-माना वर्णं पवित्रं पुनतीम आगात्। प्राणापानाभ्यां बलमाभरन्ती स्वसा देवी सुभगा मेखलेयम्। ऋतस्य गोप्त्री तपसः परस्त्री घ्नती रक्षः सहमाना अरातीः। सा मा समन्तादभिपर्येहि भद्रे भर्तारस्ते मेखले मा रिषाम इति मौञ्जी ब्राह्मणस्य मौर्वी राजन्यस्य मुञ्जमिश्रां तामली वैश्यस्य मौञ्जी वा सर्वेषाम्। अथ परिधानानि क्षौमं वा शाणं वान्तरं ब्राह्मणस्यैणेयमुत्तरं रौरवं राजन्यस्य आजं वैश्यस्यैणेयं वा सर्वेषाम्, स्वस्त्ययनोऽसीति दण्डं प्रयच्छेत्, प्राणसंमितं पालाशं ब्राह्मणस्य वैल्वं ब्रह्मवर्चसकामस्य नैयग्रोधं राजन्यस्यौदुम्बरं वैश्यस्य पालाशं वा सर्वेषाम्। मातरं प्रथम भिक्षेताथान्याः सुहृदो भवत्पूर्वया ब्राह्मणो भिक्षेत 'भवति भिक्षां देही'ति भवन्मध्यमया राजन्यो 'भिक्षां भवति देही'ति भवदन्त्यया वैश्यो 'देहि भिक्षां भवती'ति, क्षां च हिं च न वर्धयेत् भवत्-पूर्वया वा सर्वे, प्रायश्चित्तं चेदुत्पद्येत जीवा स्थ जीवयत मेत्येनमप आचामयेत, जीवा स्थ जीवयत मापो नाम स्थामृता नाम स्थ स्वधानाम स्थ तासां वो भुक्षिषीय सुमतौ मा धत्त शिवा मे भवत नमो वोऽस्तु मा मा हिंसिष्टेति भैक्षमुपन्याहृतम् ऊर्ध्वं त्रिरात्रात् सावित्रीं प्रब्रूयात् तदहर्वा पश्चादग्नेः पच्छोऽर्धर्चशः सर्वामित्यनूच्य वेदमारभ्याग्ने व्रतपत इति घृतेनाक्ताः समिध आदधाति 'अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा। वायो व्रतपते व्रतं चरिष्यामि

तच्छकेयं तन्मे राध्यतां स्वाहा । आदित्य व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा । व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहेति । तदेतद् व्रतादेशनं सर्वत्र व्रतसमाप्तौ, 'अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहेति । मन्त्रान् संनमयेत् अथैनं संशास्ति ब्रह्मचारी, आचार्याधीनः, प्रशान्तोऽधःशायी दण्डमेखलाजिनजटाधारी स्त्र्यनृतमधु-मांसगन्धमाल्यवर्जी भवेति, त्रिरात्रमक्षारालवणाशी ऊर्ध्वं त्रिरात्रात् प्राचीं वोदीचीं वा दिशमुप-निष्क्रम्य पलाशं गत्वा व्याहृतिभिरभ्यज्य स्थालीपाकेनेष्ट्वा यज्ञोपवीतं दण्डमित्युदस्य प्रत्येयाद् गौर्दक्षिणा । इति ।

लौगाक्षिकाठकगृह्ययोः समानुपूर्वीकाणि सूत्राणि च—सप्तमे वर्षे ब्राह्मणस्योपायनम् । नवमे राजन्यस्य । एकादशे वैश्यस्य । आ षोडशाद् ब्राह्मणस्यानतिक्रम आ द्वाविंशाद्राजन्यस्य आ चतुर्विंशाद् वैश्यस्य । आतोऽसकेशे यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा रेवतीस्त्वा व्यक्ष्णन् कृत्यहतं वासोऽभिमन्त्रयते । देवीर्देवाय परिधे सवित्रे परिधत्तेति परिधापयति । जरां गच्छ परिधत्स्व वासोऽभूरापीचामभिशस्तिपावा । शतञ्चेति ब्राह्मणस्य । परीममिन्द्रमोजसे महे क्षत्रायेति राजन्यस्य । परीमं मनुमायुषे महे पोषायेति वैश्यस्य । परीदं वासोऽधिथाः स्वस्तये इति वैताभ्याम् । अग्निमभिदक्षिणमानीय, एह्यश्मानमातिष्ठाश्मेवेति दक्षिणेन पदाऽश्मान-मास्थापयति । मम व्रते हृदयं ते दधामीति नाभिदेशादूर्ध्वं पाणिनोन्मार्ष्टि । दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा ब्रह्मचर्यमागामुपमानयस्वों भूर्भुवः स्वरिति वाचयति । इयं दुरुक्तात् परिबाध-मानेति वाचयन् मेखलामाबध्नीते । मौञ्जीं त्रिवृतं ब्राह्मणाय प्रयच्छति मौर्वीं धनुर्ज्यां राजन्याय सौत्रीं वैश्याय । चितस्य समोऽसि दैव्यो ग्रन्थिरसि मा विस्रंस इति ग्रन्थिं कृत्वा मित्रस्य चक्षुर्धरुणं बलाय तेजो यशस्वि स्थविरं समृद्धम् । अनाहनस्यं वसनं चरिष्णु परीदं वाज्यजिनं दधेयमिति वाचयत्यैणेयं चर्म ब्राह्मणाय प्रयच्छति, वैयाघ्रं राजन्याय, रौरवं वैश्याय । तच्चक्षुरित्यादित्य-मुपस्थापयति । को नामासीत्युक्तेऽभिवादने प्रोक्तेऽसा अहं भो इति प्रत्याह । देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसा उपनयेऽसौ, सविता ते हस्तमग्रहीदग्निराचार्यस्तव । कस्त्वा कमुपनयेऽसौ काय त्वा परिददामि । कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यस्मीति प्रत्याह । प्रजापतये त्वा परिददामि, देवाय त्वा सवित्रे परिददामि, बृहस्पतये त्वा परिददाम्यसौ । देव सवितरेष ते ब्रह्मचारी तं गोपायस्व दीर्घायुः स मा मृत । अग्निपुत्रैष ते, वायुपुत्रैष ते, सूर्यपुत्रैष ते, विष्णुपुत्रैष ते, ब्रह्मपुत्रैष ते, ब्रह्मचारी तं गोपायस्व दीर्घायुः स मा मृत । ब्रह्मचार्यसि, अपोऽशान, कर्म कुरु, दिवा मा सुषुप्सीः । वाचं यच्छ । मेधां मह्यमिति वाचयति । मेधां मह्यमङ्गिरस इति ।

एताभिरेव चतसृभिरनुप्रवचनीयान्जुहुयाद् चतुर्थोत्तमां छन्दोभ्यः स्वाहेति ऋतुनामधेयेन यथोपाचरितः ऋतुर्भवत्येवं सर्वाणि वेदोक्तानि । पश्चादग्नेर्दर्भेषु प्राक्कासीनः प्रत्यङ्मुखासीनाय तत्-सवितुरिति सावित्रीं त्रिरन्वाह पच्छोऽर्धर्चशः सर्वामन्ततो यस्य मेधाकामः स्यात् । पालाशमेक-

सर्वं दण्डं नवनीतेनाभ्यज्य तस्य च्छायायां वाचयति छत्रवः छत्रवा असीति। पालाशं दण्डं ब्राह्मणाय प्रयच्छत्याश्वत्थं राजन्याय नैयग्रोधं वैश्याय। स्मृतं च म इति वाचयति। 'अधीते हैतेषां वेदानामेकं द्वौ त्रीन् सर्वान् वा यमेषं विद्वानुपनयत' इति श्रुतिः। कर्त्रे वरं ददाति। अहःशेषं स्थापयेत्। इति।

आश्वलायनगृह्यसूत्राणि—अष्टमे वर्षे ब्राह्मणमुपनयेत्। गर्भाष्टमे वा। एकादशे क्षत्रियम्। द्वादशे वैश्यम्। आ षोडशाद् ब्राह्मणस्यानतीतः कालः। आ द्वाविंशात् क्षत्रियस्य, आ चतुर्विंशाद् वैश्यस्य, अत ऊर्ध्वं पतितसावित्रीका भवन्ति। नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः। अलङ्कृतं कुमारं कुशलीकृतशिरसमहतेन वाससा संवीतमैणेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम्। यदि वासांसि वसीरन् रक्तानि वसीरन् काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः। तेषां मेखलाः। मौञ्जी ब्राह्मणस्य, धनुर्ज्या क्षत्रियस्य, आवी वैश्यस्य। तेषां दण्डाः। पालाशो ब्राह्मणस्य, औदुम्बरः क्षत्रियस्य, बैल्वो वैश्यस्य। केशसंमितो ब्राह्मणस्य, ललाटसंमितः क्षत्रियस्य, प्राणसंमितो वैश्यस्य। सर्वे वा सर्वेषाम्। समन्वारब्धे हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते। पुरस्तात् प्रत्यङ्मुख इतरः। अपामञ्जली पूरयित्वा तत्सवितुर्वृणीमहे इति।

पूर्णेनास्य पूर्णमवक्षारयत्यासिच्य देवस्य त्वा...गृह्णाम्यसाविति तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात्। सविता ते हस्तमग्रभीदसाविति द्वितीयम्। अग्निराचार्यस्तवासाविति तृतीयम्। आदित्यमीक्षयेत् देव सवितरेष ते ब्रह्मचारी तं गोपाय स मा मृतेत्याचार्यः। कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि, कस्त्वामुपनयते काय त्वा परिददामीति। युवा सुवासाः परिवीत आगादित्यर्धर्चेनैनं प्रदक्षिणमावर्तयेत्। तस्याध्यंसौ पाणी कृत्वा हृदयदेशमालभेतोत्तरेण। अग्निं परिसमुह्य ब्रह्मचारी तूष्णीं समिधमादध्यात्, तूष्णीं वै प्राजापत्यं प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायते। मन्त्रेण हैके अग्नये समिधमाहार्षमिति। स समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि त्रिः तेजसा मा समनज्मीति। तेजसा ह्येवाऽऽत्मानं समनक्तीति विज्ञायते। मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्रमिन्द्रियं दधातु, मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु। यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासमित्युपस्थाय जान्वाच्योपसंगृह्य ब्रूयात्, अधीहि भोः सावित्रीं भो अनुब्रूहीति। तस्य वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वाम्। यथाशक्ति वाचयीत। हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति, मम व्रते हृदयन्ते दधामि मम चित्तमनुचित्तं तेऽस्त्विति। मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत्। ब्रह्मचार्यसि अपोऽशान, कर्म कुरु, दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्वेति। द्वादशवर्षाणि वेदब्रह्मचर्यम्। ग्रहणान्तं वा। सायं प्रातर्भिक्षेत। सायं प्रातः समिधमादध्यात्। अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा। भवान् भिक्षां ददात्विति अनुप्रवचनीयमिति वा। तद्वाचार्याय वेदयीत। तिष्ठेदहःशेषम्। अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयित्वाचार्याय

वेब्रुवीत। आचार्यः समन्वारब्धे जुहुयात् सदसस्पतिमद्भुतमिति। सावित्र्या द्वितीयम्। यद्वा यत् किञ्चित् ऊर्ध्वमनूक्तं स्यात्। ऋषिभ्यस्तृतीयम्। सौविष्टकृतं चतुर्थम्। ब्राह्मणान् भोजयित्वा वेदसमाप्तिं वाचयीत। अत ऊर्ध्वमक्षारलवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं वा। इति।

आपस्तम्बगृह्यसूत्राणि च—उपनयनं व्याख्यास्यामः। गर्भाष्टमेषु ब्राह्मणमुपनयीत। गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम्। वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण। ब्राह्मणान् भोजयित्वाशिषो वाचयित्वा कुमारं भोजयित्वाऽनुवाकस्य प्रथमेन यजुषाऽपः संसृज्योष्णाः शीता-स्वानीयोत्तरया शिर उनत्ति। त्रींस्त्रीन् दर्भानन्तर्धायोत्तराभिश्चतसृभिः प्रतिमन्त्रं प्रतिदिशं प्रवपति। वपन्तमुत्तरयाऽनुमन्त्रयते दक्षिणतो माता ब्रह्मचारी वा। आनडुहे शकृत्पिण्डे यवान् निधाय तस्मिन् केशानुपयम्योत्तरयोदुम्बरमूले दर्भस्तम्बे वा निदधाति। स्नातमग्नेरुप-समाधानाद्याज्यभागान्ते पालाशीं समिधमुत्तरयाधाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापय-त्यातिष्ठेति। वासः सद्यः कृत्तोतमुत्तराभ्यामभिमन्त्र्योत्तराभिस्तिसृभिः परिधाप्य परिहितमुत्तरया अनुमन्त्रयते। मौञ्जीं मेखलां त्रिवृतां त्रिःप्रदक्षिणमुत्तराभ्यां परिवीयाजिनमुत्तरमुत्तरया। उत्तरे-णाग्निं दर्भान् संस्तीर्य तेष्वेनमुत्तरयाऽवस्थाप्योदकाञ्जलिमस्मा अञ्जलावानीयोत्तरया त्रिः प्रोक्ष्य उत्तरैर्दक्षिणे हस्ते गृहीत्वोत्तरैर्देवताभ्यः परीदायोत्तरेण यजुषोपनीय सुप्रजा इति दक्षिणे कर्णे जपति। ब्रह्मचर्यमागामिति कुमार आह। प्रष्टं परस्य प्रतिवचनं कुमारस्य। शेषं परो जपति। प्रत्यगाशिषं चैनं वाचयति। उक्तमाज्यभागान्तम्। अथैनमुत्तरा आहुतीर्हावयित्वा जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वाऽपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्नुत्तरेण यजुषोपनेतोपविशति। पुरस्तात् प्रत्यङ्ङासीनः कुमारो दक्षिणेन पाणिना दक्षिणं पादमन्वारभ्याह—'सावित्रीं भो अनु-ब्रूही'ति। 'तस्मा अन्वाह तत् सवितु'रिति। पच्छोऽर्धर्चशस्ततः सर्वाम्। व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथार्धर्चयोरुत्तमां कृत्स्नायाम्। कुमार उत्तरेण मन्त्रेणोत्तरमोष्ठमुपस्पृशते। कर्णावुत्तरेण। दण्डमुत्तरेणाऽऽदत्ते। पालाशो दण्डो ब्राह्मणस्य, नैयग्रोधस्कन्धजोऽवाङग्रो राजन्यस्य बादर औदुम्बरो वा वैश्यस्य। वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति। 'स्मृतं च म' इत्येतद् वाचयित्वा गुरवे वरं दत्त्वोदायुषेत्युत्थाप्योत्तरैरादित्यमुपतिष्ठते। यं कामयेत नायमच्छि-द्येतेति तमुत्तरया दक्षिणे हस्ते गृह्णीयात्। त्र्यहमेतमग्निं धारयन्ति। क्षारलवणवर्जनञ्च। 'परि त्वे'ति परिमृज्य तस्मिन्नुत्तरैर्मन्त्रैः समिध आदध्यात्। एवमन्यस्मिन्नपि सदाऽरण्यादेधाना-हृत्य। उत्तरया संशास्ति। वासश्चतुर्थीमुत्तरया आदत्तेऽन्यत् परिधाप्य। इति।

मानवगृह्यसूत्राणि च—सप्तमे नवमे वोपायनम्। आगन्त्रा समगन्महीत्युक्तेन स्नाते-नाप्तेनाभ्यक्तेनालङ्कृतेन यज्ञोपवीतिना समेत्य जपति। अथास्मै वासः प्रयच्छति—या अकृन्तन् इत्यहतं वासः परिधाप्यान्वारब्धेऽधारावाज्यभागौ हुत्वाज्यशेषे दध्यानीय दधिक्राव्णो अकारिष-मिति दधि त्रिः प्राश्नाति को नामासीत्याह। नामधेये प्रोक्ते देवस्य त्वा सवितुरिति हस्तं गृह्णाम

गृह्णाति। प्राङ्मुखस्य प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नासीनस्य दक्षिणमुत्तानं दक्षिणेन नीचारिकमरित्नेन सविता ते हस्तमग्रहीदसावग्निराचार्यस्तव। देव सवितरेष ते ब्रह्मचारी त्वं गोपाय समामृतत्। कस्य ब्रह्मचार्यसि, प्राणस्य ब्रह्मचार्यसि। कस्त्वा कमुपनयते। काय त्वा परिददामि। कस्मै त्वा परिददामि। भगाय त्वा परिददाम्यर्यम्णे त्वा परिददामि। सवित्रे त्वा परिददामि। सरस्वत्यै त्वा परिददामि। इन्द्राग्नीभ्यां त्वा परिददामि। विश्वेभ्यस्त्वा देवेभ्यः परिददामि, सर्वेभ्यस्त्वा देवेभ्यः परिददामीति परिददाति। ब्रह्मणो ग्रन्थिरसि स ते मा विस्रंसदिति हृदयदेशमारभ्य जपति। प्राणानां ग्रन्थिरसीति प्राणदेशम्। ऋतस्य गोप्त्री तपसस्तरुत्रीति मौञ्जीं पृथ्वीं त्रिगुणां मेखलामाबध्ते। युवा सुवासा इति मेखलां प्रदक्षिणं त्रिःपरिणयति। पुंसवीन् ग्रन्थीन् बध्नाति। इयं दुरुक्तात् परिबाधमानेति तस्यां परि वीतायां जपति। मम व्रते ते हृदयं दधामीति। यज्ञियवृक्षस्य दण्डं प्रदाय कृष्णाजिनं चाऽऽदित्यमुपस्थापयति। अध्वनामध्वपते इति। अभि दक्षिणमानीयाग्नेः पश्चात् एह्यश्मानमातिष्ठेति दक्षिणेन पादेनाश्मानमास्थापयति। पश्चादग्नेर्मदुपस्तीर्य सूपस्थलं कृत्वा प्राङासीनः प्रत्यङासीनायानुवाचयति गायत्रीं सावित्रीमपि ह्येके, त्रिष्टुभमपि ह्येके जगतीमोमित्युक्त्वा व्याहृतिभिश्च। तां त्रिरवगृह्णीयात् तां द्विरवकृत्य तां सकृत् समस्येत्। पादशोऽर्धर्चशः सर्वामन्तेन। यत् तिसृणां प्रातरन्वाह यद् द्वयोर्यदेकस्याः संवत्सरे द्वादशाहे षडहे त्र्यहे वा तस्मात् सद्योऽनूच्येति श्रुतिः। वरं कर्त्रे ददाति कांस्यं वसनञ्च। यस्य तु मेधाकामः स्यात् पलाशं नवनीतेनाभ्यज्य तस्य च्छायायां वाचयेत् सुश्रवः सुश्रवा असीति। अधीते ह वा अयमेषां वेदानामेकं द्वौ त्रीन् सर्वान् वेति यमेवं विद्वांसमुपनयतीति श्रुतिः। व्याख्यातं ब्रह्मचर्यम्। अथ भैक्षं चरते मातरमेवाग्रे याश्चान्याः सुहृदो यावत्यो वा सन्निहिताः स्युः। आचार्याय भैक्षमुपकल्पयते तेनानुज्ञातो भुञ्जीतेति श्रुतिः। इति।

वाराहगृह्यसूत्राणि तु—गर्भाष्टमे ब्राह्मणमुपनयेत्। षष्ठे सप्तमे पञ्चमे वा। ततो गर्भैकादशेषु क्षत्रियम्, गर्भद्वादशेषु वैश्यम्। प्राक् षोडशाद् वर्षाद् ब्राह्मणस्यापतिता सावित्री। आ द्वाविंशात् क्षत्रियस्य। आ चतुर्विंशाद् वैश्यस्य। अत ऊर्ध्वं पतितसावित्रीका भवन्ति। नैनान् याजयेयुर्नाध्यापयेयुर्न विवहेयुः। अभ्यन्तरं जटाकरणं बहिरुपनयनमुक्तोऽग्निसंस्कारः। ब्राह्मणस्य कुमारं पर्युप्तिनं स्नातमभ्यक्तशिरसमुपस्पर्शनकल्पेनोपस्पृश्यमग्नेर्दक्षिणतोऽवस्थाप्य दधिक्राव्णो अकारिषमिति कुमारं दधि त्रिः प्राशयेत्। इयं दुरिक्ता परिबाधमानेति मौञ्जीं त्रिगुणां त्रिः परिवृतां मेखलामाबध्नीत मौर्वीं धनुर्ज्यां क्षत्रियस्य शार्णी वैश्यस्य। उपवीतमसि यज्ञस्य त्वोपवीतेनोपव्ययामीति यज्ञोपवीतम्। या अकृन्तन् या अतन्वन्निति अहतं वास आछाद्य मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशःश्री स्थविरं समिद्धम्। आनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् इति कृष्णाजिनञ्च। आज्यं संस्कृत्य ब्राह्मणमामन्त्र्य समिधमाधाय-धाराचाघारावाज्यभागौ हुत्वाऽष्टौ जटाकरणीयान् जुहुयात्। व्याहृतिभिश्चोक्तः कर्मान्तः पूर्वेण। काकाय वां गोत्राय वां जैत्राय वां मैत्राय वामजायाय वामवनेनिजमीत्युदकेनाञ्जलिं पूरयित्वा

उक्त्ताय वासिति पाणी प्रक्षाल्य इदमहं दुर्यमन्यानि प्क्षावयामीत्याचम्य निष्ठीवति। भ्रातृव्याणां सपत्नानामहं भूयासमिति द्वितीयम्। प्रातर्जितं भगमुग्रं हुवेम वयं...महीत्याहेत्याविरित्यमुपतिष्ठेत। ब्रह्मचर्यमुपागामुपमाह्वयस्वेति ब्रूयात्। एहि ब्रह्मोपेहि ब्रह्म ब्रह्म त्वा संब्रह्म सन्तमुपनयाम्यहमसाविति। अथास्याभिवादनीयं नाम गृह्णाति। देवस्य त्वेति हस्तं गृह्णाम्यहमसावित्यस्य हस्तं दक्षिणेन दक्षिणमुत्तानमभि वाऽङ्गुष्ठमभि वा लोमानि गृह्णीयात्। ममेवान्वेतु ते मनो मामेवेत्येनं संप्रेक्षमाणं समीक्षते। पृष्ठतोऽस्य पाणिमन्वाहृत्य हृदयदेशमन्वारभ्य जपति प्राणानां ग्रन्थिरसि स ते मा विस्रंसदिति। ब्रह्मणो ग्रन्थिरसि इति नाभिदेशम्। गणानां त्वा गणपतिं हवामहे इति प्रदक्षिणमग्निं परिणयेत्। पश्चादग्नेर्दर्भेषूपविशति दक्षिणतश्च ब्रह्मचारी अधीहि भोः इत्युपविश्य जपति। प्रभुज्य दक्षिणं जानु पाणी सन्धाय दर्भहस्तायोमित्युक्त्वा व्याहृतिभिः सावित्रीं चानुब्रूयात्। एवं काण्डानुवचनेषु। तत् सवितुर्वरेण्यम् इति गायत्रीं ब्राह्मणाय, देवो याति सविता सुरत्न इति त्रिष्टुभं क्षत्रियाय, युञ्जते मन इति जगतीं वैश्याय, पच्छोऽर्धर्चशः सर्वामन्ततः। पालाशं दण्डं ब्राह्मणाय प्रयच्छति नैयग्रोधं क्षत्रियाय आश्वत्थं वैश्याय। सुश्रवः सुश्रवसं मां कुर्विति दण्डं प्रतिगृह्णाति। ऊर्ध्वकपालो ब्राह्मणस्य कमण्डलुः परिमण्डलः क्षत्रियस्य निष्ककलो वैश्यस्य। इमा आपः प्रभराम्ययक्ष्मायेति प्रतिगृह्णामीति प्रतिगृह्य भैक्ष्यचर्यं चरेत्। ॐ भवति भिक्षां देहीति ब्राह्मणः, भवतिमध्यां क्षत्रियः, भवत्यन्तां वैश्यः। षतस्रः षड्‌ढौ वा अविधवा अप्रत्याख्यायिन्यो मातरं प्रथममेके। गुरवे निवेद्य वाग्यतः प्राग् ग्रामात् सन्ध्यामुपास्ते। तिष्ठन् पूर्वां सावित्रीं त्रिरधीत्य अध्वनामध्वपते श्रेष्ठाः स्वस्त्यस्याध्वनः पारमशीय। तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत। पश्येम शरदःशतं जीवेम शरदः शतं शृणुयाम शरदः शतम्। प्रब्रवाम शरदः शतम् अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्। या मेधा इति प्रत्येत्याग्निं परिचरेत्। इमं स्तोममर्हत इति परिसमूहेत्। एधोऽस्येधिषीमहीति समिधमादधाति। समिदसि समेधिषीमहीति द्वितीयम्। आपो अद्यान्वचारिषमित्युपतिष्ठते। मा संसृज वर्चसेति मुखं परिमृजीत, यदग्ने तपसा तपो ब्रह्मचर्यमुपेयमसीति समिधमादधाति। तेजसा मा समङ्ग्धि वर्चसा मा समङ्ग्धि ब्रह्मवर्चसेन मा समङ्ग्धि इति मुखं परिमृजीत। आयुर्दा अग्नेऽसीति च यथारूपं गात्राणि संमृशति। इह धृतिरिति पर्यायैः अंसग्रीवाश्च त्रिरालभ्य ऋचं नो धेहीति ललाटमभिमृशेत्। आद्यन्तयोः पर्युक्षणम्। गुरवे ब्रह्मणे च वरमुत्तरासङ्गं च ददाति। द्वादशरात्रमक्षारलवणमाशेदक्षारमेके। व्युष्टे द्वादशरात्रे षड्रात्रे वा ग्रामात् प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य पलाशस्य यज्ञियस्य वा वृक्षस्य सावित्रेण स्थालीपाकेनेष्ट्वा जयप्रभृतिभ्यश्चाज्यस्य पुरस्तात् स्विष्टकृतो मेखलां दण्डं चाप्सु प्रास्येत्। तत्रैव हविःशेषं भुञ्जीतेति श्रुतिः। इति।

बौधायनीयगृह्यसूत्राणि च—गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम्। आ षोडशाद् ब्राह्मणस्यानत्यय इति। एवमेवेतरयोर्द्वाविंशतिश्च चतुर्विंशतिश्च। अथापि काम्यानि भवन्ति—सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाम-

मेकादशे इन्द्रियकामं द्वादशे पशुकामं त्रयोदशे मेधाकामं चतुर्दशे पुष्टिकामं पञ्चदशे भ्रातृव्यवन्तं षोडशे सर्वकाममिति । वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं वर्षासु रथकारमिति । सर्वानेव वा वसन्ते । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा कुमारं भोजयित्वा तस्य चौलवत् तूष्णीं केशानोप्य स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतं प्रतिमुञ्चन् वाचयति—यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ इति । यज्ञोपवीतिनमप आचमय्याथ देवयजनमुदानयति । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पालाशीं समिधमाज्येनाक्ताऽभ्याधापयन् वाचयति—आयुर्दा देवेति । अथैनमुत्थाप्योत्तरेणाग्निं दक्षिणेन पदा अश्मानमास्थापयति आतिष्ठेममश्मानमश्मेव त्वं स्थिरो भवेति । अथैनं तिष्ये वासः सद्यःकृत्वोतं परिधापयन् वाचयति या अकृन्तन्निति । परिहितमनुमन्त्रयते परिधत्त धत्त वाससैनमिति । अथैनं मौञ्जीं मेखलां त्रिवृतां त्रिःप्रदक्षिणं परिव्ययन् वाचयति—मौञ्जी ब्राह्मणस्य । ज्यामौर्वी राजन्यस्य । आवीसूत्रं वैश्यस्य । सर्वेषामेव वा मौञ्जीम् । इयं दुरुक्तात् परिबाधमानेति । परिवीतामनुमन्त्रयते ऋतस्य गोप्त्री तपसः परस्पीति । ग्रन्थिं करोति प्राणानां ग्रन्थिरसि स मा विस्रंस इति नाभिदेशे । अथास्मा अजिनं प्रतिमुञ्चन् वाचयति । कृष्णाजिनं ब्राह्मणस्य । रौरवं राजन्यस्य । बस्ताजिनं वैश्यस्य । सर्वेषां वा कृष्णाजिनम् । मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् इति । अथास्मै दण्डं प्रयच्छति पालाशं वैल्वं वा ब्राह्मणस्य । नैयग्रोधं स्कन्धजमवाङ्ग्रं रौहीतकं वा राजन्यस्य । बादरमौदुम्बरं वा वैश्यस्य । सर्वेषां वा वार्क्षम् । सोमोऽसि सोमपं मा कुर्विति पालाशम् । ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेति वैल्वम् । ओजोस्योजो मयि धेहीति नैयग्रोधम् । बलमसि बलं मयि धेहीति रौहीतकम् । पुष्टिरसि पुष्टिं मयि धेहीति बादरम् । ऊर्गस्यूर्जं मयि धेहीत्यौदुम्बरम् । अहं वृक्षस्य रेरिवेति वार्क्षम् । को नामास्यसौ नामास्मीति शाट्यायनकम् । अथैनं दक्षिणे हस्ते गृह्णाति यस्मिन् भूतञ्च भव्यञ्च सर्वे लोकाः समाहिताः । तेन···गृह्णाम्यसाविति । अथैनं देवताभ्यः परिददाति देवेभ्यस्त्वा···परिददाम्यसौ इति । अथैनमुपनयति देवस्य त्वा सवितुः···हस्ताभ्यामुपनयेऽसौ इति । अथ कुमारः पलाशञ्जुहोति यश्छन्दसामृषभो विश्वरूप इति । अथाऽऽज्याहुतीरुपजुहोति श्रेयिन्यै त्वा, निरृत्यै त्वा इति षड्भिरनुच्छन्दसम् । एवमेव ब्रह्मसूक्तेन हुत्वा ब्रह्मअज्ञानमिति षड्भिः । स्विष्टकृतप्रभृति सिद्धमाधेनुवरप्रदानात् । अग्रेणाग्निं पलाशपर्णेषु हुतशेषं निदधाति नमो अस्तु नीलग्रीवायेति । अथ सावित्रव्रतम् । अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रीरपरिशुष्काग्रा घृताभ्यक्ता अभ्याधापयन् वाचयति याज्ञिकानां वा वृक्षाणामन्यतमस्य । अग्ने व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा । वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहेति । अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन् प्राङ्मुख आचार्य उपविशति राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् इति ।

तस्याग्रेण कुमारो दर्भेषु प्रत्यङ्मुख उपविश्य पादावन्वारभ्याऽऽह सावित्रीं भो अनुब्रूहीति। तस्मा अन्वाहोमिति प्रतिपद्यते तत्सवितुरित्येतां पच्छोऽर्द्धर्चशस्ततः समस्तां व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथार्द्धर्चयोरुत्तमां कृत्स्नायामिति। अथ कुमारः पक्वादुपादाय प्राश्नाति शरीरं मे विचर्षणमिति। अथ हैके प्राक् सावित्र्याः प्राश्नाति ब्रह्म वा अन्नमिति वदन्तः। तदु तथा न कुर्यान्नानुक्तायां सावित्र्यां प्राश्नीयादित्यनुक्तायामनुक्तायां सावित्र्यां प्राश्नीयादिति शाट्यायनकम्। अथाप उपस्पृश्य ज्योतिष्मत्यादित्यमुपतिष्ठते उद्वयं तमसस्परीति। अथैनं संशास्ति ब्रह्मचार्यस्यपोऽशान कर्म कुरु मा दिवा सुषुप्थाः समिध आधेहि भैक्षाचर्यं चर, सदाऽरण्यात् समिध आहरोदकुम्भं वाऽऽहराऽऽचार्याधीनो भव वेदमधीष्वेति। स एवमेवैतत् सर्वं करोति। अथास्मा अरिक्तं पात्रं प्रयच्छन्नाह मातरमेवाग्रे भिक्षस्वेति। स मातरमेवाग्रे भिक्षेत। 'भवति भिक्षां देही'ति ब्राह्मणो भिक्षेत। 'भिक्षां भवति देही'ति राजन्यः। 'देहि भिक्षां भवती'ति वैश्यः। तत् समाहृत्याऽऽचार्याय प्राह भैक्षमिदमिति। तत् सुभैक्षमितीतरः प्रतिगृह्णाति। उत्तरेणाग्निं द्वे स्त्रीप्रतिकृतीकृत्य गन्धैर्माल्येन चालङ्कृत्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याऽऽशिषो वाचयित्वा श्रद्धामेधे प्रियेताम्। त्र्यहमेतमग्निं धारयन्ति, प्रसिद्धं सन्ध्यामुपासीत। नम ईशानाय, नमो गोपितृदेवेभ्य इति। अथ गुरूनभिवादयते मातरं पितरं भ्रातरं मातुलमाचार्यमन्यांश्च विशेषांस्त्रिवर्षपूर्वान्। क्षारलवणवर्जमधःशय्या च। एतस्मिन्नेवाग्नौ व्याहृतिभिः सायं प्रातः समिधोऽभ्यादध्यात्। एवमन्यस्मिन्नपि सदा। अथैनं प्रदक्षिणमग्निं परिसमूहति जुषस्व नः समिधमग्ने इति। अथैनं प्रदक्षिणमग्निं परिषिञ्चति अदितेऽनुमन्यस्वेति दक्षिणतः प्राचीनम्। अनुमतेऽनुमन्यस्वेति पश्चादुदीचीनम्। सरस्वतेऽनुमन्यस्वेत्युत्तरतः प्राचीनम्। देव सवितः प्रसुवेति समन्तं प्रदक्षिणम्। समन्तमेव वा तूष्णीम्। तस्मिन् व्याहृतिभिः सायं प्रातः समिधोऽभ्यादधाति भूः स्वाहा, भुवः स्वाहा सुवः स्वाहा, भूर्भुवः सुवः स्वाहा। तथैव परिसमुह्य तथैव परिषिञ्चति, अन्वमंस्थाः प्रासावीः, इति मन्त्रान्तान् सन्नमयति। अथैनमुपतिष्ठते मयि मेधां मयि प्रजाम्, इति तिसृभिः चोढा विहितो वै पुरुषः इत्येतस्माद् ब्राह्मणात्। अथ तिसृषु व्युष्टास्वेतमग्निमादाय तां दिशं यन्ति यत्रास्य पलाशः स्पष्टो भवति। तं प्रदक्षिणं परिसमूहति सुश्रवः सुश्रवसमिति। तस्याग्रेणोत्तरेण वाऽग्निमुपसमाधाय सम्परिस्तीर्याथाव्रत्यप्रायश्चित्ते जुहोति। यन्म आत्मनो मिन्दाऽभूत्, पुनरग्निश्चक्षुरदादिति द्वाभ्याम्। अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्रारोहाः प्रादेशमात्रीरपरिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति याज्ञिकानां वा वृक्षाणामन्यतमस्य, अग्ने व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा। वायो व्रतपत इति। तथैव सुश्रवसमन्वर्च्य त्रिवृताऽन्नेन ब्राह्मणान् सम्पूज्याऽऽशिषो वाचयित्वा। अत्रैके कृष्णाजिनं मेखलां वासश्चातिसृजन्ति। अन्यान्यादायास्य वास आदत्ते यस्य ते प्रथमवास्यमिति। अथाप्यो नाभ्युपरि आन्याच्छाय कृष्णाजिनं मेखलाश्च धारयन् भ्रात्वसूतकमैथुनमधुमांसे वर्जयन् मैक्षाहारोऽधःशायी वाऽऽचार्यस्य गृहानेतीति विज्ञायते आचार्यो वै ब्रह्मेति।

पारस्करगृह्यसूत्राणि च—अष्टवर्षं ब्राह्मणमुपनयेद् गर्भाष्टमे वा। एकादशवर्षं राजन्यम्। द्वादशवर्षं वैश्यम्। यथामङ्गलं वा सर्वेषाम्। ब्राह्मणान् भोजयेत् तं च पर्युप्तशिरसमलङ्कृतमानयन्ति। पश्चादग्नेरवस्थाप्य ब्रह्मचर्यमागामिति वाचयति ब्रह्मचार्यसानीति च। अथैनं वासः परिधापयति। येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतमिति, मेखलां बध्नीते इयं दुरुक्तमिति। युवा सुवासा इति वा। तूष्णीं वा। (यज्ञोपवीतमित्यथाजिनं प्रयच्छति मित्रस्य चक्षुरिति) दण्डं प्रयच्छति। तं प्रतिगृह्णाति यो मे दण्ड इति। दीक्षावदेके दीर्घसत्रमुपैतीति वचनात्। अथास्याद्भिरञ्जलिनाऽञ्जलिं पूरयति आपो हि ष्ठेति तिसृभिः। अथैनं सूर्यमुदीक्षयति तच्चक्षुरिति। अथास्य दक्षिणांसमधिहृदयमालभते मम व्रते ते हृदयं दधामीति। अथास्य दक्षिणं हस्तं गृहीत्वाह को नामासीति। असावहं भो इति प्रत्याह। अथैनमाह कस्य ब्रह्मचार्यसीति। भवत इत्युच्यमान इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासाविति। अथैनं भूतेभ्यः परिददाति प्रजापतये त्वा परिददामीति। प्रदक्षिणमग्निं परीत्योपविशति। अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्तेऽथैनं संशास्ति ब्रह्मचार्यस्यपोऽशान, कर्म कुरु, मा दिवा सुषुप्थाः, वाचं यच्छ, समिधमाधेह्यपोऽशानेति। अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय। दक्षिणतस्तिष्ठत आसीनाय वैके। पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन्। संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा। सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मण इति श्रुतेः। त्रिष्टुभं राजन्यस्य। जगतीं वैश्यस्य। सर्वेषां वा गायत्रीम्। अत्र समिदाधानम्। पाणिनाऽग्निं परिसमूहति अग्ने सुश्रवः सुश्रवसं मा कुर्विति। प्रदक्षिणमग्निं पर्युक्ष्योत्तिष्ठन् समिधमादधाति अग्नये समिधमाहार्षमिति। एवं द्वितीयां तथा तृतीयाम्। एषा त इति वा। समुद्भवो वा। पूर्ववत् परिसमूहनपर्युक्षणे। पाणी प्रतप्य मुखं विमृष्टे तनूपा अग्नेऽसि तन्वं मे इति। (अङ्गान्यालभ्य जपति अङ्गानि च म आप्यायन्तां वाक् प्राणश्चक्षुः श्रोत्रं यशो बलमिति त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेऽंसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम्)। अत्र भिक्षाचर्यचरणम्। भवत्पूर्वां ब्राह्मणो भिक्षेत। भवन्मध्यां राजन्यः। भवदन्त्यां वैश्यः। तिस्रोऽप्रत्याख्यायिन्यः। षड् द्वादशापरिमिता वा। मातरं प्रथमामेके। आचार्याय भैक्षं निवेदयित्वा वाग्यतोऽहःशेषं तिष्ठेदित्येके। अहिंसन्नरण्यात् समिध आहृत्य तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजते। अधःशाय्यक्षारलवणाशी स्यात्। दण्डधारणमग्निपरिचरणं गुरुशुश्रूषा भिक्षाचर्या। मधुमांसमज्जनोपर्यासनस्त्रीगमनानृतादत्तादानानि वर्जयेत्। अष्टाचत्वारिंशद् वर्षाणि वेदब्रह्मचर्यं चरेत्। द्वादश द्वादश वा प्रतिवेदम्। यावद्ग्रहणं वा। वासांसि शाणक्षौमाविकानि। ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य। रौरवं राजन्यस्य। आजं गव्यं वा वैश्यस्य। सर्वेषां वा गव्यमसति प्रधानत्वात्। मौञ्जी रशना ब्राह्मणस्य। धनुर्ज्या राजन्यस्य। मौर्वी वैश्यस्य। मुञ्जाभावे कुशाश्मन्तकबल्वजानाम्। पालाशो ब्राह्मणस्य दण्डः। बैल्वो राजन्यस्य।

औदुम्बरो वैश्यस्य। (केशसम्मितो ब्राह्मणस्य ललाटसम्मितः क्षत्रियस्य घ्राणसम्मितो वैश्यस्य) सर्वे वा सर्वेषाम्। आचार्येणाऽऽहूत उत्थाय प्रतिश्रृणुयात्, शयानं चेदासीन आसीनं चेत् तिष्ठंस्तिष्ठन्तं चेदभिक्रामन्नभिक्रामन्तं चेदभिधावन्। स एवं वर्तमानोऽमुत्राथ वसतीति। तस्य स्नातकस्य कीर्तिर्भवति। त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति। समाप्य वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः। समाप्य व्रतमसमाप्य वेदं यः समावर्तते स व्रतस्नातकः। उभयं समाप्य यः समावर्तते स विद्याव्रतस्नातक इति। आ षोडशाद् वर्षाद् ब्राह्मणस्य नातीतः कालो भवति। आ द्वाविंशाद्राजन्यस्य। आ चतुर्विंशाद् वैश्यस्य। अत ऊर्ध्वं पतितसावित्रीका भवन्ति। ननानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः। कालातिक्रमे नियतवत्। त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनञ्च। तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्तीति वचनात्। इति।

---

# तृतीयप्रपाठकस्य प्रथमा कण्डिका

———:o:———

इदानीमुपनयनसंस्कारसंस्कृतेन गुरुशुश्रू[1]षुणा ब्रह्मचारिणा वेदव्रतादिकं तपश्चरता साङ्गो वेदोऽधिगन्तव्यः। तथाच मनुः—

अनेन क्रमयोगेण संस्कृतात्मा द्विजः शनैः।
गुरौ वसन् सञ्चिनुयाद् ब्रह्माधिगमिकं तपः(A) ॥ [2]इति।
"तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यं द्विजन्मना(B) ॥ इति।

अतस्तद्व्रतविवक्षयेदमाह—[3]*

## अथातः षोडशे वर्षे गोदानम् ॥ १ ॥

अथशब्दः पूर्वप्रकृतजन्मकाला[4]नुकर्षणार्थः, जन्मकालादारभ्य षोडशे वर्षे गोदानम्। नानन्तर्यादुपनयनादिति। अथवा ब्राह्मणादीनां गोदानस्य स्मृत्यन्तरोक्तकालविशेष-पृथक्प्रज्ञापनार्थोऽथशब्दः। कथं नाम? ब्राह्मणस्य षोडशे वर्षे गोदानम्। क्षत्रियस्य द्वाविंशे, वैश्यस्य चतुर्विंशे इति।

---

A. मनुसंहिता २।१६४। अस्य व्याख्यायां कुल्लूकभट्टः—"अनेन क्रमकथितोपायेन जातकर्मादिनोपनयनपर्यन्तेन संस्कृतो द्विजो गुरुकुले वसन् शनैरत्वरया वेदग्रहणार्थं तपोऽभिहिताभिधास्यमाननियमकलापरूपमनुतिष्ठेत्। सिद्धान्तरसिद्धस्याप्ययमनुवादोऽध्ययनाङ्गत्वबोधनाय"। इत्याह।

B. मनुसंहिता २।१६५। तपोविशेषैर्नियमकलापैर्विविधैर्बहुप्रकारैश्च "अध्येष्यमाणस्त्वाचान्तः" (अ० २।७०) इत्यादिनोक्तैः, "सेवेतेमांस्तु नियमान्" (अ० २।१७५) इत्यादिभिर्वक्ष्यमाणैरपि व्रतैश्चोपनिषन्महानाम्निकादिभिर्विधिदेशितैः स्वगृह्यविहितैः समग्रवेदो मन्त्रब्राह्मणात्मकः सोपनिषत्कोऽध्येतव्यः। रहस्यमुपनिषदः। प्राधान्यख्यापनाय पृथङ्निर्देशः, इति च व्याख्या।

---

1. '-षवा' ख। 2. 'इति' नास्ति ख। 3. नास्ति क-ग-घ। 4. '-नुकर्षणानुकर्षणार्थः' ग-घ।

तथाच मनुः—

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः(A) ॥ इति।

एवञ्चैतद् ब्राह्मणस्याष्टवार्षिकमुपनयनव्रतं भवति। क्षत्रियस्यैकादशवार्षिकम्। वैश्यस्य द्वादशवार्षिकमिति।

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे(B) ॥ इति।

एतस्मिन् पक्षे ब्राह्मणस्यैकादशवार्षिकम्, क्षत्रियवैश्ययोः षोडशवार्षिकमिति।

---

A. मनुसंहिता २।६५। अस्य कुल्लूकभट्टकृता व्याख्या—"केशान्ताख्यो गृह्योक्तसंस्कारो गर्भादिसंख्या वर्षाणाम् इति बौधायनवचनाद् गर्भषोडशे वर्षे ब्राह्मणस्य क्षत्रियस्य गर्भद्वाविंशे वैश्यस्य ततो द्व्यधिके गर्भचतुर्विंशे कर्त्तव्यः।" इति।

B. मनुसंहिता २।३७। अस्य व्याख्यायां मेधातिथिः—पितृधर्मेणापत्यं व्यपदिशति ब्रह्मवर्चस्वी मे पुत्रः स्यादिति पितृकामनया पुत्रो व्यपदिष्टस्तत्कामस्येति, पुत्रस्य बालत्वान्नैवंविधा कामना सम्भवति। ननु चैवमन्यकृतात् कर्मण अन्यस्य फलेऽभ्युपगम्यमाने अकृताभ्यागमदोषापत्तिः, अकाम्यमानञ्च फलं भवति, एतदप्युत्क्रान्तशब्दप्रमाणन्यायमर्यादयोच्यते, नैष दोषः। श्येनवदेतद् भविष्यति, श्येनमभिचरन् करोति अभिचर्यमाणश्च म्रियते। अथोच्यते कामिन एवैतत् फलं शत्रुमरणं हि यजमानः कामयते तदेव चाऽऽप्नोतीति नाकर्तृगामिता फलस्य। अत्रापि विशिष्टपुत्रवत्तालक्षणमुपनेतुरेव फलम्, यथा पुत्रस्याऽऽरोग्येण पितुः प्रीतिः, एवं ब्रह्मवर्चसेनापि। अतोऽधिकृतस्य कर्तुश्च पितुरेव तत् फलम्, अन्वयानुसारी हि शास्त्रार्थाध्यवसायः। इह च पुत्रस्य फलकामेनैवं कर्तव्यमित्यन्वयः प्रतीयते। न च यथाश्रुतान्वयत्यागे किञ्चन प्रमाणमस्ति। एतेन पितुरौर्ध्वदेहिकः पुत्रकृत उपकारो व्याख्यातः, तत्रापि हि पुत्रः कर्ता पितृतृप्तिश्च फलम्, तथा च लिङ्गम् 'आत्मा वै पुत्रनामा'सीति। पित्रैव हि तावत् श्राद्धमात्मसम्प्रदानकं वस्तुतः कृतमेव, येनापत्योत्पादनमेवमर्थमेव कृतम्। यथा सर्वस्वारे मृतस्यार्भवपवमानाद् ये पराञ्चः पदार्थास्तेष्वपि यजमानस्यैव कर्तृत्वम्। ब्राह्मणाः संस्थापयत यज्ञमिति प्रैषेण दक्षिणाभिर्वरणेन वा प्रयोगसमाप्तौ, ऋत्विजां विनियोक्तृत्वात्, एवमिहापि तादर्थ्येन पुत्रस्योत्पादनाद् यत् श्राद्धादिकं पित्रर्थं क्रियते पित्रैव तत् कृतं भवति। अध्ययनविज्ञानसम्पन्नं ब्रह्मवर्चसम्। बलं सामर्थ्यम्, आभ्यन्तरं बाह्यञ्च, उत्साहशक्तिर्महाप्राणता चैतदाभ्यन्तरम्, बाह्यञ्च हस्त्यश्वरथपदातिकोशसम्पत्। तदुक्तम्—'स्वाङ्गाभ्युचयं सांयोगिकानां चार्थानाम्' इति। ईहा चेष्टा बहुधा धनेन कृषिवाणिज्यादिव्यवहारः। सर्वत्र गर्भादिसंख्या च वर्षाणां गर्भादिति अनुवर्त्तते। इति।

आपत्कल्पे उपनयनकालातिपत्तौ सर्वेषां न्यूनतरमिति। अतःशब्दो हेत्वर्थे [1]"नाचरिष्यन्तं संवत्सरमुपनये'दिति [सू० ३।१।११] वचनसामर्थ्याद् यत उपनीतस्योर्ध्वं संवत्सरादर्वागपि षोडशवर्षाद् ब्राह्मणस्य गोदानं प्राप्नोति, अतो नायमवश्यत्वेनाष्टवार्षिकव्रतधारणकालो नियम्यत इति। एवं क्षत्रियवैश्ययोरपि द्रष्टव्यम्। एवं सामर्थ्याद्विकल्पः, पुरुषशक्तिशीलदेशकालवयोऽवस्थाविशेषेण न पक्षविवक्षया द्रष्टव्यः। कथं नाम? आपत्कालेऽपि यदि षोडशे उपनयनं स्यात् तथाऽपि संवत्सरमप्युपनयनव्रतधारणं कृत्वा सप्तदशे गोदानं कुर्यादित्येवं क्षत्रियवैश्ययोरपि द्रष्टव्यम् [1]* (A)। गोदानमिति व्रतस्य नामधेयम्।

---

A. सूत्रस्यास्य व्याख्यायां तर्कालङ्कारः—"अतःशब्दो हेत्वर्थः, यस्मात्—'योऽनधीत्य द्विजो वेदम्' ( द्र० पृ० ३ ) इत्येवमादिस्मरणाद् वेदाध्ययनमवश्यं कर्तव्यम्। यस्माच्च तपोविशेषैरित्यादिवचनाद् व्रताचरणपूर्वकत्वं तदध्ययनस्य। अत एतस्मात् कारणात् षोडशे वर्षे गोदानं नाम व्रतं कर्तव्यम्। गावः केशा दीयन्ते खण्ड्यन्तेऽस्मिन्निति गोदानमिति व्रतस्य नामधेयम्। ततश्च इतः पूर्वमुपात्तस्योपनयनव्रतस्यायमवधिरित्यवगम्यते। एवञ्च ब्राह्मणस्याष्टवार्षिकमुपनयनव्रतं भवति क्षत्रियस्यैकादशवार्षिकम्, वैश्यस्य द्वादशवार्षिकम् इति सिध्यति। ब्रह्मवर्चसकामस्येत्येतस्मिंश्च पक्षे ब्राह्मणस्यैकादशवार्षिकम्, क्षत्रियवैश्ययोश्च षोडशवार्षिकमुपनयनव्रतम्। उपनयनकालातिपाते तु सर्वेषां न्यूनतरमपि इत्यवगन्तव्यम्। न्यूनतरपक्षेऽप्यन्ततोऽष्टौ दिनानि तत् करणीयम्। तथाच गृह्यासंग्रहः—समा मासा अहोरात्रा इति। सावित्रमुपनयनव्रतम्। तदानीमेव सावित्रीप्रवचनस्योपदेशात्। तथाच पुरुषशक्तिशीलदेशकालवयोऽवस्थाविशेषेण कालव्यवस्था प्रतिपत्तव्या। अन्ये त्वाहुः—यतः नाचरिष्यन्तं संवत्सरमुपनयेदिति संवत्सरमात्रव्रताचरणस्यात्यन्तमावश्यकत्वं सूत्रयिष्यति, अतः कारणात् संवत्सरव्रताचरणात् परमर्वागपि षोडशाद् वर्षाद् षोडशवर्षोपनीतस्य च संवत्सरव्रताचरणानुरोधात् परतोऽपि षोडशाद् वर्षाद् गोदानं कर्तव्यम्। तस्मान्नायमवश्यं कालनियमः—षोडशे वर्षे गोदानमिति। एवं क्षत्रियवैश्ययोरपि द्रष्टव्यम् इति। तदसङ्गतम्। पूर्वोदाहृतगृह्यासंग्रहविरोधात्। नाचरिष्यन्तं संवत्सरमुपनयेद् इति तु गोदानादिव्रतविषयम् इति तत्रैव वक्ष्यामः। तत्र तावदुपनयनव्रतं सावित्र्या अध्ययनार्थं सावित्रं सह प्रवचनञ्चाऽऽख्यायते। उपनयनव्रतसमकालमेव सावित्रीप्रवचनोपदेशात्, गोदानादीनि व्रतानि देवपर्वादीनां वेदानामध्ययनार्थानि अनुप्रवचनीयानि चोच्यन्ते। अमीषां व्रतानां पश्चादेव तत्तद्वेदभागानां प्रवचनस्योपदेशात्। गुरुश्चैतावता कालेन ब्रह्मचारिणं शौचाचारादिकं शिक्षयेत्। तथाच मनुः—

1. चिह्नितांशो नास्ति क-घ।

तस्य विधिविवक्षया इदमाह—

**चूडाकरणेन केशान्तकरणं व्याख्यातम् ॥ २ ॥**

शिरः [1]'अभितः पश्चाद्भागकेशानां कपुष्णिकाकपुच्छलाख्यानां वपनकरणम् अन्तकरणम्। तच्चूडाकरणेन व्याख्यातम् इत्ययमतिदेशः। एवञ्चास्योपनयनव्रतान्ते कियन्तमपि कालं वपनं न कर्त्तव्यं [3]येन पिञ्जूलीभिः सह कपुष्णिकाग्रहणच्छेदना[4]दि कर्त्तुं शक्यते। [5]तद्युक्तं यदुक्तं 'ता 'वामेनाभिगृह्ये'त्यादि [ २।६।१५ ]। [6]तथाचोक्तम्—

वपनं नास्य कर्त्तव्यमर्वाग् [6]गोदानिकव्रतात्।

व्रतिनो वत्सरं यावत् षण्मासानिति गोतमः(A) ॥ [7]'इति।

समस्तविध्यतिदेशे प्राप्ते विशेषार्थमिदमाह—

**ब्रह्मचारी केशान्तान् कारयते ॥ ३ ॥**

मातरि प्राप्तायां(B) ब्रह्मचारिणः स्वयमेव वपनक्रिया नियम्यते। अयं विशेषः—

**सर्वाण्यङ्गलोमानि संहारयते ॥ ४ ॥**

सर्वेषां चाङ्गलोम्नां संहारो वपनमित्यर्थः। अयं विशेषः—

**गोमिथुनं दक्षिणा ब्राह्मणस्या(C)श्वमिथुनं क्षत्रियस्य अविमिथुनं वैश्यस्य ॥ ५ ॥**

---

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।

आचारमग्निकार्यञ्च सन्ध्योपासनमेव च ॥ (२।६९)" इत्याह स्वभाष्ये।

तदत्राऽऽपदि षोडशवर्षाद्युपनयनेऽपि संवत्सरमुपनयनव्रतं कर्तव्यमुतान्ततोऽष्टदिनमेव व्रतं कृत्वा षोडशवर्षाभ्यन्तर एव गोदानं कर्तव्यमिति भगवन्तोऽनूचाना निर्दिशन्तु।

A. कर्मप्रदीपः ३।६।१९। वचनमिदं प्रागुक्तभाष्यकारमतमेव समर्थयत इति द्रष्टव्यम्।

B. अथ माता शुचिना वसनेनेत्यादिसूत्रबलाच्चूडाकर्मणि माता कुमारमङ्कं कृत्वोपविशति तथागतञ्च तमन्यः संस्करोति। केशान्तकरणे तु न ब्रह्मचारी मातुरङ्कगतो भवति, अकुमारत्वेनाशुचत्वाद् गुरुकुले चेदानीमस्यावस्थानात्। इति।

C. ब्राह्मणस्येत्यत्र क्षत्रियस्येत्यत्र वैश्यस्येत्यत्र च विभज्य सूत्रमिदं त्रिसंख्यकं कुरुतः सामश्रमितकांकराौ।

---

1. 'अभितः' नास्ति ख। 2. 'चादि' नास्ति क-ग-घ। 3. 'तेन' क-घ। 4. 'वामेन निगृह्ये-' ख। 5. 'तथाच कर्मप्रदीपः' ख। 6. 'गोदानिकाद् व्र-' ख। 7. 'इति' नास्ति ख।

गवा वृषेण च मिथुनम् ¹इति प्रसिद्धम्, एवमुत्तरत्रा²पि। यथोक्तदक्षिणाऽशक्तौ कथमित्यत आह—

## गौर्वैव सर्वेषाम् ॥ ६ ॥

³इयं चाऽऽचार्यस्य दक्षिणा न ब्रह्मणः। ⁴कुतः? तस्यैवोपनयनकेशान्तकरणादिकर्मोपदेशात्। वक्ष्यति चा⁵यम् 'आच्छादयेद्गुरुमित्येके' [ सू० ३।२।४० ] इति। अयञ्च विशेषः—

## अजः केशप्रतिग्राहाय ॥ ७ ॥

केशप्रतिग्राहको वपनकर्ता नापितः, तस्य मूल्यमजो देयः। ⁶एवं चात्र व्रीह्यादिपात्र⁶-कृसरासादनं⁶* न मूल्यान्तरोपदेशात् ⁷च। अत्र गोदानव्रताङ्गस्य केशान्तकर्मणः ⁸परिसमाप्तिः(A)।

इदानीं लाघवार्थं ⁹गोदानादीनां व्रतानां साधारणा परिभाषा विशेषविवक्षयोच्यते⁹*।

## उपनयनेनैवोपनयनं व्याख्यातम् ॥ ८ ॥

ऋज्वेतत्(B)।

अयमत्र विशेषः—

## न त्विहाहतं वासो नियुक्तम् ॥ ९ ॥

नियमे सत्यनियम उच्यते—अहतवाससो नात्र(C) नियमः।

---

A. अथ गोदानव्रतप्रयोगः—'ब्राह्मणाननुज्ञाप्य गणेशं सम्पूज्य गोदानव्रताङ्गं नान्दीमुखश्राद्धं करिष्ये इति संकल्प्य, तत् कृत्वा, गोदानव्रताङ्गकेशान्तकर्म करिष्ये इति सङ्कल्प्य चूडाकर्मवदग्निप्रतिष्ठापनादि केशवपनान्तं कर्म ब्रह्मचारी कुर्यात्। न त्वाचार्यः। नात्र व्रीह्यादीनामासादनम्। सर्वेषामङ्गलोम्नां च वपनम्। गोमिथुनं दक्षिणा ब्राह्मणस्य, अश्वमिथुनं क्षत्रियस्य, अविमिथुनं वैश्यस्य। यथोक्तदक्षिणाऽलाभे सर्वेषामपि गौर्दक्षिणा आचार्याय देया, अथ केशप्रतिग्राहाय नापितायाजो देयः' इति केशान्तकरणप्रयोगः सुब्रह्मण्योक्तः।

B. उपनयनेनैव पूर्वोक्तेन गोदानादिव्रताङ्गमुपनयनं कथितमित्यर्थः।

C. अत्र गोदानादिव्रताङ्गोपनयने। एतेन पूर्वस्मिन्नुपनयने अहतस्य वाससो नियमोऽवगम्यते।

---

1. 'इति प्रसिद्धम्' नास्ति क-च। 2. 'अपि' नास्ति क-च। 3. 'अयं' ख। 4. 'कुतः' नास्ति क-च। 5. 'अयम्' नास्ति क-च। 6. 'कृसरादिना चत्र कृसरासादनं' ख। 7. 'च' नास्ति क-च। 8. 'परि-' नास्ति क-च। 9. 'साधारण्यविवक्षयोच्यते' क।

**नालङ्कारः ॥ १० ॥**

नियुक्त इति वर्तते।

**नाऽऽचरिष्यन्तं संवत्सरमुपनयेत् ॥ ११ ॥**

संवत्सरमात्रमपि कालं व्रतधारणं यो न करोति तं नोपनयेदित्या'दि, आचार्यस्यायं नियमः। अर्थाद् ब्रह्मचारिणोऽपि नियमः, (A)गोदानिके उपनयने अयं नियमः। ²कुतः ? अत्रैवोक्तत्वात्(B)।

**वार्त्तं चास्मै दण्डं प्रयच्छन्नादिशति ॥ १२ ॥**

³उक्तार्थमेतत्। च-शब्दान्मन्त्रञ्च वाचयति³*।

पूर्वं तावन्मन्त्रवाचनं पश्चादादेश इति, ⁴अयं क्रमः। , किमतिदिशति(C), अतस्तान् द्वादशाऽऽ⁵देशानाह—

**आचार्याधीनो भवान्यत्राधर्मचरणात् ॥ १३ ॥**

आचार्यस्याधीन आयत्तो वश्यो भवेत्यर्थः। अधर्मचरणादन्यत्र, अधर्मसंयुक्तमाचार्यादेशमपि मा कार्षीरित्यर्थः।

---

A. अत्र प्रथमसूत्रे भाष्यकारेण अतः-शब्दप्रयोगस्य यत् कारणमुक्तं तदनेन ग्रन्थभागेन विरुध्यते इति अनयोरेकतरस्य परमतोपन्यासेन सार्थकत्वं वा प्रक्षिप्तत्वं वेति भगवन्तोऽनूचाना निर्दिशन्तु।

B. अत्र तर्कालङ्कारः—'स खल्वयं नियमो गोदानिक एवोपनयने स्यात्, कुतः। अत्रैवोपदेशात्। तस्मात् संवत्सरमपि व्रतं यो न चरिष्यति, तस्यापि प्राचीनमुपनयनं भवति। अन्ये त्वाहुः—प्रकरणादेवैतस्मिन्नुपनयने प्राप्ते पुनरुपनयनग्रहणं सामान्यार्थम। तस्मात् प्राचीनेऽप्युपनयनेऽयं नियमः, तेन यस्यापि षोडशे वर्षे उपनयनं तस्यापि संवत्सरव्रतचरणात् परत उपरिष्टादपि षोडशाद् वर्षाद् गोदानं स्यात्, न तु षोडश एव वर्षे इति बोद्धव्यम्। परतो वक्ष्यमाणा अपि धर्माः सामान्यगोचरा एवेति। नैतदेवम् 'उपनयेत्' इत्यनुक्तौ वाक्यार्थस्यैवाघटनात्। अन्यथाऽभिधाने चाऽऽचार्यस्य निषेधस्यालाभात्, अतिक्रम्याभिधानाच्च। 'समा मासा अहोरात्रा' इत्याद्युदाहृतगृह्यासंग्रहवचनेन प्राचीने उपनयने विशेषस्याभिधानाच्च तत्रैतस्याः प्रवृत्तेः। सोऽयमुपनयतिः सन्निहितं गोदानादिकमेवोपनयनमभिधत्ते न प्राचीनमिति। व्यक्तिवचनः खल्वयम्, व्यक्तिवचनानाञ्च सन्निहितव्यक्तिपरत्वमाम्रेडीन्याये सिद्धान्तितम्। तत् कुत एवानेन सामान्यपरिग्रहः शक्यते वक्तुम्'। इत्याह स्वभाष्ये। तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

C. ब्रह्मसूत्र सू० २।१०।३७ पृ० ४८८—९।

---

1. 'यादि' नास्ति ख। 2. 'कुतः' नास्ति क-च। 3. नास्ति क-च। 4. 'अयं क्रमः' नास्ति क-च। 5. 'यादेशान्' नास्ति क-च।

क्रोधानृते वर्जय ॥ १४ ॥

ऋज्वर्थम् ।

मैथुनम् ॥ १५ ॥

वर्जयेति सर्वत्रानुवर्तते । मैथुनं स्त्रीसेवा ।

उपरि शय्याम् ॥ १६ ॥

उपरि शय्या आचार्यशय्याया उच्चतरा ।

तथाच मनुः—

नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ(A) । इति ।

कौशीलवगन्धाञ्जनानि ॥ १७ ॥

कौशीलवं नृत्यगीतवादित्रानुबन्धः । गन्धाश्चन्दनादयः । अञ्जनमक्ष्णोः ।

स्नानम् ॥ १८ ॥

तच्चाभ्यङ्गोद्वर्तनादिकं सुखार्थम् ।

तथाच मनुः— अभ्यङ्गमञ्जनं [1]चाक्ष्णोरुपानच्छत्रधारणम् ।

कामं क्रोधञ्च लोभञ्च नर्तनं गीतवादनम्(B) ॥ इति ।

उदकमात्रस्नानस्य विधानात्—वक्ष्यति चायम् नित्यधर्मेषु 'उदकोपस्पर्शन-प्रातरभिवादा' इति [ सू ३।१।२५ ] ।

[2]तथाचोक्तं कर्मप्रदीपे—

न गात्रोत्सादनं कुर्यादनापदि कथञ्चन ।

जलक्रीडामलङ्कारं व्रती दण्ड इवाऽऽप्लवेत्(C) ॥ इति ।

---

A. मनुसंहिता २।१९८ । अस्योत्तरार्धन्तु—

गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् । इति ।

अस्य कुल्लूकभट्टोक्ता व्याख्या—'गुरुसमीपे चास्य गुरुशय्यासनापेक्षया नीचे एव शय्यासने नित्यं स्याताम् । यत्र च देशे समासीनं गुरुः पश्यति न तत्र यथेष्टचेष्टां चरणप्रसारादिकां कुर्यात् ।' इति ।

B. मनुसंहितायाम् २।१७८ । अस्य व्याख्यायां कुल्लूकभट्टः—'अभ्यङ्गं तैलादिना शिरः-सहितदेहमर्दनलक्षणम्, कज्जलादिभिश्च चक्षुषोरञ्जनम्, पादुकायाश्छत्रस्य च धारणम्, कामं मैथुनाति-रिक्तविषयाभिलापातिशयम्, मैथुनस्य स्त्रिय इत्यनेनैव निषिद्धत्वात् । क्रोध-लोभ-नृत्य-गीत-वीणापणवादि वर्जयेत् ।' इत्याह ।

C. छन्दोगपरिशिष्टम् ३।६।१६ ।

---

1. 'चाक्ष्णोरित्यादि' ख । 2. 'तथाच कर्मप्रदीपः' ख ।

अवलेखनदन्तप्रक्षालनपादप्रक्षालनानि ॥ १९ ॥

अवलेखनं कङ्कतादिना शिरसः। भूमेर्वा निष्प्रयोजनम्। दन्तप्रक्षालनं दन्तधावनं 'पत्रवीटिकादिना'* घर्षणम्। पादप्रक्षालनम् उद्वर्तनपूर्वकं सुखार्थम्। पादेन वा पादस्य(A)।

क्षुरकृत्यम् ॥ २० ॥

क्षुरकर्म, एवं चेद् ब्रह्मचारिणा जटिलेन 'भाव्यम्। तत्र, 'कुतः ?—

सशिखं वपनं कार्यमा स्नानाद् ब्रह्मचारिणाम्।
आशरीरविमोक्षाय ब्रह्मचर्यं न चेद् भवेत्(B) ॥

इति वचनात्। वपनं नास्य कर्तव्य'मिति वचनात्। तस्मात् क्षुरकर्मप्रतिषेधात्—मुण्डनस्य च विधानात् 'कर्तर्या मुण्डनमिति युक्तम्। अन्ये तु वृषणयोरित्यध्याहारं कृत्वा व्याचक्षते। 'अपरे त्वेकत्र विधानादन्यत्र प्रतिषेधाद् 'विकल्पमाहुः'*(C)।

तथाच मनुः—मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः(D)। इति।

मधुमांसे ॥ २१ ॥

भृज्वर्थम्(E)।

---

A. अत्र तर्कालङ्कारः—'पादेन नाक्रमेत् पादम् इति स्मरणात्' इत्याह।

B. कर्मप्रदीपः ३।६।१४।

C. अत्र तर्कालङ्कारः—'अथवा क्षुरकृत्यप्रतिषेधान्मुण्डनविधानाच्च मुण्डनं कर्तव्यमेव, तदन्यत् क्षुरकृत्यम्, अङ्गलोमसंहारादिकं न कर्तव्यमित्यर्थं सूत्रार्थः।' इत्याह।

D. मनुसंहिता २।२१९।

E. अत्र मनुसंहिताप्रमाणम्—

वर्जयेन्मधु मांसञ्च गन्धं माल्यं रसान् स्त्रियः।
शुक्तानि यानि सर्वाणि प्राणिनाञ्चैव हिंसनम् ॥ इति। २।१७७।

क्षौद्रं मांसं च न खादेत्। गन्धञ्च कर्पूरचन्दनकस्तूरिकादि वर्जयेत्। एषाञ्च गन्धानां यथासम्भवं भक्षणमनुलेपनञ्च निषिद्धम्। माल्यञ्च न धारयेत्। उद्रिक्तरसांश्च गुडादीन् न खादेत्। स्त्रियञ्च नोपेयात्। यानि स्वभावतो मधुरादिरसानि कालवशेनोदकवासादिना चाम्लयन्ति तानि शुक्तानि न खादेत्। प्राणिनां हिंसां न कुर्यात्' इति अस्य कुल्लूकभट्टोक्ता व्याख्या।

---

1. 'पत्रवीटकादिना' क-च। 2. 'भवितव्यम्' ख। 3. 'कुतः' नास्ति ख। 4. '-मर्वाग्गोदानिकव्रतात्। व्रतिनो वत्सरं यावत् वपनमिति गौतमः ॥' इत्यधिकः पाठः ख। 5. 'कर्तव्यं मुण्डन-' ख। 6. 'अन्ये' ख। 7. 'विकल्पः' ख।

## गोयुक्तारोहणम् ॥ २२ ॥

गोयुक्तस्य शकटादेरारोहणमुपर्यवस्थानम् ।

## अन्तर्ग्राम उपानहोर्धारणम् ॥ २३ ॥

[1]उपानहौ प्रसिद्धौ, तयोः[1]* अन्तर्ग्रामे ग्राममध्ये [2]धारणम्, ग्रामशब्दः पुरुष-निवासोपलक्षणार्थः । बहुत्वाद् ब्रह्मचारिधर्माणां प्रत्येकोपदेशाद् गौरवं स्यात्, अतः संक्षेपार्थमिदमाह—

## स्वयमिन्द्रियमोचनमिति ॥ २४ ॥

[3]मनःप्रधानानि दशेन्द्रियाणि मनश्चैकादश ।

तथाच मनुः— श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ॥
बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः ।
कर्मेन्द्रियाणि पञ्चैव पाय्वादीनि प्रचक्षते ॥
एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम् ।
यस्मिन् जिते जितावेतौ भवतः पञ्चकौ [4]गणौ (A) । इति ।

स्वयमिति कामतः श्रोत्रादीनामिन्द्रियाणां स्वस्वविषयगोचरं [5]प्रतिषिद्धे कर्मण्य-निवारणं बुद्ध्या प्रवर्त्तनम्[6] मोक्षणम् इन्द्रियमोचनम् [7]इत्युच्यते तद् वर्जयेदिति । [8]तथा च श्रीवेदव्यासः—

धृत्या शिश्नोदरान् रक्षेत् पाणिपादौ च चक्षुषा ।
चक्षुःश्रोत्रे च मनसा मनो वाचञ्च कर्मणा ॥ इति[8]* ।

ब्रह्मचारिण आदेशो यथा—नाचार्यनिन्दां शृणुयादिति प्रति[9]षेधे न कामतस्तां[10] शृणुयात्,[11] तच्छ्रवण[12]मपि यत्र न स्यात् तत्र तिष्ठेत्[12]* । [13]यथाह मनुः—

गुरोर्यत्र परीवादो निन्दा [14]वाऽपि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः (B) ॥ इति ।

---

A. मनुसंहिता २।९०-९२ ।

B. मनुसंहिता २।२०० । अस्य कुल्लूकभट्टीका व्याख्या—विद्यमानदोषस्याभिधानं

---

1. नास्ति क-घ । 2. 'धारणम्' नास्ति ख । 3. 'ततः' ख । 4. 'गुणौ' ख । 5. 'प्रति' अधिकः क-घ । 6. प्रवर्त्तनमित्यनन्तरं 'किं तर्हि ? देशकालमेव प्रवृत्तयात् । किं तर्हि ? तच्छ्रवणे प्र-' इत्यधिकम् ख । 7. 'इत्युच्यते' नास्ति क-घ । 8. नास्ति ख । 9. '-षिद्धा' क-घ । 10. 'एव' अधिकः ख । 11. 'किं तर्हि' अधिकः ख । 12. 'परित्यागादेकमातिष्ठेत्' ख । 13. 'तथाच' ख । 14. 'चैव' क-घ ।

एवं चक्षुरादीन्यपि परस्त्रीप्रेक्षणादिपदार्थप्रवृत्तानि 'निवर्तयेत्'[1] न तु कामतो मोचये-दिति। (A) इति[2]शब्द आदेशपरिसमा[3]प्त्यर्थः।

अन्यानपि सर्वव्रतसाधारणान् धर्मानाह—

मेखलाधारणभैक्षचर्यदण्डधारणसमिदाधानोदकोपस्पर्शन-प्रातरभिवादा इत्येते नित्यधर्माः ॥ २५ ॥

यथोक्ताया मेखलाया धारणं [5]मेखलाधारणम्(B), यथोक्तस्य भैक्षस्य चर्या(C) सा च द्विः भोक्तुः सायं प्रातः। दण्ड उक्तलक्षणः, तस्य धारणं कर्मकाले। समिदाधानमुक्त-

---

परीवादः, अविद्यमानदोषाभिधानं निन्दा। यत्र देशे गुरोः परीवादो निन्दा च प्रवर्तते तत्र स्थितेन शिष्येण कर्णौ हस्तादिना तिरोधातव्यौ, तस्माद् वा देशाद् देशान्तरं गन्तव्यम्। इति।

A. केचिदेवं वा सूत्रमिदं व्याचख्युः—स्वयमिन्द्रियमोचनं कामतो रेतःस्कन्दनं वर्जय इति। यद्यपि—

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥ (म० स० २।१८१)

इत्यकामतोऽपि रेतःस्कन्दनं मनुना निषिद्धम्, तथाऽप्येतदधिकदोषकरं व्रतहानिकरं वा वर्ण-नीयम्। यस्मान्मनुरेवाऽऽह—

एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्।
कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥ इति। (म० स० २।१८०)

B. तदुक्तं मनुसंहितायाम्—

यद् यस्य विहितं चर्म यत् सूत्रं या च मेखला।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ (२।१७४)

'यस्य ब्रह्मचारिणो यानि चर्मसूत्रमेखलादण्डवस्त्राण्युपनयनकाले गृह्येण विहितानि गोदानादि-व्रतेष्वपि तान्येव नवानि कर्तव्यानी'ति चास्य व्याख्या।

C. भैक्षचर्या च कथं कर्तव्येत्याह मनुः—

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु।
ब्रह्मचार्याहरेद् भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥
सर्वं वाऽपि चरेद् ग्रामं पूर्वोक्तानामसम्भवे।
नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत् ॥ इति। (म० स० २।१८३-८५)

---

1. 'निवर्तते' ख। 2. 'का-' ख। 3. '-बरणम्' ख। 4. '-मार्थम्' ख। 5. 'मेखलाधारणम्' नास्ति ख-घ।

मधस्तात्। उदकोपस्पर्शनं स्नानं तच्च सायं प्रातः, वक्ष्यति चायं 'तेषु सायं प्रातरुदकोपस्पर्शन'मिति [ सू ३।१।२७ ]। प्रातरभिवादाः पादोपसंग्रहणम्। तच्च—

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः(A)॥ इति।

'एते मेखलादयोऽभिवादनान्ता'* नित्यधर्मा नित्यमहरहरनुष्ठेया इत्यर्थः(B)। इति-

A. मनुसंहिता २।७२। पादोपसंग्रहणं कार्यमित्यनन्तरमुक्तम्, तत्तु व्यत्यस्तपाणिना कार्यमिति विधीयते। कीदृशो व्यत्यासः कार्य इत्यत आह सव्येन पाणिना सव्यः पादो दक्षिणेन पाणिना दक्षिणः पादो गुरोः स्प्रष्टव्यः। उत्तानहस्ताभ्यां चेदं पादयोः स्पर्शनं कार्यम्। यदाह पैठीनसिः—'उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत्'। दक्षिणोपरिभावेन व्यत्यासो वाऽयं शिष्टसमाचारात् इति वास्य व्याख्या।

B. अभिवादने विशेषमाहात्र तर्कालङ्कारः—

'उत्तानाभ्याञ्च हस्ताभ्यां पादावस्य मृदु स्पृशेत्।
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत्'॥

इति चेवमादिस्मृत्यन्तरोक्तप्रकारेण करणीयम्। अभिवादनविधिरपि मनूक्त एवाऽऽदरणीयः। यथा मनुः 'अभिवादात् परं विप्रः' (२।१२२) 'भोः-शब्दं कीर्त्तयेदन्ते' (२।१२४) इति च। (द्र० पृ० ३२०) ज्येष्ठमभिवादयन् विप्रः, अभिवादात् पादग्रहणात् परम् 'अमुकनामाऽहमस्मीति स्वं नाम कीर्तयेत्, अन्ते च भोः-शब्दम् इति वचनयोरर्थः, तेन पादग्रहणानन्तरम् 'अमुकनामाऽहमस्मि भोः' इति कथयेत्। यच्च अभिवादये 'अमुकशर्माऽहमस्मि भोः' इत्युच्चार्याभिवादनं कर्तव्यमिति रघुनन्दनादीनां मतम्, तदसङ्गतम्; अभिवादये इत्युल्लेखे प्रमाणाभावात्। अभिवादात् परम् इत्यादिना पादग्रहणादनन्तरमेव नामकीर्तनस्योपदेशाच्च। यदपि अभिवादात् परमित्यस्य, अभिवादये इति शब्दोच्चारणात् परमिति व्याख्यानम्, तदप्यसङ्गतम्; प्रमाणाभावात्, लक्षणाप्रसङ्गाच्च। श्रुतिलक्षणाविषये च श्रुतिं ज्यायसीमवोचाम। सा खल्वियं वर्णना व्याख्यातॄणामेव यदृच्छापरिकल्पिता भवेत्, न तु मुनेरनुमता। मुनिवचनञ्चोपरुध्य यदृच्छया परिकल्पनं तेषामप्यनुचितमेव। 'असावहं भोः' इत्यात्मनो नामाऽऽदिशेत् इत्येवमादिस्मृत्यन्तरेष्वपि अभिवादनवाक्ये अभिवादये इति पदप्रयोगो नानुशिष्यते। मिताक्षरादीपकलिकादिष्वपि अभिवादये इति प्रयोगो न दृश्यते। अभिवादयन् इति तु वर्तमानसामीप्ये वर्तमानवदुपदेशः। एतच्च भवताऽपि वाच्यम्, हेत्वर्थे वा शता वर्णनीयः। ततश्चाभिवादनस्य नामकीर्तनहेतुत्ववचनाद् हेतोश्च पूर्ववर्तित्वनियमात् अभिवादात् परमित्यस्यास्मदुक्तमेव व्याख्यानमादरणीयम्। यच्च गौतमसूत्रम् 'स्वनाम प्रोच्याहमयमित्यभिवादोऽज्ञसमवाये' इति तदज्ञाभिवादनविषयत्वादेव न प्राज्ञाभि-

1. चिह्नितांशो नास्ति क-च।

करणादन्ये च—

नित्यं स्नात्वा शुचिः कुर्याद् देवर्षिपितृतर्पणम् ।

इत्येवमादयः स्मृत्यन्तरोक्ता इति(A) ।

कानि पुनस्तानि व्रतानि येषां गोदानप्रसङ्गेनैते साधारणधर्मा उच्यन्ते, कियत्-कालिकं च तेषां धारणमित्यत आह—

**गोदानिकव्रातिकादित्यव्रतौपनिषदज्यैष्ठसामिकाः संवत्सराः ॥ २६ ॥**

[1]उक्तार्थम् । [2]ननु '[3]नाऽऽचरिष्यन्तं संवत्सरमुपनये'दित्यनेन गतार्थत्वात् '[4]कस्मात् [5]पुनर्गोदानग्रहणम् ? [6]उच्यते—दृष्टान्तार्थं [7]गोदानग्रहणम्'* । कथं [8]नाम ? यद्[9]यद् गोदानिके व्रतादेशनादि तद्वदेतेष्वपीति । एवं तावदुपनयनं सावित्र्या अध्ययनार्थमुक्तम् । गोदानिकमाग्नेयैन्द्रपावमानानां [10]वेदपर्वणाम् । व्रातिकमारण्यकस्य शुक्रियवर्जस्य । आदित्यव्रतं शुक्रियाणाम्, औपनिषदम् [11]उपनिषद्ब्राह्मणस्य(B) । ज्यैष्ठसामव्रतमाज्यदोहानामध्ययनार्थमिति'(C) ।

---

वादनविषयम् । अत एव मनुनाऽपि—

नामधेयस्य ये केचिदभिवादं न जानते ।

तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च ॥ (म० स० २।१२३)

इत्यत्राभिवादे भोः-शब्दो नाभिहितः, ततश्च अमुकोऽयमहम् इत्यत्राभिवादनप्रयोगः । इदं गौतमसूत्रं कैश्चित् कल्पनाकुशलैराकुलीकृत्य पठितम् 'स्वनाम प्रोच्याहमभिवादये इत्यभिवदेत्' इति रत्नाकरम् । यच्चापरमुक्तं मनुवचने नामशब्दस्य नामविशेषार्थत्वात् अभिवादनवाक्ये नामशब्दोल्लेखोऽप्रमाण इति, तदप्ययुक्तम् । 'स्वं नाम इति नामशब्दस्य नामविशेषार्थत्वेऽपि असौ नामाहम् इति नामशब्दस्यानन्यप्रयोजनत्वात् । अन्यथा नामशब्दस्य द्विरुच्चारणानुपपत्तेः । कण्ठतश्चाभिधानात् असौ नामाहमस्मि इत्येवं स्वं नाम कीर्तयेत् इति कण्ठत एव नामशब्दस्याप्युल्लेखोऽनुशिष्यते, तस्मान्न किञ्चिदेतत्' इत्याह ।

A. प्रमाणीकृतं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये ।

B. मन्त्रब्राह्मणापरनामधेयस्य ग्रन्थस्य ।

C. 'मूर्धानन्दिवोऽरतिम्' इत्यादि साम्नां गानाध्ययनार्थमित्यर्थः । ननु चत्वारि वेदव्रतानि इति गौतमेन पुरुषसंस्कारमध्ये पाठात् कथममीषामध्ययनार्थत्वमुच्यते ? नैष दोषः—

---

1. 'निगदव्याख्यातं सूत्रम्' ख । 2. 'ननु' नास्ति च । 3. 'नाऽऽचरिष्यत्' च । 4. 'कस्मात्' नास्ति च । 5. 'नाम गो-' ख । 6. 'उच्यते' नास्ति च । 7. नास्ति च । 8 'नाम' नास्ति च । 9. 'यद्' ख । 10. 'वेद-' नास्ति क-ख । 11. 'चौपनिषद' क-च ।

पुनरपि साधारणधर्मविवक्षयेदमाह—

**तेषु सायं प्रातरुदकोपस्पर्शनम् ॥ २७ ॥**

उक्तार्थम् (A) ।

**आदित्यव्रतं तु न चरन्त्येके ॥ २८ ॥**

एके शाखिन आदित्यव्रतं न चरन्ति। येषामारण्यकान्तर्भूतानि शुक्रियाणि व्यस्तानि पठ्यन्ते [1]'ते न चरन्ति'*, [2]आरण्यकाध्ययनेनैव तेषामधीतत्वात्। येषां तु पुनः [3]पृथक् पठ्यन्ते(B) यथा कौथुमानाम्, ते [4]चरन्ति, एवं विनिवेशेनायं विकल्पो [5]"द्रष्टव्यः"*। ये चरन्ति तेषां विशेषधर्मानाह—

**ये चरन्त्येकवाससो भवन्ति ॥ २९ ॥**

कौपीनाच्छादनमेव तेषामधरीयं वासो नोत्तरीयमजिनमिति।

**आदित्यश्च नान्तर्दधतेऽन्यत्र वृक्षशरणाभ्याम् ॥ ३० ॥**

[6]"वृक्षः प्रसिद्धः,"* शरणं गृहम्। वृक्षशरणयोश्छायां वर्जयित्वा ग्रीष्मवर्मतपैरप्यादित्यव्रतचारिभिश्छत्रादिच्छाययादित्यो नान्तर्धेय इति।

**नापोऽभ्यवयन्त्यूर्ध्वं जानुभ्यामगुरुप्रयुक्ताः ॥ ३१ ॥**

जानुभ्यामूर्ध्वम् अप उदकं नाभ्यवयन्ति नावतरन्ति, [7]"अगुरुप्रयुक्ताः"* गुरुणा अप्रयुक्ता अनुक्ता इत्यर्थः(C)। गुरूक्तानां पुनरूर्ध्वमपि जानुभ्यामुदकावगाहनं कुर्वतां

---

तपोविशेषैर्विविधैर्व्रतैश्च विधिदेशितैः।

वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

इति मनुनाऽध्ययनार्थत्वस्याप्यमीषामुपदेशात्। तस्मात् पुरुषार्थानामेव सतामेषां संयोगपृथक्त्वन्यायेनाध्ययनार्थत्वमध्ययनार्थानामेव वा पुरुषार्थत्वमादरणीयम् इति केचिदाहुः।

A. व्याख्यातं प्राक् (३।१।२९) सूत्रे। सायं प्रातरिति गुणविधानार्थमुदकोपस्पर्शनमिति विहितमनूद्यते। पूर्वमुदकोपस्पर्शनं कृतमूत्रपुरीषस्य मूत्रपुरीषक्लिन्नाङ्गस्य वा शौचसम्पत्त्यर्थम्; अयन्तु स्नानविधिरिति केचित्।

B. आरण्यकानन्तर्भूतानि पृथगेव शुक्रियाणि पठ्यन्ते इत्यर्थः।

C. ननु आचार्याधीनो भवान्यत्राधर्माचरणादिति सूक्तम्, तत् कथमाचार्यप्रयुक्तोऽधर्मं चरेत्? उच्यते—अगुरुप्रयुक्ता जानुभ्यामूर्ध्वमपो नाभ्यवयन्ति इत्युक्ते गम्यत एवैतत् यद् गुरुप्रयुक्ता अभ्यवयन्तीति, तस्माददोषः, अपि च नैवात्र किञ्चिद् विधीयते निषिध्यते वा।

---

1. नास्ति घ। 2. 'ते आरण्यका अध्ययनेनैव' ख। 3. 'पृथक्' नास्ति घ। 4. 'चरन्त्येव' ख। 5. नास्ति घ। 6. नास्ति घ। 7. नास्ति घ।

न दोषः। 'अनेनैव तद्दर्शयति'*, 'यत्र स्वल्पो दोषस्त'माचार्यादेशं कुर्वतामधर्मसंयोगो नास्ती'त्युक्तं भवति(A)।

इति 'भट्टनारायणकृतौ'* 'गोभिलीय-गृह्यसूत्रभाष्ये'*
तृतीयप्रपाठकस्य प्रथमा कण्डिका।

---

किं तर्हि? ये खल्वादित्यव्रतं चरन्ति ते किलैवं कुर्वन्ति न च कुर्वन्तीत्युच्यते तस्मादधर्म-चरणसम्बन्धोऽपि नास्ति इति केचिदाहुः।

A. अथ ब्रह्मचर्यव्रतविशेषाणां प्रयोग उच्यते। तत्र गोदानव्रतप्रयोगः—ब्राह्मणाननुज्ञाप्य गणेशं सम्पूज्य गोदानव्रताङ्गं नान्दीमुखश्राद्धं करिष्ये इति संकल्प्य तत् कृत्वा गोदानव्रताङ्ग-केशान्तकर्म करिष्ये इति संकल्प्य चूडाकर्मवदग्निप्रतिष्ठापनादि केशवपनान्तं कर्म ब्रह्मचारी कुर्यात्। न स्वाचार्यः। नात्र व्रीह्यादीनामासादनम्। सर्वेषामङ्गलोम्नां च वपनम्। गोमिथुनं दक्षिणा ब्राह्मणस्य, अश्वमिथुनं क्षत्रियस्य, अविमिथुनं वैश्यस्य। यथोक्तदक्षिणाऽलाभे सर्वेषामपि गौर्दक्षिणा आचार्याय देया। अथ केशप्रतिग्रहाय नापितायाजो देय इति। अथ गोदानव्रताङ्गोपनयनं कर्तव्यम्। तस्य प्रयोग उपनयनवत्। अत्र विशेषः—होममन्त्रोहेन अग्ने व्रतपते व्रतं गोदानं सांवत्सरिकं चरिष्यामीत्यादि। अहतवस्त्रपरिधारणमकरणञ्च वर्जयेत्। न सावित्र्युपदेशः। पूर्व-धृतयज्ञोपवीतमेखलादण्डाजिनानां त्यागः। पुनर्धारणं च। अथाऽऽदेशा द्वादशाऽऽचार्येण कर्तव्याः। अथ वर्षं प्रयच्छन्नाचार्य उपनयनोक्तानादेशान् वदेत् गोदानव्रतान्ते आग्नेयैन्द्रपवमानपर्वणां श्रावणम्। तदन्ते ऐन्द्रश्चरुः सावित्रचरुवत् कर्तव्यः, निर्वापकाले इन्द्राय त्वा जुष्टं निर्वपामीति। आज्यभागान्ते ऊर्ध्वं साम यजामहे इत्येतयर्चा, सदसस्पतिमद्भुतमिति मन्त्रेण वा, उभाभ्यां वा चरुहोमं कुर्यात्। अग्ने व्रतपत इति पञ्चाऽऽज्याहुतयः। ततः स्विष्टकृदुव्याहृतिहोमादि। ब्रह्मणे पूर्णपात्रं दक्षिणा। आचार्यायाजं मेषं गाञ्च पूर्वदक्षिणां दद्यात्। आग्नेये पर्वणि श्राविते ऽजदक्षिणा। ऐन्द्रपर्वणि श्राविते मेषदक्षिणा। पवमाने पर्वणि श्राविते गौर्दक्षिणेति गोदानव्रतप्रयोगः।

अथ व्रातिकव्रतप्रयोगः—व्रातिकव्रताङ्गं पुनर्नान्दीमुखश्राद्धम्, व्रातिकव्रताङ्गं पुनरुपनयनम्। व्रातिकमेतावत्कालिकमित्यूहं कृत्वा पञ्चाऽऽज्यहोमा इति विशेषः। गोदानव्रतान्ते श्राविताना-मुपाकर्मारभ्याध्ययनम्। व्रतान्ते आरण्यकगेयानामध्यापयञ्चकस्याऽऽज्यदोहादिसामत्रयवर्जितस्य श्रावणं तदन्ते ऐन्द्रश्चरुः। आज्यहोमे व्रातिकं सांवत्सरिकमित्यूहयुक्ताः पठितव्याः। आचार्य-दक्षिणा इति।

अथाऽऽदित्यव्रतप्रयोगः—तदङ्गं नान्दीमुखश्राद्धम्, आदित्यव्रताङ्गं पुनरुपनयनम्। आदित्य-मेतावत्कालिकमित्याद्यूहयुक्तमन्त्रैः पञ्चाऽऽज्यहोमाः। आदित्यव्रतिन एकवस्त्रधारणम्। वृक्ष-गृहाद्यन्यत्र छत्रादिना सूर्यस्य व्यवधाननिषेधः। जानुदघ्नाधिके जलेऽवतरणनिषेधः, गुर्वाज्ञया न दोषः। व्रातिकव्रतान्ते श्रुतस्याऽऽरण्यकस्याध्ययनम्। व्रतान्ते महानाम्नीभिधानां शुक्रियाणां श्रावणम्। व्रतान्ते ऐन्द्रश्चरुः। ऐन्द्रचरुं हुत्वा व्रतमादित्यमेतावत्कालिकमित्याद्यूहवद्भिः पञ्चाऽऽज्यहोमाः। अत्राऽऽचार्याय गोदानम्। ब्रह्मणे पूर्णपात्रम्। अन्यत् सर्वं पूर्ववदिति।

---

1. नास्ति ब। 2. 'यत्राल्पो दोष-' क-ब। 3. '-माचार्योद्दिष्टेन कुर्वता-' ख। 4. 'उक्तं भवति' नास्ति ख। 5. नास्ति ब। 5-6. नास्ति ख।

# तृतीयप्रपाठकस्य द्वितीया कण्डिका

—————:०:—————

आदित्यव्रतानन्तरमध्ययनक्रमान्महानाम्निकेन भवितव्यम्। तथा [1]चाऽऽर्षेयं ब्राह्मणम्—आदित्य[2]स्योत्रयं तद्वादित्यात्मेत्याचक्षते एभ्यो महानाम्न्य इति। औपनिषद्ज्येष्ठसामव्रतयोस्तु प्रासङ्गिकोऽस्मिन् [3]क्रमे उपन्यासः, काला[4]दीनां सामान्यात्। महानाम्निकस्य तु कालक्रियाकलापयोरस[5]मत्वात् तस्य स्वे क्रमे उपन्यासः [6]कृतः। अतः पृथगारम्भार्थमिदमाह—

**द्वादश महानाम्निकाः संवत्सराः(A) ॥ १ ॥**

महानाम्नीनामध्ययनार्था महानाम्निकाः द्वादश संवत्सराः। [7]किं द्वादशवार्षिक एव एकः पक्ष उतान्यत् किञ्चित् पक्षान्तरमस्तीत्यत आह[7]*—

**नव षट् त्रय इति विकल्पः ॥ २ ॥**

वाशब्दो लुप्तवद् द्रष्टव्यः। नव वा संवत्सरा इति [8]वर्त्तते। षड् वा त्रयो वेति विकल्पः।

---

A. अत्र तर्काङ्कुरः—"भट्टभाष्ये तावदत्र सूत्रद्वयं कल्पितम्, तत्र द्वादश महानाम्निकाः संवत्सरा इत्येकं नव षट् त्रय इति चापरं सूत्रं कल्पितम्। परन्तु एवं सूत्रच्छेदे द्वादश महानाम्निकाः संवत्सरा इत्यनेन विकल्पस्य सम्बन्धः क्लेशेन सम्पादनीयो भवेत्, इत्येवं मन्यमानेन मया प्रथमसंस्करणे 'द्वादश महानाम्निकाः संवत्सराः' 'नव षट् त्रयः' 'इति विकल्पः' इति सूत्रत्रयं कल्पितमासीत्। इदानीन्तु 'इति विकल्पः' इत्येतावन्मात्रस्य सूत्रस्य कस्मिंश्चिदपि सूत्रग्रन्थे अदर्शनात् आचार्याणां नैतादृशी शैलीति विभावयता मिलितमेकमेव सूत्रमङ्गीकर्तुमुचितमित्यालोचयता चैकमेव सूत्रं लिखितम्। सूत्रद्वैध्योक्तेऽपि नात्र कोऽपि दोष इति विपश्चितो विचारयन्तु।" इत्याह। सामश्रमिणा तु सूत्रद्वयमङ्गीकृतम् इति।

---

1. 'चाऽऽर्षेयब्राह्मणम्' ख। 2. '-स्योत्रयं चादि-' ख। 3. 'क्रमोपन्यासः' क-ख। 4. '-दी-' नास्ति ख। 5. '-मत्वात् तो' ख। 6. 'कृतः' ख। 7. 'पक्षान्तरमाह' ख। 8. 'वर्त्तते' नास्ति ख।

किमेतावन्त एव विकल्पाः ? नेत्याह—

**संवत्सरमप्येके ॥ ३ ॥**

एके आचार्याः सांवत्सरिकमपि महानाम्निक[1]व्रतमाहुः। एवं चैते पूर्ववत् पुरुषशक्तिशील[2]पृथक्कालवयोऽवस्थाविशेषापेक्षया व्यवस्थापनीयाः; न तु स्वरुच्या अन्यतमपरिग्रहेणेति। "यदीच्छाविकल्पः स्यात्, तथा सति द्वादशवार्षिकादीनां पक्षाणामानर्थक्यप्रसङ्गः स्यात्। को हि दैवशतः स्वल्पायासं पक्षमुत्सृज्य महति क्लेशे निपतेदिति। तस्मात् व्यवस्थयेति स्थितम्"*(A)।

किञ्च—

**व्रतं तु भूयः ॥ ४ ॥**

तुशब्दो [4]विशेषार्थः। संवत्सरपक्षे विशेषेण व्रतं भूयः बहु कर्त्तव्यमित्यर्थः। कथं [5]नाम ? येऽप्यत्र वैकल्पिका धर्माः यथा 'अनियमो वा कृष्णस्थानासनपन्थ-प्रश्नेषु' [ सू० ३।२।२५ ] इत्येवमादयः, तेऽपि संवत्सरपक्षे नियमतोऽनुष्ठेयाः। इत्येवं व्रतभूयस्त्वं कुर्यादित्यर्थः। अन्ये तु [6]हेत्वर्थं तुशब्दमाहुः। यस्मात् 'तिष्ठेद् दिवासीत नक्तम्' [ सू० ३।२।१४ ] इत्येवमादिधर्मवैषम्याद् दुरनुष्ठेयं बहुतरं कालमेतद् व्रतम्, इत्यतः संवत्सरमप्यनुष्ठेयमिति।

[7]किं य एव कश्चित् संवत्सरपक्षेणाधिक्रियते ? नेत्याह—

**पूर्वैश्चेत् श्रुता महानाम्न्यः ॥ ५ ॥**

यदि पूर्वैर्बहुवचनात् पित्रादिभिः पुरुषैर्यथोक्तव्रतचर्यया आचार्यस्यानुगमनं [8]कुर्वद्भिः श्रुता महानाम्न्यः, तदाऽसौ संवत्सरपक्षेणाधिक्रियते नान्यथा [9]इति।

A. अत्र केचित्—अथवा पूर्वपूर्वकल्पेषु कृच्छ्रभूयस्त्वात् फलभूयस्त्वं कल्पनीयम्। तथा च कर्मप्रदीपः—

यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः।
भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयो ह्यवाप्यते ॥ इति ( २।१।१३ )।

एवञ्च सर्वान् पुरुषान् प्रत्यविशेषेणामी विकल्पा भवन्ति न तु पुरुषशक्त्यपेक्षयेति योजनमित्याहुः। सूत्रेऽत्र एके इत्यनेन यत् सांवत्सरिकं व्रतमुक्तम्, तदिदमेकीयं मतमाचार्येणाप्यनुमतमिति प्रतिपद्यामहे। यदुक्तं गृह्यासंग्रहे—

आचार्यानुमतं यत्स्यादेकीयं गृह्यते क्वचित्।
तेषामपि चैव यान्यपि आचार्यो न प्रशंसति ॥ ( गृ० सं० १।१०२ )।

1. '-व्रत-' नास्ति ख। 2. '-पृथक्-' स्थाने '-ईश-' ख। 3. नास्ति घ। 4. 'विशेषार्थः' ख। 5. 'नाम' नास्ति घ। 6. 'हेत्वर्थमप्याहुः' ख। 7. 'किंच' क। 8. 'कुर्वद्भिः' ख। 9. 'इति' नास्ति घ।

किञ्च—

अथापि रौरुकिब्राह्मणं भवति(A) कुमारान् ह स्म वै मातरः पाययमाना आहुः, शक्करीणां पुत्रका व्रतं पारयिष्णवो भवतेति ॥ ६ ॥

अथशब्दो ब्राह्मणवाक्योपादानार्थः। रौरुकिशाखाब्राह्मणमपि व्रतचर्याप्ररोचनाय भवति। ह स्म वै इति अनर्थका निपाताः। [1]गद्यत्वात्तु ब्राह्मणवाक्यस्य। तथा च [2]यास्कः—अमितात्तरे[3]*ष्वनर्थका इति। [4]कुमारान् बालपुत्रान् मातरः[5]* जन[6]न्यः स्तनं [7]पाययमानाः [8]आहुः उक्तवत्यः। हे पुत्रकाः, अनयाऽस्मदाशिषा शक्करीणां महानाम्नीनां यदेतत्तु व्रतं तस्य [9]पारयिष्णवः पारङ्गन्तारो भवत [10]इति। इति[11]शब्दो ब्राह्मणवाक्यपरिस[12]माप्त्यर्थः।

व्रतधर्मानाह—

तास्वनुसवनमुदकोपस्पर्शनम् ॥ ७ ॥

तासु शक्करीष्वधीयमानासु इति [11]शेषः। उदकोपस्पर्शनं स्नानम्। तच्च सवनं सवनमनु अनुसवनम्। प्रातर्मध्यन्दिनापराह्णेष्वित्यर्थः।

नानुपस्पृश्य भोजनं प्रातः ॥ ८ ॥

अनुपस्पृश्याऽस्नात्वा प्रातर्भोजनं न कर्तव्यम्।

सायमुपस्पृश्याभोजनमा समिदाधानात् ॥ ९ ॥

उपस्पृश्य स्नात्वा, अपराह्णे [12]आ समिदाधानात् समिदाधानात् पूर्वं सायमभोजनम्।

कृष्णवस्त्रः कृष्णभक्षः ॥ १० ॥

[13]स्यादिति वाक्यशेषः। केनचिद्विशिष्टेनाभ्युपायेन कृष्णवस्त्रः स्यादिति वर्त्तते, न तु नीलीरङ्गादिना। कृष्णभक्षः स्यादिति वर्त्तते, विशिष्टेनैवाभ्युपायेन[13]*।

---

A. सूत्रमिदं भवतीत्यत्र, आहुरित्यत्र, भवतेतीत्यत्र च विभज्य सूत्रत्रयं कल्पितवन्तौ सामश्रमिसत्कालङ्कारौ।

---

1. 'चनाद्यत्वात्' क-घ। 2. 'संस्कारवानेनाचरि-' ? घ। 3. नास्ति ख। 4. '-न्यः; पुत्रान्' क-ख। 5. 'पाययन्त्यः' क-घ। 6. 'आहुः' नास्ति घ। 7. 'पारयिष्णवः' नास्ति घ। 8 'इति' नास्ति घ। 9. 'चरणं' ख। 10. '-माप्त्यर्थम्' ख। 11. 'विशेषः' ख। 12. 'आ समिदाधानात्' नास्ति घ। 13. 'भवेदिति शेषः। केनचित् विशिष्टेनैवाभ्युपायेन' घ।

## आचार्याधीनः ॥ ११ ॥

स्यादिति [1]वर्त्तते। "उक्तं सत् पुनरुच्यते"[2] अतिशयेन आचार्याधीनत्वार्थम्। कथं [3]नाम? आचार्यकार्याविरोधेन व्रतकर्मापि कर्त्तव्यमिति। मातृपितृशुश्रूषाऽप्याचार्यातिसृष्टेन कर्त्तव्या।

तथा च मनुः—

न चातिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् (A)। इति।

## अपन्थदायी ॥ १२ ॥

स्यादिति [4]वर्त्तते।

चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च (B) ॥

इत्येषामपि मार्गो न देयः।

## तपस्वी ॥ १३ ॥

स्यादिति [5]वर्त्तते। व्रतव्यतिरेकेणान्यदप्युपवासादि[6]कं तपः कुर्यात् (C)।

---

A. मनुसंहिता २।२०६। 'न चानिसृष्टो' इति मुद्रितमनुसंहितापाठः कुल्लूकभट्टादिव्याख्यातृसम्मतश्च। अस्य मेधातिथिकृता व्याख्या च—"गुरुगृहे वसन् गुरुणाऽनिसृष्टोऽननुज्ञातः स्वान् गुरून् मातापितृप्रभृतीन् नाभिवादयितुं गच्छेत् पुनर्गुरुगृहे स्थितस्य यदि स्वगुरव आगच्छन्ति तदा तदभिवादने गुर्वाज्ञाऽपेक्षितव्या। कुत एतत्? मातापित्रोरत्यन्तमान्यत्वात्, पितृव्यमातुलादीनामप्यभिवादनप्रवृत्तस्य न कश्चिद् गुरुशुश्रूषाविघ्नः। आराधनार्थं एवायं सर्वः प्रयासः, मातापितृगुरुसन्निपाते कः क्रमोऽभिवादनस्येत्युक्तं सर्वमहती माता, पित्राचार्ययोस्तु विकल्पः, यतः पितृत्वाध्यारोपेणाऽऽचार्यस्य गौरवं विहितमतः पिता श्रेष्ठः। यतश्चोक्तं गरीयान् ब्रह्मदः पितेति तत आचार्यः, अतोऽयं विकल्पः" इति।

B. मनुसंहिता २।१३८। व्याख्या चास्य कुल्लूकभट्टीका—"चक्रयुक्तरथादियानारूढस्य, नवत्यधिकवयसः, रोगार्त्तस्य, भारपीडितस्य, स्त्रियाः, अचिरनिवृत्तसमावर्त्तनस्य, देशाधिपस्य, विवाहाय प्रस्थितस्य पन्थास्त्यक्तव्यः"। इति।

C. अत्र तर्कालङ्कारः—"अथवा

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।

---

1. 'वर्त्तते' नास्ति च। 2. 'पुनरुक्तम्' क-च। 3. 'नाम' नास्ति च। 4. 'वर्त्तते' नास्ति च। 5. 'वर्त्तते' नास्ति च। 6. 'कं च' क-च।

## तिष्ठेद् दिवा(A)सीत नक्तम् ॥ १४ ॥

दिवा अहनि स्थाणुवत् 'ऊर्ध्वस्तिष्ठेत् "नोपविशेन्न च पर्यटेदिति"* । सन्ध्योपासनाद्यर्थमुपविशेद् भिक्षार्थञ्च पर्यटेत् नान्यथा । नक्तं रात्रौ "आसीत उपविशेत्"* न सुप्यात् न च तिष्ठेत् ।

## वर्षति च नोपसर्पेच्छन्नम् ॥ १५ ॥

बहिर्गतस्य वर्षति च्छन्नं गृहं कुटीमठदेवकुलादिकं नोपसर्पेन्न 'प्रविशेत् । गृहादिप्रतिषेधाद् वृक्षमुपसर्पतो न दोषः । अथ गृहेऽवस्थितस्य वर्षेत् ? ततो न निष्क्रामेत् । अथ मूत्राद्यर्थं वर्षति निष्क्रामेत् ? ततो न प्रविशेत् यावन्न वर्षोपरमः(B) ।

## वर्षन्तं ब्रूयादापः शक्वर्य इति ॥ १६ ॥

ऋतावनृतौ "च यस्मिन् यस्मिन्नहनि रात्रौ वा वर्षेत् तत्र तत्र वर्षस्य प्रथमप्रारम्भे आपः शक्वर्य(C) इत्येतं मन्त्रं ब्रूयात् ; न तु सन्ततवर्षे पौनःपुन्ये ⁶ वा मन्त्रावृत्तिः । ⁷इति अनेनैवोत्तरं सूत्रद्वयं व्याख्यातम्⁷* ।

## विद्योतमानं ब्रूयादेवंरूपाः खलु शक्वर्यो भवन्तीति(D) ॥ १७ ॥

⁸ऋज्वर्थम् ।

---

इति मनुना व्रततपसोर्भेदेनोपन्यासात् अन्यथा व्याकयास्यामः । तपस्वी चान्द्रायणादितपोविशेषवान् इन्द्रियसंयमादिरूपतपोविशेषवान् वा भवेत् इति । यद्यप्येतदपि—

सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ।

इति मनुना, स्वयमिन्द्रियमोचनमित्याचार्येण च गुरौ वसतो ब्रह्मचारिणः सामान्यतोऽभिहितम्, तथाऽप्यत्र पुनरुपादानं व्यतिरेके दोषातिशयार्थं व्रतवैगुण्यार्थं वा ।" इत्याह ।

A. दिवेत्यत्र विभज्य सूत्रद्वयं पठतः सामश्रमितर्कालङ्कारौ ।

B. अत्र तर्कालङ्कारो विवदते—"गृहावस्थितस्तु वर्षत्यपि न निष्क्रामेत्, कस्मात् ? नोपसर्पेदिति करणात् बहिरवस्थितस्य खल्वेतत् सम्भवति, न च गृहान्निष्क्रमे प्रमाणं पश्यामः"—इत्युक्ता । तदत्र मूत्रपुरीषादिपीडितो ब्रह्मचारी किं कुर्यादिति भगवन्तोऽनूचाना निर्दिशन्तु ।

C. "आपः शक्वर्यः" इत्येवायं मन्त्रो गोभिलाचार्यपरिगृहीतो ज्ञातव्यः ।

D. "एवंरूपाः खलु शक्वर्यो भवन्ति" मन्त्रोऽयमाचार्यगृहीत एव ।

---

1. 'ऊर्ध्वः' नास्ति च । 2. नास्ति च । 3. 'चासीन उपविशेत्' ख । 4. 'प्र-' नास्ति च । 5. 'वा' ख । 6. 'न वा' ख । 7. नास्ति च । 8. 'ऋज्वर्थम्' नास्ति ख ।

**स्तनयन्तं ब्रूयान्मह्या महान् घोष इति ॥ १८ ॥**

स्तनयन्तं 'गर्जन्तम्(A) ।

**न स्रवन्तीमतिक्रामेदनुपस्पृशन् ॥ १९ ॥**

स्रवन्तीं नदीम् अनुपस्पृशन् स्नानमकुर्वन् नातिक्रामेत् (B) ।

**न नावमारोहेत् ॥ २० ॥**

मृत्यर्थम् ।

**प्राणसंशये तूपस्पृश्याऽऽरोहेत् ॥ २१ ॥**

नावारोहणमकुर्वतश्चौरव्याघ्रादिभ्यः [2]प्राणसंशये सति उपस्पृश्य स्नात्वारोहेत् ।

**तथा प्रत्यवरुह्य ॥ २२ ॥**

नावः प्रत्यवरुह्योत्तीर्य तथैव पुनः स्नायादिति ।

(C)कस्मात् पुनस्त्रिषवणादय उदकाश्रया दुरनुष्ठेया[3] एवमस्य धर्मा विधीयन्ते इत्यत आह—

**उदकसाधवो हि महानाम्न्य इति ॥ २३ ॥**

हि यस्मान्महानाम्न्य उदकसाधवः, उदकप्राया उदक[4]पात्र्यः, उदकमासां साधु [5]प्रधानमित्यर्थः ।

यद्यासामु[6]दकं प्रधानं* ततोऽस्यैतद्[7]व्रतचर्यायां किं फलं भवतीत्यत आह—

**एवं खलु चरतः कामवर्षी पर्जन्यो भवति ॥ २४ ॥**

---

A. तथाच मेघे गर्जति "मह्या महान् घोषः" इमं मन्त्रं जपेत् । विनियोगश्चास्य गोभिलाचार्यपरिगृहीत एव ।

B. अत्र तर्कालङ्कारः—"स्रवन्तीमतिक्रमिष्यन् स्नात्वाऽतिक्रामेदित्यर्थः ।

तथाच स्मरणम्—

अस्नात्वा पितृन् देवान् नदीपारन्तु न व्रजेत् । इति ।

तदनेन स्नानमप्यर्थात् सिध्यति । यच्च 'स्नात्वा च न नदीं तरेत्' इति वचनान्तरम्, तद्दृष्टस्नानाविध्यतिरिक्तविषयम् । अथवा प्रमाणस्योभयथा दर्शनाद् वर्तमानसामीप्यमप्युभयत्र व्याख्येयम् । सोऽयं विकल्पः, स्नात्वा स्रवन्तीमतिक्रामेत्, अतिक्रम्य वैनां तत्रैव स्नायादिति ।" इत्याह स्वभाष्ये ।

C. भाष्यमिदमेवं विवृणोति तर्कालङ्कारः—"कस्मात् पुनः कारणात् त्रिषवणोपस्पर्शादयो बाहुल्येनोदकाश्रया एव धर्मा महानाम्निकव्रते विधीयन्ते" । इति ।

---

1. 'गर्जयन्तम्' क-घ । 2. 'प्राण-' ख । 3. अनन्तरं 'स्रवन्तीं नदीमनुपस्पृशेत्' इत्यधिकं ख । 4. '-दावाः' क-घ । 5. 'अधीन-' ख । 6. '-दकमधीनं' ख । 7. '-व्रतचर्यात्' क घ ।

कामान् वर्षतीति कामवर्षी, यद् यदस्येप्सितं तत् तद् वर्षति संपादयतीत्यर्थः। अथवा यत्र यत्र यदा यदा चासौ कामयते तत्र तत्र तदा तदा च वर्षतीति [1]कामवर्षी। ऋज्वन्यत्।

## अनियमो वा कृष्णस्थानासनपन्थभक्षेषु ॥ २५ ॥

अथवा कृष्णवस्त्र-दिवावस्थान-[2]रात्र्यासन-पन्थप्रदान-कृष्णभक्षेष्वनियमः। विकल्पेनानुष्ठानमित्यर्थः।

महानाम्नीनां श्रावणकालविवक्षयेदमाह—

## तृतीये चरिते स्तोत्रीयामनुगापयेत् ॥ २६ ॥

तृतीये व्रतस्य भागे चरिते एकां (A) स्तोत्रीयामाचार्यो ब्रह्मचारिणं अनुगापयेत् श्रावयेत्।

---

A. प्रथमस्तोत्रीयानुगाने महानाम्न्यार्चिकमन्त्राः—

ॐ विदा मघवन् विदा गातुमनुशंसिषो दिशः।
शिक्षा शचीनाम्पते पूर्वीणाम्पुरूवसो ॥ १ ॥
ॐ आभिष्ट्वमभिष्टिभिः स्वाऽर्न्नांशुः।
प्रचेतन प्रचेतयेन्द्र द्युम्नाय न इषे ॥ २ ॥
ॐ एवाहि शक्रो राये वाजाय वज्रिवः।
शविष्ठ वज्रिन्नृञ्जसे मंहिष्ठ वज्रिन्नृञ्जसे आयाहि पिब मत्स्व ॥ ३ ॥

इति, सा० सं० म० प्र० ख०।

महानाम्न्यार्चिकेषु प्रथमस्तोत्रीयाणां मन्त्राणां व्याख्या—

हे मघवन् धनवन् इन्द्र, विदाः त्वं विद्धि, अत्र वेदितव्यकर्मविशेषस्यानुपादानात् सर्वं जानीहीत्यर्थः। यतस्त्वं सर्वज्ञः, तस्मात् गातुं यजमानगन्तव्यं देशं विदाः जानीहि। यद्वा, गातुः गायतेः स्तुतिकर्मणः, त्वदर्थं क्रियमाणां स्तोतुः स्तुतिं विद्धि। ततो दिशः यजमानस्य साधु-मार्गेण स्वर्गं गन्तुं मार्गान् अनुशंसिषः अनुशंस अपदिशं बोधयेति यावत्। हे शचीनाम्पते, शचीशब्देन कर्म, प्रज्ञा वा, पूर्वीणां बह्वीनां शचीनां पते स्वामिन्, हे पुरुवसो, पुरु प्रभूतं वसु धनं यस्य, हे प्रभूतधनेन्द्र, आभिः इदानीं क्रियमाणाभिः, अभिष्टिभिः अन्वेषणाभिः प्रार्थनाभिः स्तुतिभिरस्मदीयाभिः हेतुभिः त्वं शिक्ष, शिक्षतिर्दानकर्मा, देहि वसूनीति शेषः, पुरुवसो इति सम्बोधनसामर्थ्याद् वसूनीति लभ्यते। स्वर्णांशुः स्वरादित्यः, नकार उपमार्थीयः, अंशुः, अश्नोतेर्व्याप्तिकर्मणः। तथाच आदित्य इव व्याप्तो भवतीन्द्रः। हे प्रचेतन हे प्रशस्तज्ञानेन्द्र, प्रचेतय

---

1. 'कामवर्षी' नास्ति घ। 2. 'रात्र्यासन-' क-घ।

## एवमितरे स्तोत्रीये ॥ २७ ॥

एवमनेन प्रकारेण तृतीये व्रतभागे चीर्णे इतरे(A) [1]द्वे [2]द्वितीयतृतीये [3]स्तोत्रीये अनुगापयेदिति [4]वर्त्तते ।

---

अस्मदीयां भक्तिमवधारय जानीहि । हे इन्द्र, नः अस्मभ्यं युम्नाय यशसे, यद्वा धनलाभाय, इषे अन्नलाभाय च भव, हि-शब्दः कारणपरः, हि यस्मात्, त्वं शक्रः धनदाने समर्थ एव भवसि तस्माद् धनादिकं प्रयच्छ । हे वज्रिवः वज्रवन्निन्द्र, यद्वा वज्रः व्रजनं गमनं तद्वान् वज्री, अथवा वज्रायुधं तद्वन्निन्द्र, राये धनलाभाय, वाजाय अन्नलाभाय च प्रसन्नो भवेति शेषः । हे शविष्ठ अतिशयेन बलवन् । हे वज्रिन् इन्द्र, ऋञ्जसे अस्माभिर्धनलाभार्थं प्रसाध्यसे, यद्वा प्रसाध्य अस्मान् धनादिभिः समृद्धान् कुर्वित्यर्थः । हे मंहिष्ठ, अतिशयेन दानशीलपूज्य, वा हे वज्रिन् ऋञ्जसे अस्माभिः प्रसाध्यसे । यस्मादेवं तस्माद् आयाहि अस्मदीयं यज्ञं प्रत्यागच्छ । आगत्य च पिब । तं सोमं पीत्वा मत्स्व हृष्टो भवेति । इति ।

A. द्वितीयस्तोत्रीयानुगाने महानाम्न्यार्चिकमन्त्राः—

ॐ विद्मा राये सुवीर्यम्भुवो वाजानाम्पतिर्वशां अनु ।
मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ४ ॥
ॐ यो मंहिष्ठो मघोनामंशुर्न शोचिः ।
चिकित्वो अभिनो नयेन्द्रो विदे तमु स्तुहि ॥ ५ ॥
ॐ ईशे हि शक्रस्तमूतये हवामहे जेतारमपराजितम् ।
स नः स्वर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ॥ ६ ॥

इति, सा० स० म० द्वि० ख० ।

महानाम्न्यार्चिकेषु द्वितीयस्तोत्रीयाणां मन्त्राणां व्याख्या—

हे इन्द्र, सुवीर्यं शोभनो वीरः पुत्रः शोभनपुत्रोत्पत्तिसामर्थ्यम् । यद्वा शोभनवीर्यं युद्धादिष्वपराजयम्, विद्माः लम्भय प्रापय, किमर्थम् ? राये धनार्थम्, धनं रक्षितुमित्यर्थः । वाजानां सेनानां बलानां वा पतिः स्वामी त्वं भुवः भवसि । वशान् काम्यमानानर्थान्, अनु अभिलक्ष्य, यथाकाममित्यर्थः, यद्वा वशांस्त्वदधीनान् यजमानान् भुवः भावयसि । हे मंहिष्ठ अतिशयेन बलवन्, यः च मघोनां धनवतां मध्ये मंहिष्ठः अतिशयेन दाता, तस्मादस्माभिर्धनार्थं प्रसाध्यसे । अंशुर्न व्याप्त आदित्य इव, शोचिर्दीप्तो भवतीन्द्रः । हे चिकित्वः, चिकित्वन् ज्ञानवन्निन्द्र, नः अस्मान् अभिलक्ष्य नय धनादि प्रापय । इन्द्रः परमैश्वर्ययुक्तः, विदे विद्यते सर्वैर्ज्ञायते,

---

1. 'द्वे' नास्ति ख । 2. 'द्वितीये तृतीये' ख । 3. 'स्तोत्रीये' नास्ति घ । 4. 'वर्तते' नास्ति घ ।

तमु तमेवेन्द्रं स्तुहि स्तुतिं कुर्विति। ऋषिरात्मानमेव शास्ति—हि यस्मात् शक्रः शत्रुहनन-समर्थः, इन्द्रः ईशे ईष्टे सर्वस्येति, तस्मात् तमेव स्तुहीति समन्वयः। तम् इन्द्रम्, ऊतये अस्मद्रक्षणार्थम्, हवामहे आह्वयामहे, कीदृशम्? जेतारं युद्धेषु शत्रुजयशीलम्, अत एव अपराजितं न कदाचिदन्यैः पराजितम्, सः इन्द्रः, नः अस्माकम्, द्विषः द्वेष्टॄन्, अतिस्वर्षत् अत्यर्थमुपतपतु विनाशयतु, अथवा स्वरतिर्गतिकर्मा, अस्मत्तः शत्रूनतिगमयतु अतिपारयतु। (तथाच बह्वृचाः स नः पर्षदित्यामनन्ति)। क्रतुः अस्माभिरनुष्ठीयमानं कर्म, छन्दः गायत्र्यादिकं शस्त्रलक्षणम्, ऋतम् उदकम् सोमरस इत्यर्थः। यद्वा, ऋतं सत्यभूतं कर्मफलं तत्सर्वं बृहत् प्रभूतमस्त्विति शेषः। इति।

तृतीयस्तोत्रीयानुगाने महानाम्न्यार्चिकमन्त्राः—

ॐ इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम्।
स नः स्वर्षदति द्विषः स नः स्वर्षदति द्विषः॥ ७॥
ॐ पूर्वस्य यत्ते अद्रिवोऽंशुर्मदाय।
सुम्न आधेहि नो वसो पूर्तिः शविष्ठ शस्यते॥
वशीहि शक्रो नूनं तन्नव्यं सन्न्यसे॥ ८॥
ॐ प्रभो जनस्य वृत्रहन् समर्येषु ब्रवावहै।
शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः॥ ९॥

इति, सा० स० म० त्रि० ख०।

महानाम्न्यार्चिकेषु तृतीयस्तोत्रीयाणां मन्त्राणां व्याख्या—

जेतारम् अपराजितम् इन्द्रम्, धनस्य सातये लाभार्थम्, हवामहे आह्वयाम इति। सः इन्द्रः, नः अस्माकम्, द्विषः द्वेष्टॄन् अतिस्वर्षत् विनाशयतु। येऽप्यन्ये स्वयं द्वेषं न कुर्वन्ति तथाऽपि द्विषः अस्माभिर्द्वेष्याः, तानप्यतिस्वर्षत् (सर्वत्र हि वेदेषु योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्यादौ द्वेष्टॄणां द्वेष्याणाञ्च विनाशः प्रार्थ्यते)। हे अद्रिवः अद्रयः पर्वताः तद्वन् इन्द्र, इन्द्रो यतः पर्वतान् भिनत्ति अतः पर्वतेन्द्रयोर्भेद्यभेदकसम्बन्धः। यद्वा, आदृणात्यसुरराशीनिति वा, अन्यैः स्वयं न दीर्यते प्रहृत इति वा अद्रिर्वज्रः, तद्वन्निन्द्र, पूर्वस्य पुरातनस्य ते तव यत् धनमस्ति तदस्मभ्यमाहरेति। हे इन्द्र, योऽयमंशुः सोमलताखण्डः, तज्जन्यः सोमरस इत्यर्थः, स च मदाय भवति। यस्मादस्माभिर्दत्तः सोमः, तव मदाय भवति तस्मात् हे वसो निवासहेतो इन्द्र, नः अस्मान् सुम्ने सुखे धने वा, आधेहि स्थापय। हे शविष्ठ बलवत्तमेन्द्र, तव पूर्तिः त्वदीयं धनपूरणं दानमित्यर्थः, शस्यते सर्वैः स्तूयते। हि यस्मात् शक्रः समर्थ इन्द्रः वशी सर्वस्य नियन्ता खलु। यद्वा, वशी बहुविषयस्वीकारवान्, अत एव शक्रः दाने शक्तिमान्, तस्मात् ते दानं स्तूयते। हे प्रभो सर्वस्य जनस्य स्वामिन्, हे वृत्रहन् वृत्रो मारकः शत्रुः, तद्धननवान् शत्रुघातिन्, नव्यं नूतनं वली-पलितादिलक्षणेन पुराणत्वेन वर्जितम्,

## सर्वा वाऽन्ते सर्वस्य ॥ २८ ॥

अथवा सर्वाः (A) स्तोत्रीयाः सर्वस्य व्रतस्यान्तेऽनुगापयेदिति 'वर्त्तते।

कथमनुगापयेदित्यत आह—

## उपोषिताय संमीलितायानुगापयेत् ॥ २९ ॥

'वाग्यतो ²न भुञ्जीत, त्रिरात्रमहोरात्रौ वे'त्यनेन [सू ३।२।३२] वक्ष्यमाणेन

---

तमिन्द्रं त्वां नूनम् अवश्यम्, सन्नासे अहं सम्यक् नितरां प्रक्षिपामि, अस्मिन् कर्मणि हविषो भोक्तृत्वेन स्थापयामीत्यर्थः। यद्वा, हे इन्द्र, नव्यं नूतनमन्यैरक्षतपूर्वं यथा भवति तथा नूनमिदानीं सन्नासे अस्माभिः सेव्यसे। किञ्च, अर्येषु अर्येषु प्राप्तव्येषु यज्ञादिषु कर्मसु संवावौ त्वञ्चाहञ्चावां सम्भावां करवावहै। (सर्वस्य यजमानस्येन्द्रसाक्षात्कारो भवति तमर्थं द्योतयितुमेकत्र सहवदनमित्यर्थं इति सायणाचार्यः)। स इन्द्रः शूरः समर्थः, गोषु गवार्थं युद्धादिषु शत्रुभ्यो गवानयनार्थं गच्छतीत्यर्थः। कीदृशः? सखा समानख्यानः, सखिवद्धत्यस्तत्रिधः, अत एव सुशेवः शोभनसुखः अकृच्छ्रेण सुखकरः, अद्रयुः द्वयरहितः सत्यानृतवर्जितः, केवलसत्यस्वरूप इत्यर्थः। यद्वा, यद् इन्द्रं मनसि वचसि क्रियायां वाऽन्यत् कार्यमिति तद्रहितः। इति।

A. सर्वा इति पञ्चपुरीषपदैः सह सम्पूर्णो महानाम्न्यार्चिकः तत्र शेषमन्त्रः—

ॐ एवा ह्येव एवा ह्यग्ने एवा हीन्द्र।

एवा हि पूषन् एवा हि देवाः ॥ १० ॥

इति, सा० स० म० शे० मं०।

अथ पुरीषपदानि व्याख्यायन्ते—

हे इन्द्र, त्वम् एवा (मन्त्रे तु एवा इति निपातस्य च (६,३,१३६) इति दीर्घः, एवं सर्वत्र ज्ञातव्यम् अव्याख्यातदीर्घे यथा स्वार्त्रांशुः, (ऋ० पू० ५२९) इति।) एव हि एवमुक्तगुणोऽसि खलु। यद्वा, एवशब्दः इण्गतौ इत्यस्मात् वन्प्रत्ययान्तः, अस्मदीयं यज्ञं प्रत्येव आगन्ता भवेति शेषः। एवेति पुनरुक्तिरादरार्थां। हे अग्ने, अग्रस्य नेतः देवानां पुरतो गन्तरिन्द्र, एतद्रात्मक वा इन्द्र एव हि, एवंगुणयुक्तः खलु यज्ञं प्रत्यागन्ता वा भव। हे इन्द्र परमैश्वर्ययुक्त, यद्वा इन्धे प्रकाशयति तेजसा भूतानीतीन्द्रः, अथवा इदं सर्वं जगत् प्रथममपश्यदितीन्द्रः, एव हि। पूषन् विश्वस्य पोषक एतद्रात्मक वा इन्द्र, एवमुक्तगुणः खलु त्वम्। हे देवाः इन्द्रादयः, सदा सर्वदेवानां बलरूपेणेन्द्रस्यावस्थानात् इन्द्र एव बहुत्वेन सम्बोध्यते। हे इन्द्र, एवमुक्तगुणः खलु त्वम्। यद्वा, एवशब्दात् "सुपां सुलुक्०" इति (७।१।३९) जसो लुक्, अस्मदीयं यज्ञम् आगन्तारो भवतेत्यर्थः। इति शेषमन्त्रव्याख्या।

1. 'वर्त्तते' नास्ति ग। 2. 'न' नास्ति क-ग।

विधिनोपोषितायानु[1]गापयेत्। संमीलिताय निमीलिताक्षाय परिणद्धाक्षा[2]येत्यर्थः।

कथं तद्[3]स्याक्ष्णोः परिणहनं कर्त्तव्यमित्यत आह—

कंसमपां पूरयित्वा सर्वौषधीः कृत्वा हस्ताववधाय प्रदक्षिण-माचार्योऽहतेन वसनेन परिणह्येत् ॥ ३० ॥

कंसं [4]कंसभाजनम्, अपामुदकस्य, पूरयित्वा तास चाप्सु सर्वौषधीः कृत्वा सर्वाश्च ता ओषधयश्च सर्वौषधयः। ताश्च व्रीहि-शालि-मुद्ग-गोधूम-सर्षप-यव-तिलाख्याः सप्त। तासु सर्वौषधिमिश्रासु अप्सु ब्रह्मचारिहस्ताववधाय निधाय आचार्यः प्रदक्षिणमहतेन [5]वसनेन ब्रह्मचार्यक्षिणी परिणह्येत् परिवेष्टयेत्। [6]एवञ्चाऽऽस्थितो निमग्नहस्तः परि[7]णद्धाक्षोऽरण्ये त्रिरात्रमहोरात्रं [8]वोपवसेत्। तत उपोषिताय [9]वाग्यताय तथैव निमग्नहस्ताय परिणद्धाक्षायारण्य [10]एवानुगापयेदेष तावदेकः पक्षः।

[11]अथवाऽन्यः —

परिणहनान्ते वाऽनुगापयेत् ॥ ३१ ॥

परिणहनान्ते परिणहनान्तरमित्यर्थः। एतस्मिन् पक्षेऽनुपोषितायैव वाग्यताय निमग्नहस्ताय परिणद्धाक्षायारण्य एवानुगापनं भवति, पश्चादुपोषणमिति। एवञ्च हस्तोन्मज्जनोत्थानचंक्रमणानि स्नानसन्ध्योपासनमूत्रपुरीषादिकं विना न कर्त्तव्यानि। परिणहनस्रंसनं तु तत्रापि [12]न कर्त्तव्यम्।

उक्तञ्च—

न हस्तोन्मज्जनोत्थाने कार्ये स्नानादिकं विना।
अक्षिसन्नहनस्यागस्तत्रापि न भवेत् कचित्(A) ॥ इति।

यदाऽनुपोषित एवानुगीतस्तदाऽरण्ये तथैव निमग्नहस्तः।

परिणद्धो वाग्यतो न भुञ्जीत त्रिरात्रमहोरात्रौ वा ॥ ३२ ॥

त्रिरात्रं न भुञ्जीत त्रिरात्राशक्तौ अहोरात्रौ [13]न भुञ्जीत[13]*। अहश्च रात्रिश्च अहोरात्रौ, अहोरात्रमित्यर्थः।

यदि चौरव्याघ्रादिभयाद् रात्रावरण्ये वस्तुं न शक्यते तत्र कथमित्यत आह—

---

A. प्रमाणीकरोति वचनमिदं तर्कालङ्कारोऽपि स्वभाष्ये।

---

1. 'वापयेत्' नास्ति च। 2. 'इत्यर्थः' नास्ति च। 3. '-स्या-' नास्ति च। 4. 'कंसभोजनपात्रम्' क-च। 5. 'वसनेन' नास्ति ख। 6. 'एवं वाग्यतो निमग्न-' ख। 7. '-णद्धोऽरण्ये' ख। 8. 'वोपवसेत्' ख-च। 9. 'वाग्यताय' नास्ति ख। 10. 'एव' नास्ति ख। 11. 'अथ चान्यथा' ख। 12. 'ततवार्तव्यमिति' ख। 13. 'वा' ख।

## अपि वाऽरण्ये तिष्ठेदाऽस्तमयात् ॥ ३३ ॥

एतस्मादेव [1]लिङ्गादुपोषणाहः कृत्स्नमेकस्मिन्नरण्येऽवस्थानम्। अथवा आ अस्तमयात् अस्त[2]मयं यावदरण्ये तिष्ठेत् रात्रौ [3]तु ग्रामे [4]वासीत।

ततोऽनन्तरम्—

## श्वोभूतेऽरण्येऽग्निमुपसमाधाय व्याहृतिभिर्हुत्वाऽथैनमवेक्षयेद्(A) अग्निमाज्यमादित्यं ब्राह्मणमनड्वाहमन्नमपो दधीति स्वरभिव्यख्यं ज्योतिरभिव्यख्यमिति ॥ ३४ ॥

[5]श्वः प्रभाते भूते, अरण्यस्य प्रकृतत्वात् पुनर्ग्रहणम्, यस्मिन् पक्षे रात्रौ ग्रामेऽवस्थानं तस्मिन्नपि पक्षे अरण्ये एतस्य कर्मणः प्रदर्शनार्थम्, अग्निमुपसमाधायेति अग्निप्रणयनादिविरूपाक्षजपान्तस्य कर्मणः प्रदर्शनार्थम्। व्याहृतिभिर्हुत्वेति प्राप्ते पुनर्वचनं क्रमार्थम्। कथं नाम ? अत्राद्यवेक्षणमत्र प्रधानं कर्म तस्य पुरस्तादुपरिष्टाद्व्याहृतिभिर्होम इति। अथशब्दः पूर्वप्रकृतार्थः। आचार्यो ब्रह्मचारिहस्तावुन्मज्य पूर्वप्रकृतं परिणहनमवमुच्याथानन्तरमेनं ब्रह्मचारिणं स्वरभिव्यख्यं ज्योतिरभिव्यख्यमित्यनेन (B)मन्त्रेणाग्निमवेक्षयेत्। एवम्, आज्यं घृतम्, आदित्यं ब्रह्माणम्, ब्राह्मणं कर्मर्त्विजं वा ब्राह्मणम्, अनड्वाहं बलीवर्दम्, अन्नं प्रसिद्धं तच्च सिद्धम्, इतरस्य तु धान्यशब्दवाच्यत्वात्। अप उदकम्, दधि प्रसिद्धम्। द्रव्यभेदात् विसमासाच्च प्रतिद्रव्यं मन्त्रावृत्तिः[6]*।

किञ्च—

## एवं त्रिः सर्वाणि ॥ ३५ ॥

एवमनेन प्रकारेण अग्न्यादीनि दध्यन्तानि सर्वाणि द्रव्याणि त्रिरवेक्षयेत्। दण्डकलितवदावृत्त्या "न स्वस्थानात् स्वस्थानावृत्त्या"*। [7]कुतः ? एवमुपन्यासात्। त्रित्वञ्च प्रथमेन सह (C)।

---

A. सूत्रमिदम् 'अवेक्षयेत्' इत्यत्र, 'दधीति' इत्यत्र, 'व्यख्यमिति' इत्यत्र च विभज्य त्रिसंख्याकं कृतं सामश्रमितर्कालङ्काराभ्याम्।

B. मन्त्रस्तु—'स्वरभिव्यख्यं ज्योतिरभिव्यख्यम्' इति गोभिलाचार्यगृहीतः।

C. अत्र तर्कालङ्कारः—"अथैवं सर्वाणीति शक्यमवक्तुम्, एवमित्येतावतैव गतार्थत्वात्।

1. 'वचना-' ख। 2. '-मनं' ख। 3. 'च' ख। 4. 'इति' ख। 5. नास्ति घ। 6. 'न स्वस्थानविरत्या' ख। 7. 'कुतः' नास्ति घ।

अवेक्षणानन्तरमाचार्येण यज्ञवास्त्वन्ते कर्मणि कृते ब्रह्मचारी वामदेव्यगानादिकाम्—

शान्तिं कृत्वा गुरुमभिवादयते ॥ ३६ ॥

उक्तार्थम्(A) ।

सोऽस्य वाग्विसर्गः ॥ ३७ ॥

अस्य ब्रह्मचारिणः [1]सोऽयं वाग्विसर्गकालः परिणाहनात् प्रभृति [2]वाग्यतस्याऽऽसीनस्य ।

[3]किञ्च—

अनड्वान् कंसो वासो वर इति दक्षिणाः ॥ ३८ ॥

अनड्वान् बलीवर्दः, कंसः कंसभाजनम् । [4]तत्रानडुत्सन्निधानुकत्वादनडुन्मूल्यतुल्यम्, वासोऽपि, एवमेव च [5]वरः गवादिकं [6]प्रकृष्टद्रव्यम् ।

तथाचोक्तम्—

गौर्विशिष्टतमा विप्रैर्वेदेष्वपि निगद्यते ।
न ततोऽन्यद् वरं यस्मात् तस्माद् गौर्वर उच्यते (B) । [7]इति ।

एता महानाम्निकव्रतान्ते आचार्यस्य दक्षिणाः ।

ननु तिस्रः साम्नां स्तोत्रीया अतस्त्रय्येता दक्षिणा इति तदिह कथमित्यत आह—

प्रथमे विकल्पः ॥ ३९ ॥

प्रथमे द्रव्यद्वये विकल्पः । प्रथमायां [8]स्तोत्रीयायां श्रुतायाम् अनड्वान् कंसो वा दक्षिणा । द्वितीयायां वासः, तृतीयायां वर इति ।

यथोक्तदक्षिणाभावे कथमित्यत आह—

आच्छादयेद् गुरुमित्येके ॥ ४० ॥

---

उच्यते—एवं त्रिः, इत्येतावति कृते सन्निहिततरस्य मन्त्रस्यैव एवमा परामर्शान्मन्त्रस्यैव त्रिःपाठोऽवेक्षणन्तु सकृदेव इत्यपि भवत्याशङ्का कदाचित् कस्यचिदिति तां निरसितुं सर्वाणीत्याह । सर्वाणीत्यनेनाग्न्यादीनामवगमात् प्रत्यासत्त्या तदन्वितायाः एवावेक्षणक्रियाया वाराभिधानं त्रिरित्यनेन स्यात्, न मन्त्रपाठक्रियायाः” इत्याह स्वभाष्ये ।

A. प्रथमप्रपाठकस्य नवमकण्डिकायाम् ( पृ० २७४-७५ ) ।

B. छन्दोगपरिशिष्टम् ३।८।१४ ।

---

1. 'अयं स' ख । 2. 'वाग्यमो य आसीत् तस्य' ख । 3. 'किञ्च' नास्ति ख । 4. 'तथाऽनडुत्' ख । 5. 'वरशब्देन' ख । 6. 'प्रे ष्ठ-' ख । 7. 'इति' नास्ति ख । 8. 'स्तोत्रीयायां' नास्ति ख ।

[1]ऋजवर्थम्। अन्ये तु येषां व्रतानाम् [2]अन्ते दक्षिणाम्नानमेव नास्ति यथा उपनयनव्रातिकादित्यव्रतौपनिषदिकानां तद्विषयमेतत्। [3]यद्वा आच्छादयेद् गुरुमिति।

उक्तञ्च—

येषां व्रतानामन्तेषु दक्षिणा न विधीयते।

वरस्तत्र भवेद् दानमपि वाच्छादयेद् गुरुम् (A)॥ इति।

इदानीं पुनः सर्वव्रतसामान्यमेव किञ्चिद् वक्तव्यमित्यत आह—

**ऐन्द्रः स्थालीपाकस्तस्य जुहुयादृचं साम यजामह इत्येतयर्चा सदसस्पतिमद्भुतमिति [4]वोभाभ्यां वा ॥ ४१ ॥**

इन्द्रस्यायम् ऐन्द्रः, स्थालीपाकश्चरुः, तस्य चरोः, (B) 'ऋचं साम [5]यजामह' इत्येतया ऋचा [6]'जुहुयात् (C)'सदसस्पति'मद्भुत'मित्येतया वा, उभाभ्यां वा ऋग्भ्यामेकामेवाऽऽहुतिं जुहुयात्।

किञ्च—

**अनुप्रवचनीयेष्वेवं [8]सर्वत्र ॥ ४२ ॥**

अनु पश्चाद् व्रतान्ते [9]प्रवचनं प्रकृतग्रन्थश्रावणं येषु व्रतेषु क्रियते तानि [10]इमानि

---

A. कर्मप्रदीपः ३।८।१९।

B. मन्त्रस्तु—

ॐ ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते।

वि ते सदसि राजतो यज्ञं देवेषु वक्षतः। सा० सं० पू० ४।२।९।१०।

अस्य व्याख्या—याभ्याम् ऋक्सामाभ्याम्, कर्माणि शस्त्रस्तोत्रप्रमुखाणि, कृण्वते होतार उद्गातारः कुर्वन्ति। ताम् ऋचम्, तत् साम च यजामहे वयं पूजयामः, ते ऋक्सामे, सदसि ऋत्विक्समूहे सदोमण्डपे विराजतः स्तोत्रशस्त्ररूपेण विशेषेण प्रकाशयतः, ते च ऋक्सामे देवते देवेषु इन्द्रादिषु यज्ञं वक्षतः प्रापयतः। इति।

C. मन्त्रस्तु—

ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।

सनिं मेधामयासिषम्॥ सा० सं० पू० २।२।८।७।

व्याख्यातं प्राक् (पृ० ३९९)। विनियोगप्रमाणमनयोः खादिरद्राह्यायणगृह्ययोः २।१।३४।

---

1. 'ऋज्वर्थम्' नास्ति च। 2. 'एव' ख। 3. 'यद्' नास्ति च। 4. 'चोभा-' ख। 5. 'यजामहे' नास्ति च। 6. 'जुहुयात्' नास्ति च। 7. '-मद्भुत-' नास्ति च। 8. 'सर्वत्र' नास्ति ख। 9. 'प्रवचनं' क-ख। 10. 'इमानि' नास्ति च।

अनुप्रवचनीयानि गोदानादीनि व्रतानि [1]उच्यन्ते, तेषु [2]अनुप्रवचनीयेषु सर्वत्र सर्वेषु। [3]एवं किम्? ऐन्द्रः स्थालीपाक इति। उपनयनव्रतान्ते तु ऐन्द्रः स्थालीपाको न भवति। [4]कुतः? अनुप्रवचनीयेष्विति वचनात्। तस्य च सह[5]प्रवचनीयत्वात्। तस्यान्ते सावित्रश्चरुः [6]इति विशेषवचनात् तस्मादुपनयनव्रतान्ते सावित्रश्चरुः[6]* शेषेष्वैन्द्र[7]श्चरुरिति।

[8]किञ्च—

**सर्वत्राचारिषं तदशकं तेनारात्समुपागामिति मन्त्रविशेषः ॥४३॥**

सर्वत्रशब्दः काकाक्षिन्यायेनोभयत्र संबध्यते। सर्वत्र सर्वेषां व्रतानामन्ते, अयं मन्त्रविशेषः कर्तव्य इति [9]वाक्यशेषः। [10]यत्र, चरिष्यामी[11]ति मन्त्रपदं[11]* तत्राचारिषम्। [12]यत्र तच्छकेयमि[13]ति तत्र[13]* तदशकम्। [14]यत्र तेनर्ध्यासमि[15]ति तत्र[15]* तेनारात्सम्। [16]यत्र उपैमि[17] तत्रो[17]*पागामिति। प्रयोगस्तु—'अग्ने व्रतपते व्रतमचारिषं तत् ते प्रब्रवीमि तदशकम्, तेनारात्समिदमहमनृतात् सत्यमुपागां स्वाहे'ति(A)। [18]एवं च उपनयनव्रतान्तेऽप्ययं विशेषः [19]स्यात्; कुतः? इहानुप्रवचनीयेष्वित्यवचनात्, सर्वत्र-शब्दस्यैवमर्थत्वाच्च।

---

A. अयं प्रथममन्त्रः—आकरस्थानन्तु पाठभेदेन वाजसनेयी संहिता। २।२८।

द्वितीयमन्त्रस्तु—ॐ वायो व्रतपते व्रतमचारिषं तत्ते प्रब्रवीमि तदशकम्।
तेनारात्समिदमहमनृतात् सत्यमुपागां स्वाहा॥

तृतीयमन्त्रस्तु—ॐ सूर्य व्रतपते व्रतमचारिषं तत्ते प्रब्रवीमि तदशकम्।
तेनारात्समिदमहमनृतात् सत्यमुपागां स्वाहा॥

चतुर्थमन्त्रस्तु—ॐ चन्द्र व्रतपते व्रतमचारिषं तत्ते प्रब्रवीमि तदशकम्।
तेनारात्समिदमहमनृतात् सत्यमुपागां स्वाहा॥

पञ्चममन्त्रस्तु—ॐ व्रतानां व्रतपते व्रतमचारिषं तत्ते प्रब्रवीमि तदशकम्।
तेनारात्समिदमहमनृतात् सत्यमुपागां स्वाहा॥

सर्वेषां मन्त्राणां तु मन्त्रब्राह्मणमेवाकरस्थानम्, १।६।९-१३।

गोभिलाचार्यसूत्रोपदेशात् (३।२।४३) पाठभेद इति। केचित्तु 'व्रतमचार्षं' 'तत्ते प्राब्रवं' 'तदशाकं तेनाशकं' 'तेनाऽऽरात् स्यम्' इति पाठभेदेन मैत्रायणीसंहिताऽपि (४।९।२६) आकरस्थान-

---

1. 'उच्यन्ते' नास्ति च। 2. 'अनुप्रवचनीयेषु' नास्ति च। 3. 'एवं किम्?' नास्ति च। 4. 'कुतः' नास्ति च। 5. '-प्रवचनीयत्वात्' क-च। 6. नास्ति च। 7. 'चरुरिति' नास्ति च। 8. 'किञ्च' नास्ति च। 9. 'वाक्य' नास्ति च। 10. 'यत्र' नास्ति च। 11. नास्ति च। 12. 'यत्र' नास्ति च। 13. '-मित्यत्र' च। 14. 'यत्र' नास्ति च। 15. '-मित्यत्र' च। 16. 'यत्र' नास्ति च। 17. '-मीत्यत्रो-' च। 18. 'एवं च' नास्ति च। 19. 'स्यात् कुतः' नास्ति च।

किञ्च—

## आग्नेयेऽज ऐन्द्रे मेषो गौः पावमाने पर्वदक्षिणाः ॥ ४४ ॥

आग्नेये वेदपर्वणि श्राविते आचार्यस्याजो दक्षिणा। एवमैन्द्रे मेषः। गौः पावमाने इति, पर्वणामध्ययनार्था दक्षिणाः [1]पर्वदक्षिणाः, सामर्थ्यात् गोदानव्रतान्ते एता दक्षिणाः। कर्मक्रमस्तु—उपनयनव्रतान्ते[2]ऽस्य सावित्रश्चरुः। "सवित्रे त्वा जुष्टं निर्वपामीति निर्वापः[3]* सवित्रे स्वाहेति होमः। प्राक् स्विष्टकृतः 'अग्ने व्रतपते व्रतमचारिषम्' इति [4]मन्त्रविशेषयुक्तो[4]* होमः। कर्मस[5]माप्तिः, वरदानम्, वृद्धिश्राद्धम्, केशान्तकरणम्, गोदानार्थं पुनरुपनयनव्रतान्ते आग्नेयैन्द्रपावमानपर्वादिसाम्नाम्, समस्तानां वा पर्वणां श्रावणम्, ऐन्द्रश्चरुः, 'इन्द्राय [6]त्वा जुष्टं निर्वपामी'ति[6]* निर्वापः, यथोक्तो होमः, अत्रापि प्राक् स्विष्टकृता'ऽग्ने व्रतपते व्रतमचारिषमि'ति पूर्ववद्धोमः। कर्मान्तेऽज-मेष-गोदक्षिणानां दानम्। वृद्धिश्राद्धं व्रातिकार्थम्। पुनरुपनयनम् उत्तरव्रत चर्यार्थम्। [8]पूर्वव्रतान्त-श्रावितस्याध्ययनम्, एवं [9]सर्वव्रतेष्वपि द्रष्टव्यम्।

इदानीं पुनर्महानाम्निकव्रतशेषभूतमेवाऽऽह—

## प्रत्येत्याचार्यं सपरिषत्कं भोजयेत् ॥ ४५ ॥

अरण्यात् प्रत्येत्यागत्य। [10]आचार्यं भोजयेत्, किमेकाकिनमेव? न, सपरिषत्कम्। सह[10]* [11]परिषदा शिष्यगणेन सह वर्तते इति सपरिषत्कः, तम्—[12]सपरिषत्कम्।

किञ्च—

## सब्रह्मचारिणश्चोपसमेतान् ॥ ४६ ॥

समानं तुल्यं ब्रह्म वेदस्याध्ययनार्थं व्रतचरणं येषां ते सब्रह्मचारिणः सशाखिनः [13]विधीयन्ते। अथवा समानं तुल्यकालं ब्रह्मचारित्वं येषां ते [14]इमे, अन्यशाखिनोऽपि [15]सब्रह्मचारिणः सवयसोऽभिधीयन्ते। तांश्चोपसमेतान् समागतान् [16]इत्यर्थः। भोजयेदिति [17]वर्तते।

---

मित्याचक्षते। एतेषां व्याख्या ( पृ० ४७३-४ ) द्रष्टव्या, केवलं भविष्यत्त्वभूतत्वयोर्विशेषः। गुणविष्णुस्तु—'आरात्' दूरत एव अनृतात् सत्यरूपं व्रतम्, इदं समुपागाम् समुपगतवानस्मि, इति व्याचख्यौ।

---

1. 'पर्वदक्षिणाः' नास्ति घ। 2. 'अस्य' नास्ति ख। 3. नास्ति घ। 4. नास्ति घ। 5. 'समाप्ति-कर-' क-ख। 6. नास्ति घ। 7. '-चर्यार्थं' ख। 8. 'पूर्वपूर्व-' क-च। 9. 'सर्वेष्वपि' ख। 10. नास्ति घ। 11. 'परिषदा' ख। 12. 'सपरिषत्कम्' नास्ति घ। 13. 'विधीयन्ते' नास्ति घ। 14. 'इमे' नास्ति घ। 15. 'सब्रह्मचारिणः' नास्ति घ। 16. 'इत्यर्थः' नास्ति घ। 17. 'वर्तते' नास्ति घ।

किञ्च—

**ज्येष्ठसाम्नो महानाम्निकेनैवानुगापनकल्पो व्याख्यातः ॥४७॥**

ज्येष्ठसाम्नोऽनुगापनविधिर्महानाम्निकेनैवानुगापनविधिना व्याख्यात इत्ययमतिदेशः। ननु त्रीणि ज्येष्ठसामानि, उक्तञ्च—आग्नेर्वैश्वानरस्य त्रीण्याज्यदोहानीति(A) कस्मादिहैकवचनं ज्येष्ठसाम्न इति? [1]उच्यते—त्रयाणामप्येकस्यामृचि गीतत्वादृचमभिप्रेत्यैकवचनं कृतम्[2] इति।

किञ्च—

**तत्रैतानि नित्यव्रतानि भवन्ति ॥ ४८ ॥**

तत्र तस्मिन् ज्येष्ठसामव्रते एतानि वक्ष्यमाणानि नित्यव्रतानि भवन्ति, नित्यव्रतानीति यावज्जीवमनुष्ठेयानि। न तु यावद् व्रतम्[3] इति। कुतः? नित्यशब्दस्यैवमर्थत्वात् [4]समावृत्तस्य शूद्रोप[5]गमनप्रतिषेधाच्च।

कानि पुनस्तानीत्य[6]पेक्षायामाह—

**न शूद्रामुपेयात् ॥४६॥**

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः(B)। इति

वचनात् पक्षे प्राप्तां शूद्रां नोपेयान्न विवाहयेदित्यर्थः॥

---

A. आर्षेयब्राह्मणम् ३।१९।

आज्यदोहमन्त्रत्रयी तु—

ॐ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्।
कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः॥
ॐ त्वां विश्व अमृतजायमानं शिशुं न देवा अभि सं नवन्ते।
तव क्रतुभिरमृतत्वमायन् वैश्वानर यत् पित्रोरदीदेः॥
ॐ नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त।
वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः॥
(सा० स० उ० ५।२। अ० ३)

B. मनुसंहिता ३।१३। अस्य व्याख्यायां कुल्लूकभट्टः—"शूद्रस्य शूद्रैव भार्या भवति, न तदुत्कृष्टा वैश्यादयस्तिस्रः। वैश्यस्य च शूद्रा वैश्या च भार्या मन्वादिभिः स्मृता। क्षत्रियस्य

---

1. 'उच्यते' नास्ति च। 2. 'इति' नास्ति च। 3. 'इति कुतः' नास्ति च। 4. 'च समा-' क-ख। 5. '-गमन-' ? ख। 6. '-त्यत आह' ख।

किञ्च—

## न [1]पक्षिमांसं भुञ्जीत ॥ ५० ॥

[2]ऋज्वर्थम्, [3]पक्षिमांसप्रतिषेधादितरस्याप्रतिषेधः।

किञ्च—

## एकधान्यमेकदेशमेकवस्त्रञ्च वर्जयेत् ॥ ५१ ॥

[4]एकं धान्यं एकधान्यं वर्जयेदिति सम्बन्धः[4]* । [5]यस्मिन् देशे यानि धान्यानि तेषामेकं वर्जयेत्। अथवा एकं धान्यं सर्वदा न भक्षयेत्। एकश्चासौ देशश्च एकदेशस्तम् [6]एकदेशं वर्जयेदिति। येषु देशेषु गमनसम्भवस्तेषामेकं कार्यार्थमपि न गच्छेत्। न तु श्वेतद्वीपादिकम्, [7]अपि। अथवा [8]एकदेशं एकदेशवासं[8]* यावज्जीवं मेकस्मिन् देशे निवसेदित्यर्थः[9]। एकञ्च तद् वस्त्रञ्च एकवस्त्रं वर्जयेत्। कार्पास-शण-क्षौमाविक-कौशेयादीनामन्यतमं वर्जयेत् [10]इति। अथवा एकवस्त्रम् एकवस्त्रत्वम्। कथं [11]नाम? स्नानस्वप्नप्रेतोदकदानादिषु [12]विशिष्टकालेष्वेकवासा न स्यादिति।

किञ्च—

## उद्धृताभिरद्भिरुपस्पृशेत् ॥ ५२ ॥

जलाशयात् करकादिना उद्धृताभिरद्भिः उपस्पृशेत् आचामेत्।

उक्तञ्च—

[13]जलपात्रेण वोद्धृताभिः [14]यतिधर्मेषु—'वस्त्रपूतं जलं पिबेदि'ति(A)।

अथवा कृतमूत्रपुरीषस्य मलदिग्धाङ्गस्य वा मलापनयनार्थं यच्छौचं [15]तदिहोप-स्पर्शनमुच्यते। तदुद्धृताभिरद्भिः कुर्यात् [16]इति।

उक्तञ्च—

"मलापकर्षणं पार्श्वे" इति। ननु स्नानमेव कस्मात् नेहोपस्पर्शनमुच्यते

---

वैश्याशूद्रे क्षत्रिया च। ब्राह्मणस्य क्षत्रिया वैश्या शूद्रा ब्राह्मणी च। वसिष्ठोऽपि 'शूद्रामप्येके मन्त्रवर्जम्' इति द्विजातीनां मन्त्रवर्जितं शूद्राविवाहमाह" इत्याह।

A. उक्तमेवं चाणक्यशतके—

दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत्।
सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ॥ इति।

---

1. 'पक्षमांसं' ख। 2. 'ऋज्वर्थम्' नास्ति घ। 3. 'पक्षमांस-' ख। 4. नास्ति घ। 5 'एकधान्यं वर्जिनम्' क-घ। 6. 'एकदेशं' नास्ति घ। 7. 'अपि' नास्ति घ। 8. नास्ति घ। 9. 'अर्थः' नास्ति घ। 10. 'इति' नास्ति घ। 11. 'नाम' नास्ति घ। 12. 'एषु विशिष्ट-' ख। 13. 'जल-पात्रेण' क-घ। 14. 'यतिधर्मेषु' नास्ति घ। 15. 'तदेशो०' क-घ। 16. 'इति' नास्ति घ।

[1]इति ? न ; एवं व्याख्यायमाने [2]गङ्गादिपुण्यतीर्थसलिलावगाहनस्यापि यावज्जीविकोऽस्य प्रतिषेधः प्राप्नोति। तथाऽन्यत्रापि बहिःस्नानादीनां [3]नित्य-नैमित्तिक-काम्य[4]कर्मणामिति। तदयुक्तम् तस्मात् यथोक्त एवार्थः(A)।

किञ्च—

## आदेशनात् प्रभृति न मृन्मयेऽश्नीयात् ॥ ५३ ॥

ज्येष्ठसामव्रतो[5]पनयनादनु यदेतदादेशनं "समिधमाधेहि" "अपोऽशान" "कर्म कुरु" इत्येतस्मादादेशनात् प्रभृति[6] मृन्मये शरावादौ [7]नाश्नीयात्।

किञ्च—

## न पिबेत् ॥ ५४ ॥

च-शब्दो लुप्तवद् द्रष्टव्यः। न चा[8]पि पिबेत्(B)।

किञ्च—

## श्रवणादित्येके ॥ ५५ ॥

ज्येष्ठसाम्नां व्रतान्ते यत् श्रवणमाचार्यस्य श्रावयतः तत्प्रभृति एके मृन्मये [9]भोजनपानप्रतिषेधमाहुः(C)।

इति[10] भट्टनारायणकृतौ[10]* [11]"गोभिलीयगृह्यसूत्रभाष्ये"[11]* तृतीयप्रपाठकस्य द्वितीया कण्डिका।

---

A. अत्र तर्कालङ्कारः—"सेयं पूर्वाचार्याणां वर्णना न ज्यैष्ठसामिकव्रतचारिष्वेवावतिष्ठते सर्वत्राऽप्येतदविशेषात्। तस्मान्महानाम्निकव्रतचारिणां येषामपि पन्था देयतयाऽनुशिष्यते तेषामपि यथोऽशानवत् अग्निहोत्रिणां तीर्थानभिगमनवच्च ज्यैष्ठसामिकव्रतचारिणामुद्धृताभिरेवाद्भिः स्नानं न त्ववगाहनमिति युक्तमुत्पश्यामः" इत्याह। तदत्र ज्यैष्ठसामिकव्रतचारिणां यावज्जीवम् अवगाहनमस्ति न वेति भगवन्तोऽनूचानाः प्रमाणयन्तु।

B. यावज्जीवं मृन्मये न पिबेदित्यर्थः।

C. अथौपनिषदादिव्रतानां प्रयोग उच्यते—तत्रौपनिषदव्रते तदङ्गं नान्दीमुखश्राद्धं तदङ्गमुपनयनञ्च पूर्ववत्। व्रतमौपनिषदमेतावत्कालिकमित्यूहवद्भिर्मन्त्रैः पञ्चाज्यहोमाः। आदित्यव्रतान्ते श्रुतानां शुक्रियाणामध्ययनम्। व्रतान्ते उपनिषदां ब्राह्मणानां रहस्यस्य च श्रावणम्। तदन्ते ऐन्द्रग्रहः। चरुहोमान्ते व्रतमौपनिषदमेतावत्कालिकमित्यादूहमुक्त्वा पञ्चाज्यहोमाः। आचार्याय गोदानं ब्रह्मणे पूर्णपात्रमन्यत् सर्वं पूर्ववत्। इति।

---

1. 'इति' नास्ति च। 2. 'गङ्गादिषु' ख। 3. 'नैत्य-' ख। 4. 'धर्माणा-' ख। 5. '-पनयनमारभ्य यदेत-' ख। 6. 'न मृन्मये' ख। 7. 'अश्नीयात्' ख। 8. 'अपि' नास्ति च। 9. 'भोजनभाजनप्रति-' ख। 10. नास्ति च। 10-11. नास्ति ख।

अथ ज्येष्ठसामिकव्रतप्रयोगः—तत्र तदर्थं नान्दीमुखश्राद्धं तदर्थमुपनयनम्। ज्येष्ठसामिकमेतावत्कालिकं चरिष्यामीत्यूहं कृत्वा पञ्चाज्यहोमाः। पूर्वव्रतान्ते व्रतोपनिषद् ब्राह्मणरहस्याध्ययनम्। व्रतान्ते आज्यदोहानां साम्नां श्रावणम्। व्रतान्ते ऐन्द्रग्रहः। चरुहोमान्ते विशेषमुक्त्वा पञ्चाज्यहोमाः। आचार्याय गोदक्षिणा, पूर्णपात्रं ब्रह्मणे। इति। गोदानिकव्रातिकादित्यव्रतौपनिषद्ज्येष्ठसामिकव्रतानां पृथक् पृथगेकैकसंवत्सरेऽनुष्ठानम्। देशकालशक्तिवयोऽवस्थाविशेषैर्यथासम्भवमनुष्ठानं वा कुर्यात्। आदित्यव्रतानुष्ठानात् परमध्ययनक्रमात् महानाम्निकव्रतानुष्ठानं कर्तव्यम्। तत औपनिषद्ज्येष्ठसामिकव्रतयोरनुष्ठानम्। एवं स्थितेऽपि कालादीनां साम्यान्महानाम्निकभिन्नानां गोदानिकादिव्रतानां प्रयोगमुक्त्वा महानाम्निकप्रयोग उच्यते—तस्य द्वादशसंवत्सराः नव षट् त्रयो वा संवत्सरा अनुष्ठानकालः। एते चत्वारः पक्षाः पुरुषशक्तिशीलवयोऽवस्थादिविशेषापेक्षयोक्ताः। संवत्सरमात्रं वा महानाम्निकव्रतम् इत्येके आचार्या मन्यन्ते। यस्य पित्रादिभिस्त्रिभिर्यथोक्तव्रतचर्यापूर्वकं महानाम्नीनामध्ययनं कृतं तस्यैव सांवत्सरिकमहानाम्निकव्रतेऽधिकारः। अथ महानाम्निकव्रताङ्गं नान्दीमुखश्राद्धं तदर्थमुपनयनञ्च कृत्वा, सोहं पञ्चाज्याहुतीः कुर्यादन्यत् पूर्ववत्। व्रतिनो विशेषनियमाश्च त्रिकालं स्नानम्। सायं प्रातः समिदाधानात् पूर्वं भोजननिषेधः। कृष्णवस्त्रधारणम्। कृष्णवस्तुभक्षणम्। आचार्याधीनता, स्मृत्यन्तरोपदिष्टस्य पथदाननिषेधः; तपस्विता, दिवा ऊर्ध्वस्थितिर्नोपवेशनम्, भिक्षाऽटने परिक्रमणम्, सन्ध्योपासनार्थमुपवेशनम्, रात्रावुपवेशनम्, न शयनम्, बहिर्गतस्य मेघे वर्षति गृहाद्याच्छादितस्थानप्रवेशनिषेधः, वर्षप्रारम्भेऽपि गृहादिप्रवेशननिषेधः। यदा पर्जन्यो वर्षति तदा वृष्ट्युपरमपर्यन्तम् 'आपः शक्वर्य' इति मन्त्रं पुनः पुनः पठेत्। यदा यदा विद्युद् विद्योतते तदा तदा 'एवं रूपाः खलु शक्वर्यो भवन्ति' इति मन्त्रं पठेत्। यदा यदा मेघो गर्जति तदा तदा 'महा महान् घोष' इति मन्त्रं पठेत्। न नदीमतिक्रामेत्, यद्यतिक्रामेत् स्नात्वा अतिक्रामेत्, अतिक्रम्य वा स्नानं कुर्यात्, नौकारोहणं न कुर्यात्, नावारोहणाभावे केनापि निमित्तेन प्राणसंशये प्राप्ते स्नात्वा नौकारोहणं कुर्यात्, पारं तीर्त्वा वा स्नायात्, उदकसम्बन्धिनियमानां त्रिकालस्नानादीनामवश्यानुष्ठानम्। शक्त्यभावे च केषाञ्चिद्धर्माणामननुष्ठानम् ते च यथा—कृष्णवस्त्रधारणम्, दिवोर्ध्वस्थितिः, निशायामुपवेशनम्, शयनाभावः, पथदानम्, कृष्णपदार्थभक्षणम्। इति। त्रेधाविभक्तव्रतकालस्य प्रथमभागान्ते एकस्याः स्तोत्रीयायाः श्रावणम्, मध्यमभागान्ते द्वितीयस्तोत्रीयायाः श्रावणम्। तृतीयभागान्ते तृतीयस्याः, सर्वव्रतान्ते वा सर्वासां युगपदेव श्रावणम्। तासामध्ययनप्रयोगस्तु—अरण्ये गत्वोदकपूरितकांस्यपात्रे सर्वौषधीः प्रक्षिपेत्, व्रीहिशालिमुद्गगोधूमतिलयवसर्षपाः सर्वौषधयः, तज्जले ब्रह्मचारिणो हस्तद्वयं स्थापयित्वा प्रादक्षिण्येनाहतवस्त्रेण नेत्रपिधानं कुर्यात्। एवं निमग्नहस्ताय पिहितनेत्राय त्रिरात्रमुपोषिताय व्रतान्ते महानाम्नीः श्रावयेत्। अथवा नेत्रपिधानान्ते श्रावयेत् नात्र त्रिरात्रोपवासः, पिहितनेत्रो जले निमग्नहस्तो वाग्यतोऽरण्ये निवसन् त्रिरात्रं न भुञ्जीत। अशक्तावहोरात्रं वा, अध्यापनान्ते

उपवासः, उपवासान्ते वाऽध्यापनम्। अथवा दिवाऽरण्ये तिष्ठेद् रात्रौ ग्रामे, त्रिरात्रव्रतान्ते आचार्यो वनं गत्वा पूर्वोक्तलक्षणं स्थण्डिलं विधाय पञ्चभूसंस्कारान् कृत्वाऽग्निं प्रतिष्ठाप्याज्यतन्त्रेण व्याहृतिभिर्हुत्वा ब्रह्मचारिणमग्न्यादीन् प्रदर्शयेत्, अग्निराज्यमादित्यो ब्राह्मणोऽनड्वान् अन्नं जलं दधि इति प्रतिद्रव्यं मन्त्रावृत्तिः। मन्त्रस्तु 'स्वरभिव्यख्यं ज्योतिरभिव्यख्यम्' इति। अत्र वाग्विसर्गादिः, त्रिवारमग्न्यादीनामवेक्षणम्। ततस्तन्त्रसमापिर्वामदेव्यगानम्। गुरोरभिवादनम्, दक्षिणादानम्, पृथक्पृथक् स्तोत्रीयाध्यापनपक्षे प्रथमस्तोत्रीयाया वृषभः कांस्यपात्रं वा। द्वितीयाया वस्त्रम्, तृतीयाया गोः, अशक्तौ यथाशक्ति दक्षिणादानम्। व्रतान्ते ऐन्द्रश्चरुः 'अग्ने व्रतपते' इत्याग्रहयुकपञ्चाज्याहुतिप्रक्षेपः, ततोऽरण्याद् गृहमागत्य सर्वैरन्तेवासिभिः सहाऽऽचार्यं भोजयेत्। अन्येषामपि भिन्नशाखिनां भिन्नगुरूणां ब्रह्मचारिणां चान्नदानमावश्यकम् इति। ज्येष्ठसाम्नामध्यापनं महानाम्न्यध्यापनवदरण्ये, तत्रूक्तम्, ज्येष्ठसामव्रतिनो यावज्जीवमनुष्ठयानि व्रतान्युच्यन्ते। न शूद्रामुद्वहेत्, न पक्षिमांसमश्नीयात्, धान्यमध्ये एकं धान्यं वर्जयेत्, सर्वदा एक धान्यं न भक्षेद् वा। गन्तव्यदेशानामेकं देशं वर्जयेत्, यावज्जीवमेकदेशे वा न वसेत्। कार्पासक्षौमशाणाविकानां मध्ये एकं वर्जयेत्, आच्छिन्नमेकमेव वस्त्रं न परिदध्याद्वा। उद्धृतोदकेन शौचं कुर्यात्। मृन्मयपात्रे भोजनं न कुर्यात्, मृन्मये न जलं पिबेत्, एतत् सर्वं नियमजातं ज्येष्ठसामिकव्रतोपनयनप्रभृतीत्येके, ज्येष्ठसामाध्यापनप्रभृतीत्यपरे। भौतिकव्रतप्रयोगस्तु गोभिलाचार्यानुक्तत्वान्नेहोपन्यस्त इति।

अथ गोदानादिव्रतेषु यदुक्तं गृह्यान्तरेषु तेभ्यो यथासम्भवं सूत्राण्युपस्थाप्यन्ते। तत्र द्राह्यायणगृह्यसूत्राणि—गोदाने चौलवत् कल्पः। सलोमं वापयेत गोअश्वाविमिथुनानि दक्षिणाः पृथग्वर्णानाम्। सर्वेषां वा गौः। अजः केशप्रतिग्रहाय। उक्तमुपनयनम्। आचरिष्यन्तं संवत्सरम्। अनियुक्तं त्वहुतम्। तथाऽलङ्कारः। अधःसंवेशी। अमधुमांसाशी स्यात्। मैथुनक्षुरकृत्यस्नानावलेखनदन्तधावनपादधावनानि वर्जयेत्। नास्य कामे रेतः स्कन्देत्। न गोयुक्तमारोहेत्। न ग्रामोपानही। मेखलाधारणभैक्षचर्यदण्डसमिदाधानोपस्पर्शनप्रातरभिवादा नित्यम्। गोदानव्रातिकादित्यव्रतोपनिषज्ज्येष्ठसामिकाः संवत्सराः। नादित्यव्रतमेकेषाम्। ये चरन्त्येकवाससो भवन्ति। न चापोऽभ्युपयन्ति। शक्करीणां द्वादश नव षट् त्रय इति विकल्पाः। कृष्णवस्त्रः। कृष्णभक्षः। आचार्याधीनः। तरस्वी तिष्ठेद्दिवेति। आसीत नक्तम्। संवत्सरमेकेषां पूर्वैः श्रुताश्चेत्। उपोषिताय परिणद्धाक्षायानुगापयेत्। यथा मा न प्रधक्ष्यन्तीति तं प्रातरभिवीक्षयन्ति यान्यप्रधक्ष्यन्तं मन्यन्तेऽपोऽग्निं वत्समादित्यम्। ज्योतिरभिव्यख्यमित्यग्निं पशूनभिव्यख्यमिति वत्सं सुरभिव्यख्यमित्यादित्यम्, विसृजद् वाचम्। गौर्दक्षिणा। कंसो वासो रुक्मञ्च। अनुप्रवचनीयेष्वृचं साम, सदसस्पतिमिति चाऽऽज्यं जुहुयात्। अथ व्रातिकमुपनयनवत् सर्वं कुर्यात्। व्रातिकव्रतानन्तरमादित्यव्रतम्। अथ महानाम्निकम्। अथोपनयनवदौपनिषदम्। अथ ज्येष्ठसामव्रतम्। भौतिकव्रतमिति वा। अथ ब्रह्मसामव्रतमेवं कुर्यात्। इति।

खादिरगृह्ये त्वेवंप्रायाणि सूत्राणि केवलम् "अथ व्रातिकमुपनयनवदि"त्यादि अन्तिमसम सूत्राणि न सन्तीति भेदः, छन्दोगगृह्येऽप्येवं केवलमन्तिमसूत्रद्वयी नास्तीति ज्ञेयम् ।

जैमिनिगृह्यसूत्राणि तु—गौदानिकव्रातिकौपनिषदाः संवत्सराः तेषु सायं प्रातरुदकोपस्पर्शनं नानुपस्पृश्य भोजनं प्रातः सायमुपस्पृश्यामसिदाधानादरण्यात् समिधमाहृत्यादध्याद् आदित्य-व्रातिकः संवत्सर एकवासा न युक्तमारोहेदादित्यं नान्तर्दधीत छत्रेण महीमासनशयनाभ्यामुपा-सनां च मोर्ध्वं जान्वोरपः प्रमाणादन्यत्राचार्यवचनात् । व्रातिके व्रतचर्यं आदित्यव्रातिके शुक्रियाण्यौपनिषद उपनिषदं श्रावयेत् । द्वादशमहानाम्निकाः संवत्सरा नव षट् त्रय इति विकल्पाः । संवत्सरमित्येके पित्रा चेच्छ्रुता महानाम्न्यः । संवत्सरं ब्रह्मचर्यं चेच्छुक्लैकवासा व्रतं तु भूयः तिष्ठेद्दिवाऽऽसीत नक्तम्, तस्य कृष्णे भोजनाच्छादने भवत इत्येके, शुक्लं चैव परिवर्ज्याद्रागदोषाच्च कृष्णम्, सर्वास्वप्सूपस्पृशेद्वृक्षाः शक्वर्य इति नावा न प्रमाणात् प्राण-संशये तूपस्पृशेदुभयत अपि वा गाः पाययेत् पशूकाः, शक्वर्य इति वर्षं नान्तर्दधीत छत्रेण प्रतिवर्षं निष्क्रामेदेवमस्य चरतः कामवर्षी पर्जन्यो भवति ब्रह्मचर्यान्ते एकरात्रमुपोषित अरण्यं गत्वा शैवलमिश्राणामपां कांसं पूरयित्वा तमुपर्यस्य समनुपरिगृह्य निमीलितं तिस्रः स्तोत्रिया उपगायेत् सपुरीषा उपोत्थायाचार्योऽहतेन वाससा मुखमस्य परिणह्येत् प्रदक्षिणमुदपात्रं धारयंस्तिष्ठेदहःशेषं रात्रिमासीत वाग्यतः श्वोभूतेऽरण्यं गत्वा अग्निमुपसमाधाय वस्त्रमुपान्वानीय वास उद्वेष्टयेदुदस्य कांसमपोऽभिवीक्ष इति वीक्षेत स्वरभिवीक्ष इत्यादित्यं ज्योतिरभिवीक्ष इत्यग्नि पशुमभिवीक्ष इति वत्सं समन्वायन्तीत्यपः प्रसिच्य वासः कांसं वत्समित्याचार्यायोपहरेत् स्थालीपाकाद् विश्वामित्रेन्द्रौ महानाम्नीश्च यजत इत्याचार्यं सपरिषत्कं भोजयेद् गौर्दक्षिणा । ·

द्वादशवर्षाणि वेदब्रह्मचर्यम्, जननात् प्रभृतीत्येके । यावदध्ययनं वा सदा सायं समिदाधानं सायं प्रातर्भैक्षचरणं द्वे त्रिवृती वर्जयेत् त्रिवृतं च मणिं त्रिगुणे चोपानहौ षोडशे गोदानकरणं तत्केशान्त-करणमित्याचक्षते चौडकरणेन मन्त्रा व्याख्याता उपनयनेन व्रतादेशनम्, न त्विह नियुक्तमहतं वासः, सर्वाणि लोमनखानि वापयेत् शिखावर्जमित्यौद्गाहमानिः, उत्तकेशः स्नायाद् वनस्पतेरिति वनस्पतीनां आलोयेन त्वचमुन्मृद्गीते वनस्पतेस्त्वगसि शोभनि शोभय मा तां त्वाभिहरे दीर्घायुष्ट्वाय वर्चस इति वनस्पतीनां गन्धोऽसीति स्नात्वाऽनुलेपनेन कुरुते वनस्पतीनां गन्धोऽसि पुण्यगन्ध पुण्यं मे गन्धं कुरु देवमनुष्येषु तं त्वाभिहरे दीर्घायुष्ट्वाय वर्चस इत्यादर्शोऽसीत्यादर्शे 'आत्मानं वीक्षेतादर्शोऽस्या मादृश्यासन् देवमनुष्या उभयं शोभोऽसि शोभासमहं देवमनुष्येषु तोषोऽसि तोषासमहं देवमनुष्येष्वित्यपोद्धृत्य स्रजमादेशयेतोक्ता धर्माः संवत्सरेषु गौर्दक्षिणा । इति ।

कौषीतकिकाठकगृह्यसूत्राणि च—उपनयनप्रभृति व्रतचारी स्यात् । मार्गवासाः । संहतकेशः । भैक्षाचार्यवृत्तिः । सदाव्रकमण्डलुः । सदमुञ्जां मेखलां धारयेत् । न मधुमांसे अश्नीयात् । अरण्यगवर्जी । आचार्यस्याप्रतिकूलः । सर्वकार्यास्ववतन्त्रः । पूर्वोत्थायी जघन्यसंवेशी ।

यद्येनमुपेयात् तदस्मै दद्यात् । महतां येन संयुक्तः । नास्य शय्यामाविशेत् । न रथमारोहेत् । न संवहयेत । सर्वाणि सांस्पर्शिकानि स्त्रीभिः सह वर्जयेत् । न मुषितां प्रेक्षेत् । न विहारार्थं जल्पेत् । न कण्ठयं किञ्चन धारयेत् । न स्नायात् । उदकं वाऽभ्युपेयात् । यदि स्नायाद् दण्ड इवाप्सु परिप्लवेत । मुण्डो जटिलः शिखी वा । सायं प्रातः सन्ध्यामुपासीत । तिष्ठेत् पूर्वाम् । आसीतोत्तराम् । ॐ भूर्भुवः स्वरित्युक्त्वा तत्सवितुरिति सावित्रीं त्रिरन्वाह । प्रागस्तमयाग्निष्कम्य समिध आहरेद्धरिणीर्ब्रह्मवर्चसकाम इति श्रुतेः । सायं प्रातः सन्ध्यानिःसरणं भैक्षाचरणमग्नीन्धनम् । सायमेवाग्निमिन्धीतेत्येके । भैक्षस्याचरणे दोषः पावकस्यासमिन्धने । सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत् । त्रिभुरसीत्यनुवाकेनाग्निमुपस्थाय एधोऽसीति समिधमादधाति, समिदिति द्वितीयाम्, इदमहमिति तृतीयाम्, इदमहममावितिं चतुर्थीम् । तेजोऽसीत्यग्निमनुमन्त्रयते जपेणोपतिष्ठते । ततः प्रातः प्रागुदयाद् द्वादश चतुर्विंशतिं षट्त्रिंशतमष्टाचत्वारिंशतं वा वर्षाणि यो ब्रह्मचर्यं चरति सत्सुरबलः कृशः सर्वं स विन्दते सान्त्वा यत्किञ्चिन्मनसेच्छत्येतेनैव धर्मेण साध्वधीते । अथातोऽष्टाचत्वारिंशत्सम्मितम् । तत्र विधिविशेषः । नियमेष्वाचार्यप्रधानः स्यात् । भिक्षार्थी गृहं न प्रविशेत् । अनिलयः स्यात् । अन्यत्र वृक्षाद् वल्मीकाद्वा । निरुतान्तवमित्येके । यथोक्तमेकन्तु वासः शाणी कुतपं वा । परिमितमुरःप्रमाणमुपरिजानु । चतुर्थकालपानभक्षः । असञ्चयवान् । अहरहर्वा भैक्षमश्नीयात् । अहस्तिष्ठेद्रात्रावासीत । उभयं मुनिव्रतः स्यात् । स्त्रीशूद्रपतितरभसरजस्वलैर्वा न संभाषेतेति च्यवनो भृगुः । द्वादशरात्रं वोभयतोऽमावस्यां पौर्णमास्यां च । पालाशयः समिधो नित्याः परिधिवृक्षाणां वा । सेधां मह्यमिति पाणिना मार्गं दत्त्वा त्रिषवणमहोरात्रमुदकोपस्पर्शनम् । नमो हमाय मोहमायेति चानुसवनमग्नये वैश्वानराय तपाय तापसाय तपन्ताय विन्दते विन्दाय वसुविन्दाय सर्वविन्दाय, नमः पाराय सुपाराय, पारयन्ताय सान्ताय, नम ऊर्म्याय सूर्म्याय नमश्चावनाय भार्गवाय इत्येता एव देवतास्तर्पयन्नुदकेन । एष संवत्सरं चरित्वा विमलो विपाप्मा भवति । सर्वेषां वेदानां चरितब्रह्मचर्यो यदि नान्यत् कुरुते । स तु खलु चरितब्रह्मचर्यो दश दश पुरुषान् पुनाति पूर्वापरान् आत्मानञ्चैकविंशम् । पङ्क्तिञ्च यावदनुपश्यति यस्यामुपविशति । समास एतासामेव देवतानामन्नस्य जुहोति धेनुर्दक्षिणा । अथ कृच्छ्रविधिं व्याख्यास्यामः । देवासो यथाचरन् वसवो रुद्रा आदित्या मरुद्भिरसः पुरा । स्त्रीशूद्रं नाभिभाषेत । नक्तमासीत संश्रितः । सर्वाण्यहानि तिष्ठेत् । ब्रह्मचारी । क्षपाशयः । मधुमांसलवणश्राद्धानि वर्जयेदविचारयन् । गवाजिनं शाणीचीरं कुतपं सार्गं वा वास उच्यते । सर्वाकुशलमोक्षाय मरुतोऽप्याचरंस्तथा । त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुञ्जेदयाचितम् । त्र्यहं नैव तु भुञ्जीत एतद्वसुभी रुद्रैरादित्यैश्चरितं व्रतम् । एष एवातिकृच्छ्रस्य विधिरेवं विधीयते । एतेष्वेव तु कालेष्वेकैकं पिण्डं प्राश्नीयात् । तप्तकृच्छ्रं व्याख्यास्यामः । त्र्यहमुष्णाः पिबेदापस्त्र्यहमुष्णं पयः पिबेत् । त्र्यहमुष्णं पिबेत सर्पिर्वायुभक्षः परं त्र्यहम् । बृहस्पतेस्तु कृच्छ्रस्य एष एव विधिः स्मृतः । यवागूं यावकं शाकं पयः

सर्पिः कुशोदकम्। त्र्यहं त्र्यहं तु प्राश्नीयाद् वायुभक्षः परं त्र्यहम्। अथ सान्तपनम्। मरुतां होमो मरुतस्तर्पयेत्। गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रसान्तपनं स्मृतम्। एतदेव त्रिरभ्यस्तं महासान्तपनं स्मृतम्। अथात्र व्रतोपायनम्। वसवो व्रतपतयो रुद्रा व्रतपतय आदित्या व्रतपतयो मरुदङ्गिरसो व्रतपतय इति व्रतमालभ्य वसूनग्निस्तर्पयेत प्रथमेऽस्मिन्त्रिरात्रे, रुद्रान् द्वितीये, आदित्यांस्तृतीये, मरुदङ्गिरसश्चतुर्थे। आ मे गृहा इति द्वाभ्यां वसूनां स्थालीपाकस्य जुहोति। असंख्याता इति दशभी रुद्राणाम्। कदाचन स्तरीरसि इति पञ्चभिरादित्यानाम्। सान्तपना इति षड्भिर्मरुद्गणानां 'त्वामग्ने अङ्गिरसो' 'वायुरग्रेगाः'। हव्यवाहमिति स्विष्टकृतम्। इति।

आश्वलायनगृह्यसूत्राणि तु—एतेन गोदानम्। षोडशे वर्षे। केशशब्दे तु श्मश्रुशब्दान् कारयेत्। श्मश्रूणीहोन्दति। शुन्धि शिरोमुखं माऽस्याऽऽयुः प्रमोषीरिति। केशश्मश्रुलोमनखान्युदक्संस्थानि संप्रक्ष्यति। आप्लुत्य वाग्यतः स्थित्वाऽहःशेषमाचार्यसकाशे वाचं विसृजेत वरं ददामीति। गोमिथुनं दक्षिणा। संवत्सरमादिशेत्। चरितव्रताय मेधाजननं करोति। अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति, सुश्रवः सुश्रवा असीति। एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातम्। इत्यनुपेतपूर्वस्य। अथोपेतपूर्वस्य। कृताकृतं केशवपनं मेधाजननं च। अनिरुक्तं परिदानम्। कालश्च। तत्सवितुर्वृणीमह इति सावित्रीम्। इति।

आपस्तम्बगृह्यसूत्राणि च—एवं गोदानमन्यस्मिन्नपि नक्षत्रे षोडशे वर्षे। अग्निगोदानो वा स्यात्। संवत्सरं गोदानव्रतमेक उपदिशन्ति। एतावन्नाना सर्वान् केशान् वापयते। उदकोपस्पर्शनमिति च्छन्दोगाः। इति।

मानवगृह्यसूत्राणि तु—उपनयनप्रभृति व्रतचारी स्यात्। मार्गवासाः संहतकेशो भैक्षाचार्यवृत्तिः सशल्कदण्डः ससमुञ्जां मेखलां धारयेदाचार्यस्याप्रतिकूलः सर्वकारी। यदेनमुपेयात् तदस्मै दद्याद् बहूनां येन संयुक्तः। नास्य शय्यामाविशेत्। न संवस्त्रयेत्। न रथमारोहेत्। नानृतं वदेत्। न मुषितां स्त्रियं प्रेक्षेत। न विहारार्थो जल्पेत्। न रुच्यर्थं किञ्चन धारयीत। सर्वाणि सांस्पर्शिकानि स्त्रीभ्यो वर्जयेत्। न मधुमांसे प्राश्नीयात् क्षारलवणे च। न स्नायादुदकं वाऽभ्यवेयात्। यदि स्नायाद् दण्ड इवाप्सु प्लवेत्। प्रागस्तमयान्निष्क्रम्य समिधावाहरेत्। हरिण्य ब्रह्मवर्चसकाम इति श्रुतिः। इमं स्तोममर्हत इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य एधोऽस्येधिषीमहीति समिधमादधाति, समिदसि समेधिषीमहीति द्वितीयाम्। अपो अद्यान्वचारिषमित्युपतिष्ठते। यदग्ने इति मुखं विमृष्टे। भद्रं कर्णेभिरिति श्रोत्रे अभिमृशति। भद्रं पश्येमाक्षिभिर्यजत्रा इति चक्षुषी। स्थिरैरङ्गैरित्यङ्गानि। इह धृतिरिह स्वधृतिरिति हृदयदेशमारभ्य जपति। रुचं नो धेहीति पृथिव्रीमारभते। त्र्यायुषं जमदग्नेः, कश्यपस्य त्र्यायुषम्, अगस्त्यस्य त्र्यायुषम्, यद्देवानां त्र्यायुषम्, तन्मे अस्तु त्र्यायुषम्, इति भस्मनाऽङ्गानि संस्पृश्याऽऽपोहिष्ठीयाभिर्मार्जयते।

अथ सन्ध्यामुपास्ते । प्रागस्तमयाग्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद् वा शुचौ देशे निषद्योपस्पृश्यापामञ्जलिं पूरयित्वा प्रदक्षिणमावृत्य आयाहि विरजे देव्यक्षरे ब्रह्मसम्मिते । गायत्रि च्छन्दसां मातरिदं ब्रह्म जुषस्व मे । इत्यावाहयति । ओजोऽसीति जपित्वा कस्ते युनक्तीति योजयित्वा, ॐ भूर्भुवः स्वस्तत् सवितुरित्यष्टौ कृत्वः प्रयुङ्क्ते इत्याम्नाताः कामाः । आ देवो यातीति त्रिष्टुभं राजन्यस्य । युञ्जत इति जगतीं वैश्यस्य । उदु त्यं जातवेदसमिति द्वे निगद्य कस्त्वं विमुञ्चतीति विमुच्योदकाञ्जलिमुत्सृजति । एवं प्रातस्तिष्ठन् । एतेन धर्मेण द्वादश चतुर्विंशतिं षट्त्रिंशतमष्टाचत्वारिंशतं वा वर्षाणि यो ब्राह्मणो राजन्यो वैश्यो वा ब्रह्मचर्यं चरति मुण्डः शिखाजटः सर्वजटो वा मलज्ञुरबलः कृशः स्नात्वा च सर्वं विन्दते यत्किञ्चिन्मनसेच्छतीति । एतेन धर्मेण साध्वधीते इति ।

वाराहगृह्यसूत्राणि च—उपनयनप्रभृति व्रतचारी स्यात् । उपनयने व्रतादेशा व्याख्याताः । मार्गवासाः । संहृतकेशः, भैक्षाचर्यवृत्तिः, सशल्कदण्डः, सप्तमौञ्जीं मेखलां धारयेत्, आचार्यस्याप्रतिकूलः, सर्वकारी, यदेनमुपेयात् तदस्मै ब्रूयात् । बहूनां येन संयुक्तः, नास्य शय्यामाविशेत् । न रथमारोहेत् । न संविशेत्, न विहारार्थो जल्पेत्, न रुच्यर्थं कञ्चन धारयेत्, सर्वाणि सांस्पर्शिकाणि स्त्रीभ्यो वर्जयेत्, न स्नायाद् दण्डवत् । नोदकमभ्युपेयात्, न दिवा स्वपेत्, त्रैविद्यकं ब्रह्मचर्यं चरेत् । इन्द्रियसंयतः, सायं प्रातर्भैक्षाचर्यवृत्तिः । सायं प्रातरग्निं परिचरेत् । अधःशय्या, आचार्याधीनवृत्तिः, तन्निसर्गादशनम् । अयाचितमलवणम्, वाग्यतोऽश्नीयात् । मधुमांसे वर्जयेत्, आच्छिन्नवस्त्रां विवृतां स्त्रियं न पश्येत् । यौपस्य वृक्षस्य दण्डी स्यात्, नानेन प्रहरेद् गवे न ब्राह्मणाय । न नृत्यगीते गच्छेत्, न चैने कुर्यात्, नावलिखेत्, शिखाजटः सर्वजटो वा स्यात् । शार्णं क्षौममजिनं वासः, रक्तं वसनम् । कम्बलमैणेयं ब्राह्मणस्य, रौरवं क्षत्रियस्य, आजं वैश्यस्य । एतेन धर्मेण द्वादश वर्षाण्येकवेदे ब्रह्मचर्यं चरेत् । चतुर्विंशतिं द्वयोः, षट्त्रिंशत् त्रयाणाम् । अष्टचत्वारिंशत् सर्वेषाम् । यावद् ग्रहणं वा सरज्जुरलङ्कृतकुशः स्नात्वा स सर्वं लभेत यत् किञ्चिन्मनसेप्सितम् । इत्येतेन धर्मेण साध्वधीते । मन्त्रब्राह्मणान्यधीत्य कल्पं मीमांसाञ्च याज्ञिकोऽधीत्य वक्तुं पदं स्मृतिं चैच्छिकः । तौ स्नातकौ श्रोत्रियोऽन्यो वेदपाठी । न तस्य स्नानम् उपविश्याऽऽचमनं विधीयते । अन्तर्जानु बाहू कृत्वा त्रिराचामेत् । द्विः परिमृजेत् । खानि चोपस्पृशेच्छीर्षण्यानि । षोडशवर्षस्य गोदानम् । अग्निं वाऽध्येष्यमाणस्याग्निगोदानिको मैत्रायणीयजटाकारणेनोक्तमन्त्रविधिः । उपस्थ उपकक्षयोश्चाधिको मन्त्रप्रयोगः । यत् क्षुरेण मर्चयतेति भूमौ केशान् निखनेत् । अन्ते गां दद्यात् । इति ।

बौधायनीयगृह्यसूत्राणि तु—काण्डे काण्डे च व्रतचर्या । अथेमानि ब्राह्मणानि सांवत्सरिकैर्व्रतैरध्येयानि भवन्ति होतारः शुक्रियाण्युपनिषदो गोदानं सम्मितमिति । होतृषु प्रधानकालेष्वथ प्रधानाहुतीर्जुहोति, अथ काण्डऋषिं जुहोति । सदसस्पतिं जुहोति, अथ सावित्रीं जुहोति, अथ वेदाहुतीर्जुहोति । अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः

प्रादेशमात्रा अपरिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति, याज्ञिकानां वा वृक्षाणामन्यतमस्य, अग्ने व्रतपते होतारं व्रतं चरिष्यामीति। जयप्रभृति सिद्धमा धेनुवरप्रदानात्। संवत्सरमेतद् व्रतं चरेत् संवत्सरं हि व्रतं नातीत्यैतस्मिंस्त्वेवैतत् संवत्सरेऽधीयीत। यद्यु वैतस्मिन् संवत्सरे नाधीयीत यावदध्ययनमेतद् व्रतं चरेत्। अथ संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा। अथाव्रत्यप्रायश्चित्तं जुहोति, यथोपदेशं प्रधानाहुतीर्जुहोति, अथ काण्डऋर्षिं जुहोति, अथ सदसस्पतिं जुहोति, अथ सावित्रीं जुहोति, अथ वेदाहुतीर्जुहोति, अथ पालाशीश्चतस्रः समिधः...अग्ने व्रतपते होतारं व्रतमचारिषमिति। जयप्रभृति सिद्धमा धेनुवरप्रदानात्। अथोपनिषदाम्। अथ... प्रधानाहुतीर्जुहोति, अथ काण्डऋषिं जुहोति, अथ सदसस्पतिं जुहोति, अथ सावित्रीं जुहोति, अथ वेदाहुतीर्जुहोति, अथ पालाशीश्चतस्रः समिधः...अग्ने व्रतपते उपनिषदं व्रतं चरिष्यामीति। जयप्रभृति सिद्धमा धेनुवरप्रदानात्। संवत्सरमेतद् व्रतं चरेत् संवत्सरं हि व्रतं नातीत्यैतस्मिंस्त्वेवैतत् संवत्सरेऽधीयीत। यद्यु वैतस्मिन् संवत्सरे नाधीयीत, यावदध्ययनमेतद् व्रतं चरेत्। अथ संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा।...अथाव्रत्यप्रायश्चित्तं जुहोति, अथ यथोपदेशं प्रधानाहुतीर्जुहोति। अथ काण्डऋषिं जुहोति, अथ सदसस्पतिं जुहोति, अथ सावित्रीं जुहोति, अथ वेदाहुतीर्जुहोति, अथ पालाशीश्चतस्रः समिधः...अग्ने व्रतपते उपनिषदं व्रतमचारिषमिति। जयप्रभृतीति। षोडशे वर्षे गोदानम्। तस्य चौलवत् तूष्णीं प्रतिपत्तिरवसानञ्च। एतावदेव नाना। प्रतिपत्तौ सर्वान् केशान् वापयति। गामत्र गुरवे वरं ददाति। अग्निगोदानो वा भवति। तस्य काण्डोपाकरणकाण्डसमापनाभ्यां प्रतिपत्तिरवसानञ्च। सर्ववेदसम्मितमित्याचक्षते। तस्य द्वादशसंवत्सरानेकादश नव सप्त पञ्च त्रीन् संवत्सरान् षण्मासान् चतुरो मासान् द्वौ मासौ मासं वा व्रतं चरेत्। तस्योपदेशात् प्रतिपत्तिरवसानञ्च। तस्य नित्येऽधिब्रह्मचर्यं त्रिषवणमभिषेक उत्सन्नशय्या आसनञ्च। यन्मातुर्दुश्चरितं तस्मादेनं त्रायत इत्युपदिशति मन्त्रब्राह्मणं वेद इत्याचक्षते। अष्टचत्वारिंशत्सम्मितं सम्मितमित्याचक्षते तस्य संक्षेपः संवत्सरः। तत्संवत्सरमनुव्याख्यास्यामः। स यदि ब्रह्मचारी स्यान्नियममेव प्रतिपद्येत। अथ यद्यब्रह्मचारी स्यात् केशश्मश्रुलोमनखानि वापयित्वा तीर्थं गत्वा स्नात्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरिति मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन षोडश प्राणायामान् धारयित्वोत्तीर्य वासः पीडयित्वाऽन्यत् प्रयतं वासः परिधायाप आचम्य देवयजनमुद्रानयति। अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वाऽथाव्रत्यप्रायश्चित्तं जुहोति नाहं करोमीति। अथ यथोपदेशं प्रधानाहुतीर्जुहोति, याज्ञिकीभ्यो देवताभ्यः सम्मितीभ्यः स्वाहा इति चतस्रः। अथ काण्डऋषिं जुहोति, अथ सदसस्पतिं जुहोति। अथ सावित्रीं जुहोति। अथ वेदाहुतीर्जुहोति, अथ चतस्रः...वाचयति याज्ञिकानां वा वृक्षाणामन्यतमस्य। अग्ने व्रतपतेऽष्टाचत्वारिंशत्सम्मितं सम्मितं व्रतं चरिष्यामीति जय...प्रदानात्। एवमेव व्रतान्ते, अधोनाभ्युपरि जान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन् अनग्निपक्ववृत्तिरच्छायोपयोगो नागारं प्रविशेदन्यत्र गुरुनियोगात्। भैक्षं वा तत्कालं भुञ्जीत। कामं कन्द-

मूलफलम् । अपराह्णं प्रसिद्धमुपस्पृश्य तदपि नोपयुञ्जीत । स्त्रीशूद्रपतितरभसरजस्वलाभिश्च न सम्भाषेत । कामं मातरमुपाध्यायिनीं भगिनीञ्च । याश्चान्या एवं युक्ताः स्त्रियोऽशक्ताः पराक्रमे । सप्रणवा व्याहृतयः प्राणायामाग्नीन्धनभैक्षाचरणस्थानासनशयनोपस्पर्शनसुमनसो मित्रेवनानि च । सर्वाः सम्मितदेवतास्तर्पयति, ब्रह्माणं तर्पयामीत्यादि प्रसंख्याय समाप्नुयात् । गुरोः समानवृत्तिषु गुरुवृत्तिः स्यात् । प्रेषितस्तदेव प्रतिपद्येतान्यत्र पातकात् । एवं द्वादश संवत्सरानेकादश नव सप्त पञ्च त्रीन् संवत्सरान् षण्मासान् चतुरो मासान् द्वौ मासौ मासं वा व्रतं चरेत् । अपि वा योऽनूचानः श्रोत्रियः स द्वादशरात्रं पराकं वा व्रतं चरेन्न त्वेवासम्मिती स्यात् । स एष चरति दश पूर्वान् दशापरान् आत्मानं चैकविंशतिं पङ्क्तिं च पुनाति । यस्मा उपदिशति यस्यामुपविशति यस्मै ददाति यस्माच्च प्रतिगृह्णाति तत् सर्वं पुनाति । व्रतसमाप्तौ वेदसमाप्तौ वा गुरुदक्षिणा-माहरेद्धार्मिको यथाशक्ति । विषमगते त्वाचार्य उग्रतः शूद्रतो वा हरेत् । सर्वतो वोग्रतः शूद्रतोऽप्याचार्यार्थं स्यादाहरणं धार्म्यमित्येके । एतेन धान्वन्तर-शैव-बहुरूप-पार्षद-स्कन्देन्द्राणां व्रतानां समापनं ब्रह्माभ्यसेन—ऋक्, साम, यजुर्वा छन्दसामनुसवनं लभेत काममिति ह स्माह बोधायनः । अथातोऽवान्तरदीक्षां (शुक्रियव्रतचर्यां) व्याख्यास्यामः । उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे केशश्मश्रु वापयित्वा पूर्ववदुपाकृत्य ग्रामात् प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्याखलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय सम्परिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयति । अग्रेणाग्निं प्रवर्ग्याय कल्पया-मीत्यादि । प्रदक्षिणमग्निं परिषिच्य व्याहृतिभिर्वैकङ्कतीः समिधोऽभ्यादाय मदन्तीभिः प्रवर्ग्यदेवताभ्यस्तर्पयति ; अग्रेणाग्निं प्रवर्ग्यं तर्पयामीत्यादि । अथ चतस्रः...वाचयति पृथिवी समित् इत्येतैः प्रतिमन्त्रम् । अथ देवता उपतिष्ठते अग्ने व्रतपते शुक्रियं व्रतं चरिष्यामीति । अथैतेषामनुवाकानां प्रभृति वाचयति प्रथमोत्तमयोर्वा । अथैनं संशास्ति संमील्य वाचं यच्छति । अथास्याहतेन वाससा त्रिः प्रदक्षिणं समुखं शिरो वेष्टयति चितःस्थ परिचितः, स्वाहा मरुद्भिः परिश्रयस्वेति । प्रदक्षिणमग्निं परिषिच्य व्याहृतिभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्य-देवताभ्यस्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाऽथास्तमित आदित्ये ग्राममायान्ति । वाग्-यतस्तिष्ठेदेतां रात्रिमुपविशेत् संवेशयेद्वा । अथ प्रातरुदित आदित्ये ग्रामात् प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्याखलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय सम्परिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वा वयःसुपर्णा इति वासो विमुच्याथास्य पट्तयमभिनिदर्शयति अग्निमप आदित्यं गां ब्राह्मणं हिरण्यमिति । त्रीनादितो दर्शयित्वा यथोपपादमितराणि दर्शयित्वा प्रदक्षिणमग्निं परिषिच्य व्याहृतिभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवताभ्यस्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाऽथास्य व्रतचर्यामुपदिशेत् । न यानमारोहेन्न वृक्षमधिरोहेन्न कूपमवरोहेन्न छत्रं धारयीत नोपानहौ धारयीत नासन्द्यां शयीत न स्त्रिया न शूद्रेण सह सम्भाषेत यदि सम्भाषेत ब्राह्मणेन सह सम्भाषेत न सायं भुञ्जीत यदि सायं

भुञ्जीतापज्वलितं भुञ्जीत, न छायायामवस्यां पर्वणि चोपवसेत् तदहश्च छायायाद् वाग्यतस्तिष्ठेदेतां रात्रिमुपविशेत् संवेशयेद् वा। अमेध्यलोहितशवपाश्वदर्शने ज्योतिषां सन्दर्शनम्। अबद्धमिति च जपति। अथ यद्येनमभिवर्षति उन्दतीरिति तत्र जपति। संवत्सरमेतद् व्रतं चरेत् संवत्सरं हि व्रतं नातीत्यैतस्मिंस्त्वेवैतत् संवत्सरेऽधीयीत। यद्यु वैतस्मिन्...श्रावयते वा। पूर्ववदुपाकृत्य···शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वा अथाव्रत्यप्रायश्चित्ते जुहोति, यन्म आत्मनो मिन्दाऽभूत्, पुनरग्निश्चक्षुरदात्, इति द्वाभ्याम् प्रदक्षिणमग्निं परिषिच्य व्याहृतिभिर्वैकद्भूतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवताभ्यस्तर्पयित्वा चतस्र औदुम्बरीः समिधो...धापयति द्यौः समित् इत्येतैः प्रतिमन्त्रम्। अथ देवता उपतिष्ठते, आदित्य व्रतपते सुकिर्यं व्रतमचारिषं तदशकं तन्मे राधि। इत्यादि। प्रदक्षिणमग्निं परिषिच्य व्याहृतिभिर्वैकद्भूतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवताभ्यस्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाऽथान्याध्यायेऽनध्यायानुपदिशेत्॥ इति।

पारस्करगृह्ये तु ब्रह्मचारिणां विशेषेण काऽपि व्रतचर्या नोक्तेति सुधीभिरवगन्तव्यम्।

---

# तृतीयप्रपाठकस्य तृतीया कण्डिका

—————:o:—————

गोदानव्रतान्ते वेदपर्वणां [1]श्रवणादूर्ध्वम् अध्ययने प्राप्ते वेदारम्भस्य कालान्तर-विधानार्थमिदमाह—

## प्रौष्ठपदीं हस्तेनोपाकरणम् ॥ १ ॥

प्रौष्ठपदो भाद्रपदस्तस्य पौर्णमासी प्रौष्ठपदी तां प्रति(A) हस्तेन हस्तसंज्ञेनर्क्षेण उपाकरणम्, प्रकृतस्य ग्रन्थस्य उपादानं कर्त्तव्यमिति शेषः । [2]ननु प्रौष्ठपदहस्तेनेति(B) सप्तम्यां प्राप्तायां कस्मात् द्वितीया क्रियते इति ? उच्यते—प्रौष्ठपदीशब्दादौ [3]प्रतिशब्दा-ध्याहारार्थम्, प्रतिप्रौष्ठपदीं हस्तेनोपाकरणमिति[4] । प्रौष्ठपदीं प्रौष्ठपदीं प्रति प्रतिप्रौष्ठ-पदीमिति । तेन किम् ? [5]उत्सृष्टस्योत्सृष्टस्य च्छन्दसः भाद्र[6]पदशुक्लपक्षे हस्तेन प्रति-[7]वर्षमनेन वक्ष्यमाणेन विधिना उपाकरणं कर्त्तव्यमिति दर्शयति । कथं पुन[8]रिद-मवगम्यते यत् प्रतिशब्दमध्याहृत्य प्रतिवर्षमुपाकरणमिति ? उच्यते—एवं [9]हि श्रूयते आचार्यस्याध्या[10]पयतः शिष्याणां [11]चावर्तयताम् अज्ञानकृतः प्रामादिको यो दोषः, तेन च्छन्दसां यातयामत्वं भवति । यातयामैश्छन्दोभिः श्रौतस्मार्त [12]कर्मकारिणः समग्र-

A. अत्र तर्कालङ्कारः—स खल्वयं विकल्पः प्रौष्ठपदीं वा हस्तेन वेति । कस्मात् ? प्रौष्ठ-पद्यां हस्तस्यासम्भवात् समुच्चयानुपपत्तेः । हस्तयुक्तकालोऽपि भाद्रपदशुक्लपक्ष एव ग्राह्यः । कुतः ? उपस्थितत्वात् । अथवा प्रौष्ठपदस्येयं तिथिः प्रौष्ठपदी, तिथिसामान्यं भण्यते । न पुनर्भाद्रपदपूर्णिमैव, कस्मात् ? 'प्रौष्ठपदशुक्लपक्षे हस्तेनाऽऽचार्यः सशिष्यः प्राङ्मुख उदङ्-मुखो वा' इत्यादि गृह्यपरिशिष्टवचनात् । सोऽयमेकः कालो न कालद्वयम् । इत्याह ।

B. अत्र 'प्रौष्ठपद्यां हस्तेने'ति पाठो युक्तः, आदर्शपुस्तकेष्वसद्भावात् तथा मूले न सन्निवेशितः, परमत्र जितं लिपिकरप्रमादेनेति प्रतीयते ।

1. 'श्रावणा-' ख । 2. 'ननु' नास्ति च । 3. 'प्र-' नास्ति च । 4. 'उच्यते' अधिकः क-ख । 5. 'उत्सृष्टोत्सृष्टस्य' ख । 6. '-पदः शुक्ल-' ख । 7. 'वर्षमनेन' च । 8. 'इदं' नास्ति ख । 9. 'हि' नास्ति च । 10. '-पयितः' ख । 11. 'वा-' ख । 12. 'कर्मणि कारिणः' ख ।

फल[1]भाजो न भवन्ति, तत्र यदेतदुपाकर्मोत्सर्गलक्षणं कर्म तेन "पुन[2]श्छन्दसामयातयामत्वं जन्यते तस्मा"[3]दावृत्त्यर्थः प्रतिशब्दोऽध्याहियत '[4]इति।

उक्तञ्च— अस्थानोच्छ्वासविच्छेदघोषणाध्यापनादिकम्।
प्रामादिकं श्रुतौ यत् स्याद् यातयामत्वकारि तत्॥
"[5]प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद् द्विजैः।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत्॥
अयातयामैश्छन्दोभिर्यत् कर्म क्रियते द्विजैः।
क्रीडमानैरपि सदा तत् तेषां सिद्धिकारकम्॥ (A) इति।

उपाकरणविधिविवक्षयेदमाह—

## व्याहृतिभिर्हुत्वा शिष्याणां सावित्र्यनुवचनं यथोपनयने ॥२॥

ननु प्राप्तत्वाद् व्याहृतीनां पुनर्वचनमयुक्तमिति चेत्? न; कुतः? इहाग्नेरनुपादानाद् ग्रन्थान्तरेण प्राप्तत्वात् तदनध्येतृणाम् अहोम"[6]कमेतदुपाकरणं मा भूदित्यतः पुनर्वचनम्। अथवा '[7]होमसामान्याद् व्याहृतिहोमानन्तरं ग्रन्थान्तरहोमप्राप्तौ छन्दोहोमो मा भूदित्यतः क्रमार्थं व्याहृतीनां पुनर्ग्रहणम्, व्याहृतिभिर्हुत्वा शिष्याणां सावित्र्या "[8]गायत्र्याः अनुवचनं निगदनं कुर्यादिति शेषः (B)। कथम्? यथोपनयने— पच्छः, अर्द्धर्चशः, ऋक्शः इति।

---

A. कर्मप्रदीपः ३।८।१६-१८। प्रमाणीकृतं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये।

B. सूत्रस्यास्य तर्कालङ्कारकृता विवृतिरित्थम्—"अत्र किञ्चिद् वक्तव्यमस्ति, हुत्वा इत्येतावति कृतेऽपि विशेषानुपदेशाद् व्याहृतिभिरेव होमो भविष्यति। तस्माद् व्याहृतिभिरिति वचनं कर्मक्रमार्थम्। कथं नाम? व्याहृतिभिर्हुत्वाऽनन्तरं सावित्र्यनुवचनं कर्त्तव्यमिति। किमतो भवति? एतदतो भवति, व्याहृतिहोमादनुपदमेवानुवचनमुपदिशन् अन्योऽपि होमो व्याहृतिहोमात् पुरतः स्यादिति दर्शयति। व्याहृतिभिरित्यवचने हि व्याहृतिभिरेव होमः स्यात्, न पुनरन्योऽपि। तस्माद्व्याहृतिभिरिति वचनमादितो होमान्तरद्योतनार्थम्। नन्विदानीं तन्त्रसमापनद्योतनार्थमेव कुतो न स्यादिति वाच्यम्, आचार्येणैव परतः कर्मापवर्गस्य सूत्रितत्वादिदानीं तन्त्रसमापनस्याप्रसक्तेः, कस्मात् पुनः कारणात् सूचितोऽयमन्यो होमो वेदारम्भात् परत एव न भवति? उच्यते—वेदारम्भात् परमेव कर्मापवर्गस्य सूत्रणात् तदानीमन्यस्य होमस्याभिनिवेशस्यासम्भवात्।

---

1. '-भागिनो' ख। 2. 'पुनः' नास्ति ख। 3. '-दावृत्त्यर्थं प्रतिशब्दोऽध्याह्रियते' ख। 4. 'इति' नास्ति ख। 5. 'प्रत्यब्दं' क-घ। 6. 'कर्म तदुपाकरणमिति' ख। 7. 'होम-' नास्ति घ। 8. 'गायत्र्याः' नास्ति ख।

किञ्चित् पुरस्तात् किञ्चिच्च परस्ताद्धोतव्यमित्यर्थप्रतीतस्यानुचितत्वाच्च । अत एव नियमार्थताऽपि वचनस्य नोच्यते, वाक्यभेदप्रसङ्गभयात् । कुतः ? शिष्याणां सावित्र्यनुवचनं तच्च व्याहृतिभिरेव हुत्वा इत्यर्थभेदात्, अगत्या हि क्वचित् तथा । न चात्रागतिरस्ति, नियमे च गौरवमपि स्यात्, तस्मात् व्याहृतिहोमात् पुरस्तादेवान्यो होम इति सिद्धम् । कर्मप्रदीपवचनाच्चैवमेवाऽऽचार्यस्याभिप्रायोऽवधार्यते, तच्चोदाहरिष्यामः । आह—कः पुनरन्यो होमो नाम ? छन्दःप्रभृत्याहुतिषट्करूप इति ब्रूमः । कथमिति चेत्, उच्यते—संहितायां गायत्रीच्छन्दस्का या ऋचः पठ्यन्ते तासामाद्यया ऋचा तावदेकामाहुतिं जुहुयात् । एवमुष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीछन्दस्कानामपि ऋचामादिभूताभिरेकैकाभिर्ऋग्भिरेकैकामाहुतिं जुहुयात् । एवं तावत् सप्त छन्दआहुतयो भवन्ति, अनयैव रीत्या अतिच्छन्दआहुतयोऽपि सप्तैव भवन्ति, सप्तैव च विच्छन्दआहुतयः । तत्रातिच्छन्दोविच्छन्दसामपि छन्दोभेदत्वात् मिलित्वा एकविंशतिरेव च्छन्दआहुतयः सम्पद्यन्ते । एवं गानादीन् पञ्च, पर्वादीन् सप्तदश, संहितादीन् त्रीन्, ब्राह्मणादीनष्टौ, षडङ्गादीन् षड् जुहुयात् । स खल्वयमाहुतिषट्करूपोऽन्यो होमः । ततो व्याहृतिभिर्हुत्वा सावित्र्यनुवचनम् । तदाह कर्मप्रदीपः—'पुरस्ताच्छालाया उपलिप्तेऽग्नेः पश्चादाचम्योपविश्य छन्दांसि विच्छन्दांसि सर्पिषा हुत्वा गानेषु पर्वादीन् वेदे षडङ्गे च ग्रन्थादीन् ये चाऽधीताः येषां वा ज्ञायते तान् जुहोति व्याहृतीश्च' इति । अत्र छन्दांसि इत्यतिच्छन्दसामप्युपलक्षणम् इति नारायणोपाध्यायाः । अत्र खल्वादितश्छन्दोहोमादिकमभिधाय व्याहृतीश्चेति करणात् व्याहृतिहोमात् प्राक्तनत्वमेव छन्दोहोमादीनां सुव्यक्तमवगम्यते । स खल्वयमाचार्यस्याऽस्पष्टोऽभिप्रायः कात्यायनेन स्पष्टीकृतः । स खल्वाचार्यस्यास्पष्टस्याभिप्रायस्य प्रदीप इव स्पष्टमुपदेष्टा इत्यवोचाम ।

न च व्याहृतीश्चेति सर्वप्रायश्चित्तहोमपरमिति नारायणोपाध्यायमतं युक्तमिति वाच्यम्, अवचनेऽपि तस्य प्राप्तत्वादानर्थक्यापत्तेः । एकस्य जुहोतिशब्दस्यैकत्र प्रधानहोमपरत्वमन्यत्र च प्रायश्चित्तहोमपरत्वमिति तात्पर्यभेदस्यान्याय्यत्वाच्च । तन्त्रसमापनस्यान्यत्राचार्येणोपदेशाच्च । तस्मात् कर्मक्रमार्थमेव तदुपादानम् । उपविश्य इति करणमपि कर्मक्रमप्रदर्शनार्थमेव । कथन्नाम ? उपवेशनानन्तरमेव छन्दोहोमादयो भवन्ति न तु पुरस्तादपीति । अन्यथोपवेशनस्यापि परिभाषाप्राप्तत्वात् तदप्यनर्थकं स्यात् ।

यच्च व्याहृतीश्चेत्यनन्तरम् 'ततः प्रतिसरान्' इत्यादिना प्रतिसरबन्धनादिकमुक्तं तत्र 'उत्सर्जनेनोपाकरणं व्याख्यातमि'ति व्यवहितमप्युपाकरणं ततःशब्देन परामृश्यते, तेन उपाकरणकर्मणः परं प्रतिसरबन्धनादिकमिति तस्यार्थः । कस्मात् ? अव्यक्तं प्रधानगामीति वचनात्, व्याहृतिहोमात् परमेवाऽऽचार्येण सावित्र्यनुवचनादेः सूत्रणाच्च । अपि च व्याहृतिहोमान्तस्यास्पष्टत्वात् तत् स्पष्टीकृत्य व्याहृतिहोमात् पराचीनस्य कर्मकलापस्याऽऽचार्येणैव स्पष्टमुपदेशात् न पुनः स्पष्टीकरणमपेक्षितमिति तदनुक्त्वा वक्ष्यमाणदृष्टान्तवाक्यानामसङ्गत्वात् प्राक् प्रतिसरबन्धनमुपदिष्टं

किञ्च—

## सामसावित्रीश्च ॥ ३ ॥

साम्ना 'सैव सावित्री सामसावित्री, गायत्रमित्यर्थः (A)। तां च अनुब्रूयादिति वर्तते। ननु सामसावित्र्याश्चेति वक्तव्यम्, न युक्तः "प्रकृतविभ"क्त्यतिक्रम इति? न। कुतः? अनुवचन'धर्मभेदात् अत्र द्वितीयाप्रयोगात् समस्तमपि सामानुब्रूयात् शिष्यवशाद् वा न तु पूर्ववत् पच्छ इति।

## सोमं राजानं वरुणमिति ॥ ४ ॥

चशब्दो लुप्तवद् द्रष्टव्यः। (B) सोमं राजानं वरुणमिति च। किम् अनुब्रूयादिति वर्तते। अधिकारात् साम।

अन्ये तु अधस्तनसूत्रेण सहास्यैकसूत्रतां कृत्वा "व्याचक्षते—सामसावित्रीं चानुब्रूयात्। काम्? सोमं राजानं "वरुणमित्ये"तामिति। तदयुक्तम्। कुतः? "सवितुर्देवत्या सावित्री भवति। न चेयं सावित्री। किं तर्हि? आग्नेयी। न चैवं व्याख्यायमाने त्रिकस्यानुवचनं कृतं भवति तस्मात् सूत्रद्वयमेवैतद् यथोक्तार्थम्।

---

कात्यायनेन। तस्याऽऽचार्येणानुपदिष्टत्वात्। एवञ्च व्याहृतिहोमात् पराचीनस्याऽऽचार्योपदिष्टस्य कर्मकलापस्य बुद्धिस्थत्वात् तस्यैव 'ततः प्रतिसरान्' इति ततःशब्देन परामर्शः। इति न किञ्चिदनुचितम्।" इति।

A. सामेव सावित्री ऋचमाश्रित्य यत् साम गीयते तद् गानमेवात्र सामसावित्रीपदेनोच्यते तच्च गायत्रं सामेति भण्यते इति।

B. मन्त्रस्तु—

ॐ सोमं राजानं वरुणमग्निमन्वारभामहे।
आदित्यं विष्णुं सूर्यं ब्रह्माणञ्च बृहस्पतिम्॥

सामसंहिता-पूर्वार्चिके १।२।१०।१।

अस्य व्याख्या—राजानं राजमानम् ईश्वरं वा सोमं वरुणञ्च, अग्निञ्च गीर्भिः स्तुतिभिः अन्वारभामहे रक्षणार्थमाह्वयामहे। तथा आदित्यम् अदितेः पुत्रम्, विष्णुञ्च सूर्यञ्च ब्रह्माणञ्च बृहस्पतिञ्च अन्वारभामहे। इति।

---

1. '-सैव' च। 2. 'प्रकृति-' च। 3. '-क्त्याऽतिक्रमः' च। 4. '-धर्म-' नास्ति च। 5. 'व्या-' नास्ति च। 6. 'वचनम्' नास्ति च। 7. 'एतामिति' नास्ति च। 8. 'सविता देवता गायत्री' च।

तथाचोक्तम्—

गायत्रीं च समावर्त्तां बार्हस्पत्यमिति त्रिकम् ।
शिष्येभ्योऽनूच्य विधिवदुपाकुर्यात् ततः [1]श्रुतिम् ॥(A)

इति। अन्ये तु पौरस्त्येन सूत्रेण सहास्यैकसूत्रतामाहुः—सोमं राजानं वरुणमित्या[2]चार्यः स्वयमधीत्य, कस्मिन् क्रमे, आदितश्छन्दस उपाकरणस्य। एतदप्ययुक्तम् यस्मादेवमपि [3]व्याख्यायमाने शिष्याणां त्रिकस्यानुवचनं नैव भवति सोमं राजानमित्यस्य स्वयमध्ययनोपदेशात्। तस्मात् [4]यथोक्त एवार्थः।

किञ्च—

## आदित[5]श्छन्दसोऽधीत्य यथार्थम् ॥ ५ ॥

छन्दःशब्देन मन्त्रब्राह्मणमभिधीयते। आदितश्छन्दसः प्रकृतस्य ग्रन्थस्य किञ्चित् अधीत्य आरभ्य [6]यथार्थं यथाप्राप्तमन्यत् कुर्यात्। कथं नाम? "वेदमारभ्य ततः छन्दांस्यतिच्छन्दांसि विच्छन्दांसि सर्पिषा हुत्वा, गानेषु पर्वाद्विर्वेदे षडङ्गे वा" ग्रन्थाद्वियें वाऽधीता येषां वा ज्ञायन्ते तान् जुहोती"त्येवमादिकं ग्रन्थान्तरोपदिष्टं कर्म कृत्वा ततस्तन्त्रं समापयेदित्ययमत्र यथार्थशब्दस्यार्थः (B)। एतस्मिन् क्रमे तन्त्रान्तरप्राप्तो वाहुषु प्रतिसरबन्धः ततो धानादिभक्षणमिति।

---

A. कर्मप्रदीपः ३।८।१२। अत्र 'समावर्त्त'मिति 'श्रुत'मिति च तर्कालङ्कारधृतः पाठः।

B. अत्र तर्कालङ्कारः—"यच्च यथार्थमिति वचनादिदानीं छन्दोहोमादिकमिति वर्णयन्ति तदसङ्गतम्, यथार्थशब्दस्य कर्मापवर्गसूचनार्थताया एव सर्वप्रावगतेः, व्याहृतिहोमात् पूर्वमेव कर्मप्रदीपे तदुपदेशाच, तत् सत्यवस्तातिरिवेदितमस्माभि"रित्युवाच। अत्र अस्यातिकसमाज-(Asiatic Society)-ग्रन्थागारस्थितकर्मप्रदीपपुस्तकपाठस्तु "पुरस्ताच्छालाया उपलिप्ते अग्नेः पश्चादाचम्योपविश्य व्याहृतित्रयहोमान्तं कर्म कृत्वा गायत्रीं गायत्रं बार्हस्पत्यं चानूच्य वेदमारभ्य छन्दांस्यतिच्छन्दांसि विच्छन्दांसि सर्पिषा हुत्वा गानेषु पर्वाद्विर्वेदे षडङ्गे वा ग्रन्थाद्विर्वेवाऽधीता येषां वा ज्ञायन्ते तान् जुहोति व्याहृतीश्च, ततस्तन्त्रं समाप्य प्रतिसरान् दक्षिणे पाणावाबध्नीरन् स्वस्त्ययनार्थम्, अथ दध्यक्षतधाना भक्षयन्ति दधिक्राव्णेन दधि, आनावन्तेन धाना अक्षीत्यादन् निगीर्याऽऽचम्य उपविश्यानुवचनमनुज्ञानं कृत्वाऽथ यथार्थम्" इति। एवञ्च भाष्यकारोऽपि इममेव पाठमुपजीव्य सूत्राणि व्याचख्यौ कर्मक्रममपि 'आचान्तोदकाः' इति (३।३।८) सूत्रव्याख्यानावसरे एवमाम्नसूच। चन्द्रकान्तोऽपि भाष्यकारसम्मतमिममेव कर्मक्रमं गृह्यकर्म-

---

1. 'श्रुतिरिति' ख। 2. '-चार्याः' च। 3. 'व्याख्याय' क-ग। 4. 'यथोक्तं एवार्थः' क। 5. 'छन्दोऽधीत्य' ख। 6. 'यथार्थं' नास्ति ग। 7. 'च' क-च।

[1]तथाचोक्तम्—ततः प्रतिस[2]रान् दक्षिणे पाणावा[3]बध्नीरन् स्वस्त्ययनार्थम्, अथ दध्यक्षतधाना भक्षयन्ती(A)ति ।

किञ्च—

## अक्षतधाना भक्षयन्ति धानावन्तं करम्भिणमिति ॥ ६ ॥

अक्षतधानाग्रहणं गोधूमधानाप्रतिषेधार्थम् । अक्षता यवाः त एव भृष्टा धानाः ।

तथाचोक्तम्—

अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते ।
भृष्टास्तु व्रीहयो लाजा घटाः खाण्डिक उच्यते (B) ॥ इति ।

(C) धानावन्तमि[4]त्यृचा भक्षयन्ति न साम्ना । कुतः ? ऋगधिकारात् ।

---

प्रकाशिकायां निबन्ध । तर्कालङ्कारस्तु नारायणोपाध्यायसम्मतं पाठान्तरमाकलय्य प्रकाश-व्याख्यायां भट्टभाष्ये च कटाक्षमाक्षिपति, तत् तु कर्मप्रदीपग्रन्थानां सम्यगनवलोकनस्य फलमिति प्रतिभाति । ( द्र० पृ० ५९३ प० १३ ) । तदत्र व्याहृतित्रयहोमादुपरिष्टात् षष्ठ्याहुतिकहोमो वा षष्ठ्याहुतिकहोमादुपरिष्टाद् व्याहृतित्रयहोमो वेति भगवन्तोऽनूचाना व्यवस्थापयन्तु ।

A. प्रमाणीकृतं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये 'तदाह कर्मप्रदीप' इत्युपोद्घातेन । 'प्रतिसरो रक्षार्थः सूत्रकङ्कणः' इति परिशिष्टप्रकाशः । परमिदमुत्सर्गोपाकरणप्रकरणं वृषोत्सर्गानुलशान्तिप्रकरणे च कर्मप्रदीपापरनामधेययोर्मुद्रितकात्यायनसंहिता-गोभिलस्मृत्योर्नोपलभ्यते इति ।

B. कर्मप्रदीपः ३।९।१ । अस्य व्याख्या—यवाः अक्षताः प्रोक्ताः, ते एव भृष्टाः धाना भवन्ति, भर्जनोत्तरं यवानां धानासंज्ञा भवति, व्रीहयो धान्यानि भर्जनोत्तरं लाजसंज्ञां लभन्ते खाण्डिकशब्देन घटा समूहः उच्यते । इति । अत्र घटापदोत्तरं विसर्गस्तु आदर्शपुस्तकेषु सत्त्वादस्मयोग्यपि रक्षित इति ।

C. मन्त्रस्तु—

ॐ धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ।
इन्द्र प्रातर्जुषस्व नः । सामसंहिता-पूर्वार्चिके ३।१।२।७ ।

अस्य व्याख्या—हे इन्द्र, धानावन्तम् धाना भृष्टयवाः तद्वन्तम्, करम्भिणम्—करम्भो दधिमिश्राः सक्तवः तद्वन्तम्, अपूपवन्तम् सवनीयपुरोडाशोपेतम्, उक्थिनम् स्तोत्रिणम्, नः अस्मदीयम्, इमम् सोमम्, प्रातः प्रातःसवने जुषस्व सेवस्व । इति ।

---

1. 'तथोक्तम्' ख । 2. '-सरं' क-ख । 3. 'वाबध्न' ख । 4. 'वाच्छित' ख । 5. -ति ह्यचा' क-ख ।

## दध्नः प्राश्नन्ति दधिक्राब्णोऽकारिषमिति ॥ ७ ॥

दध्न इत्यवयवार्था षष्ठी, दध्नोऽवदाय प्राश्नन्ति,(A) दधिक्राव्ण '[1]इत्यृचा। अत्र सन्देहः—किं [2]दधिधाना एकीकृत्य भक्षणमुत भेदेनेति? भेदेनेति ब्रूमः। कुतः? सूत्रभेदेनो[3]पदेशात्; भक्षयन्ति प्राश्नन्ति, इति च क्रियापदयोः पृथङ्-निर्देशात्। एवञ्च दधिभक्षणमन्त्र उच्छिष्टैरवाचार्यः प्राणाग्निहोत्रमन्त्रवत्।

[4]अन्ये तु 'असंस्वा[5]दन्निगीर्ये'ति ग्रन्थान्तरवचनात् तन्त्रेण भक्षणमाहुः, नहि शुष्क-[6]धाना असंस्वादयद्भिः खादितु शक्यते इति मन्यमानाः। तन्न सुष्ठूपपन्नम्, यस्मात् तन्त्रान्तरेऽपि भेदेनैवोपन्यासः; "दधिक्राब्णेन दधि, धानावन्तेन धाना" इति (B)। तस्माद्भेदेन भक्षणमिति युक्तम्।

किञ्च—

## आचान्तोदकाः खाण्डिकेभ्योऽनुवाक्या अनुगेयाः कारयेत् ॥८॥

आचान्तोदकाः यदा सर्वे शिष्याः उपोपविष्टाः स्युः तदा आचार्यः खाण्डिकेभ्यः शिष्यघटाभ्यः अनुब्रूयात्। किम्? अनुवाक्या अनुगेयानि च। विभक्ति[7]व्यत्ययः क्रियते, अधिकरणस्य सामान्यत्वात्[8]। स्वय[9]मनूद्य च[10] खाण्डिकांश्च कारयेत्। शिष्यघटाश्च

A. मन्त्रस्तु—

ॐ दधिक्राव्णोऽकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखाकरत् प्र ण आयूंषि तारिषत् ॥

इति। सामसंहिता पू० ४।२।७।७।

अस्य व्याख्या—जिष्णोः जयशीलस्य, अश्वस्य अश्वरूपधारिणः वाजिनः वेगवतः, दधिक्राव्णः दधिक्रावा अग्निविशेषस्तस्य, स्तुतिमकारिषम्, स्तवं करवाणि, स देवः, नः अस्माकम्, मुखा मुखानि चक्षुरादीनीन्द्रियाणि सुरभि सुरभीणि करत् करोतु। नोऽस्माकम् आयूंषि प्रतारिषत् प्रवर्धयतु। इति।

B. अत्र तर्कालङ्कारः—तथाच कर्मप्रदीपः 'अथ दध्याक्तधाना भक्षयन्ति दधिक्राब्णेन दधि धानावन्तेति धानाः अस्वादयन्तो केचिद्धन्ति, निगीर्याचम्योपविश्यानुवचनमनुगानम् इति, ग्रन्था-न्तरेऽपि 'दधिक्राब्णेन दधि धानावन्तेति धानाः' इति चोक्त्वा भाष्यकारवचनमिदं प्रमाणीकरोति।

---

1. 'इत्यनाप्यर्थकम्' क-घ। 2. 'दध्ना एकीकृत्य' ख। 3. '-नोपन्यासात्' क-घ। 4. 'अन्ये तु' नास्ति ख। 5. '-मास्वम् निगिरन् निगीर्येति' ख। 6. 'धान्यवर्ध-' ख। 7. '-भक्षव्यत्ययः' घ। 8. 'च' अधिकः क घ। 9. '-मनूच्य' ख। 10. 'च' नास्ति घ।

भाणयेदित्यर्थः। आचार्यनिगदनादनु पश्चात् शिष्यैरुच्यन्ते इति। अनुवाक्या ऋच उच्यन्ते, एवमनुगीयन्ते [1]इत्यनुगेयानि सामानि, बहुवचनात् तिस्र ऋचः त्रीणि सामानि, अविशेषात्तु या एव काश्चन, [2]उच्चैर्गेयानि कानिचित् सामानि। अथवा एतस्यां वर्णनायाम् अध्याहारबहुत्वात्तु विभक्तिव्यत्ययेन व्याख्या क्रियते। आचान्तोदका इति द्वितीयार्थे प्रथमा, खाण्डिकेभ्य इति द्वितीयार्थे चतुर्थी। आचान्तोदकान् खाण्डिकान् अनुवाक्यानुगेयानि च कारयेदिति। ननु मानसमप्यशुचि "[3]भक्षिणामिति[3]"* वचनात् [4]शुचेर्मन्त्रपाठाधिकारात् आचान्तोदका इति "[5]न वक्तव्य[5]"मिति [6]चेत्, न। [7]अनूच्यमाने यावत् शिष्या विश्रब्धमाचामन्ति तावदाचार्यस्य पूर्वमेवाचान्तस्य कर्मापवर्गार्थं वामदेव्यगानं मा भूदित्यत आचान्तोदकाः इत्युक्तम्। "[8]न चान्तरा[8]"* अनुवचनानुगानान्ते वामदेव्यगानमिति। "[9]अपवृत्ते कर्मणीति[9]"* वचनात् अस्य कर्मशेषत्वात्। कथं कर्मेति? उच्यते—वैरूपाक्षजपान्ते व्याहृति[10]त्रयहोमः शिष्याणां गायत्री गायत्रं बार्हस्पत्यानुवचनं [11]वेदारम्भः छन्दोहोमः। छन्दांसि—'अग्न आयाहि, पुरुत्वा, अग्नओजिष्ठम्, यज्ञा, स्वादोः, आजुहोता, चित्र, इति छन्दांसि। प्रयोमहे, प्रोष्ठु, तवन्त्यं नर्यं, त्रिकद्रुकेषु, अस्तु श्रौषट्, घर्मः प्रवृक्तः, सर्पतेत्यतिच्छन्दांसि। संममम्, चराचराय, चौरकान्, ज्योतिष्मत, मनोजयित्, प्रागण्यत्, [12]अधिपतायि[13]इति विच्छन्दांसि। घर्मः प्रवृक्त इत्यत आरभ्य स्तौभिकानि नव छन्दांसि। त्रयोदशाक्षरप्रभृतीन्येकाक्षरप्रवृद्धानि गानपर्वादिहोमो वेदग्रन्थादिहोमोऽङ्गादिहोमः सर्वप्रायश्चित्तादिकर्मसमापनं प्रतिस[14]रबन्धो धानाद्यधिभक्षणं शिष्याणां "[15]पर्वादिऋक्त्रयानुवचनं[15]"* सामत्रयानुगानं वामदेव्यमिति (A)।

---

A. भाष्ये प्रतीकरूपेणोक्त उपाकरणप्रयोगो विदुषां सुभुत्सूनाञ्चावबोधार्थं यथासम्भवं विवृत्योपस्थाप्यते—श्रावणशुक्लपक्षे हस्तनक्षत्रे आचार्यः शिष्यैः सह स्नात्वा कृतनित्यक्रियोऽपः प्राप्य, अध्यायोपाकर्माङ्गस्नानमहं करिष्ये इति संकल्प्य विधिवत् स्नात्वा स्नानाङ्गतर्पणं विधाय छन्दांस्यृषीनाचार्यांश्च तर्पयेत्। तत्र कुशपवित्रपाणिराचम्य प्राणामायम्य देशकालौ सङ्कीर्त्य, अधीतानां वेदानां यातयामत्वदोषनिवृत्तिपूर्वकाप्यायनार्थम् अध्येष्यमाणानां वेदानां वीर्यवत्त्वसिद्ध्यर्थम् अध्यायोपाकर्माङ्गम् ऋषिपूजनतर्पणादिकमहं करिष्ये इति सङ्कल्प्य तीरे प्राक्प्रवणे

---

1. 'इति' नास्ति ख। 2. 'उचार्याणि' ख। 3. '-भक्षिणामिति ?' क-ख। 4. 'शुचेः' ख। 5. 'न' नास्ति ख। 6. 'इति चेत्' नास्ति ख। 7. 'एवमनुच-' ख। 8. 'चच' नास्ति ख। 9. 'अपवृत्ते कर्मणीति वचनात्' ख। 10. 'त्रय' नास्ति ख। 11. 'वेदारम्भ' क-ख। 12. 'इमिक्षतिरचि-' ख। 13. 'अक्षानिति-' ख। 14. '-बन्धनो' ख। 15. 'त्रिवानुवचनं' ख।

उदक्प्रवणे वा यज्ञवृक्षनिर्मिते पीठे प्रागग्रानुदगग्रान् वा कुशानास्तीर्य तेषु पञ्चाशत्कुशनिर्मिताम् ऋषवटून् संस्थापयेत्। ततः कलशोदकं प्रणवव्याहृतिभिर्गायत्र्या चाभिमन्त्र्य तेनोदकेन पीठपूजाद्रव्याण्यात्मानञ्च प्रोक्षयेत्। ॐ भूर्भुवः स्वर्गौतममावाहयामि, एवं वक्ष्यमाणानामृषीणामावाहनं पृथक् पृथक् कुर्यात्; एवं भरद्वाजम्, विश्वामित्रम्, जमदग्निम्, वशिष्ठम्, कश्यपम्, अत्रिम्। एवं प्रतिष्ठाप्य यथासम्भवोपचारैः पूजयेत्। ततो नाभिदघ्नोदकेऽनुपविष्टा देवतीर्थेन ऋषींस्तर्पयेयुः। आदौ समुदायेन ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयश्छन्दांस्याचार्यास्तृप्यन्ताम् इति त्रिः, ततः प्रत्येकेनैषाम्। ॐकारस्तृप्यतु, एवं महाव्याहृतयः, तत्सवितुरिति मन्त्रान्ते गायत्री, सोमं राजानमिति ब्रह्मा, अग्न आयाहीत्यादि सामसंहिताप्रथममन्त्रदशकानुच्चार्य वेदास्तृप्यन्तु। एवमुत्तरार्चिकप्रथमत्रयोविंशतिमन्त्रानुच्चार्य देवास्तृप्यन्तु ततो भूस्तृप्यतु, भुवस्तृप्यतु, एवं स्वः, महः, जनः, तपः, सत्यम्, ॐऋषयः, अग्न आयाहीति गायत्री तृप्यतु, एवं पुरुत्वान्ते उष्णिक्, अग्न ओजिष्ठम्, अनुष्टुप्, यज्ञायज्ञा बृहती, स्वादोरित्था पंक्तिः, आजुहोतात्रिष्टुप्, चित्र इच्छिशो जगती, प्रवोमहे अतिजगती, प्रोष्वस्मै शक्करी, तवत्त्यम्, अतिशक्करी, त्रिकद्रुकेषु अष्टिः, अस्तु श्रौषट् अत्यष्टिः, घर्मः प्रवृक्तः धृतिः, सर्पत अतिधृतिः, संयमन् कृतिः, चराचराय प्रकृतिः, यौरकान् आकृतिः, ज्योतिष्मत विकृतिः, मनोजवि संस्कृतिः, प्रागद अभिकृतिः, अचिप उत्कृतिः, ( मन्त्रास्तु छोमे ब्रह्म्याः पुरस्तात् )। ततः ॐ नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजाय च इति कृताञ्जलिः पठित्वा तर्पयेत् शर्ववृत्तस्तृप्यतु, एवं रुद्रभूतिः, त्रातः, निगरः, गिरिशर्मा, ब्रह्मवृद्धिः, मित्रवर्चाः, सुप्रतीतः, बृहस्पतिगुप्तः, अचजातः, कुस्तुकः, श्रवणदत्तः, सुशारदः, दर्जयन्तः, भानुमान्, आनन्दजः, शाम्बः, काम्बोजः, मद्रगारः, स्वातिः, सुश्रवः, प्रातरन्हः, केतुः, मित्रविन्दः, सुनीथः, सुतेमनाः, अंशुः, अमावस्यः, राधः, गातः, संवर्ग जिमः, शाकदासः, विचक्षणः, गर्दभीमुखः, उदरशाण्डिल्यः, अतिधन्वा, मशकः, स्थिरकः, वसिष्ठः, वासिष्ठः, सुमन्त्रः, शूषः, रालः, दृतिः, इन्द्रोतः, वृषशुष्णः, निकोथकः, प्रतिथिः, देवतराः, शवाः, अग्निभूः, इन्द्रभूः, मित्रभूः, विभण्डकः, ऋष्यशृङ्गः, कश्यपः, अग्निः, इन्द्रः, वायुः, मृत्युः, प्रजापतिः, ब्रह्मा। एवम् अग्निः, प्रजापतिः, विश्वेदेवाः, ॐकारः, वषट्कारः, महाव्याहृतयः, गायत्री, ब्रह्मा, विष्णुः, वेदाः, देवाः, ऋषयः, मुनयः, आचार्याः, पुराणानि, छन्दांसि, यज्ञाः, अध्ययनम्, द्यावापृथिव्यौ, अन्तरिक्षम्, अहोरात्राणि, मासाः, ऋतवः, संवत्सरः, वरुणः, समुद्राः, नद्यः, गिरयः, क्षेत्राणि, वनानि, ओषधयः, वनस्पतयः, पशवः, नागाः, उरगाः, सुपर्णाः, वयांसि, गावः, वसवः, रुद्राः, आदित्याः, मरुतः, सिद्धाः, साध्याः, गन्धर्वाः, पिशाचाः, यक्षाः, रक्षांसि, भूतानि, नक्षत्राणि, अश्विनौ, अप्सरसः, चतुर्विधभूतग्रामः, मरीचिः, अत्रिः, अङ्गिराः, पुलस्तिः, पुलहः, क्रतुः, प्रचेताः, वसिष्ठः, भृगुः, नारदः, सप्तर्षयः, अरुन्धती, गोभिलाचार्यः। ततः कृताञ्जलिः एवमादयः स्वस्ति कुर्वन्तु तर्पिताः, स्वस्ति कुर्वन्तु तर्पिताः,

इति पठेत्। अथापसव्येन तिलैर्द्विगुणदर्भैः पितृतीर्थेन त्रिस्तर्पयेत ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दांस्याचार्यास्तृप्यन्तु इति। गणाचार्यास्तृप्यन्तु, शाक्यमुग्रः, व्यासः, भागुरिः, औगुण्डिः, गौल्गुल्विः, भानुमानौपमन्यवः, कराटिः, मशको गार्ग्यः, वार्षगण्यः, कौथुमिः, शालिहोत्रिः, जैमिनिः, त्रयोदशैते मे सामगाचार्याः, स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति-कुर्वन्तु तर्पिताः। शाण्डिल्यस्तृप्यतु, एवं भालविः, कालविः, ताण्ड्यः, वृषाणकः, रुरुकिः, शमबाहुः, अगस्त्यः, बष्कशिराः, हूहूः, दशैते मे प्रवचनकर्तारः स्वस्ति कुर्वन्तु तर्पिताः। कव्यवालः, नलः, सोमः, यमः, अर्यमा, अग्निष्वात्ताः, सोमपाः, बर्हिषदः, यमः, धर्मराजः, मृत्युः, अन्तकः, वैवस्वतः, कालः, सर्वभूतक्षयः, औदुम्बरः, दध्नः, नीलः, परमेष्ठी, वृकोदरः, चित्रः, चित्रगुप्तस्तृप्यतु। तत उत्तरवंशीयानाम्—अर्यमभूतिः, भद्रशर्मा, पुष्पयशसः, सङ्करः, अर्यम-गोभिलः, पूषमित्रगोभिलः, अश्वमित्रगोभिलः, वरुणमित्रगोभिलः, मूलमित्रगोभिलः, वत्समित्र-गोभिलः, गौल्गुल्वीपुत्रगोभिलः, बृहद्वसुर्गोभिलस्तृप्यतु। ततो गाथादिब्रह्मान्तान् पुनस्तर्पयेत। ततः समाचारान्निवीतिना सनकादीन् सन्तर्प्याचम्य ऋषीन् सम्पूज्य ऋषिश्राद्धं कृत्वा, ऋषिमाल्यमादाय, छवसाक्षा तद्ब्राह्मणेन च संस्नाप्य निमज्याचम्य अरिष्टवर्गसामानि पठित्वा ऋषीनादाय गृहमागच्छेयुः। इति ऋषितर्पणम्।

ततः प्रकृतं कर्म। तत्र येषां ब्रह्मचारिणां पूर्ववृत्तान्तश्रुतस्य वेदस्य प्रथमारम्भस्तेषामत्र वृद्धिश्राद्धम्। आनीतान् ऋषीन् शुभपीठाद्यासने कुशोपरि संस्थाप्यासनादिभिरुपचारैः सम्पूज्याऽऽ-चम्य शालाग्नेः पश्चादुपविश्याग्नौ समिधं हुत्वा ब्राह्मणमुपवेश्याज्यतन्त्रेणाधानम्। तत्र विशेषः—स्रक्षा धाना दधि चासाद्य सम्प्रोक्ष्य देशकालौ सङ्कीर्त्य छन्दोयातयामत्वनिवृत्तये नित्य-विधिरूपमुपाकर्माङ्गहोममहं करिष्ये इति सङ्कल्प्याग्निं परिस्तीर्य, इध्ममभ्याधायाऽऽज्यं संस्कृत्य, पर्युक्ष्य स्रुवं सम्मृज्य, व्याहृतित्रयं हुत्वा पंक्त्याकारेणोपविष्टांश्छिष्यान् पाठयेन गायत्रीं संहितावत्। ततः सावित्रं साम। ततः सोमं राजानमिति। ततश्छन्दो होमः।—ॐ अग्न आयाहि वीतये गृणानो हव्यदातये, निहोता सत्सि बर्हिषि स्वाहा, इदं गायत्र्यै न ममेति त्यागः। एवं सर्वत्र। ॐ पुरुत्वादाशिवो वोचेऽग्निरग्ने तवस्विदा, तोदस्येव शरण आ महस्य स्वाहा (सा० पू० २।१।१) इदमुष्णिहे। ॐ अग्न ओजिष्ठमा भरद्युम्नमस्मभ्यमध्रिगो। प्र नो राये पनीयसे रत्सि वाजाय पन्थाम् स्वाहा (सा० पू० १।२।९।१) इदमनुष्टुभे। ॐ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे। प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् स्वाहा (सा० पू० १।१।४।१) इदं बृहत्यै। ॐ स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः। या इन्द्रेण स यावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् स्वाहा (सा० पू० ५।१।३।१) इदं पंक्त्यै। ॐ आ जुहोता हविषामर्जयध्वं निहोतारं गृहपतिं दधिध्वम्। इडस्पदे नमसा रातहव्यं सपर्यता यजतं पस्त्यानाम् स्वाहा (सा० पू० १।२।७।१) इदं त्रिष्टुभे। ॐ चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे। अनूधा यदजीजनदधा चिदा ववक्षत् सद्यो महि दूत्यं चरन् स्वाहा

( सा० पू० ११२।७।२ ) इदं जगत्यै । ॐ प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवया मरुत् । प्र शर्धाय प्र यज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे स्वाहा, ( सा० पू० ५।२।८।६ ) इदमतिजगत्यै । ॐ प्रोष्वस्मै पुरोरथमिन्द्राय शूषमर्चत अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहा । अस्माकं बोधि चोदिता न भन्तामन्यकेषां ज्याका अधि धन्वसु स्वाहा, ( सा० उ० ९।१।१४।१ ) इदं शक्वर्यै । ॐ तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् । यो देवस्य शवसा प्रारिणा असुरिणन्नपः । भुवो विश्वमभ्यदेवमोजसा विदेदूर्जं शतक्रतुर्विदेदिषम् स्वाहा, ( सा० पू० ५।२।८।१० ) इदमतिशक्वर्यै । ॐ त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म-स्तृम्पत् सोममपिबद्विष्णुना सुतं यथावशम् । स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् स्वाहा, ( सा० पू० ५।२।८।१ ) इदमष्ट्यै । अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु त्यच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे । यद्ध क्राणा विवस्वते नाभा सन्दाय नव्यसे । अध प्र नूनमुपयन्ति धीतयो देवां अच्छ न धीतयः स्वाहा, ( सा० पू० ५।२।८।९ ) इदमत्यष्ट्यै । ॐ घर्मः प्रवृक्तस्तन्वा समानृधे वृधे स्वाहा, ( वा० स० ३९।५ ) इदं धृत्यै । ॐ सर्पत प्रसर्पत सुवर्गमेम ते वयं स्वाहा, ( वि० आ० श्रौ० ५।११।१।५ ) इदमतिधृत्यै । ॐ संयमसंव्यायमन्वियमन्न समायमन् स्वाहा, इदं कृत्यै । ॐ चराचराय बृहत इदं धाममिदं बृहत् स्वाहा, इदं प्रकृत्यै । ॐ द्यौरक्रान् भूमिरततनत् समुद्रं समचूकुपत् स्वाहा, इदमाकृत्यै । ॐ ज्योतिष्पत स्वः पतान्तरिक्षं पृथिवी पञ्चप्रदिशः स्वाहा, इदं विकृत्यै । ॐ मनोजविद्वृत्व-मजयिदिन्द्रो अयिदहमजैषम् स्वाहा, इदं संस्कृत्यै । ॐ प्रागन्यदनुवर्तते रजो पागन्यत्सो पेमति भ्यसा स्वाहा इदमभिकृत्यै । ॐ अधिपतायि, मित्रपतायि, क्षत्रपतायि, स्वःपतायि, धनपतायि, मा२भाः स्वाहा, इदमुत्कृत्यै । ततो गानपर्वाविहोमः ॐ अग्नायि स्वाहा, इदमाग्नेयाय । ॐ तद्धौ हो वा स्वाहा, इदमिन्द्राय । ॐ उवां स्वाहा, इदं पवमानाय । ॐ मयापर्इ स्वाहा, इदमर्काय । ॐ हाउ ३ आयुः ३, सात्यं ३, इन्द्रस्वरो स्वाहा, इदं इन्द्राय । ॐ हुवे वाचाम् स्वाहा, इदं वाचोवृताय । ॐ ए २ विद्रामघवन् विद्राः स्वाहा, इदं शक्वर्यै । ॐ उवाता३ इयि आतमन्धसाः स्वाहा, इदं दशरात्राय । ॐ वृषापा३ वस्वधारया स्वाहा, इदं संवत्सराय । ॐ प्रत्यस्मै पिपी स्वाहा इदमेकाहाय । ॐ पन्यं पन्यमित्सोतारः, पन्यं पन्यो वा स्वाहा, इदमहीनाय । ॐ विशः विशो३वो अतिथाइम् स्वाहा, इदं सत्राय । ॐ प्रवं तवस्यमाहो२सवात् स्वाहा, इदं प्रायश्चित्ताय । ॐ आभि त्वा शूरनो नुमाः स्वाहा, इदं क्षुद्राय । ॐ आभित्वाशूरनो नुमो वा स्वाहा, इदं दशरात्राय । ॐ पुनानः सोमधारयो वा स्वाहा, इदं संवत्सराय । ॐ उहु वा, ओहा, औहो वा, पुरोजितायि स्वाहा, इदमेकाहाय । ॐ ज्योहम् प्रजन्यानार स्वाहा, इदमहीनाय । ॐ मा भेम माश्रमिष्मो वा वा स्वाहा, इदं सत्राय । ॐ उहु वा, ओहा औहो वा तम्बोदस्माम् स्वाहा, इदं प्रायश्चित्ताय । ॐ औहोयि यज्ञायज्ञा वो अग्नया ३ए स्वाहा, इदं क्षुद्राय । ॐ अन्न आयाहि...स्वाहा, इदं छन्दस्यै । ॐ इन्द्र ज्येष्ठं न आभर ओजिष्ठं

पुपुरि श्रवः। यद्दिद्युत्नेम वज्रहस्त रोदसी ओभे सुशिप्र पप्राः स्वाहा, (सा० पू० ६।३।१०।१) इत्यारण्याय। ॐ विदा मघवन् विदा गातुमनुशंसिषो दिशः। शिक्षा शचीनां पते पूर्वीणां पुरूवसो स्वाहा ( सा० म० १।१ ) इदं महानाम्नीभ्यः। ॐ उपास्मै गायता नरः पवमानायेन्दवे। अभिदेवां इयक्षते स्वाहा ( सा० उ० प्र० १।१।१ ) इदं उत्तरायै। ॐ महन्मे वोचो भगो मे वोचो यशो मे वोचः स्तोमं मे वोचो भुक्तिं मे वोचः सर्वं मे वोचस्तन्मावतु तन्मा विशतु तेन भुक्षिषीय स्वाहा, इदं ताण्ड्यब्राह्मणाय। ॐ ब्रह्म च वा इदमग्रे सुब्रह्म चाऽऽस्तां स्वाहा। इदं षड्विंशाय। ॐ ब्रह्म ह वा इदमग्र आसीत् स्वाहा, इदं सामविधानाय। ॐ अथ खल्वयमार्षप्रदेशो भवति स्वाहा, इदमार्षेयाय। ॐ अग्निरिन्द्रः प्रजापतिः सोमो वरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी स्वाहा, इदं देवताध्यायाय। ॐ अथातः संहितोपनिषदो व्याख्यास्यामः स्वाहा, इदं संहितोपनिषदे। ॐनमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो...चोपजाय च स्वाहा, इदं वंशब्राह्मणाय। ॐ देवसवित...स्वदतु स्वाहा, ( मन्त्रब्रा० १।१।१ ) इदमुपनिषदे। ॐ अथातः स्वरशाखाणां सर्वेषां वेदनिश्चयम्। उच्चनीचविशेषांश्च स्वरान्यत्वं प्रवर्तते स्वाहा, इदं शिक्षायै। ॐ कल्पसो ज्योतिष्टोमोऽतिरात्रोक्थ्यशो उशीकः स्वाहा, इदं कल्पसूत्राय। कल्पसूत्रं यदा नाधीतं भवति तदा दशानां सूत्राणां मध्ये यदधीतं भवति तन्नाम्ना होमः कर्तव्यः। ॐ अथ वाचोवृत्तिं व्याख्यास्यामः स्वाहा, इदं वैयाकरणाय। ॐ समाम्नायः समाम्नातः सव्याख्यातव्यस्तमिमं समाम्नायं निघण्टव इत्याचक्षते स्वाहा, इदं निरुक्ताय। ॐ अथातश्छन्दसां विषयं व्याख्यास्यामः स्वाहा, इदं छन्दोभ्यः। पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम्। दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः। इदं ज्योतिषामयनविकल्पाः, इदं सूत्रमध्यगतं भवति तस्मात् प्रसिद्धमनिषिद्धं ज्योतिष उक्ता कस्मादिदं ग्राह्यमेव तेषामयनं विकल्पायय स्वाहा, इदं ज्योतिषे। ततो व्याहृतिचतुष्टयं हुत्वा पुनस्त्रयं हुत्वा, समिदाधान-पर्युक्षण-यज्ञवास्तु-वस्वाहुत्यन्तं कृत्वा दक्षिणे पाणौ रक्षाबन्धनम्। हिरण्यभूषितां यवपोटलिकां विचित्रतन्तुबद्धाम्, 'ए रक्षत नो रक्षितारो गोपायत गोपायितारा२३४५ः'। इति मन्त्रेण। येन बद्धो वली राजा दानवेन्द्रो महाबलः। तेन त्वामनुबध्नामि रक्षे मा चल मा चल। इत्यनेन च। तुवं यवायि ए दाशू२३षाः, नृंप्याहि श्रुणुही गा२३यिराः, रक्षातो३का३म् ऊता२-३हा३-४ऽ ३यि स्मा२३४नो ६ह्यायि। इत्यनेन रक्षाबन्धनम्। ततः सर्वे धानावन्तमिति मन्त्रेण धाना भक्षयेयुः। अस्य मन्त्रस्य पुष्पकऋषिर्गायत्रीछन्द इन्द्रो देवता धानाभक्षणे विनियोगः। ॐ धानावन्तमिति असंस्वाद्यन्निगीर्य, अनाचान्ता एव दधिक्राव्ण इति दधिप्राशनं कुर्युः। अस्याग्निऋषिरनुष्टप्छन्द इन्द्रो देवता दधिप्राशने विनियोगः। ॐ दधिक्राव्ण इति। ततः समाचान्ताः शिष्याः पङ्क्त्याकारेणोपविशेयुः। एतस्मिन्नेव काले आचार्योऽपि प्रतिसरबन्धनादि कुर्यात्। तत आचार्योऽग्न आयाहीत्यादृक्त्रयं तान्येव त्रीणि सामानि स्वपठनाचनु शिष्यान् पाठयेत्। ततो ब्राह्मणभोजनपूर्णपात्रादिदक्षिणां कृत्वा वामदेव्यं गायेदित्युपाकर्मप्रयोगः। अत्र तर्पणप्रयोगे 'तृप्यतु' इति यदुक्तं तत्तु संग्रहकृतः सुब्रह्मण्यस्य मतमवलम्ब्यैवेति बोध्यम्।

गोभिलाचार्यमतञ्च देवादितर्पणे—

अन्वारब्धेन सव्येन पाणिना दक्षिणेन च ।
तृप्यतामिति सेक्तव्यं नाम्ना च प्रणवादिना ॥

इति ( गोभिलीयस्नानसूत्रपरिशिष्टम् १३ । )

पितृतर्पणे तु— गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि ।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति ॥
सर्वत्रैव पितः प्रोक्तं पिता तर्पणकर्मणि ।
पितुरक्षय्यकाले च अक्षय्यां तृप्तिमिच्छता ॥

तथा—शर्मन्नर्घ्याग्निके कार्ये शर्मा तर्पणकर्मणि ।
शर्मणोऽक्षय्यकाले च पितॄणां दत्तमक्षयम् ॥

इति ( गो० स्ना० प० १८-२० )

अत्र रघुनन्दनस्तु—"अत्र ब्रह्मादितर्पणे प्रयोगाकाङ्क्षायां गोभिल-योगियाज्ञवल्क्योक्तप्रयोगविधिर्ग्राह्यः, स च, अन्वारब्धेनेति, अन्वारब्धेन पश्चाल्लग्नेन, अस्मादेव वचनात् तर्पणाभिलापे प्रणवादित्वं तृप्यतामिति च लभ्यते, ततश्च 'ॐ ब्रह्मा तृप्यताम्' इत्यादिप्रयोगः । पितृतर्पणेऽपि स एव,

शातातपः— पितॄणां पितृतीर्थेन जलं सिञ्चेद् यथाविधि ।
दक्षिणेनाथ गृह्णीयात् पितृतीर्थसमीपतः ॥

गोभिलः— गोत्रं स्वरान्तमित्यादि,

कार्ष्णाजिनिः—

नाभिमात्रजले स्थित्वा चिन्तयेदूर्ध्वमानसः ।
आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ।

योगियाज्ञवल्क्यः—

नामगोत्रस्वधाकारैस्तर्प्याः स्युरनुपूर्वशः ॥ इति

तेन अमुकगोत्रः पिता अमुकदेवशर्मा तृप्यतामेतत् सतिलोदकं तस्मै स्वधा इति प्रयोगः सिध्यति" । एवं व्याचख्यौ ।

युज्यते चैतत्, तेन सर्वत्र 'तृप्यतु' स्थले तृप्यताम् इति पाठ एव साधीयान् इति मन्यामहे ।

ननु—

अथानवेक्षमेत्यापः सर्व एव शवस्पृशः ।
स्नात्वा सचेलमाचम्य दद्युरस्योदकं जले ॥
गोत्रनामानुवादादि तर्पयामीति चोत्तरम् ।
दक्षिणाग्रान् कुशान् दत्त्वा सतिलांस्तु पृथक् पृथक् ॥ (क० प्र० ३।३।१-२)

ननु कुत एतद् यदग्न आयाहीत्येवमादिभिः ऋग्भिः छन्दोहोमः। छन्दोभ्यः स्वाहा, अतिछन्दोभ्यः स्वाहा, इत्येवं कस्मात् न हूयेत ? गायत्र्यै स्वाहा, उष्णिहे स्वाहा एवं वा ?

उच्यते—

छन्दसामेकविंशानां संहितायां यथाक्रमम्।
तच्छन्दस्काभिर्ऋग्भि[1]राद्याभिर्होम इष्यते॥
पर्वभिश्चैव[2] गानेषु ब्राह्मणेदुत्तरादिभिः।
अङ्गेषु च ऋचा मन्त्रेष्विति प्रजुहोतयः(A)॥

इति वचनात्। तस्माद् यथोक्त एवार्थः[3]।

एवमुपाकृत्य किं तस्मा[4]देवाह[5] आरभ्याभिधीयते ? नः किं तर्हि ?

इति कर्मप्रदीपवचनबलात् प्रेततर्पणं यथा छन्दोगानां द्वितीयान्तवाक्यं तथाऽत्रापि भविष्यतीति चेत् न, तत्र विशेषेण प्रेततर्पणप्रकरणे वचनपाठाद् द्वितीयान्तवाक्यं प्रेततर्पण एव नान्यत्रेति विशिष्य वक्तुं सुकरत्वादिति। न च तथाऽपि 'यवाग्निस्तर्पयेद् देवान्' इति कर्मप्रदीपवचनमप्यत्र द्वितीयान्तपदोपादाने प्रमाणमिति वाच्यम्, गोत्रं स्वरान्तमित्यादिगोभिलवचनस्य निर्विषयतापत्तेः। अत एव यवाग्निरित्यादिवचनव्याख्यानावसरे परिशिष्टप्रकाशकृता गोभिलीयव्यतिरिक्तानामेतदित्युक्तमिति केचित् तर्करसिकाः। परमत्र गोत्रं स्वरान्तमित्यादिगोभिलवचनव्याख्यानावसरे चन्द्रघटीयैश्चन्द्रकान्तमहाशयैरुक्तम्—"गोत्रस्तु तर्पणे प्रोक्त" इति स्नानाङ्गतर्पणविषयं वचनम्, 'सन्निहितं बुद्धिरन्तरङ्गा' इति न्यायात्, प्रकृतप्रत्ययश्च न्याय इति मीमांसाभाष्यकारोक्तेश्च। प्रधानतर्पणे तु कात्यायनेन द्वितीयान्तत्वमुक्तम्, यथा—यवाग्निरिति कर्म प्र० २।२।१। (द्र० पृ० १०२) अत्र तर्पयामीत्यभिसम्बन्धात् नाम्नो द्वितीयान्तत्वमवगम्यते" इति।

तेन तन्मते 'ब्रह्माणं तर्पयामि'इत्यादिप्रयोगः सिध्यति। भाष्यकारैर्भट्टनारायणपादैरपि तथैव सिद्धान्तितम्। प्रयोगेऽपि तथैवोक्तमिति व्यक्तीभविष्यति ३।३।१९ सूत्रव्याख्यानावसरे। तदत्र उपाकर्मण्युत्सर्गे च तर्पणे कीदृशो मन्त्रः पठितव्य इति भगवन्तोऽनूचानाः प्रमाणयन्तु। इति।

A. कर्मप्रदीपः ३।८।२०-२१। अत्र 'अङ्गेषु च तथा मन्त्रैरि'ति तर्कालङ्कारधृतः पाठः। अस्य व्याख्यायां प्रकाशकारः—"अत्र चाग्निं समाधाय विरूपाक्षजपान्तं कर्म समाप्य व्याहृतिहोमं कृत्वा पात्राधर्यादिक्रमेण शिष्येभ्यः सावित्रीमनूच्य गायत्र्यां गीयमानायां गायत्रं साम

1. 'राद्याभि-' ख। 2. 'पर्वश्चैव तु' ख। 3. नास्ति घ। 4. 'देवानाह' ख।
5. 'चारभ्यारीति' ख।

## सावित्रमहः काङ्क्षन्ते ॥ ९ ॥

'सविता देवताऽस्येति सावित्रो'हस्तः तद्युक्तमहः सावित्रम्'उच्यते तत् काङ्क्षन्ते प्रतिपालयन्ति 'न पठन्तीत्यर्थः।

किञ्च—

## उदगयने च पाक्षिणीं रात्रिम् ॥ १० ॥

---

'सोमं राजानमि'ति बार्हस्पत्यं च साम शिष्यानध्याप्य आदित आरभ्य यथाशक्ति वेदमधीत्याहुतिषष्टिहोमः" इति पदार्थक्रमं जगौ।

अस्य भाष्ये आशादित्यः—"छन्दांसि गायत्र्यादीनि एकविंशवाचो बहुत्वमन्यनिषेधार्थम्। कुतः? सर्वेषामेतदन्तर्भूतत्वादेकविंशतीनामिति व्याहृतिपर्यन्तानाम् एवम्। यथाक्रमं कथनक्रममनतिरिच्य। संहिताया आर्चिकं विहाय छन्दस्यादिग्रन्थत्रयरूपाया इति, होमः कर्त्तुमिष्यते विधीयते इति। अनादेशादाज्यं हविः। न च संहितायामेव गानसंहितामपि व्याप्नोतीति वक्तव्यम्, कुतः? पर्वभिश्चैव गानेष्वित्यनेन पृथग् गानग्रहणस्य वक्तव्यत्वात्। अथ गायत्र्यादिच्छन्दःप्रभृतिभिरेवनामभिरेव होमः कर्त्तुमिष्यते? नैवम्। कथं तर्हि? तदर्थमाह—तच्छन्दस्काभिरिति। तदिति गायत्र्यादिपरामर्शपरम्। तच्छन्दस्काभिर्गायत्र्यादिच्छन्दोयुताभिराद्याभिः प्रथमाभिः प्रथमतया प्राप्ताभिरेव ऋग्भिः। यथा गायत्री ऋग्बहुत्वे सत्यपि अग्न आयाहि वीतय इति। उष्णिहाञ्च पुरुत्वादाशिवां इति। संहितास्वप्यादिसम्बन्धो विधेयः, एवं चतुर्विंशाहुतयः संप्रतिपद्यन्त इति। नन्वाभिरेव केवलाभिर्होमः, नैवम्। किं तर्हि? तदाह—पर्वभिरिति, चशब्दः पूर्वसूत्रोक्तसंख्यानिषेधाय, गानेषु वेदेषु विषये पर्वभिर्विंशतिसंख्यैश्च कृत्वेति सर्वत्रायं विशेषः। एवं पञ्चविंशादिषु अष्टब्राह्मणेषु उत्तराभिर्यथा तिसृभ्यो हिंकरोति सप्रथमया स्वाहेति तद्वत्। अङ्गानाम् आर्चिकादिसंसक्तानाम्, अङ्गेषु परशाखास्वस्थेषु उत्तरादिभिरेव, एवं ब्राह्मणोपनिषद्रोरादिसंदेशेषु मन्त्रेषु अनुवर्त्तमानुतद्भ्यासबहुत्वेनैवं षष्टिसंख्याता जुहोतयः। आहुतीर्हुत्वा आचार्यः स्वसिद्धि पुनर्विदध्यादित्युक्तमार्थशेषः"। एवमाह।

अस्य विवृतौ शिवरामः—"एकविंशानां छन्दसां संहितायां यथाक्रमं तच्छन्दस्काभिरेवाद्याभिर्ऋग्भिर्होम इष्यते। आद्याभिः तत्तच्छन्दस्क-ऋग्बहुत्वे प्रथमपठिताभिरित्यर्थः। गानेषु पर्वभिः पर्वनामभिः, ब्राह्मणेषु तत्तन्नामभिः उत्तरादिषु ऋचा, ऋचं पठित्वा होमः, अङ्गेषु च, अङ्गानि षट् अङ्गानामपि आदिं पठित्वा होमः इति एवं षष्टि-जुहोतयः। तत्र छन्दसामेकविंशतिः, गानचतुष्टयस्य पर्वादिनामभिरेकविंशतिः। संहिताग्रन्थत्रयस्य चतस्रो महानाम्नीभिः सह, अष्टौ ब्राह्मणानाम्, षट् अङ्गानाम्, एवं षष्टि-संख्याका आहुतयः" इत्याह।

---

1. 'सविताऽस्य देवतेति' ख। 2. 'अह:' क। 3. 'उच्यते' नास्ति ग। 4. 'नाधयन्तीत्यर्थ:' ख।

उदगयने सवित[1]र्युदङ्कं [2]पन्थानं प्रवृत्ते। चशब्दादेवमेवोपाकृत्य ततः पक्षिणीं रात्रिं काङ्क्षन्ते इति [3]अनुवर्तते।

यस्या रात्रेः पक्षाविवाभितोऽहनी व्यवस्थिते सा पक्षिणी [4]उच्यते(A); एतच्चार्थादारण्यकादीनामुपाकरणं येषां दक्षिणायने अध्ययनप्रतिषेधः।

तथाचोक्तम्—

नाधीयीत रहस्यानि सोत्तराणि विचक्षणः।
न चोपनिषदश्चैव षण्मासान् दक्षिणायनात्॥
उपाकृत्योदगयने ततोऽधीयीत धर्मवित्।
उत्सर्गश्चैक एवैषां तैष्यां प्रौष्ठपदेऽपि [5]च (B)॥ इति।

[6]किञ्च—

## उभयत एके त्रिरात्रम्॥ ११॥

उभयतः उभयोरप्युपाकरणयोः, एके आचार्याः त्रिरात्रं काङ्क्षणमनध्यायं मन्यन्ते; तच्च त्रिरात्रमुपाकरणाहा सह।

किञ्च—

## आचार्याणाञ्चोदकोत्सेचनमुभयत्र॥ १२॥

[7]अत्र आदि[8]शब्दो लुप्तवद् द्रष्टव्यः। आचार्यादीनाम् [9]इति। वक्ष्यति चायं[10] ऋषींस्तृपीनाचार्यांश्च तर्पयेयुरिति [सू० ३।३।१५]। उदकेनोत्सेचनम् उदकोत्सेचनम् उदकाञ्जलिप्रक्षेपैस्तर्पणमित्यर्थः। उभयत्र उभयोरप्युपाकरणयोः च[11]शब्दादुत्सर्गे

A. प्रमाणमत्र 'आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी' इत्यमरकोषः।

B. कर्मप्रदीपः ३।९।२-३।

अस्य विवृतौ शिवरामः—"दक्षिणायनात् षण्मासान् विचक्षणः स्वाचारकुशलः सोत्तराणि रहस्यानि उपनिषदो नाधीयीत, उपाकृत्य उदगयने धर्मवित् रहस्यादीन्यधीयीत। एषां रहस्यादीनामुत्सर्गस्तु एक एव पौष्ठपदे तैष्यां मतः उक्त इत्यर्थः। प्रौष्ठपदे मासि तिष्यः पुष्यस्तेन युक्ता तिथिस्तैषी तस्याम्। दिवसान्नधस्ताद् यः पुष्यस्तत्रोत्सर्ग इति" इत्याह।

1. '-तवि उर्ध्वं त्रि-' ख। 2. 'प्रथम-' ख। 3. 'अनुवर्तते' नास्ति ग। 4. 'उच्यते' नास्ति ग। 5. 'वा' ख-ग। 6. 'किञ्च' नास्ति ख। 7. 'अत्र' नास्ति ग। 8. 'अक्षलोपो द्रष्टव्यः' ख। 9. 'इति' नास्ति ग। 10. 'चायं' नास्ति ग। 11. 'चादुत्सर्गे' क।

च (A)। अन्ये तु अन्यथा व्याचक्षते¹। आचार्याणां गुरूणामिति¹। बहुवचनं तद्भ्रातृपुत्रोपसंग्रहार्थम्। तेषामुदकोत्सेचनं गन्धोदकोद्वर्त्तनेनाङ्गोत्सादनं शिष्यैः कर्तव्यमिति शेषः(B)। ²समानमन्यत्।

## श्रवणामेक उपाकृत्यैतमा सावित्रात् कालं काङ्क्षन्ते ॥ १३ ॥

श्रावणस्य पौर्णमासी श्रवणा तां प्रत्युपाकृत्य एके आ सावित्रादेतमवान्तरकालं ³तावत् काङ्क्षन्ते ⁴प्रतीक्षयन्ति, श्रावण्यामुपाकृत्य तावन्न पठन्ति यावद् भाद्रपदे हस्त इति(C)। द्वितीयायाः प्रयोजनं प्रौष्ठपदीशब्देन व्याख्यातम्(D)।

---

A. अत्र तर्कालङ्कारः—"आचार्याणां बहुवचनादन्येषाञ्च ऋष्यादीनां तर्पणं कर्तव्यम्। चशब्दादृष्यादिपूजनमपि कर्तव्यम्। तदिदं तर्पणादिकं होमात् पूर्वं कर्तव्यम्। तदाह कर्मप्रदीपः—'उत्सर्गेणैवोपाकरणं व्याख्यातम्। ऋषिसामान्याप्लावयन्तस्तथैव निमज्ज्याऽऽचम्य ऋषिसामानि गायन्त ऋषींश्च निगमादिभिः सम्पूज्य पुरस्ताच्छालाया उपलिप्तेऽग्नेः पश्चादाचम्योपविश्य छन्दांसि विच्छन्दांसि हुत्वा' इत्यादि।

अत्र यद्यपि ऋषिपूजा निमज्जनानन्तरं पठिता तथाऽप्युत्सर्गवन्निमज्जनतर्पणयोः पूर्वं प्रत्येतव्या, निमज्ज्य इति पूर्वकालता जुहोत्यपेक्षया इति नारायणोपाध्यायाः। युक्तञ्चैतत्, उत्सर्गेणैवोपाकरणं व्याख्यातम् इत्यतिदेशस्यार्थवत्त्वात्। किमन्यत् कुर्यादतिदेशः क्रमं विना। ऋष्याप्लवनादीनि हि स्वपदेनैव निर्दिश्यन्ते" इति व्याचख्यौ।

B. व्याख्यानमिदमसङ्गतम्, कस्मात्? सूत्रे अशब्दितत्वात्। तर्पणस्य च स्फुटमुपदेशात्।

उत्सादनञ्च गात्राणां स्नपनोच्छिष्टभोजने।
न कुर्याद् गुरुपुत्रस्य पादयोश्चावनेजनम्॥ ( म० स० २।२०९ )

इति मनुना गुरुपुत्रस्य गात्रोत्सादननिषेधाच्च। इति।

C. अत्र मनुसंहिता प्रमाणम्—

श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान्। ( ४।९५ )

अस्य कुल्लूकभट्टकृता व्याख्या च—"श्रावणस्य पौर्णमास्यां भाद्रपदस्य वा स्वगृह्यानुसारेणोपाकर्माख्यं कर्म कृत्वा सार्धांश्चतुरो मासान् ब्राह्मण उद्युक्तो वेदान् अधीयीत" इति।

D. तृतीयकण्डिकाप्रथमसूत्रव्याख्यानावसरे ( द्र०, पृ० ५५१ )।

---

1. '-ति शेषः' क। 2. 'समानमन्यत्' नास्ति च। 3. 'तावत्' नास्ति च। 4. 'प्रतीक्षयन्ति' नास्ति च।

## तैषीमुत्सृजन्ति ॥ १४ ॥

तिष्यः पुष्यः, तेन युक्ता तिथिस्तैषी। 'कुतः? सर्वत्राविगा¹नेनानुष्ठानात्'। ग्रन्थान्तरेऽपि "प्रौष्ठपदे तिष्येण बहिरि"त्यादि(A)। अन्ये अन्यथा वर्णयन्ति तिष्यः पुष्यः तस्य पौर्णमासी तैषी; तदयुक्तम्। ³कुतः? यदुक्तम्(B)—"तत आ पुनरुपाकरणात् वेदं न व्याहरेयुः अन्यत्र ब्रह्मयज्ञादि"त्यनेनाष्टौ ⁴मासाननाध्यायः स्यात् आरण्यकादीनां तु सदैव। ⁵तस्माद् यथोक्त एवार्थः। (C)

A. कर्मप्रदीपे छन्दसामुत्सर्गोपाकरणप्रकणे।

B. कर्मप्रदीपे निरुक्तप्रकरणे।

C. सूत्रस्यास्य व्याख्यायां तर्कालङ्कारः—"तैषः पौषः, तस्येयं तिथिस्तैषी। तां प्रत्युत्सृजन्ति, एके इत्यनुवर्त्त्यते। तथाच गृह्यान्तरकारः—'श्रवणेन श्रावण्यां पौर्णमास्याम्' इत्युपाकरणं सूत्रयित्वा 'पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजन्ति' इति पौषे मास्युत्सर्गं सूत्रयाञ्चकार, इति। अथवा तिष्यः पुष्यनक्षत्रम्, तद्युक्ता या काचित् तिथिः सा तैषी, तां प्रत्युत्सृजन्ति, उत्सर्गाख्यं कर्म कुर्वन्ति। तैषीं पौर्णमासीमिति कुतो न वर्ण्यते? सर्वत्राविगानेनानुष्ठानात्।

पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः।

इति मनुवचनाच। सा खल्वियं तैषी द्वयी बोद्धव्या, कथं नाम, प्रौष्ठपदोपाकरणपक्षे, उदगयनमुख्यतैषीम्, उदगयनोपाकरणपक्षे तु प्रौष्ठपदतैषीं प्रत्युत्सर्गः, एवञ्च "प्रौष्ठपदे तिष्येण बहिः" इत्यादिकर्मप्रदीपवचनमपि उदगयनोपाकरणपक्ष एव प्रौष्ठपदे उत्सर्गविधायकं मन्तव्यम्। आरण्यकादीनां खल्वध्ययनार्थमुदगयनोपाकरणम्। तस्यैव च प्रौष्ठपदे उत्सर्गः।

उपाकृत्योदगयने (क० प्र० ३।९।३)

इति वचनात्। प्रौष्ठपदोपाकरणे तु न प्रौष्ठपद एवोत्सर्गः। तत्र हस्तेनोपाकरणकर्त्तुस्तत्रैव पुनस्तिष्येणोत्सर्गस्यासम्भवात्।

अत एव मनुनाऽपि—

पुष्ये तु छन्दसां कुर्याद् बहिरुत्सर्जनं द्विजः।
माघमासस्य वा शुक्ले पूर्वाह्णे प्रथमेऽहनि॥ (म० स० ४।९६)

इति वचनोत्तरार्द्धेन प्रौष्ठपदोपाकरणपक्षाभिप्रायेणैव उदगयने उत्सर्गोऽभिहितः। प्रौष्ठपदोत्सर्गात् परतस्तु यावदन्यदुपाकरणं न क्रियते, तावदारण्यकादीनामध्ययनं न कर्त्तव्यम्। कस्मात्? "प्रौष्ठपदे तिष्येण बहिः" इत्यादिना उत्सर्गमभिधाय, 'तत आ पुनरुपाकरणाद् वेदं न

1. 'कुतः' नास्ति च। 2. 'विगानेनाचारो' ख। 3. 'कुतः' नास्ति च। 4. 'मासाननध्यायः' क। 5. 'तस्माद् यथोक्त एवार्थः' नास्ति च।

व्याहरेयुः अन्यत्र ब्रह्मयज्ञात्' इति कर्मप्रदीपवचने अतःशब्देन प्रकृतस्यैवोत्सर्गस्यावगतेः। 'नाधीयीते'ति कर्मप्रदीपवचनेन दक्षिणायने सर्वदैवारण्यकादीनामध्ययननिषेधाच्च। अन्यानि तु च्छन्दांसि उत्सर्गात् परमपि शुक्लपक्षेऽध्येतव्यानि।

तदाह मनुः—

यथाशास्त्रन्तु कृत्वैवमुत्सर्गं छन्दसां बहिः।
विरमेत् पक्षिणीं रात्रिं तदेवैकमहर्निशम्॥
अत ऊर्ध्वन्तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु सम्पठेत्॥ ( म० स० ४।९७-९८ )

इति। तदिदं वचनं परिशेषादारण्यकादिव्यतिरिक्तविषयमेवावधार्यते। तस्मादारण्यकादीनामेवा पुनरुपाकरणादनध्यायो नान्येषाम्। केचिदेतदबुद्धा बहु विरुद्धं ब्रुवन्ति स्म, अलं ग्रन्थगौरवजनकेन तदीयदूषणोपन्यासेन। वस्तुतस्तु अस्माकमुपाकरणद्वैविध्येऽपि उत्सर्गस्य न द्वैविध्यम्। उत्सर्गः खल्वेक एवोभयोरप्युपाकरणयोः प्रौष्ठपदे तैष्यां स्यात्। कुतः? उभयमुपाकरणं सूत्रयित्वा परतस्तैष्यामुत्सर्गस्य सूत्रणात् तथाऽवगतेः। अत एव कात्यायनेनापि 'प्रौष्ठपदे तिष्येण बहिः' इत्यादिना तथैवोक्तम्। न चेदमुदगयनोपाकरणाभिप्रायं वचनमित्यत्र प्रमाणमस्ति, तथात्वे चोत्सर्गान्तरं न स्यादेव, अनुपदेशात्, तस्मादेक एवोत्सर्गः प्रौष्ठपदे तिष्येणेत्यवधार्यते। अत एवोभयमुपाकरणमुपदिश्य—

'उत्सर्गश्चैक एवैषां तैष्यां प्रौष्ठपदेऽपि च'

इत्येकमेवोत्सर्गमभिधत्ते। न च प्रौष्ठपदे हस्तेनोपाकरणकर्तुस्तत्रैव पुनस्तिष्येणोत्सर्गो न सम्भवतीति वाच्यम्, वर्षान्तरे प्रौष्ठपदे हस्तेनोपाकर्तुर्वर्षान्तरे तत्रैव तिष्येणोत्सर्गस्य सम्भवात्। तथा गार्ग्यः—

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णेऽविवरे बहिः।
छन्दोगा मिलिताः कुर्युरुत्सर्गं स्वस्वछन्दसाम्॥
शुक्लपक्षे तु हस्तेन उपाकर्माऽपराह्णिकम्।

इति सिंहे रवौ पुष्यर्क्षे उत्सर्गमभिधाय हस्तेनोपाकरणमभिदधान एतदेवाऽऽह। अस्माद्वचनादस्माकमुपाकरणे अपराह्णः कालः स्यात्।

अध्यायानामुपाकर्म कुर्यात् कालेऽपराह्णिके।
पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः।

इति परिशिष्टवचनाच्चैतदेवं प्रतिपत्तव्यम्। गोभिलस्यैतदिति हेमाद्रिः।

तथा तस्यैव—

छन्दोगा मिलिताः कुर्युः प्रातरौत्सर्गिकीं क्रियाम्।
अपराह्णे ह्युपाकर्म पुष्यहस्तर्क्षयोर्द्विजाः॥ इति।

आचार्यादीनाम् उदकोत्सेचनमुक्तम्; तद्विधिविवक्षयेदमाह—

**प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य या आपोऽनवमेहनीयास्ता अभ्येत्योपस्पृश्य छन्दांस्यृषीनाचार्यांश्च तर्पयेयुः ॥ १५ ॥**

---

यदा पुनः सिंहस्थे सूर्ये शुक्लपक्षे यो हस्तः, तस्मात् प्राचीनः पुष्यः कर्कटस्थे रवौ भवति तदा तत्रैव पुष्ये उत्सर्गः करणीयः। कुतः?

मासे प्रौष्ठपदे हस्तात् पुष्यः पूर्वो भवेद् यदा।
तदा तु श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः ॥

इति परिशिष्टोक्तेः। तथा प्रौष्ठपदे हस्तस्य दुष्टत्वे तत्रोपाकरणं निषेधति चतुर्वर्गचिन्तामणौ स्मृतिः—

उपाकर्म न कुर्वन्ति क्रमात् सामग्यजुर्विदः।
ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु ॥

इति। तदेवम्भूतस्थले श्रावण एव हस्ते उपाकरणं कर्तव्यं भवति।

बह्वृचाः श्रवणे चैव हस्तर्क्षे सामवेदिनः।

इति परिशिष्टवचनात् श्रावणे हि बह्वृचाः श्रवणेनोपाकुर्वन्ति। गोभिलस्यैतदिति निर्णयामृतकारः।

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम्।
श्रावणं कर्म कुर्वीरन् ऋग्यजुःसामपाठकाः ॥

इति परिशिष्टवचनान्तरेऽपि श्रावणं कर्मेति समाख्यया तथाऽवगम्यते। विशेषमाह तुर्यवमनुकात्यायनौ—

अर्धरात्रादधस्ताच्चेत् संक्रान्तिग्रहणं तदा।
उपाकर्म न कुर्वीत परतश्चेत्र दोषकृत् ॥

इति। तस्मादियमेवावधारणा—प्रौष्ठपद्यां हस्तेनोपाकृत्य देवपर्वाणि गेयगानादीनि तावदधीयीत, यावदब्दान्तरे प्रौष्ठपदे तिष्यो भवति। उदगयने चोपाकृत्य उत्तरारण्यादिकं यावत् षण्मासानधीयीत, ततः प्रौष्ठपदे तिष्येण द्वयोरुत्सर्गं कुर्यात्। उत्सर्गात् परतस्तु यावदन्यदुपाकरणं न क्रियते, तावद् वेदं न व्याहरेदन्यत्र महायज्ञात्; अस्मच्छाखे तथैवोपदेशात्। एवञ्च उत्सर्गात् परमपि शुक्लपक्षेषु छन्दसामध्ययनबोधकानि यानि मन्वादिवचनान्युदाहृतानि तानि अस्मद्व्यतिरिक्तविषयाणि बोद्धव्यानि। अस्मच्छाखे प्रौष्ठपदशुक्लपक्षे तिष्येणोत्सर्गात् परतः पुनस्तत्रैव हस्तेनोपाकरणविधानात् तेषां वचनानां न तत्रावकाशो भवतीति। उपाकर्मविधिश्च कर्मप्रदीपादवगन्तव्यः।" इत्याह।

ग्रामात् [1]प्राङ् निष्क्रम्य उदङ् वा, निष्क्रमणस्यैवैष नियमो न त्व[2]पामपीति या आपः अनवमेहनीयाः। मिह सेचने, मूत्राद्युत्सर्गक्रियायोगात् मेहने शिश्नगुदौ उच्येते। तयोर्या अवाचीना अधःस्थाना अवमेहनीयाः, न अवमेहनीया अनवमेहनीया नाभिदघ्ना इत्यर्थः। उक्तञ्च—"नाभिदघ्न उदकेऽनुपविष्टा" इति। [3]तादृग्भूता अपोऽभ्येत्य आगत्य। उपस्पृश्य स्नात्वा छन्दःप्रभृतीनि तर्पयेयुः। चशब्दाद् ग्रन्थान्तरोपदिष्टांश्च ब्रह्मादीन्। तर्पणमञ्जलिभिश्चात्र कुशमयानामृषीणाम् अभिषेकः कार्यः। उक्तञ्च—"कौशान् ऋषीन् स्थलस्थान् गन्धमाल्यधूपादिभिः सत्कृत्य नाभिदघ्न उदकेऽनुपविष्टा ब्रह्माणं वेदान् देवान् [4]ऋषीन् छन्दांस्याचार्यांश्च तर्पयन्त [5]उदीर्षीनभिषिञ्चन्तीति। ऋषीणां सिच्यमानानामिति च(A)"। [6]अत्र सन्देहः—यथाश्रुतयैव विभक्त्या तर्पणं कर्त्तव्यम्, उत प्रथमया ? यथाश्रुतयेति ब्रूमः। [7]कुतः ? नित्योदकतर्पणस्यापि द्वितीययैव विधानात्।

[8]यवाद्भिस्तर्पयेद् देवान् सतिलाभिः पितॄनपि।
नामान्ते तर्पयामीति आदावोमिति च ब्रुवन्(B)॥ [9]इति।

प्रयोगस्तु—ब्रह्माणं तर्पयामि, देवांस्तर्पयामि, [10]ऋषींस्तर्पयामि[10]*, छन्दांसि तर्पयामि, [11]आचार्यांश्च तर्पयामीति[11]*। उपास्मै गायतेत्यध्यायैः [12]ऋगन्तैस्तर्पणम् अर्धर्चैर्वा [13]वंशेष्वृषीणां प्रतिनामभिरिति(C)।

A. प्रमाणीकरोति ग्रन्थभागमिमं तर्काङ्कारोऽपि स्वभाष्ये 'तथाच कर्मप्रदीपः' इत्युपोद्घातेन। अस्मदुपलब्धकर्मप्रदीपग्रन्थे तु (ऋषीणां सिच्यमानानामिति च) भागोऽयं नोपलभ्यते।

B. कर्मप्रदीपः २।२।

C. अत्रोपाकर्मण्युत्सर्गे च सूर्यादिचारेऽपि तिलैस्तर्पणं न निषिध्यते, तथाच रघुनन्दनोक्ता मदनपारिजातधृता स्मृतिः—

अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च।
उपाकर्मणि चोत्सर्गे युगादौ मृतवासरे॥
सूर्यशुक्रादिचारे च न दोषस्तिलतर्पणे॥ इति।

नन्विदं सूत्रमुपाकरणोत्सर्गयोरनन्तरं ब्रह्मचारिणां उत्सर्गेऽपि तर्पणं दर्शयति। उपाकरणमुत्सर्गश्च गृहस्थवानप्रस्थाभ्यामपि कर्तव्यम्, अन्यथा तावद्यातयामता छन्दसो न भवेत्, तथाच चन्द्रकान्तधृता स्मृतिः—

1. 'प्राङ्निष्क्रमणस्यैवैष' क-ख। 2. '-पोऽपीति' ख। 3. 'तथैवंभूता' ख। 4. 'ऋषीन् छन्दांस्या-चार्यांश्च-' क-ख। 5. 'उदीर्षीनभि-' ख। 6. 'तत्र' ख। 7. 'कुतः' नास्ति च। 8. 'यवाद्भिः' खा 9. 'इति' नास्ति च। 10. नास्ति ख। 11. नास्ति ख। 12. 'ऋगन्तैश्च-' ख। 13. 'वंशेष्वृषीणां' च।

इदानीमनध्यायविवक्षयेदमाह—

तस्मिन् प्रत्युपाकरणेऽभ्रानाध्याय आ पुनरुपाकरणाच् छन्दसः ॥ १६ ॥

उद[1]गयनोपाकरणं प्रत्युपाकरणम्, तस्मिन् प्रत्युपाकरणे कृते सति अभ्रदर्शने अनाध्यायः अभ्रानाध्यायः। अभ्रदर्शनं चात्र[2] पञ्चरूपं [3]द्रष्टव्यम्। [4]केवलस्य तु

उपाकर्मोत्सर्जनञ्च वनस्थानामपीष्यते।
धारणाध्ययनाङ्गत्वाद् गृहिणां ब्रह्मचारिणाम् ॥ इति।

अथ छन्दसाम् उत्सर्गप्रयोगः—भाद्रपदमासीयहस्तादधस्तनपुष्यनक्षत्रं यावद् गृहीतानामृषीणां प्रत्यहं पूजनम्। पुष्यनक्षत्रयुतेऽहनि प्रातरेव सशिष्यः प्राङ्मुख उदङ्मुखो वा ग्रामाद् बहिर्नद्यादौ गत्वा प्रत्यहं पूजनं करिष्ये इति संकल्प्य यथाविधि स्थापितान् ऋषीन् पूजयेत्। ततो देशकालौ सङ्कीर्त्य छन्दसामाप्यायनार्थं यातयामत्वदोषनिवृत्तये वेदोत्सर्गकर्मणि ऋषीणां पूजनं तर्पणञ्च करिष्ये इति सङ्कल्प्य, आवाहनं विना पूर्ववदृषीन् सम्पूज्य तथैव तर्पयित्वा पुनः सम्पूज्य ऋषीन् प्लवसाम्ना प्लावयेत्।

२   २   २   २   २A ३   ५   २   २ A ३   ५
हा। वो ३ हा। वो ३ हा ३। हा। ओ २, ३, ४ वा। हायि। पूलाना २, ३, ४: सो।
२ A ३   ५   २ A ३   ५   २A ३   ५   २A ३   ५
माधारा २,३,४, या। आपोवा २,३,४, सा। नोअर्वा २,३,४, सी। आरत्ना २,३,४, धाः।
२A ३   ५   २ A ३   ५   २ A ३   ५
वोमीमा २,३,४, र्तां। स्यासीदा २,३,४ सी। उत्सोदा २,३,४ यिवो।
२ A ३   ५   २ A २   २   २   २A ३   ५
हामिरण्या २,३,४ याः। हा। वो ३ हा। वो ३ हा ३। हा। ओ २,३,४ वा।
२   ५र र   २ १ २ १ २र १र २र २२ ११ ११
हा ३,४, औ होवा। ए३ अतिविश्वानिदुरितातरेमा २,३,४,५।

प्लवोऽस्वहं भवति समुद्रं वा एते प्रस्नान्ति ये संवत्सरमुपयन्ति यो वा अप्लवः समुद्रं प्रस्नाति न स तत उदेति यत् प्लवो भवति स्वर्गस्य लोकस्य समष्ट्या अतिविश्वानि दुरिता तरेमेति यदेवैषां दुरुतं दुःशस्तं तदेतेन तरन्ति ॥ ततो निमज्याऽऽचम्य गृहमागच्छेयुः। तत आ पुनरुपाकरणाच् छन्दसामनध्यायोऽन्यत्र ब्रह्मयज्ञात् ॥ इति। एवञ्च ब्रह्मचारिणां गृहस्थानां वानप्रस्थानाञ्च उपाकर्मोत्सर्जने तावदावश्यके, अन्यथाऽधीतवेदानां यातयामता स्यादिति।

1. '-गयनेनोपा-' ख। 2. 'चत्र-' नास्ति च। 3. 'द्रष्टव्यम्' नास्ति च। 4. 'न केवलस्य' क-च।

बाहुल्येन सम्भवात्। 'तथाच गृह्यान्तरम्—सर्वरूपेऽभ्र²दर्शने इति(A)। ³कानि पुनः पञ्चरूपाणि ? उच्यन्ते—⁴वाय्वभ्रविद्युत्स्तनितवर्षाणी⁵ति पञ्चरूपाणि। कस्यानध्यायः ? छन्दसः वेदस्य। एवञ्च अङ्गादीनामध्ययने न दोषः। कियन्तं कालम् ? आ पुनरुपाकरणात् प्रौष्ठपदीं हस्तेनोपाकरणमिति यावत्।

ननु न अध्यायः अनध्याय इति वक्तव्ये कस्माद्दीर्घत्वम् ? उच्यते—अन् आ अध्याय इत्याङ्⁶शब्दप्रयोगात् ⁷श्रवणव्याख्यानचिन्तनादीनामपि वेदविषयाणामुपसंग्रहार्थम्, एतान्यप्यनध्याये न कार्याणीति, ब्रह्मयज्ञेषु न दोषः। कुतः⁷* ?

वेदोपकरणे चैव स्वाध्याये चैव नैत्यके।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि(B) ॥ इति मनुवचनात्।

अनध्याया द्विविधाः। तत्र नित्यानाह हारीतः—

प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः।
श्वोऽनध्यायेऽद्य शर्वर्यां नाधीयीत कदाचन(C) ॥

---

A. गृह्यान्तरवचनमिदं प्रमाणीकरोति तर्कालङ्कारः 'अभ्रदर्शने च सर्वरूपे इति गृह्यान्तरात्' इत्युक्त्वा।

B. मनुसंहिता २।१०५। अस्य व्याख्यायां मेधातिथिः—"उपकरणमुपकारकं वेदाङ्गं कल्पसूत्रनिरुक्ताद्युच्यते। तस्मिन् पठ्यमाने अनध्यायेऽप्यनुरोध आदरो नास्ति। स्वाध्याये होममन्त्रेषु चैव ह्यनध्याया नाऽऽदरणीयाः, अनध्यायेष्वध्येतव्यम्। न निरोध इति वा पाठः। निवृत्तिरनध्यायेष्वध्ययनस्य नास्ति, यद्यप्यध्ययनविधिधर्मोऽनध्यायेष्वनध्ययनम्, अध्ययनविधिश्च स्वाध्यायविषयः, स्वाध्यायश्च वेदः, न च वेदशब्दवाच्यान्यङ्गानि, तथाऽपि वेदवाक्यमिश्रत्वबुद्धिः स्यादिति स्पष्टार्थमुच्यते। दृष्टान्तो वाऽयम्, वेदाङ्गेष्विव वेदेऽपि अनध्यायो नास्ति, होममन्त्रेषु अग्निहोत्रहोमे ये मन्त्रा अन्यस्मिन् वा सावित्रादिशान्तिहोमे। एतच्च प्रदर्शनार्थम्, शश्वद् जपप्रैषादिमन्त्राणां कर्माङ्गाणां वैदिकवाक्योच्चारणमात्रधर्मोऽनध्यायानध्ययनं स्वाध्यायनविधिप्रयुक्त इति मन्यमानो होमादिमन्त्रेषु चतुर्दश्यादिष्वनुच्चारणं प्रपद्येत, यः सन्न्यायसिद्धेनार्थेनानुवमानेन प्रतिबोध्यते। स्वाध्यायाध्ययनविधिप्रयुक्तमनध्यायानुक्रमणं न वेदधर्मः, ततो नास्ति कर्माङ्गमन्त्रेष्वनध्यायः। नैत्यके स्वाध्याये, सर्वाश्रमिणां विहिते नित्ये स्वाध्यायविधौ" इत्याह।

C. मुद्रितहारीतसंहितायां नोपलभ्यते। परं वचनमिदं प्रमाणीकृतं कमलाकरभट्टेन निर्णयसिन्धौ 'पारिजाते बृहस्पतिरि'त्युपोद्घातेन।

---

1. 'तथाच' नास्ति ख। 2. '-दर्शनमिति' क। 3. 'यथा च' ख। 4. 'वायभ्र-' ख। 5. 'इति पञ्चरूपाणि' नास्ति ख। 6. 'शब्दः प्रयुज्यते' ख। 7. 'अत एव वेदश्रवणव्याख्यानचिन्तनादिर्मोक्षनध्यायः' क-घ।

नैमित्तिकानाह योगीशः—

श्वक्रोष्टुगर्दभ इत्यादि(A) ।

नारदः—

अयने विषुवे चैव शयने बोधने हरेः ।
अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु(B) ॥

रत्नमाला—

माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी ।
तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः ॥

मत्स्यपुराणम्—

अश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी तथा ।
तृतीया माधवस्याथ तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी तथा ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादय इमे दत्तस्याक्षयकारिकाः ।

वेदोपकरणान्यङ्गानि । नित्यस्वाध्यायो ब्रह्मयज्ञः ।

---

A. तदुक्तं याज्ञवल्क्यसंहितायाम्—

श्वक्रोष्टु-गर्दभोलूकसामबाणार्तनिःस्वने ।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ।
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्धरात्रेऽतिमारुते ॥
पांशुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः ॥ इति ।

( या० स० १।१४८-५१ )

B. प्रामाण्येनोपन्यस्तं नारदवचनमिदं निर्णयसिन्धावनध्यायप्रकरणे ।

शौनकः—

नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च ।
नानध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे स्मृतः(A) ॥ इति ।

किञ्च—

## विद्युत्स्तनयित्नुपृषितेष्वाकालम् ॥ १७ ॥

विद्युत्स्तनयित्नु[1]पृषितेषु निमित्तेषु विद्युत्[2]स्तनितवर्षेष्वित्यर्थः । आकालम् [3]इति निमित्तकालात् प्रभृति तावद् यावदपरेद्युः स एव काल [4]इति । एतानि [5]च विद्युदादीनि कालसामर्थ्यात् प्रादुःकृतेष्वग्निषु सदा भवन्ति । इतरथा वर्षास्वेषां बाहुल्येन सम्भवात् स्वाध्यायाभावः ।

---

A. अथानध्यायानाह मुहूर्तचिन्तामणौ दैवज्ञरामः—

"शुचिशुक्रपौषतपसां दिगग्निवसुद्व्यर्कसंख्यसिततिथयः ।
भूतादित्रितयाष्टमिसंक्रमणं च व्रतेष्वनध्यायाः ॥

अस्य व्याख्यायां स एव—आषाढशुक्लदशमी ज्यैष्ठशुक्लद्वितीया पौषशुक्लैकादशी माघशुक्लद्वादशी एतेऽनध्यायाः । भूतश्चतुर्दशी, तदादित्रितयं चतुर्दशीपूर्णिमाप्रतिपदः, कृष्णपक्षे अमावास्या, तन्मध्ये अष्टमी च तयोः समाहारः । तथा संक्रमणं सूर्यस्य निरयनं संक्रान्तिदिनम् । चकारात्-'मन्वाद्याद्वितिथी मधावि'त्यादिनोक्ताः । तत्राऽऽषाढशुक्लदशमी पौषशुक्लैकादशी च मन्वादी, ज्यैष्ठशुक्लद्वितीया माघशुक्लद्वादशी च सोपपदे, यद्यपि चैत्रशुक्लतृतीया मन्वादिर्वैशाखशुक्लतृतीया युगादिः, तथाऽपि ते उभे तृतीये नानध्यायौ । तथैव फाल्गुनकृष्णद्वितीया चातुर्मास्यद्वितीयाऽपि नानध्यायः । तासां प्राशस्त्याभिधानात् ।

तथाच वसिष्ठः—

या चैत्रवैशाखसिता तृतीया माघस्य सप्तम्यथ फाल्गुनस्य ।
कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजवसिष्ठमुख्यैः ॥

गौतमः— पक्षद्वये चतुर्दश्यामष्टमीद्वितये तथा ।
पक्षादावपि पक्षान्ते ब्रह्म नाधीयते नरैः ॥

फलं च— अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी ।
अमावास्योभयं हन्ति प्रतिपत् पाठनाशिनी ॥

---

1. '-वर्षितेषु' क-च । 2. '-स्तनयित्नुवर्षितवर्षेष्वित्यर्थः' ख । 3. 'इति' नास्ति च । 4. 'इति' नास्ति च । 5. 'च' नास्ति ख ।

मनुः—

चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु ।
अष्टकासु च संक्रान्तौ शयने बोधने हरेः ।
अनध्यायं प्रकुर्वीत तथा सोपपदासु च ॥ इति

चातुर्मास्यद्वितीया गर्गेणोक्ताः—

आषाढफाल्गुनोर्जेषु या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति महर्षयः ॥

सिता ज्यैष्ठे द्वितीया च आश्विने दशमी सिता ।
चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥

नैमित्तिका अनध्यायास्तु स्मृत्यर्थसारे—

निर्घातभूकम्पोल्कानिपतनादिसर्वाद्भुतेष्वाकालिकानध्यायाः ।

अग्न्युत्पाते वाऽकालवृष्टौ वा । आर्द्रादिज्येष्ठान्तात् कालादन्यत्राकालवृष्टिः । सायं सन्ध्यागर्जने उदयान्तोऽनध्यायः । अर्द्धरात्रादूर्ध्वं गर्जनेऽर्द्धरात्रे चाकालिकोऽनध्यायः । प्रातः सन्ध्यागर्जने त्वहोरात्रमिति । कालं मर्यादीकृत्येत्याकालम् । आकाले भव आकालिकः । यस्मिन् काले निमित्तमुत्पन्नं तदारभ्य द्वितीयदिने तत्कालपर्यन्तमित्यर्थः ।

स्मृतिरत्नावल्याम्—

अनुराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः ।
यावच्चरति वै तावदकालं मुनयो विदुः ॥

कालवृष्टौ तु तत्कालमकाले तु त्रिरात्रकम् ।
अतिमात्राऽथवा वृष्टिर्नाधीयीत दिनत्रयम् ॥

आपस्तम्बः—

उल्कायामग्न्युत्पाते च सर्वासां विद्यानामाकालिकम् । इति ।

मनुः— चौरैरुपप्लुते ग्रामे संग्रामे चाग्निकारिते ।
आकालिकमनध्यायं विद्यात् सर्वाद्भुतेषु च ॥ इति ।

अद्भुतेषु रुधिरादिवृष्टिषु ।

वसिष्ठः—

उपलरुधिरप्रपाते त्र्यहम् इति ।

स्मृत्यन्तरे—

विद्युद्गर्जितवृष्टीनां सन्निपातो यदा भवेत् ।
कालवृष्टौ तु तत्कालमकाले तु त्रिरात्रकम्" ॥ इति ।

तथाच मनुः—

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने (A)। इति।

अथवा [1]सर्वेषां विद्युदादीनाम् अप्रादुःकृतेष्वप्यग्निषु एककालतया सन्निपाते आकाल-मनध्यायः।

तथाच—

विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् (B)॥ इति।

---

A. मनुसंहिता ४।१०६। अस्योत्तरार्धन्तु—

सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा॥ इति।

अस्य कुल्लूकभट्टोक्ता व्याख्या—"होमार्थं प्रकाशितेष्वग्निषु, सन्ध्यायां यदा विद्युदर्गर्जित-शब्दावेव भवतो न तु वर्षं तदा सज्योतिरनध्यायः स्यान्नाऽऽकालिकः। तत्र यदि प्रातः सन्ध्यायां विद्युद्गर्जितशब्दौ तदा यावत् सूर्यज्योतिस्तावदनध्यायो दिनमात्रमेव, यदि सायं सन्ध्यायां तौ स्यातां तदा यावन्नक्षत्रज्योतिस्तावदनध्यायो रात्रिमात्रमिति, रात्रौ स्तनितविद्युद्वर्षेष्विति त्रयाणां पूर्वोक्तानां शेषे वर्षाख्ये त्रितये जाते यथा दिवाऽनध्यायस्तथा रात्रावपि अहोरात्र एवेत्यर्थः" इति।

B. मनुसंहिता ४।१०३। अत्र कुल्लूकभट्टः—"विद्युदगर्जितवर्षेषु द्वन्द्वनिर्देशाद् युगपदुप-स्थितेषु महतीनां चोल्कानां संप्लवे इतस्ततः पाते सति। आकालिकमिति तु निमित्तकाला-दारभ्यापरेद्युर्यावत् स एव कालस्तावत्पर्यन्तमनध्यायमेतेषु मनुरवोचत्" इति व्याचख्यौ।

सूत्रस्यास्य व्याख्यायां तर्कालङ्कारः—"विद्युत् प्रसिद्धा, स्तनयित्नुः सशब्दो मेघः। पृषन्ति बिन्दवः संजातान्यस्येति पृषितं वर्षणमित्येतत् एतेषु मिलितेषु जातेषु आकालं निमित्तकाला-दारभ्यापरेद्युर्यावत् स एव कालस्तावन्तं कालम्। छन्दसोऽनाध्याय इत्यनुवर्त्तते। तानि खल्वेतान्यनृतौ यदैव जायन्ते तस्मादेव कालादारभ्य आकालमनध्यायं कुर्वन्ति, ऋतौ तु प्रादुष्कृताग्निसमय एव। तथाच मनुः 'विद्युत्स्तनिते'ति।

एतांस्त्वभ्युदितान् विद्याद् यदा प्रादुष्कृताग्निषु।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने॥ (म० स० ४।१०४) इति।

अत्र खलु 'अनृतौ चाभ्रदर्शने' इति परतः कुर्वन् प्रादुष्कृताग्निष्वमीषामभ्युदये ऋतावप्याकालिकमनध्यायं बोधयति। सन्ध्यासु विद्युत्स्तनितयोः सन्निपाते पुनः सज्योतिरन-ध्यायः। वर्षणे त्वहोरात्रम्। कस्मात्? प्रादुष्कृतेष्वित्यादिमनुवचनात्। तदत्र विद्युत्-स्तनितनिस्वने इति समासकरणात् द्वयोः सन्निपातं दर्शयति। शेषे विद्युत्स्तनितवर्षेषु इति

---

1. 'सर्वेषां' नास्ति ख।

# उल्कापातभूमिचलज्योतिषोरुपसर्गेषु ॥ १८ ॥

'उल्कापातः प्रसिद्धः'*, भूमिचलः क्षितिकम्पः। ज्योतिषोः सूर्याचन्द्रमसोः, उपसर्गो राहुणा ग्रहणम्। एषु आकालमनाध्याय इति [2]वर्त्तते ( A )।

पूर्वोक्तानां शेषे वर्षे सति यथा दिवाऽनध्यायस्तथा रात्रावपीत्यहोरात्रमित्यर्थः। रघुनन्दनस्त्वेतद्विशेषमनालोचयन् महोल्कासहचरितत्वेन महागर्जनमाकालिकम्, अल्पगर्जने तु सज्योतिरनध्याय इत्येकत्र, वर्षासु सज्योतिरिति चान्यत्र वर्णयाञ्चकार। यत् पुनर्हारीतवचनम्—'सायं-सन्ध्यास्तनिते रात्रिं प्रातःसन्ध्यायामहोरात्रमि'ति केवलस्तनितेऽप्यनध्यायं विदधाति, तदपि वाचनिकत्वादविरुद्धम्। यदि पुनर्विद्युत्स्तनितयोः सन्निपाते सज्योतिः केवलस्तनिते अहोरात्रमिति वैषम्यादयुक्तमिति विभाव्यते, तदा तद्वचनं धर्मनैपुण्यकामं प्रति बोद्धव्यम्।

कुतः ?

नित्यानध्याय एव स्याद् ग्रामेषु नगरेषु च।
धर्मनैपुण्यकामानां पूतिगन्धे च सर्वदा॥ ( म० स० ४।१०७ )

इति मनुवचने धर्मनैपुण्यकामतयाऽप्यनध्याये विशेषदर्शनात्। विद्यानैपुण्यकामस्य च नैषोऽनध्याय इति द्रष्टव्यम्। अनयैव दिशा—

सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम्॥

इत्येवमाद्याः स्मृतयोऽपि व्याख्याताः। सोऽयं मनोः स्वरसलब्धः शास्त्रार्थः, अथात्रापरितोषोऽनध्यायरुचीनां प्रत्येकमेवामीषामनध्यायनिमित्तत्वमस्तु। तथाऽपि वचनान्तराणि धर्मनैपुण्यविद्यानैपुण्यकामविषयतयैव व्याख्येयानि। तत्राप्यतिशयविशेषाद् विशेषो विवेचनीयः। अथवा अस्मदाचार्यस्यैतावदेव मतं मतान्तराणि चान्येषामिति न किञ्चिदनुचितम्। मतभेदाः खल्वेते उच्चावचानध्यायकल्पाः। न त्वेषां विरोधपरिहारार्थमतीव यतितव्यमिति। सा चेयं रीतिरन्यत्रापि यथासम्भवमनुसरणीया" एवमाह।

A. सूत्रमिदमित्थं व्याचख्यौ तर्कालङ्कारः—'उल्का—

बृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला।
पौरुषी च प्रमाणेन उल्का नानाविधा मता॥

इत्युक्तलक्षणा। तासां पाते इतस्ततोऽनेकमहोल्कानां सम्पाते। कुतः ? 'महोल्कानाञ्च संप्लवे' इति वचनात्। एतेनोल्कापातेऽहोरात्रानध्यायविधायिकाः स्मृतयोऽपि व्याख्याताः। भूमिचलने पृथिव्यां चलितायाम्। तत्राहोरात्रानध्यायपरं स्मृत्यन्तरं विद्यानैपुण्यकामविषयं वर्णनीयम्। ज्योतिषोश्च सूर्याचन्द्रमसोरुपसर्गे ग्रहणे। एतेषु निमित्तेष्वाकालं छन्दसोऽना-

1. नास्ति च। 2. 'वर्त्तते' न वर्त्तते च।

ध्याय इति वर्तत एव। समासकरणमत्र लाघवार्थम्। एकैकशः खल्वमीषामनध्याय-निमित्तत्वम्। तच्च ऋतावप्यविशिष्टम्।

तथाच मनुः—

निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्पणे।

एतानाकालिकान् विद्यादनध्यायानृतावपि॥ (४।१०५)

इति। अत्र खल्वसमासकरणाद् बहुवचननिर्देशाच्च प्रत्येकमेषामनध्यायनिमित्तत्वमवगम्यते।

यत्तु— प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्।

त्र्यहं न कीर्तयेद् ब्रह्म राज्ञो राहोश्च सूतके॥ (४।११०)

इति मनुवचनम्, तद्धर्मनैपुण्यकामविषयम्। यद्यपि—

समाप्य वेदं द्युनिशमारण्यकमधीत्य च।

पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके॥ (या० स्मृ० १।१४५-६)

इति याज्ञवल्क्यवचनम्, तद्विद्यानैपुण्यकामपरमित्यविरोधः। अपरं त्वाहुः—द्युनिशमिति प्रकृतेऽपि 'कृतेऽन्तरे त्वहोरात्रम्' इति तस्यैव परतोऽप्यहोरात्रग्रहणं राहुसूतकादीनामाकालिकत्व-प्रज्ञापनार्थम् इति। यच्च त्रिरात्रानध्ययनं ग्रस्तास्तोदयमात्रविषयमिति तत्त्वकारादिभि-र्वर्णितम्, तदप्रमाणम्। अनिष्टाधिक्यमिति चेन्नाविशेषात्। इति चेत् पश्यसि ग्रस्तास्तोदय-पक्षे अनिष्टाधिक्यादनध्यायाधिक्यमिति। तन्न, कस्मात्? अविशेषात्। न खल्वनिष्टाधिक्य-स्यानध्यायाधिक्यहेतुत्वे वचनमस्ति, इति तत्राप्यविशिष्टः प्रमाणाभावः। तदभावेऽप्युपदेशाच्चा-युक्तम्। वसन्तादिषु खल्वृतुषु निर्घातादयः किल न दोषमावहन्ति, परमेषामनिष्टजनकत्वा-भावेऽप्यनध्ययनमुपदिश्यते। तथाचोक्तम् 'अनध्यायानृतावपि' इति। अनिष्टाधिक्यस्यानध्याया-धिक्यहेतुत्वे त्वनिष्टाभावेऽनध्याय एव न स्यात्। तस्मादनिष्टजनकत्वाभावेऽप्यनध्यायोप-देशाद् अनिष्टाधिक्यादनध्यायाधिक्यमित्येतदयुक्तम्।

यच्चापरमुक्तं चैत्रश्रावणमार्गशीर्षाणामादिप्रतिपदां नित्यानध्यायत्वाद् राहुसूतके इत्यपि नित्यत्वार्थम्, अन्यथा तदहोरात्रस्य पञ्चदशीप्रतिपद्घटितत्वादनध्यायप्राप्तौ राहुसूतक इत्यनेन पुनरनध्यायाभिधानेऽनुवादापत्तेरिति, तदप्यसङ्गतम्। कस्मात्? प्रमाणविशेषस्याभावात्। अपि च—

इमान् नित्याननध्यायानधीयानो विवर्जयेत्।

इत्युपक्रम्य मनुना पञ्चदश्यादीनामप्युपदेशात् पञ्चदश्यादीनामपि नित्यानध्यायत्वमेवेति तत्रापि पञ्चदश्यंशे अनुवादोऽवर्जनीयः स्यात्। तद्वरं राहुसूतके इत्याकालिकाभिप्रायमित्येव मत-माद्रियताम्। पञ्चदशीप्रतिपदोः सन्ध्यावुपरागस्य सम्भवेन चैत्राद्यतिरिक्तप्रतिपदां काम्या-नध्यायत्वाभ्युपगमेन च पुनरुक्तेरनवकाशादिति धीमद्भिरवधेयम्। ब्राह्मणपरिव्राजकन्यायेन समाधानन्तु पक्षान्तरेऽपि समानम्। एवमपरापराण्यपि वचनानि व्याख्येयानि' इति।

## निर्घाते च ॥ १९ ॥

आकालमिति [1]वर्त्तते। निर्घातः सशब्द उल्कापातः (A)।

## अष्टकामावास्यासु नाधीयीरन् ॥ २० ॥

अपूपाष्टकादीनां त्रिरात्रमनाध्यायोपदेशात् (B) इह त्वहोरात्रिकाधिकारादष्टका अष्टमी [2]उच्यते। (C) अमावास्योक्तलक्षणा[3]*। अष्टकामावास्यास्विति बहुवचनमा[4]वृत्यपेक्षम्। नाधीयीरन्, अहोरात्रमिति वक्ष्यमाणेन [5]सह सम्बन्धः। [6]अनाध्याय इति प्रकृते नाधीयीरन्निति [7]च पुनर्वचनम्—[8]इत आरभ्य अहोरात्रिका अनाध्याया अधस्तात्त्वाकालिका इति ज्ञापनार्थम् (D)।

---

A. निर्घातश्च—

'वायुनाऽभिहते वायौ गगनाच्च पतत्यधः।
प्रचण्डघोरनिर्घोषो निर्घात इति कथ्यते॥

इति शब्दमाला।

यदाऽन्तरिक्षे बलवान् मारुतो मरुता हतः।
पतत्यधः स निर्घातो जायते वायुसम्भवः।

इति च ज्योतिषम्' इति शब्दकल्पद्रुमः।

B. तथाच "त्रिस्रोऽष्टकास्त्रिरात्रम्" इति गौतमसंहिता १६।

C. अमावास्यालक्षणमुक्तं प्राक् ( पृ० १३८ )

D. अत्र 'अनाध्याय' इत्यस्यानुवर्तने 'छन्दस' इत्यप्यनुवर्तेत? अतस्तन्निरासार्थं नाधीयीरन् इति वचनम्। एवञ्चेह छन्दस इति विशेषाभावादङ्गादीनामप्येवमादयोऽनध्याया भवन्ति। तथाच गृह्यान्तरम्—'वातेऽमावास्यायामिति सर्वानध्यायाः' इति। सर्वशब्दादङ्गानामपि न छन्दसामेवेति कर्कभाष्यम्। सर्वग्रहणेन शिल्पाद्यपि गृह्यते, शिल्पिनामपि ह्यनध्यायप्रसिद्धिरस्तीति केचिदाहुः।

अत्र रघुनन्दनः—"पराशरभाष्ये कूर्मपुराणम्—

अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः।
न धर्मशास्त्रेष्वन्येषु पर्वस्वेतानि वर्जयेत्॥ इति (कू० पु० उ० १४।८४)

---

1. 'वर्त्तते' नास्ति घ। 2. नास्ति घ। 3. '-लक्ष्योक्तम्' ख। 4. 'सह' नास्ति घ। 5. 'न अनध्याय' ख। 6. 'च' नास्ति क-च। 7. 'उच्यते इत आरभ्य-' क-ख।

## पौर्णमासीषु च ॥ २१ ॥

अहोरात्रं नाधीयीरन् इति 'वर्त्तते । [1]पौर्णमासी (A)उक्तलक्षणा[2]*, बहुवचनं पूर्ववत् । चशब्दात् चतुर्दशीषु [3]च ।

अङ्गान्याह शिक्षापद्यम्—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते ।
ज्योतिषामयनं नेत्रं निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ इति ।

कल्पो नानाशाखागतलिङ्गादिकल्पितः प्रत्यक्षवेदमूलकः स्वसंज्ञाभिरनुष्ठानप्रतिपादको ग्रन्थ इति कल्पतरुः । ज्योतिषामयनं ज्योतिःशास्त्रम् । निरुक्तं वैदिकशब्दनिर्वचनग्रन्थः । पर्वस्वित्यनेन संक्रान्तिपरिग्रहे अयनविषुवयोरेव परिग्रहः । तथाच नारदः—'अयने विषुवे चैत्रे'ति । सन्ध्यागर्जने तु शाखमात्रचिन्तानिन्दामाह कृत्यचिन्तामणौ दुर्वासाः—'सन्ध्यायां गर्जिते मेघे' इति । 'प्रादुष्कृतेष्वग्निषु तु' इति मनुवचनं वर्षाविषयम् । अग्निषु तु आवसथ्यादिप्रादुष्कृतेषु होमार्थं प्रज्वलितेषु प्रातः-सायंसन्ध्यायामित्यर्थः । तस्यां विद्युत्स्तनितनिस्वने सति सौरनक्षत्रान्यतरज्योतिषा सह वर्तते यः कालः स दिनमात्रं वा रात्रिमात्रं वेत्यर्थः ।

अष्टम्यादिषु विशेषमाह हेमाद्रिधृतापस्तम्बः—

उदयेऽस्तमये वाऽपि मुहूर्तत्रयगामि यत् ।
तद्दिनं तदहोरात्रमनध्यायविदो विदुः ॥
केचिदाहुः क्वचिद् देशे यावत् तद्दिननाडिकाः ।
तावदेव त्वनध्यायो न तन्मिश्रे दिनान्तरे ॥ इति ।

तद्दिनं तां तिथिं प्राप्येत्यर्थः । दिनान्तरे तिथ्यन्तरे । तत्र पूर्ववचनमुत्तरमीमांसाध्यायिभिः परिगृहीतम्, परवचनन्तु अन्यग्रन्थपरम् ।

यत्तु निर्णयामृतधृतम्—

प्रतिपल्लवमात्रेण कलामात्रेण चाष्टमी ।
दिनं दूषयते सर्वं सुरा गव्यघटं यथा ॥

इति । तद् दूषयते इत्यभिधानात् पूर्ववर्तितामात्रेण सर्वदिनदूषणाय ।" इति,

"सा च यौधिष्ठिरी सेना गाङ्गेयशरताडिता ।
प्रतिपत्पाठशीलानां विद्येव तनुतां गता ॥

इति व्यासवचनमपि तावन्मात्रपरम्" इति चाऽऽह तिथितत्त्वे ।

A. पौर्णमासीलक्षणमुक्तं प्राक् ( पृ० १७३ )

1. 'वर्त्तते' नास्ति घ । 2. नास्ति घ । 3. 'च' नास्ति ख ।

तथाच मनुः—

'अमावास्या गुरुं हन्ति'* शिष्यं हन्ति चतुर्दशी (A)।

अमावास्यापौर्णमास्योर्ग्रहणात् प्रतिपदपि गृह्यते। [2]कुतः?

"द्वे ह वै पौर्णमास्यौ द्वे अमावास्ये" इति श्रुतेः (B)।

## तिसृषु कार्त्तिक्यां फाल्गुन्यामाषाढ्याञ्चा(C)होरात्रम् ॥२२॥

तिसृषु पौर्णमासीषु कार्त्तिक्यां फाल्गुन्यामाषाढ्यां "चेत्येतास्वयं"* विशेषः। पौर्णमासीप्रतिपत्स्वतिरिक्तमन्यदप्यहोरात्रमनाध्यायः। द्वितीयायामित्यर्थः।

तथाच मनुः—

अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु (D)। इति।

[4]मार्गशीर्षे तथा पौषे माघमासे तथैव च।

तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षे तु सूरिभिः (E)॥ इति।

गौतमः—कार्त्तिकी फाल्गुन्याषाढी पौर्णमासी तिस्रोऽष्टकाः[4]* [5]त्रिरात्रमिति (F)। उक्तपौर्णमासीमारभ्य त्रिरात्रम् (G)। तथा तिस्रोऽष्टकाः सप्तम्यादयः। तास्वपि त्रिरात्रमनध्ययनमित्यर्थः[5]*।

A. मनुसंहिता ४।११४। अस्योत्तरार्धन्तु—

ब्रह्माष्टकापौर्णमास्यौ तस्मात् ताः परिवर्जयेत्॥ इति।

यस्मादमावास्या गुरुं हन्ति, चतुर्दशी शिष्यं हन्ति, ब्रह्म वेदं च अष्टमीपौर्णमास्यौ विस्मारयतः, तस्मात् ता अध्ययनाध्यापनयोः परित्यजेत्। इति व्याख्या।

B. श्रुतिरियमुपन्यस्ता प्राक् ( पृ० १३८ )। गौतमोऽपि 'अमावास्यायाञ्च द्व्यहं वा' इति सूत्रयन्नेतदेव दर्शयति।

C. अत्र विभज्य 'अहोरात्रम्' इति सूत्रान्तरं कल्पयति चन्द्रकान्तः।

D. मनुसंहिता ४।११९ अस्य पूर्वार्धन्तु—

उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम्। इति।

E. कूर्मपुराणम् उत्तरखण्डम् १४।७८।

F. गौतमसंहिता अ० १६।

G. अत्र तर्कालङ्कारः—

कृष्णपक्षे द्वितीयायां फाल्गुनाषाढकार्त्तिके।

शुक्लाश्वयुग्द्वितीयायां नैवाध्ययनमाचरेत्॥

1. नास्ति ख। 2. 'कुतः' नास्ति घ। 3. 'चैतास्वयं' ख। 4. नास्ति ख। 5. नास्ति ख।

[1]प्रजापतिः—

षष्ठी च द्वादशी चैव अर्द्धरात्रोन-नाडिका ।
प्रदोषे न त्वधीयीत तृतीया नव-नाडिका ॥ इति ।

कूर्मपुराणे—

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः(A) ॥ इति[1]* ।

## सब्रह्मचारिणि च प्रेते ॥ २३ ॥

सब्रह्मचारी [2]सशाखी, तस्मिन् प्रेते [3]मृते चशब्दात् असब्रह्मचारिण्यपि श्रोत्रिये अहोरात्रमिति [4]वर्त्तते ।

## स्वे च भूमिपतौ ॥ २४ ॥

स्वकीये यस्य विषये वासस्तस्मिन् भूमिपतौ राजनि प्रेते इति [5]वर्त्तते । चशब्दात् अस्वकीये च पृथीश्वरे ।

## त्रिरात्रमाचार्ये ॥ २५ ॥

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते(B) ॥

---

इति च वचनान्तरम् । अन्ये त्वाहुः—कार्त्तिक्यादीनामनध्यायत्वस्य सिद्धत्वात् तासु गतासु अनध्ययनमिहोपदिश्यते । तत्र च कार्त्तिक्यादीनां शुक्लपक्षीयत्वात् तदुत्तरा शुक्लपक्षीयैव काचित् तिथिरिहाभिप्रेतेत्यवगम्यते, उपस्थितस्य शुक्लपक्षस्य परित्यक्तुमनुचितत्वात् तेन मार्गशीर्ष-चैत्रश्रावणशुक्लप्रतिपदामनध्यायत्वमनेनोच्यते । तदिदं सूत्रम्—चैत्रश्रावणमार्गशीर्षाणामादि-प्रतिपदा नित्या इति हारीतसमानार्थमिति' इत्याह ।

A. कूर्मपुराणम् उत्तरखण्डम् १४।७९ ।

B. मनुसंहिता २।१४० । व्याख्यायामस्य कुल्लूकभट्टः—"आचार्यादिशब्दैरिह शास्त्रे प्रयोग-व्यवहारात् आचार्यादिशब्दार्थमाह—उपनीयेति । यो ब्राह्मणः शिष्यमुपनीय कल्परहस्यसहितां वेदशाखां सर्वामध्यापयति तमाचार्यं पूर्वे मुनयो वदन्ति । कल्पो यज्ञविद्या, रहस्यमुपनिषत् । वेदत्वेऽप्युपनिषदां प्राधान्यविवक्षया पृथङ्निर्देशः" । इत्याह ।

---

1. नास्ति ख । 2. 'सहशाखी' क-घ । 3. 'मृते' नास्ति घ । 4. 'वर्त्तते' नास्ति घ । 5. 'वर्त्तते' नास्ति घ ।

इत्येवं लक्षणे आचार्ये प्रेते त्रिरात्रं नाधीयीरन्निति [1]वर्त्तते (A)।

## उपसन्ने त्वहोरात्रम् ॥ २६ ॥

उपसन्नः शिष्यः, तस्मिन् प्रेते अहोरात्रम्। तु-शब्दाद् विधेये शिष्ये न तु प्रतिकूले गुरुत्यागिनि वा।

## गीतवादित[2]रुदितातिवातेषु तत्कालम् ॥ २७ ॥

[3]गीतादीनि प्रसिद्धानि[3]*। तत्कालम् [4]इति यावदेतानि [5]निमित्तानि तावन्तमेव कालम् [6]इति(B)।

## शिष्टाचारोऽतोऽन्यत्र ॥ २८ ॥

अत उक्ता[7]दन्यत्र शिष्टाचारः। [8]अनुक्तानप्यत्र यानानध्यायाञ्छिष्टा आचरन्ति अनुतिष्ठन्ति तानपि कुर्यादित्यर्थः। यथा[8]*—

आरण्यकादीनां भोजनादूर्ध्वमनाध्याय [9]इति।

शिष्टलक्षणन्तु—

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः(C)। [10]इति।

---

A. संवदति चात्र कूर्मपुराणप्रमाणम्—

समानविद्ये च मृते तथा सब्रह्मचारिणि।
आचार्ये संस्थिते वाऽपि त्रिरात्रं क्षपणं स्मृतम् ॥ इति ( उ० १४।८० )।

B. तथा चातिवाते निषेधमाह मनुसंहितायाम्—

कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने।
एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचक्षते ॥ इति ( ४।१०२ )

'वायौ दिवा पांशुहरे कर्णश्राविणि नक्तम्' इति च गौतमसंहितायाम् ( अ० १६ )

C. मनुसंहिता १२।१०९। अस्य व्याख्यायां कुल्लूकभट्टः—

'ब्रह्मचर्यादिकधर्मेण यैरङ्गमीमांसाधर्मशास्त्रपुराणाद्युपबृंहितो वेदोऽधिगतस्ते ब्राह्मणाः श्रुतेः प्रत्यक्षीकरणे हेतवः, ये श्रुतिं पठित्वा तदर्थमुपदिशन्ति ते शिष्टा विज्ञेयाः'॥ इति जगौ।

विशेषस्तु मनुसंहितायाम्—

न विवादे न कलहे न सेनायां न सङ्गरे।
न भुक्तमात्रे नाजीर्णे न वमित्वा न शुक्तके ॥

---

1. 'वर्त्तते' नास्ति घ। 2. '-रुदित-' नास्ति ख। 3. नास्ति घ। 4. 'इति' नास्ति घ। 5. 'निमित्तानि' नास्ति घ। 6. 'इति' नास्ति घ। 7. '-दक्: शिष्टा-' ख। 8. नास्ति ख। 9. 'इति' नास्ति घ। 10. 'इति' नास्ति ख।

इदानीं निमित्ते नैमित्तिकविधानार्थमिदमाह—

अद्भुते कुलपत्योः प्रायश्चित्तम् ॥ २६ ॥

अद्भुतम् [1]अपूर्वं प्रकृते[2]रन्यत्वम्, उत्पात इत्यर्थः। तच्च भौमान्तरिक्षदिव्यभेदात् त्रिविधम्, ज्ञानाज्ञानकृतदोषसञ्चयात् पुरुषाणामनिष्टफलसंसूचनाय भवति। तथाच वराहमिहिरः—

अपचारेण नराणामुपसर्गः पापसञ्चयाद् भवति।
संसूचयन्ति दिव्यान्तरिक्ष[3]भौमास्तमुत्पाताः (A) ॥

तस्य [4]च त्रिविधस्यापि लक्षणं [5]तत एवोपलब्धव्यम्। एतेषामपि तु भौमत्वात् पृथग् ग्रहणमयुक्तमिति चेत्; न, कुतः[6]*?

दिव्यं ग्रहर्क्षवैकृतमुल्कानिर्घात[6]पवनपरिवेषाः।
गन्धर्वपुरपुरन्दरचापादि यदान्तरिक्षं तत् ॥
भौमं चरस्थिरभवम्—

इत्यादि(B)। तस्मिन् अद्भुते उत्पन्ने कुलपत्योर्दम्पत्योः। तद्दोषो[7]प-

अतिथिं चाननुज्ञाप्य मारुते वाति वा भृशम्।
रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥
सामध्वनावृग्यजुषी नाधीयीत कदाचन।
वेदस्याधीत्य वाऽप्यन्तमारण्यकमधीत्य च ॥
ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः।
सामवेदः स्मृतः पित्र्यस्तस्मात् तस्याशुचिर्ध्वनिः ॥
एतद् विदन्तो विद्वांसस्त्रयीनिष्कर्षमन्वहम्।
क्रमतः पूर्वमभ्यस्य पश्चाद् वेदमधीयते ॥
पशुमण्डूकमार्जारश्वसर्पनकुलाखुभिः।
अन्तरा गमने विद्यादनध्यायमहर्निशम् ॥
द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः।
स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥ इति (४।१२१-७)।

A. बृहत्संहिता ४६।२।

B. —तच्छान्तिभिराहतं शममुपैति।
नाभसमुपैति मृदुतां शाम्यति नो दिव्यमित्येके ॥ बृहत्संहिता ४६।४-६।

1. 'चभूतपूर्वं' ख। 2. '-रन्यच' ख। 3. '-भौमाः तमुत्-' क-च। 4. 'च' नास्ति च। 5. नास्ति च।
6. '-पतन-' ख। 7. 'उप' नास्ति ख।

शमनाय 'कर्म। किम्'[1]* ? प्रायश्चित्तम्। व्याहृतिभिराहुति[2]चतुष्कमित्यर्थः। प्रायश्चित्तार्थत्वात् (A)। -

## वंशमध्यमयोर्मणिके वा भिन्ने व्याहृतिभिर्जुहुयात् ॥३०॥

वंशो [3]वेश्मातिभारपदः। बलधारणं वा[3]*। मध्यमो मध्यमस्तम्भः। तयोर्वंशमध्यमयोरनिमित्ततो [4]भङ्गस्तस्मिन्। वा शब्दश्चार्थे। मणिके च भिन्ने। अनिमित्तत एव[4]*।

A. अद्भुतमधिकृत्य यदुक्तं रघुनन्दनेन तस्मात् किञ्चिदुपस्थाप्यते—

"अद्भुतसागरे आथर्वणाद्भुतवचनम्—

प्रकृतिविरुद्धमद्भुतमापदः प्राक् प्रबोधाय देवाः सृजन्तीति।

तेनापज्ज्ञानाय भूम्यादीनां पूर्वं स्वभावप्रच्यवो देवकर्तृकोऽद्भुत इति।

तत्कारणञ्च गर्गसंहितावार्हस्पत्ययोः—

अतिलोभादसत्याद्वा नास्तिक्याद्वाऽप्यधर्मतः।

नरापचारान्नियतमुपसर्गः प्रवर्त्तते ॥

ततोऽपचारान्नियतमपवर्जन्ति देवताः।

ताः सृजन्त्यद्भुतांस्तांस्तु दिव्य-नाभस-भूमिजान् ॥

त एव त्रिविधा लोके उत्पाता देवनिर्मिताः।

विचरन्ति विनाशाय रूपैः संबोधयन्ति च ॥

तत्र वेलानक्षत्रमण्डलनिरूपणं दीपिकायाम्—

प्राग्द्वित्रिचतुर्थयामेषु धुनिशोरद्भुतेषु सर्वेषु।

अनिलाग्निशक्रवरुणा मण्डलपतयः शुभाशुभा भैश्च ॥

अर्यमृणादिचतुष्कचन्द्रतुरगादित्येषु वायुर्भवेत्

देवेज्याजविशाखयाम्ययुगले पित्र्यद्वये चानलः।

चित्रादित्रयधातृमैत्रयुगलेष्विन्द्रो भवेन्मण्डलः

सर्पोपान्त्यमृगान्त्यमूलयुगलेशानेष्वपामीश्वरः ॥

पवनदहनौ नेष्टौ योगस्तयोरतिदुष्करः

वरुणपवनौ शस्तौ योगस्तयोरतिशोभनः।

सवरुणमरुन्मिश्रः शक्रस्तथाऽग्निसमायुतः

फलविरहितः सेन्द्रो वायुस्तथाऽग्नियुतोऽम्बुपः ॥

1. 'किं कर्म उच्यते' ख। 2. '-चतुष्टयहोम' ख। 3. 'वेश्मनि भारसहमवलधरणं वा' ख।
4. 'भङ्गे, मणिक उदकाधारः, तस्मिन् अनिमित्तत एव भिन्ने वाशब्दश्चशब्दार्थो द्रष्टव्यः। मणिके च भिन्ने' ख।

विष्णुधर्मोत्तरे—

ग्रहर्क्षवैकृतं दिव्यमान्तरिक्षं निबोध मे ।
उल्कापातो दिशां दाहः परिवेशास्तथैव च ॥
गन्धर्वनगरश्चैव वृष्टिश्च विकृता तथा ।
एवमादीनि लोकेऽस्मिन् नाभसानि विनिर्दिशेत् ॥
चरस्थिरभवं भौमं भूकम्पमपि भूमिजम् ।
जलाशयानां वैकृत्यं भौमं तदपि कीर्तितम् ॥
भौमं चाल्पफलं ज्ञेयं चिरेण परिपच्यते ।
नाभसं मध्यफलदं मध्यकालफलप्रदम् ॥
दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च ।
शीतोष्णताविपर्यास ऋतूनां रिपुजं भयम् ॥
पुष्पे फले च विकृते राज्ञो मृत्युं तथादिशेत् ।
अकालप्रभवा नार्यः कालातीताः प्रजास्तथा ॥
विकृताः प्रसवाश्चैव युग्मप्रसवनं तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा त्रयः ॥
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देहस्य कुलस्य च विनिर्दिशेत् ॥
प्रदोषे कुक्कुटारावो हेमन्ते चापि कोकिलाः ।
अर्कोदयेऽर्काभिमुखः श्वारावो नृभयं दिशेत् ॥
उलूको वसते यत्र निपतेद् वा तथा गृहे ।
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥
गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च ।
चिल्लश्च चर्मचिल्लश्च भासः पाण्डर एव च ॥
गृहे यस्य पतन्त्येते गेहं तस्य विपद्यते ।
षण्मासात् तथा वर्षान्मृत्युः स्याद् गृहमेधिनः ॥
पत्न्याः पुत्रस्य वा मृत्युर्द्रव्यञ्चापि विनश्यति ।
ब्राह्मणाय गृहं दत्त्वा दत्त्वा तन्मूल्यमेव वा ॥
गृह्णीयाद् यदि रोचेत शान्तिमेकां प्रयोजयेत् ।
मांसास्थीनि समादाय श्मशानाद् गृध्रवायसाः ॥
श्वा शृगालोऽथवा मध्ये पुरस्य प्रविशन्ति चेत् ।
विकिरन्ति गृहादौ च श्मशानं सा मही भवेत् ॥

चौरेण हन्यते लोकः परचक्रसमागमः ।
संग्रामश्च महाघोरो दुर्भिक्षं मरकन्तथा ॥
अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रवः ।
अकाले फलपुष्पाणि देशविद्रवकारणम् ॥

मत्स्यपुराणे—

अतिवृष्टिरनावृष्टिर्दुर्भिक्षादिभयं मतम् ।
अनृतौ तु विनावृष्टं वृष्टिर्ज्ञेया भयाय च ॥
निरभ्रे वाऽथ रात्रौ वा श्वेतं यत्योत्तरेण तु ।
इन्द्रायुधं ततो दृष्ट्वा उल्कापातं तथैव च ॥
दिग्दाहपरिवेशौ च गन्धर्वनगरं तथा ।
परचक्रभयं विद्यात् देशोपद्रवमेव च ॥

कंसनिधनसूचने हरिवंशः—

वक्रमङ्गारकश्चक्रे चित्रायां घोरदर्शनः ।
चलत्यपर्वणि मही गिरीणां शिखराणि च ॥

बाणोत्पाते स एव—

दक्षिणां दिशमास्थाय धूमकेतुः स्थितो भवेत् ।
वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः ॥

कृत्यचिन्तामणौ—

त्यक्ताशौचविवेकतस्त्वचसुधालोकाः क्षुधा पीडिता
विप्रा वेदहतास्तथा प्रचलिता बह्वाशिनो दुःखिताः ।
क्षोणी मन्दफला नृपाश्च विकलाः संग्रामघोरा मही
प्रेतापातदुरन्तपीडिततरा देवेज्यराह्वोर्युतौ ॥
रक्ते शस्त्रोपयोगो मांसास्थिवशादिभिर्मरकः ।
धान्यहिरण्यत्वक्फलकुसुमाद्ये वर्षिते भयं विद्यात् ॥
अङ्गारपांशुवर्षे विनाशमुपयाति तन्नगरम् ।
उपलं विना जलधरैर्विकृता वा यदा प्राणिनो वृष्ट्या ॥
छिद्रं वाऽप्यतिवृष्टिं शस्यानामीति·संजननम् ॥

शुककौशिकसंवादे—

वल्मयाः प्रपाते च फलं शरदस्य प्ररोहणे ।
क्षीरे राज्यश्रियोऽश्वाशिर्भाके वैवर्ण्यमेव च ॥

कर्णयोर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनम् ।
नासिकायाञ्च सौगन्ध्यं वक्त्रे मिष्टान्नभोजनम् ॥

कण्ठे चैव प्रियोऽवाप्तिर्भुजयोर्विभवो भवेत् ।
धनलाभो बाहुमूले करयोर्धनवृद्धयः ॥

स्तनमूले च सौभाग्यं हृदि सौख्यविवर्धनम् ।
पृष्ठे नित्यं महीलाभः पार्श्वयोर्बन्धुदर्शनम् ॥

कटिद्वये वस्त्रलाभो गुह्ये मृत्युसमागमः ।
जङ्घे चार्थक्षयो नित्यं गुदे रोगभयं भवेत् ॥

ऊर्वोस्तु वाहनावाप्तिर्जानुजङ्घेऽर्थसंक्षयः ।
वामदक्षिणयोः पदोर्भ्रमणं नियतं भवेत् ॥

वल्ल्याः प्ररोहणे चैव पतने शरटस्य च ।
व्यत्यासाच्च फलञ्चैव तद्वदेवं प्रजायते ॥

वल्ल्याः प्ररोहणं रात्रौ शरटस्य प्रपातनम् ।
निधनार्थाय भवति व्याधिपीडाविपर्ययौ ॥

पतनानन्तरञ्चैवाऽऽरोहणं यदि जायते ।
पतने फलमुत्कृष्टं रोहणेऽन्यत् फलं भवेत् ॥

आरोहणञ्चोर्ध्ववक्त्रे अधोवक्त्रे च पातनम् ।
भवेदिष्टफलं तस्य तत्फलं जायते ध्रुवम् ॥

मत्स्यपुराणम्—

काकस्यैकरवश्रावः प्रभाते दुःखदायकः ।
काको मैथुनकाशक्तः श्वेतो वा यदि दृश्यते ॥

उलूको वसते यत्र निपतेद्व वा तथा गृहे ।
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ।

वराहसंहितायाम्—

क्रीडानुरक्तो रतिमांसलुब्धो भीतो रुजार्तः पतितो विहङ्गः ।
नासौ गृहस्थस्य विनाशहेतुर्दोषः समुत्पादयत आतुरार्ताः ॥

भुजबलभीमे—

एको वृषत्रयो गावः सप्ताश्वा नव दन्तिनः ।
सिंहप्रसूतिकाश्चैव कथिताः स्वामिघातकाः ॥

व्याहृतिभिर्जुहुयात्। अत्रापि प्रायश्चित्तार्थत्वात् चतस्र एवाऽऽहुतयः। एतेषा[1]मपि भौमत्वात् पृथग्ग्रहण[1]*मयुक्तमिति [2]चेत्, कुतः[2]*? पृथग्ग्रहणादेवैतेषाम् अल्प[3]दोष दर्शयति--तत[4]श्चात्र व्याहृतिहोममात्रमेव स्यात्। अतोऽन्येष्वन्यदपि बहिःस्नान-तीर्थाभिषेकपुण्यसूक्तजपदेवगुरुदर्शनहिरण्यतिलदानभारतकीर्त्तनादि[5]कं यथासम्भवं कर्त्तव्यमिति। [6]बहिःस्नानादिर्दुर्निमित्तकृतदोषोपशमः।

स्मर्यते च—

नश्यन्ति सर्वपापानि दुर्निमित्तफलानि च।
अम्मात्रेणाभिषिक्तस्य किं पुनस्तीर्थवारिणा॥ इत्यादि(A)।

---

मत्स्यपुराणे—

अङ्गे दक्षिणभागे तु शस्तं विस्फुरणं भवेत्।
अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च।
लाञ्छनं पिटकश्चैव ज्ञेयं विस्फूर्जितं तथा।
विपर्ययेण विहितं सर्वं स्त्रीणां फलं तथा॥" इति।

A. अत्राद्भुतप्रायश्चित्तविषये तर्कालङ्कारः—"तदेतस्मिन्नद्भुते जाते सति तत्सूचितपाप-क्षयार्थं कुलपत्योः प्रायश्चित्तं भवति, प्रायश्चित्तन्तु—'अथातो रजस्वलाऽभिगमने' इत्यादिना परिशिष्टकारेणोक्तमादरणीयम्। कुतः? आचार्येण विशेषानुपदेशात्, तच्च तत एवोपलब्धव्यम्। यथात्र प्रायश्चित्तं 'व्याहृत्याहुतिचतुष्टयम्, अन्यदपि बहिःस्नानतीर्थाभिषेकपुण्यसूक्तजप...भारत-कीर्त्तनादि यथासम्भवम्' इति वर्णितम्, तदस्मत्परिशिष्टानवलोकनेन" इत्युक्त्वा भाष्यकार-माक्षिपति।

रघुनन्दनस्तु—"छन्दोगपरिशिष्टम्—अथातो रजस्वलाभिगमने गोऽश्वभार्यासु गमने यमजजनने विजातीयजनने वा काककङ्कश्येनभासविल्वकपोतानां गृहप्रवेशे महिषस्योपरि विश्रामणे एवमेव क्रियमाणे गृहद्वारारोहणे चाऽद्भुतेषु कल्पदृष्टेन विधिना अग्निमुपसमाधाय प्रायश्चित्ता-न्याहुतीर्जुहोति, अद्भुताय अग्नये स्वाहा, सोमाय, विष्णवे, रुद्राय, वायवे, सूर्याय, मृत्यवे, विश्वेभ्यो देवेभ्यः स्वाहेति स्थालीपाकहुताऽन्यदिति। कपोतं विशेषयति शौनकः—

एकपादः कपोताख्यो अरण्यौकाः शुकच्छविः।
स चेच्छाकां विशेच्छाकासमीपस्थः व्रजेद्व यदि॥
अन्येषु गृहमध्ये वा वल्मीकस्योद्गमादिषु।

---

1. '-मपिभवत्व-' ख। 2. 'चेत्, कुतः' ख। 3. '-दोषत्वं' ख। 4. 'च' नास्ति ख। 5. '-कं' नास्ति च। 6. 'स्मर्यते च बहिः-' ख।

कल्पदृष्टेन विधिना गृह्योक्तेन प्रायश्चित्ताज्याहुतीः, अद्भुतदोषप्रशमनार्थाः सप्ताऽऽज्याहुतीः, 'अद्भुतायाग्नये स्वाहा' इत्यादिमन्त्रैः, तत्र स्थालीपाकेतिकर्तव्यतायां पायसचरुभिरेतेभ्यो देवेभ्यो जुहुयात्। छन्दोगपरिशिष्टम्—'पश्चाद् घृतपायसेन ब्राह्मणान् भोजयित्वा गोवरं दत्वा शान्तिर्भवतीति' यस्त्वेषामन्यतममापन्नः प्रायश्चित्तं न कुर्यात् तस्य गृहपतेर्मरणं सर्वस्वनाशो वा भवति, तस्मात् प्रायश्चित्तं कर्तव्यम्, कर्मापवर्गे वामदेव्यगानं शान्तिः शान्तिरिति। अपवर्गे, समाप्तौ। आवृत्तिः प्रकरणसमाप्त्यर्था।

बार्हस्पत्ये—

शमयन्त्या सप्ताहात् कम्पादिकृतं निमित्तमाद्यवेव।
अतिवर्षणोपवासव्रतदीक्षाजप्यहवनानि।

वराहः—

ये च न दोषं जनयन्त्युत्पातास्तानृतुस्वभावकृतान्।
ऋषिपुत्रकृतैः श्लोकैर्विद्यादेभिः समासोक्तैः॥

तथाच मत्स्यपुराणम्—

वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः।
परिवेशरजोधूमरक्तार्कास्तमयोदयाः॥
द्रुमेभ्योऽथ रसस्नेहमधुपुष्पफलोद्गमाः।
गोपक्षिमदवृद्धिश्च शिवाय मधु-माधवे॥
तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम्।
अनग्निज्वलनं स्फोटं धूमरेणुमिवाऽऽकुलम्॥
रक्तपद्मारुणा सन्ध्या नभः क्षुब्धार्णवोपमम्।
सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत्॥
शक्रायुधपरीवेशौ विद्युच्छुष्कावरोहणम्।
कम्पोद्वर्तनवैकृत्यं रसनं दरणं क्षितेः॥
नद्युदपानसरसां वृध्यद्वर्ता भवनप्लवाः।
पतनञ्चाद्रिगेहानां वर्षासु न भयावहम्॥
दिव्यस्त्रीभूतगन्धर्वं विमानाद्भुतदर्शनम्।
ग्रहनक्षत्रताराणां दर्शनञ्च दिवाऽम्बरे॥
गीतवादित्रनिर्घोषो वनपर्वतसानुषु।
शस्यवृद्धिरसोत्पत्तिरपापाः शरदि स्मृताः॥
शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम्।
रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी॥

दिशो धूमान्धकाराश्च शकला वनपर्वताः ।
उच्चैः सूर्योदयास्तत्वं हेमन्ते शोभना मताः ॥

हिमपातानिलोत्पातविरूपाद्भुतदर्शनम् ।
इष्टाऽञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ॥

चित्रा गर्भोद्भवाः स्त्रीषु गोजाश्वमृगपक्षिणाम् ।
पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः ॥

ऋतुस्वभावजा ह्येते दृष्टाः स्वर्त्तौ शुभावहाः ।
ऋतावन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः ॥

उन्मत्तानाञ्च या गाथाः शिशूनां चेष्टितं च यत् ।
स्त्रियो यच्च प्रभाषन्ते तत्र नास्ति व्यतिक्रमः ॥

पूर्वञ्चरति देवेषु पश्चाद् गच्छति मानुषान् ।
नादेवता वाग् वदति सत्या ह्येषा सरस्वती ॥

बृहस्पतिः—

ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम् ।
श्रावयन्त्यर्थलोभेन विनेयास्तेऽपि यत्नतः ॥"

इत्युक्त्वा छन्दोगपरिशिष्टोक्तं प्रायश्चित्तमेव प्रधानत उपदिशति। कर्मप्रदीपव्याख्यायां प्रकाशकारस्तु—'अत्र च रजस्वलागमनस्यापि यदद्भुतत्वमुक्तं तत् पुरःस्फूर्तिकानिष्टहेतुत्वात्। तथाच मनुः—

रजसाऽभिप्लुतां नारीं द्विजस्याभ्युपगच्छतः ।
प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रहीयते ॥ इति ( म० स० ४।४१ )

इत्युक्त्वा वचनमिदं प्रमाणीकरोति। परमत्र केषुचिन्मुद्रितेषु केषुचिच्चामुद्रितेषु कर्मप्रदीप-पुस्तकेषु अद्भुतशान्तिर्नोपलभ्यते इति भट्टनारायणोपाध्यायकाले तु नाऽऽसीदद्भुतशान्तिः कर्म-प्रदीपग्रन्थान्तर्गता, तदनन्तरन्तु रघुनन्दननारायणोपाध्यायानां काले अयमंशस्तत्र सन्निविष्टो वा भवेदिति। अन्यथा येन खलु भाष्यकारेण परःशतानि कर्मप्रदीपप्रमाणान्युद्धृतानि तेन तद्ग्रन्थस्थमेवाद्भुतशान्तिप्रमाणं न दृष्टमिति सर्वथाऽसमीचीनमेव स्यात्। एतत्तु किमपि न विवेचितं तर्काङ्कुरेणाकारणभाष्यकारदोषैकदर्शिनेति दुनोति नो हृदयम्।

गृह्यकर्मप्रकाशिकाकारेण तु भाष्यकारमतमेव समादृतम्। वयन्तु छन्दोगपरिशिष्टोक्तं प्रायश्चित्तमेवोरीकुर्मः सर्वत्र सम्भवत्यवकाशे। परमत्राद्भुतशान्तिः कर्मप्रदीपान्तर्गता वा न वेति भवन्तोऽनूचानाः प्रमाणयन्तु।

किञ्च—

## दुःस्वप्नेष्वद्य नो देव सवितरित्येतामृचं जपेत् ॥ ३१ ॥

दुःस्वप्नेषु अनिष्टस्वप्नदर्शनेषु [1]"अद्य न' (A)इत्यृचं जपेत्। ऋग्ग्रहणं सामप्रतिषेधार्थम्[1]*, एतामिति स्वर-वर्णसम्पदर्थम्। अन्यथा जपतः समीहितफलाभावः। उक्तञ्च—'मन्त्रो हीनः स्वरतो वर्णतो वा' इत्यादि(B)। तस्मा[2]देतां स्वर-वर्णसम्पन्नां [3]जपेदिति। एतस्मादेवान्यत्र नाप्ययं[4]* जपन्यायः।

किञ्च—

## अथापरं(C) चित्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु सूर्याभ्युदितः सूर्याभिनिम्लुप्तः इन्द्रियैश्च पापस्पर्शे पुनर्मामैत्विन्द्रियमित्येताभ्यामाज्याहुती जुहुयात् ॥ ३२ ॥

अथेति पूर्वप्रकृतार्थः। यथा पूर्वेषु निमित्तेषु त्रिप्रहोमन्यायः; एवमेतेष्वपि 'इति। अपरं निमित्तान्तरं वर्तिष्यत इति [5]वाक्यशेषः। चित्यं चयनम्, यूपं पशौ सोमे [6]च। चित्ययूपयोरुपस्पर्शनं [7]चित्ययूपोपस्पर्शनम्। [8]तत्रोपर्युद्वसानीयायाः पशुयूपस्यापि बहिःकर्मणः। कर्णयोः क्रोशः शब्दः [9]कर्णक्रोशः। [10]अक्ष्णो वेपनं स्फुरणम् [11]अक्षिवेपनम्, तच्च वामस्य न दक्षिणस्यापि[12]—

A. ऋक् चेयम्—

ॐ अद्य नो देव सवितः प्रजावत् सावीः।

सौभगं परा दुःस्वप्न्यं सुव ॥ इति सामसंहिता, पू० २।१।९।७।

अस्य व्याख्या—हे सवितः, देव, नः अस्मभ्यम्, अद्य अस्मिन् यागदिने, प्रजावत् पुत्राद्युपेतम्, सौभगं धनम्, सावीः प्रेरय, दुःस्वप्न्यम् दुःस्वप्नं दुःस्वप्नवद् दुःखकरं दारिद्र्यम्, परा सुव दूरे प्रेरय। इति।

B. मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।

स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रो स्वरतोऽपराधात् ॥ इति पाणिनीयशिक्षा ५२।

C. 'अथापरम्' इति पृथक् सूत्रम्, इति कल्पयतः सामश्रमितर्कालङ्कारौ।

1. नास्ति च। 2. '-देवंभूतां' ख। 3. 'भवत् नाप्ययमेव' च। 4. 'इति' नास्ति च। 5. 'वाक्य-' नास्ति च। 6. 'च' नास्ति ख। 7. 'चित्ययूपोपस्पर्शनम्' नास्ति च। 8. 'तयोरुद्वसानीयायाः' ख। 9. 'कर्णक्रोशः' नास्ति च। 10. 'अक्ष्णोः' ख। 11. 'अक्षिवेपनम्' नास्ति च। 12. 'अपि' नास्ति च।

दक्षिणं स्पन्दते नेत्रं बाहुः स्फुरति दक्षिणः ।
नराणां [1]धनलाभाय बन्धु[2]संयोजनाय च (A) ॥

इति वचनात् । तेषु चित्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु निमित्तेषु (B)पुनर्मामैत्विन्द्रियमित्येताभ्याम् आज्याहुती जुहुयात् । यस्य शयानस्य सूर्य उदेति स सूर्याभ्युदितः । आज्याहुती जुहुयात् [3]इति प्रत्येकं सम्बध्यते[3]* । यस्य [4]च शयानस्य सर्योऽभिनिम्लुतो भवत्यस्तमेति स सूर्याभिनिम्लुतः । इन्द्रियैश्च श्रोत्रादिभिः अश्रवणीयश्रवणादिना निमित्तेन पापस्पर्शे ।

किञ्च—

## आज्यलिप्ते वा समिधौ ॥ ३३ ॥

प्रकृताभ्यामृग्भ्यां जुहुयादिति [5]वर्त्तते । आहुतिद्वयमात्रस्याऽऽज्यस्याभावे एतद् द्रष्टव्यम् । अथवा एतेष्वेव निमित्तेषु एतद् द्रष्टव्यम् । बहु सकली[6]भूतचित्ययू[7]पोपस्पर्शने ईषत् कर्णक्रोशाक्षिवेपनयोः । सूर्येऽभ्राद्यन्तरितेऽभ्युदितत्वाभि[8]निम्लुतभ्रान्त्या [9]सङ्कल्पः । इन्द्रियैश्च ईषदेव पाप[10]स्पर्शेराज्यलिप्ते समिधाविति ।

---

A. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये ।

B. पुनर्मामित्यादिमन्त्रौ तु—

ॐ पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः ।
पुनर्द्रविणमैतु मा पुनर्ब्राह्मणमैतु मा ॥
ॐ पुनर्मनः पुनरात्मा म आगात्
पुनश्चक्षुः पुनः श्रोत्रं म आगात् ।
वैश्वानरो अदब्धस्तनूपा अन्त-
स्तिष्ठतु मे मनोऽमृतस्य केतुः स्वाहा ॥ मन्त्रब्राह्मणम् १।६।३३-३४ ।

अनयोर्व्याख्या—रेतःस्कन्दनादिदोषेण यत् इन्द्रियम् इन्द्रियबलम् अपचितम्, तत् मां पुनः ऐतु प्रत्यागच्छतु, तथा च यत् आयुः क्षीणम्, तत् पुनः ऐतु । अपि च तेनैव कर्मणा यो भगः सम्मानादिलक्षणः नष्टः, स च पुनः ऐतु । किञ्च तथा दुराचारे प्रवृत्ते यद् द्रविणं क्षयितम्, तच्च मा माम्, पुनरैतु । यदि कथमपि ब्राह्मणम् ब्राह्मण्यं क्षयितं स्यात् तदपि मां पुनरैतु ॥३३॥ मे मम मनः पुनः आगात्—असत्पथातं प्रत्यागतं स्वस्थमभूत् । तथा चेदानीं

---

1. 'धर्म-' ख । 2. '-संदर्शनाय' घ, '-संस्पर्शनाय' ख । 3. 'इति सम्बन्धः' ख । 4. 'च' नास्ति ख । 5. 'वर्त्तते' नास्ति घ । 6. 'भूत' घ । 7. 'उप' नास्ति घ । 8. '-निम्लुप्त-' ख । 9. 'दाऽऽरब्धिपः' ख । 10. '-स्पर्शने-' ख ।

## जपेद् वा लघुषु ॥ ३४ ॥

अतोऽपि लघु[1]षु निमित्तेषु अमेध्यदर्शनमानसापचारादिषु प्रकृतमृग्द्वयं जपेत् [2]इति (A)।

इति [3]भट्टनारायणकृतौ[3]* [4]गोभिलीयगृह्यसूत्रभाष्ये[4]* तृतीयप्रपाठकस्य तृतीया कण्डिका।

---

प्राप्तचेतनस्य मम आत्मा पुनरागात् सर्वथैव स्वस्थोऽभवदिति यावत्। तत एव मे मम चक्षुः अपि पुनः आगात् श्रोत्रमपि पुनः आगात्। अथ प्रार्थयते—अदब्धः शरीरस्थानामिन्द्रियादीनामहिंसिता, तनूपाः शरीररक्षकः, वैश्वानरः सर्वजीवाभ्यन्तरस्थोऽग्निः, अन्तः यथास्थानं तिष्ठतु, किञ्च मे मम मनः अमृतस्य आत्मनः केतुः प्रज्ञापनं भवत्विति शेषः। स्वाहा सुष्ठु आह इति स्वीकृतमस्तु। सायणाचार्यस्तु ब्राह्मणं दैवम् इति व्याचख्यौ। इति।

A. अत्रोपाकर्मानाध्यायाप्लुतप्रायश्चित्तेषु यदुक्तं गृह्यान्तरेषु तेभ्यो यथासम्भवमुपस्थाप्यते—तत्र छन्दोगत्वादिरद्राह्यायणगृह्याणां प्रायः समानुपूर्वीकाणि सूत्राणि—प्रौष्ठपदीं हस्तेनाध्यायानुपाकुर्युः। श्रावणीमित्येके। हुत्वोपनयनवत्। सावित्रीमनुवाचयेत्। सोमं राजानं पर्वाणि च। धाना दधि च प्राश्नीयुरभिरूपाभ्याम्। श्वोभूते प्राधीयीरन् शिष्येभ्यः। अनुवाक्याः कुर्युर्ऋगादिभिः प्रस्तावैश्च। अनुगानमरहस्यानाम्। विद्युत्स्तनयित्नुवर्जम्। अर्धपञ्चमान् मासानधीत्य पौषीमुत्सर्गः। तत ऊर्ध्वमप्रानध्यायः। विद्युत्स्तनयित्नुप्रुषितेषु च। त्रिसन्निपाते त्रिसन्ध्यम्। अष्टकाममावास्यायां चातुर्मासीष्वयने च पक्षिणीं रात्रिम्। सब्रह्मचारिणि च प्रेते। उल्कापाते भूमिचले ज्योतिषोश्चोपसर्ग एतेष्वाकालिकं विद्यात्। काम्यं तु कठकौथुमाः। चित्यचूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु सूर्याभ्युदितः सूर्याभिनिर्मुक्त इन्द्रियैश्च पापस्पर्शैः पुनर्मामित्येताभ्यामाहुतिं जुहुयात्। आज्यलिप्ते वा समिधौ। जपेद्वा लघुषु जपेद्वा लघुषु। इति।

जैमिनिगृह्यसूत्राणि तु—श्रावण्यामुपाकरणं प्रौष्ठपद्यां वा हस्तेन, त्रीन् प्राणायामानायम्याचम्य सर्वे पुरस्ताज्जपं जपन्ति, सह नोऽस्तु सह नो भुनक्तु सह नो वीर्यवदस्तु मा विद्विषामहे सर्वेषां नो वीर्यवदस्त्विति तेभ्यः सावित्रीं प्रब्रूयात् यथोपनयने मनसा साम सावित्रीञ्च सोमं राजानमित्यादितश्छन्दांस्यधीत्य यथार्थमक्षतधानानां वृष्टश्च नवाऽऽहुतीर्जुहोत्यग्नीन् देवान् छन्दांस्यृचो यजूंषि सामानि ऋचं साम यजामहे, सदसस्पतिमद्भुतम्, मेधाकारमित्येतासामेव पूर्वाभिः त्रिभिः पूर्वं तर्पयेदाचार्यमाचार्यांश्च जैमिनिं तलवकारं सात्यमुग्रं राणायनिं दुर्वाससं च भागुरिं गौरुण्डिं गौर्गुलविं भगवन्तमौपमन्यवं कारडिं सावर्णिं गार्ग्यं वार्षगण्यं दैवन्त्यमित्येतांश्चोक्त्वा, धानावन्तं

---

1. '-षु' नास्ति ख। 2. 'इति' नास्ति घ। 3. नास्ति घ। 3-4. नास्ति ख।

दधिक्राव्ण इत्येताभ्यामभिमन्त्र्य हविःशेषं प्राश्य प्राह्णे प्राचीयत, आग्नेये समासे अजः, ऐन्द्रे मेषः, गौः पावमाने, पर्वदक्षिणा सब्रह्मचारिणश्चोपसमेतान् भोजयेत् सावित्रमहः काङ्क्षन्त उत्सर्गे च पक्षिणीं रात्रिं न मांसमश्नीयान्न श्राद्धं न लोमानि संहारयेन्न स्त्रियमुपेयादृतौ जायामुपेयात्। वर्षासरविक्रमेतद् व्रतमर्धमासमित्येके। तैषीमुत्सर्गो वेदेषु यथास्वं विश्रमन्तां छन्दांसि चतुरुत्तराणि शिवेन नो ध्यायन्त्वित्युत्सृज्याध्यायानध्यायौ व्रतानि चानुपालयन्तो यथास्वं वेदमधीयीरन्, अत ऊर्ध्वमभ्रेषु नाधीयते।

अथातोऽद्भुतशान्तिं व्याख्यास्यामः—अथ यद्यगारे स्थूणा विरोहेत् कपोतो वाऽगारं गच्छेद् गौर्वा गां धयेत् अनड्वान् वा दिवमुल्लिखेदनग्नौ वा धूमो जायेतानग्नौ वा दीप्येत मधु वा जायेत वल्मीकं वोपजायेत, मण्डूको वाऽम्भृणे वाश्येच्छ्वानो वा गृहे पर्यटेयुरित्येतानन्यांश्च, यत इन्द्र भयामहे। सदसस्पतिमद्भुतम्। अधायामुतेद्ममुदस्य। सनादग्ने। यद्वा उ विश्पतिः शितः। प्रत्यग्ने। यं रक्षन्ति। प्राजापत्ययर्चा पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्जुहोति, एतान्यृक्सामानि गायेत्। इति।

लौगाक्षिकाठकगृह्ययोः प्रायः समानुपूर्वीकाणि सूत्राणि—वर्षासु श्रवणेनाध्यायानुपाकरोति। स जुहोति अपवेति, रन्तिर्नामासि युक्तिर्नामासि, योगो नामासीत्युत्तरास्तिस्रः, तस्यास्त इति सर्वत्रानुषजति। युजे स्वाहोद्युजे स्वाहा युक्त्यै स्वाहा योगाय स्वाहेत्यन्तेवासिनां योगमिच्छन्। दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा, दर्भपाणिः सावित्रीं त्रिरन्वाहादितश्च त्रीननुवाकान् कस्त्वा युनक्तीति च। तस्यानध्यायः। न विद्योतमाने न स्तनयति। आकालिकं देवतुमुलं विद्युद् धन्वोल्का। आचारेणान्ये। अत्यक्षराः शब्दाः सन्ततवलीकप्रस्रावः। अर्धपञ्चमान् मासानधीत्य पञ्चार्धषष्ठान् वोत्सृजते उत्सृजामहेऽध्यायान् प्रतिविश्वसन्तु छन्दांसि कस्त्वा विमुञ्चतीति च। तस्यानध्यायोऽमावस्यां पक्षिणीं नाधीते। नात ऊर्ध्वमभ्रेषु। इति।

आश्वलायनगृह्यसूत्राणि तु—अथातोऽध्यायोपाकरणम्। ओषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य। पञ्चम्यां हस्तेन वा। आज्यभागौ हुत्वाज्याहुतीर्जुहुयात् सावित्र्यै ब्रह्मणे श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतये अनुमतये छन्दोभ्य ऋषिभ्यश्चेति। अथ दधि सक्तून् जुहोति। अग्निमीळे पुरोहितमित्येका। कुसुम्भकस्तदब्रवीत् आवदंस्त्वं शकुने भद्रमावद गृणानाजमदग्निना, धामन्ते विश्वम्भुवनमधिश्रितम्, गन्तानो यज्ञं यज्ञियाः, सुशमि योन स्वो अरणः प्रचक्ष्व, विवक्ष्वाग्ने या हि मरुत् सखायते, राजन्त्सत्वं हविरिति दृचाः। समानी व आकुतिरित्येका। तच्छंयोरावृणीमह इत्येका। अध्येष्यमाणोऽध्याप्यैरन्वारब्ध एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा दधि सक्तून् प्राश्य ततो मार्जनम्। अपरेणाग्निं प्राक्कूलेषु दर्भेषूपविश्योदपात्रे दर्भान् कृत्वा ब्रह्माञ्जलिकृतो जपेत्। ॐ पूर्वा व्याहृतीः सावित्रीं च त्रिरभ्यस्य वेदादिमारभेत्। तथोत्सर्गे। षण्मासानधीयीत। समावृत्तो ब्रह्मचारिकल्पेन। यथान्यायमितरं। वार्षिकमित्येतदाचक्षते। मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्येन हुत्वाऽपोऽभ्यवयन्ति। एता एव तद्देवतास्तर्पयन्ति।

आचार्यानृषीन् पितॄंश्च। एतदुत्सर्जनम्। स्वप्नममनोज्ञं दृष्ट्वा अद्यानो देव सवितरिति द्वाभ्यां यद्य गोषु दुःस्वप्नमिति पञ्चभिरादित्यमुपतिष्ठेत। सोमे राजन् पूज्यो वा सखा वेति वा। क्षुत्वा जृम्भित्वाऽमनोज्ञं दृष्ट्वा पापकं गन्धमाघ्रायाक्षिस्पन्दने कर्णध्वनने च सुचक्षा अहमक्षिभ्यामिति जपेत्। अगमनीयां गत्वा अयाज्यं याजयित्वाऽभोज्यं भुक्त्वाऽप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं चोपहत्य पुनर्मामिति इमे ये इति च आज्याहुतीर्जुहुयात्। समिधौ वा। जपेद्वा। अव्याधितश्चेत् स्वपन्तमादित्योऽभ्यस्तमियाद् वाग्यतोऽनुपविशन् रात्रिशेषम्भूत्वा येन सूर्यज्योतिषेति पञ्चभिरादित्यमुपतिष्ठेत। अभ्युदियाच्चेदं कर्मश्रान्तमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तरा पराभिश्चतसृभिरुपस्थानम्। इति।

आपस्तम्बगृह्यसूत्राणि च—अथात उपाकरणोत्सर्जने व्याख्यास्यामः। श्रवणापक्ष ओषधीषु जातासु हस्तेन पौर्णमास्यां वाऽध्यायोपाकर्म। अग्नेरुपसमाधानाद्याज्यभागान्ते अन्वारब्धेषु काण्डऋषिभ्यो जुहोति सदसस्पतये सावित्र्या ऋग्वेदाय यजुर्वेदाय सामवेदायाथर्वणवेदायेति हुत्वा उपहोमो वेदाहुतीनामुपरिष्टात् सदसस्पतिमित्येके। परिषेचनान्तं कृत्वा त्रीननुवाकानादितोऽधीयीरन्। प्रथमोत्तमावनुवाकौ वा। त्र्यहमेकाहं वा क्षम्याधीयीरन्। यथोपाकरणमध्यायः। तैषीपक्षस्य रोहिण्यां पौर्णमास्यां वोत्सर्गः। प्राचीमुदीचीं वा सगणो दिशमुपनिष्क्रम्य यत्रापः पुरस्तात् सुखाः सुखावगाहा अवकिन्यः शङ्खिन्यस्तासामन्तं गत्वाऽभिषेकान् कृत्वा सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरिति मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन त्रीन् प्राणायामान् धारयित्वोत्तीर्याऽऽचम्योपोत्थाय दर्भानन्योन्यस्यै सम्प्रदायशुचौ देशे प्राक्कूलैर्दर्भैरासनानि कल्पयन्ति। ब्रह्मणे प्रजापतये बृहस्पतये अग्नये वायवे सूर्याय चन्द्रमसे नक्षत्रेभ्य ऋतुभ्यः संवत्सरायेन्द्राय राज्ञे सोमाय राज्ञे यमाय राज्ञे वरुणाय राज्ञे वैश्रवणाय राज्ञे वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः साध्येभ्यो मरुद्भ्य ऋभुभ्यो भृगुभ्योऽङ्गिरोभ्य इति देवगणानाम्। विश्वामित्रो जमदग्निर्भरद्वाजो गौतमोऽत्रिर्वशिष्ठः कश्यप इति सप्तर्षिभ्यः कल्पयित्वा दक्षिणतोऽगस्त्याय कल्पयन्ति। ततो यावदेकवैश्यन्तैः कल्पयन्ति। प्राचीनावीतानि कृत्वा दक्षिणतो वैशम्पायनाय पैङ्गये तित्तिरये उखायाऽऽत्रेयाय पदकाराय कौण्डिन्याय, वृत्तिकाराय, बौधायनाय प्रवचनकाराय, आपस्तम्बाय सूत्रकाराय, भरद्वाजाय सूत्रकाराय, सत्याषाढाय हिरण्यकेशाय, आचार्येभ्य ऊर्ध्वरेतोभ्यः, एकपत्नीभ्यो वानप्रस्थेभ्यः, कल्पयामीति। अथ यथास्वं पितृभ्यः कल्पयन्ति मातामहेभ्यश्च पृथक्। यज्ञोपवीतानि कृत्वा तेष्वेव देशेषु तथैवानुपूर्व्या तैरेव नामभिर्देवानृषींश्च तर्पयन्ति वैशम्पायनप्रभृतींस्तु मातुः प्रपितामहपर्यन्तान् प्राचीनावीतिनस्तर्पयन्ति अमुं तर्पयाम्यमुं तर्पयाम्यमुं तर्पयामीति। अभिष्यन्ते चान्योन्यम्। यज्ञोपवीतानि कृत्वा त्रीनादितोऽनुवाकानधीयीरन्। काण्डादीन् प्रथमोत्तमौ वा। काण्डात् काण्डात् प्ररोहन्तीति द्वाभ्यामुपोदके दूर्वां रोपयन्ति। अपः प्रगाह्योदर्भिं कुर्वन्ति। सर्वतः परिवार्योर्मिमन्तः कुर्वन्ति। उद्गाह्यातमितो राजिं धावन्ति। प्रत्येत्या-

मिदानादि सक्तुभिरोदनेनेति ब्राह्मणान् भोजयित्वा वाचयति। एवं पारायणसमाप्तौ च काण्डादि-दूर्वारोपणोदधिप्राशनवर्जम्। प्रत्येत्य ब्राह्मणभोजनादिकर्म प्रतिपद्यते। एवमेवाग्निरहरहर्देवा-नृषीन् पितॄंश्च तर्पयेत्। आगारस्थूणाविरोहणे मधु न उपवेशने कुम्भ्यां कपोतपददर्शने अमात्यानां शरीरेषणे अन्येषु चाद्भुतोत्पातेषु अमावास्यायां निशायां यत्रापां न शृणुयात् तदग्नेरुपसमाधाना-द्याज्यभागान्त उत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वाऽभिमृतेभ्य उत्तरया दक्षिणतोऽश्मानं परिधिं दधाति दधाति॥ इति।

मानवगृह्यसूत्राणि च—वर्षासु श्रवणेन स्वाध्यायानुपाकुरुते। स जुहोति अब् वा नामासीत्यादि। प्राक् स्विष्टकृतोऽथ जपति ऋतं वदिष्यामीति। ॐ भूर्भुवः स्वस्तत्सवितुरिति। दर्भपाणिभिः सावित्रीमधीते, त्रींश्चादितोऽनुवाकान्। को वो युनक्तीति च उपाकुर्म हेऽध्यायानु-पतिष्ठन्तु छन्दांसीति च। तस्यानध्यायाः समूहन् वातो वलीकक्षारप्रभृतिवर्षं न विद्योतमाने न स्तनयतीति श्रुतिराकालिकं देवतुमुलं विद्युद्वन्वोल्काऽत्यक्षराः शब्दाः आचारेणान्ये। अर्धपञ्च-मासानधीत्योत्सृजति पञ्चार्धषष्ठान् वा। अथ जपति ऋतमवादिषमिति। ॐ भूर्भुवः स्वस्तत्-सवितुरिति। दर्भपाणिभिः सावित्रीमधीते। त्रींश्चाऽऽदितोऽनुवाकान्। को वो छन्दांसीति च। प्रतिपदं पक्षिणीं रात्रिं नाधीयीत। नात ऊर्ध्वमभ्रेषु। आकालिको विद्युत्स्तनयित्नुवर्षेषु। गोनामस्तु मन्त्रब्राह्मणकल्पपितृमेधमहाव्रताष्टापदी वैपुवतानि दिवाऽधीयत वैपुवतमार्द्रपाणिः। रुद्रांश्च नक्तं न भुक्त्वा न ग्रामे। शुक्रियस्य प्रवर्ग्यकल्पे नियमो व्याख्यातः। श्रयोर्विंशन्तु संमील्य। गवां तु न सकाशे गोनामानि गर्भिणीनामसकाशेऽष्टापदीम्। रेतोमूत्रमिति च शुनासीर्यस्य च सौर्यं चक्षुष्कामस्य। चक्षुर्मो धेहि चक्षुष इति। सूर्योऽपोऽवगाहत इति च। आदित्यसौर्ययाम्यानि चहूनि दिवाऽधीयीत। उपाकृत्योत्सृज्य च त्र्यहं पञ्चरात्रमेके। वेदारम्भणे समाप्तौ चाका-लम्। अथातोऽन्तरकल्पं व्याख्यास्यामः। दर्भमयं वासः परिधायाऽऽचम्यापां नप्त्र इति तीरे जपित्वाऽपोऽवगाह्य ॐ भूर्भुवः स्वस्तत्सवितुरिति। दर्भपाणिभिः सावित्रीमधीते त्रींश्चाऽऽदितो-ऽनुवाकान्। आपो देवीरित्याद्यष्टौ। या ओषधय इति तिस्रः। तच्छंयोरावृणीमह इति मार्ज-यित्वा वासांस्युत्सृज्याऽऽचार्यान् पितृधर्मेण तर्पयन्ति। श्राद्धकल्पेन शेषो व्याख्यातः। अथातो-ऽग्निं प्रवर्तयन्ति। उत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे वेद्याकृतिं कृत्वाऽवनीय स्थाने सप्त च्छन्दांसि प्रतिष्ठाप्य विष्टरान् दर्भमुष्टीन् वा दक्षिणाग्निस्थाने प्रौगाकृतिं कौसितं खात्वा पश्चादुत्करमपां पूरयित्वा गार्हपत्यस्थानेऽग्निं प्रणीय, युञ्जानः प्रथमं मन इत्यष्टौ हुत्वा आकूतमग्निं प्रयुजं स्वाहेति षड् जुहोति। विश्वो देवस्य नेतुरिति सप्तमीम्। यज्ञियानां समिधां त्रींस्त्रीन् समित्पूलानुपकल्प्य प्राक् स्विष्टकृतस्तिष्ठन्तो व्याहृतिपूर्वकं स्थण्डिलस्याऽऽदितस्त्रिभिरनुवाकैरेकैकेन स्वाहाकारान्ताभिरादधाति। आपोहिष्ठीयाभिः कौसीतान् मार्जयित्वा धानाभिर्ब्राह्मणान् स्वस्ति वाचयन्ति।

यदि दुःस्वप्नं पश्येद् व्याहृतिभिस्तिलान् हुत्वा दिश उपतिष्ठेत। बोधश्च मेति। एवं

यस्मिंश्चोत्पन्नेऽमर्थान् शङ्केत व्याहृतिभिस्तिलान् हुत्वा तपः प्रतिपद्येत द्वादशरात्रं षड्रात्रं त्रिरात्रमेकरात्रं वा। यदि समुत्पातं मन्येत तद्वा। यदि पर्वसु मार्तिकं भिद्येत पार्थिवमसीत्यप्सु प्रहरेत्। यद्यर्वा दहेद् वा नश्येद्वा प्रपतेद्वा प्रभज्येद् वा प्रहसेद् वा प्रचलेद् वा स्थाल्या वा स्थालीमासिच्य दक्षिणोत्तरा वा स्थाली भिद्येतोत्तरा वोपकाशे नियम्य। द्वारवंशो वा स्फुटेत्। गौर्वा गां धयेत्। स्त्री वा स्त्रियमाहन्यात्। कर्तसंसर्गे फलसंसर्गे मुसलसंसर्गे मुसलप्रपतने मुसलं वावशीर्येतान्यस्मिंश्चाद्भुतमेताभिर्जुहुयात्। स्वस्ति न इन्द्रः, स्वस्ति नो मिमीता, त्रातारमिन्द्रम्, मा ते अस्याम्। विन इन्द्र, मृगो नभीमः, तंशंयोरावृणीमह इति दशाऽऽहुतयः। जयप्रभृतिसमानमिति।

वाराहगृह्यसूत्राणि तु—वर्षासु श्रवणेन स्वाध्यायानुपाकरोति हस्तेन वा। प्रोष्ठपदीमित्येके। अथ जुहोति अयानामासीति। जयप्रभृतिभिश्चाऽऽज्यस्य पुरस्तात् स्विष्टकृतोऽन्तेवासिनां योग-मिच्छन्नथ जपति ऋतं वदिष्यामीति। छन्दांस्युपकुर्महे अध्यायान् भूर्भुवः स्वरिति दर्भपाणिभिः सावित्रीमधीत्याऽऽदितस्त्रीननुवाकान् तथाङ्गानामेकैकं को वो युनक्तीति च। तस्यानध्यायाः समूहनवातो वल्मीकक्षारप्रभृतिवर्षान् विद्योतमानस्तनयित्नुरिति श्रुतिः। आकालिकं देवतुमुलं विद्युदुल्कोल्कात्यक्षराः शब्दा आचारेणार्धपञ्चमान् मासानधीत्य पञ्चार्धपष्ठान् वा दक्षिणायनं वाऽधीत्य अथोत्सृजन्ति एतेन धर्मेण ऋतमवादिषं···प्रतिरवसन्तु छन्दांस्युत्सृजामहे अध्यायान् भूर्भुवः स्वरित्यन्तमधीत्य को वो विमुञ्चतीति च पक्षिणीं रात्रिं नाधीयीतोभयतः पक्षान् वा मास ऊर्ध्वम् अभ्रेष्वाकालिकविद्युत्स्तनयित्नुवर्षं चेति।

बोधायनीयगृह्यसूत्राणि च—हुतानुकृतिरुपाकर्म। श्रावण्यां पौर्णमास्यां क्रियेतापि वा आषाढ्याम्। समन्वारब्धेष्वन्तेवासिषु। अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा चतस्रः प्रधानाहुतीर्जुहोति याज्ञिकीभ्यो देवताभ्यः स्वाहा, संहितीभ्यो देवताभ्यः स्वाहा, वारुणीभ्यो देवताभ्यः स्वाहा, सर्वाभ्यो देवताभ्यः स्वाहा, इति। अथ काण्डऋषीन् जुहोति प्रजापतये काण्डऋषये, सोमाय, अग्नये, विश्वेभ्यो देवेभ्यः, स्वयम्भुवे काण्डऋषये स्वाहेति। अथ सद-सस्पतिं जुहोति सदसस्पतिमिति। अथ सावित्रीं जुहोति तत् सवितुर्वरेण्यमिति। अथ वेदा-हुतीर्जुहोति, ऋग्वेदाय, यजुर्वेदाय, सामवेदाय, अथर्ववेदाय, अथर्वाङ्गिरोभ्यः, इतिहासपुराणेभ्यः सर्पदेवजनेभ्यः, सर्वभूतेभ्यः, स्वाहेति। त्रीनादितोऽनुवाकानधीयीरन् काण्डादीन् वा सर्वान्। जयप्रभृतिसिद्धमाधेनुवरप्रदानात्। अथ ब्राह्मणान् तर्पयत्यपूपैर्धानाभिः सक्तुभिरोदनेनेति यद्यु वैतेभ्यो भवति। ऋषयश्छन्दांस्याचार्या वेदा यज्ञाश्च प्रीयन्तामिति वाचयित्वा। त्र्यहमेकाहं वा नाधीयीरन्। मासं प्रदोषे नाधीयीरन्। नित्यं चैव भुक्त्वोर्ध्वम्। मध्यरात्रात् स्तनिते सप्रदोषमहरनध्यायः। अस्तमिते चोदयाद विद्युति च स्वप्नान्तम्। एवमेव काण्डोपाकरण-काण्डसमापनाभ्याम्। स एकः काण्ड ऋषिः। तस्य चैवैकस्य काण्डस्यैतदहरनध्यायः। एवं काण्डविसर्गे। एतावदेव नाना नात्रानुवाकः। पौरोडाशिकं याजमानं होतारो हौत्रं पैतृमेध

इति सब्राह्मणानि सानुब्राह्मणानि प्राजापत्यानि। आध्वर्यवं ब्रह्म दाक्षिणानि समिष्टयजूंष्यव-भृथयजूंषि वाजपेयः शुक्रियाणि सवा इति सब्राह्मणानि सानुब्राह्मणानि सौम्यानि। अग्न्याधेय-मग्निहोत्रमग्न्युपस्थानमग्निचयनं सावित्रं नाचिकेतं चातुर्होत्रीय वैश्वसृजारुणा इति सब्राह्मणानि सानुब्राह्मणान्याग्नेयानि। राजसूयः पशुबन्ध इष्टयो नक्षत्रेष्ट्यो दिवश्येनयोऽपाघाः साग्रायणमुप-होमाः कौकिली सूक्तान्यौपानुवाक्यं याज्याऽश्वमेधः पुरुषमेधः सौत्रामण्यच्छिद्राणि पशुहौत्रमुप-निषद् इति सब्राह्मणानि सानुब्राह्मणानि वैश्वदेवानि। स्वायम्भुवं काण्डं काठके पठितो विधिः स्वयम्भूश्चात्र दैवतं सर्वभूतपतिः शुचिरिति। अथ कारीरीव्रतं चतूरात्रमक्षारलवणं भूमौ भुञ्जीत पशुवत्। एवमेव काराव्रतम्। सावित्रीभ्यः प्रभृत्यूर्ध्वमौषध्यनुवाकानधीयीरन् नात्र भूमौ भुञ्जीत न पशुवदिति।

बलिहरणानुकृतिरुत्सर्गः। तैष्यां पौर्णमास्यां क्रियेतापि वा माघ्याम्। सहान्तेवासिभि-र्ग्रामात् प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रापः सुतीर्थाः सूपावगाहाः स्रवन्त्यः स्रवकिन्यः शङ्किन्यस्तासामन्तं गत्वा स्नात्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरिति मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन त्रीन् प्राणायामान् धारयित्वोत्तीर्य वासः पीडयित्वाऽन्यत् प्रयतं वासः परिधायाप आचम्यापां समीपे स्थण्डिलानि कृत्वा दर्भानन्योन्यस्मै सम्प्रदाय दर्भैरासनानि कल्पयन्ति। ब्रह्मणे कल्पयामि, प्रजापतये, बृहस्पतये, अग्नये, वायवे,सूर्याय, चन्द्रमसे, नक्षत्रेभ्यः, ऋतुभ्यः, संवत्सराय, इन्द्राय, राज्ञे यमाय, राज्ञे वरुणाय, राज्ञे सोमाय, राज्ञे वैश्रवणाय, राज्ञे वसुभ्यः, रुद्रेभ्यः, आदित्येभ्यः, विश्वेभ्यो देवेभ्यः, साध्येभ्यो देवेभ्यः, मरुद्भ्यः, ऋभुभ्यः, भृगुभ्यः, अथर्वभ्यः, अङ्गिरोभ्यः, विश्वामित्राय, जमदग्नये, जामदग्न्याय, भरद्वाजाय, गौतमाय, आत्रेयाय, वशिष्ठाय, काश्यपाय, अरुन्धत्यै कल्पयामीति। अथ दक्षिणतो-ऽगस्त्याय कल्पयामीति। अथोत्तरतो निवीतिनः कृष्णद्वैपायनाय जातुकर्ण्याय, तरक्षाय, तृणबिन्दवे, सोमशुष्मिणे, सोमशुष्मायणाय, वाजिने, वाजश्रवसे बृहदुक्थाय, वर्मिणे, वध्रिणे, वरूथाय, सनत्कुमाराय, वामदेवाय, वाजिरक्षाय, वीरजिताय, हर्यश्वाय, उदमेघाय, ऋणञ्जयाय, तृणञ्जयाय, कृतञ्जयाय, धनञ्जयाय, सत्यञ्जयाय, बभ्रवे, त्र्यारुणाय, त्रिवर्षाय, त्रिधातवे, अश्वज्ञाय, पराशराय, मृत्यवे कर्त्रे, विकर्त्रे, सुकर्त्रे, त्वष्ट्रे, धात्रे, विधात्रे, सुश्रवसे, सुतश्रवसे, सत्यश्रवसे, सवित्रे, सावित्र्यै, छन्दोभ्यः, ऋग्वेदाय, यजुर्वेदाय, सामवेदाय, अथर्ववेदाय, अथर्वाङ्गिरोभ्यः, इतिहासपुराणेभ्यः, सर्वदेवजनेभ्यः, सर्वभूतेभ्यः। अथ दक्षिणतः प्राचीनावीतिनो वैशम्पायनाय, फलिङ्गवे, तित्तिरये, उखायोल्याय, आत्रेयाय, पदकाराय, कौण्डिन्याय, वृत्तिकाराय, कण्वाय, बोधायनाय, प्रवचनकाराय, आपस्तम्बाय, सूत्रकाराय, सत्याषाढाय, हिरण्यकेशाय, वाज-सनेयाय, याज्ञवल्क्याय, भरद्वाजाय, अग्निवेश्याय, आचार्येभ्यः, ऊर्ध्वरेतोभ्यः, वानप्रस्थेभ्यः वंशस्थेभ्यः एकपत्नीभ्यः कल्पयामीति। अथ यथा स्वयं पितृभ्यः कल्पयन्ति मातामहेभ्यश्च। पृथक् पृथगेतैरेव नामधेयैर्गन्धपुष्पधूपदीपैरमुष्मै नमोऽमुष्मै नम इति। अन्नेनामुष्मै स्वाहाऽमुष्मै

स्वाहेति । फलोदकेनामुं तर्पयाम्यमुं तर्पयामीति । श्रीनादितोऽनुवाकानधीयीरन् काण्डादीन् वा सर्वान् । काण्डात् काण्डात्, या शतेनेति द्वाभ्यामुपोदके दूर्वामारोपयन्तेऽधीयीरन्तेऽन्योन्यमनुष्या अनुष्या इति । अथावगाह्य सम्परिगृह्योर्मिमन्तमुदधिं कृत्वा त्रिरनुत्पातमितोराशिं धावन्ति । प्रत्येत्य गृहानथ ब्राह्मणान् तर्पयन्त्यपूपैर्धानाभिः सक्तुभिरोदनेनेति मधु चैतेभ्यो भवति । त्र्यहमेकाहं वा नाधीयीरन् मासं प्रदोषे नाधीयीरन् नित्यं चैव विद्युत्स्तनितवर्षाणामेकस्मिन् द्वयोर्वा काले त्रिसन्निपाते त्र्यहम् । यथोपाकृतौ छन्दसामेवमेवमुत्सृष्टौ कल्पानाम् । एवमेव पारायणसमाप्तौ काण्डादिदूर्वारोपणोदधिधावनवर्जम् ।

अथ यद्यगारे स्थूणा विरोहेत्, कपोतो वाऽऽगारमध्येऽभिपतेत्, वायसो वा गृहं प्रविशेत्, गौर्वा गां धयेत्, गौरात्मानं प्रतिधयेत् अनड्वान् वा विषमुल्लिखेत्, अग्नौ वा धूमो जायेत, अनग्नौ वा दीप्येत, मधु वा जायेत, वल्मीकं वोपजायेत, निर्यासं वोपजायेत, छत्राकं वोपजायेत, मण्डूको वाऽग्निग्रणे वाशयेत् श्वानप्रसूतो वा सर्पो वा गृहपतिं जायां वोपतपन् विन्देत अन्येषु वाऽद्भुतोत्पातेषु । अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति—यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिरिति द्वाभ्याम् । अथाऽऽज्याहुतीरुपजुहोति—वास्तोष्पते, वास्तोष्पते, शं नो देवीः, इन्द्राग्नी रोचना, कया नश्चित्र, को अद्य युङ्क्ते, भवतं नः समनसौ इति । स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् । अथाग्रेणाग्निं शमीपर्णेषु हुतशेषं निदधाति—शं नो देवीरभिष्टय इति । स्थालीसंक्षालनमाज्यशेषमुदकशेषं च पात्र्यां समानीय तेषूत्पातेषु निनयेत् प्रोक्षेद् वा—तच्चक्षुर्देवाः वृणीमहे इति । अन्नं संस्कृत्य ब्राह्मणान् सम्पूज्याऽऽशिषो वाचयित्वा शिवं शिवमिति प्रोक्षति । अद्भुतो व्याख्यात इति ।

पारस्करगृह्यसूत्राणि तु—अथातोऽध्यायोपाकर्म । ओषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां श्रावणस्य पञ्चमीं हस्तेन वा । आज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति । पृथिव्या अग्नय इत्यृग्वेदे । अन्तरिक्षाय वायव इति यजुर्वेदे । दिवे सूर्यायेति सामवेदे । दिग्भ्यश्चन्द्रमस इत्यथर्ववेदे । ब्रह्मणे छन्दोभ्यश्चेति सर्वत्र । प्रजापतये देवेभ्य ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतयेऽनुमतय इति च । एतदेव व्रतादेशनविसर्गेषु । सदसस्पतिमित्यक्षतधानाभिः । सर्वेऽनुपठेयुः । हुत्वा हुत्वोत्तुम्भयन्स्तिलांस्तिलशः समिध आदध्युराग्नीः सपलाशा घृताक्ताः सावित्र्या । ब्रह्मचारिणश्च पूर्वकल्पेन । सद्यो भवन्त्वित्यक्षतधाना अस्वादन्तः प्राश्नीयुः । दधिक्राव्ण इति दधि भक्षयेयुः । स यावन्तं गणमिच्छेत् तावतस्तिलानाकर्षफलकेन जुहुयात् सावित्र्या शुक्रज्योतिरित्यनुवाकेन वा । प्राशनान्ते प्रत्यङ्मुखेभ्य उपविष्टेभ्यः ॐकारमुक्त्वा त्रिश्च सावित्रीमध्यायादीन् प्रब्रूयात् । ऋषिमुखानि बह्वृचानाम् । पर्वाणि छन्दोगानाम् । सूक्तान्यथर्वणानाम् । सर्वे जपन्ति सह नोऽस्तु सह नोऽवतु सह न इदं वीर्यवदस्तु ब्रह्म । इन्द्रस्तद् वेद येन यथा न विद्विषामह इति । त्रिरात्रं नाधीयीरन् । कोमनखानामनिकृन्तनम् । एके प्रागुत्सर्गात् । वातेऽमावास्यायां सर्वानध्यायः । श्राद्धासने चोल्कावस्फूर्जद्भूमिचलनाग्न्युत्पातेष्वृतुसन्धिषु चाकालम् ।

उत्सृष्टेष्वभ्रदर्शने सर्वरूपे च त्रिरात्रं त्रिसन्ध्यं वा। भुक्त्वार्द्रपाणिरुदके निशायां सन्धिवेलयोरन्तःशवे ग्रामेऽन्तर्दिवाकीर्त्ये। धावतोऽभिशस्तपतितदर्शनाश्चर्याभ्युदयेषु च तत्कालम्। नीहारे वादित्रशब्द आर्तस्वने ग्रामान्ते श्मशाने श्वगर्दभोलूकशृगालसामशब्देषु शिष्टाचरिते च तत्कालम्। गुरौ प्रेतेऽपोऽभ्यवेयाद् दशरात्रं चोपरमेत्। सतानूनप्त्रिणि सब्रह्मचारिणि च त्रिरात्रम्। एकरात्रमसब्रह्मचारिणि। अर्धषष्ठान् मासानधीत्योत्सृजेयुः। अर्धसप्तमान् वा। अथेमामृचं जपन्ति—उभा कवीति। त्रिरात्रं सहोष्य विप्रतिष्ठेरन्। पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजेरन्। उदकान्तं गत्वाऽद्भिर्देवांश्छन्दांसि वेदानृषीन् पुराणाचार्यान् गन्धर्वानितराचार्यान् संवत्सरं च सावयवं पितॄनाचार्यान् स्वांश्च तर्पयेयुः। सावित्रीं चतुरनुद्रुत्य विरताः स्म इति प्रब्रूयुः। क्षपणं प्रवचनञ्च पूर्ववत्। इति।

---

# तृतीयप्रपाठकस्य चतुर्थी कण्डिका

—:o:—

वेदारण्यकोपनिषदां नानाव्रतचर्याभिरध्ययनमुक्तम्। इतरग्रन्थानान्तु व्रतान्तराऽविधानाद् [1]यथेष्टमध्ययनं मा भूदित्यत आह—

## ब्रह्मचारी वेदमधीत्य ॥ १ ॥

समाप्तेष्वपि व्रतेषु ब्रह्मचारी सन् वेदं वेदशेषम् अधीत्य पठित्वा। एवञ्चाङ्गादीनां ब्रह्मचर्यादूर्ध्वमध्ययने न दोषः(A)।

---

A. कौथुमीयानां के वा ग्रन्था अध्येतव्या इति चेदत्र संग्रहश्लोकाः—

द्विपञ्चाशदिमे ग्रन्थाः शाखायाः कौथुमेरिह।
प्रोक्ताः सामोदधौ यस्माच्छ्रौते स्मार्ते सुनिश्चिताः ॥

तस्माद् वै सामशाखायां ग्रन्थभेदो निगद्यते।
श्रौतस्मार्तोदिते यस्मान्न मुह्येत कथञ्चन ॥

१ २ ३ ४ ५
वेदारण्यकमूहोऽत्र रहस्यं गानमुच्यते।
६ ७ ८
छन्दस्यारण्यके चैव मन्त्राः सोत्तरकाः स्मृताः ॥

९-११ १२
छन्दस्यादित्रयं स्तोभः सपदं स्यात्तुल्यकम्।
१३ १४ १५ १६
प्रौढः षड्विंशकं सामविधानार्षेयके तथा ॥

१७ १८ १९ २०
देवताध्यायवंशाख्याः संहितोपनिषत् तथा।
अद्भुतोपनिषच्चैव ब्राह्मणे समुदीरिताः ॥
२१ २२ २३
नारदी लोमशी शिक्षा गौतमी चेति वै त्रिधा।
२४ २५ २६
कल्पसूत्रं तथा क्षुद्रं कात्यायनकमेव च ॥

२७ २८
उपग्रन्थाः पञ्चविधा निदानं ताण्ड्यलक्षणम्।
२९ ३०
अनुपदन्त्वाथ स्तोत्रं कल्पानुपदमेव च ॥

एतद्दशविधं सूत्रं सामगेषु च विश्रुतम्।
३१ ३२ ३३ ३४
प्रकृतन्त्रं सामतन्त्रञ्च संज्ञाकरणमेव च ॥

---

1. 'यथापेष्टया' ख-च।

ततः किं कुर्यादित्यत आह—

## उपन्याहृत्य गुरवे(A)ऽनुज्ञातो दारान् कुर्वीत ॥ २ ॥

गुरुदक्षिणां गुरवे उपनि आहृत्य, निशब्दप्रयोगाद् नीचैः क्षितिगत[1]शिरा भूत्वा उपाहृत्य निवेद्य (B), तेन च गृहवासायानुज्ञातो दारान् कुर्वीत, यथा तदधस्ता[2]देव व्याख्यातं पुण्ये नक्षत्रे इत्यत्र। [3]दारान् कुर्वीतेत्यनेनात्र कन्याप्रार्थनमात्रमेव विधीयते न विवाहः। [4]कुतः? स्नानोत्तरकालभावित्वाद् विवाहस्य।

तथाच मनुः—

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् (C) ॥ इति।

यद्येवं [5]तर्हि [6]कस्मात् विपर्ययेणोपन्यासः?

३५ ३६
धातुलक्षणकञ्च स्यादिति व्याकरणानि च।
३७ ३८
अनुक्रमणिका चेति नैगेयञ्च ततः परम् ॥
३९ ४० ४१
फुल्लं गोभिलगृह्यञ्च मन्त्रलक्षणकं तथा।
४२ ४३
गायत्र्यादिविधानञ्च ततः स्तोभानुसंहरः ॥
४४ ४५
छन्दोगपरिशिष्टन्तु गृह्यासंग्रह एव च।
४६ ४७
श्राद्धकल्पं ततो वेद्यासाधनं गोभिलीयकम् ॥
४८ ४९ ५० ५१
स्नानविधिरुपाकर्म श्रावणेन परो विधिः।
५२
द्विपञ्चाशदिमे ग्रन्था वृषोत्सर्गान्तगाः स्मृताः ॥
इति कौथुमशाखायां ग्रन्थसंख्या यथाक्रमात्।
एतामधीत्य निखिलं वेदोक्तं ज्ञातुमर्हति ॥ इति।

A. अनुज्ञातो—इति सूत्रान्तरमिति सामश्रमितर्कालङ्कारौ।

B. अत्र केचित्—उपनी उपनीः उपनयनं तद्दक्षिणाऽप्युपचारादुपनीरित्युच्यते ततो द्वितीयैकवचनस्य छपां छरिति लुकि उपनीति उपनयनदक्षिणामिति व्याचख्युः।

C. मनुसंहिता ३।४। अस्य व्याख्यायां मेधातिथिः—"सत्यामपि वेदव्रतसमाप्तौ गुरुणाऽनुज्ञातः स्नायात्। स्नानशब्देन गृह्योक्तसंस्कारविशेषो लक्ष्यते ब्रह्मचारिधर्मावधिः, तदुहैव गृह्यकारोक्तं कश्चिद् मधुपर्कपूजाविहितसंस्कारं प्राप्य समावृत्तो गुरुकुलात् पितृगृहं प्रत्यागत इत्यनुवादः। उद्वहेतेत्येतद्विधिशेषमेतत् सर्वं प्राप्तमेव। न तु समा-

1. '-शिरो' ख। 2. 'एव' नास्ति ख। 3. 'दारान्' नास्ति ख। 4. 'कुतः' नास्ति घ। 5. 'तर्हि' नास्ति घ। 6. 'विपर्ययेण कस्मादुपन्यासः' ख।

उच्यते—प्राक् स्नानात् कन्याप्रा[1]र्थनाविधानार्थं विपर्ययः क्रियते। इतरथा अनुपलभ्यैव कन्यां स्नानं कुर्वतः किञ्चित्कालमनाश्रमित्वमस्य स्यात्, त[2]दनिष्टम्।

वर्तनं विवाहाङ्गम्। तेन यः पितृगृह एवाधीतवेदस्तस्य समावृत्तस्य सम्भवत्येव विवाहः। केचित् समावर्तनं विवाहाङ्गं स्नानं मन्यन्ते। कथाश्रुत्या भेदप्रतिपत्तिरिति चेद्र एवं तर्हि समावर्तनम्, विवाहाङ्गं स्नानसंस्कारं वक्ष्यति। सविशेषं हि तत्र स्नानमाम्नातमेव, अथवा यमनियमत्यागाभिप्रायं समावृत्तिवचनम्। समावृत्तः प्राक्तनीमेवावस्थां नियमरहितां प्रतिपन्न इत्यर्थः। विशेषाभिप्रायञ्च नियमत्यागवचनम्, ब्रह्मचारिणो हि सातिशया यमनियमाः, न तथोत्तरेषाम्। यथाविधीति स्वधर्मेणेतिवत्। उद्वहेत द्विजो भार्याम्, उद्वहेतेति विवाहविधिः। संस्कारकर्म विवाहः, भार्यामिति द्वितीयानिर्देशात्; न च प्राग् विवाहाद् भार्या सिद्धाऽस्ति यस्या विवाहसंस्कारः क्रियते न चक्षुष इवाञ्जनसंस्कारः। किं तर्हि? निवर्त्यते विवाहेन। यथा यूपं छिनत्तीति छेदनादयः संस्कारा यस्य क्रियन्ते स यूपः, एवं विवाहेनैव भार्या भवतीति। विवाह-शब्देन पाणिग्रहणमुच्यते, तचात्र प्रधानम्, एवं हि स्मरन्ति विवाहनं दारकर्म पाणिग्रहणमिति। इहापि वक्ष्यति पाणिग्रहणसंस्कार इति लाजहोमाद्यङ्गम्। तच्च गृह्यादखिलं ज्ञातव्यम्। नोद्वहेत् कपिलां कन्यामिति कन्याग्रहणात् कन्याया अयं संस्कारो न स्त्रीमात्रस्य। कन्याशब्दश्चात्र प्रकरणे अप्रवृत्तपुं-संप्रयोगायां योषिति वर्तत इति वक्ष्यामः। सवर्णां समानजातीयाम्। लक्षणान्विताम्—लक्षणानि अवैधव्यप्रजाधनसूचकानि वर्णरेखातिलकादिचिह्नानि ज्योतिःशास्त्रावगम्यानि, तैरन्वितां युक्तां शुभलक्षणान्वितामित्यर्थः, यद्यप्यनिष्टसूचकमपि लक्षणं भवति किन्तु सूचकैरेव शास्त्रै-स्तादृशीं विवाहयेत्। अतः प्रशस्तलक्षणा लक्षणवती द्रष्टव्या। अभिप्रेतसूचक एव लक्षणशब्दो लोके प्रयुज्यते—सलक्षणोऽयं पुरुषः सलक्षणा स्त्रीति, या शुभलक्षणा सैवमुच्यते। तत्राधिकारचिन्ता कर्तव्या संस्कारविधित्वादेवाऽऽधानवदनुष्ठानलाभात्। यथैव ह्याधानमाहवनीयादिद्वारेण नित्य-काम्यकर्मोपयोगितदङ्गाहवनीयादिनिर्वृत्त्यर्थमनुष्ठीयते एवं विवाहोऽपि भार्यानिर्वर्तकत्वेन दृष्टादृष्ट-पुरुषार्थोपयोगित्वात्। तथा हि खेदात् पुंसः स्त्रीमात्रविषयार्थं प्रवृत्तौ प्रसक्तायां कन्यापरदार-निषेधात् स्वदारेषु कामिनः खेदनिवृत्तिः, सह धर्मश्चरितव्य इति तया सह सर्वधर्मे[ष्व]धिकारादहृष्ट-पुरुषार्थसिद्धिस्तदधीना। अत्र केचिन्मीमांसन्ते—रोगिणः पूर्वोक्तेन प्रकारेण दृष्टसिद्ध्यर्थं विवाहं स्वतः कुर्वन्ति, तेषाञ्च कृतविवाहानां सम्भवेत् स द्विजातिकर्मविधित्वेन कर्मानुष्ठानसिद्ध्यर्थो विवाहः। यस्य कथञ्चित् स्त्रीनिष्ठा निवृत्ता न तस्य विवाहः। असति विवाहे कर्मानधिकारादनधि-कृतस्य चाननुष्ठाने दोषाभावात् पुरुषार्थानुष्ठानान्यनुतिष्ठतोऽनाश्रमिणोऽप्यवस्थानमविरुद्धम्। तदेतदसत्, यथैव कामः पुरुषार्थस्तथैव धर्मोऽपि पुरुषार्थत्वे प्रयोजकः, सर्वोऽपि पुरुषार्थसिद्ध्यर्थं प्रवर्तते"। एवमाह।

1. '-र्थनविधा-' ख। 2. '-दमिष्टम्' ख।

उक्तञ्च—

अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः। (A) इति।

'नाव्रतो ब्राह्मणः स्यादि'ति च। तस्माद् व्रतस्थ 'एव कन्यां प्रार्थयित्वा विवाहसन्निधौ यत् पुण्यमहस्तत्र ज्ञात्वा अथ दारान् कुर्वीत। कीदृशान्—

## असगोत्रान् ॥ ३ ॥

²आत्मनो गोत्रेण समानं तुल्यं गोत्रं येषां ते सगोत्राः, न सगोत्रा असगोत्राः, तान् दारान् कुर्वीत इति ³वर्त्तते (B)।

---

A. उक्तं प्रमाणमिदं प्राक् (द्र० पृ० १०)।

B. विषयेऽस्मिन्नुच्यते किञ्चित्—तथाच विष्णुसंहितायां चतुर्विंशेऽध्याये संवादिप्रमाणम्—"न सगोत्रां न समानार्षप्रवरां भार्यां विन्देत" इति। गोत्रप्रवरौ प्रसिद्धौ, सर्वे किल तदुभयं स्मरन्ति अमुकगोत्रोऽमुकामुकप्रवरोऽहमिति न्यायाचार्याः। याज्ञवल्क्यसंहितायाञ्च—"असमानार्षगोत्रजाम्" इत्युक्तम्। तद्व्याख्यायाञ्च मिताक्षरा—"ऋषेरिदम् आर्षं प्रवर इत्यर्थः, गोत्रं वंशपरम्पराप्रसिद्धम्। गोत्रप्रवरौ च पृथक् पृथक् पर्युदासनिमित्तम्, तेनासमानर्षजामसमानगोत्रजामिति। तथाच 'असमानप्रवरैर्विवाह' इति गौतमः" इत्याह। माधवीयमदनपारिजातयोरपि गोत्रं वंशपरम्पराप्रसिद्धमित्युक्तम्। ऋषय एव यज्ञे व्रियमाणाः प्रवरा इति न्यायकुसुमाञ्जलिप्रकाशे वर्धमानोपाध्यायाः। रघुनन्दनस्तु—"अत्र च—

जमदग्निर्भरद्वाजो विश्वामित्रात्रिगोतमाः।
वशिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः।
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते ॥

इति स्मृतेः गोत्राणि तत्तन्नामकगोत्रभागीनि। वंशपरम्पराप्रसिद्धमादिपुरुषब्राह्मणरूपं गोत्रम्, तेन काश्यपो गोत्रं यस्य स काश्यपगोत्रः। प्रवरस्तु गोत्रप्रवर्तकमुनेर्व्यावर्तको मुनिगण इति माधवाचार्याः। बौधायनः—सगोत्राञ्चेद्मत्योपयच्छेन्मातृवदेनां बिभृयादिति। सुमन्तुः—पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत् परित्यज्य चैनां बिभृयादिति।

आचारमाधवीयमदनपारिजातयोरापस्तम्बः—

समानगोत्रप्रवरां समुद्वाह्योपगम्य च।
तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते ॥

समानप्रवरत्वं संज्ञासंख्ययोरन्यूनानतिरिक्तत्वेन भिन्नगोत्रेऽपि समानप्रवरत्वम्, यथा वात्स्यसावर्णिगोत्रयोरौर्वच्यवनभार्गवजामदग्न्याप्नुवत्प्रवराः। एकगोत्रेऽपि प्रवरान्यत्वम्—यथा

---

1. 'एव' नास्ति च। 2. 'आत्मनो' नास्ति च। 3. 'वर्त्तते' नास्ति च।

घृतकौशिकगोत्रस्य कुशिककौशिकघृतकौशिकाः प्रवराः कौशिककुशिकबन्धुकाश्चेति। अतो गोत्रप्रवरयोः पृथक् निषेध इति। सगोत्रासमानप्रवराग्रहणमविवाह्यस्त्रीमात्रोपलक्षणमिति प्रायश्चित्तविवेकः"। इत्याह।

निर्णयसिन्धौ च—"अथ संक्षेपेण गोत्रप्रवरनिर्णयः। तौ च भिन्नौ निषेधे निमित्तम्, 'सगोत्राय दुहितरं न प्रयच्छेदि'त्यापस्तम्बोक्तेः; असमानप्रवरैर्विवाह इति गौतमोक्तेश्च। तत्र गोत्रलक्षणमाह प्रवरमञ्जर्यां बौधायनः—

विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः॥

सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद् गोत्रम् इति। यद्यपि केवलभार्गवेष्वार्ष्टिषेणादिषु केवलाङ्गिरसेषु च हरितादिषु च नैतत्। भृग्वङ्गिरसोरुक्तेष्वनन्तर्गतेः, तथाऽपि अत्रेष्टापत्तिरिति केचित्। अत एव स्मृत्यर्थसारे प्रवरैक्यादेवात्राविवाह उक्तः। यद्यपि वसिष्ठादीनां न गोत्रत्वं युक्तम्, तेषां सप्तर्षित्वेन तदपत्यत्वाभावात्, तथाऽपि तत्पूर्वभाविवसिष्ठाद्यपत्यत्वेन गोत्रत्वं युक्तम्; अत एव पूर्वेषां परेषाञ्चैतद् गोत्रम्। प्रवरास्तु प्रवर्णानि प्रवराः। कल्पकारा हि वसिष्ठेति होता वसिष्ठवदित्यध्वर्युरित्यादिना येषां प्रवरणमामनन्ति ते प्रवराः। तत्र वरणं यद्यपि क्वचिद् दृश्यते तथाऽपि पूर्ववदविभेदो द्रष्टव्यः। अन्यथा तेषां त्र्यार्षेये एकार्षे इत्यादि निर्देशानुपपत्तेः। अन्ये तु तद्गोत्राणां त्र्यार्षेय इति भेदमाहुरिति दिक्। तत्त्वं तु गोत्रभूतस्य पितृपितामहप्रपितामहा एव प्रवराः। 'पितैवाग्रेऽथ पुत्रोऽथ पौत्रः' इति शतपथश्रुतेः। परं परं प्रथममित्याश्वलायनोक्तेश्च। अत्र विशेषमाह बौधायनः—

एक एव ऋषिर्यावत् प्रवरेष्वनुवर्तते।
तावत् समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात्॥ इति।

स्मृत्यर्थसारे—

प्रीयमाणा तथा चाऽपि सत्तया चाऽनुवर्तनम्।
एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते॥

भृग्वङ्गिरोगणेषु तु माधवीये स्मृत्यन्तरे—

पञ्चार्षे त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः।
भृग्वङ्गिरोगणेष्वेव शेषेष्वेकोऽपि वारयेत्॥

शेषगोत्रेषु एकोऽपि समानः प्रवरो विवाहं वारयेदित्यर्थः।

बौधायनोऽपि—"भृग्वङ्गिरसावर्जितस्य द्व्यार्षेयसन्निपाते विवाहस्त्र्यार्षेयसन्निपाते विवाहः पञ्चार्षेयाणाम् इति भृग्वङ्गिरोगणेष्वपि जमदग्निगौतमभरद्वाजेष्वनेकप्रवरसाम्ये सर्वेषामप्यसाम्ये वा सगोत्रादेवाविवाह इति दिक्" इत्याह कमलाकरः। एवञ्च अष्टानामृषीणामपत्यानां गोत्रत्वात् तेषाञ्चानेकत्वाद् गोत्राणां प्रभूततमो भेदः प्रभवति।

तथाच बौधायनः—

गोत्राणान्तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेतेषां प्रवरा ऋषिदर्शनात् ॥ इति ।

यद्यपि तदपत्येषु भृग्वङ्गिरसोरन्तर्भावाद् भार्गवादीनामसंग्रहस्तथाऽपि ग्रन्थान्तरस्वरसात् तेषामपि गोत्रत्वमनुचिन्तनीयम् । अत एव गोत्रप्रवर्त्तकाश्च प्राधान्येनाष्टौ ऋषय इति माधवाचार्याः । अत्र प्राधान्येनेति कुर्वद्भिरन्येऽपि गोत्रप्रवर्त्तकाः सन्तीति सूचितम् । उच्चावचभेदभिन्नास्तु तदपत्य-स्वाभाव्यात् कस्याञ्चिच्छाखायामन्तर्भावोपपत्तेश्च तयोः । यद्यपि गोत्रप्रवरौ स्मर्येते तथाऽपि प्रवराणां बहुत्वात् कदाचिद् विस्मरेयुरिति कल्पसूत्रकारैः स्वस्वकल्पसूत्रे प्रवरा निबद्धाः । समानगोत्रत्व-मपि सह भृगवङ्गयोऽङ्गिरसश्चत्वारो भरद्वाजा दश विश्वामित्राः पञ्च काश्यपा इत्यादिप्रपञ्चेनाऽऽकर-ग्रन्थेषु व्युत्पादितम् । परस्परमविवाह्याश्च ऋषयो मत्स्यपुराणादिषु बहुलमुपदिष्टा ग्रन्थगौरव-भयादिह नोच्यन्ते ।

समानप्रवरानिषेधे विशेषमाह बह्वृचपरिशिष्टे बौधायनः—

एक एव ऋषिर्यावत् प्रवरेष्वनुवर्त्तते ।
तावत् समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात् ॥

इत्यसमानप्रवरैर्विवाहः । समानगोत्रत्वं समानप्रवरत्वमिति मदनपारिजातः ।

शौनकः—

एक एव ऋषिर्यावत् प्रवरेष्वपि दृश्यते ।
तावता न विवाहोऽस्ति ऋते भृग्वङ्गिरोगणात् ॥

निर्णयसिन्धौ स्मृतिः—

एकस्मिन् प्रवरे तुल्ये मातृगोत्रे वरस्य च ।
तमुद्वाहं न कुर्वीत सा कन्या भगिनी स्मृता ॥

भृग्वङ्गिरोगणेषु विशेषमाह पारिजातादिषु बौधायनः—

द्व्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणां त्र्यार्षेयसन्निपातेऽविवाहः पञ्चार्षेयाणाम् । संग्रहकारै-रप्युक्तम्—

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥

दामोदरधृतव्यासवचनञ्च—

नोद्वहेत् पितृगोत्राञ्च जातामपि कुलान्तरे ।
त्यजेच्च तुल्यप्रवरां यत्र नाङ्गिरसो गणः ॥ इति ।

कामरूपदेशीयास्तु—

पितुः सपिण्डां मातुश्च समानोदकजामपि ।
नोद्वहेत् पितृगोत्राञ्च हित्वाऽन्यामकातयपौ ॥

इति वचनं शौनकस्येति जल्पन्तस्तथा व्यवहरन्ति गौरास्तु तन्नाऽऽद्रियन्ते ।

किञ्च —

मातुरसपिण्डान्(A) ॥ ४ ॥

मातुः सपिण्डा मातुलदुहित्राद्यः। न सपिण्डा असपिण्डाः, तान् [1]मातुरसपिण्डान् दारान् कुर्वीतेति (B)।

इदानीं वयोऽवस्थाविशेषैः कन्याभावाश्च[2]तुर्द्योत्यते। तत्र कीदृशी पित्रा देया कीदृशी चानेन [3]परिणेयेत्यत आह—

---

मदनपारिजाते—

परिणीय सगोत्रान्तु समानप्रवरां तथा।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत् ॥

शातातपः—

समानप्रवरां कन्यामेकगोत्रामथापि वा।
विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ॥
उत्सृज्य तां ततो भार्यां मातृवत् परिपालयेत्।

वशिष्ठः—गृहस्थो विनीतक्रोधः सहर्षो गुरुणाऽनुमतोऽसमानार्षेयीमस्पृष्टमैथुनामवरवयस्कां सदृशीं भार्यां विन्देत।

एवञ्च प्रमाणैरेतैरवधार्यते विज्ञियते च विशेषेण सूत्रकारमतमिति दिक्।

A. सामश्रमी तु 'मातुरसपिण्डा' एवमेतत् सूत्रं पठति।

B. अत्र संवादि प्रमाणमुक्तं मनुना—

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ३।५

अस्य व्याख्यायां मेधातिथिः—यादृशी कन्या वोढव्या तामिदानीं दर्शयति। मातुर्या असपिण्डा पितुश्च याऽसगोत्रा सा दारकर्मणि प्रशस्ता। मातुर्हि सपिण्डग्रहणं मातृबन्धूपलक्षणार्थम्। सापिण्ड्यं स्त्रीणां स्मृत्यन्तरे तृतीयपुरुषावधि। न तु त्रिभ्य ऊर्ध्वं मातृबन्धुभ्यो विवाह इष्यते, किं तर्हि ? पञ्चमादूर्ध्वम्। एवं हि गौतमः पठति—ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो मातृबन्धुभ्यः पञ्चमादिति। तेन यथाश्रुति समन्वयाभावात् सापिण्ड्याभावः स्मृत्यन्तरवशेन मातृसम्बन्धितया व्याकरणीयः। तेनैवमुक्तं स्यात् मातुरन्वयजाया न भवति। अवधिश्च गौतमीय एव, तेन मातामहीमातामहयोर्या अन्वये जाता सा पुत्रसन्ततेर्बान्धवसामीप्यात् पञ्चमीं यावन्न विवाहयितव्या। अतो मातृष्वसृ-तद्दुहितॄणां प्रमातामहीसन्ततिजानाञ्च सर्वासां प्रतिषेधो बन्धुत्वाविशेषात्। असगोत्रा च या पितुः, गोत्रं वशिष्ठभृगुगर्गादिवंशः स्मर्यते। समानगोत्रा वशिष्ठा न वशिष्ठैर्विवहन्ते न गर्गा गर्गैः।

---

1. 'मातुरसपिण्डान्' नास्ति घ। 2. '-र्था विद्यते' ख। 3. 'परिणेतव्ये-' ख।

वासिष्ठे तु मातृसगोत्राया अपि प्रतिषेधः—

परिणीय सगोत्रान्तु समानप्रवरां तथा ।
कृत्वा तस्याः समुत्सर्गं द्विजश्चान्द्रायणं चरेत् ॥
मातुलस्य सुताञ्चैव मातृगोत्रां तथैव च ॥

गोतमेन तु पठ्यते—असमानप्रवरैर्विवाह इति । तत्र गोत्रसमत्वेऽसत्यपि प्रवरभेदश्चेद् युज्यते विवाहः । यतः स्मृत्यन्तरे ह्युभयं निषिध्यते—असमानार्षगोत्रजाम् इति । आर्षं प्रवर इत्येकोऽर्थः । कथं पुनर्गोत्रभेदे समानार्षेयत्वम् ? किमिति न भवति यदि स्मर्यते श्रुतिस्मृतिप्रमाणकोऽयमर्थो न प्रत्यक्षगोचरो येन विरोधः स्यात् । के पुनरमी प्रवरा नाम, अत्यल्पमिदमुच्यते, इदमपि वक्तव्यं किं पुनरेतद् ब्राह्मणत्वं नाम, तथा कतरदेतद् गोत्रं नाम । यथैव समाने पुरुषत्वे ब्राह्मणत्वादिविशेषः, एवं समाने ब्राह्मणत्वे वसिष्ठादिगोत्रभेदः । प्रतिगोत्रञ्च समानार्षेयाणि । यस्यैतद् गोत्रं तस्य तैः शब्दैः प्रवराश्रयणं कर्त्तव्यम् । एवं विवाहनिषेधोऽपि, स्मरन्ति च सूत्रकारा गोत्रभेदसम्बन्धेन प्रवरान्, यस्यैतद् गोत्रं तस्येमे प्रवरा इति । गोत्रभेदस्तु तद्गोत्रजैरेव स्मर्यते वयं पराशरा वयमुपमन्यव इति । यद्यपि गोत्रवत् प्रवरानपि स्मरन्ति तथाऽपि बहुत्वात् कदाचिद् विस्मरेयुरिति गोत्रमुपलक्षणीकृत्य प्रवरस्मृतिरुपनिबद्धा । गोत्रन्तु स्मरन्ति न च तस्य किञ्चिदुपलक्षणमस्ति य एवंरूपस्तस्येदं गोत्रमिति । एतावत् तत्र स्मरणम्—यावद्गोत्रं सन्ततिः समानजातीयत्वम् एवञ्च गोत्रप्रवरभेदो ब्राह्मण-राजन्य-विशाम् । तथाहि कल्पसूत्रकारः—पौरोहित्याद्राजन्यवैश्ययोरिति । यद्यपि गोत्रविशेषव्यपदेशे सति प्राप्तप्रतिषेधेनापि प्रवराधिकारे वचनमिदमुपपद्यते, किन्तु न तेषां गोत्रस्मरणमस्ति । कस्तर्हि क्षत्रिय-वैश्ययोर्विवाहेऽपि बन्धूनामवधेर्नियमः ? उच्यते—सर्ववर्णविषयमेतद् ऊर्ध्वं सप्तमात् पितृबन्धुभ्य इति । इहाप्यसगोत्रा च-शब्दादसपिण्डा च । तथा चानुवर्त्तमानः सपिण्डशब्दः पूर्ववद् बन्धुसम्बन्धोपलक्षणार्थः, तेन पितृष्वसुरन्वयस्त्रीणामन्यासाञ्च प्रपितामहसन्ततिस्त्रीणाम् आ सप्तमात् पुरुषात् प्रतिषेधः सिद्धो भवति । सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते । अन्ये तु गोत्रं वंशमाहुः । न तत्रावध्यपेक्षा, यावदेतज् ज्ञायते वयम् एकवंश्या इति तावदविवाहः । अस्मिन्नपि पक्षे असपिण्डा चेत्यनुवर्त्तते, तेन पूर्ववत् पितृष्वस्रादिदुहितॄणां प्रतिषेधः ; अस्मिंस्तु पक्षे समानार्षगोत्राणां प्रतिषेधो दुर्लभः, नहि तत्र एतदस्ति वयमेकवंश्या इति । उच्यते—ऐतिहासिकेन तद्दर्शनेन समर्थ्यन्ते तत्र हि वर्णयन्ति ऋषिर्वसिष्ठादिराद्यो वंशस्य कर्त्ता तद्गोत्रास्ततः प्रसूताः प्रवरा इति तत्पुत्रपौत्रास्तपोविद्याद्यतिशयगुणयोगेन प्रख्याततमाः, स्मृत्यन्तरादेव एव नियमः । इदं तत्र निरूप्यं यदेतत् समानप्रवरैरिति तत्र नामधेयतस्तावत् समानत्वं न संख्यातः । नामधेयसमानत्वे च किं यत्र सर्वाण्येव समानानि तत्र प्रतिषेध उत एकस्मिन्नपि समाने, तत्र यदि समुदितानां प्रवरत्वं तत्र समाने कस्मिंश्चिद् भिन्ने अन्यस्मिन्नन्यः समुदायः सञ्जात इत्यसमानप्रवरत्वाच्चाप्रतिषेधः । एवञ्चोपमन्यूनां पराशराणाञ्च स्याद्विवाहः, भिन्नं तयोर्गोत्रम् । एके

उपमन्यवः अपरे पराशराः। पूर्वेण च न्यायेन प्रवरभेदः—उपमन्यूनां वासिष्ठभारद्वाजैन्द्रप्रमदेति प्रवराः, पराशराणां वासिष्ठशाक्त्यपाराशर्येति। अथैकैकस्य प्रवरत्वमेकस्मिन्नपि समानप्रतिषेधः। तद् यथा माषा न भोक्तव्या मिश्रा अपि न भुज्यन्ते ; किं पुनरत्र युक्तम् ? एकैकस्य प्रवरत्वम्। तथाहि सामानाधिकरण्यं दृश्यते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते इति प्रतिपन्न एकः। तत्साम्येऽप्याह एषामविवाह इति"। एवमाह।

रघुनन्दनस्तु—"एष संक्षेपः—पितृपितामहादीनां सप्तानां सन्ततिः सप्तमीपर्यन्ता नोद्वाह्या। एवं मातामहप्रमातामहादीनां पञ्चानां सन्ततिः पञ्चमीपर्यन्ता नोद्वाह्या, एवं पितृबन्धुप्रभृति-सम्बन्धघटकानां सप्तानां सन्ततिः सप्तमीपर्यन्ता नोद्वाह्या, एवं मातृबन्धुप्रभृतिसम्बन्ध-घटकानां पञ्चानां सन्ततिः पञ्चमीपर्यन्ता नोद्वाह्या, बन्धुतन्मात्रोरसत्त्वेऽपि पितृमातामह-मातृमातामहप्रभृत्युपरितनानां पञ्चानां त्रयाणां सप्तमीपञ्चमीपर्यन्ता नोद्वाह्येति। एवञ्च पितुर्मातुश्च मातामहकन्यान्तरसत्त्वे तामादाय परतः सप्तमीपञ्चमीपर्यन्तायाः परीहारः। एवं बन्ध्वन्तरे-ऽप्यूह्यम्। बन्ध्वपेक्षया त्रिगोत्रगणनं परतः सर्वत्र। पूर्वतस्तु पितुर्मातुश्च मातुलपुत्ररूपबन्धोरपि स्वापेक्षया, अन्येषां बन्धूनां मातामहगोत्रापेक्षया त्रिगोत्रगणने सर्वसामञ्जस्यं स्यात् ; अन्यथा पितुः पितामहदौहित्रीकन्यायाः पितामहभगिनीपुत्रबन्ध्वपेक्षया त्रिगोत्रात् पराया विवाहः प्रसज्येत, स चायुक्तः ; पितृगोत्रापेक्षया तस्यास्त्रिगोत्रमध्यवर्तित्वात्। एवं पितुः प्रमातामहदौहित्री-कन्यायाः पितामहीभगिनीपुत्रबन्ध्वपेक्षया त्रिगोत्रात् पराया विवाहः प्रसज्येत, स चाप्ययुक्तः ; पितामहीभ्रातृपुत्रबन्ध्वपेक्षया तस्यास्त्रिगोत्रमध्यवर्तित्वात्। एवं मातुः प्रपितामहदौहित्री-कन्याया मातामहभगिनीपुत्रबन्ध्वपेक्षया त्रिगोत्रात् पराया विवाहः प्रसज्येत, स चायुक्तः ; वरस्य मातामहापेक्षया तस्यास्त्रिगोत्रमध्यपातित्वात्। एवं मातुः प्रमातामहदौहित्रीकन्याया मातामही-भगिनीपुत्रबन्ध्वपेक्षया त्रिगोत्रात् पराया विवाहः प्रसज्येत, स चायुक्तः ; मातामहीभ्रातृपुत्र-बन्ध्वपेक्षया तस्यास्त्रिगोत्रमध्यवर्तित्वादिति।

मातृसपत्नीभ्रातृसन्ततिरपि न विवाह्येत्येतदाह सुमन्तुः—

'मातृपितृसम्बन्धा आ सप्तमादविवाह्याः कन्या भवन्ति आ पञ्चमादन्येषाम्। सर्वाः पितृ-पत्न्यो मातरस्तद्भ्रातरस्तु मातुलास्तद्दुहितरो भगिन्यस्तदपत्यानि भागिनेयानि ताश्चाविवाह्याः, अन्यथा सङ्करकारिण्यस्तथाऽध्यापयितुरेतदेवे'ति। यद्यपि तेषां मातुलत्वेनार्थात् तद्दुहितृतद-पत्ययोर्भगिनीत्वभागिनेयत्वे, तथाऽपि तदुपादानात् तयोरेव वर्जनार्थमन्यार्थं पुनर्वचनमिति दर्शनात्। अन्यार्थं तदितरार्थमधिकार्थमिति यावत्। आदिष्टत्वेन च मुख्यमातुलतो जघन्यता युक्तेति, अन्यथैताः कन्यकाः परिणीताः सङ्करात्मका अधर्मकारिण्यो भवन्तीति, तथाऽध्यापयितु-स्तद्विवाहमन्त्राध्यापयितुरेतदेव सङ्करकारित्वमेवेत्यर्थ इति रत्नाकरः। अन्यथेत्यत्र ताः परिणीता इति पठितं व्याख्यातञ्च हरिनाथोपाध्यायैः। ताः कन्यका विवाहिता इति स्मृतिसारे। वस्तुतस्तु अध्यापयितुर्गुरोस्तथा कन्यका उद्वाहिता एतदेव सङ्करात्मकाधर्मकारित्वं भजन्त एवेत्यर्थः।

## नग्निका तु श्रेष्ठा (A) ॥ ५ ॥

यावन्न लज्जयाऽङ्गानि कन्या पुरुषसन्निधौ ।
योन्यादीन्यवगूहेत तावद् भवति नग्निका(B) ॥

अत एवाऽऽदिपर्वणि—

प्रस्थितं त्रिदशाचार्यं देवयान्यब्रवीदिदम् ।
गृहाण विधिवत् पाणिं मम मन्त्रपुरस्कृतम् ॥

कच उवाच—

त्वं भद्रे धर्मतः पूज्या गुरुपुत्री सदा मम ।
यथा मे स गुरुर्नित्यं मान्यः शुक्रः पिता तव
देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि ।
गुरुपुत्रीति कृत्वाऽहं प्रत्याचक्षे न दोषतः ॥

व्यक्तं मत्स्यसूक्ते—

समानप्रवरा वाऽपि शिष्यसन्ततिरेव वा ।
ब्रह्मदातुर्गुरोश्चैव सन्ततिः प्रतिषिध्यते ॥

काश्यपः—

सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ॥
उदकस्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूप्रभवा च या ॥
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत् ॥

हारीतः—ज्येष्ठेऽनिर्विण्णे कनीयान् निर्विंदन् परिवेत्ता भवति । परिविन्नो ज्येष्ठः, परिवेदनीया कन्या, परिदायी दाता, परिकर्ता याजकः, ते सर्वे पतिता इति ।

ज्येष्ठमाह देवलः—

बहिर्वर्णेषु चारित्र्याद् यमयोः पूर्वजन्मतः ।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ॥
सन्तानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम् ॥"

इत्याद्याह उद्वाहतत्त्वे ।

A. सूत्रमिदम् 'अनग्निका तु श्रेष्ठा' एवं पठति सामश्रमी । स च पाठः प्रामादिक एव, व्यक्तीभविष्यति चैतद् 'नाजाते'त्यादि ( ३।५३ ) सूत्रपादटीकायाम् ।

B. प्रमाणीकरोति वचनमिदं तर्कालङ्कारोऽपि 'भट्टभाष्ये स्मृतिरि'त्युपोद्घातेन । आचारमाधवीयेऽप्येतत्, किन्तु तत्र नग्निकेत्यत्र कन्यकेति पाठः ।

तथाचाङ्गिराः—

अप्राप्ता रजसा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जनकृता श्यामा कुचहीना तु नग्निका ॥ (A) [1]इति ।

सा [2]नग्निका श्रेष्ठा दृष्टादृष्टफलसम्बन्धेन विशिष्टफलदात्री । अत्र सन्देहः—[3]दातुः श्रेष्ठा उत विवाहयितुः[3]*, दारान् कुर्वीतेति प्रकृतत्वाद् विवाहयितुरित्येके । [4]तन्न, [5]कुतः ?

पष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वा [6]उद्वहेद् भार्यां नीलं वा वृषमुत्सृजेत् (B) ॥ इति वचनात् ।

तथाच मनुः—

त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम् ।
[7]त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः (C) ॥ इति ।

तस्माद् धर्मावसादनभयाद् विवाहयित्रा गौरी[8]प्राप्तावेव यतितव्यम् । दातुश्च नग्निका श्रेष्ठा । [9]कुतः ?

---

स्मृतिसंग्रहकारोऽपि—

यावच्चेलं न गृह्णाति यावत् क्रीडति पांशुभिः ।
यावद् दोषं न जानाति तावद् भवति कन्यका ॥ इति अगौ ।

A. वचनमिदं मुद्रिताङ्गिरःसंहितायां नोपलभ्यते, किन्त्वनुवदति गृह्यासंग्रहवचनम् ।

मनु— अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जिता भवेत् कन्या कुचहीना च नग्निका ॥ इति २।१८ ।

B. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये । वचनमिदमुपलभ्यते अत्रिसंहितायां (५५) विष्णुसंहितायां (८५।६७) बृहस्पतिसंहितायामपि (१।२२) तृतीयचरणस्य पाठभेदेन । स च पाठः 'यजेत वाऽश्वमेधेन' इति ।

C. मनुसंहिता ९।९४ । अस्य व्याख्यायां कुल्लूकभट्टः—"त्रिंशद्वर्षः पुमान् द्वादशवर्ष-वयस्कां मनोहारिणीं कन्यामुद्वहेत् । चतुर्विंशतिवर्षो वाऽष्टवर्षाम् । गार्हस्थ्यधर्मेऽवसादं गच्छति त्वरावान् । एतच्च योग्यकालप्रदर्शनपरं न तु नियमार्थम् । प्रायेणैतावता कालेन गृहीत-वेदो भवति त्रिभागवयस्का च कन्या वोढुर्यूनो योग्येति ; गृहीतवेदश्चोपकुर्वाणको गृहस्थाश्रमं प्रति न विलम्बेतेति सत्वर इत्यस्यार्थः ।" इत्याह ।

---

1. 'इति' नास्ति ख । 2. 'नग्निका' नास्ति च । 3. 'कस्य श्रेष्ठा दातुरुत विवाहयितुः' ख । 4. 'तदयुक्तम्' ख । 5. 'कुतः' नास्ति च । 6. 'स्युद्वहेद्' ख । 7. 'द्वाष्ट-' क । 8. 'प्राप्तये च' ख । 9. 'कुतः' नास्ति च ।

तस्माद्व्यञ्जनोपेता[1]मरजामपयोधराम् ।
अभुक्तां सोमगन्धर्वैर्दद्याद् दुहितरं पिता(A) ॥

इत्यङ्गिरसो वचनात्, 'प्राग् वाससः प्रतिपत्तेरि'ति गौतम(B)वचनाच्च[2] । अन्यान्यपि नग्निकाप्रदानविषयाणि वाक्यानि स्मृत्यन्तरेषु सन्ति ग्रन्थगौरवभयादत्र न लिख्यन्ते(C) ।

---

A. मुद्रिताङ्गिरःसंहितायां नोपलभ्यते । पाठभेदेन तूपलभ्यते गृह्यासंग्रहे । प्रकरणेऽत्र गृह्यासंग्रहवचनत्रयी—

व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।
पयोधरैस्तु गन्धर्वा रजसाऽग्निः प्रकीर्तितः ॥
तस्माद्व्यञ्जनोपेतामरजामपयोधराम् ।
अभुक्ताञ्चैव सोमाद्यैः कन्यकान्तु प्रशस्यते ॥ २ । १९-२० ।

B. गौतमसंहिता १८ ।

C. विषयेऽस्मिन् किञ्चिदिहोच्यते—

संवर्तः— रोमदर्शनसंप्राप्ते सोमो भुङ्क्तेऽथ कन्यकाम् ।
रजो दृष्ट्वा तु गन्धर्वः कुचौ दृष्ट्वा तु पावकः ॥
अष्टवर्षा भवेद् गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत् कन्या अत ऊर्ध्वं रजस्वला ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
तस्माद् विवाहयेत् कन्यां यावन्नर्तुमती भवेत् ।
विवाहोऽष्टमवर्षायाः कन्यायास्तु प्रशस्यते ॥ सं० स० ६५-६८ ।

अष्टवर्षा भवेद् गौरीति वचनं यमाङ्गिरसोरपि ।

मरीचिः—

गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद् ब्रह्मलोकं रौरवन्तु रजस्वलाम् ॥ इति ।

माधवीये स्मृतिः—

जन्मतो गर्भाधानाद् वा पञ्चमाब्दात् परं शुभम् ।
कुमारीवरणं दानं मेखलाबन्धनं तथा ॥

---

1. '-मरक्तामपयोधराम्' क, '-मरजस्का-' ख । 2. 'च' नास्ति ख ।

ज्योतिर्निबन्धे—

षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।
सोमो भुङ्क्ते ततस्तद्वद् गन्धर्वश्च तथाऽनलः ॥

अत्र च विवाहकर्त्रा तावद् वृताधोवत्सगाया गौर्याः प्राप्तौ यतनीयम्, तत्रैव तस्याभ्युदयविशेषोपदेशात्, रोहिणीकन्ययोस्तु ततोऽपकर्षः । पञ्चाब्दषडब्दोत्तरकल्पावापद्विषयौ,

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।
कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः ॥

इति महाभारतवचनात् ।

पैठीनसिः—यावन्नोद्भिद्येते स्तनौ तावदेव देया अथर्तुमती भवति दाता प्रतिग्रहीता च नरकमाप्नोति, पितृपितामहप्रपितामहाश्च विष्ठायां जायन्ते ; तस्मान्नग्निका दातव्या ।

माधवीये वशिष्ठः—

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात् पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

अङ्गिराः— प्राप्ते तु द्वादशे वर्षे यदा कन्या न दीयते ।
तदा तस्यास्तु कन्यायाः पिता पिबति शोणितम् ॥

यमः—

कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत् स्वयम् ॥
प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
यस्तां विवाहयेत् कन्यां ब्राह्मणो मदमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा ।
शूद्री तु वृषली ज्ञेया कुमारी तु रजस्वला ॥ य० स० १२—२६

प्रायेणैतावता कालेनर्तुमती भवतीति द्वादशवर्षोपादानम्, सर्वथा त्वनागतार्तवा दातव्येत्यत्र तात्पर्यम् । अत एवात्रिकाश्यपौ—

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

यस्तु तां वरयेत् कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्यात् वृषलीपतिम् ॥ इति

द्वादशवर्षग्रहणं न कुर्वीत । अत एव पूर्वलिखितवचनेष्वपि नग्निकाया दानमुपदिष्टम्।

तथा महाभारते—

त्रिंशद्वर्षः षोडशवर्षां भार्यां विन्देत नग्निकाम् ।
अतोऽप्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत् ॥
महदेनः स्पृशेदेनमन्यथैव विधिः सताम् ।

विष्णुपुराणम्—

वर्षेणैकगुणां भार्यामुद्वहेत् त्रिगुणः पुमान् ।

एतदपि प्राशस्त्यार्थम् । कन्याया यवीयस्त्वमात्रेणैव विवाहे तात्पर्यम् । विवाहतत्त्वार्णवेऽप्येवैव व्यवस्था । अत एव यवीयसीमित्यवरवयस्कामिति च तत्र तत्रोक्तम् । अत एव मनुना त्रिंशद्वर्षस्य द्वादशवर्षाया महाभारते च षोडशवर्षाया विवाहोऽभिहित इति ।

ऋतुमत्या अपि विवाहो भवत्येव, किन्त्वसौ जघन्यः । तथाच गृह्यासंग्रहः—

नग्निकान्तु वदेत् कन्यां यावन्नर्तुमती भवेत् ।
ऋतुमती त्वनग्निका तां प्रयच्छेत् त्वनग्निकाम् ॥ ( गृ० प० २।१७ )

तुकारः पक्षान्तरे । नग्निका तु श्रेष्ठेति सूत्रयता गोभिलाचार्येण नग्निकायाः श्रेष्ठत्वमुक्तम्, तत्पुत्रस्तु अनग्निकां प्रयच्छेदिति पक्षान्तरमाह । श्रेष्ठपक्षादन्योऽयं जघन्यपक्षो जघन्य इत्यर्थः । एवञ्च ऋतुमत्या विवाहनिन्दावचनानि नग्निकाया विवाहप्राशस्त्यतात्पर्यकाणि । मीमांसाभाष्यकारैरप्युक्तं 'न निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि त्वितरत् स्तौती'ति ।

तथा नारदः—

कन्या भर्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत् ।
ते चेन्न दद्युस्तां भर्त्रे ते स्युर्भ्रूणहभिः समाः ॥
यावन्तश्चर्तवस्तस्याः समतीयुः पतिं विना ।
तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति ताम् ॥
अतः प्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत् ।
महदेनः स्पृशेदेनमन्यथैव विधिः सताम् ॥

मनुरपि—

उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्यात् यथाविधि ॥

कामम्मा मरणात् तिष्ठेद् गृहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ ९।८८-८९ ।

इत्युक्त्वा गुणवद्वरलाभे अप्राप्तवयस्काऽपि दातव्या तदलाभे ऋतुमत्यपि च कन्या रक्षितव्येत्याह । एतेन—

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद् विन्देत सदृशं पतिम् ॥
अदीयमाना भर्तारमधिगच्छेद् यदि स्वयम् ।
नैनः किञ्चिदवाप्नोति न च यं साऽधिगच्छति ॥
अलङ्कारं नाऽऽददीत पित्र्यं कन्या स्वयंवरा ।
मातृकं भ्रातृदत्तं वा स्तेना स्याद् यदि तं हरेत् ॥
पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥ म० स० ९।९०-९३ ।

विष्णुः—　ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनस्तथा ॥

वि० स० २४।४० ( हेमाद्रौ परिशेषखण्डे )

एतत्तु गुणवद्वरालाभे द्रष्टव्यमिति माधवाचार्याः । त्रीन् ऋतूनतीत्य स्वयं युज्येत ( गौतमः ) । कुमारी ऋतुमती त्रीणि वर्षाण्युपासीत ऊर्ध्वं त्रिभ्यो वर्षेभ्यः पतिं विन्देत तुल्यम् । वसिष्ठस० १७ ।

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
चतुर्थे त्वथ संप्राप्ते स्वयं भर्तारमाव्रजेत् ॥
प्रजा न हीयते तस्या रतिश्च भरतर्षभ ।
अतोऽन्यथा वर्तमाना भवेद् वाच्या प्रजापतेः ॥

( म० भा० अनु० प० ४७।१६-१७ )

बौधायनः—

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ।
अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ॥

विष्णुः—

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया हरंस्तां न विदुष्यति ॥ वि० स० २४।४१

[1]यथैतदुक्तम्—

सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटक-क्षिति-गौरीणां सप्तजन्मानुगं फलम् । (A)

[2]इत्यनेन गौरीप्रदानं न[3] विधीयते । किं तर्हि ? दानफलं प्रदर्श्यते, इतरथाऽस्य वाक्यस्य बहुभिः सह विरोधात्[4] बाधः स्यात् ।

उक्तञ्च—

विरोधो यत्र वाक्यानां प्रामाण्यं तत्र [5]भूयसाम् ।
तुल्यप्रमाणकत्वे तु न्याय एष प्रकीर्त्तितः ॥ (B)

---

यमः—

एवञ्चोपनतां पत्नीं नाद्यमन्येत् कदाचन ।
न तु तां वन्ध्यकीं विद्यान्मनुः स्वायम्भुवोऽब्रवीत् ॥

आश्वलायनः—

कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।
शुद्धिञ्च कारयित्वा तामुद्वहेदानृशंस्यधीः ॥
पिता भरतून् स्वपुत्र्यास्तु गणयेदादितः सुधीः ।
दानावधि गृहे यत्नात् पालयेच्च रजोवतीम् ॥
दद्यात् तदृतुसंख्या गाः शक्तः कन्यापिता यदि ॥
दातव्यैकाऽपि निःस्वेन दाने यस्या यथाविधि ।
दद्याद् वा ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् ॥
तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ।
उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ॥
अदृष्टरजसे दद्यात् कन्यायै रत्नभूषणम् ।
तामुद्वहन् वरश्चापि कुष्माण्डैर्जुहुयाद् घृतम् ॥

इत्यादिवचनान्यपि व्याख्यातानि । एवञ्चर्तुमतीविवाहनिन्दावचनानि कृतप्रतीकाराण्यकृत-प्रतीकाराणि वेति भगवन्तोऽनूचाना निर्दिशन्तु ।

A. बृहस्पतिसंहिता १।३४ ।

B. कर्मप्रदीपः ३।९।१७ ।

---

1. 'यथैतदुक्तम्' ख। 2. 'इति यानेन' ख। 3. 'न' नास्ति घ। 4. '-रोधः स्यात्' ख। 5. 'भूयसां' म।

तथा चामुमेवार्थं प्रतिपादयता [1]गोभिलेनास्मिन् सूत्रे तुशब्दः प्रयुक्तः—'नग्निका तु श्रेष्ठे'ति। गौरीप्रदाने सप्तजन्मानुगं फलं भवति। नग्निका तु पुनस्ततोऽपि विशिष्ट-फलदात्री। अलमतिप्रसङ्गेन (A) [2]प्रकृतमधुनोच्यते[2]*।

## अथाऽऽप्लवनम् ॥ ६ ॥

अथेति पूर्वप्रकृतार्थः। व्रतान्ते पूर्व[3]मेव प्रकृतमैन्द्रस्थालीपाकादिकं [4]पक्त्वा हुत्वा, अथानन्तरम्[4]* आप्लवनं स्नानं कुर्यादिति शेषः (B)।

---

अस्य विवृतौ शिवरामः—'यत्र यस्मिन् विषये वाक्यानां विरोधः, तत्र भूयसां बहूनां वाक्यानां प्रामाण्यम्। तुल्यप्रमाणकत्वेऽपीति, एकस्मिन् विषये विधिनिषेधे सत्यपि विधि-निषेधयोरन्यतरस्मिन् यत्र भूयांसि वचनानि तस्यैव प्रामाण्यम्। बहूनामनुग्रहो न्याय्य इति।' एवं व्याचख्यौ।

A. विषयमिममधिकृत्यान्येषु गृह्यसूत्रेषु यदुक्तं तस्मात् किञ्चिदिहोच्यते।

जैमिनिगृह्यसूत्राणि तु—"स्नात्वा मातापितरौ परिचरेत्, तदधीनः स्यात्, ताभ्यामनुज्ञातो जायां विन्देतानग्निकां समानजातीयामसगोत्रां मातुरसपिण्डां ज्यायसः कनीयसीम्" इति।

मानवगृह्यसूत्राणि तु—"पञ्च विवाहकारणानि भवन्ति वित्तं रूपं विद्या प्रज्ञा बान्धव इति। एकालाभे वित्तं विसृजेद् द्वितीयालाभे रूपं तृतीयालाभे विद्यां प्रज्ञायां बान्धव इति च विवहन्ते। बन्धुमतीं कन्यामस्पृष्टमैथुनामुपयच्छेत समानवर्णामसमानप्रवरां यवीयसीं नग्निकां श्रेष्ठाम्" इति।

वाराहगृह्यसूत्राणि च—"विनीतक्रोधः सहर्षो महिषीं भार्यां विन्देतानन्यपूर्वां यवीयसीम्। असमानप्रवरैर्विवाहः, ऊर्ध्वं सप्तमात् पितृबन्धुभ्यः पञ्चमान्मातृबन्धुभ्यो बीजिनश्च। कृत्तिका-स्वातिपूर्वैरिति वरयेत्। मृगशिरःश्रविष्ठोत्तराणीत्युपयमेत्। पञ्च विवाहकारणानि भवन्ति, वित्तं रूपं विद्या प्रज्ञा बान्धवमिति। एकालाभे वित्तं विसृजेत्। द्वितीयालाभे रूपम्। तृतीया-लाभे विद्यां प्रज्ञायान्तु बान्धवा विवदन्ते। अनृक्षरा इति वरकान् व्रजतोऽनुमन्त्रयते। बन्धु-मतीं कन्यामस्पृष्टमैथुनामुपयच्छेतानग्निकाम् ॥" इति।

B. कन्याप्रार्थनानन्तरं कन्यायां वाचा दत्तायां सत्यामथानन्तरमाप्लवनं स्नानं कुर्याद् ब्रह्मचारी इति केचित्।

---

1. 'गोभिलाचार्येणास्मिन्' ख। 2. नास्ति च। 3. 'एव' नास्ति ख। 4. 'व्रत कर्म तत् कृत्वा चानन्तरम्' ख।

तद्विधिविवक्षयेदमाह—

**उत्तरतः पुरस्ताद् वाचार्यकुलस्य परिवृतं भवति ॥ ७ ॥**

'आचार्यकुलस्य गुरुगृहस्य उत्तरस्यां दिशि पूर्वस्यां वा'[1]* मण्डपादिना परिवृतं सुगुप्तं भवति।

**तत्र प्रागग्रेषु दर्भेषूदङ्ङाचार्य उपविशति ॥ ८ ॥**

तत्र तस्मिन् परिवृते "प्रागग्रेषु दर्भेषु उदङ्मुख आचार्य उपविशति"*।

**प्राग् ब्रह्मचार्युदगग्रेषु दर्भेषु ॥ ९ ॥**

तस्मिन्नेव परिवृते आचार्यसन्निधौ "उदगग्रेषु दर्भेषु ब्रह्मचारी"[2]* प्राङ्मुख उपविशतीति।

**सर्वौषधिविफाण्टाभिरद्भिर्गन्धवतीभिः शीतोष्णाभिराचार्योऽभि[3]षिञ्चेत् ॥ १० ॥**

सर्वौषधयः सप्त पुरस्ताद् व्याख्याताः। ताभिः सह "या आपो"* विफाण्टिता विपक्वा उष्णीकृता इत्यर्थः। [7]ताभिः सर्वौषधिविफाण्टा(A)भिरद्भिः[7]* गन्धवतीभिः "चन्दनादिगन्धयुक्ताभिः, शीतोदकसंमोदिताभिरुष्णाभिः तथोपविष्टमेनं ब्रह्मचारिणमाचार्योऽभिषिञ्चेत्।

**स्वयमिव तु ॥ ११ ॥**

इवशब्द एवशब्दार्थे, तुशब्दो वाशब्दार्थे, स्वयमेव वा ब्रह्मचार्यात्मानमभिषिञ्चेदिति शेषः। इवशब्दस्त्वेवपक्षपरिग्रहार्थः। उपरिष्टादपि पूर्वपक्षस्य व्यावृत्तिर्दर्शयिष्यते, 'यो रोचनस्तमिह गृह्णामीत्यात्मानमभिषिञ्चती'ति [ सू ३।४।१५ ]।

अस्यैवार्थस्य दृढीकरणाय—

A. 'अनायासकृतं फाण्टम्' इत्यमरः।

क्षुण्णे द्रव्यपले सम्यक् जलमुष्णं विनिक्षिपेत्।
पात्रे चतुःपलमिति ततस्तु स्रावयेत् पटात्॥
सोऽयं चूर्णद्रवः फाण्टो भिषग्भिरभिधीयते॥

इति वैद्यकपरिभाषा॥

1. 'उत्तरतः पुरस्ताद् वा' ख। 2. 'उदङ्मुखः' घ। 3. नास्ति घ। 4. '-षिञ्चति' घ। 5. '-षधि सप्त' ख। 6. 'नास्ति घ। 7. ताः 'सर्वौषधिविफाण्टाः ताभिरोषधीवतीभिः' घ। 8. 'विफाण्टानामभिरभिषिञ्चेत् चभिषेचनमिति' घ।

# मन्त्रवर्णो भवति ॥ १२ ॥

मन्त्रवर्णमभिषेकमन्त्रलिङ्गम्, तच्च 'तेनाहं मामभिषिञ्चामी'ति 'तेन मामभिषिञ्चतम्' इति च[1]*। तस्मात् ब्रह्मचारी 'आत्मनैवाऽऽत्मानमभिषिञ्चेदि'ति [2]सिध्यति।

[3]उक्तञ्च—

'ब्रह्मचार्यप्यनुज्ञातो गुरुणा गुरुरेव वा।
सर्वौषधिविमिश्राभिः शीताभिश्च सुगन्धिभिः॥(A) इति'*

कथमभिषिञ्चेदित्यत आह—

# येऽप्स्वन्तरग्नयः प्रविष्टा इत्यपामञ्जलिमवसिञ्चति ॥१३॥

'(B)[4]येऽप्स्वन्तः' इत्यनेन द्व्यवसानेन मन्त्रेण [5]पाणिद्वयोपलक्षितं प्रकृतानामपामञ्जलिमवसिञ्चति[6]*। [7]भुव्यवसेकः[7]*, अवसिञ्चतीति वचनात्, [8]इन्द्रियहा अति तान्[8]* सृजामीति च मन्त्रलिङ्गात्।

# यदपां घोरं यदपां क्रूरं यदपामशान्तमिति च ॥ १४ ॥

A. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि 'पठन्ति चे'त्युदाहृतेन पाठभेदेनापि। स च पाठः 'ब्रह्मचारी अनुज्ञातो............शीतोष्णाभिः सुगन्धिभिः' इति

B. मन्त्रस्तु—

ॐ येऽप्स्वन्तरग्नयः प्रविष्टा
गोह्य उपगोह्यो मरूको मनोहाः।
खलो विरुजस्तनूदूषि-
रिन्द्रियहा अति तान् सृजामि।

इति मन्त्रब्राह्मणम् १।७।१। विनियोगप्रमाणञ्चास्य खादिरगृह्यसूत्रे ३।१।११। पारस्करगृह्यसूत्रेऽपि २।६।१०। गुणविष्णुस्तु 'मयोको' पठति 'मरूको'स्थाने।

अस्य व्याख्या—

अप्सु अन्तः एतदुदकमध्ये गोह्यः, उपगोह्यः, मरूकः, मनोहाः, खलः, विरुजः, तनूदूषिः, इन्द्रियहा, इति ये अष्टविधाः अग्नयः शरीरनाशकारिणस्तेजसः, प्रविष्टाः स्थिताः, तान् अग्नीन् अतिसृजामि अतिशयेन वर्जयामि, मन्त्रशक्त्येति भावः। इति।

1. 'आत्मनैव' नास्ति ख। 2. 'सिद्धान्तः' ख। 3. 'उक्तञ्च' नास्ति ख। 4. नास्ति ख, 'अनन्तरं 'स्वयमिव तु मन्त्र वर्णो भवति' इति च। 5. 'ये अप्स्वित्यनेन' ख। 6. नास्ति ख। 7. 'भूर्मा. कृतः ?' ख। 8. 'अग्नीनतितत् सृजामीति' ख।

अपामञ्जलिमवसिञ्चतीति; [1]अयमेकावसानः[1]* । (A)चशब्दात् 'अति तत् सृजामी'ति च मन्त्रलिङ्गात् [2]अत्रापि भूमा[3]वेवावसेकः ॥

**यो रोचनस्तमिह गृह्णामी(B)त्यात्मानमभिषिञ्चति ॥ १५ ॥**

[4]गतार्थम् । [5]अयमप्येकावसानः[5]* ।

**यशसे तेजस (C)इति च ॥ १६ ॥**

आत्मानमभिषिञ्चतीति [6]वर्त्तते ॥ [7]अयमप्येकावसानः[7]* ।

---

A. मन्त्रस्तु—

ॐ यद्रपां घोरं यद्रपां क्रूरं
यद्रपामशान्तमति तत् सृजामि ।

इति, मन्त्रब्राह्मणम् १।७।२ । विनियोगप्रमाणं खादिरगृह्येऽपि ३।१।१२ ।

अस्य व्याख्या—

अपाम् उदकानां सम्बन्धि यद् घोरं भीमम्, यच्च क्रूरं निष्ठुरम्, यच्च अशान्तं दुःखाकरम्, तत् अतिसृजामि अतिशयेन वर्जयामि ॥ इति ।

B. मन्त्रोऽयम्—

ॐ यो रोचनस्तमिह गृह्णामि
तेनाहं मामभिषिञ्चामि ॥

इति । मन्त्रब्राह्मणमाकरः १।७।३ । विनियोगप्रमाणं खादिरगृह्यसूत्रे ३।१।१२ । पारस्करे च २।६।१० ।

अस्य व्याख्या—यः अग्निः रोचनः शरीरदीप्तिकरः, इह जले तम् एव गृह्णामि, अनन्तरञ्च अहं ब्रह्मचारी तेन जलेन माम् आत्मानम् अभिषिञ्चामि । इति ।

C. मन्त्रोऽयम्—

ॐ यशसे तेजसे ब्रह्मवर्चसाय बलायेन्द्रियाय ।
वीर्यायान्नाद्याय त्विष्या अपचित्यै ॥

इति । मन्त्र ब्राह्मणम् । १।७।४ । त्विष्या इत्यत्र त्विष्ट्यै इति पठित्वा व्याकरोति छान्दोग्य-मन्त्रभाष्ये गुणविष्णुः ॥ ४।९४ ।

अस्य व्याख्या—किमर्थमित्याचष्टे यशसे, तेजसे, ब्रह्मवर्चसाय, बलाय, इन्द्रियाय, वीर्याय,

---

1. नास्ति च । 2. 'अत्रापि' नास्ति ख । 3. 'एव' नास्ति ख । 4. 'स्पष्टार्थम्' ख । 5 नास्ति च । 6. 'वर्त्तते' नास्ति च । 7. नास्ति च ।

## येन [1]स्त्रियमकृणुतमिति च ॥ १७ ॥

आत्मानमभिषिञ्चतीति [2]वर्त्तते। (A)अयं च त्र्यव[3]सानमन्त्रः*।

## तूष्णीं चतुर्थम् ॥ १८ ॥

आत्मानमभिषिञ्चतीति[4]वर्त्तते। अयञ्चाभिषेकः शिरसि कर्तव्यः। [5]कुतः? [6]अथाऽऽप्लवनमित्यधिकारवचनस्यैवमर्थत्वात्, 'शिरः प्रधानमङ्गानामि'ति वचनात्, अभ्यक्तस्य प्रधानगामित्वाच्च।

## उपोत्थायाऽऽदित्यमुपतिष्ठत उद्यन् भ्राजभृष्टिभिरित्येतत्-प्रभृतिना मन्त्रेण ॥ १९ ॥

---

अन्नाद्याय, अन्नादिलाभाय, रायस्पोषाय, धनस्य पोषणाय, त्विष्यै त्विषे कान्त्यै अपचित्यै पूजाप्राप्तये इति। गुणविष्णुस्तु त्विषिः दीप्तिरित्याह मन्त्रभाष्ये।

A. मन्त्रस्तु—

ॐ येन स्त्रियमकृणुतं येनापामृषतं सुराम्।
येनाक्षानभ्यषिञ्चतं येनेमां पृथिवीं महीम्।
यद्वां तदश्विना यशस्तेन मामभिषिञ्चतम् ॥

इति मन्त्रब्राह्मणम् १।७।९। विनियोगप्रमाणञ्च खादिरगृह्यसूत्रेऽपि ३।१।१९। ये चेमाम् इति पठति गुणविष्णुः।

अस्य व्याख्या—हे अश्विना अश्विनौ देववैद्यौ देवौ युवां येन सामर्थ्येन कर्मणा वा स्त्रियम् स्त्रीजातिम्, अकृणुतं भोग्यत्वेन निरूपितवन्तौ, यद्वा अपुष्पाख्यां स्त्रियम् अकृणुतं हिंसितवन्तौ, येन सामर्थ्येन अपाम् अपः सुराम् ऋषतम्, गमितवन्तौ अपः सुरात्वेन भोग्यां कृतवन्तौ, यद्वा येन च सुरां मदिराम् अपामृषतम् खण्डितवन्तौ, येन सामर्थ्येन अक्षान् देवनान् भोग्यान् ऋषतम् कृतवन्तौ, यद्वा अक्षान् पाशकान् खण्डितवन्तौ, येन सामर्थ्येन इमां महीं महतीं विपुलां पृथिवीं समस्तामेव अभ्यषिञ्चतम् तर्पितवन्तौ ( गुणविष्णुस्तु—ये च येन च, इमां महीं महतीं पृथिवीम्, अभ्यषिञ्चतम् अभिषिक्तवन्तौ शस्यप्ररोहणद्वारेण संवर्धितवन्तौ, इति व्याचख्यौ ) वां युवयोः, एवम्भूतं यत् सामर्थ्यम्, तद् यशः यशस्करम्, यद्वा यशः शोभनं कर्म, तेन तादृशेन सामर्थ्येन माम् अभिषिञ्चतम् अभिषिक्तं कुरुतम् इति। 'येन स्त्रियमकृणुतम्, येन वीर्यवत्सा गमन-साधनपादृदानेन कृतवन्तौ। येन च सौत्रामण्यां सुरां पैष्टीं वीर्यवृद्ध्यर्थम् अपामृषतम्, अपा-मृष्टवन्तौ। अक्षान् पाशकान् जेत्रीकरणायापामृषतमिति सम्बन्धः' इति च सायणकृता।

---

1. '-स्वय-' ख। 2. 'वर्तते' नास्ति च। 3. '-सानः' च। 4. 'वर्त्तते' नास्ति च। 5. 'कुतः' नास्ति च। 6. 'अथ' नास्ति ख।

आचार्यसमीपादुत्थाय (A)'उद्यन्नि'त्येतत्प्रभृतिना मन्त्रेण मा मा हिंसी'रित्यन्तेन'* मन्त्रेणाऽऽदित्यमुपतिष्ठते ।

---

A. अत्र चत्वारो मन्त्राः । तत्र प्रथममन्त्रः—

ॐ उद्यन् भ्राजभृष्टिभिरिन्द्रो
मरुद्भिरस्थात् प्रातर्यावभिरस्थात् ।
दशसनिरसि दशसनिं
मा कुर्वा त्वा विशाम्या मा विश ॥ इति ।

द्वितीयमन्त्रः—

ॐ उद्यन् भ्राजभृष्टिभिरिन्द्रो
मरुद्भिरस्थात् सान्तपनेभिरस्थात् ।
शतसनिरसि शतसनिं
मा कुर्वा त्वा विशाम्या मा विश ॥ इति ।

तृतीयमन्त्रः—

ॐ उद्यन् भ्राजभृष्टिभिरिन्द्रो
मरुद्भिरस्थात् सायंयावभिरस्थात् ।
सहस्रसनिरसि सहस्रसनिं
मा कुर्वा त्वा विशाम्या मा विश ॥ इति ।

चतुर्थ मन्त्रः—

ॐ चक्षुरसि चक्षुष्ट्वमस्यव मे पाप्मानं जहि ।
सोमस्त्वा राजाऽवतु नमस्तेऽस्तु मा मा हिंसीः ॥

इति मन्त्रब्राह्मणम् १।७।६-९ । विनियोगप्रमाणञ्च खादिरे ३।१।१७-१९ ।

मन्त्राणामेतेषां व्याख्या—

तत्र प्रथममन्त्रस्य—इन्द्रः, परमैश्वर्ययोगाद् आदित्यः, उद्यन् उदीयमानः सन् भ्राजभृष्टिभिः दीप्तदृष्टिभिः मरुद्भिः किरणैः देवैर्वा सह अस्थात् । प्रातर्यावभिः प्रातराशभोक्तृभिः, प्रातर्यावाणो देवविशेषाः तैश्च सह अस्थात् । किञ्च त्वं दशसनिः दशानां सनिः सम्भजनीयः असि अतः मामपि तथैव दशसनिं दशजनानां भजनीयं कुरु अहं त्वा त्वाम् आविशामि अर्थित्वेनोपगच्छामि त्वञ्च माम् आविश, फलदातृत्वेन अभिमुखो भव इति ।

द्वितीयमन्त्रस्य—इन्द्र इत्यादि पूर्ववत् । इयान् भेदः—सान्तपनेभिः सम्यक् तापयतीति सान्तपनो मध्याह्नसूर्यः तत्सम्बन्धिभिस्तत्कालीनैर्मध्यन्दिनै रतन्नामकैर्देवैरिन्द्रोऽस्थात् । त्वं

---

1. '-रित्येवमन्तेन' ख ।

## यथालिङ्गं वा ॥ २० ॥

अथवा तस्मिन् स्नानाहनि यथालिङ्गं मन्त्रं विहृत्य पूर्वाह्णमध्यन्दिनापराह्णेषु उपतिष्ठत इति। कथं [1]नाम? प्रातर्लिङ्गेन मन्त्रभागेन प्रातरुपतिष्ठेत्। सान्तपनलिङ्गेन मध्यन्दिने, सायंलिङ्गेन [2]सायमिति।

## विहरंश्चतुरसीत्यनुबध्नीयात् ॥ २१ ॥

[3]विहरन् विभजन् प्रतिमन्त्रं चतुरसीत्यनुबध्नीयात्[4]* संबध्नीयात्। त्रिष्वपि मन्त्रेष्वित्यर्थः।

## मेखलामवमुञ्चत(A)उदुत्तमं वरुण पाशमिति ॥ २२ ॥

'अवमुञ्चत इति च्छेदनप्रतिषेधार्थ[5]मधस्तात् प्रमोकार्थं च।

---

शतसनिः शतानां सम्भजनीयः असि, मामपि तथैव शतसनिं शतजनानां भजनीयं कुरु। अहमित्यादि च पूर्ववत्।

तृतीयमन्त्रस्य—अत्रापि पूर्ववद् व्याख्येयम्। सायं यावभिः सायं नश्यद्भिरित्यर्थः, सायं यावानो देवविशेषा इति वा। सहस्राणां बहूनां सनिरित्यादि पूर्ववत्।

चतुर्थमन्त्रस्य—हे सूर्य, त्वं चक्षुः जगतां चक्षुर्भूतोऽसि, तथा लोकस्यापि चक्षुः दर्शनशक्तिः त्वमसि। मे मम पाप्मानम् अनिष्टम् अवजहि नाशय। किञ्च राजा देदीप्यमानः ब्राह्मणानामोषधीनाञ्च प्रभुः सोमश्चन्द्रः त्वा त्वाम् अवतु रक्षतु। स्वकीयां सुधां पाययित्वेति भावः। देवानामन्नं चन्द्र इति कृत्वा आप्याययतु वा। ते तुभ्यं नमः अस्तु, मा मां मा हिंसीः, मा नीनशः। इति।

A. मन्त्रस्तु—

ॐ उदुत्तमं वरुण पाशमस्म-
दवाधमं विमध्यमं श्रथाय।
अथाऽऽदित्यव्रते वयं तवा-
नागसो अदितये स्याम॥

इति मन्त्रब्राह्मणम् १।७।१०। विनियोगप्रमाणं खादिरगृह्यसूत्रे ३।१।२२। जैमिनिगृह्ये, पृ० १७ प० ८ सू० १९। पारस्करगृह्येऽपि १।२।८।

अस्य व्याख्या—हे वरुण, अस्मत् अस्माकम् उत्तमम् उत्तमाङ्गे कण्ठादौ स्थितं पाशं बन्धनम् उच्छ्रथाय ऊर्ध्वत एव शिथिलीकुरु, मध्यमं मध्यमाङ्गे कट्यादौ च स्थितं पाशं

---

1. 'नाम' नास्ति घ। 2. 'सपवर्गमिति' ख। 3. नास्ति ख। 4. 'सन मध्नत' घ। 5. '-मधो मक्षार्थम्' ख।

**ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा केशश्मश्रुरोमनखानि वापयीत शिखावर्जम् ॥ २३ ॥**

ब्राह्मणान् भोजयित्वा श्राद्धं कृत्वेत्यर्थः। अन्ये तु इदमपवर्गार्थं भोजनमिति कृत्वा प्राक् स्नानात् श्राद्धमाहुः, [1]तदयुक्तम्; कुतः ? यस्मान्नायमपवर्गः उपरिष्टादपि कर्मोपदेशात्। [2]तस्मात् श्राद्धं कृत्वा स्वयं भुक्त्वा शिखावर्जं केशादीनि वापयीत[2]*। अत्र शिखावर्जमिति वचनात्, [3]सशिखं वपनं कार्यमिति वचनाच्च[3]* प्राक् सशिखवपनं कार्यमिति दर्शयति। [4]उक्तञ्च—

सशिखं वपनं कार्यमा स्नानाद् ब्रह्मचारिणाम्(A)। इति।

नन्वत्र अभुक्त्वा वापयीतेति वक्तव्यम्, कुतः ? यस्माज्ज्योतिःशास्त्रे च भुक्तस्य क्षुरकर्म प्रतिषिद्धं "नाभ्यक्तभुक्तरणकालनिरासनानामि"ति(B)। सत्यम्; किन्तु अत्र वचनान्न[4]* दोषः।

**स्नात्वाऽलङ्कृत्याहते वाससी परिधाय स्रजमाबध्नीत श्रीरसि मयि रमस्वेति ॥ २४ ॥**

स्रक् [5]ग्रथिता कुसुममाला। तां (C)[6]श्रीरसीत्यनेन मन्त्रेण शिरस्याबध्नीत। [7]ऋज्वन्यत्[7]*।

---

विश्रथाय विशेषेण शिथिलीकुरु; अधमम् अधमाङ्गे पादादौ च स्थितम् अवश्रथाय नीचत एव शिथिलीकुरु। अथ पाशावमोक्षानन्तरं शुनःशेपेन वरुणः प्रार्थ्यते—हे आदित्य अदितेः पुत्र वरुण, यद्वा अदितेरखण्डस्यांश, अथ पाशमोक्षानन्तरं वयं तव व्रते कर्मणि अनागसः निरपराधिनः यथा स्याम तथा कुरु; किमर्थमित्याह—अदितये अखण्डफललाभाय। यद्वा तव व्रते अदितये अदितेः त्वन्मातुश्च व्रते इत्यर्थः। इति।

A. उक्तं कर्मप्रदीपवचनमिदं प्राग् भाष्ये ( पृ० ४४१ )

B. उक्तं वचनमिदं प्राग् भाष्ये ( पृ० ४६९ )

C. मन्त्रस्तु—ॐ श्रीरसि मयि रमस्व॥ इति, मन्त्रब्राह्मणम् १।७।११। विनियोगप्रमाणं खादिरगृह्यसूत्रेऽपि ३।१।२२।

अस्य व्याख्या—हे माले देवि, त्वं श्रीः शोभा असि अतस्त्वां प्रार्थये, मयि मच्छरीरे रमस्व रममाणा शोभमाना तिष्ठ।

---

1. 'तत्र यु-' घ। 2. नास्ति घ। 3. नास्ति ख। 4. 'ज्योतिःशास्त्रविरोधाद् अभुक्त्वा वापयीतेति वक्तव्यम्, न सूत्रकारवचनाद्' घ। 5. 'ग्रथितकुसुम-' ख। 6. 'श्रीरसि-' घ। 7. नास्ति घ।

(A)नेत्र्यौ स्थो नयतं मामित्युपानहौ ॥ २५ ॥

आबध्नीतेति [1]वर्त्तते। का[2]ऽऽबध्नीतेति प्रसिद्धेः पादयोरिति।

(B)गन्धर्वोऽसीति वैणवं दण्डं गृह्णाति ॥ २६ ॥

[3]वेणुर्वंशस्तन्मयो वैणवः[3]*।

आचार्यं सपरिषत्कमभ्येत्याऽऽचार्यपरिषदमीक्षते— यक्षमिव चक्षुषः प्रियो वो भूयासमिति ॥ २७ ॥

[4]परिषत् शिष्यसमूहः, परिषदा सह वर्त्तते इति सपरिषत्कः[4]*, तं [5]सपर्षत्कम् आचार्यम्[5]* अभ्येत्य आगत्य, (C) [6]यक्षमित्यनेन मन्त्रेणाऽऽचार्यपर्षद्मीक्षते[6]*। पुनराचार्यग्रहणम् आचार्यसहितायाः परिषदोऽवेक्षणार्थम्।

---

A. मन्त्रस्तु—ॐ नेत्र्यौ स्थो नयतं माम् ॥ इति। मन्त्रब्राह्मणम् १।७।१२। विनियोगप्रमाणं खादिरगृह्येऽपि ३।१।२३। नेत्रे इति पाठभेदेन जैमिनिगृह्यसूत्रेऽपि १।१९। गुणविष्णुरपि एवमेव पाठमाकलय्य व्याख्यातवान्।

अस्य व्याख्या—हे उपानहौ देवते, युवां नेत्र्यौ नेतृरूपिण्यौ स्थः भवथः, अतो युवां प्रार्थये मां नयतं प्रापयतं देशाद् देशान्तरं सुखेनेति भावः। गुणविष्णुस्तु नेत्रे नयनशक्तिप्रदे इति व्याचख्यौ।

B. मन्त्रस्तु—ॐ गन्धर्वोऽस्युपाव उप मामव ॥ इति। मन्त्रब्राह्मणम् १।७।१३। विनियोगप्रमाणन्तु खादिरगृह्येऽपि ३।१।२४। अत्र गुणविष्णुस्तु गन्धर्वोऽस्युप मा अव। इत्येवं मन्त्रं पठति स्वीये छान्दोग्यमन्त्रभाष्ये।

अस्य व्याख्या—हे दण्ड, यतस्त्वं गन्धर्व आदित्यः रक्षणकर्ता वा असि, ततो माम् उपाव मत्समीपमागत्य रक्ष। पुनः कथयामि माम् उपाव मत्समीपमागत्य रक्ष सर्वतो रक्षेति भावः। गुणविष्णुस्तु एकम् 'उपाव'शब्दं परित्यज्य मा माम् उपाव समीपे रक्ष इति व्याचख्यौ। विद्यावारिधिस्तु आकरग्रन्थपाठमेव मूले सन्निवेश्य तदनुसारिणीं गुणविष्णुटीकां रचयाम्बभूवेति तु तस्य साहसमेव छान्दोग्यमन्त्रभाष्ये तादृशपाठानुपलब्धेरिति द्रष्टव्यं सुधीभिः। ईदृशैरेव रचनाकुशलैः प्रकृतो ग्रन्थपाठः प्रच्छाद्यते इत्येतद् दुर्दैवं शास्त्रग्रन्थानामिति।

C. मन्त्रस्तु—ॐ यक्षमिव चक्षुषः प्रियो वो भूयासम् ॥ इति। मन्त्रब्राह्मणम् १।७।१४। विनियोगप्रमाणं खादिरगृह्येऽपि ३।१।२४।

अस्य व्याख्या—हे परिषदः, यद्वा हे आचार्य परिषत्समेत, वः युष्माकं चक्षुषश्चक्षुषामन्तिके यक्षं यक्ष इव प्रियः, यथा यक्षो दर्शनीयतया सर्वलोकस्य चक्षुभस्तथा अहमपि युष्मचक्षुषामित्यर्थः, भूयासम्। इति।

---

1. 'वर्त्तते' नास्ति च। 2. 'काबध्नीतेति प्रसिद्धेः' नास्ति च। 3. ख-पुस्तकेऽयमंशः २७श सूत्रात् परं दृश्यते। 4. नास्ति ख। 5. नास्ति च। 6. नास्ति च।

**उपोपविश्य मुख्यान् प्राणान् संमृशन्नोष्ठापिधाना नकुलीति ॥ २८ ॥**

आचार्यसमीपे उपविश्य मुख्यान् 'मुखशुषिरभवान्'[1]* मुखनासिकादिकर्णाख्यान् सप्त प्राणान् संमृशन् अभिमृशन् (A)ओष्ठेति मन्त्रं जपेत्। प्राणानाममूर्त्तत्वात् स्पर्शनानु[2]पपत्तिरिति चेत्? सत्यम्, किन्तु[3]* प्राणायतनान्येवोपचारात् प्राणा इत्युच्यन्ते।

**अर्त्तेनमाचार्योऽर्हयेत् ॥ २९ ॥**

अत्रास्मि'न्नेवावसरे एनं 'स्नातकम्[4] आचार्यः 'उत्तरतो गां बद्धोपतिष्ठेरन्नि'त्यनेन [ सू० ४।१०।१ ] वक्ष्यमाणेन विधिना अर्हयेत्।

**गोयुक्तं रथमुपसंक्रम्य पक्षसी कूबरबाहू वाऽभिमृशेद् वनस्पते (B)वीड्वङ्गो हि भूया इति ॥ ३० ॥**

गोभिर्वृषैर्युक्तो गोयुक्तः, तं गोयुक्तम्, रथम् उपसंक्रम्य सम्यगुपेत्य, पक्षसी चक्रे [5]"कूबरबाहू वा"*। "कूबरं रथिकस्थानम्, तस्य बाहू कूबरबाहू, [7]रथस्येषे इत्यर्थः, (C)[6]"वनस्पत इत्यनेन मन्त्रेणाभिमृशेत्"[8]*।

A. मन्त्रस्तु—

ॐ ओष्ठापिधाना नकुली दन्तपरिमितः पविः।
जिह्वे मा विह्वलो वाचं चारु माद्येह वादय॥ इति।

मन्त्रब्राह्मणम् १।७।१९। विनियोगप्रमाणं खादिरगृह्ये च ३।१।२६।

अस्य व्याख्या—हे जिह्वे, त्वम् ओष्ठापिधाना ओष्ठाभ्यामाच्छाद्यमाना नकुली नकुलीव चञ्चलस्वभावा दन्तपरिमितः याहच्छिकः, विह्वलः अशुद्धादिदोषयुक्तः शब्दः प्रयुक्तः सन् पविः वज्रस्वरूपो भवति, यद्वा दन्तपरिमितः पविः दन्तावरणो वज्र इव त्वम्। अतस्त्वां प्रार्थये इह जगति प्रस्तुते कर्मणि वा अद्य त्वं मा मां चारु शोभनं वाचं वचनं वादय व्यक्तं वाचय चिरम्। इति।

B. तर्कालङ्कारीये भाष्ये तु 'विड्वङ्ग' इति हस्वेकारयुक्तः पाठो वर्त्तते स मुद्राकरप्रमाद एवेति सम्भावयामः।

C. मन्त्रस्तु—

ॐ वनस्पते वीड्वङ्गो हि भूया
अस्मत्सखा प्रतरणः सुवीरः।
गोभिः सन्नद्धो असि वीडयस्व
आस्थाता ते जयतु जेत्वानि॥ इति।

1. 'मुखे भवा मुख्या एतान्' ख। 2. '-नुपपत्तिः' घ। 3. 'एव' नास्ति ख। 4. 'स्नातकम्' नास्ति घ। 5. नास्ति घ। 6. 'वनस्पत इत्यनेन मन्त्रेणाभिमृशेत्' इत्यधिकम् ग। 7. 'रथेषे' घ। 8. नास्ति ख।

'आस्थाता ते जयतु जेत्वानीत्यातिष्ठति ॥ ३१ ॥

रथमातिष्ठति ।

प्राङ् वोदङ् वाऽभिप्रयाय प्रदक्षिणमावृत्योपयाति ॥ ३२ ॥

तेन रथेन प्राङ्मुख उदङ्मुखो वा अभिप्रयाय गत्वा प्रदक्षिणमावृत्य उपयाति आचार्यसमीपमागच्छति ।

उपयातायार्घ्यमिति कौहलीयाः ॥ ३३ ॥

कौहलीया नाम शाखिनः, तेषामेतन्मतम्—रथाद्वरुह्योपयाताय आचार्यसमीपमागताय अर्घ्यम् अर्हणं न तु प्रागिति(A) ।

इति "भट्टनारायणकृतौ"* "गोभिलीयगृह्यसूत्रभाष्ये"*
तृतीयप्रपाठकस्य चतुर्थी कण्डिका ॥

---

आकरो मन्त्रब्राह्मणम् १।८।१६ । विनियोगप्रमाणन्तु खादिरगृह्येऽपि ३।१।२७ ।

अस्य व्याख्या—हे वनस्पते वनस्पतिर्वृक्षस्तदवयवेन काष्ठेन निर्मितरथ, हि यतस्त्वं गोभिः तन्तुभिः वृषभैर्वा सन्नद्धः सम्यग् बद्धः असि, अतो वीड्वङ्गो दृढाङ्गः, सुवीरः सुसारथिः, यद्वा कल्याणवीराधारः, अस्मत्सखा अस्माकं सखिरूपः सन् प्रतरणः प्रकर्षेण तरन्ति दुर्गाणि येन सः, पथित्राता भूयाः । यतस्त्वमेवंभूत इत्यर्थः, अतोऽस्मानपि वीडयस्व सुदृढावयवान् कुरु । यद्वा वीडयस्व सम्प्रति किञ्चित् क्षणं तिष्ठ । ते तव आस्थाता आरोही त्वदुपरि आरोहतु, जेत्वानि जेयानि कामक्रोधादीनि द्विषद्वृन्दानि जयतु । इति ।

A. समावर्तनविषये यदुक्तं गृह्यान्तरेषु तस्मात् किञ्चिदिहोपस्थाप्यते,—तत्र च छन्दोग-द्राह्यायण-खादिरगृह्याणां प्रायः समानानुपूर्वीकाणि सूत्राणि—आप्लवने पुरस्तादाचार्यकुलस्य परिवृत आस्ते । उदङ्मुख आचार्यः प्रागग्रेषु । एवं ब्रह्मवर्चसकामः । गोष्ठे पशुकामः सभायां यशस्कामः सर्वौषधेनापः फाणयेत् । सुरभिभिश्च । ताभिः शीतोष्णाभिराचार्योऽभिषिञ्चेत् । स्वयं वा मन्त्राभिवादात् । उभावित्येके तेनेममित्याचार्यो ब्रूयात् । येऽप्स्वित्यपामञ्जलिमवसिञ्चेत् । यदपामिति च । तूष्णीं च । यो रोचन इति गृह्यात्मानमभिषिञ्चेत् । ये न स्त्रियमिति च । तूष्णीं च । उद्यन्नित्यादित्यमुपतिष्ठेत् । समस्येद्वा । विहरन्नुत्संहरेच्चक्षुरसीति । उदुत्तममिति मेखलामवमुञ्चेत् । प्राश्य वापयेच्छिखावर्जं केशश्मश्रुलोमनखानि । अलङ्कृतोऽहतवाससा श्रीरिति स्रजं प्रतिमुञ्चेत् । नेत्र्यौ स्थ इत्युपानहौ । वैणवं दण्डमादद्याद् गन्धर्वोऽसीति । उपेत्याचार्यं परिषदं प्रेक्षेद्व यक्षमिवेति । उपविश्यौष्ठापिधानेति मुख्यान् प्राणानभिमृशेत् । गोयुक्तं रथ-

---

1. 'चास्थाते' च। 2. नास्ति च। 3. नास्ति ख।

मालभेद् वनस्पत इति। आस्थाता त इत्यारोहेत्। प्राचीं प्रयायोदीचीं वा प्रदक्षिणमावर्तयेत्। प्रत्यागतायार्घ्यमित्येके। इति।

जैमिनिगृह्यसूत्राणि तु—वेदमधीत्य व्रतानि चरित्वा ब्राह्मणः स्नास्यन् संभारानुपकल्पयते अहतं वास एरकां स्नानमनुलेपनं सुमनस आञ्जनमादर्शमहते वाससी त्रिवृतं मणिं वैणवं दण्डं शुक्ले उपानहौ नापित उपकॢप्त उत्तरत उपतिष्ठत्येरकामास्तीर्याहतेन वाससोदग्दशेन प्रच्छाद्य तत्रैनं प्राङ्मुखमुपवेश्य दण्डमप्सु सादयेद् द्विषतां वध्रोऽसीति मेखलां विस्रंसयेदुदुत्तममिति तां चैवाप्सु सादयेत् केशान्तकरणेन मन्त्रा व्याख्याताः। परिवापनञ्च शिरोऽग्रे वपते ततः श्मश्रूणि तत इतराण्यङ्गान्यनुपूर्वेण केशश्मश्रुलोमनखान्यश्वत्थस्य मूले निखनेदुदुम्बरस्य वा अपहतो मे पाप्मेति शीतोष्णाभिरद्भिर्हिरण्यान्तर्हिताभिरेनं स्नापयेत्, शिवा नः शं तमा भव सुमृडीका सरस्वति, मा ते व्योम संदृशीति रोहिण्यां स्नायात्, प्रजापतेर्वा एतन्नक्षत्रं प्रजावान् भूयासमिति, मृगशिरसि स्नायात् सोमस्य वा एतन्नक्षत्रं सोमेज्या मोपनमेदिति, तिष्ये स्नायाद् बृहस्पतेर्वा एतन्नक्षत्रं ब्रह्म बृहस्पतिर्ब्रह्मवर्चसी भूयासमिति, हस्ते स्नायात् सवितुर्वा एतन्नक्षत्रं सवितृप्रसूतो भूयासमिति, अनुराधासु स्नायात् मित्रस्य वा एतन्नक्षत्रं मित्राणां प्रियो भूयासमिति, श्रवणे स्नायात् विष्णोर्वा एतन्नक्षत्रं यशो वै विष्णुर्यशो मोपनमेदिति। तमहतेन वाससा परिदधीत, परीमं सोमेति सव्यमग्रेऽभ्यञ्जीत, यशसा मेत्यथ दक्षिणं त्रिवृत्तं मणिं कण्ठे प्रतिमुञ्चते; पालाशं स्वस्त्ययनकामः स्वस्त्ययनोऽसीति वैल्वं ब्रह्मवर्चसकामो ब्रह्मवर्चसी भूयासमित्यर्कमन्नाद्यकामोऽर्कवानन्नादो भूयासमिति, गन्धर्वोऽसि विश्वावसुः स मा पाहि स मा गोपायेति वैणवं दण्डमुपादत्ते, उपानहावादधीत नेत्रे स्थो नयतं मामिति दक्षिणमग्रे प्रतिमुञ्चते। इति।

लौगाक्षिकाठकगृह्ययोः समानुपूर्वीकाणि सूत्राणि तु—छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेदाचार्यमर्हयेत्। श्रोत्रियोऽन्यो वेदाध्यायी। न तस्य स्नानम्। अथास्य स्नानम्। व्रजपरिहितं प्रपाद्य जटाश्मश्रुलोमनखमभिसंहार्याऽऽपो हि ष्ठेति तिसृभिः स्नायाद्धिरण्यवर्णा इति च द्वाभ्याम्। शन्न इति च द्वाभ्याम्। द्यौस्ते पृष्ठमिति छत्रं धारयेत्। इममग्न इति हिरण्यम्। प्रतिष्ठे स्थो देवते मा मा हिंसिष्टमिति वाराह्यावुपानहौ प्रतिमुञ्चते। त्रिवर्णोऽत ऊर्द्ध्वं तस्माच्छोभनं वासो भर्तव्यमिति श्रुतिः। वैणवदण्डधारी नित्यम्। छत्रधारी अपन्थदायी। इति।

आश्वलायनगृह्यसूत्राणि च—चरितव्रताय मेधाजननं करोति। अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति सुश्रवः सुश्रवा असीति। एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातम्। इत्यनुपेतपूर्वस्य। अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननञ्च। अनिरुक्तं परिदानम्। कालश्च। तत् सवितुर्वृणीमहे इति सावित्रीम्। इति।

आपस्तम्बगृह्यसूत्राणि तु—वेदमधीत्य स्नास्यन् प्रागुदयाद् व्रजं प्रविश्यान्तर्लोम्ना चर्मणा द्वारमपिधायाऽऽस्ते। नैनमेतदहरादित्योऽभितपेत्। मध्यन्दिनेऽग्नेरुपसमाधानाद्याज्यभागान्ते

पालाशीं समिधमुत्तरयाधायापरेणाग्निं कट एरकायां वोपविश्योत्तरया क्षुरमभिमन्त्र्योत्तरेण यजुषा वप्तुं प्रदायापां संसर्जनाद्यकेशनिधानात् समानम्। जघनार्द्धे व्रजस्योपविश्य विस्रस्य मेखलां ब्रह्मचारिणे प्रयच्छति। तां स उत्तरेण यजुषोदुम्बरमूले दर्भस्तम्बे वोपगूहति। एवं विहिताभि-रेवाद्भिरुत्तराभिः षड्भिः स्नात्वोत्तरयोदुम्बरेण दतो धावते। स्नानीयोच्छादितः स्नातः। उत्तरेण यजुषाऽहतमन्तरं वासः परिधाय सार्वसुरभिणा चन्दनेनोत्तरैर्देवताभ्यः प्रदायोत्तरयाऽनुलिप्य मणिं सौवर्णं सोपधानं सूत्रोतमुत्तरयोदपात्रे त्रिः प्रदक्षिणं परिप्लाव्योत्तरया ग्रीवास्वाबध्यैवमेव बादरं मणिं मन्त्रवर्जं सव्ये पाणावाबध्याहतमुत्तरं वासो रेवतीस्त्वेति समानम्। तस्य दशायां प्रवर्तौ प्रबध्य दर्व्यामाधायाऽऽज्येनाभ्यानायन्नुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वैताभिरेव दक्षिणे कर्ण आबध्नीतैताभिः सव्ये। एवमुत्तरैर्यथालिङ्गं स्रजः शिरस्याञ्जनमादर्शा-वेक्षणमुपानहौ छत्रं दण्डमिति। वाचं यच्छत्या नक्षत्रेभ्यः। उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्योत्तरेणार्धर्चेन दिश उपस्थायोत्तरेण नक्षत्राणि चन्द्रमसमिति। रातिना सम्भाष्य यथार्थं गच्छति। इति।

मानवगृह्यसूत्राणि च—छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेत्। आचार्यमर्हयेच्छ्रोत्रियः। अन्यो वेदपाठी न तस्य स्नानम्। आपो हि ष्ठेति तिसृभिर्हिरण्यवर्णाः शुचय इति द्वाभ्यां स्नात्वाऽहते वाससी परिधत्ते। वस्त्र्यसि वसुमन्तं मा कुरु सौवर्चसायेति परिदधाति। यथा द्यौश्च पृथिवी च न बिभीतो न रिष्यतः। इत्याङ्क्ते। हिरण्यमाबध्नीते। छत्रं धारयते दण्डं मालां गन्धम्। प्रतिष्ठे स्थो दैवते द्यावापृथिवी मा मा संताप्तमित्युपानहौ। द्विवस्त्रोऽत ऊर्ध्वं भवति तस्माच्छोभनं वासो भर्तव्यमिति श्रुतिः। इति।

वाराहगृह्यसूत्राणि तु—छन्दस्यर्थान् बुद्ध्वा स्नास्यन् गां कारयेत्। आचार्यमर्हयेत्। आपो हि ष्ठेति तिसृभिर्हिरण्यवर्णाः शुचय इति चतसृभिः स्नात्वा अहते वाससी परिदधाति वस्त्र्यसि वसुमन्तं मा कुरु सौवर्चसायेति विश्वजनस्य छायाऽसीति छत्रं धारयते। मालामाबध्नीते यामश्विनौ धारयेतामिति। हिरण्यं बिभृयात्। प्रतिष्ठे स्थो देवते इत्युपानहौ। विष्टम्भोऽसीति धारयेद् वैणवीं यष्टिं सोदकञ्च कमण्डलुम्। नित्यव्रतान्याहुराचार्याः। द्विवस्त्रोऽत ऊर्ध्वं शोभनं वासो भर्तव्यमिति श्रुतिः। इति।

बौधायनगृह्यसूत्राणि तु—वेदमधीत्य स्नास्यन्नित्युक्तं समावर्तनम्। मन्त्रब्राह्मणं वेद इत्या-चक्षते। मन्त्रब्राह्मणयोर्वेदनामधेयम्। मन्त्रब्राह्मणे यज्ञस्य प्रमाणम्। मन्त्रब्राह्मणे अधीत्य चीर्णेषु वा व्रतेषु। एतावदेव नाना। अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वा पालाशीं समिधमाज्येनाक्त्वा मध्यन्दिनेऽभ्यादधाति। तत् पुरस्ताद् व्याख्यातम्। अथ केशश्मश्रु-नखलोमावापनेनैव प्रतिपद्यते सिद्धमा छत्रादानात् कृत्वा पक्वाज्जुहोति। आवहन्ती वितन्वानः ......स्वाहा इति। अथाऽऽज्याहुतिरुपजुहोति आमायन्तु ब्रह्मचारिणः स्वाहा यशोजनेऽसानि स्वाहा। श्रेयान् वस्यसोऽसानि स्वाहा, तं त्वा भग प्रविशानि स्वाहा, स मा भगप्रविश

स्वाहा। इति स्विष्टकृत्प्रभृतिसिद्धमा धेनुवरप्रदानात्। अथाग्रेणाग्निं बिल्वशाखायां हुतशेषं निदधाति तस्मिन् सहस्रशाखे निभगाहं त्वयि मृजे स्वाहा इति। अथ पङ्कादुपादाय प्राश्नाति यथापः प्रवतायन्ति यथा मासा अहर्जरम्। एवं मां ब्रह्मचारिणो धातरायन्तु सर्वतः स्वाहा। प्राश्याप आचम्योरः प्रत्यात्मानं प्रत्यभिमृशते प्रतिवेशोऽसि प्र मा पाहि प्र मा पद्यस्व इति। सोऽत्रैवाऽऽस्ते आ नक्षत्राणामुदयात्। अथोदितेषु नक्षत्रेषूपनिष्क्रम्य दिश उपतिष्ठत इति सिद्धमत ऊर्ध्वम्। यस्मिन्नग्नावुपनयति तस्मिन् ब्रह्मचर्यं तस्मिन् व्रतचर्यं तस्मिन् समावर्तनं तस्मिन् पाणिग्रहणं तस्मिन् गृह्याणि कर्माणि क्रियन्ते। इति।

पारस्करगृह्यसूत्राणि च—वेदं समाप्य स्नायात्। ब्रह्मचर्यं वाऽष्टाचत्वारिंशकम्। द्वादशकेऽप्येके। गुरुणाऽनुज्ञातः। विधिर्विधेयस्तर्कश्च वेदः। षडङ्गमेके। न कल्पमात्रे। कामं तु याज्ञिकस्य। उपसंगृह्य गुरुं समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात् स्थित्वाऽष्टानामुदकुम्भानाम्। येऽप्स्वन्तरग्नय इत्येकस्मादपो गृहीत्वा। तेनाभिषिञ्चते। तेन मामभिषिञ्चामीति, येन श्रियमकृणुतामिति। आपो हि ष्ठेति च प्रत्यृचम्। त्रिभिस्तूष्णीमितरैः। उदुत्तममिति मेखलामुन्मुच्य दण्डं निधाय वासोऽन्यत् परिधायाऽऽदित्यमुपतिष्ठते। उद्यन् भ्राजभृष्णुरिन्द्रो मरुद्भिरिति। दधि तिलान् वा प्राश्य जटालोमनखानि संहृत्यौदुम्बरेण दन्तान् धावेत। अन्नाद्याय व्यूहध्वं.........भगेन चेति। उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पयेति पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणा निषिच्यानुलिप्य जपेत्। सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चामुखेनेति। अहतं वासो धौतं वाऽमन्त्रेणाऽऽच्छादयीत परिधास्यै इति। अथोत्तरीयं यशसेति। एकं चेत् पूर्वस्योत्तरवर्गेण प्रच्छादयीत। सुमनसः प्रतिगृह्णाति या आहरदिति। अथावबध्नीते यद्यशोऽप्सरसामिति। उष्णीषेण शिरो वेष्टयते युवा सुवासा इति। अलङ्करणमसीति कर्णवेष्टकौ वृत्रस्येत्यङ्क्ते अक्षिणी। रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते। छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसीति। प्रतिष्ठे स्थो विश्वतो मा पातमित्युपानहौ प्रतिमुञ्चते। विश्वाभ्यो मानाष्ट्राभ्यस्परिपाहि सर्वत इति वैणवं दण्डमादत्ते। दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः। इति।

———

## तृतीयप्रपाठकस्य पञ्चमी कण्डिका

स्नानविधिमभिधाय इदानीं स्नातकव्रतविवक्षयेदमाह—

### अत ऊर्द्ध्वं वृद्धशीली स्यादिति समस्तोद्देशः ॥ १ ॥

अतोऽस्मात् स्नानादूर्ध्वं वृद्धानां (A)स्थविराणां यच्छीलं स्वभावः, तच्छीली स्यात् भवेत्। ते हि वृद्धाश्चिरजीवितया विदितबहुधर्ममार्गाः सन्तोऽनिष्फलं कर्म परिहृत्य श्रेयःप्राप्तिसाधने[1]ष्वेव यत्नवन्तो भवन्त्यतो युक्तं तच्छीलित्वम्। इत्ययं समस्तोद्देशः समस्तव्रतसंक्षेप(B) इत्यर्थः।

### तत्रैतान्याचार्याः परिसञ्चक्षते ॥ २ ॥

तत्र तस्मिन् स्नातकत्वे एतानि वक्ष्यमाणानि व्रतानि आचार्याः परिसंचक्षते सम्यक् [2]कथयन्ति।

कानि पुनस्तानि इत्यत आह—

### नाजातलोम्न्योपहासमिच्छेत् ॥ ३ ॥

यस्या[3]स्तु यौवनसंसूचिका नाभिमण्डलोभयपार्श्ववर्त्तिनी श्यामायमाना रोम-[4]राजिरण्वपि न विभाव्यते[4] सा अजातलोम्नी अजातव्यञ्जनोच्यते(C), [5]तया सह उपहासो रमणं मैथुनमुपभोग इत्यर्थः; तं नेच्छेत् न कुर्यात्[5]।

A. स्थविरलक्षणं च चन्द्रकान्तीये—

न तेन वृद्धो भवति येनास्य पलितं शिरः।
यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः॥ इति।

B. तथाच वचनमिदमभियुक्तानाम्—

विस्तीर्य हि महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत्।
इष्टं हि विदुषां लोके समासव्यासधारणम्॥ इति।

C. तदुक्तमशाङ्कहृदये पञ्चदशाध्याये—

1. '-ष्वेवं' ख। 2. 'परित्याजयन्ति' घ। 3. 'यस्या नव-' ख। 4. '-राजिर्न जाता' ख। 5. नास्ति ख।

यदा बाल्यमतिक्रम्य तारुण्यं यान्ति योषितः ।
कायश्च मानसो भावस्तदा तासां विवर्तते ।
स्तनौ पीनोन्नतौ स्यातां योनिश्च परिवर्धते ॥
समुद्भवन्ति लोमानि वस्तिदेशे समन्ततः ॥
जरायुकोशात् तन्वच्छं शोणितञ्च प्रवर्त्तते ।
तदार्तवं रजश्चेति पुष्पनाम्ना च गद्यते ॥
मासि मासि स्रवेद्रक्तं शशशोणितसन्निभम् ।
लाक्षारसनिभं वाऽपि तददोषं विनिर्दिशेत् ॥
तिस्रश्चतस्रो वा पञ्चाप्यनुबध्नाति तन्निशाः ।
अतोऽन्यथा रजः स्त्रीणां जानीयाद् दोषवद् भिषक ॥
अरुणनामशोकानां प्रायशश्च प्रवर्तते ।
द्वादशाद् वत्सरादूर्ध्वं याति पञ्चाशता क्षयम् ॥
आर्तवस्रावदिवसादृतुः षोडश रात्रयः ।
गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः ॥
नारीणां प्रकृतेर्भेदादृतुकालस्य चान्यथा ।
गर्भग्रहणकालस्य कीर्तितं देहवेदिभिः ॥
दिने व्यतीते नियतं सङ्कुचत्यम्बुजं यथा ॥ इति ।

कालनिर्णयदीपिकायामपीदमेवोक्तम्—

ऋतुकाल इति प्रोक्तं गार्ग्यादिमुनिसत्तमैः ।
स्त्रीचिह्नं यौवनं प्राप्य षोडशे वत्सरे सदा ॥
कृत्रिमो दशमादूर्ध्वमौषधस्य निषेवणात् ।
एकादशे द्वादशे वा ऋतुकालं वदन्ति हि ॥
अनुरागाद् द्वादशाब्दे त्रयोदशे तु केचन ।
चतुर्दशे पञ्चदशे स्त्रीचिह्नं तु भविष्यति ॥
वातजा पित्तजा चेति दारुणा त्रिविधा स्मृता ।
वातजा द्वादशे वर्षे पित्तजा च चतुर्दशे ॥
दारुणा षोडशे वर्षे शोणितं पतति ध्रुवम् । इति ।

एवञ्च ज्ञातव्यमुना ऋतुमत्येव भवतीति सूत्रेणानेन अनृतुमतीसङ्गमो विशिष्य निषिध्यते ।

असंस्कृतां पुष्पहीनां कन्यकां वा द्विजाधमः ।
गन्तुमिच्छति पापात्मा नरकं याति दारुणम् ॥

इति वदतां मार्कण्डेयाचार्याणामप्यत्रैवानुकूलत्वादिति ।

'उक्तञ्च—

अजातव्यञ्जनाऽलोम्नी न[1]* तया सह [2]संविशेत्(A)। इति।

बालत्वात् तस्याः पीडा मा भूदिति तत् प्रतिषिध्यते।

## नायुग्वा ॥ ४ ॥

अयुग्: काकवन्ध्यापत्यं तयाऽयुग्वा महोपहासं नेच्छेदिति वर्त्तते, एवं वास्या उपगमने प्रतिषेधं दर्शयति। उक्तञ्च—

निर्णयसिन्धौ च—

प्रथमर्तोः पूर्वं स्त्रीगमनं न कार्यम्—

प्राग् रजोदर्शनात् पत्नीं नेयाद् गत्वा पतत्यधः।

व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात्॥

इत्याश्वलायनोक्तः।

सनातनधर्मप्रदीपे च—

अप्रौढां कन्यकां विप्रो यभेत् कामातुरोऽन्वहम्।

तस्यैव नरके वासः कानीनः स्यात् तदुद्भवः॥

इति देवलवचनात्। एवञ्चात्रानागतार्तवासङ्गमनिषेधात 'ऊर्ध्वं त्रिरात्रात्' (२।५।७) इति सूत्रे सूत्रस्यास्यापवादकत्ववर्णना या कृता सा न मनोरमा, गोभिलाचार्यस्य नववध्वा ऋतुदर्शनादूर्ध्वं त्रिरात्रादित्यर्थ एव तात्पर्यात्, न तु केवलं विवाहकालात् परमेव त्रिरात्रादिति (एतच्चोपपादितं पादटीकायां द्र० पृ० ३०१), अनागतार्तवागमननिषेधकवाक्यानां भूयसोपलम्भाच्च।

यद्यपि गोभिलाचार्येण 'नग्निका तु श्रेष्ठा' इति सूत्रयता ऋतुमतीविवाहोऽपि जघन्यपक्षीय इति भङ्ग्या प्रतिपादितम्, तत्पुत्रेण च गृह्यासंग्रहे 'तां प्रयच्छेत् त्वनग्निकाम्' इत्युक्त्वा तत् समर्थितम्, तथाऽपि पुनः स्नातकप्रकरणे नाजातेत्यादि सूत्रं विरचय्य अनृतुमतीविवाह एव अजातव्यञ्जनासंसर्गप्रसक्तिरिति प्रदर्श्य च नग्निकाविवाहे एव प्रकृष्टं तात्पर्यमिति प्रमाणीक्रियते। अत एव 'अनग्निका तु श्रेष्ठा' इति केषाञ्चिदर्वाचीनानां सूत्रकल्पना नितरां निरस्ता इत्यत्राप्यवहितैर्भवितव्यं धीमद्भिः। अथ यदि केपुचिद् गृह्येषु मन्त्रप्रयोगादिलिङ्गपरामर्शेन ऋतुमतीविवाह एव साध्यत्वेन निर्णीयते इति मन्यन्ते केचन व्यवहारपेशलाः, तन्मतन्तु पुराकल्पीयत्वेन गोभिलीयव्यतिरिक्तविषयत्वेन आपत्कल्पीयत्वेन जघन्यकल्पीयत्वेन वा समर्थनीयमित्यलं पल्लवितेन, विस्तरस्तु सनातनधर्मप्रदीपादिषु विचारो द्रष्टव्य इति।

A. कर्मप्रदीपः ३।९।४। अस्य विवृतौ शिवरामः—या स्वयमनुद्भिन्नकुचा अजातव्यञ्जना अलोम्नी तया सह न संविशेद् एकत्र न शयीत। व्यञ्जनानि स्त्रीलक्षणानि, यस्या नाभ्यूर्ध्वं रोमराजिर्न दृश्यते सा अलोम्नी। इति।

1. नास्ति ख। 2. 'न संविशेत्' ख।

अयुगूः काकवन्ध्यायां जाता तां न विवाहयेत्(A)। इति।

## न रजस्वलया ॥ ५ ॥

रज[1]स्वला उदक्या, तया सह उपहासं नेच्छेदिति [2]वर्त्तते।

## न समानर्ष्या ॥ ६ ॥

समानास्तुल्याः [3]ऋषयः प्रवरा यस्याः सा समानर्षी, तया सह उपहासं नेच्छेदिति [4]वर्त्तते। एतदप्युपयमनप्रतिषेधपरमेव।

तथा च गौतमः—असमानप्रवरैर्विवाह इति।

## नापरया द्वारा प्रपन्नमन्नं भुञ्जीत ॥ ७ ॥

अपरया [5]पश्चात्प्रभृतिविकृतया (B)द्वारा [6]द्वारेण गवाक्षेण वा प्रपन्नमाहृतमन्नं पक्वान्नं न भुञ्जीत नाश्नीयात्। [7]एवञ्च व्रीह्यादिधान्यानामप्रतिषेधः।

## न द्विः पक्वम् ॥ ८ ॥

द्विः कृत्वः पक्वं शृतं द्विः पक्वम् अन्नं न भुञ्जीतेति [8]वर्त्तते। पक्वमिति वचनात् उष्णीकरणे न दोषः। (C) [9]येषां पक्वान्नसंयोगव्यतिरिक्ता पाकनिष्पत्तिरेव नास्ति[9]* यथा [10]रथवायक(?)पूरकपूरिकादीनाम्, तेषां न द्विः पक्वता। [11]ततश्च भोजनं[11]* न दोषाय।

---

A. कर्मप्रदीपः ३।९।४। अस्य विवृतिः—सूत्रे या अयुगूरुक्ता सा काकवन्ध्यायां जाता। एकापत्या काकवन्ध्या, तस्यां या जाता सा अयुगूशब्देनोच्यते, ताम् अयुगूं न विवाहयेत् तामपरिणेत्रीं न परिणयेत्। इति।

B. द्वाःशब्दो द्वारशब्दपर्यायः 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरोक्तेः।

C. येषामिति। एतेन—तदेव द्विः पक्वं निषिध्यते यत् सूपकारशास्त्रापेक्षितपाकनिष्पत्त्यनन्तरं पुनः पच्यते, न पुनरर्धपाकानन्तरं तच्छास्त्रोक्तसम्भारणादिरूपपाकान्तरसिद्धं व्यञ्जनादि। न ह्यवान्तरेण तन्मार्गेण पाको निष्पद्यत इति।

---

1. '-स्वला' ख। 2. 'वर्त्तते' नास्ति घ। 3. 'सदृशाः' ख। 4. 'वर्त्तते' नास्ति घ। 5. पाश्चात्यभित्तिच्छिन्नया द्वारा' ख। 6. '-प्यद्वारेण' क-घ। 7. 'एवं धान्यानां व्रीह्यादीनामपि प्रतिषेधः' ख। 8. 'वर्त्तते' नास्ति घ। 9. 'येषां तु पक्वान्नसंयोगव्यतिरिक्तः पाकः, तेषां तु निष्पत्तिरेव नास्ति' ख। 10. 'वायवपूरक' ख, 'वथवाअक' घ। 11. 'तेषाञ्च भोज्यत्व' ख।

## न पर्युषितम् ॥ ९ ॥

पर्युषितं परिगताहारान्नं [1]नान्नं भुञ्जीतेति [2]वर्त्तते। [3]अयमुत्सर्गः(A)। अस्य-[4]चायमपवादो(B) [5]मनूक्तः—

यत्किञ्चिन्मधुसंयुक्तं भक्ष्यं भोज्यमगर्हितम्।
तत् पर्युषितमप्याद्यं हविःशेषञ्च यद् भवेत्(C)॥ इति।

किं[6]मतोऽन्यत् सर्वं पर्युषितमभोज्यम्? न,

## अन्यत्र शाकमांसयवपिष्टविकारेभ्यः ॥ १० ॥

शाकमांसे पर्युषिते अपि भोज्ये, यवपिष्टविकाराः[7] सक्तुप्रभृतयः। यव[8]शब्दो गोधूमा[9]नामप्युपसंग्रहार्थः।

---

पूरिकालक्षणन्तु—

माषाणां पिष्टिकां कुर्याल्लवणार्द्रकहिङ्गुभिः।
तया पिष्टिकया पूर्णा समिता कृतपोलिका।
ततस्तैले विपका सा पूरिका कथिता बुधैः। ( इति भावप्रकाशः )

A. सामान्यविधिरुत्सर्गः।

B. विशेषविधिरपवादः। उत्सर्गापवादयोरपवादविधिर्बलवान्। इति।

C. मनुसंहिता। ५।२४ 'स्नेहसंयुक्तमि'ति मेधातिथिकुल्लूकभट्टसम्मतः पाठः। अस्य व्याख्यायां कुल्लूकभट्टः—"यत्किञ्चित् खरविशदमभ्यवहार्यं मोदकादि, भोज्यं पायसादि, अगर्हितमुपघातान्तर-रहितम्, तत् पर्युषितं राज्यन्तरितमपि घृततैलदध्यादिसंयुक्तं कृत्वा भक्षणीयम्। न तु प्रागेव यत् स्नेहसंयुक्तं तत् पर्युषितं भक्षणीयमिति व्याख्येयम्। तथाच सति हविःशेषस्य स्नेह-संयोगावश्यम्भावाद् 'यत्किञ्चित् स्नेहसंयुक्तमि'त्यनेनैव भक्षणे सिद्धे 'हविःशेषं च यद् भवेदि'त्यनर्थकं स्यात्। स्मृत्यन्तरेऽपि भक्षणकाल एवाभिघारणमुपदिश्यते। तथाच यमः—

मसूरमाषसंयुक्तं तथा पर्युषितञ्च यत्।
तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम्॥

हविःशेषञ्च चरु-पुरोडाशादि पर्युषितमपि भोजनकाले स्नेहसंयोगयुक्तमेव भक्षणीयं पृथगुप-देशात्।" इत्याह।

---

1. 'अन्नं न भुञ्जीतेति' ख। 2. 'वर्त्तते' नास्ति घ। 3. 'पक्वमिति चयमुत्-' ख। 4. 'चायं' नास्ति घ। 5. 'मनुनोक्तः' ख। 6. 'अतः' नास्ति घ। 7. '-दाय' ख। 8. '-शब्दं' ख। 9. '-मप्युपसंग्रहार्थम्' ख।

तथाच मनुः—

चिरस्थितमपि त्वाद्यमस्नेहाक्तं[1] द्विजातिभिः।
यवगोधूमजं सर्वं पयसश्चैव विक्रिया (A) ॥ इति।

एवञ्च स्नेहाक्तं पयोविकारयुक्तं च पर्युषितमपि भोज्यम् (B)।

## न वर्षति धावेत् ॥ ११ ॥

धावतिर्गतिकर्मा। वर्षति न गच्छेदित्यर्थः। अथवा त्वरितगमनप्रतिषेधो निपातपरिहारार्थः।

## नोपानहौ स्वयं हरेत् ॥ १२ ॥

पथि गच्छन् स्वयमात्मना आत्मीयोपानहौ न हरेत्। एवं चाऽऽचार्यादि-स्वपादुकयोः स्वयमपि हरणेऽभ्युदयः।

## नोदपानमवेक्षेत् ॥ १३ ॥

उदपानं कूपस्तं नावलोकयेत्।

---

A. मनुसंहिता ५।२५। अस्य व्याख्यायां कुल्लूकभट्टः—"अनेकरात्र्यन्तरिता अपि यवगोधूमदुग्धविकाराः स्नेहसंयोगरहिता अपि द्विजातिभिर्भक्षणीयाः"—इत्याह।

B. विकारान्तरप्राप्तन्तु सर्वथैव वर्जनीयम्।

अपूपाश्च करम्भाश्च धाना वटकसक्तवः।
शाकं मांसञ्च पूपञ्च सूपं कृषर एव च ॥
यवागूं पायसञ्चैव यच्चान्यत् स्नेहसम्भवम्।
सर्वं पर्युषितं भक्ष्यं शुक्तञ्च परिवर्जयेत् ॥

इति वचनात्। मनुरपि—

आरण्यानाञ्च सर्वेषां मृगाणां माहिषं विना।
स्त्रीक्षीरञ्चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥

"स्वभावतो मधुररसानि यानि कालवशेनोदकादिना चाम्लीभवन्ति तानि शुक्तपदवाच्यानी"त्यस्य व्याख्यायां कुल्लूकभट्टः।

तत्रापि विशेषस्तत्रैव—

दधि भक्ष्यञ्च शुक्तेषु सर्वञ्च दधिसम्भवम्। इति म० स० ५।१०।

खण्डादिपक्वस्य तु पर्युषितत्वमेव नास्ति। तथाच स्मरणम्—

खण्डाज्यादिकृतं पक्वं नैव पर्युषितं भवेत्। इति।

---

1. '-क्तं' ख।

## न फलानि स्वयं प्रचिन्वीत ॥ १४ ॥

[1]स्वयमात्मना आत्मार्थं वा परार्थं वा प्रकर्षेण वृक्षमारुह्य फलानि न [2]विचिन्वीत ।

## नागन्धां स्रजं धारयेत् ॥ १५ ॥

अगन्धां [3]कुरण्टकादिगन्धरहितकुसुमग्रथितां स्रजम् ।

किं सर्वामेव ? न ;

## अन्यां हिरण्यस्रजः ॥ १६ ॥

सुवर्णमालाया अन्यामगन्धां [4]न धारयेत् ।

## न मालोक्ताम् ॥ १७ ॥

धारयेदिति(A) ।

किं [5]तां त्यजेदेव ? न ; किं तर्हि ?

## स्रगिति वाचयेत् ॥ १८ ॥

ततो धारयेत् ।

## भद्रमित्येतां वृथावाचं परिहरेत् ॥ १९ ॥

भद्रं [6]भजनीयं सेवनीयं कल्याणमित्यर्थः । एतां भद्रां श्रेयसां वृथावाचं परिहरेत् । कथं [7]नाम ? यद् भद्रं तद् भद्रशब्देन ब्रूयात् । अभद्रे अकल्याणे भद्रशब्दं न प्रयुञ्ज्यात् इत्यर्थः । अनृतदोषो मा भूत् इत्येतत् प्रतिषिध्यते ।

तथाच मनुः—भद्रं भद्रमिति ब्रूयाद् (B)इति । अनेनैतद् दर्शयति अनृतं न वक्तव्यमिति । कथं तर्हि [8]तद् भद्रं ब्रूयादित्यत आह—

## भद्रमिति ब्रूयात् ॥ २० ॥

भद्रमित्येवमादिना पर्यायवचनेन बोधयेत् । न तु दण्डनिपातवत् परुषवचनेन ।

A. मालाशब्देनोक्तां कामपि स्रजं न धारयेदित्यर्थः ।

B. भद्रं भद्रमिति ब्रूयाद् भद्रमित्येव वा वदेत् ।
शुष्कवैरं विवादं च न कुर्यात् केनचित् सह ॥ म० सं० ४।१३९ ।

व्याख्यायामस्य कुल्लूकभट्टः—"प्रथमं भद्रपदमभद्रपदपरम्, द्वितीयं भद्रशब्दपर्यायपरम्, अभद्रं यत् तद् भद्रशब्दपर्यायपरप्रशस्तादिशब्देन प्रब्रूयात् । तथाचाऽऽपस्तम्बः—'नाभद्रमभद्रं ब्रूयात् पुण्यं प्रशस्तमिति ब्रूयाद् भद्रमित्येव' इति । भद्रपदमेव वा तत्र योज्यम् । शुष्कं निष्प्रयोजनं वैरं विवादं न केनचित् सह कुर्यात् ।" इत्याह ।

1. 'स्वयं' नास्ति ख । 2. 'वि-' नास्ति घ । 3. 'कुरण्टकादि-' नास्ति घ । 4. 'न धारयेत्' नास्ति घ । 5. 'तां' नास्ति घ । 6. 'भज सेवायां' ख । 7. 'नाम' नास्ति घ । 8. 'तद्' नास्ति घ ।

तथाच गौतमः—अभद्रं भद्रमिति (A)। अनेनैतद् दर्शयति सत्य[1]मप्यप्रियं न वक्तव्यमिति। तथाच मनुः—

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः(B)॥ इति।

इदानीं स्नातकस्य त्रैविध्यप्रदर्शनार्थमिदमाह—

## तत्रैते त्रयः स्नातका भवन्ति॥ २१॥

तत्र तस्मिन् व्रतानुष्ठानेऽधिकारिणः एते त्रयः स्नातका भवन्ति।

"के ते इत्यत आह"[2]—

## विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति॥ २२॥

येन "यथोक्तानां वेदव्रतानामनुष्ठानं न कृतम्, आपत्कल्पत्वाद् ग्रहणान्तिकेनैव ब्रह्मचर्येण समस्ततया चोपनयनव्रतचर्यया वेदोऽधीतः स विद्यास्नातकः। येन च यथा-विहितं[3] वेदव्रतानामनुष्ठानं कृतं वेदश्च यथाकालं[4] नाधीतः स व्रतस्नातकः। येन यथोक्तयैव वेदव्रतचर्यया यथाकालमेव वेदोऽधीतः स विद्याव्रतस्नातक इति(C)।

---

A. गौतमसंहितायां स्नातकव्रतप्रकरणे नवमाध्याये "अधेनुं धेनुभव्येति ब्रूयादभद्रं भद्रमिति कपालं भगालमिति मणिधनुरितीन्द्रधनुः" इत्यादि।

B. मनुसंहिता ४।१३८। कुल्लूकभट्टोक्ता व्याख्या चास्य—यथादृष्टश्रुतं तत्त्वं ब्रूयात्। तथा प्रीतिसाधनं ब्रूयात् पुत्रस्ते जात इति। यथादृष्टश्रुतमप्यप्रियं पुत्रस्ते मृत इत्यादि न प्रियमपि मिथ्या न वदेत्, एष वेदमूलतया नित्यो धर्मः'। इति।

चक्षुष्मानिति लुप्ताक्षं चण्डालं ब्राह्मणेति च।
प्रशंसानिन्दनं द्वेषात् पत्थाच्च विशिष्यते॥

इति चात्रोदाहरति चन्द्रकान्तः।

C. अत्र तर्कालङ्कारः—'तथाच हारीतः, यः समाप्य वेदमसमाप्य व्रतानि समावर्तते स विद्यास्नातकः, यः समाप्य व्रतान्यसमाप्य वेदं समावर्तते स व्रतस्नातकः, उभयं समाप्य समा-वर्तते यः स विद्याव्रतस्नातक इति। याज्ञवल्क्योऽप्याह—

वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा।

इति। अन्ये तु—'नियमेनाधीतं वीर्यवत्तरं भवति' इति ब्राह्मणवाक्यम्,

आहैव स नखाग्रेभ्यः परमं तप्यते तपः।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्॥

इति मनुवचनञ्चाऽऽलोचयन्तो विनाऽपि ब्रह्मचर्यमधीत्य वेदं यः स्नाति सोऽपि विद्यास्नातको भवतीति मन्यन्ते'। इत्याह।

---

1. 'अपि' नास्ति ख। 2. नास्ति ख। 3. 'यथाविहितं' ख। 4. '-समधीतः' क-ख।

## तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्वौ ॥ २३ ॥

[1]ऋज्वर्थम्—

श्रेष्ठ इति सम्मानदानादिषु फलभूयस्त्वं दर्शयति, अपमानादिषु च दोषगुरुत्वमिति। ननु प्राक् स्नातकव्रताना[2]मन्ते वा स्नातकलक्षणं वक्तुं युक्तम्, कस्मात् स्नातकलक्षणस्य प्रागुपरिष्टाच्च व्रतोपन्यासः? उच्यते—पूर्वोत्तराश्रमिणामपि ब्रह्मचारि-वैखानस-भिक्षूणां कानिचित् सत्यवचनादीन्यप्य-विरुद्धव्रतानि साधारणानि भवन्तीत्येतस्य प्रज्ञापनार्थमेवमुपन्यासः [3]कृतः। एवञ्च क्रोधकौशीलववर्जनेन्द्रियसंयमादिभिरविरुद्धैर्ब्रह्मचारिधर्मैः स्नातकादयोऽप्यधिक्रियन्ते। तथा दयादिभिर्भिक्षुधर्मैः पूर्वाश्रमिणः, इत्यय[4]मस्य तात्पर्यार्थः। तथाच ब्रह्मचारि-धर्मावसाने गौतमेनाप्येवमेवोक्तम्—'उत्तरेषाञ्चैतदविरोधी'ति। तत्राप्यसहायेन(A) [5]चशब्दस्यैष पदार्थोऽभिहितः, चशब्दादुत्तरेषां वक्ष्यमाणं तत्पूर्वेषामवि[6]रोधि स्यात्।

प्रकृतमधुनोच्यते—

## नाऽऽर्द्रं परिदधीत ॥ २४ ॥

आर्द्रं जलक्लिन्नं वासः [7]न परिदधीत[7]* ।

## नैकं परिदधीत ॥ २५ ॥

एकवासा न स्यादित्यर्थः(B)। [8]अन्ये तु अन्त[9]र्वाससो विधानार्थमेतदिति [10]मन्यन्ते। [11]तन्न; [12]कुतः?

[13]एककक्षो द्विकक्षो वा न स्यात् कर्मणि कर्हिचित्।
[14]द्वितीयकक्षबन्धस्तु न भवेत् स्नातकादृते ॥ इति वचनात् (C)।

---

A. गौतमसंहिता। असहायो व्याख्याकर्ता।

B. तेन उत्तरीयं वासोऽप्यस्याऽऽवश्यकमित्यवगम्यते इति।

C. अत्र तर्कालङ्कारः—"अन्ये तु अन्तर्वाससो विधानम् इच्छन्ति, कस्मात्? परिदधीत इति पुनर्वचनात्, परिदधीत इति खल्वनुवर्तत एव, यदत्र पुनः करोति तदधः परिधानमेवैकस्य वाससो निषिध्यते इति द्योतयति, प्रायेण हि परिदधातिरधःपरिधानमेव बोधयति, तस्माद् वासोद्वयमेवाधः परिदधीत, उत्तरीयन्तु अतोऽपि पृथक्। तथाच स्मृत्यन्तरम्—

---

1. 'ऋज्वर्थम्' नास्ति घ। 2. '-मीत एव' घ। 3. 'क्रियते' ख। 4. '-मर्थं तामित्यर्थः' ख। 5. 'च' नास्ति ख। 6. '-रोधः स्यात्' ख। 7. नास्ति घ। 8. 'अन्ये तु' नास्ति घ। 9. '-र्वासो वि-' घ। 10. 'वदन्ति' घ। 11. 'तदसत्' ख। 12. 'कुतः' नास्ति घ। 13. 'एककच्छो द्विकच्छो वा' ख। 14. 'द्वितीयं कच्छमावध्य' ख।

## न मनुष्यस्तुतिं प्रयुञ्जीत ॥ २६ ॥

प्रकर्षेण गद्यपद्यादिना पदविन्यासेन मनुष्यस्तुतिप्रतिषेधः ।

## नादृष्टं दृष्टतो ब्रुवीत(A) ॥ २७ ॥

## नाश्रुतं श्रुततः ॥ २८ ॥

[1]ऋज्वर्थं (B) ।

## स्वाध्यायविरोधिनोऽर्थानुत्सृजेत् ॥ २९ ॥

स्वाध्यायो वेदाभ्यासः, स पञ्चधा [2]भिद्यते ।

तथाच दक्षः—

वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
[3]प्रदानं चैव शिष्येभ्यो वेदाभ्यासो[4]ऽपि पञ्चधा(C) ॥ इति ।

एतस्य पञ्चप्रकारस्या[5]पि स्वाध्यायस्य[5]* [6]विरोधिनः विरोधकारिणः ये अर्थाः[6]* व्यापारास्तान् [7]उत्सृजेत् ।

अनेकत्वाच्छरीरे विनाशहेतवः प्रत्येकमुपदेष्टुमशक्याः इत्यतः कलापीकृत्य लाघवार्थमिदमाह—

## तैलपात्रमिवाऽऽत्मानं दिधारयिषेत् ॥ ३० ॥

तिलेषु भवं तैलम्, तस्याऽऽधारस्तैलपात्रम् । [8]यथा पूर्णं तैलपात्रं स्फुटन-चलन[9]विपर्यास-श्व-काका[10]दिदूषणादिभ्यो भयेभ्यो महता यत्नेन [11]रक्ष्यते,

---

जलतीरं समासाद्य तत्र शुक्ले च वाससी ।
परिधायोत्तरीयञ्च कुर्यात् केशान् न धूनयेत् ॥ इति ।
स्नातकानान्तु नित्यं स्यादन्तर्वासस्तथोत्तरम् ।

इति चैवमादि । न चैवमपि बहु वासस्त्वदोषाशङ्का कर्तव्या, कुतः ?

नाभेरधः कृते सम्यङ् न दोषो बहुवाससाम् ।

इति स्मरणात्" इत्याह स्वभाष्ये ।

A. 'भयात्' इति पाठान्तरमित्याह तर्कालङ्कारः ।

B. यददृष्टं तद् दृष्टं यथाश्रुतं तत् श्रुतमिति न कथयेदित्यर्थः ।

C. दक्षसंहिता २।२७ ।

---

1. 'मिमदव्याख्याते' ख । 2. 'भिद्यते' नास्ति घ । 3. 'तद्दानं' घ । 4. 'हि' ख । 5. नास्ति ख । 6. 'बाधकारिणो' ख । 7. 'उत्सृजेत्' नास्ति घ । 8. 'तथा' क घ । 9. 'विपर्य्यास' ख । 10. 'चादि' नास्ति ख । 11. 'रक्ष्येत' ख ।

एवमा¹त्मानमात्मशरीरं स्वर्गापवर्गप्राप्तिसाधनभूतं विधारयिषेत् ²धारयेत्, सर्वापायेभ्यो रक्षेदित्यर्थः। ³ननु धारयेदिति वक्तव्ये गौरवं ⁴कस्मात्? उच्यते⁴*— मनसाऽपि ⁵शरीरात्ययकारि कर्त्तुं नेच्छेदिति।

## न वृक्षमारोहेत् ॥ ३१ ॥

ऋज्वर्थम्।

## न प्रतिसायं ग्रामान्तरं व्रजेत् ॥ ३२ ॥

प्रतिसायं सायं सायं प्रतीति, अस्तमयसन्निधावि⁶त्यर्थः। ग्रामान्तरमिति विशिष्टमध्वानं न गच्छेत्(A)।

## नैकः ॥ ३३ ॥

ग्रामान्तरं व्रजेदिति।

## न वृषलैः सह ॥ ३४ ॥

⁷वृषलाः शूद्राः, तैः⁷* केवलैः सह, न संमिश्रैः (B)।

## न कास्रुत्या ग्रामं प्रविशेत् ॥ ३५ ॥

कुत्सिता स्रुतिः ⁸पन्थाः कास्रुतिः ⁹तया। ग्रामशब्दो गृह¹⁰शब्दस्यापि उपलक्षणार्थः।

तथाच मनुः—

अपद्वारेण नातीयाद् ग्रामं वा वेश्म वावृतम्(C)। इति।

A. उक्तमेतन्मनुसंहितायामपि—

नाश्नीयात् सन्धिवेलायां न गच्छेन्नापि संविशेत् ॥ इति। म० स० ४।५५।

B. अत्र तर्कालङ्कारस्तु—

"न शूद्रो वृषलो नाम वेदो हि वृष उच्यते।

यस्य विप्रस्य तेनालं स वै वृषल उच्यते ॥

इत्युक्तलक्षणैर्वृषलैः शूद्रैर्वा" इति व्याचख्यौ।

C. मनुसंहिता ४।७३। अस्य मेधातिथिकुल्लूकभट्टादिसम्मतपाठस्तु—

1. '-त्मनः शरीरं' ख। 2. 'धारयेत्' नास्ति घ। 3. 'ननु' नास्ति घ। 4. नास्ति घ। 5. 'शरीरस्यापकर्त्तुं' ख। 6. 'इत्यर्थः' नास्ति ख। 7. 'शूद्रैः' घ। 8. 'पन्थाः' नास्ति ख। 9. 'तया कास्रुत्या ग्रामं न प्रविशेत्' ख। 10. '-शब्द-' नास्ति ख।

## न चाननुचरश्चरेत् ॥ ३६ ॥

अननुचरोऽनुचरहीनः, न चरेत् न प्रविशेदित्यर्थः। नैक इति [1]सिद्धेऽपि पाद-संवाहनादिकमनुचरणं परिचर्यां करोतीति [2]सः अनुचरः परिचारक इत्यर्थः, तं विना न चरेदित्ययमेव विशेषः च-शब्दादविनीतानुचरश्च (A)।

## एतानि समावृत्तव्रतानि ॥ ३७ ॥

समावर्त्तनं कृतस्नानस्य गुरुकुलात् प्रतिनिवर्त्तनं स्वगृहागमनम् [3]उच्यते, तद् येन [4]कृतम् असौ[5] समावृत्तः। तस्य व्रतानि [6]समावृत्तव्रतानि, एतानि[7] यानि [8]अधस्तादभिहितानि। [9]नन्वेतद्वाच्यम्[*]; उपदेशादेव सिद्धेः ? [10]न; प्रायश्चित्तप्रज्ञापनार्थमिद[11]मुक्तम्। एतानि [12]तानि समावृत्तव्रतानि, येषामन्यतमस्यापि लोपे अहोरात्राभोजनं मनुना प्रायश्चित्तमुक्तम्—

वेदोदितानां नित्यानां कर्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् (B) ॥ इति।

---

अद्वारेण च नातीयाद् ग्रामं वा वेश्म वावृतम्।
रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत् ॥ इति। म० स० ४।७३।

A. अथवा तत्र ग्रामान्तरमेको न गच्छेदित्युक्तम्, अत्र तु स्वग्रामेऽपि अल्पमपि पन्थानमननुचरो न चरेदित्ययमर्थ इति च चन्द्रकान्तीये।

B. मनुसंहिता ११।२०३। "वेदविहितानां कर्मणामग्निहोत्रादीनामनुपदिष्टप्रायश्चित्तविशेषाणां च परिलोपे स्नातकव्रतानां चतुर्थाध्यायोक्तानामतिक्रमे सत्येकाहोपवासं प्रायश्चित्तं कुर्यात्" इत्यस्य भट्टकुल्लूकोक्ता व्याख्या।

सूत्रस्यास्य व्याख्यायां तर्कालङ्कारः—"समावृत्त इति कर्तरि निष्ठा। कः पुनरसौ ? विधिवत् स्नात्वा गुरुणा लब्धानुज्ञस्तद्गृहात् स्वगृहं प्रति सम्यगावृत्तः स्वगृहमागतो यः सोऽयं समावृत्तः स्नातकश्चाऽऽख्यायते, तस्यैतानि अनन्तरोक्तानि व्रतानि भवन्ति। व्रतशब्दोपादानात्—अजातलोमन्या सह अनुपहासः कर्तव्यः—इत्येवमादिको नियमः कर्तव्यतया बोध्यते। व्रतं नियम इति अनर्थान्तरम्। अनुपहासश्चोपहासाभावः, न च तस्य कर्तव्यता अस्ति तस्माद् वस्तुतः मानसो व्यापारः अजातलोमन्या सह उपहासो मया न कर्तव्यः इत्येवमादिरूपः,

---

1. 'सिद्धत्वात् इति न वाच्यमिति चेत् ? न; य.' ख। 2. 'स.' नास्ति घ। 3. 'उच्यते तद्' नास्ति घ। 4. 'स' घ। 5. नास्ति घ। 6. 'वाध-' ख। 7. नास्ति घ। 8. 'न' नास्ति घ। 9. 'सुच्यते' ख। 10. 'तानि' नास्ति घ।

स इहोपदिश्यते, तस्य च परिपालनम्। सोऽयं नियमः प्रजापतिव्रतवत् कर्तव्यतया चोद्यते— इति कल्याणोदयो भवति, कर्तव्यो हि कल्याणोदय इत्याचार्या मन्यन्ते, व्रतस्य खल्वस्याकरणे व्रतफलादेव परं पुरुषो हीयते न पुनर्निषेधातिक्रमवत् प्रत्यवायमप्यधिगच्छति, यथा खल्वादित्यव्रते सत्यपि 'नोद्यन्तमादित्यमीक्षेत' इति वचने; 'आदित्यं पश्यन्नातिक्रामति विधिम्, न हि तस्य दर्शनं प्रतिषिद्धम्, नियमस्तत्रोपदिष्टः, यस्तं नियमं करोति स खल्वेतेन सम्बध्यते', इति भगवता भाष्यकारेण शबरस्वामिना षष्ठाध्याये सिद्धान्तितम्, तद्वदत्राप्यवगन्तव्यम्। यः पुनर्नियमं कुर्वाणोऽपि व्रतं परिपालयति स तु प्रत्यवैति, सत्यसङ्कल्पः खल्वेवमसौ न स्यात्, आरब्धकाम्यकर्मा इव पुरुषस्तस्य परिसमाप्तिमकुर्वन्। तस्मान्नियमं कुर्वाणेन तस्य परिपालनमप्यवश्यं कर्तव्यम्। अपरिपालयन् व्रतमयं लोपयति इति तत्कृतमस्य प्रायश्चित्तं भवति; न पुनः कलञ्जभक्षणादिवन्निषेधातिक्रमात्। तथाच मनोः स्मरणम्—वेदोदितानामिति। स्नातकव्रतलोपे च इति पुनः कुर्वन् नित्यत्वममीषां नानुजानाति, अनित्यानाञ्चोपक्रान्तानामेव परमतिक्रमे प्रायश्चित्तमिष्यते। अत एव स्नातकव्रतोपक्रमे तेनैवोक्तम्—

स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत्।

इति। तथोपसंहारेऽपि—

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती।
स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः शुभः॥
अनेन विप्रो वृत्तेन वर्तयन् वेदशास्त्रवित्।
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते॥

इति। अत्र 'वृत्तिः शाश्वती' नित्या 'स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः' इति व्यक्तममीषामनित्यत्वम्। गौतमोऽपि स्नातकव्रतान्यभिधाय "एवमाचारो मातापितरौ पूर्वापरान् संबन्धान् दुरितेभ्यो मोक्षयिष्यन् स्नातकः शश्वद् ब्रह्मलोकान्न च्यवते" इत्युपसंहरंस्तदेवाऽऽह। तत्र च कस्यचित् स्नातकव्रतमध्यपठितस्यापि पृथक् प्रतिषेधसम्भवाद् व्रताकरणेऽपि नित्यवत् परिपालनं बोद्धव्यम्। यथा वृथावचनपरिहारो यद्यपि स्नातकव्रतेषु पठ्यते तथाऽपि मिथ्यावदनस्य पृथक् प्रतिषिद्धत्वात् स्नातकव्रतान्यनुतिष्ठताऽपि नैव मिथ्या वदितव्यम्। एवमन्यत्रापि यथासम्भवमूहनीयम्।

यदि पुनरनित्यत्वेऽप्यमीषामकरणे वाचनिकं प्रायश्चित्तमित्युच्यते तदा अजातलोम्न्या सह उपहासो मया न कर्तव्यः इत्येवमादिकस्य सङ्कल्पस्याकरण एव प्रायश्चित्तम्, न पुनरजातलोम्न्या सहोपहास एव इति स्यात्, एवमकरणेऽपि प्रायश्चित्ताभ्युपगमे कीदृशममीषामनित्यत्वम्? इत्ययं पर्यनुयोगः समाधेयः" इत्याह स्वभाष्ये।

किमेतावन्त्येव ? न,

## यानि च शिष्टा विदध्युः ॥ ३८ ॥

यानि चातोऽन्यान्यनुक्तानि अपि शिष्टा उक्तलक्षणा (A) वेदशास्त्राविरोधिना तर्कबलेनावधाय विदध्युः कुर्युः, तानि च कुर्यादिति (B)।

इति [1]भट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये[1]* तृतीयप्रपाठकस्य पञ्चमी कण्डिका।

---

A. शिष्टलक्षणमुक्तं प्राक् ३।३।२८ सूत्रभाष्ये ( पृः ५८४ )।

B. स्नातकव्रतविषये यदुक्तं गृह्यान्तरेषु तस्मात् किञ्चिदिहोपस्थाप्यते—

तत्र च छन्दोगद्राह्यायणखादिरगृह्याणां प्रायः समानानुपूर्वीकाणि सूत्राणि—वृद्धशीली स्यादत ऊर्ध्वम्। नाजातलोम्न्योपहासमिच्छेत्। नायुग्वा न रजस्वलया न समानर्ष्या। अपरया द्वारा प्रपन्नद्विःपक्वपर्युषितानि नाश्नीयात्। अन्यत्र शाकमांसयवपिष्टविकारेभ्यः। पायसाच्च। फलप्रचयनोदपानावेक्षणवर्षतिधावनोपानत्स्वयंहरणानि न कुर्यात्। नागन्धां स्रजं धारयेन्न चेद्धिरण्यस्रक्। भद्रमिति न वृथा व्याहरेत्। इति।

जैमिनिगृह्यसूत्राणि च—तस्य व्रतानि भवन्ति नाजातलोम्न्योपहासमिच्छेत्, वर्षति न धावेत, नोपानहौ स्वयं हरेत्, न फलानि स्वयं प्रचिन्वीत, न प्रतिसायं ग्रामान्तरं व्रजेत, नैको न वृषलैः सह, नोदपानमवेक्षेत, न वृक्षमारोहेत्, न संक्रममारोहेत्, नानन्तर्धायाऽऽसीत, नापरया द्वारा प्रपन्नमन्नमश्नीयात्, न शुक्तं न द्विःपक्वं न पर्युषितमन्यत्र शाकमांसयवपिष्टान्नपृथुकफाणितदधिमधुघृतेभ्यो, नानर्मणि हसेत्, न नग्नः स्नायात्, शुक्ता वाचो न भाषेत, जनवादं कलहांश्च वर्जयेत्। त्रयः स्नातका भवन्तीति ह स्माऽऽहारुणिर्गौतमः—विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति। तेषामुत्तमः श्रेष्ठस्तुल्यौ पूर्वौ। इति।

लौगाक्षिकाठकगृह्ययोः समानानुपूर्वीकाणि सूत्राणि—द्विवस्त्रोऽत ऊर्ध्वम्। तस्माच्छोभनं वासो भर्तव्यमिति श्रुतिः। वैणवदण्डधारी नित्यम्। छत्रधारी। अपन्थदायी। अदत्तहरणं प्रतिषिद्धम्। अपरया द्वारा निःसरणम्; मलवद्वाससा सह सम्भाषा। रजोवाससा सह शय्या। गुरोर्दुरुक्तवचनम्। अस्थाने स्मयनम्। सरणम्। गायनम्। नर्तनम्। तस्य वेक्षणम्। इति।

आश्वलायनगृह्यसूत्राणि च—विद्यान्तं गुरुमर्थेन निमन्त्र्य कृत्वाऽनुज्ञातस्य वा स्नानम्। तस्यैतानि व्रतानि भवन्ति। न नक्तं स्नायात्। न नग्नः स्नायात्। न नग्नः शयीत। न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात्। वर्षति न धावेत्। न वृक्षमारोहेत्। न कूपमवरोहेत्। न बाहुभ्यां नदीं तरेत्। न संशयमभ्यापद्येत। महद् वै भूतं स्नातको भवतीति विज्ञायते। इति।

मानवगृह्यसूत्राणि तु—आमन्त्र्य गुरून् गुरुवध्वश्च स्वान् गृहान् व्रजेत्। प्रतिषिद्धमपरया द्वारा निष्क्रमणं मलवद्वाससा सह संवदनं रजःसुवासिन्या सह शय्या गुरोर्दुरुक्तवचनमस्थाने

---

1. नास्ति ख।

शयनं स्मयनं सरणं स्थानं यानं गानं तस्य चेक्षणम्। पौर्णमास्याममावास्यायां वा आग्नेयेन पशुना यजेत। तस्य हविर्भक्षयित्वा यथाश्रममत ऊर्ध्वं मधुमांसे प्राश्नीयात् क्षारलवणे च। इति।

वराहगृह्यसूत्राणि च—आमन्त्र्य गुरून् गुरुवधूश्च स्वान् गृहान् व्रजेत्। प्रतिषिद्धमपरया द्वारा निःसरणं मलवद्वाससा सह संभाषा रजस्वद्वाससा सह शय्या गोगुर्वोर्दुरुक्तवचनमस्थाने शयनं स्मयनं स्नानं गानं स्मरणमिति तानि वर्जयेत्। याजनं कुसिदमुञ्छशीलमयाचितप्रतिग्रहः साधुभ्यो वा याचितमनायासेन लिप्यमानायां वा वैश्यवृत्तिः। स्वाध्यायविरोधिनोऽर्थान् विसृजेत्। इति।

बोधायनीयगृह्यपरिभाषासूत्राणि च—त्रयः स्नातका भवन्ति—वेदस्नातको व्रतस्नातको वेदव्रतस्नातकश्चेति। अथैतेषामत ऊर्ध्वं नित्यानि भवन्ति। औपासनो दण्डः कमण्डलुरुपानहौ छत्रं द्वे वाससी द्वे यज्ञोपवीते उष्णीषमजिनमन्तर्वास इति। पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि च वाग्यत उत्तरेण वा। बहिर्वाचं विसृजेत्। प्रश्नमनुवाकं वाऽधीयीत। ब्रह्मपरो ब्रह्मनित्यो देवेभ्य ऋषिभ्यः पितृभ्यस्तर्पणानि कृत्वाऽश्नीयात्। दिवा नोष्णीषी नक्तमुष्णीषी मूत्रपुरीषोत्सर्गेषु च निवीती नित्ययज्ञोपवीती। तिष्ठन्नाऽऽचामेत् प्रह्वो वा। सन्ध्ययोश्च बहिर्ग्रामादासनं वाग्यतश्च। आ जायासङ्ग्रहात् स्नातका भवन्त्यत ऊर्ध्वं गृहस्थाः। अविच्छेदाय वेदव्रतैर्व्यवहरेत् कौमारेण माहेश्वरेण धान्वन्तरेणेति। इति।

पारस्करगृह्यसूत्राणि तु—स्नातस्य यमान् वक्ष्यामः। कामादितरः। नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत्। कामं तु गीतं गायति वैव गीते वा रमत इति श्रुतेर्धर्मपरम्। क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न च धावेत्। उदपानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलङ्घनशुक्तवदनसन्ध्यादित्यप्रेक्षणभैक्षणानि न कुर्यात् न ह वै स्नात्वा भिक्षेतापह वै स्नात्वा भिक्षां जयतीति श्रुतेः। वर्षत्यप्रावृतो व्रजेदयं मे वज्र इति। अप्स्वात्मानं नावेक्षेत। अजातलोम्नीं विपुंसीं षण्ढं च नोपहसेत्। गर्भिणीं विजन्येति ब्रूयात्। सकुलमिति नकुलम्। भगालमिति कपालम्। मणिधनुरितीन्द्रधनुः। गां धयन्तीं परस्मै नाऽऽचक्षीत। उर्वराया-मनन्तर्हितायां भूमावूर्ध्वस्तिष्ठन्न मूत्रपुरीषे कुर्यात्। स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत। विकृतं वासो नाऽऽच्छादयीत। दृढव्रतो वधत्रः स्यात् सर्वत आत्मानं गोपायेत् सर्वेषां मित्रमिव शुक्रियमध्येष्यमाणः। इति।

---

# तृतीयप्रपाठकस्य षष्ठी कण्डिका

——:०:——

श्रवणाद्यः पाकयज्ञा वक्तव्याः, ते च आज्यादिहविःसाध्याः, आज्यञ्च गवामायत्तम्, गावश्च नापुष्टा आज्यदात्र्यो भवन्ति, अतः सर्वयज्ञसाधन[1]भूतानां गो[2]गवामेव [3]तावत् [4]पुष्टिमाह—

**[5]गाः प्रकाल्यमाना अनुमन्त्रयेतेमा मे विश्वतो वीर्य इति ॥१॥**

गाः प्रकर्षेण दूरं काल्यमानाः, कल गतौ, प्रातर्गृहेभ्योऽन्यत्र नीयमाना इत्यर्थः। इमा मे विश्वतो वीर्य(A) इत्यनेन मन्त्रेणानुमन्त्रयेत।

**प्रत्यागता इमा मधुमतीर्मह्यमिति ॥ २ ॥**

सायमरण्याद् गृहान् प्रत्यागताः, अधिकाराद् गाः इमा मधुमतीः(B) इत्यनेन मन्त्रेणानु[6]मन्त्रयेतेति वर्त्तते *।

A. मन्त्रस्तु—ॐ इमा मे विश्वतो वीर्यो भव इन्द्रश्च रक्षतम्।

पूषंस्त्वं पर्यावर्तयानष्टा आयन्तु नो गृहान् ॥ इति।

मन्त्रब्राह्मणम् १।८।१।

अस्य व्याख्या—हे चारक, त्वं मे इमा गाः चारणभूमिगताः, रक्षतम्। एतत्फलेन विश्वतो वीर्यः, बहुबलशाली इन्द्रः ऐश्वर्यवान् च भव। हे पूषन् देव, त्वम् एनाः पर्यावर्तय, प्रत्यावर्त्तय, यथा च इमाः अनष्टाः सत्यः नः अस्माकं गृहान् आयन्तु प्रत्यागच्छन्तु तथा कुरु। इति।

B. मन्त्रस्तु—

ॐ इमा मधुमतीर्मह्यमनष्टाः पयसा सह।

गाव आज्यस्य मातर इहेमाः सन्तु भूयसीः ॥ इति।

मन्त्रब्राह्मणम् १।८।२।

अस्य व्याख्या—हे चारक, अनष्टाः रोगशून्याः, मधुमतीः प्रशस्तदुग्धवतीः, इमाः गाः, पयसा दुग्धेन सह मह्यं प्रत्यर्पय, भूयसीः भूयस्यः, बह्वः इमाः गावः, इह गृहे आज्यस्य घृतस्य मातरः जनयित्र्यः सन्तु। इति।

---

1. '-भूतं' ख। 2. '-गवां मेषाणां चैव' ख। 3. 'तावत्' नास्ति ख। 4. 'पुष्टिकामाह' ख।
5. 'गाः प्रकाल्यमाना अनुमन्त्रयेतेमा मे विश्वतो वीर्य इति प्रत्यागता इमा मधुमतीर्मह्यमिति। एकसूत्रम्' घ।
6. '-मन्त्रयेदिति' घ।

पुष्टिकामः प्रथमजातस्य वत्सस्य प्राङ् मातुः प्रलेहनाज्जिह्वया ललाटमुल्लिह्य निगिरेद् गवां श्लेष्माऽसीति ॥ ३ ॥

पुष्टिः पोषः उपचय इत्यर्थः, अधिकाराद् गवाम्। पुष्टिं शरीरस्य संख्यायाश्च कामयते इति पुष्टिकामः वार्षिके मासचतुष्टये बाहुल्येन गवां यदा प्रसवो भवति तदा वत्सानां जायमानानां यः प्रथमं पूर्वं जायते स प्रथमजातः, तस्य प्रथम[1]'जातस्य'[1]* मातुः प्रलेहनात् प्राक् पूर्वम्; [2]लिह आस्वादने [3]यावत्स्वमाता[3]* '[4]वत्सं लेढि'[4]* आस्वादयति, तावत्, तस्य ललाटं [5]भ्रूशिरसामन्तरं जिह्वया [6]रसनया तूर्णमुल्लिह्य आस्वाद्य (A)गवां श्लेष्माऽसीति मन्त्रेण निगिरेत् [7]ग्रसेत्। सामर्थ्याद् मन्त्रो मनसा अनु[8]द्रवणीयः। सश्ले[9]ष्मत्वान्मुखस्य मन्त्रपाठानुपपत्तेः। अन्यत्राप्येवंप्रकारेषु कर्म[10]स्विदमेव वक्ति। घर्त्वां मधुक[11]मित्यन्ते आस्येऽ[12]वधायापां फेनेनेत्येतं मनसाऽनुद्रुत्य, अन्ते स्वाहाकारेण निगीर्येत्यादि। तथा व्रीहियवौ सर्पिर्मधुमिश्रावास्येऽवधायेत्यादि वा। कश्चिदत्राऽऽह—वत्सादीनां त्रयाणामपि कर्मणां वसन्तादारभ्य मासत्रयं कर्मकाल इति। [13]तन्न; [14]कुतः?

ललाटलेहनादीनि गवां कर्माणि पुष्टये।

वर्षासु त्रीणि कार्याणि [15]भूयस्तत् प्रसवा हि ताः[15]*(B) ॥ इति वचनात्।

पुष्टिकाम एव संप्रजातासु निशायां गोष्ठेऽग्निमुपसमाधाय विलयनं जुहुयात् [16]संग्रहणसंगृहाणेति ॥ ४ ॥

[17]पुष्टिकाम एवेत्युक्तार्थम्[17]*। [18]सम्प्रजातासु [19]सर्वासु गोषु प्रसूतासु, [20]निशायां रात्र्याम् अस्तमयात् सूर्यापरमात् ऊर्ध्वं प्रागरुणोदयात् यदैव [21]संपद्यते तदा,

A. मन्त्रस्तु—

ॐ गवां श्लेष्माऽसि गावो मयि श्लिष्यन्तु। इति। मन्त्रब्राह्मणम् १।८।३।

अस्य व्याख्या—हे क्षेद, त्वं गवां श्लेष्मा असि, त्वां प्रार्थये, गावः इमाः मयि मद्गृहे श्लिष्यन्तु स्वच्छन्दास्तिष्ठन्तु।

B. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये।

1. '-जातवत्सस्य' ख। 2. 'लिहं(दा)स्वादये।' घ। 3. 'यावत् तवत्सा माता' ख। 4. 'तं प्रलिहति' ख। 5. 'भ्रूशिरसामन्तं' घ। 6. 'रसनया' नास्ति ख। 7. 'ग्रसेत्' नास्ति ख। 8. '-द्रवणीयः' ख। 9. '-ष्मकत्वात्' ख। 10. '-स्वेवमेव' ख। 11. '-मित्यते' घ। 12. 'वधायापफेनेत्यतं' घ। 13. 'तदसत्' ख। 14. 'कुतः' नास्ति घ। 15. 'भूयस्तत्प्रसवो हि ताः' घ। 16. 'संग्रहणेति' घ। 17. नास्ति घ। 18. 'समानप्र-' घ। 19. 'सर्वासु' नास्ति ख। 20. 'निशायां' नास्ति घ। 21. 'संपद्येत्' घ।

गोष्ठे गवामा[1]स्थाने "[2]अग्निमुपसमाधाय (A) संग्रहणेति मन्त्रेण विलयनं जुहुयात्"* । विल[3]यनशब्देन घृतनिष्यन्दनम् [4]उच्यते "[5]कीटिकेति या लोके प्रसिद्धा । अथवा अर्द्धमथितं दधि ।

तथाचोक्तम्—

"[6]दध्यर्धमथितं सर्वं तद्वै विलयनं स्मृतम् ।

घृतनिष्यन्दनं चात्र क्षिप्रमेका [7]स्रुवाहुतिः(B) ॥ इति ।

वचनात् क्षिप्रहोमोऽयम्, एका "[8]चाऽऽहुतिः स्रुवेण च होम इति स्पष्टयति । नन्वग्निमुपसमाधायेत्यवाच्यम्, जुहोति-शब्दादेव सिद्धेः ? न, इतरथा वचनाद् गोष्ठे एव होमः स्यात् 'स्वाहेत्युदके' [ सू० ४।५।२७ ] इति यथा ।

**पुष्टिकाम एव सम्प्रजातास्वौदुम्बरेणासिना वत्समिथुनयोर्लक्षणं करोति पुंस एवाग्रेऽथ स्त्रिया भुवनमसि साहस्रमिति ॥५॥**

"[9]पुष्टिकाम एव सम्प्रजातास्वित्युक्तार्थम्"* । औदुम्बरेण ताम्रमयेण न दारवेण । [10]कुतः ? 'लोहितेन स्वधितिने'ति मन्त्रलिङ्गात्, लक्षणकरणोपदेशाच्च । न हि दारवस्य लोहितो वर्णः [11]स्यात् । [12]न च लक्षणं कर्त्तुं शक्यते । असिना क्षुरेण । अन्ये तु असिनेति वचनात् ताम्रमयं खड्गमाहुः, दारवं वा । तत्र, 'लोहितेन स्वधितिने'ति

---

A. मन्त्रस्तु—

ॐ संग्रहण संगृहाण ये जाताः पशवो मम ।

पूषैषां शर्म यच्छतु यथा जीवन्तो अप्ययात् ॥ इति ।

मन्त्रब्राह्मणम् १।८।४।

अस्य व्याख्या—हे संग्रहण अग्ने, मम गृहे ये पशवः जाताः, तान् संगृहाण रक्षार्थं स्वीकुरु । पूषा पोषको देवः, एषां पशूनां शर्म कल्याणं तथा यच्छतु ददातु यथा जीवन्तः प्राणान् धारयन्त एवैते पशवः अप्ययात् अपि अयात् समयं यापयेयुः । आयुष्मन्तो भूयासुरिति भावः । यद्वा, हे संग्रहण गवां संग्रहाभिमानि देव, पूषन् यथा येन प्रकारेण, अप्ययाद् अप्ययो नाशस्ततो विमुक्ता जीवन्तो भवन्ति । अत्र "अप्ययान्" इति 'जर्मण्'मुद्रितपुस्तकपाठः ।

B. 'तथाहुतिः' इति पाठभेदमाकलय्य तर्कालङ्कारः प्रमाणत्वेनोपस्थापयति वचनमिदं स्वभाष्ये ।

---

1. 'मा' नास्ति ख । 2. नास्ति घ । 3. '-यनं इत-' घ । 4. 'उच्यते' नास्ति घ । 5. 'कीटकेति' ख । 6. 'दधर्ध-' घ । 7. 'स्रुवा-' ख । 8. 'च' नास्ति ख । 9. नास्ति घ । 10. 'कुतः' नास्ति ख । 11. 'स्यात्' नास्ति घ । 12. 'च च' ख ।

मन्त्रलिङ्गादेव। स्वधितिशब्देन हि क्षुर उच्यते ; तथाच चूडाकरणे क्षुरस्य 'स्वधिति-शब्देन निर्देशः। "स्वधिते मैनं हिंसीरि"ति(A)। वत्सश्च वत्सिका च वत्स-मिथुनम्। [1]वत्समिथुनश्च [2]वत्समिथुनश्च वत्समिथुने, तयोर्वत्समिथुनयोः। (B)भुवनमसीति मन्त्रेण लक्षणं करोति। लक्ष्यतेऽनेनेति लक्षणं चिह्नम्। क? कर्णयोः, 'मिथुनं कर्णयोः कृतम्' इति मन्त्रलिङ्गात्। एवञ्चैकैकस्मिन् कर्णे पाठयित्वा द्वौ द्वौ कर्णौ कर्त्तव्यौ। 'मिथुनं कर्णयोः कृतमि'ति मन्त्रलिङ्गादेव। मन्त्रस्य प्रतिकर्ण-

A. अत्र तर्कालङ्कारः—"न च मन्त्रलिङ्गादेव क्षुर इति वक्तुं युक्तम्। किं कारणम्? लिङ्गमपेक्ष्य श्रुतेर्बलवत्त्वम्। न खलु लिङ्गानुरोधात् श्रुतिहन्तुं युज्यते, अत एव धान्यमसीति तण्डुलानावपति इत्यत्र मन्त्रस्यैव धान्यपदं तण्डुललक्षणा, न तु तण्डुलपदस्य धान्यपरत्वम् इति सिद्धान्तः। तद्वदत्रापि स्वधितिपदस्यैव वरं खड्गपरता स्यात् न पुनस्तत्पतिशिष्टस्यासिपदस्य स्वधितिपरते"त्याह। तदत्र क्षुरेणासिना वा लक्षणं कर्त्तव्यमित्यत्र भगवन्तोऽनुष्ठातारः प्रमाणम्।

B. अत्र चिह्नकरणे प्रथमो मन्त्रस्तु—

ॐ भुवनमसि साहस्रमिन्द्राय त्वा सृमोऽददात्।
अक्षतमरिष्टमिलान्दम् ॥ इति।

द्वितीयस्तु— ॐ गोपोषणमसि गोपोषस्येशिषे गोपोषाय त्वा।
सहस्रपोषणमसि सहस्रपोषस्येशिषे सहस्रपोषाय त्वा ॥ इति।

मन्त्रब्राह्मणमाकरः १।८।५-६। अत्र मन्त्राभ्यामिति भाष्यपाठो युक्तः, मन्त्रब्राह्मणे संख्याभेदनोपादानादिति।

अनयोर्व्याख्या—"हे स्वधिते, त्वं भुवनं भुवनोपकारकम् असि भवसि, अक्षतम् अभग्नम् अरिष्टं विघ्ननाशनम्, इलान्दम् अन्नदम्, साहस्रं सहस्रेभ्यो हितम्, त्वा त्वाम्, सृमः लोहकारः, इन्द्राय ऐश्वर्यविशिष्टाय मह्यम् अददात्। यद्वा हे वत्समिथुन, त्वं भुवनमसि पश्वादिवृद्धेस्तत्पादकं भवसि। इलान्दम् इलान्नं क्षीरादिलक्षणम्, तस्य प्रदाताऽसि। इति। हे स्वधिते, त्वं गोपोषणं गवां पुष्टिनिमित्तमसि, किञ्च गोपोषस्य गवां पुष्टेः ईशिषे ईश्वरोऽसि। अत एव त्वा गोपोषाय गवां पुष्ट्यर्थम् (गृहीतवान्)। अपि च यतस्त्वं सहस्रपोषणं बहूनां पशूनां पुष्टिनिमित्तमसि; सहस्रपोषस्य बहूनां पुष्टेः ईशिषे ईश्वरोऽसि, अतस्त्वां सहस्रपोषाय बहूनां पुष्ट्यर्थं (गृहीतवान्) इति। यद्वा हे वत्से, त्वा त्वां गोपोषाय गवां पुष्ट्यै चिह्नयुक्तं करोमीत्यर्थः।" इति।

---

1. 'स्वधितिरिति शब्देन' ख। 2. 'वत्स-' नास्ति ग। 3. 'वत्स-' नास्ति ग।

मावृत्तिः 'स्यात्, कुतः ? 'भेदे मन्त्रावृत्तिरि'ति कात्यायनवचनात्। केन क्रमेण वत्समिथुनयोर्लक्षणं करोति ? "उच्यते—पुंस एवाग्रे पुंसो वत्सस्य अग्रे प्रथमम्। अथानन्तरं स्त्रियाः वत्सिकायाः। एव"कारकरणादेकवचननिर्देशाच्च एकस्यैव तावद् वत्सस्य करोति अथ वत्सिकायाः, अथ पुनरन्यस्य वत्सस्य अथ 'पुनर्वत्सिकायाः। इत्येष क्रमः। इतरथा 'पुंसोरग्रे अथ स्त्रियोरिति पाठः स्यात्। अन्ये तु पुंस एवाग्रे अधः स्त्रिया इति 'पठन्ति, पुंसः अग्रे अग्रप्रदेशे कर्णस्य लक्षणं करोति अधःकर्णस्य स्त्रिया इति 'च व्याचक्षते। "तन्न; 'मिथुनं कर्णयोः कृतमि'ति मन्त्रलिङ्गादेव।

## कृत्वा चानुमन्त्रयेत लोहितेन स्वधितिनेति ॥ ६ ॥

एवं यथो"क्तेन प्रकारेण लक्षणं कृत्वा (A)लोहिते''न स्वधितिनेत्यनेन मन्त्रेणानुमन्त्रयेत। चशब्दाद् व्रण''लेपनञ्च कुर्यादिति। अत्रापि प्रतिकर्णमेवानुमन्त्रणे मन्त्रावृत्तिः पूर्वोक्तादेव वचनात्।

## तन्तीं प्रसार्यमाणां बद्धवत्सां चानुमन्त्रयेतेयं तन्ती गवां मातेति ॥ ७ ॥

तन्ती वत्सद्दा''मनी तामपराह्णे वत्सबन्धनार्थं प्रसार्यमाणां विह्रियमाणां बद्धवत्सां

---

A. मन्त्रस्तु—

ॐ लोहितेन स्वधितिना मिथुनं कर्णयोः कृतम्।
यावतीनां यावतीनां व ऐषमो लक्षणमकारिषम्।
भूयसीनां भूयसीनां वा उत्तरामुत्तरां समां क्रियासम्॥ इति।

मन्त्रब्राह्मणम् १।८।७।

अस्य व्याख्या—लोहितेन रक्तवर्णेन स्वधितिना क्षुरेण खड्गेन वा गवां कर्णयोर्द्वयोः, मिथुनं गोयुगयोरेकविधं चिह्नं कृतम् मया। हे गावः, ऐषमः अस्मिन् वर्षे, यावतीनां यावतीनां यावत्संख्यकानां वः युष्माकं लक्षणं चिह्नमकारिषम्, उत्तरामुत्तरां समाम् उत्तरोत्तरवर्षेष्विति यावत्, भूयसीनां भूयसीनाम् आभ्यो बहुतराणां वः युष्माकं क्रियासं लक्षणमेवमेवेति शेषः।

---

1. 'स्यात् कुतः' नास्ति ख। 2. 'उच्यते' नास्ति ख। 3. '-कारश्चाऽेक-' ख। 4. 'पुनः'-नास्ति ख। 5. 'पुंसोऽग्रे' ख। 6. 'पठन्ति' नास्ति ख। 7. 'च' नास्ति ख। 8. 'तदयुक्तम्, कुतः ?' ख। 9. '-लक्षकारिष' ख। 10. 'नेति' ख। 11. '-लेपं' ख। 12. '-मिनी' ख।

वा (A) इयं तन्तीति मन्त्रेणानुमन्त्रयेत ।

सकृत्कृते कृतो शास्त्रार्थ इति प्राप्ते केषाञ्चित् कर्मणां प्रत्यहमावृत्त्यर्थमिदमाह—

तत्रैतान्यहरहः कृत्यानि भवन्ति (B)निष्कालनप्रवेशने तन्तीविहरणमिति ॥ ८ ॥

तत्र [1]एतस्मिन् काम्यकर्मगणे । एतान्येतत्सूत्रनिर्दिष्टानि, [2]अहरहः प्रत्यहं कृत्यानि कर्त्तव्यानि* भवन्ति । कानि ? गवां निष्कालनप्रवेशने, तन्तीविहरण[3]-मिति च ।

गोयज्ञे पायसश्चरुः ॥ ९ ॥

गवां पुष्टिकामस्याग्न्यादीनां [4]यजनं गोयज्ञः, तस्मिन् गोयज्ञे । पयसि भवः पायसः । चरुः स्थालीपाकः कर्त्तव्य इति [5]वाक्यशेषः ।

अग्निं यजेत पूषणमिन्द्रमीश्वरम् ॥ १० ॥

तेन चरुणा अग्न्यादीन् [6]एतान् यजेत । विसमासकरणं निर्वापहोमयो[7]र्भिन्नता-प्रज्ञापनार्थम्(C) ।

ऋषभपूजा ॥ ११ ॥

ऋषभोऽनड्वान् तस्य "[8]शृङ्गाभ्यङ्ग"*-घण्टाभरण-गन्ध-माल्य-यवसदानादिभिः सत्कारः पूजा, कर्त्तव्येति शेषः ।

---

A. मन्त्रस्तु—

ॐ इयं तन्ती गवां माता सवत्सानां निवेशनी ।
सा नः पयस्वती दुहा उत्तरामुत्तरां समाम् ॥ इति ।

मन्त्रब्राह्मणम् १।८।८।

अस्य व्याख्या—इयं तन्ती वत्सबन्धनरज्जुः, गवां माता मातृवत् पालयित्री, किञ्च सवत्सानां वत्ससहितानां गवां निवेशनी वत्सप्रापयित्री, दोहनसमये मातृजङ्घायां वत्सस्य बन्धनात् । सा इयं तन्ती, नः अस्माकम्, उत्तरामुत्तरां समाम् उत्तरोत्तरं वर्षं प्रति पयस्वती क्रम-प्रवृद्धपयस्वद्गोबन्धनी सती दुहा कामानां प्रपूरयित्री भवतु । इति ।

B. भवन्तीत्यत्र सूत्रमेकं समाप्य 'निष्कालने'त्यादि सूत्रान्तरं कल्पयतः सामश्रमि-तर्कालङ्कारौ ।

C. अग्नेन्द्रेश्वराग्निसामान्यात् पूष्णोऽपि तण्डुलचरुरेव भवति । तथाचोक्तम्—

---

1. 'एव तस्मिन्' घ । 2. 'अहरहः कृत्यानि प्रत्यहं कर्त्तव्यानि' ख । 3. 'इति' नास्ति ख । 4. 'यज्ञो' ख । 5. 'वाक्य-' नास्ति ख । 6. 'एतान्' नास्ति घ । 7. '-र्नानात्व' ख । 8. 'शृङ्गाभ्यां गलके घ ।

काम्यप्रसङ्गात्कर्म[1]सामान्याच्च [2]ग्रन्थलाघवार्थं गोयज्ञ[3]विधानेना[4]श्वयज्ञविधिमतिदिशन्नाह —

**गोयज्ञेनैवाश्वयज्ञो व्याख्यातः ॥ १२ ॥**

[5]अश्वा हयाः तेषां[6]* पुष्टिकामस्य अग्न्यादीनामेव [7]यजनम् अश्वयज्ञः। स गोयज्ञेन व्याख्यातः।

अयमत्र विशेषः—

**यमवरुणौ देवतानामत्राधिकौ ॥ १३ ॥**

गोयज्ञनिर्दिष्टानाम् अग्न्यादीनां देवतानाम् अत्रास्मिन्नश्वयज्ञे यमवरुणावधिकौ [8]इति। तयोश्च यमः पञ्चमो वरुणः षष्ठ इति। अत्रापि पूर्ववदेव निर्वापहोमौ [8]पृथक्तया ज्ञेयौ[8]* ऋषभपूजास्थाने अश्वपूजा स्यात्।

प्रासङ्गिकमभिधाया[9]थ [10]प्रकृतमेव पुनर्गोयज्ञकर्मशेषमाह—

**गन्धैरभ्युक्षणं गवां गन्धैरभ्युक्षणं गवाम् ॥ १४ ॥**

सायमागतानां गवां गन्धैरभ्युक्षणम् अश्वयज्ञे [11]चाश्वानामभ्युक्षणम्(A)। अयञ्चाश्वयज्ञो विद्यमानाश्वस्या[12]श्वपुष्टिकामस्य च भवति [13]यस्य कस्यचिन्न भवति। सर्वेषां

यद्यप्यदन्तकः पूषा पैष्टमत्ति सदा चरुम्।
अग्नीन्द्रेश्वरसामान्यात् तण्डुलोऽत्र विधीयते ॥ इति।

A. अत्र सूत्रे अभ्यासः प्रकरणसमाप्त्यर्थं इति केचित्।

तर्कालङ्कारस्तु—"द्विर्वचनमादरार्थम्, अथवा द्विर्वचनाद् गोयज्ञ एव गवामभ्युक्षणमित्यवगम्यते। तस्मादश्वयज्ञेऽयं विशेषो नास्ति; अपि च गोयज्ञस्य कियतीमावृतं सूत्रयित्वाऽश्वयज्ञमभिधाय पश्चादपि गोयज्ञस्याऽऽवृतं सूत्रयन्नाचार्यः पूर्वसूत्रितामेव गोयज्ञस्याऽऽवृतमश्वयज्ञेऽतिदिशति न सूत्रयिष्यमाणामपि इत्यवधार्यते, अन्यथा सर्वामेव गोयज्ञस्याऽऽवृतं सूत्रयित्वा परस्तादेवाश्वयज्ञे तामतिदिशेत्। तस्मात् क्रमभेदकरणादवगच्छामः अश्वयज्ञेऽश्वानामभ्युक्षणं नास्तीति" इत्याह स्वभाष्ये। तदत्राश्वयज्ञेऽश्वानां गन्धैरभ्युक्षणं शास्त्रीयमशास्त्रीयं वेति भगवन्तोऽनूचाना निर्दिशन्तु।

1. '-सामान्यत्वाच्च' ख। 2. 'ग्रन्थ-' नास्ति ख। 3. '-विधिना' ख। 4. 'अश्वयज्ञविधिमतिदर्शयन्नाह' ख। 5. 'अश्वानां' ग। 6. 'यज्ञः' ख। 7. 'इति' नास्ति ग। 8. 'सामर्थ्याच्च' ख। 9. 'अथ' नास्ति ख। 10. 'प्राकृतमेव' ख। 11. 'च' नास्ति ग। 12 'अश्व-' नास्ति ख। 13. 'न यस्य कस्यचिदपीति' ख।

चैतेषां काम्यत्वात् पूर्वं तावत् पुरश्चरणं त्रिरात्रोपोषणं कर्त्तव्यम्। [1]तदशक्तौ नक्तत्रयमेकभक्तत्रयं वा। [2]कुतः? नित्यप्रयुक्तानान्तु प्रथमं[3]प्रयोगेष्विति वचनात्। ननु कस्मिन् काले गोयज्ञाश्वयज्ञौ कर्त्तव्यौ [4]इति? उच्यते—[5]कालान्तराविधानात् उदगयनादिकः परिभाषोक्त एवानयोः कालो [6]विज्ञेयः। अथवा गृह्यान्तरे विधानात् मार्गपाल्यां गोयज्ञः कर्त्तव्यो नीराजनेऽश्वयज्ञ इति।

तथाचोक्तम्—पारिभाषिक एव स्यात् कालो गो-वाजियज्ञयोः।

अन्यस्यानुपदेशाच्च [7]स्वस्तरारोहणस्य च॥

अथवा मार्गपाल्यह्नि कालो गोयज्ञकर्मणः।

नीराजनेऽह्नि चाश्वानामिति तन्त्रान्तरे विधिः(A)॥ इति।

---

A. कर्मप्रदीपः ३।७।७-८। अनयोः प्रकाशकारकृता व्याख्या—"गोवाजियज्ञयोस्तु कालविशेषानभिधानात् कः काल इत्यपेक्षायामाह उदगयने पूर्वपक्षे पुण्येऽहनि प्रागावर्तनादह्नः कालं विद्यादिति सामान्यपारिभाषिक एव कालो गवाश्वयज्ञयोः स्यात्, हेतुमाह—अन्यस्य कालविशेषस्यानुपदेशात्, एवंविधविषयत्वाच्च परिभाषायाः, 'तथा पश्चादग्नेः' (सू० ३।९।१२) 'तस्मिन्नहतान्यास्तरणान्यास्तीर्य' (सू० ३।९।१३) 'अनन्तरा अवरे यथाज्येष्ठम्' (सू० ३।९।१४) इति सूत्रैः स्वस्तरााद्यारोहणं यदुक्तं तस्यापि कालविशेषस्यानुपदेशात् पारिभाषिक एव कालः स्यादिति। अथवा मार्गपालीदिवसे गोयज्ञस्य कालो वाजियज्ञस्य च नीराजनादिवस इति शाखान्तरोक्तविधिर्द्रष्टव्यः। मार्गपाली हि सुखरात्रिप्रतिपत्। तथाच द्यून्तरप्रतिपद्विषये भविष्योत्तरम्—

ततोऽपराह्णसमये पूर्वस्यां दिशि भारत।

मार्गपालीं प्रबध्नीयात् तुङ्गे स्तम्भेऽथ पादपे॥

मार्गपाली कुशनिर्मिततोरणम्।

कुशकाशमयी दिव्या लम्बकैर्बहुभिर्वृता।

गावो वृषाश्च महिषा मण्डिता घौर्णिकादिभिः॥

कृते होमे द्विजेन्द्रैस्तु गृह्णीयान्मार्गपालिकां।

मार्गपालीतले चैव यान्ति रोगानजा वृषाः॥

राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः।

मार्गपालीं समुल्लङ्घ्य नीरुजः सुखिनः सदा॥

---

1. '५' नास्ति ख। 2. 'कुतः' नास्ति घ। 3. 'प्रयोगेषूपोष्य लिति वचनात्' घ। 4. 'इति' नास्ति घ। 5. 'कालान्तरादुद······' ख। 6. नास्ति घ। 7. 'स्वस्तरा-' घ।

'आश्वयुज्यामूर्द्ध्वममावास्यादीपालिकाप्रतिपदि मार्गपाली प्रसिद्धा'*। नीराजनस्य [2]च अथः कालविकल्पाः श्रयन्ते—कार्तिकशुक्लाष्टम्यां द्वादश्यां वा पूर्णमास्यां वेति। तथाच वराहमिहिरः—द्वादश्यामष्टम्यां [3]वा कार्तिक[4]शुक्लपञ्चदश्यां वा।

[5]आश्वयुजे वा कुर्याद् नीराजनसंज्ञितां [6]शान्तिम्(A) ॥ इति।

इति [7]भट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये*

तृतीयप्रपाठकस्य षष्ठी कण्डिका ॥

---

नीराजनवेलाश्वत्वारः—तथाच वराहमिहिरः—द्वादश्यामित्यादि।" इति।

अनयोः शिवरामकृता विवृतिस्तु—"गोवाजियज्ञयोरन्यस्य कालस्यानुपदेशात् पारिभाषिक एव कालः स्यात्, स्वस्तरारोहणस्यापि स एव, चकारात्। पारिभाषिकस्तु उदगयने पूर्वपक्षे इत्यादिकः। पक्षान्तरमाह अथवेति अथवा मार्गपाल्याह्नि गोयज्ञकर्मणः कालः, अपरं नीराजनेऽह्नि, अश्वानाम् अश्वयज्ञस्येत्यर्थः। इति तन्त्रान्तरे विधिः, इत्येवंप्रकारको विधिः कालविधानम्, अयं कालस्तन्त्रान्तरे उक्तो ज्ञेयः।

मार्गपालीदिनं कार्त्तिकशुक्ला प्रतिपत्। सा सुखरात्रीति लोके प्रसिद्धा। नीराजनदिनं दीपमालादिनम्, आश्विनमासान्तामावास्या कार्तिकशुक्लपञ्चदशी वा।" इति।

A. बृहत्संहिता ४३।२।

अस्य भट्टोत्पलकृता विवृतिस्तु—"कार्तिकमासशुक्लपक्षद्वादश्यां तिथावष्टम्यां वा पञ्चदश्यां पूर्णिमायाममावास्यायां वा। आश्वयुजशुक्लपक्षे एतास्वेव तिथिषु प्रोक्तासु वा नीराजन-संज्ञितां नीराजनाख्यां शान्तिं कुर्यात्।" इति।

अश्वानां नीराजनविधिश्च कालिकापुराणे—

शरत्काले महाष्टम्यां दुर्गायाः परिपूजनम्।
नीराजनं दशम्यान्तु कुर्याद् वै बलवृद्धये ॥
विधिं नीराजनस्य त्वं शृणु पार्थिवसत्तम।
कृतेन येन चाश्वानां गजानामपि चेष्टनम् ॥
आश्विने शुक्लपक्षे या तृतीया स्वातियोगिनी।
ऐशान्यां स्वपुरस्यैव गृह्णीयात् स्थानमुत्तमम् ॥

---

1. नास्ति ख। 2. 'च' नास्ति ख। 3. 'वा' नास्ति ख। 4. '-शुक्लपञ्चदश' ख। 5. 'अश्वयुजे च' ख। 6. 'शान्तिम्' नास्ति ख। 7. नास्ति ख।

नीराजनं ततः कुर्यात् संप्राप्ते दिवसेऽष्टमे ।
नीराजनस्य कालस्तु पूर्वमुक्तस्तु ते मया ॥
विधानमत्र शृणु मे कृतकृत्यो भविष्यसि ।
एकं हयं महासत्त्वं सुमनोहरमेव वा ॥
पूजयेत् सप्त दिवसान् गन्धपुष्पादिकांशुभिः ।
तृतीयादौ पूजयित्वा नयेत् तं यज्ञमण्डपम् ॥
चेष्टां निरूपयंस्तस्य जानीयाच्च शुभाशुभम् ।
परराष्ट्रविमर्दः स्यादश्वो यदि पलायते ॥
म्रियते राजपुत्रस्तु यदि चाश्रूणि मुञ्चति ।
नीयमानो न गच्छेच्चेन्महिषीमरणं तदा ॥
तथैव मुखनासाक्षिशब्दं कुर्याद्धयो यदि ।
यत्काष्ठाभिमुखः कुर्यात् तत्काष्ठायां जयेद्रिपून् ॥
उत्क्षिप्य दक्षिणाग्रन्तु पदमश्वो भवेत् पुरा ।
तदा जयेत् समस्तांश्च नृपतिर्विजयेद्रिपून् ॥
प्रातर्नीराजनं कुर्याद् दशम्यां नृपसत्तम ।
तदप्राप्तौ तु द्वादश्यां तस्यामेव समाचरेत् ॥
कार्तिके पञ्चदश्यां वा तत्राभावे तु पार्थिवः ।
ऐशान्यां स्वपुरस्योच्चैर्हस्तमानेन षोडश ॥
दशहस्तन्तु विपुलं कुर्याद् वै तत्र तोरणम् ।
द्वात्रिंशद्धस्तमात्रन्तु हस्तषोडशविस्तृतम् ॥
यज्ञार्थं मण्डपं कुर्यान्मध्ये वेदिं विनिर्णयेत् ।
वेद्याश्चोत्तरतश्चान्यवेदिं कुर्यादनुत्तमाम् ॥
यत्र संस्थाप्य चाश्वश्च पूजितव्यः पुरोहितैः ।
सर्जोदुम्बरशाखानामर्जुनस्याथवा नृपः ॥
मत्स्यशङ्खाङ्कितैश्चक्रैर्वस्त्रैश्चापि विभूषयेत् ।
तोरणं कनकै रत्नैस्तथा नानाविधैर्मतैः ।
भल्लातकं शालिकुष्ठं सिद्धार्थं सैन्धवस्य तु ।
कण्ठदेशे निबध्नीयात् पुष्टिशान्त्यर्थमेव च ॥ इति ८६ अध्याये ॥

गवादीनां पुष्टिकामनाविषयमधिकृत्य यदुक्तं गृह्यान्तरेषु तेभ्यो यथासम्भवमुपादीयते—तत्र छन्दोगखादिरद्राह्यायणगृह्याणां प्रायः समानुपूर्वीकाणि सूत्राणि—पुष्टिकामो गाः प्रकालयेतेमा म इति । प्रत्यागता इमा मधुमतीति । पुष्टिकाम एव प्रथमजातस्य वत्सस्य प्राङ्मातुः प्रलेहना-

ककाटमुद्भिद्य निगिरेद् गवामिति। संप्रजातासु गोष्ठे निशायां विलयनं जुहुयात् संग्रहणेति। अथापरं वत्समिथुनयोः कर्णे लक्षणं कुर्याद् भुवनमिति। पुंसोऽग्रे। लोहितेनेत्यनुमन्त्रयेत। तन्तीं प्रसारितामिमं तन्तीति। इति।

अथैषां प्रयोगः। तत्र गोपुष्टिप्रवृद्धकाम्यकर्माण्युच्यन्ते —तत्राऽऽदावनुमन्त्रणम्। गवानुमन्त्रणार्थं पूर्वदिने नान्दीमुखश्राद्धं प्रथमारम्भे कुर्यात्, त्रिरात्रोपवासश्च; प्रातर्गवां पुष्ट्यर्थमरण्यं नीयमानानां गवामनुमन्त्रणं करिष्ये इति संकल्प्य गृहादरण्यं नीयमाना गा इमा मे विश्वत इति मन्त्रेणानुमन्त्रयते। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्द इन्द्रो देवता गवानुमन्त्रणे विनियोगः। इमा मे इति मन्त्रः। सायमरण्याद् गृहं प्रत्यागता गा इमा मे मधुमतीरिति मन्त्रेणानुमन्त्रयते। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्द इन्द्रो देवता प्रत्यागतगवानुमन्त्रणे विनियोगः। ततो मन्त्रः। एतदुभयं प्रत्यहं कार्यम्। इति गवानुमन्त्रणप्रयोगः।

अथ गवां प्रसवसमये पुष्टिप्रवृद्धश्लेष्मभक्षणप्रयोग उच्यते—गवां प्रसवसमये प्रथमजातस्य वत्सस्य माता गौर्जिह्वया आस्वादं यावत्कालं न करोति ततः पूर्वमेव यजमानो वत्सस्य ललाटं स्वजिह्वया तूष्णीमास्वाद्य मनसा शीघ्रं मन्त्रमुच्चार्य श्लेष्म भक्षयति। गवां पुष्ट्यर्थं ककाटोल्लेहननिगरणकर्मणी करिष्ये इति संकल्पयेत्। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः श्लेष्मा देवता श्लेष्मभक्षणे विनियोगः। गवामिति मन्त्रः। वसन्तादारभ्य मासत्रयेऽस्यानुष्ठानमिति केचित्। वर्षास्वित्यन्ये। तदुभयमेव न साधु, प्रसवकालस्यानियतत्वात्। इति।

अथ गोपुष्ट्यर्थं विलयनहोमः, तदङ्गं नान्दीश्राद्धम्। सर्वासु गोषु प्रसूतासु निशायां गोष्ठेऽग्निं प्रतिष्ठाप्य क्षिप्रहोमविधिना संग्रहणसंगृहाणेतिमन्त्रेण घृतविलयनेनैकामाहुतिं जुहुयात्। विलयनशब्देन घृतनिस्यन्दनमर्धमथितं दधि वोच्यते, अनयोरन्यतरेण होमः। नात्र विलयनसंस्कारो न परिस्तरणब्रह्मोपवेशनादिकम्। काम्यत्वाद् भूमिजपमात्रम्। प्रपदविरूपाक्षौ न स्तः, क्षिप्रहोमे तयोर्निषेधात्। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः पूषा देवता विलयनहोमे विनियोगः। मन्त्रपाठः। इदं पूष्णे न मम। इति।

अथ वत्समिथुनयोर्लक्षणं कुर्यात्—गवां पुष्ट्यर्थम्। अत्र त्रिरात्रमुपवासस्तदङ्गं नान्दीश्राद्धम्। वत्समिथुनयोः कर्णयोर्लक्षणमहं करिष्ये। ततः प्रसूतासु गोषु ताम्रमयेणासिना वत्सयोश्चिह्नं कुर्याद् भुवनमसीति मन्त्रेण। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्गायत्रीच्छन्दः स्वधितिर्देवता वत्सस्य कर्णयोश्चिह्नकरणे विनियोगः। ततो मन्त्रः। ततो गोपोषणमसीति मन्त्रः। अस्य मन्त्रस्य देवताद्यः पूर्ववत्। एकः कर्णो यथा द्वेधा दृश्यते तथा छेदनं द्वयोः कर्णयोः कुर्यात्। कर्णभेदान्मन्त्रावृत्तिः। प्रथमं दक्षिणकर्णे पश्चाद् वामे। प्रथमं पुंस एव पश्चात् स्त्रियश्चिह्नकरणम्। पुंसोऽग्रभागे स्त्रियोऽधस्ताच्चिह्नकरणमिति व्याचक्षाणो 'मिथुनं कर्णयोरि'ति मन्त्रलिङ्गं पीडयेदतस्तदुपेक्ष्यम्। असिना स्वधितिना क्षुरेण चिह्नं कुर्यात् लोहितेन स्वधितिनेति मन्त्रलिङ्गादिति भट्टनारायणोपाध्यायाः। असिना वत्समिथुनयोर्लक्षणं करोती-

त्यत्रासिपदश्रुतेर्लिङ्गाद् बलीयस्त्वादसिपदं रुक्मा खड्गबोधकमिति केचित्। ततो लोहितेनेति मन्त्रेणानुमन्त्रयते। अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिपादनुष्टुप् छन्दो गौर्देवता कृतलक्षणस्यानुमन्त्रणे विनियोगः। ततो मन्त्रपाठः। अत्रापि कर्मलक्षणभेदादनुमन्त्रणभेदः। तत इयं तन्ती गवां मातेति मन्त्रेण वत्सबन्धनरज्जुं प्रसार्यमाणामनुमन्त्र्य पुनस्तेनैव मन्त्रेण बद्धवत्सरज्जुमप्यनुमन्त्रयते।

अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दो वत्सो देवता प्रसार्यमाणरज्ज्वभिमन्त्रणे विनियोगः। ततो मन्त्रः। इदञ्च कृत्यं प्रत्यहं कार्यमिति।

अथ गोयज्ञप्रयोगः—स च गवां पुष्ट्यर्थः। तस्य कालः परिभाषोक्त उदगयनादिः, तदहर्नान्दीश्राद्धं कृत्वा, गवां पुष्ट्यर्थं गोयज्ञस्थालीपाकं करिष्ये इति संकल्प्य सर्वं पार्वणस्थालीपाकवत् कुर्यात्। निर्वापकाले विशेषः। अग्नये त्वा जुष्टं निर्वपामि, पूष्णे त्वा जुष्टं निर्वपामि, इन्द्राय त्वा जुष्टं निर्वपामि, ईश्वराय त्वा जुष्टं निर्वपामि। इति। पयसि चरुश्रपणम्। अस्य कर्मणः काम्यत्वाद् वक्ष्यमाणप्रकारेण भूमिजपपरिसमूहनविरूपाक्षप्रपदजपं कुर्यात्। आज्यभागान्ते चरुहोमः। अग्नये स्वाहा, इदमग्नये न मम। एवं पूष्णे, इन्द्राय, ईश्वराय। वृषभस्य शृङ्गौ तैलेनाभ्यज्य गले यथासम्भवमाभरणं बद्ध्वा घासादिकञ्च दत्त्वा पूजनं कुर्यात्। सायमागतानां गवां गन्धैरभ्युक्षणम्। ब्राह्मणे पूर्णपात्रदानम्। वामदेव्यगानं ब्राह्मणभोजनञ्च कुर्यात्। इति।

अथाश्वयज्ञप्रयोग उच्यते—स गोयज्ञवत्। गोयज्ञोऽश्वयज्ञश्च विद्यमानानां गवामश्वानाञ्च पुष्ट्यर्थः, 'पुष्टिकामः' इति सूत्रोक्तेः। अविद्यमानासु गोषु असत्स्वश्वेषु च नायं गोयज्ञोऽश्वयज्ञश्च। तथाच विद्यमानानामश्वानां पुष्ट्यर्थमश्वयज्ञमहं करिष्ये इति संकल्प्य पूर्ववत् पायसचरुं कुर्यात्। निर्वापकाले विशेषः, गोयज्ञवदग्निपूषेन्द्रेश्वरेभ्यो हविर्निरूप्य यमवरुणयोर्निर्वापः। आज्यभागान्ते गोयज्ञवदग्न्यादिभ्यश्चतसृभ्यो देवताभ्यश्चरुं हुत्वा यमाय वरुणाय च जुहुयादिति। अनयोः काम्यत्वात् काम्येषु वक्ष्यमाणत्रिरात्रोपोषणमशक्तौ त्रिरात्रमेकभक्तं वा। अन्ये तु मार्गपालीदिने गोयज्ञो नीराजनदिनेऽश्वयज्ञ इति कर्मप्रदीपवचनानुसारेणाऽऽहुः। इति।

———

# तृतीयप्रपाठकस्य सप्तमी कण्डिका

—:०:—

## अथातः श्रवणाकर्म ॥ १ ॥

अथशब्दः पाक[1]यज्ञोपसंग्रहार्थः। अतःशब्दो हेत्वर्थः। यस्मादाहिताग्निरेतान् श्रवणादीन् पाकयज्ञानकुर्वन् देवपितृमनुष्याणामाशामुपहृत्य [2]सद्य एवा[3]पाङ्क्तयत्व-मुपैति, अत [4]एतत् कुर्यादेव।

तथाचोक्तम्—यस्त्वाधायाग्नि[5]माशास्य देवादीनैभिरिष्टवान्।
निराकर्ताऽमरादीनां स विज्ञेयो निराकृतः(A) ॥ इति।

श्रावणस्य पौर्णमासी श्रवणा, तस्यां कर्म [6]श्रवणाकर्म[6]*, तदिदानीं पूर्वं तावद् वर्तिष्यत इति [7]वाक्यशेषः।

## पौर्णमास्यां कृत्यम् ॥ २ ॥

कर्तव्यम्। पूर्वसूत्रादेवायमर्थः सिद्ध इति चेन्न, प्रकरणोपन्यासार्थं पूर्वसूत्रम्; यदित ऊर्द्ध्वं वक्ष्यामस्तच्छ्रवणाकर्मेति। इदन्तु पौर्णमास्याः प्राधान्यद्योतनार्थम्। कथम्? पौर्णमास्येवात्र प्रधाना न नक्षत्रम् इति।

कथं कर्त्तव्यमित्यत आह—

## पुरस्ताच्छालाया उपलिप्य शालाग्नेरग्निं प्रणयन्ति ॥ ३ ॥

"पुरस्तादिति[8]"* अग्रतः [9]न दिशि, अग्निशालायाः; गोमयादिनोपलिप्य तत्राग्निं प्रणयन्ति। बहुवचनादनियतः प्रणयनकर्त्ता। शालाग्नेरिति षष्ठीनिर्देशादेकदेशं प्रणयन्ति न सर्वम् [10]इति।

A. कर्मप्रदीपः ३।७।१७।

1. '-यज्ञप्रकरणोपन्यासार्थः' ख। 2. 'च सद्य' ख। 3. '-पङ्क्तित्व-' ख। 4. 'एव' ख। 5. '-मालस्याद्' ग। 6. नास्ति ख। 7. 'वाक्य-' नास्ति ग। 8. नास्ति ग। 9. 'न दिशि' नास्ति ग। 10. 'इति' नास्ति ग।

## अभितश्चत्वार्युपलिम्पति ॥ ४ ॥

प्रकृतत्वात् [1]प्रणीतस्याग्ने[2]रभितः[2]* [3]सर्वतः, चत्वारि स्थानान्युपलिम्पति । किं विदिक्षु ? न—

## प्रतिदिशम् ॥ ५ ॥

दिशं दिशं प्रति प्रतिदिशम् ।

कियत्यन्तरे ?

## साधिके प्रक्रमे ॥ ६ ॥

साधिके [4]समधिके स्तोकेनाधिके [5]इत्यर्थः । [6]प्रक्रमश्चात्र त्रिपदः[6]* ।

[7]तथाचोक्तम्[7]*—संसक्तपदविन्यासस्त्रिपदः प्रक्रमः स्मृतः ।

[8]स्मार्त्ते कर्मणि सर्वत्र श्रौते त्वध्वर्यु चोदितः(A) ॥ इति[8]* ।

## अग्नौ कपालमाधाय सक्तु संगृहीतं यवमुष्टिं भृज्जत्यनुपदहन् ॥ ७ ॥

प्रकृतेऽग्नौ [9]कपालं(B) कर्पर[10]माधायाधिश्रित्य[10]*, [11]सक्तू संगृहीतं यवमुष्टिं भृज्जति, कथं भृज्जति[11]* ? [12]अनुपदहन्[12]* अदहन् ।

## पश्चादग्नेरुलूखलं दृंहयित्वा वहन्त्युद्वेचम् ॥ ८ ॥

प्रकृतस्याग्नेः पश्चात् [13]उलूखलं दृंहयित्वा[13]* [14]दृढीकृत्य[14]* निश्चलं कृत्वेत्यर्थः, तान् भृष्टान् [15]यवान् सक्तुनिष्पत्तयेऽवहन्ति[15]* मुषला[16]वघातैः श्लक्ष्णीकरोति । [17]कथमवहन्ति[17]* ? उद्वेचं कुर्वन्निति शेषः । उद्वेचः स्थूलसूक्ष्मयोर्नानाकरणम् । [18]उद्विच्योद्विच्य स्थूलानुद्धहन्तीत्यर्थः[18]* ।

---

A. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये ।

B. कपालन्तु—कपालं मृन्मयं पात्रं चक्राघटितमुच्यते ।

आसुरं चक्रघटितं दैवे पैत्र्ये च वर्जयेत् ॥

इत्युक्तलक्षणमिति चान्द्रीये भाष्ये ।

---

1. 'चतिप्रणीतस्य' ख । 2. '-राच्छितस्य' ख । 3. 'इतश्चेतश्च' ख । 4. 'समधिके' नास्ति च । 5. 'इत्यर्थः' नास्ति च । 6. नास्ति च । 7. नास्ति च । 8. नास्ति च । 9. 'कपालं' नास्ति च । 10. '-मधिश्रित्य' च । 11. नास्ति च । 12. नास्ति ख । 13. नास्ति च । 14. 'दृढं' ख । 15. 'यवानवहन्ति' च । 16. 'मव-' नास्ति च । 17. नास्ति ख । 18. नास्ति च ।

**सुकृतान् सक्तून् कृत्वा चमस ओप्य शूर्पेणापिधाय निदधाति ॥ ९ ॥**

सुकृतान् [1]सक्तून् श्लक्ष्णान् [2]कृत्वा चमसे वानस्पत्ये पात्रविशेषे ओप्य प्रक्षिप्य । [3]शूर्पेण(A) अपिधाय स्थगित्वा निदधाति स्थापयति । क ? अन्तर्गृहे । [4]कुतः ? 'अस्तमिते चमसदर्व्यावादाये'ति [ सू० ३।७।११ ] [5]वचनात् ।

**दक्षिणपश्चिमे अन्तरेण सञ्चरः ॥ १० ॥**

दक्षिणपश्चिमे ये उपलिप्ते ते अन्तरेण यः प्रदेशः, तेन सञ्चरः कार्यार्थं गमना[6]गमने ।

**अस्तमिते चमसदर्व्यावादाय शूर्पं चातिप्रणीतस्यार्धं व्रजति ॥ ११ ॥**

अस्तमिते [7]रवौ होमात् प्राक् चमसदर्व्यौ शूर्पञ्च [8]आदाय गृहीत्वा [9]अतिप्रणीतस्य(B) अर्धं समीपं व्रजति [10]सञ्चरेण गच्छति[10]* । अर्धशब्दः [11]समीपवाची ।

गत्वा च—

**शूर्पे सक्तूनावपति चमसे चोदकमादत्ते ॥ १२ ॥**

ऋज्वर्थम् (C) ।

---

A. शूर्पलक्षणमुक्तं प्राक् ( पृ २०२ ) पादटीकायाम् ।

B. "अतिरुपसर्गः स खल्वयं प्रणीत एवाग्निरतिप्रणीत इति भण्यते । तन्त्रान्तरप्रसिद्धो वा, एवं हि तन्त्रान्तरकाराः स्मरन्ति 'अग्निमुपसमाधाय तस्यैकमुल्मुकं प्राग् दक्षिणाप्रणयेत्—

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात् प्रणुदात्यस्मात् ॥

इति सोऽग्निरतिप्रणीतो भवति' भणितिरियं चान्द्रीये भाष्ये । अतिप्रणीतस्येति नित्याग्नितः पृथक् कृत्वा अतिरिक्तरूपेण स्थापितस्याभिनवस्याग्नेरिति प्रकृतोऽर्थः ।

C. चमसे रक्षितान् तान् सक्तून् शूर्पे आवपति, निदधाति । शून्ये च तस्मिन् चमसे उदकम् आदत्ते गृह्णीयादित्यर्थः ।

---

1. 'सक्तून्' नास्ति ख । 2. 'कृत्वा' नास्ति ख । 3. 'शूर्पेण' नास्ति ख । 4. 'कुतः' नास्ति ख । 5. 'वचनसामर्थ्यात्' ख । 6. '-गमनी' ख । 7. 'सवितरि' ख । 8. 'आदाय' नास्ति ख । 9. 'अतिप्रणीतस्य' नास्ति ख । 10. नास्ति ख । 11. 'समीपवचनः' ख ।

सक्तून् संगृहीतान् दर्व्यां सक्तून् कृत्वा पूर्वे उपलिप्त उदकं निनीय बलिं निवपति यः प्राच्यां दिशि सर्पराज एष ते बलिरिति ॥ १३ ॥

[1]'सञ्चरेण प्रदक्षिणं गत्वा'[1]* प्राङ्मुख उपविश्य [2]'पूर्वे पूर्वस्यां दिश्युपलिप्ते प्रकृताच्चमसा[3]'दुदकं [4]'पाणिना निनीय'[4]* निक्षिप्य [5]'दर्व्यां सक्तून् संगृहीतान् सक्तून् कृत्वा'[5]* (A)यः [6]'प्राच्यां दिशीति अनेन मन्त्रेण'[6]* [7]'दर्व्या बलिं निवपति [8]'निधापयति।

उपनिनयत्यपां शेषं यथा बलिं न प्रवक्ष्यतीति ॥ १४ ॥

उप समीपे [9]'निनयति निक्षिपति। [10]अपाम् उदकस्य शेषमु[11]'द्धिरितम्। [12]'कथं निनयति? यथा येन प्रकारेण बलिं निनयनोदकेन [13]'न प्रवक्ष्यति नापनयति [14]'इत्येवम्। [15]'वक्ष्यतीति गतिकर्मा, कुतः? च्योदति, सखिति, वक्ष्यतीति पाठात्[15]*।

सव्यं बाहुमन्वावृत्य चमसदर्व्यावभ्युक्ष्य प्रताप्यैवं दक्षिणैवं प्रतीच्येवमुदीची यथालिङ्गमव्यावर्तमानः ॥ १५ ॥

[16]'सव्यं बाहुमनु, यतः सव्यो बाहुस्तं पार्श्वमनु आवृत्य परिवृत्य[16]* [17]'ततस्य एवाप्रदक्षिणं परिवृत्येत्यर्थः[17]*। अग्निमभिमुखो भूत्वा, सह निर्देशाच्चमसदर्व्यौ तन्त्रेणैवाभ्युक्ष्य प्रकृतेऽग्नौ तन्त्रेणैव[18] प्रताप्य, एवमनेन पूर्वोक्तप्रकारेण दक्षिणा दक्षिणस्यां

---

A. मन्त्रस्तु—

ॐ यः प्राच्यां दिशि सर्पराज एष ते बलिः॥ इति।

मन्त्रब्राह्मणम् २।१।१।

अस्य व्याख्या—प्राच्यां पूर्वस्यां दिशि यः सर्पराजः सर्पश्रेष्ठः वर्तसे तस्य ते एष मदत्तो बलिः, महणीयो भवतु। इति।

---

1. 'प्रदक्षिणाचारत्वादुत्तरेणाग्निं गत्वा' ख। 2. 'पूर्वे' नास्ति घ। 3. '-दप:' घ। 4. नास्ति घ। 5. नास्ति घ। 6. 'प्राच्यामिति मन्त्रेण' घ। 7. 'दर्व्या' नास्ति ख। 8. 'निधापयति' नास्ति घ। 9. 'निनयति' नास्ति घ। 10. 'अपाम्' नास्ति घ। 11 'उद्धिरितं' नास्ति घ। 12. 'कथं निनयति' नास्ति घ। 13. 'न प्रवक्ष्यति' नास्ति घ। 14. 'इत्येवम्' नास्ति घ। 15. नास्ति घ। 16. नास्ति घ। 17. 'सव्ये पार्श्वे परिवृत्य' घ। 18. 'एव' नास्ति घ।

दिशि, (A)'यो दक्षिणस्यामितिमन्त्रेण'[1]* बलिं निर्वपतीति [2]वर्त्तते। एवं प्रतीची प्रतीच्यां [3]दिशि, (B)यः प्रतीच्यामिति मन्त्रेण। एवमुदीची, उदीच्यां दिशि, (C)य उदीच्यामिति [4]मन्त्रेण। यथालिङ्गम् [5]इति यो यल्लिङ्गो मन्त्रः [6]स तस्यामेव दिशि नियोज्यः। तदभिमुख एव [7]यस्यां दिशि बलिनिवापः [8]स्यादिति। [9]तथाचोक्तम्[9]*—

यस्यां दिशि बलिं दद्यात् तामेवाभिमुखो दिशम्।
श्रवणाकर्मणि भवेद् न्यञ्चक[10]र्म न सर्वदा ॥(D) इति[10]*।

अव्यावर्तमानः [11]व्यावर्तनमकुर्वन् सव्यं बाहुमन्वावृत्येति यदुक्तं [12]व्यावर्तनं तद-कुर्वन् दक्षिणादि बलित्रयं [13]निवपतीति [14]एवं व्यावर्तनप्रतिषेधादेवैतेषु चमसदर्व्योः[14]* [15]प्रोक्षणप्रतापनप्रतिषेधोऽवगम्यते तदर्थत्वाद् व्यावर्तनस्य, अन्ये त्वन्यथा व्याचक्षते, सव्यं बाहुमन्वावृत्य प्रादक्षिण्येनाग्निं गत्वा, चमसदर्व्योः प्रोक्षणादि समानम् ; वर्तमान इति, अग्नेः प्रादक्षिण्यमकुर्वन् दक्षिणादि बलित्रयं निर्वपेदिति, व्यावर्तमानप्रतिषेधाच् चमसदर्व्योः प्रोक्षणं प्रतापनं[15]* तच्चतुर्ष्वपि बलिषु कुर्यादेवेति [16]इयं च व्याख्या प्रायो नातीव युक्ता, कुतः[16]*? प्रदक्षिणाचार[17]निषेधात्। [18]तस्मादन्यत्रापि यत्रा-वर्तनशब्दस्तत्र तत्स्थानस्यैव परिवर्तनं दर्शयति ; यथा अपपर्यावृत्ते अपुरोच्छ्वासादभि-पर्यावर्तमानो जपेदिति[18]* अथैनं प्रदक्षिणमावर्तयतीति[19] [सू० २।१०।२३]। प्रदक्षिण-मावृत्योपयातीति च। [20]तस्मात् पूर्वव्याख्यानमेव युक्ततरं मन्यामहे[20]*।

A. मन्त्रस्तु—

यो दक्षिणस्यां दिशि सर्पराज एष ते बलिः।
मन्त्रब्राह्मणम् २।१।१२।

B. मन्त्रस्तु—

यः प्रतीच्यां दिशि सर्पराज एष ते बलिः।
मन्त्रब्राह्मणम् २।१।१२।

C. मन्त्रस्तु—

य उदीच्यां दिशि सर्पराज एष ते बलिः।
मन्त्रब्राह्मणम् २।१।१४।

एतेषां व्याख्या तु पूर्वमन्त्रवत् केवलं दिक्षु विशेष इति।

D. कर्मप्रदीपः ३।९।१३।

1. नास्ति ख। 2. वर्तते' नास्ति घ। 3. 'दिशि' नास्ति ख। 4. 'मन्त्रेण' नास्ति ख। 5. 'इति' नास्ति घ। 6. 'स' नास्ति ख। 7. 'यस्यां दिशि' नास्ति घ। 8. 'स्यादिति' नास्ति घ। 9. नास्ति घ। 10. '-र्मणि सर्वतः' घ। 11. 'व्यावर्तनमकुर्वन्' नास्ति घ। 12. 'व्यावर्तनं' नास्ति ख। 13. 'निवपेत्' घ। 14. नास्ति घ। 15. 'प्रोक्षणं प्रतापन' घ। 16. 'तन्न' ख। 17. '-विरोधात्'। 18. नास्ति घ। 19. 'इति' नास्ति ख। 20. नास्ति घ।

## शूर्पेण शेषमग्नावोप्यानतिप्रणीतस्यार्धं व्रजति ॥ १६ ॥

बलिशेषं [1]शूर्पेणाग्नौ प्रक्षिप्य। प्रतिपत्तिकर्मत्वात् तूष्णीं प्रक्षेपः। [2]न अतिप्रणीतः[2]* अनतिप्रणीतः (A), तस्यार्धं समीपं [3]व्रजति गच्छति।

गत्वा च—

## पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्य नमः पृथिव्या इत्येतं मन्त्रं जपति ॥ १७ ॥

प्रकृतत्वात् शालाग्नेः पश्चात् [4]पाणी हस्तौ [5]भूमौ पृथिव्यां प्रतिष्ठाप्य। कथम्?[5]* न्यञ्चौ अधोऽग्रौ दक्षिणं वामतो बाह्यमित्यनेन [6]पूर्वोक्तेन प्रकारेण(B)। [7]नमः पृथिव्या(C) इति जपति। ननु नमः पृथिव्या इति जपतीत्येतावतैव सिद्धत्वात् एतं मन्त्रमित्यवाच्यम्, न; कुतः?[7]* [8]अन्यकर्तृपक्षे ऊहप्रतिषेधार्थमेतं [9]मन्त्रमित्युक्तम्। [10]जुहुयाद् वा हावयेद्

A. प्रणीतम् इति भावे निष्ठा, प्रणीतं प्रणयनमतिक्रान्तोऽतिप्रणीतः, तथाविधो न भवतीत्यनतिप्रणीतः, प्रकृतोऽग्निर्भण्यते। प्रकृतस्याग्नेः परिग्रहार्थमनतिप्रणीतस्येत्युक्तमित्यर्थः।

B. द्रष्टव्यं १।३।१ सूत्रभाष्ये ( पृ० ४९ )।

C. मन्त्रस्तु—

ॐ नमः पृथिव्यै दंष्ट्राय विश्वभृन्मा ते अन्ते रिषाम।
संहतं मा विवधीर्विहतं माऽभिसंवधीः॥ इति।

मन्त्रब्राह्मणम् २।१।९।

अस्य सायणाचार्यकृता व्याख्या—हे अग्ने, त्वं विश्वभृत् पाकप्रकाशादिदानेन विश्वस्य धारकोऽसि, तस्मै पृथिव्यै दंष्ट्राय, षष्ठ्यर्थे चतुर्थी, पृथिव्या दंष्ट्रभूताय नमः, ते तवान्ते समीपे वर्तमाना वयं मा रिषाम समृद्धा भवामेत्यर्थः। त्वञ्च संहतं पुत्रधनादिसञ्चयं मा विवधीः मा हिंसीः, वियुक्तं मा कुर्वित्यर्थः। तथा विहितं बलीरहितकं मा अभिसंवधीः अभिमुखेन मा संहतं कुरु। इति। सामश्रमी तु पृथिव्यै देव्यै नमः नमस्कुर्मः, हे विश्वभृत् सर्वेषां धारयित्रि देवि, कालस्य दंष्ट्राय दंष्ट्राया अन्ते समीपे स्थिता अपि वयं वसन्ते तव स्वांशाः अतः मा रिषाम विनश्येम। इतश्च प्रार्थ्यते संहतं पञ्चतत्त्वसमष्टीभूतं सजीवमस्मद्देहं मा वधीः नाकाले विनाशयेः। विहतं वियुक्तं च प्रकृत्या जीवं तत्र पुनर्मा अभिसंवधीः, अभिसम्बद्धं मा कार्षीरिति।

1. 'शूर्पेण' नास्ति घ। 2. नास्ति ख। 3. 'व्रजति' नास्ति घ। 4. 'पाणी' नास्ति घ। 5. नास्ति घ। 6. 'पूर्वोक्तेन' नास्ति घ। 7. नास्ति घ। 8. 'अन्य' क-ख। 9. 'तन्मन्त्रमित्युक्तं' ख। 10. 'जुहुयाद् वा' नास्ति घ।

वे'ति (A)वचनात्। '[1]अन्यस्य कर्मणि प्राप्तिरस्ति तस्माद्'[1]* "[2]अन्योऽप्येतत्"[2]* कर्म कुर्वन् एतं मन्त्रमेवम्भूतम् "[3]एव जपेत्, न तूहं कुर्यादिति।

## प्रदोषे पायसश्चरुः ॥ १८ ॥

रात्र्याः प्रथमो यामः प्रदोषस्तस्मिन्, पयसि भवः पायसः, चरुः स्थालीपाकः, कर्तव्य इति शेषः। एवं च सायं होमादिबलिहरणान्ते नित्यकर्मणि कृते चरुः स्यात्। '[4]कुतः? "[5]तस्य कालात्यये (B)प्रायश्चित्तोपदेशात्"[5]*, प्रदोषशब्दस्यैवमर्थत्वात् "[6]च।

## तस्य जुहुयात् श्रवणाय विष्णवेऽग्नये प्रजापतये विश्वेभ्यो देवेभ्यः स्वाहेति ॥ १९ ॥

तस्य पायसस्य श्रवणादिभ्यः '[7]पञ्चदेवताभ्यो जुहुयात्। "[8]श्रवणा नक्षत्रविशेषः प्रसिद्धः। विसमासकरणं निर्वापहोमयोः पृथक् प्रदर्शनार्थम्। 'मन्त्रान्ते स्वाहाकारः' [ सू० १।९।२१] इति वचनात् स्वाहाकारः प्रत्येकमभिसम्बध्यते, श्रवणाय स्वाहेत्यादि। अत्र कश्चिदेकामाहुति"[9]मेकञ्च निर्वापमाह। तत्र '"[10]युक्तम्, कुतः? प्रतिदैवतं चतुर्थीनिर्देशात्। ''[11]यद्येकाहुतिः स्यात् तथा सति श्रवणविष्णवग्निप्रजापतिविश्वेभ्यो देवेभ्यः स्वाहेति समासपाठः स्यात्, तस्मान्नायमाहुतिपक्षो घटते। तथाचोक्तम्—'चरुः समशनीयो य' इत्यादि(C)। तदेतत् पुरस्तात् स्पष्टीकृतम् 'अमुष्मै त्वा जुष्टं निर्वपामी'त्येतस्मिन्(D) सूत्रे''[11]*।

## स्थालीपाकावृताऽन्यत् ॥ २० ॥

यदन्यत् कर्मशेषं तत् स्थालीपाक'[12]धर्मेण कुर्यादिति '[13]शेषः। 'एषोऽत ऊर्ध्वमि'ति(E) परिभाषा'[14]प्राप्तत्वात् इदमवाच्यमिति चेत्, परिसंख्यानार्थमिदमुच्यते'[14]*; '[15]होमाद् यदन्यत् तत् स्थालीपाकावृता कुर्यात्'[15]*। '[16]तेन होमे तु'[17] 'सकृद् वा त्रिर्वैते-

---

A. द्रष्टव्यं सूत्रम् १।३।१४ ( पृ० ६३ )।
B. द्रष्टव्यं सूत्रम् १।९।१७ भाष्यञ्च ( पृ० २९४ )।
C. वचनमुक्तं प्राक् १।७।३ सूत्रभाष्ये ( पृ० २०३ )।
D. द्रष्टव्यं सूत्रम् १।७।३ ( पृ० २०२ )।
E. द्रष्टव्यं सूत्रम् १।९।२० ( पृ० २७१ )।

1. नास्ति ध। 2. 'तत्' क। 3. 'एव' नास्ति व। 4. 'कुतः' नास्ति घ। 5. नास्ति घ। 6. 'च' नास्ति घ। 7. 'पञ्च' नास्ति क। 8. 'श्रवणं नक्षत्रम्' घ। 9. '-मेकमेव च' क। 10. 'युक्तम्, कुतः?' नास्ति घ। 11. नास्ति घ। 12. '-काहृता स्थालीपाककर्मणा कु-' क। 13. 'शेषः' नास्ति क। 14. '-सिद्धत्वात् पुनर्वचनं परिसंख्यानार्थम्' घ। 15. नास्ति घ। 16. 'तेन' नास्ति क। 17. 'तु' नास्ति घ।

[1]नैव कल्पेने'ति [ सू० १।८।६ ] योऽयं विकल्प उक्तः सोऽत्र न स्यात्'* [2]सकृत् सकृदेव जुहुयादित्यर्थः। [3]यद्वा कर्म 'प्रज्ञापनार्थमिद'मुक्तम्। स्थालीपाक[4]धर्मेण [5]अन्यत् कर्मशेषं समाप्य [6]तत्रैव दर्भस्तम्बादि कुर्यात्, अथ वामदेव्य-[7]गानमिति(A)।

## उत्तरतोऽग्नेर्दर्भस्तम्बं समूलं प्रतिष्ठाप्य सोमो राजेत्येतं मन्त्रं जपति यां सन्धां समधत्तेति च ॥ २१ ॥

[10]"अग्नेरुत्तरतो[10]"* दर्भस्तम्बं कुशकूर्चकम्। मूलैः सह "समूलं [12]"प्राङ्मुखकरणं चानादेश' (B) इति सूत्रकारवचनात् प्रागग्रं[13]"* प्रतिष्ठाप्य [13](C)सोमो राजेति

A. सूत्रस्यास्याकरणेऽनन्तरसूत्रोक्तं कर्म प्रधानहोमानन्तरमेव वा स्याद् वामदेव्यगानात् परतो वा स्यात्। परमार्थतस्तु अत्र चरोर्बहुदैवतत्वादवघात एव होमः स्यात्, तत्र चाऽऽज्यभागौ अवदानधर्मश्च न भवति। तस्माच्च वचनादाज्यभागाववदानधर्मश्चात्र ज्ञाप्यते, कथमिति चेदाचार्यपुत्रस्मरणात्। तथाच गृह्यासंग्रहः—

स्थालीपाकावृताऽन्यत् तु यत्र संज्ञा निपात्यते।
तत्राऽऽज्यभागौ हुत्वैव स्रुचमास्तीर्यावद्यति ॥ १।११३।

तथाच यत्र यत्र गोभिलाचार्येण स्थालीपाकावृताऽन्यद् इतीयं संज्ञा प्रयुज्यते तत्राऽऽज्यभागौ हुत्वा स्रुचमास्तीर्य आज्येनोपस्तीर्य अवद्यति अवदानं गृह्णाति, न पुनस्तत्रोपघातहोम इत्यर्थः। इति सुधीभिरवधेयम्।

B. लाट्यायनश्रौतसूत्रम् १।२।११।

C. मन्त्रस्तु—

ॐ सोमो राजा सोमस्तम्बो राजा
सोमोऽस्माकं राजा सोमस्य वयं स्मः।
अहिजम्भनमसि सौमस्तम्बं
सौमस्तम्बमहिजम्भनमसि ॥ इति

मन्त्रब्राह्मणम् २।१।६।

अस्य व्याख्या—तत्र सोमस्यौषधिस्वामित्वाद् दर्भस्तम्बः सोमत्वेन स्तूयते—अत एव

1. 'विकल्पोऽत्र न स्यात्' ख। 2. 'सकृत्' नास्ति ख। 3. 'यद्वा' ख। 4. 'इ'नास्ति ख। 5. '-कृष्यते' ख। 6. '-कर्मणा' ख। 7. 'अन्यत्' नास्ति ख। 8. 'तत्रैव' नास्ति ख। 9. 'गान' नास्ति ख। 10. नास्ति ख। 11. 'समूलं' नास्ति ख। 12. नास्ति ख। 13. 'एवं जपतीति पूर्वाग्रं' ख।

(A)यां सन्धामिति च जपति । भेदेनोपन्यासो मन्त्रद्वयज्ञापनार्थम्, इतरथा मन्त्रसंख्या-भ्रान्त्या छन्दोभ्रान्तिरपि स्यात्, तद्‌निष्टम् । उक्तञ्च—'यो ह वाऽविदितार्षेयच्छन्दोदैवत-ब्राह्मणेन मन्त्रेणे'त्यादि । अत्रा'प्येतं मन्त्रम्' इत्येतस्य तदेव प्रयोजनम् । अत्र कश्चिद् दर्भस्तम्बे कुशसंख्यामाह, तदसत् ; कुतः ? 'यत्रवास्तुनि मुष्ट्याश्चे'ति(B) वचनात्'"* ।

## श्वस्ततोऽक्षतशक्तून् कारयित्वा नवे पात्रे पिधाय निदधाति ॥२२॥

श्वः 'प्रभाते । ततस्तस्यां पौर्णमासीशर्वर्याम् "अक्षतशक्तून्, अक्षतग्रहणाद् यवैः शक्तुः कार्य इति दर्शयति"*, "यवानां शक्तून्, कारयित्वेति कर्त्तुरनियमः । नवे पात्रे कृत्वा पात्रान्तरेण पिधाय स्थगित्वा निदधाति अहरहर्बलिदानार्थं"* गृहे स्थापयति ।

## अहरहस्तूष्णीं बलीन् हरेत् सायं प्राग्घोमादाग्रहायण्याः ॥२३॥

तैः शक्तुभिरहरहः प्रत्यहं 'बलीन् हरेत्'*, तूष्णीमिति वाग्यमनियमार्थं न मन्त्रोच्चार'णप्रतिषेधार्थम् । "अत्र कश्चिदाह—तूष्णीमिति वचनान्मन्त्रं मनसा"*

मन्त्रविनियोगयोरवैलक्षण्यम् । सोमो देवराजत्वविशेषात् सर्वस्य स्वामी, ओषधीनां प्रवृद्धचन्द्राधीनत्वात्, अथ यत्र चौषधिरूपेण स्तूयते, सोमस्तम्बो राजा सर्वेषाम् ओषधिवनस्पत्यादीनां स्वामी श्रेष्ठ इत्यर्थः । स सोमोऽस्माकमपि विशेषेण राजा, सोमोऽस्माकं ब्राह्मणानां राजेति श्रुत्यन्तरम् । यत एवमतः सोमस्य वयं स्मः भवामः, अधीना इति शेषः । हे दर्भस्तम्ब, सोमस्तम्बसम्बन्धिन् अहिजम्भनमसि आगत्य भजन्तीत्यरयः सर्पास्तेषां जम्भनं हिंसकमसि । तदेव पुनरुच्यते सोमस्तम्बमहिजम्भनमसि पूर्ववद् योज्यम् इति । द्विर्वचनमादरातिशयद्योतनार्थम् । इति केचित् ।

A. मन्त्रस्तु—

ॐ यां सन्धां समधत्त यूयं सप्तऋषिभिः सह ।
तां सर्पा माऽत्यक्रामिष्ट नमो वोऽस्तु मा नो हिंसिष्ट ॥ इति ।

मन्त्रब्राह्मणम् २।१।७ ।

अस्य व्याख्या—हे सर्पाः, यूयं सप्तर्षिभिर्मरीचिप्रमुखैः सह यां सन्धां यत् सन्धानं मैत्रीं समधत्त सम्यक् धृतवन्तः, तां सन्धां माऽत्यक्रामिष्ट अतिक्रमं मा कुरुत, अस्माभिः सहेति शेषः । हे सर्पाः, वो युष्माकं नमो नमस्कारोऽस्तु, नोऽस्मान् मा हिंसीष्ट, हिंसां मा कुरुत । इति ।

B. उक्तं ( २।८।२४ ) कर्मप्रदीपवचनमिदं प्राक् १।६।१ सूत्रभाष्ये ( पृ० १९८ ) ।

1. 'प्रभातायां' ख । 2. नास्ति च । 3. नास्ति ख । 4. नास्ति च । 5. 'च' नास्ति च । 6. नास्ति च ।

[1]ध्यायेदिति। तदसत्, कुतः? प्रकृतादेवमवधानात्, यत्र यत्र तूष्णीमिति वचनं स्यात् तत्र मन्त्रोच्चारणप्रतिषेधः, इत्येवं चेद् वैश्वदेवोऽपि तर्हि मानस एव स्यात्, तदयुक्तम्[1]*; अग्नौ जुहुयात् तूष्णीं पाणिनैवेति; [2]न चैवं शिष्टाः संप्रतिपन्नास्तस्माद् यथोक्त एवार्थः। कस्मिन् काले बलीन् हरेत्[2]*? सायम् अस्तमिते होमात् प्राक् पूर्वम्। [3]कियन्तं कालं यावत्? आ आग्रहायण्याः अग्रहायणो मार्गशिरः, तस्य पौर्णमासी आग्रहायणी तां यावत्। [4]अहरहः प्रयोगे बलिशेषप्रतिपत्तिर्न स्यात्, न च लक्षणपूर्वकम् अग्निप्रणयनं चमसद्रव्योः प्रतपनधर्मादिलोपार्थमुदकं तु प्रत्यहमासादयेत्। तथाचोक्तम्—

बलिशेषस्य हवनमग्निप्रणयनं तथा।
प्रत्यहं न भवेयातामुल्मुकन्तु भवेत् सदा(A)॥ इति।

नमः पृथिव्या इत्येतदपि न्यञ्चकरणं प्रत्यहं नैव स्यात्, उक्तञ्च—'न्यञ्चकर्म न सर्वदे'ति[4]*,। [5]ततः सन्ध्यां कृत्वा अस्तमिते शालायामुपलिप्ते शालाग्नेरुप्य लक्षणं विना पूर्ववद् बलिदानम्। अहरहः शेषं शक्तून् कृत्वा नोल्मुकं न न्यञ्चकरणम्[5]*(B)।

इति "भट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये"[6]*
तृतीयप्रपाठकस्य सप्तमी कण्डिका॥

---

A. कर्मप्रदीपः ३।९।७।

B. अथात्र श्रवणाकर्मविषये यदुक्तं गृह्यान्तरेषु तस्मात् किञ्चिदिहोपस्थाप्यते। तदत्र पारस्करगृह्यसूत्राणि—अथातः श्रवणाकर्म। श्रावण्यां पौर्णमास्याम्। स्थालीपाकं श्रपयित्वाऽक्षतधानाश्चैककपालं पुरोडाशं धानानां भूयसीः पिष्ट्वा आज्यभागाविष्ट्वाज्याहुती जुहोति। अपश्वेतपदा जहीति। न वै श्वेतस्येति। स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति। धानावन्तमिति धानानाम्। घृताक्तान् शक्तून् सर्पेभ्यो जुहोति। आग्नेयपाण्डुपार्थिवानां सर्पाणामधिपतये स्वाहा, श्वेतवायवान्तरिक्षाणां सर्पाणामधिपतये स्वाहा, अभिभूः सौर्यदिव्यानां सर्पाणामधिपतये स्वाहेति। सर्वहुतमेककपालं ध्रुवाय भौमाय स्वाहेति। प्राशनान्ते शक्तूनामेकदेशं सूर्पे न्युप्योपनिष्क्रम्य बहिः शालायाः स्थण्डिलमुपलिप्योल्कायां ध्रियमाणायां माऽन्तरागमतेत्युक्त्वा वाग्यतः सर्वानवनेजयति। आग्नेयपाण्डुपार्थिवानां सर्पाणामधिपतेऽवनेनिक्ष्व श्वेतवायवान्तरिक्षाणां सर्पाणामधिपतेऽवनेनिक्ष्व अभिभूः सौर्यदिव्यानां सर्पाणामधिपतेऽवनेनिक्ष्वेति। यथाऽवनिक्तं दर्व्योपघातं शक्तून् सर्पेभ्यो बलिं हरति। आग्नेयपाण्डुपार्थिवानां सर्पाणामधिपत एष ते बलिः, श्वेतवायवान्तरिक्षाणां सर्पाणामधिपत एष ते बलिः, अभिभूः सौर्यदिव्यानां सर्पाणामधिपत एष ते बलिरिति। अवनेज्य पूर्ववत् कङ्कतैः प्रलिखति।

---

1. नास्ति च। 2. 'वैश्वदेवे तथा दृष्टत्वात् इति' च। 3. नास्ति च। 4. नास्ति च। 5. नास्ति ख। 6. नास्ति च।

आग्नेयपाण्डुपार्थिवानां सर्पाणामधिपते प्रलिखस्व, श्वेतवायवान्तरिक्षाणां सर्पाणामधिपते प्रलिखस्वाभिभूः सौर्यदिव्यानां सर्पाणामधिपते प्रलिखस्वेति। अञ्जनानुलेपनं स्रजश्चाञ्जस्वानुलिम्पस्व स्रजोऽपि नह्यस्वेति। सक्तुशेषं स्थण्डिले न्युप्योदपात्रेणोपनिनीयोपतिष्ठते नमोऽस्तु सर्पेभ्य इति तिसृभिः। स यावत् कामयेत न सर्पा अभ्युपेयुरिति तावत् सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन् परीयादपश्वेतपदा जहीति द्वाभ्याम्। दर्वीं शूर्पं प्रक्षाल्य प्रतप्य प्रयच्छति। द्वारदेशे मार्जयन्त आपो हि ष्ठेति तिसृभिः। अनुगुप्तमेतं सक्तुशेषं निधाय ततोऽस्तमितेऽस्तमितेऽग्निं परिचर्य दर्व्योपघातं सक्तून् सर्पेभ्यो बलिं हरेदाग्रहायण्याः। तं हरन्तं नान्तरेण गच्छेयुः। दर्व्याचमनं प्रक्षाल्य निदधाति। धानाः प्राश्नन्त्यसंस्यूताः। ततो ब्राह्मणभोजनम्। इति।

अथ श्रवणाकर्मप्रयोग उच्यते—तत् श्रावण्यां पौर्णमास्यां कर्तव्यम्। तस्य यावज्जीवं प्रतिसंवत्सरमनुष्ठेयत्वात् प्रथमप्रयोगे नान्दीश्राद्धं कुर्यात्। प्रातरेव श्रवणाकर्म करिष्ये इति सङ्कल्प्य अग्न्यायतनस्य पुरस्तात् संस्कृते स्थण्डिले औपासनाग्नेरेकदेशमाहृत्य प्रणयति, ततोऽतिप्रणीतस्याग्नेश्चतसृषु दिक्षु किञ्चिदधिके प्रक्रमान्तरिते देशे गोमयेनोपलिप्य प्रादेशमात्रं चतुरस्रं स्थण्डिलं कुर्यात्। त्रिपदः प्रक्रमो ग्राह्य इति। ततोऽग्निमुपसमाधायातिप्रणीताग्नेरुत्तरत उदगग्रेषु दर्भेषु यवान् भर्जनकपालमुलूखलं मुषलं शूर्पमनुगुप्ता अपश्चाऽऽसादयित्वाऽनुगुप्ताभिरद्भिः प्रोक्ष्य चक्राघटितं मृन्मयं कपालमग्नौ संस्थाप्य, तस्मिन् कपाले सकृद् गृहीतयवमुष्टिं प्रक्षिप्य भृज्जति यथा यवा दग्धा न भवेयुस्तथा। ततो भृष्टान् यवानुदगुद्वास्य प्रणीताग्नेः पश्चादुलूखलं दृढं संस्थाप्य तस्मिन् भृष्टान् यवान् प्रक्षिप्य मुषलमादाय पार्वणस्थालीपाकवदवहननं कुर्यात्। यथा यवाः सक्तवो भवन्ति तथोद्वेषं कृत्वाऽवहननं कुर्यात्। एवं सम्यक् सक्तून् कृत्वा तान् चमसे संस्थाप्य शूर्पेणाऽऽच्छाद्य गृहे निदधाति। एतावत् कर्म अह्नि कर्तव्यम्। इतः परं वक्ष्यमाणकर्मानुष्ठानाय सञ्चरप्रदेशोऽतिप्रणीताग्नेर्दक्षिणपश्चिमयोर्मध्यमप्रदेशः। ततोऽस्तं गते सूर्येऽतिप्रणीतस्याग्नेः समीपं गच्छति चमसं दर्वीञ्च गृहीत्वा, ततश्चमसे स्थितान् सक्तून् शूर्पे निक्षिप्य चमसेनोदकं गृह्णाति। ततः सञ्चरेण प्रविश्यातिप्रणीतस्याग्नेरुत्तरतो मार्गेण पूर्वस्यां दिशि गत्वा प्राङ्मुख उपविश्य पूर्वदिशि कृते मण्डले चमसजलं हस्तेन निनीय दर्व्या सकृत् सक्तून् गृहीत्वा मन्त्रेण बलिं निवपति। वक्ष्यमाणानां चतुर्णां मन्त्राणां प्रजापतिर्ऋषिर्निगदः सर्पो देवता सर्पबलिकर्मणि विनियोगः, यः प्राच्यां दिशीति मन्त्रः। ततश्चमसेऽवशिष्टमुदकं हस्तेन गृहीत्वा बलिसमीपे निक्षिपति यथा बलिः स्वस्थानान्न प्रच्युतो भवेत्। ततोऽप्रदक्षिणेनाभ्यावृत्य चमसं दर्वीञ्चाभ्युक्ष्य युगपदेव प्रताप्य, पूर्ववच्चमसेनोदकं गृहीत्वा दर्व्या सक्तून् गृहीत्वाऽग्नेरुत्तरतो गत्वा दक्षिणस्यां दिशि दक्षिणाभिमुख उपविश्य पूर्वकृतदक्षिणमण्डले चमसादुदकं पाणिना निनीय, दर्व्या सक्तून् निवपति, यो दक्षिणस्यामिति मन्त्रेण। पूर्ववच्चमसोदकं हस्तेन बलिसमीपे निक्षिपेत्। ततः पूर्ववदभ्यावृत्य चमसदर्व्यावभ्युक्ष्याग्नौ प्रताप्य पश्चिममण्डलस्य पुरतः प्रत्यङ्मुख उपविश्य तत्रैव पश्चिमस्थण्डिलेऽपो निनीय मन्त्रेण बलिं निवपति, यः प्रतीच्यामिति। पुनः पूर्ववदपो निक्षिप्य चमसदर्व्याव-

भ्युक्ष्य प्रतापयेत्। नात्राभ्यावर्तनं तत्रैव स्थितत्वात्। तत उत्तरस्थण्डिलस्य दक्षिणत उत्तराभिमुखो भूत्वा उत्तरस्थण्डिलेऽपो निनीय मन्त्रेण सक्तून् निक्षिप्य पुनरपोऽवनयति पूर्ववत्। ४. उदीच्यां दिशीति बलिमन्त्रः। अत्र केचित् प्रतीच्यामुदीच्यां चमसद्रव्योः प्रोक्षणप्रतापनयोः प्रतिषेधं वर्णयन्ति, तेषा'मेवं प्रतीच्येवमुदीची'ति सूत्रविरोधः स्पष्ट एव। व्यावर्तननिषेधस्तु तत्र स्थितत्वात् स्पष्टार्थः। ततोऽवशिष्टसक्तून् शूर्पेणातिप्रणीताग्नौ तूष्णीं प्रक्षिप्य पूर्वोक्तदक्षिणपश्चिममध्यसञ्चरमार्गेण गृह्याग्निसमीपमागच्छति। ततस्तस्याग्नेः पश्चाद् भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्य नमः पृथिव्या इति मन्त्रं जपेत्। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽग्निर्देवता भूमिजपे विनियोगः। नमः पृथिव्यै इति मन्त्रः। ऋत्विक्कर्तृकपक्षेऽपि नास्त्यत्रोहः। सन्ध्यां निर्वर्त्य गृह्याग्नौ सायमौपासनं विधाय पायसस्थालीपाकं कुर्यात्। अत्र केचिद् वैश्वदेवबलिहरणानन्तरं स्थालीपाकं वदन्ति, तन्न साधु, प्रमाणाभावात् प्रदोषे स्थालीपाकविधिविरोधाच्च। सन्ध्याहोमयोर्नियतकालत्वात् कालात्यये प्रायश्चित्तश्रवणाच्च, तयोः पूर्वमनुष्ठानं न्याय्यम्। बलिहरणं तु न तथा। तत आचान्तोदकः प्राणानायम्य श्रवणाकर्म करिष्ये इति सङ्कल्प्याग्निमुपसमाधाय ब्रह्मोपवेशनादि ब्रह्मणे पूर्णपात्रदक्षिणादानान्तं पार्वणस्थालीपाकवत् कुर्यात्। तत्र विशेषः—पात्रासादनकाले पयसोऽप्यासादनं समूलदर्भस्तम्बस्य च। निर्वापकाले श्रवणाय त्वा जुष्टं निर्वपामि। एवं विष्णवे अग्नये, प्रजापतये, विश्वेभ्यो देवेभ्यः। आज्यभागान्ते पायसचरुहोमाः पञ्च, श्रवणाय स्वाहा इदं श्रवणाय न मम, एवं विष्णवे, अग्नये, प्रजापतये, विश्वेभ्यो देवेभ्यः। ब्रह्मणे दक्षिणादानान्तेऽग्नेरुत्तरतः समूलं दर्भस्तम्बं प्रागग्रं प्रतिष्ठाप्य सोमो राजेत्येतं मन्त्रम्, यां सन्ध्यां समधत्तेति च मन्त्रं जपति। उभयोर्मन्त्रयोः प्रजापतिर्ऋषिर्जुषी सोमसूर्यौ देवते जपे विनियोगः। ततो मन्त्रद्वयपाठः। सूत्रे एतमिति निर्देशादन्यकर्तृकपक्षेऽप्यनयोर्जपः। ततो वामदेव्यगानं ब्राह्मणभोजनादिकञ्च। तत उत्तरे दिवसे प्रातर्होमानन्तरं पूर्ववदौपासनाग्नौ सक्तून् कृत्वा अन्येन वा कारयित्वा नूतनपात्रे संस्थाप्य पात्रान्तरेणाऽऽच्छाद्य गृहे स्थापयति। अत ऊर्ध्वमाग्रहायणीपौर्णमासीपर्यन्तं प्रतिदिनं सायं होमात् पूर्वं तूष्णीं बलिं हरेत्। अत्र केचित् तूष्णीमित्युक्तेरमन्त्रकं बलिहरणं मन्यन्ते। अपरे तु तूष्णीमित्युक्त्या वाङ्नियमनं कथ्यते मन्त्रेण बलिं हरेदिति वदन्ति। अत्र द्वितीयः पक्षो ज्यायान्, आरम्भे मन्त्रपाठात् त्रैविध्यवृद्धानामाचाराच्च। आचम्य प्राणानायम्य सर्पबलिं करिष्ये इति सङ्कल्प्य चमसे उदकं गृहीत्वा अपेक्षितसक्तून् सूर्पे गृहीत्वा गृह्याग्नेः पुरस्तादेतदग्नेरुल्मुकं निधाय, तत् परितः पूर्वोक्तैश्चतुर्भिर्मन्त्रैर्बलिहरणं कुर्यात्। बलेः पुरस्तादुपरिष्टाच्चापां निनयनम्, चमसद्रव्योरभ्युक्षणं प्रतपनञ्च। नात्र बलिशेषहोमोऽवशिष्टसक्तूनां दिनान्तरे बलिहरणादोपयोक्ष्यमाणत्वात्। नात्र न्यञ्चकर्म, न्यञ्चकर्म न सर्वदेति निषेधात्। इत्यहरहः सर्पबलिप्रयोगः। इति।

# तृतीयप्रपाठकस्य अष्टमी कण्डिका

## आश्वयुज्यां पौर्णमास्यां पृषातके पायसश्चरू रौद्रः ॥ १ ॥

आश्वयुजस्य पौर्णमासी आश्वयुजी, तस्याम् 'आश्वयुज्यां पौर्णमास्याम्'[1] आश्वयुज्यामिति सिद्धे पुनः पौर्णमासीग्रहणं स्वनक्षत्रवियुक्ताया अपि पौर्णमास्याः प्राधान्यद्योतनार्थम्। [2]पयो घृतं दधि वा पृषातकम्। तस्मिन् पृषातके अवेक्षणार्थम् अग्निसन्निधौ उत्तरत उपक्रमे। अन्यस्मिन् पयसि रौद्रश्चरुः कर्त्तव्यः। [3]तथाचोक्तम्—

पया यत्राज्यसंयुक्तं तत् पृषातकमुच्यते।

दध्येके तदुपासाद्य कर्त्तव्यः पायसश्चरुः(A) ॥ इति"[3]।

रुद्रस्यायं रौद्रः, रुद्राय त्वेति निर्वापः।

## तस्य जुहुयाद् आ नो मित्रावरुणेति प्रथमां मानस्तोक इति द्वितीयाम् ॥ २ ॥

तस्य पायसस्य (B)[4]आ नो मित्रेति मैत्रावरुण्यर्चा'[4], प्रथमा[5]माहुतिं

---

A. कर्मप्रदीपः ३।७।१२।

समासादितञ्च पृषातकं होमकालेऽग्नेरुत्तरपूर्वतः स्थापनीयम्। तथाच गृह्यासंग्रहः—

दधिसर्पिश्च संयुक्तं प्रोक्तो ह्येष पृषातकः।

होमकाले तु तस्याग्नेः स्थानमुत्तरपूर्वतः ॥ इति २।५९।

B. मन्त्रस्तु—

ॐ आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्।

मध्वा रजांसि सुक्रतू ॥ इति। सामसं० पू०, ३।१।३।७।

अस्य व्याख्या—सुक्रतू शोभनकर्माणौ हे मित्रावरुणौ, नः अस्माकम्, गव्यूतिं गवां मार्गं गोनिवासस्थानम्, घृतैः क्षरणसाधनैः, पयोभिः, आ उक्षतम् आ समन्तात् सिञ्चतम्,

---

1. नास्ति घ। 2. 'पयो घृतमिश्रं दधि चाऽऽज्यं पृ-' ख। 3. नास्ति घ। 4. 'आ नो मित्रावरुणेत्येतया ऋचा' ख। 5. 'आहुतिं' नास्ति ख।

[1]जुहुयात् (A)मानस्तोक इति रौद्रीं द्वितीयाम्[2]*। इदं रुद्रायेति त्यागः। [3]ननु विधानक्रमादेव प्राथम्यादिपरिज्ञानं भविष्यतीति, अथ कस्मात् प्रथमादिग्रहणं क्रियते, इति? उच्यते*—अनयोरेवाऽऽहुत्योश्चरुणाऽभिसम्बन्धार्थं "प्रथमादिग्रहणं कृतम्"*। 'कथं नाम[4]'? एते एव द्वे चर्वाहुती, इतरा या वक्ष्यमाणास्ता आज्याहुतय इति। [5]तथाचोक्तम्—

आश्वयुज्यां तथा कृष्यां वास्तुकर्मणि याज्ञिकाः।
यज्ञार्थं तत्त्ववेत्तारो होममेवं प्रचक्षते॥
द्विपश्च द्विक्रमेणैता हविराहुतयः स्मृताः।
शेषादाज्येन होतव्या इति कात्यायनोऽब्रवीत्(B)॥ इति"*।

---

अस्मभ्यं दोग्ध्रीः गाः प्रयच्छतम् इति भावः। रजांसि पारलौकिकानि अस्मदावासस्थानानि, मध्वा मधुरेण दुग्धरसेन सिञ्चतम्। इति।

A. मन्त्रस्तु—

ॐ मा नस्तोके तनये मा न आयौ
मा नो गोषु मा न अश्वेषु रीरिषः।
वीरान्मा नो रुद्र भामितो वधी-
र्हविष्मन्तः सदमित्त्वा हवामहे॥ इति।

मन्त्रब्राह्मणम् २।१।८।

अस्य व्याख्या—हे रुद्र रुदं दुःखं दुःखहेतुपापम्, तद् द्रावयतीति रुद्रः, रुद्रो रौतीति सत इति निरुक्तम्। रुद्रो हि प्राणिनां सुखोपायं ज्ञात्वा दुःखे पतिष्यन्तीति सर्वदा रोदिति, तथाविध देव, नोऽस्माकं तोके स्त्रीपुंसामान्यवचनादपत्ये, तथा तनये—तनोति विस्तारयति कुलमिति तनयः पुमपत्यम्, तस्मिन्, अथवा तोके पुत्रे तनये तत्पुत्रे च, मा रीरिषः मा वधीः, एवं प्रत्युद्देशं मा रीरिष इति सम्बन्धः। किञ्च नोऽस्माकम् आयौ—आयुषि जीवने, (शाखान्तरे आयुषीति पठन्ति) तथा नो गोषु, नोऽश्वेषु मा रीरिषः। किञ्च हे रुद्र, भामितः—भामः क्रोधः, अस्माभिरन्यथाकरणादिदोषेण क्रोधीकृतः सन् नोऽस्माकं वीरान् शत्रूणां विविधं वारयितॄन् भृत्यान् मा वधीर्मा हिंसीः। त्वा—त्वाम्, उक्तबाधपरिहाराय हविष्मन्तः प्रदेयैर्हविर्भिर्युक्ता वयम्, सदम् इत् सर्वदा हवामहे आह्वयामः। इति सायणाचार्यकृता। केचित्तु 'भामिनोऽवधीरि'ति पठन्ति 'भामिनः तेजस्विनः, भ्रात्रादीनात्मीयानपि पुरुषान् मा वधीरित्येवं विवृण्वन्ति च। शुक्ले कृष्णेऽपि यजुर्वेदे 'भामिनोऽवधीरि'ति पाठो ज्ञेयः। मन्त्रब्राह्मणसम्मतः पाठस्तु कौथुमराणायनीयानामिति सायणाचार्यवचनात् प्रतीयते।

B. कर्मप्रदीपः ३।७।१०-११।

---

1. नास्ति घ। 2. नास्ति घ। 3. नास्ति ख। 4. नास्ति घ। 5. नास्ति घ।

**गोनामभिश्च पृथक् काम्याऽसीत्येतत्प्रभृतिभिः ॥ ३ ॥**

गवां नामानि गोनामानि, तैश्च गोनामभिः (A)काम्याऽसीत्येतत्प्रभृतिभिः पृथक् पृथक् प्राक् स्विष्टकृत आज्यं जुहुयात्। [1]किं चतुर्थ्यन्तैः? न ; तथा पठितैरेव। कुतः?

धृतिहोमे न प्रयुञ्ज्याद् गोनामसु तथाऽष्टसु।
चतुर्थीमघ्न्या इत्येतद् गोनाम्नि न हि हूयते(B)॥

इति वचनात्[1]*। प्रयोगः "ताण्ड्यब्राह्मणे"*—काम्याऽसि स्वाहा, प्रियाऽसि स्वाहा हव्याऽसि स्वाहा, "इडे स्वाहा, रन्ते स्वाहा, सरस्वति स्वाहा, महि स्वाहा, विश्रुते"* स्वाहेति(C)।

**स्थालीपाकावृताऽन्यत् ॥ ४ ॥**

उक्तार्थम् [4]एतत्।

**पृषातकं प्रदक्षिणमग्निं पर्याणीय ब्राह्मणानवेक्षयित्वा स्वयमवेक्षेत—तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतमिति ॥ ५ ॥**

---

A. काम्या प्रिया च हव्या च इडा रन्ता सरस्वती।
महो विश्रुता चाघ्न्या च गोनामानि विदुर्बुधाः॥

इति गृह्यासंग्रहोक्तानि ( २।६० ) गोनामानि। 'चकारा असि-शब्दस्याध्याहारार्थाः' इति च तस्य दीक्षितभाष्यम्। यद्यपि नवैव गोनामानि पठ्यन्ते तथापि अघ्न्यानाम्ना होमो नास्तीत्युक्तं कर्मप्रदीपे, एवञ्चाष्टावेवाहुतयो भवन्ति।

B. कर्मप्रदीपः ३।६।९।

C. अत्र भाष्योक्त 'तथापठितैरि'त्यस्य यथाश्रुतसूत्रदृष्टपठितैरित्यर्थत्वे सर्वत्राधः सन्निवेशितः ख-पुस्तकोक्त 'असि'युक्तपाठ एव प्रयुक्तः स्यात् छन्दोगपरिशिष्टेऽपि वृषोत्सर्गप्रकरणे "अथाग्निं परिक्रममाणां वत्सतरीणामेकामनुगमयेत् ताञ्चानुगच्छन्तीं प्रतिमन्त्रयेत् काम्याऽसि, प्रियाऽसि, हव्याऽसि, इडाऽसि, रन्ताऽसि, सरस्वत्यसि, मह्यसि, विश्रुतिरसि इति वत्सतरीणां मध्ये चोत्सृजति" इत्येवं पाठ इति प्रमाणत्वेनोपन्यस्तं रघुनन्दनेन छन्दोगवृषोत्सर्गतत्त्वे। ताण्ड्यब्राह्मण-पठितैरित्यर्थत्वे तु मूले सन्निवेशितः घ-पुस्तकोक्तपाठ एव स्यात्। स एव पाठः प्रमाणीकृतस्तत्कालङ्कारेण स्वग्रन्थे शङ्कासमाधानपुरःसरं 'भट्टभाष्ये तथैव लिखितमि'त्युपोद्घातेन च।

---

1. नास्ति घ। 2. 'प्रदर्श्यते' ख। 3. 'इडाऽसि—रन्ताऽसि—सरस्वत्यसि—मह्यसि—विश्रुतिरसि' ख।
4. 'एतत्' नास्ति घ।

[1]निगदव्याख्यानमेतत्[1]*। (A)अवेक्षणमन्त्रो ब्राह्मणानामपि स्यात्, [2]नाऽऽनन्तर्यात्तु यजमानस्यैव। कुतः? ब्राह्मणानामप्याशिषोऽभीष्टत्वात्। तथाचोक्तम्—

पृषातकप्रेक्षणयोर्न्यञ्चस्य हविषस्तथा।
शिष्टस्य प्राशने मन्त्रस्तत्र सर्वेऽधिकारिणः(B) ॥ इति।

यदि कथञ्चित् सन्निधौ ब्राह्मणा न स्युस्तथाऽपि स्वयमवेक्षेत। तथाचोक्तम्—

ब्राह्मणानामसान्निध्ये स्वयमेव पृषातकम्।
अवेक्षेद्धविषः शेषं नवयज्ञेऽपि भक्षयेत्(C) ॥ इति[3]*।

**ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा जातुषान् मणीन् सर्वौषधिमिश्रानाबध्नीरन् स्वस्त्ययनार्थम् ॥ ६ ॥**

ब्राह्मणानिति[4] बहुवचनात् त्रिप्रभृतीन् 'भोजयित्वा आशयित्वा स्वयं भुक्त्वा'*। [5]प्राप्तत्वात् इदमवाच्यमिति चेत्, न उपरिष्टादपि कर्मण उपदेशात्[5]* अपवर्गे अभिरूपभोजनमिति सर्वकर्मान्ते सायमपवर्गभोजनं मा भूदित्यत इद[6]मुक्तम्। जातुषान्

प्रयोगेऽप्येवमेवाचरितः सुब्रह्मण्याग्निहोत्रिणा। तदत्र होमे कीदृशो मन्त्रः पठितव्य इति भगवन्तोऽनूचाना निर्दिशन्तु।

A. अवेक्षणमन्त्रस्तु—

ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्।
पश्येम शरदः शतं जीवेम शरदः शतम्।
शृणुयाम शरदः शतं प्रब्रवाम शरदः शतम्।
अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ इति।

वाजसनेयी संहिता ३६।२४।

अस्य व्याख्या—यो महावीरोऽस्माभिः स्तुतः तत् चक्षुः जगतां नेत्रमादित्यरूपं पुरस्तात् पूर्वस्यां दिशि उच्चरत् उच्चरति उदेति, कीदृशं तत्? देवहितं देवैर्हितं स्थापितम्, यद्वा देवानां हितं प्रियम्। शुक्रं शुद्धं पापासंसृष्टं शोचिष्मद् वा। तस्य प्रसादात् शतं शरदो वर्षाणि वयं पश्येम शतवर्षपर्यन्तं वयमव्याहतचक्षुरिन्द्रिया भवेम। शतं शरदो जीवेम अ-पराधीनजीवना भवेम। शतं शरदः शृणुयाम स्पष्टश्रोत्रेन्द्रिया भवेम। शतं शरदोऽदीनाः स्याम न कस्याप्यग्रे दैन्यं कुर्याम। शतात् शरदः शतवर्षोपर्यपि भूयश्च बहुकालं पश्येमेत्यादि योज्यम्। इति।

B. कर्मप्रदीपः ३।९।८।

C. कर्मप्रदीपः ३।९।९।

1. नास्ति च। 2. 'ब्राह्मणानामसन्निधौ स्वयमवेक्षेत' च। 3. 'इति' नास्ति ख। 4. नास्ति च। 5. 'प्राप्तेऽपि' च। 6. '-मुच्यते' ख।

लाक्षामयान् [1]मणीन् सर्वौषधिगर्भान्[1]*। सर्वौषधयो [2]याः पुरस्ताद् व्याख्याताः, इहापि ता एव द्रष्टव्याः, उक्तञ्च—

व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः।

यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः(A) ॥ इति[2]* ।

आबध्नीरन्निति बहुवचनात् [3]अन्येऽपि ये [4]स्वस्त्ययनेच्छवस्तद्[3]* भ्रातृपुत्र-शिष्यादय[4]स्तेऽप्याबध्नीरन्। क? बाहौ। बालानां ग्रीवासु। [5]कुतः? प्रसिद्धेः स्वस्त्ययनार्थं कुशलेन कालातिवाहनार्थम्। [6]तेन मणि[7]बन्धस्य काम्यत्वं गम्यते, [8]ततश्चैतस्मिन्नक्रियमाणेऽपि न दोषः। ननु[8]* कश्चिन्नित्येष्वपि [9]कर्मसम्बन्धो[10]ऽपि दृश्यते, यथा एतस्यैव बलिहरणस्यान्ते कामं प्रब्रुवीतेत्यादि। सत्यम्, किन्तु [11]रक्षामणि-मूलिका-प्रतिसरादि[12]बन्धनस्य लोके भूय[13]स्त्वेन काम्यता [14]एव दृश्यते अतो[15]ऽकरणे न दोषः।

## सायं गाः पृषातकं प्राशयित्वा सहवत्सा वासयेत् ॥ ७ ॥

सायं [16]रात्रौ [17]आगता गाः प्रकृतं पृषातकं प्राशयित्वा भोजयित्वा[17]* तां रात्रिं वत्सैः सह वासयेत्, [18]वासयेरन्निति वा पाठः[18]* ।

[19]अनेन पृषातकप्राशनादिना गवां [20]गुणमाह—

## स्वस्ति हाऽऽसां भवति ॥ ८ ॥

ह [21]इति निपातः [22]स्वस्तीत्यविनाशं नाम।

[23]आश्वयुज्या ऊर्द्ध्वं कालवशान्नवशस्यानि भवन्ति, तानि चाग्निमता नवयज्ञम-कृत्वैव नात्तव्यानि। तथाच मनुः—'नानिष्ट्वा नवशस्ये'त्यादि(B)। यदि कथञ्चिद् बुद्धिपूर्वमश्नीयात् ततोऽस्य प्रायश्चित्तं स्यात्। तथाच कर्मप्रदीपः—

A. कर्मप्रदीपः ३।७।१३।

B. नानिष्ट्वा नवशस्येष्ट्या पशुना चाग्निमान् द्विजः।
नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः ॥ म० स० ४।२७।

1. नास्ति घ। 2. 'व्रीहय इत्यादि' घ। 3. नास्ति घ। 4. 'ते' नास्ति घ। 5. 'कुतः' नास्ति घ। 6. 'स्वस्त्ययनार्थमिति वचनात्' ख। 7. '-बन्धनस्य' ख। 8. नास्ति ख। 9. 'काम-' ख। 10. 'अपि' नास्ति घ। 11. 'उक्तामणि-' ख। 12. '-वचनस्य' घ। 13. '-स्त्वे'व' ख। 14. 'एव' नास्ति घ। 15. 'अकरणे' नास्ति ख। 16. 'रात्रौ' नास्ति ख। 17. नास्ति घ। 18. 'अन्ये तु वासयेरन्निति पठन्ति' ख। 19. 'अनेन' नास्ति घ। 20. 'को गुणः स्यादित्यत आह' ख। 21. 'इति' नास्ति घ। 22. 'स्वस्ति अविनाशम्' घ। 23. 'साग्निकस्य नवयज्ञमाह' घ।

अनिष्ट्वा नवयज्ञेन नवान्नं योऽत्यकामतः।
वैश्वानरश्चरुस्तस्य प्रायश्चित्तं विधीयते(A) ॥ इति।

तस्मान्नवयज्ञमेव तावदाह[23]*—

नवयज्ञे पायसश्चरुरैन्द्राग्नः ॥ ९ ॥

नवेना[1]न्नेन यज्ञो नवयज्ञः तस्मिन्, [2]पयसि भवश्चरुः कर्त्तव्य इति [3]वाक्यशेषः। [4]ऐन्द्राग्न इति देवतानिर्देशो निर्वापहोमार्थः। सा चेयं द्वन्द्वदेवता[5]*। इन्द्राग्निभ्यां त्वा इति निर्वापः।

तस्य मुख्यां हविराहुतिं हुत्वा चतसृभिराज्याहुतिभिरभि-जुहोति शतायुधायेत्येतत्प्रभृतिभिः ॥ १० ॥

तस्य चरोर्मुख्यां प्रधानां हविराहुतिं चर्वाहुतिं [6]मन्त्रान्तरानुपदेशात्*इन्द्राग्निभ्यां स्वाहेति हुत्वा "चतसृभिः"* चतुःसंख्याकाभि[7]राज्याहुतिभिर्घृताहुतिभिः(B) शतायुधायेत्येतत्प्रभृतिभिः प्राक् स्विष्टकृतः [8]अभि आभिमुख्येन समाहितचित्तः छन्दोदेवतार्षाण्यनु[9]स्मृत्य जुहोति।

A. छन्दोगपरिशिष्टम् ३।६।१८।

B. तत्र चतुर्णां प्रथममन्त्रस्तु—

ॐ शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे।
शतं यो नः शरदो अजीयादिन्द्रो नेषदति दुरितानि विश्वा ॥ इति।

व्याख्या—शतायुधायास्मदरिष्टशमनार्थं शतसंख्यवज्राद्यायुधयुक्ताय न केवलं बह्वायुधत्वं किन्तु शतवीर्याय, शतमित्यपरिमितवचनम्, अपरिमितवीर्याय, बह्वायुधप्रेरणसामर्थ्ययुक्तायेत्यर्थः। शतोतये, ऊतिरवनम्, बहुधा रक्षणयुक्ताय, तथाऽभिमातिषाहे अभितो हिंसकानां शत्रूणाम् अभिभवित्रे, इदमप्यस्तीति शेषः। किञ्च यो महानुभाव इन्द्रोऽस्ति स नोऽस्मान् शरदः शतं शतसंवत्सरम् अजीयात् अज्यात्, गमयत्वित्यर्थः। तथा अस्माकं विश्वा विश्वानि दुरितानि अतिनेषद् अतिनयतु। इति।

द्वितीयमन्त्रस्तु—

ॐ ये चत्वारः प्रथमो देवयाना अन्तरा द्यावापृथिवी वियन्ति।
तेषां यो अज्यानिमजीतिमावहात् तस्मै नो देवाः परिदत्तेह सर्वे ॥ इति।

1. 'मन्नेन' नास्ति ख। 2. 'पायसश्चरुः' ख। 3. 'वाक्यशेषः' नास्ति च। 4. नास्ति च। 5. नास्ति च। 6. नास्ति च। 7. '-राज्याहुतिभिः' नास्ति च। 8. 'अभिजुहोति चा-' ख। 9. '-स्मृत्य' ख।

## स्थालीपाकावृताऽन्यत् ॥ ११ ॥

उक्तार्थम् ।

## हविरुच्छिष्टशेषं प्राशयेद् यावन्त उपेताः स्युः ॥ १२ ॥

यावन्तो ब्राह्मणाः उप समीपे इता मताः भवेयुः, तावतः हविरुच्छिष्टशेषं [1]प्राशयेत् प्रकर्षेण वक्ष्यमाणविधिना प्राशयेत् । [2]ननु हविरुच्छिष्टं प्राशयेदिति वक्तव्ये शेषमिति

---

व्याख्या—हे देवाः, श्रुतिस्मृतिप्रसिद्धा ये चत्वारो देवयाना देवप्रयाणसाधनाः पथयः पन्थानोऽर्चिरादयः द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये वियन्ति विविधं गच्छन्ति, देवलोकपर्यन्तमायता वर्तन्ते, तेषां मध्ये यः पन्थाः अज्यानिम् अहानिम् अप्रच्युतिम्, अजीतिम्, ( छान्दसो दीर्घः ) अजयम्, अन्येषामभिभवाभावम् आवहात् आवहति प्रापयति ; यद्वा अज्यानिम् अजीतिम् इति ज्या वयोहानावित्यस्य रूपद्वयम्, अतो न पृथगर्थता । तस्मै मार्गाय हे देवा नोऽस्मान् इहास्मिन् कर्मणि परिदत्त प्रयच्छत । इति ।

तृतीयमन्त्रस्तु—

ॐ ग्रीष्मो हेमन्त उत नो वसन्तः शरद् वर्षाः सुवितन्नो अस्तु ।
तेषामृतूनां शतशारदानां निवात एषामभये स्याम ॥ इति ।

व्याख्या—ग्रीष्मादयः पञ्च निर्दिष्टा ऋतवः सन्ति तान् प्रार्थये—नोऽस्माकम् ऋतु-सम्बन्धि दत्तं हविः सुवितं सुष्ठु प्राषितं सुष्ठु हितं वाऽस्तु भवतु । उतापयर्थे । किञ्च तेषां पञ्च-ऋतूनाम्, कीदृशाम् ? शतशारदानाम्, विविधानामृतूनाम्, निवाते वातरहिते अत एवाभये भयरहिते प्रदेशे स्याम भवेम, शतायुःपर्यन्तम् ; शतायुःपर्यन्तं सर्वतुं निर्वृतिम् अनुभवेमेत्यर्थः ।

चतुर्थमन्त्रस्तु—

ॐ इद्वत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः ।
तेषां वयं सुमतौ यज्ञियानां ज्योगजीता अहता स्याम ॥ इति

सर्वेषामाकरस्थानन्तु मन्त्रब्राह्मणम् २।१।९-१२ ।

व्याख्या—हे मदीयाः पुत्रादयः ऋत्विजो वा, यूयम् इद्वत्सराय परिवत्सराय, संवत्सराय च देवाय बृहत् प्रभूतं नमो नमस्कारं हविर्वा कृणुत कुरुत । उक्तत्रयमुद्वत्सरानुवत्सरयोरप्युपलक्षणम् । चान्द्राः प्रभवादिवत्सराः क्रमेण संवत्सरपरिवत्सरेद्वत्सरानुवत्सरेद्वत्सरनाम्ना पुनरावर्तन्ते । तथाच पूर्वेषां वचनम्—

चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ।
संपर्युदन्विदित्येतच्छब्दपूर्वास्तु वत्सराः ॥

---

1. 'प्राशयेत्' नास्ति च । 2. नास्ति च ।

किमर्थमिदमुच्यते ? आहुः[2]*—हविरुच्छिष्ट[1]शेषं ब्राह्मणान् प्राशयित्वा तच्छेषमपि स्वयं प्राश्नीयादिति [2]एतस्य प्रज्ञापनार्थं शेषमित्युक्तम्[3]। शेषमिति द्वितीया कृत्स्नप्राशनार्था। [4]तस्मात् कृत[5]कार्यो यजमानः स्वे भोजनकाले सर्वं प्राश्नीयात् [6]तत्, न तु मन्त्रवत् प्राशनं कृत्वा ब्राह्मणे दद्यात्[6]* इति। [7]ब्राह्मणानामसन्निधौ[7]* स्वयं प्राश्नीयादेव। [8]कुतः ? 'ब्राह्मणानामसान्निध्ये'(A) इति वचनात्।

प्राशनविधिमाह—

## सकृदपामुपस्तीर्य द्विश्चरोरवद्यति(B) त्रिर्भृगूणामपां चैवोपरिष्टात् ॥ १३ ॥

सकृदेकवारम्, अपामुदकस्य, दक्षिणे पाणावुपस्तीर्य, [9]कुतः ? 'यत्रोपदिश्यते कर्मे'ति वचनात्(C)। द्विः द्विः कृत्वा मध्यात् पूर्वार्द्धात् स्वमेक्षणेन चरोरवद्यति। भृगूणां पञ्चार्षेयाणां त्रिः कृत्वाऽवद्यति पश्चार्धादित्यधिकम्। उपरिष्टा[10]दपामुदकस्यावद्यति। चशब्दादेव[11]कारकरणाच्च [12]चरोरेवाभ्यङ्गं चाद्भिरेव[12]* करोति।

[13]एवं पाणौ गृहीत्वा [14]ततः—

## असंस्वादं निगिरेद् भद्रान् नः श्रेय इति ॥ १४ ॥

---

इति। तेषां यज्ञियानां यज्ञार्हाणाम् इद्वत्सरादीनां सुमतौ शोभनबुद्धावस्मदनुग्रहयुक्ते चेतसि वयं ज्योक् चिरकालम्, अजीता अजीर्णा अहता अहिंसिताः स्याम भवेम। इति।

A. ब्राह्मणानामसान्निध्ये स्वयमेव वृथातकम्।
अवेक्षेद्धविषः शेषं नवयज्ञेऽपि भक्षयेत् ॥ इति। कर्मप्रदीपः ३।९।९।

B. सूत्रमिदम् अवद्यतीत्यत्र, त्रिर्भृगूणामित्यत्र, अपां चैवोपरिष्टादित्यत्र च विभज्य पठतः सामश्रमितर्कालङ्कारौ।

C. कर्मप्रदीपवचनमिदम्—
यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ इति १।१।८।

---

1. 'शेष' नास्ति च। 2. 'एतस्य प्र' नास्ति घ। 3. 'उक्तम्' नास्ति ख। 4. 'तस्मात्' नास्ति च। 5. '-कार्यो' ख। 6. नास्ति च। 7. 'यदि सन्निधानुपेता न खुवताऽपि' ख। 8. 'कुतः' नास्ति च। 9. 'कुतः' नास्ति च। 10. 'अपां' नास्ति च। 11. '-शब्दाद्' ख। 12. 'चरावभ्यङ्गं रेव-' ख। 13. 'एवं' नास्ति च। 14. 'ततः' नास्ति ख।

(A) '¹भद्रान् नः श्रेय इत्यनेन मन्त्रेण निगिरेत्, कथम्'* ? असंस्वादं सम्यक् स्वादमनुपलभमानः, दन्तैरसंभिन्दन्नित्यर्थः ।

एवं त्रिः ॥ १५ ॥

"²ऋज्वर्थम् । प्रथमेन सह त्रित्वम्, कुतः ? उत्तरसूत्रबलात्"* ।

तूष्णीं चतुर्थम् ॥ १६ ॥

³ऋज्वर्थम्(B) ।

भूय एवावदाय(C) कामं तत्र संस्वादयेरन् ॥ १७ ॥

भूय एव पुन⁴रेव यथेष्टमवदाय काममिच्छया'* "तत्र तस्मिन्नवसरे ⁵संस्वादयेरन्"* दन्तैरपि संभिद्य भक्षयेरन्नित्यर्थः ।

आचान्तोदकाः प्रत्यभिमृशेरन् मुखं शिरोऽङ्गानीत्यनुलोम-ममोऽसीति ॥ १८ ॥

---

A. मन्त्रस्तु—

ॐ भद्रान् नः श्रेयः समनैष्ट देवा
स्त्वयावसेन समशीमहि त्वा ।
स नो मयोभूः पितवाविशस्व
शं तोकाय तन्वै स्योनः स्वाहा ॥ इति ।

मन्त्रब्राह्मणम् २।१।१३ ।

अस्य व्याख्या—हे देवाः, यूयम्, नोऽस्माकं भद्रान् कल्याणान् श्रेयः प्रशस्यं धनञ्च समनैष्ट सम्यक् प्रापयत, श्रीह्यादन्नावसेन त्वया अवसं पाथेयमन्नम्, त्वयाऽवसेन हेतुभूतेन तव लाभार्थमित्यर्थः । त्वा त्वां समशीमहि अश्याम, अतो हे पितो शरीरस्य पालकान्न, उक्तलक्षणस्त्वं मयोभूः सुखस्य भावयिता सुखकरः, नोऽस्मान् अस्मदुदरम् आविशस्व प्रविश । किञ्चाऽऽविश्य स्योनः सुखकरः शं तोकायापत्याय, तन्वा अस्मच्छरीराय, भव सुखकारी भव । स्वाहा इदं हविः स्वाहुतमस्तु । सामश्रमी तु—'पितवाविशस्व' इत्यत्र पपाठ व्याचख्यौ च पिता पालक इवेति ।

B. उपस्तरणादिकं सर्वमत्रापि पूर्ववदेव भवति केवलं निगरणे मन्त्रपाठो नास्तीत्यर्थः ।

C. अत्रैव सूत्रमेकं समाप्य काममित्यादि सूत्रान्तरं कल्पयतः सामश्रमितर्कालङ्कारौ ।

---

1. नास्ति च । 2. नास्ति च । 3. 'ऋज्वर्थं' च । 4. '-रेवावदायेच्छया' ख । 5. 'तत्र' नास्ति च । 6. नास्ति च ।

आचान्तोदकाः [1]कृतोदकाचमनाः, (A)[2]अमोऽसीतिमन्त्रेण मुखं शिरोऽङ्गान्यङ्गानि बाहुजठरादीनि[3]* अनुलोमं लोम्नामनुकूलम्, प्रत्यवयवे मन्त्रमभ्यस्याभिमृशेरन् संस्पृशेरन्। "श्रुते (B) मन्त्रप्रयोगाधिकारात् आचान्तोदका इति वाच्यम्, न; इह आचान्तोदका इति वचनात् प्राक् प्रतिप्राशनमाचमनं न स्यादिति दर्शयति; एवञ्च प्रागेवाऽऽचमनाविधानादुच्छिष्टत्वमेव न स्यादिति गम्यते, यथा प्राणाग्निहोत्रे सोमभक्षे(C) चेति। अत्र सन्देहः—किमभिमर्शनमन्त्रस्य प्रत्यवयवमावृत्तिः स्यादुत सकृद् वचनमिति? आवृत्तिः स्यादिति प्रमः, कुतः? अवयवभेदात्। 'भेदे मन्त्रावृत्तिरि'ति वचनात् 'प्रत्यभिमृशेरन्नि'ति सूत्रे प्रतिशब्दप्रयोगाच्च। कथं नाम? प्रत्यवयवं मन्त्रमभ्यस्याभिमृशेरन्निति, अन्यथा प्रतिशब्दस्याऽऽनर्थक्यं स्यादिति"*।

---

A. मन्त्रस्तु—

ॐ अमोऽसि प्राण तदृतं ब्रवीम्यमा
ह्यसि सर्वमनुप्रविष्टः।
स मे जरां रोगमपमृज्य शरीरा-
दमाम एधि मा मृथा न इन्द्र (स्वाहा)॥ इति।

मन्त्रब्राह्मणम् २।१।१४। विनियोगस्तु गोभिलपरिशिष्टे श्राद्धसूत्रेऽपि २।५।

अस्य व्याख्या—हे प्राण श्वासोच्छ्वासवायो, त्वम् अमोऽसि साक्षाद् रोगघ्नो भवसि, यस्मादेवं तस्माद् ऋतं ब्रवीमि सत्यमेव वदामि। सर्वं कृत्स्नम् अमं रोगजातम् अनुप्रविष्टोऽसि, अथवा सर्वं कृत्स्नं चक्षुरादीन्द्रियजातम् अनु पश्चाच्छरीरे प्रविष्टस्त्वम् असीति योज्यम्। किञ्च स त्वं मे मम शरीरसकाशाज्जरां वयोहानिप्रयुक्तां शरीरपरिणामलक्षणाम्, रोगं शरीरपीडाकिर-ज्वरादिकं च। अथवा जरालक्षणं रोगम् अपमृज्यापमार्जयित्वा विनाशय। हे इन्द्र चक्षुरादीन्द्रिय-स्वामिन् मुख्यतरप्राण, त्वं नोऽस्माकम् अमाम एधि अपगतरोगो भव। किञ्च मा मृथाः मरणं मा प्राप्नुहि, देहान्मा विनिर्गच्छेत्यर्थः।

B. 'श्रुतेर्मन्त्रप्रयोगाधिकारात्' इत्येवं पाठः साधीयानिति सम्भावयामः।

C. तथाचोक्तं गृह्यासंग्रहे—

मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च।
अनुच्छिष्टो भवेद् विप्रो यथा वेदविदो विदुः॥
प्राणाहुतिषु सोमेषु मधुपर्के तथैव च।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः॥ गृ० सं० २।६६-६७।

---

1. 'कृताचमनाः' च। 2. नास्ति च। 3. 'अङ्गानि बाहुजघनादीनि प्रतिमन्त्राभीवात्' च।

**एतयैवाऽऽवृता श्यामाकयवानाम् ॥ १९ ॥**

[1]अनयैव व्रीहियज्ञक्रियया[1]* श्यामाकानां यवानाञ्च स्वे स्वे काले होमप्राशनादिकं कुर्यादिति[2] शेषः ।

अयं तु विशेषः-

**(A)अग्निः प्राश्नातु प्रथम इति श्यामाकानाम् ॥ २० ॥**

हविरुच्छिष्टशेषं प्राशयेदिति [3]वर्तते ।

**(B)एतमुत्यं मधुना संयुतं यवमिति यवानाम् ॥ २१ ॥**

'तदेवानुवर्त्तते'[4]*, समानमन्यत् । [5]अयञ्च श्यामाकयज्ञो वैखानसविषयः । कुतः ? [6]तस्य ग्राम्यप्रतिषेधात्—

---

A. मन्त्रस्तु—

ॐ अग्निः प्राश्नातु प्रथमः स हि वेद यथा हविः ।
शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ( स्वाहा ) ॥ इति ।

सामसन्त्रब्राह्मणम् २।१।१५ ।

अस्य व्याख्या—अग्निः देवानां प्रथमः इतरसोमादिदेवेभ्यः पूर्वं प्राश्नातु व्रीह्यादिरूपं हविर्भक्षयतु । स हि स खल्वग्निः हविः उक्तलक्षणं द्रव्यम्, यथावृत्तं वेद जानाति । यत एवमतः प्रथमं प्राश्नात्विति । विश्वचर्षणिः वैश्वानरः अस्मभ्यम् ओषधीर्व्रीहियवादिकाः शिवाः सुखकराः कृणोतु करोतु । इति ।

B. मन्त्रस्तु—

ॐ एतमुत्यं मधुना संयुतं यवं
सरस्वत्या अधिमनावचकृषुः ।
इन्द्र आसीत् सीरपतिः शतक्रतुः
कीनाशा आसन्मरुतः सुदानवः ( स्वाहा ) ॥ इति ।

सामसन्त्रब्राह्मणम् २।१।१६ ।

अस्य व्याख्या—एतं पुरतो वक्ष्यमाणं त्यं तं प्रसिद्धं यवं हविःशेषरूपम्, मधुना मधुरसेन, संयुतं संयुक्तम्, भक्षयामीति शेषः । सरस्वत्या नद्याः, तीरे इति शेषः । अधिमनौ मननिमित्तभूते मनोरथे ; यद्वा सरस्वत्या अधि उपरि, प्रान्त इत्यर्थः । अचकृषुः यवावाप्त्यर्थं भूविलेखनम् अथाकृषुर्लं कृतवन्तः, के किमकुर्वन्तेत्युच्यते—पूर्वकर्षणसमये शतक्रतुर्बहु-

---

1. 'एतयैव व्रीहियज्ञावृता' ख । 2. 'इति शेषः' नास्ति ख । 3. 'वर्तते' नास्ति ख । 4. नास्ति ख । 5. 'अयञ्च' नास्ति ख । 6. चिह्नितांशो नास्ति ख ।

शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः(A) ॥

इति । श्रुतेश्च 'श्यामाकैर्वनी वर्षास्वि'ति । एवं चैतस्मादेवोदाहरणलिङ्गाद् व्रीहियवानां नवयज्ञौ गृहिणा शरद्वसन्तयोः कर्तव्यौ, वनिना वर्षासु श्यामाकानामिति गम्यते"* । तथाच श्रुतिः—'गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत श्यामाकैर्वनी वर्षासु, 'आपत्कालेऽप्यतोऽप्यन्येन पुराणैर्वे'ति(B)'* । तत्रापि पौर्णमासेनेष्ट्वा दर्शमकृत्वाऽन्तरा नवयज्ञं न कुर्यात् । [2]कुतः ?

नैकस्मिन् कर्मणि तते कर्मान्यत् तायते यतः(C) ।

इति वचनात्(D) ।

इति "भट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये"* तृतीयप्रपाठकस्य अष्टमी कण्डिका ।

---

यज्ञो बहुकर्मा चेन्द्रो देवः सीरपतिः कर्षकस्वाम्यासीत् । तथा सुदानवः शोभनदाना मरुत इन्द्रानुचराः कीनाशाः कर्षका आसन् । स्वाहा स अस्मिन् हुतमस्तु । इति ।

सामश्रमी तु 'अधिवनावचर्कृषि' इत्येवं पपाठ मन्त्रम्, 'वना वननीयया सरस्वत्या स्तुत्या मन्त्र्य, अधिअवचर्कृषि अतिशयेनाधिकृत्य भुङ्क्ष्वेति भावः' व्याचख्यावप्येवम्, परमस्य प्रामाण्ये भगवन्तोऽनूचानाः प्रमाणम् ।

A. कर्मप्रदीपः ३।७।१० ।

B. प्रमाणीकृतेयं श्रुतिश्चन्द्रकान्तेन 'इति च ब्राह्मणं भवती'त्युपोद्घातेन ।

C. कर्मप्रदीपः १।४।३ द्रष्टव्यम् पृ० ७८ ।

D. एवञ्च परिशेषेन इक्षुप्रभृतयो विनैव नवयज्ञं ग्रहणीयाः । प्रमाणमत्र गृह्यासंग्रहः—

इक्षवः सर्वमल्वाश्च कोद्रवा वरटैः सह ।
अकृताग्रयणा भक्ष्या येषां नोक्ता हविर्गुणाः ॥ (गृ० स० २।७८)

इति । गोधूमादिष्वपि अनुपदेशात् नास्त्येव नियमः । तदप्याह स एव—

नवयज्ञेऽधिकारस्थाः श्यामाका व्रीहयो यवाः ।
नाश्नीया न च हुत्वैवमन्येष्वनियमः स्मृतः ॥ इति गृ० स० २।७९ ।

अथाऽऽश्वयुजीकर्मप्रयोग उच्यते—आश्वयुज्यां पौर्णमास्यामाश्वयुजीकर्म कर्तव्यम् । प्रथमे प्रयोगेऽनुज्ञां गणेशपूजनं नान्दीमुखश्राद्धं च कुर्यात् । आश्वयुजि मासे पौर्णमास्यां प्रातरौपासनं

---

1. नास्ति घ । 2. 'कुतः' नास्ति घ । 3. नास्ति च ।

हुत्वा आश्वयुजीस्थालीपाकं करिष्ये इति सङ्कल्प्य सर्वं पार्वणस्थालीपाकवत् कुर्यात्। तत्र विशेषः पात्रासादने—अग्नेरुत्तरतो दधिमिश्रितं घृतं घृतमिश्रितं पयो वा पृषातकाख्यं चर्वर्थं पयश्च व्रीहि-शालि-मुद्ग-गोधूम-सर्षप-तिल-यवादिसर्वौषधिमिश्रितान् लाक्षामयान् मणींश्चाऽऽसादयेत्। होमकालेऽग्नेरैशान्यां पृषातकं स्थापयेत्। निर्वापकाले रुद्राय त्वा जुष्टं निर्वपामि। पयसि चरुं श्रपयेत्। आज्यभागान्तेऽवदानधर्मेण पायसचरुमवदाय आ नो मित्रेति प्रथमं हुत्वा पुनश्चरुमवदाय मा नस्तोक इत्यनेन द्वितीयं जुहोति। आ नो मित्रेत्यस्य प्रजापतिऋ॑षिर्गायत्रीच्छन्दो रुद्रो देवता चरुहोमे विनियोगः। ततो मन्त्रः स्वाहा, इदं रुद्राय न मम। अथाष्टभिर्गोनामभिर्यथापठितैराज्येन जुहुयात्, काम्याऽसि स्वाहा। इदं काम्यायै न ममेति देवतोद्देशः सर्वत्र। एवं प्रियाऽसि स्वाहा, हव्याऽसि स्वाहा, ईडे स्वाहा, रन्मे स्वाहा, सरस्वति स्वाहा, महि स्वाहा, विश्रुते स्वाहा। ततः स्विष्टकृदादिपूर्णपात्रदक्षिणादानान्तेऽग्निं प्रदक्षिणीकृत्य पूर्वमासादितं पृषातकमानीय मन्त्रेण ब्राह्मणानवेक्षयित्वा यजमानः स्वयमवेक्षते। अस्य मन्त्रस्य प्रजापतिऋ॑षिस्त्रिष्टुप् छन्दः शुक्रो देवताऽवेक्षणे विनियोगः। तच्चक्षुरिति अवेक्षणाय ब्राह्मणानां सन्निधानाभावे पृषातकं स्वयं पश्येत्। ब्राह्मणानिति बहुवचनादवेक्षकात्रयः। बहुवचनस्य त्रित्वे पर्यवसानस्य कपिञ्जलाधिकरणे सिद्धान्तितत्वात्। ततो ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा जातुषान् सर्वौषधिमिश्रान् मणीनाबध्नीरन् स्वस्त्ययनाय स्वयं गाः पृषातकं प्राशयित्वा सहवत्सा विवासयेत्। स्वस्ति ह्याऽऽसां भवति। आबध्नीरन्निति बहुवचनाद् यजमानपुत्रादीनां बाहौ मणिबन्धनम्। इति। "लाक्षामयमणिबन्धनमपि नित्यं न तु काम्यं स्वस्त्ययनार्थमिति तु नाधिकारविधिः, वाक्यभेदप्रसङ्गात्। किन्तु मणिबन्धनस्तावकम्। एतेन 'मणिबन्धनं काम्यम् अकृतेऽपि न दोषः' इति केषाञ्चिदुक्तिः परास्ता, निर्मूलत्वात्।" इत्येवं वदति सुब्रह्मण्यः। तर्कालङ्कारोऽपि "स्वस्त्ययनार्थमिति मणिबन्धनं स्तौति, न फलविधिः, वाक्यभेदापत्तेः। कथं नाम ? मणीनाबध्नीरन्, तच्च स्वस्त्ययनार्थं भवति इति यदि द्वावप्यर्थौ विधित्सितौ, भिद्येत वाक्यम्" एवमाह। भाष्यकारमतं तु यद्यपि नित्येऽपि काम्यसम्बन्धो दृश्यते तथाऽपि रक्षामणिमूलिकाप्रतिसरादिबन्धस्य लोके भूयसा काम्यतैव दृश्यते अतोऽस्य काम्यतैव भवितुमुचितेति, तत्र भगवन्तोऽनूचानाः प्रमाणम्।

अथ नवयज्ञप्रयोगः। स च नित्यः, गौतमेन नित्यसंस्कारमध्ये परिगणितत्वात्। स च नूतनव्रीहिभिः कर्त्तव्यः, नवयज्ञ इत्यन्वर्थसंज्ञाकरणात्। नवयज्ञस्य प्रथमारम्भे नान्दीमुखश्राद्धम्। ततः प्राणानायम्य सङ्कल्पं करोति, नवान्नसंस्कारार्थं नवयज्ञं करिष्ये इति। ततोऽग्निमुपसमाधाय सर्वं पार्वणस्थालीपाकवत् कुर्यात्। पात्रासादनकाले प्रकृतिवत् पात्राण्यासाद्य नवान् तण्डुलान् पयश्चाऽऽसादयेत्। 'इन्द्राग्निभ्यां त्वा जुष्टं निर्वपामी'ति नवानां तण्डुलानां निर्वापः। पयसि चरुश्रपणम्। आज्यभागान्ते नवचरुमादाय जुहोति, इन्द्राग्निभ्यां स्वाहा, इदमिन्द्राग्निभ्यां न मम। चरुं हुत्वा शतायुधायेत्येतत्प्रभृतिभिश्चतस्र आज्याहुतीर्जुहोति। एषां चतुर्णां मन्त्राणां प्रजापतिऋ॑षिराद्यस्य पङ्क्तिश्छन्दस्त्रयाणां त्रिष्टुप् छन्दः इन्द्रो देवता ग्रीष्मादय इद्वत्सराश्च

देवता आज्यहोमे विनियोगः। शतायुधायेति चतुर्भिर्मन्त्रहोमः प्रत्याहुतयस्तु इदमिन्द्राय। इदं देवेभ्यः। इदं ग्रीष्मादिभ्यो न मम। इदमिद्वत्सरादिभ्यो न ममेति। ततः स्विष्टकृदादिकं कुर्यात्। प्राशनकाले यजमानस्यार्थेऽग्रेद् वामहस्तेन दक्षिणहस्ते सकृदुपस्तीर्य मेक्षणेन हविरुच्छिष्टस्य मध्यात् पूर्वार्धाच्चावदाय सकृदभिघारयति। पत्न्यार्थेऽग्रेत् सकृदुपस्तीर्य मेक्षणेन हविरुच्छिष्टस्य मध्यात् पूर्वार्धाच्चावदाय सकृदभिघारयति। अत्रोपस्तरणाभिघारणमुदकेन न त्वाज्येन। एवमवत्तं हविर्भद्रान् नः श्रेय इति मन्त्रेणाऽऽस्वादनमकुर्वन् दन्तैरसम्भिन्दन् भक्षयेत्, पूर्ववदुपस्तीर्यावदायाभिघार्य मन्त्रेण द्वितीयं भक्षयेत। पुनः पूर्ववत् कृत्वा मन्त्रेण तृतीयम्। एवममन्त्रकं चतुर्थम्। अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो व्रीहयो देवता नवव्रीहिहविर्भक्षणे विनियोगः। ॐ भद्रान् न इति मन्त्रः। ततो भूय एवावदाय काममास्वादयन् भक्षयेत्। ये चान्येऽपि ब्राह्मणाः सन्निहिताः स्युस्तेभ्यो दत्त्वा यजमानो भक्षयेत्। तेषामपि पूर्ववद् भक्षणविधिः। परन्तूपस्तरणावदानाभिघारणानि यजमानकर्तृकाणि, सर्वे कृताचमना मुखं शिरोऽङ्गानि चानुलोमं पृथग'मोऽसी'ति मन्त्रेणाभिमृशेरन्। अङ्गानीत्येतद्बहुवचनस्य त्रित्वे पर्यवसानाज् जठरं दक्षिणबाहुं वामबाहुं पृथक् पृथगभिमृशेतेति यावत्। अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः प्राणो देवताऽङ्गाभिमर्शने विनियोगः। 'ॐ अमोऽसी'ति मन्त्रः। हविःशेषं यजमानो भोजनकाले भक्षयेत्। वामदेव्यगानं ब्राह्मणभोजनम्। इति नवव्रीहियज्ञप्रयोगः। वर्षर्तौ नवश्यामाकानां पयसि चरुः पूर्वोक्तनवव्रीहियज्ञवत् कर्तव्यः। वसन्तर्तौ यवानां चरुर्नवयज्ञवत् कर्तव्यः। तत्र श्यामाकहविःशेषभक्षणे मन्त्रान्तरम् 'अग्निः प्राश्नातु प्रथम' इति। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दो जठराग्निर्देवता श्यामाकचरुप्राशने विनियोगः। यवहविःशेषभक्षणे 'एतमुत्य'मिति मन्त्रः। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्जगती छन्द इन्द्रो देवता यवचरुप्राशने विनियोगः। इति। व्रीहियज्ञो यवयज्ञश्च गृहस्थानाम्, श्यामाकयज्ञो वानप्रस्थानामिति व्यवस्था। इति नवयज्ञप्रयोगः।

---

## तृतीयप्रपाठकस्य नवमी कण्डिका

—— :o: ——

**आग्रहायण्यां बलिहरणम् ॥ १ ॥**

[1]अग्रहायणो मार्गशिरः, तस्य पौर्णमासी आग्रहायणी। तस्यामाग्रहायण्यां बलिहरणं[1]* कर्त्तव्यमिति शेषः।

**तत् श्रावणेनैव व्याख्यातम् ॥ २ ॥**

तद् बलिहरणं श्रावणेन बलिहरणविधिना 'पुरस्ताच्छालाया [2]उपलिप्य[2]' इत्येवमादिना [ सू० ३।७।२ ] व्याख्यातम्।

अयमत्र विशेषः—

**(A)नमः पृथिव्या इत्येतं मन्त्रं न जपति ॥ ३ ॥**

[3]ऋज्वर्थम्। एवञ्च[3]* श्रावणविध्यतिदेशाद् अस्य बलिहरणस्य कालोऽपि 'स एव[4]*(B)। इह तूपन्यासमात्रमेवैतत्।

**अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा दर्भान् शमीं वीरणां फलवतीमपामार्गं शिरीष[5]मेतान्याहारयित्वा तूष्णीमक्षतसक्तूनामग्नौ कृत्वा ब्राह्मणान् स्वस्ति वाच्यैतैः सम्भारैः प्रदक्षिणमग्न्यागारात् प्रभृति धूमं शातयन् गृहाननुपरीयात् ॥ ४ ॥**

[6]सूत्रादौ पदविपर्ययेण व्याख्या। प्रातराहुतिं हुत्वा पूर्वाह्ण एवेति प्रातराहुतिं हुत्वेति प्राप्तस्तत् पुनरुच्यते तस्मात् तदुक्तं पुरस्तादेव। अथशब्द आनन्तर्यार्थः[6]*। प्रातराहुतिं

---

A. मन्त्रस्तु—प्रागुक्तो द्रष्टव्यः। ( पृ० ६६९ )

B. यथा श्रवणाकर्मणि सायंसन्ध्यां नित्यहोमञ्च निर्वर्त्य बलिहरणं क्रियते तद्वदत्रापि कर्त्तव्यमिति आचार्यः।

---

1. नास्ति च। 2. 'उपलिप्य' नास्ति च। 3. नास्ति घ। 4. 'तदुक्तवद् द्रष्टव्यः' ख। 5. '-मिलेता-' च। 6. नास्ति च।

हुत्वा अथानन्तरं पूर्वाह्ण एव [1]तावद् दर्भाहरणादि [2]कारयेत्; अन्याभावे स्वयं कुर्यात्। [3]पूर्वोक्तमवसथिकं स्थण्डिलोपलेपनेध्मोपकल्पनादि, तथौपवसथिकं कृत्वा अथ दर्भाहरणादि कुर्यादित्येवमथशब्दो योजयितुं शक्यत इति सत्यम्, किन्तु प्रागासादितानामाज्यादीनामुपलिप्तस्य च धूमशातनेन विनाशदोषदर्शनात् पूर्वव्याख्यैव युक्ततरेति मन्यामहे[3]*। वीरणा वीरण [4]इति यः प्रसिद्धः। फलवती[4]* बदर्याः फलयुक्ता शाखा फलवती। [5]तथाचोक्तम्—

सफला बदरीशाखा फलवत्यभिधीयते।
घना विसिकताशङ्काः स्मृता जातशिलास्तु ताः(A) ॥ इति।

प्रसिद्धान्यन्यानि। एतानि दर्भादीनि षट् कस्यचित् सकाशादाहारयित्वा अन्यस्याऽऽहर्तुरभावे स्वयमप्याहृत्य। अक्षतसक्तव उक्ताः[5]*। अक्षत[6]सक्तूनामित्यत्र[7]यवार्था षष्ठी। [8]दर्भाद्याहरणानन्तरं सक्तूनभिनिर्वर्त्य[8]* तेषामेकदेशं हस्तेन [9]अग्नौ कृत्वा प्रक्षिप्य[9]* तूष्णी[10]ममन्त्रकम्। के ते येषामग्नौ करणम्? केचित् तावदाहुः, प्रत्यहं वर्षासु बल्यर्थानाम् अक्षतसक्तूनां शिष्टानां प्रतिपत्तिरियमिति। तदयुक्तम्; न हि उपक्षतानामसंवृतानां प्रतिपत्तिर्युज्यते, असन्निधानात्, नित्यानित्यविरोधाच्च। नित्यं सक्तुभिर्बलिहरणम्, अनित्यस्य बलिशेषस्य नानेन सह सम्बन्धः। (B) कस्तर्ह्यस्यार्थः? उच्यते—दर्भाद्याहरणानन्तरं सक्तूनभिनिर्वर्त्य[10]* प्रजापत्युद्देशेनाग्नौ कृत्वा [11]प्रक्षिपेत्। एवं 'तूष्णीं'ग्रहणमर्थवद् भवति[11]*। ब्राह्मणान् स्वस्ति वाच्य बहुवचनात् त्रिप्रभृतिभ्यो यथाशक्ति किञ्चिद् दत्त्वा एतैर्दर्भादिभिरेकीकृतैः सम्भारैः प्रदक्षिणं प्रादक्षिण्येन [12]आग्न्यागारात् प्रभृति[12]* अग्नेरागारं गृहम्, ततः प्रभृति अग्निशालाया आरभ्येत्यर्थः।

---

A. कर्मप्रदीपः ३।९।१०।

अस्य विवृतौ शिवरामः—"सूत्रे या फलवत्युक्ता सा सफला या बदरीशाखा सा फलवतीत्यभिधीयते उच्यते। एवं जातशिलाश्च इति सूत्रे जातशिला या उक्तास्तास्तु घनाविसिकताशङ्का जातशिलाः स्मृताः। घना दृढाः, विसिकताशङ्काः विगता सिकताशङ्का याभ्यस्ताः, सिकता वालुका, शिलापाषाणः" इत्येव मुक्तवान्।

B. अत्र तर्कालङ्कारः—"नित्यप्रकरणाम्नानात् गौतमेनाऽऽग्रहायणीकर्मणः पुरुषसंस्कारमध्ये

---

1. 'तावद्' नास्ति च। 2. 'कुर्यात्' च। 3. नास्ति च। 4. नास्ति च। 5. नास्ति च। 6. '-सक्तूनामा-' ख। 7. '-यवलवणा' ख। 8. नास्ति ख। 9. नास्ति च। 10. '-निर्वि' च। 11. 'प्रक्षिप्य' च। 12. नास्ति च।

भित्तिपटलादिसंलग्नं धूमं शातयन् सर्व्वान् गृहान् 'अनुपरीयात्'* अनुपरिपाट्या इयात् गच्छेत्।

## उत्सृजेत् कृतार्थान् सम्भारान् ॥ ५ ॥

[1]कृतोऽर्थः प्रयोजनं धूमशातनाख्यं यैः [2]सम्भारैस्ते कृतार्थाः, तान् सर्वान् उत्सृजेत्; अर्थादुत्सर्गप्राप्तावानन्तर्यार्थम् 'उत्सृजेदिति वचनम्। तेन धूमशातनादूर्ध्वं क्षणमपि गृहे न धारयेदि[4]त्यर्थः।

एतस्मिन् क्रमे स्थण्डिलो[6]पलेपनाद्यौपवसथिकं कृत्वा—

## जातशिलासु मणिकं प्रतिष्ठापयति वास्तोष्पत इत्यनेन द्विकेन (A)सर्चेन ॥ ६ ॥

जातशिलाः [7]शर्कराभ्यो या अन्याः। उक्तञ्च—

'घना [8]विसिकताशङ्काः स्मृता जातशिलास्तु ताः।' (B)इति।

बहुवचनात् त्रिप्रभृतयः। [9]तासु जातशिलासु तूर्णीम् अवस्थापितासु[9]* मणिकं महदुदकभाण्डम्। (C)[10]वास्तोष्पत इत्यनेन[10]* सामद्विकेन प्रकृतत्वादनयैवर्चा सह

---

पठितत्वाच्च अस्य नित्यत्वावगतेरेतदक्षतसक्तूनामग्नौ करणमनित्यमित्यसमीचीनं वचनम्। तस्मादयमेवार्थ आदरणीय" इति, तत्र भगवन्तोऽनूचानाः प्रमाणम्।

A. 'सर्चेन'—भागोऽयं नास्ति सामश्रमिमुद्रितपुस्तके।

B. वचनमिदं कर्मप्रदीपस्येत्यनुल्लिख्योपन्यस्यति नकालङ्कारोऽपि स्वभाष्ये।

C. मन्त्रस्तु—

ॐ वास्तोष्पते ध्रुवा स्थूणाऽंसत्रं सोम्यानाम्।
द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनां सखा ॥ इति।

सामसंहिता पूर्वार्चिकः ३।२।९।३।

अस्य व्याख्या—हे वास्तोष्पते गृहपते, स्थूणा गृहाधारभूतस्तम्भः, ध्रुवा स्थिरा भवतु। सोम्यानां सोमार्हाणां सोमसम्पादिनां वा अस्माकम्, अंसत्रम्, अंसत्राणम् अंसोपलक्षितस्य कृत्स्नस्य शरीरस्य त्रायकं बलं भवतु। अपिच द्रप्सः द्रवणशीलः सोमः तद्वान्, शश्वतीनां बह्वीनां पुराम् असुरपुरीणाम्, भेत्ता विदारयिता, एवम्भूतः मुनीनाम् ऋषीणामस्माकं सखा मित्रभूतो भवतु। इति।

---

1. नास्ति च। 2. 'कृतः' नास्ति ख। 3. 'सम्भारैः' नास्ति च। 4. 'उत्सर्गवचनम्' ख। 5. 'अर्थः' नास्ति च। 6. 'उप' नास्ति च। 7. 'शर्कराभिन्नाभ्यो' ख। 8. 'विहिकता-' च। 9. नास्ति च। 10. नास्ति च।

सर्वेन प्रतिष्ठापयति । 'ननु ब्राम्तोष्पत इति विनिर्देशात्रिन्येतेनेत्यवाच्यम् ? न'* ; क्रमार्थमेतेनेत्यु"क्तम् ; एतेन एवंभूतेन यथाक्रमोपन्यस्तेनेत्यर्थः । तेन "किम् ? पूर्वं तावद् त्रिकमुच्चार्य पश्चाद्दचमुच्चारयेत् । 'अन्यथा सन्देहबहुत्वं स्यात्—किं "पूर्वम् ऋक् स्यात् उत प्रतिसाम "उत मध्ये "उतोपरिष्टाद्राहोस्वित् सूत्रन्यायेन "उभयत इति" ।

## (A)द्वावुदकुम्भौ मणिक आसिञ्चेत् समन्या यन्तीत्येतयर्चा ॥७॥

"द्वौ उदकुम्भौ उदकपूर्णौ घटौ (B)समन्या यन्तीत्येतयर्चा"* मणिके आसिञ्चेत् । "नन्वेतयेति त्रिनैव सिद्धत्वात् किमर्थमुच्यते ? आह"* द्वितीयमप्युदकुम्भमेतयैवाऽऽसिञ्चेदि"त्येतयर्चा । तथाचोक्तम्—'प्रतिकुम्भमृचं पठेदि'ति" । "स एव

A. 'एकेण द्वावुदकुम्भौ' इत्येवं पपाठ सामश्रमी ।

B. ऋक् च—

ॐ समन्या यन्त्युपयन्त्यन्याः
समानमूर्वं नद्यः पृणन्ति ।
तमू शुचिं शुचयो दीदिवांस-
मपां नपातं परितस्थुरापः ॥ इति ।

ऋक्संहिता २।४।३९।३ ।

अस्या व्याख्या—अन्या वर्षा आपः संयन्ति भूम्या सङ्गच्छन्ते, अन्याश्च पूर्वं तत्रावस्थिता उपयन्ति उपगच्छन्ति । ताः सर्वा आपः समानं सहनद्यो नदीभूता ऊर्वं समुद्रमध्ये वर्तमानं बडवानलं पृणन्ति ( पृण प्रीणने तौदादिकः ) । तमु तमेवापां नपातं शुचिं निर्मलं दीदिवांसं दीप्यमानम् ( दीदेतिश्छान्दसो दीप्तिकर्मा ) एवम्भूतं शुचयः शुद्धा आपः परितस्थुः परिवृत्य तिष्ठन्ति ; एष हि वैद्युताग्निरूपेण मेघे वर्तमानोऽस्मानजीजनदिति बुद्ध्या बडवानलरूपेण वर्तमानं तं पर्युपासत इत्यर्थः । यद्वा अन्या एकधनाख्याः आपः संयन्ति चात्वालोत्करयोर्मध्ये वसतीवरीभिः संगच्छन्ते, अन्या वसतीवर्याख्या आपश्चोपयन्ति उपगच्छन्ति एकमत्यं प्राप्ता भवन्ति । एताश्च मिलित्वा यज्ञं साधयन्त्यस्तत्साध्यवृष्टिद्वारा नद्यो भूत्वोर्वं पृणन्तीत्यादि समानम् । ( एवं हि आपो वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्यामः । (ऐ० ब्रा० २-२०) इत्यादिकं ब्राह्मणविनियोगश्चानुगृह्यते ) इति सायणाचार्यकृता ।

1. नास्ति घ । 2. '-च्यते' ग । 3. 'किम्' नास्ति घ । 4. 'इतरथा' घ । 5. 'पूर्वं स्यात्' घ । 6. 'वा' घ । 7. 'वोप-' घ । 8. 'उभयत' नास्ति घ । 9. 'सन्देहः स्यादिति' इत्यधिकं घ । 10. नास्ति घ । 11. नास्ति घ । 12. '-त्येवमर्थम्' घ । 13. 'श्रुतेः' इत्यधिकं घ । 14. नास्ति घ ।

मणिकसंस्कारः। यवश्च यत् पात्तिकमभ्युत्तणग्रहणमुक्तं[1]*(A) [1]तदेतस्मान्मणिकाद्‌ ग्राह्यम्, यच्च पात्तिकमेवोद्‌धानसन्निधौ बलिहरणमुक्तम् उद्‌धानस्येति[1]*(B)। तदेतस्य सन्निधौ देयम्[2]इति। [3]अत्र सन्देहः—आग्रहायण्या ऊर्ध्वं मणिको विनष्टः किमेतमेव कालं प्रतीक्ष्य पुनः संस्कार्यः उत विनाशादूर्ध्वं यदैव सञ्जातस्तदैवेति? उच्यते—यदैव सम्पद्यते तदैवेति ब्रूमः। कुतः?

नष्टो विनष्टो मणिकः शिलानाशे तथैव च।

तावदाहृत्य संस्कार्यः प्रतीक्षेत्नाऽऽग्रहायणीम् (C)॥

इति वचनात्। पुनरपि सन्देहः—प्रत्यब्दमावृत्तावाग्रहायण्यां किमपि नष्टोऽपि पुनः संस्कार्यः उत कश्चिद् विशेषोऽस्ति? अस्ति विशेषः, कीदृशः? उच्यते—कुम्भसेकमात्रं कुर्यात्, न तु पूर्वमपीति।

तथाचोक्तम्—

दृढश्चेदाग्रहायण्यामावृत्तावपि कर्मणः।

कुम्भौ मन्त्रवदासिञ्चेत् प्रतिकुम्भमृचं पठेत्॥ (D)इति[3]*।

[4]यदुक्तमाग्रहायण्यां बलिहरणम्[5]इति तस्यायमुपक्रमकालः।

तस्मिन् कृते—

## प्रदोषे पायसश्चरुः॥ ८॥

[6]आग्रहायण्यै त्वेति निर्वापः[6]*।

## तस्य जुहुयात् (E)प्रथमा ह व्युवास सेति॥ ९॥

[7]ऋज्वर्थम्[7]*।

A. अपि वा कुम्भाद्‌ वा मणिकाद्‌ वा गृह्णीयात्। सू० १।१।२६। (पृ० २७)।
B. द्रष्टव्यम् सू० १।४।९। (पृ० ८४)।
C. कर्मप्रदीपः ३।९।११।
D. कर्मप्रदीपः ३।९।१९।
E. मन्त्रस्तु—

ॐ प्रथमा ह व्युवास सा धेनुरभवद्‌ यमे।
सा नः पयस्वती दुहा उत्तरामुत्तरां समाम्॥ इति।

मन्त्रब्राह्मणम् २।२।१।

अस्य व्याख्या—इयं हवि हवनक्रिया प्रथमा मुख्या, अत्र धेनुः—अचिरप्रसूता गौः, गोदुग्धम् इति

1. 'मणिकाद्‌ वा गृह्णीयादिति। पूर्वमुक्तस्य मणिकस्यायं संस्कारः। उद्‌धानस्येति पात्तिकं बलिहरणम्' च। 2. 'इति' नास्ति च। 3. नास्ति च। 4. 'यत् तदुक्तमा-' ख। 5. 'इति' नास्ति च। 6. नास्ति ख। 7. नास्ति च।

## स्थालीपाकावृताऽन्यत् ॥ १० ॥

[1]उक्तार्थम् ।

## पश्चादग्नेर्बर्हिषि न्यञ्चौ पाणी प्रतिष्ठाप्य प्रति क्षत्र इत्येता व्याहृतार्जपति ॥ ११ ॥

[2]ऋज्वेतत् । [3]प्रति क्षत्र(A)इत्येताः प्रतिशब्दाद् दश व्याहृतीर्जपति[4]*, 'ततो वामदेव्य-गानम्'* । इति आग्रहायणीकर्म[5]परिसमाप्तिः । [6]यच्चैतदत्र बलिहरणमुच्यते तत्

---

भावः, उवास वसति, सा इयं हवि हवनक्रिया यमे यमदेवतोषविषये, अभवत् समर्था भवतु, तथाच यस्याः पयसा इयं हवनक्रिया सम्पद्यते; सा धेनुः उत्तराम् उत्तरां समाम् उत्तरोत्तरवर्षेषु पयस्वती प्रशस्तदुग्धशालिनी दुहा दोहनीया च भूयादिति शेषः । सायणाचार्यस्तु 'हव्यवाहसा' इति पठित्वा 'हव्यं चरुलक्षणं स्वतेजसा वाहयित्री' इति व्याचख्यौ, आह च 'केचन हव्युवाससेति पाठं कृत्वा प्रथमा यमे हविरुवासेति व्याचक्षते इति । शाखान्तरे दुहाम् इति पाठ इति केचित् । तत्र भगवन्तोऽन्वाचार्याः प्रमाणम् ।

A. 'प्रति क्षत्र' इत्यादयः पञ्च मन्त्रास्तु—

ॐ प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे ॥ १ ॥

ॐ प्रत्यश्वेषु प्रति तिष्ठामि गोषु ॥ २ ॥

ॐ प्रति प्राणे प्रति तिष्ठामि पुष्टौ ॥ ३ ॥

ॐ प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मनि ॥ ४ ॥

ॐ प्रति द्यावापृथिव्योः प्रति तिष्ठामि यज्ञे ॥ ५ ॥ इति

मन्त्रब्राह्मणम् २।२।२-३ ।

एतेषां व्याख्या—हे अग्ने, त्वदनुग्रहात् क्षत्रे, क्षतात् त्रायत इति क्षत्रं बलम्, तस्मिन् प्रतितिष्ठामीति सम्बन्धः । एवमुत्तरेष्वपि प्रतिशब्देषु योज्यम् । तथा राष्ट्रे राज्ये प्रतितिष्ठामि प्रतिष्ठितो भवामि, तथा अश्वेषु गोषु च । अस्माकं गावोऽश्वाश्चाविचलिता भवन्तु इत्यर्थः । किञ्च प्राणे मदीये प्राणवायौ, प्राणोऽपि मां मा मुञ्चत्वित्यर्थः । तथा पुष्टौ शरीरपोषे, एवमङ्गेषु चक्षुराद्यवयवेषु मदीयानि अङ्गानि प्रतिष्ठितानि सन्तु इत्यर्थः । एवमात्मन्यपि जीवात्माऽहं परमात्मनि प्रतितिष्ठामि स्वरूपनिष्ठो भवामीत्यर्थः । अथवा बुद्धिरात्मा, स्थिरबुद्धिर्भवामीत्यर्थः । हे अग्ने, द्यावापृथिव्योर्मध्ये प्रतितिष्ठामि, दिवि पृथिव्याञ्च ये भेदाः सन्ति ते मयि स्थिरा भवन्तु इत्यर्थः । एवं यज्ञे अग्निष्टोमादौ प्रतितिष्ठामि स्थिरो भवामि । इति ।

---

1. 'ऋज्वर्थं' ग । 2. 'ऋज्वेतत्' नास्ति ग । 3. नास्ति ख । 4. 'एतस्मिन् काले' ख । 5. 'परिसमाप्तिः' नास्ति ग । 6. 'यदत्र बलिहरणं तत्र श्रवणकर्म, सूत्रकारेण श्रवणकर्मलोपे बलिरहितमाग्रहायणीकर्म कुर्यात् । अथ स्वस्तरारोहणम् । तत्' ग ।

श्रवणाकर्माङ्गम् । ततश्च येन श्रवणाकर्म न कृतं स आग्रहायणीकर्म कुर्वंस्तान् बलीन् हरेत् । न, कुतः ? असति धर्मिणि दूरादेव धर्माभावात् ।

तथाचोक्तम्—

श्रवणाकर्म लुप्तं चेत् कथञ्चित् सूतकादिना ।
आग्रहायणकं कुर्याद् बलिवर्जमशेषतः(A) ॥ इति ।

अत ऊर्ध्वं स्वस्तरारोहणम्, तच्च केचिदाग्रहायण्यां मन्यमाना एतस्मिन्नेव कर्मे कुर्वन्ति, तन्न युक्तम्, कुतः ?

पारिभाषिक एव स्यात् कालो गो-वाजियज्ञयोः ।
अन्यस्यानुपदेशाच्च स्वस्तरारोहणस्य च(B) ॥

इति वचनात् । तथाच[1] गृह्यान्तरम्—'प्राग् वसन्तादुदगयने पुण्येऽह्नि सायं स्वस्तरमुदगग्रमास्तीर्य'त्यादि(C) । तस्मा[2]त् पृथक् कर्मैतत् । एवं चेद् एतस्मादेव वचना[3]-दुदगयने "वसन्तात् प्राक् यत् पुण्यमहस्तत्र पूर्वाह्णे वृद्धिश्राद्धं कृत्वा सायं बलिहरणान्ते नित्यकर्मणि कृते—

## पश्चादग्नेः स्वस्तरमास्तारये(D)दुदगग्रैस्तृणैरुदक्प्रवणम् ॥१२॥

"पश्चादग्नेरित्यग्निग्रहणमग्न्यागारे स्वस्तरस्य नियमार्थम् । 'एवञ्चाहोमकर्मैतत् । स्पष्टमन्यत्'[4] ।

## तस्मिन्नहतान्यास्तरणान्यास्तीर्य दक्षिणतो गृहपतिरुपविशति ॥ १३ ॥

"तस्मिन्'[5] स्वस्तरे । अहतानि अमृदितानि, आस्तरणानि" और्णानि कार्पासानि च 'उभयानि वा, आस्तीर्य प्रास्तीर्य'[6], दक्षिणतः स्वस्तरस्य दक्षिणभागे "गृहपतिरुपविशति"[7] ।

---

A. कर्मप्रदीपः ३।९।१२ ।
B. कर्मप्रदीपः ३।७।७ ।
C. प्रमाणत्वेनोपन्यस्तं गृह्यान्तरवचनमिदं चन्द्रकान्तेनापि ।
D. आस्तारयेदित्यत्र तृणैरित्यत्र च विभज्य सूत्रत्रयी कृता तर्कालङ्कारेण ।

---

1. नास्ति घ । 2. 'प्राग् वसन्तात' ख । 3. 'पश्चादग्नेरिति' नास्ति च । 4. नास्ति च । 5. 'तत्र तस्मिन्' ख । 6. 'प्रस्तरणानि' इत्यधिक ख । 7. नास्ति च । 8. नास्ति च ।

तस्य चोत्तरतः—

**[1]अनन्तरा अवरे यथाज्येष्ठम् ॥ १४ ॥**

अनन्तरा अव्यवहिताः, अवरे अनुजातसामर्थ्यादनग्निमन्त एकपाकोपजीविनश्च यथाज्येष्ठम्, उपविशन्तीति वर्त्तते। तेषामप्युत्तरतः—

**अनन्तराश्च भार्याः सजाताः ॥ १५ ॥**

अनन्तरा इत्युक्तम्। भार्यास्तेषामेव[2]* गृहपतिप्रभृतीनां पत्न्यः। सजाताः सापत्याः। यथाज्येष्ठम् उपविशन्तीति [2]वर्त्तते(A)। अपत्यान्यप्यनेनैव क्रमेण [3]स्वस्याः स्वस्या मातुरुत्तरत उपविशेयुः।

**समुपविष्टेषु गृहपतिः स्वस्तरे न्यञ्चौ पाणी प्रतिष्ठाप्य (B)स्योना पृथिवि नो भवेत्येतामृचं जपति ॥ १६ ॥**

[4]सम्यक् प्राङ्मुखेषूपविष्टेषु, [5]कुतः ? 'प्राङ्मुखकरणं त्वानादेशे' इति वचनात्(C)। ऋज्वन्यत्। ननु 'स्योना पृथिवि नो भवेति जपत्ये'तावतैव सिद्धत्वादेतामृचम् इति कस्मादुच्यते ? आह—छन्दो[6]विज्ञापनार्थमितिकर[7]णाविलोपनार्थञ्च। कथं नाम ?[7]* एतामेवंभूतां सेतिकरणामेव जपेदित्यर्थः। [8]इतरथा इतिकरणलोपः स्यात्[8]*।

**समाप्तायां संविशन्ति दक्षिणैः पार्श्वैः ॥ १७ ॥**

समाप्तायामृचि दक्षिणैरङ्गपार्श्वैः प्राक्शिरसः [9]संविशन्ति।

**एवं त्रिरभ्यात्ममावृत्य ॥ १८ ॥**

---

A. अत्र च पतीनां वयसा स्त्रीणां वृद्धत्वस्मरणात् पतीनाञ्च यथाज्येष्ठमुपवेशनाद् भार्याणां स्वस्वपतिक्रमोपवेशने यथाज्येष्ठत्वमपि कथञ्चिदनुगृह्यत एवेति बोध्यम्।

B. मन्त्रस्तु—

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी।
यच्छा नः शर्म सप्रथो देवान्मा भयादिति ॥ इति।

सामसन्त्रब्राह्मणम् २।२।४।

अस्य व्याख्या—हे पृथिवि, नोऽस्माकं स्योना सुखा भव। किञ्च अनृक्षरा, ऋक्षरः कण्टकः तद्रहिता, निवेशनी सर्वेषां निवेशयित्री, किञ्च नोऽस्माकं शर्म शरणं सुखं यच्छ प्रयच्छ, सप्रथः सर्वतः प्रथितस्त्वम्, किञ्च देवोत्थवाद् दैवव्यकरणान्यथाकरणाद्विजनिताद् भयाद् इत्यर्थः। तस्मात् मा मां रक्षेति शेषः। इतिशब्दो मन्त्रसमाप्तिद्योतनार्थः। ('सप्रथाः' इति सायणसम्मतः पाठः)।

C. लाट्यायनश्रौतसूत्रम् १।२।१६।

---

1. 'अनन्तरा अवरे यथाज्येष्ठमनन्तराश्च भार्याः सजाताः ॥ १४ ॥ अनन्तरा इत्युक्ताः' च। 2. 'वर्त्तते' नास्ति च। 3. 'स्वीया मातु-' च। 4. 'सम्यक्' नास्ति च। 5. 'कुतः' नास्ति च। 6. '-विज्ञानार्थं-' च। 7. '-णालोपार्थमेतामवमभिसुक्तम्' च। 8. नास्ति च। 9. 'उपविशन्ति' च।

एवमनेन प्रकारेण, एतत् संवेशनं 'न तु मन्त्रवत् न्यञ्चकरणमपीति। त्रिरावृत्य[1]* त्रिःकृत्वा अभ्यस्य। [2]किमविशेषेणैव? न[2]*: अभ्यात्मम् आत्माभिमुख्येन, आत्मत आरभ्येत्यर्थः। [3]कथं नाम? येन [4]क्रमेणोपविष्टास्तेनैव संवेशनोत्थाने अपि त्रिरा[5]वर्त्तयेयुः।

[6]पुनः—

## स्वस्त्ययनानि प्रयुज्य यथाज्ञानम् ॥ १६ ॥

स्वस्त्ययनान्यप्रतिरथादीनि यथाज्ञानं प्रयुज्य यो यज्जानाति स तदुच्चार्य, 'अपवृक्ते कर्मणी'ति वचनात् स्वस्त्ययनान्ते वामदेव्यमपि गायेत्।

## अरिष्टं सामसंयोगमेके ॥ २० ॥

एके एवं मन्यन्ते। [7]अरिष्टम् अरिष्टवर्गाख्यं साम[8]संयोगम् इतस्ततो विप्रकीर्णानां साम्नामेकीकृतं साम[9]*समुदायम्। (A)अबोध्यग्निर्महित्रीणामिति(B) द्वे. (C)त्वावत इत्यादि[9]कं वा सर्वलोकप्रसिद्धम्[9]*। प्रयुञ्ज्येति [10]वर्त्तते।

A. मन्त्रस्तु—

ॐ अबोध्यग्निः समिधा जनानां प्रतिधेनुमिवायतीमुषासम्।

यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥ इति।

सा० स० पू० १।२।८।१।

अस्य व्याख्या—अयमग्निः जनानामध्वर्य्वादीनां समिधा समिद्भिः, अबोधि प्रबुद्धोऽभूत्, धेनुमिव अग्निहोत्रार्थं धेनुं प्रति यथा प्रातर्बुध्यते तद्वत् आयतीमागच्छन्तीम् उषासं प्रति उषःकाले इत्यर्थः। अथ प्रबुद्धस्याग्नेः भानवः रश्मयो ज्वालाः, यह्वाः महान्तः, वयां शाखां प्रोज्जिहानाः प्रोद्गमयन्तो वृक्षा इव। यह्वा महान्तः प्रोज्जिहानाः स्वाधिष्ठानं त्यजन्तो भानवः, नाकम् अन्तरीक्षम्, अच्छ आभिमुख्येन प्रसस्रते प्रसरन्ति, सस्रते, सिस्रते इति पाठौ। इति सायणाचार्यकृता।

B. मन्त्रस्तु— ॐ महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः।

दुराधर्षं वरुणस्य ॥ इति। सा० स० पू० २।२।१०।८

अस्य व्याख्या—"त्रीणां त्रयाणां मित्रस्य अर्यम्णः वरुणस्य च द्युक्षं दीप्तम्, अत एव दुराधर्षम्, अन्यैर्धर्षितुं बाधितुमशक्यं महि महत्, अवर् अवः रक्षणम् अस्माकमस्तु"। इति।

C. मन्त्रस्तु— ॐ त्वावतः पुरूवसो वयमिन्द्र प्रणेतः।

स्मसि स्थातर्हरीणाम् ॥ इति। सा० स० पू० ३।२।१०।९

1. नास्ति च। 2. 'कथम्' च। 3. 'कथं नाम' नास्ति च। 4. 'क्रमेणोप-' च। 5. '-वर्त्तयेत्' च। 6. 'पुनः' नास्ति च। 7. 'अरिष्टम्' नास्ति च। 8. नास्ति च। 9. नास्ति च। 10. 'वर्त्तते' नास्ति च।

## अप उपस्पृश्य यथार्थम् ॥ २१ ॥

'अप उदकं पाणिनोपस्पृश्य "यथार्थं स्वस्तरादुत्थाय यस्य योऽर्थः "प्रयोजनं स तत् साधयेदित्यर्थः', न तु तत्रैव स्वपेयुरिति। गृहपतिरपि सद्यःपक्षे स्वस्तरादुत्थायाभिप्रेते शयने शयीत। अथान्यपक्षमाश्रयेत्, तथा सति तत्रैव स्वपेत्"(A)। तथाचोक्तम्—

ऊर्ध्वं स्वस्तरशायी स्यान्मासमर्द्धमथापि वा।
सप्तरात्रं त्रिरात्रं वा एकां वा सद्य एव वा॥
नोर्ध्वं मन्त्रप्रयोगः स्यान्नाग्न्यागारं नियम्यते।
नाहतास्तरणश्चैव न पार्श्वश्चापि दक्षिणम्(B)॥ इति

प्रथमायामूर्ध्वम्, अन्यासु रात्रिषु स्वस्तरशयनेऽयमुत्तरश्लोकोक्तो विशेषः"*(C)।

इति 'भट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये'* ।
तृतीयप्रपाठकस्य नवमी कण्डिका ॥

---

अस्य व्याख्या—"हे पुरूवसो बहुधन इन्द्र, प्रणेतः कर्मणां पारं प्रकर्षेण नेतः, हे हरीणाम् एतत्संज्ञकानामश्वानां स्थातः अधिष्ठातः इन्द्र, त्वावतः त्वत्सदृशस्य, इन्द्रसमानस्यान्यस्या-भावात् तथेत्यर्थः, तव स्वभूताः वयं स्मसि स्मः" । इति ।

A. अत्र यद्यपि तर्कालङ्कारेण भाष्यकारस्येयमानुपूर्वी निबद्धा स्वग्रन्थे तथाऽपि स्वपेदिति पदं लिपिकरप्रमादप्रसूतं वा शब्दशास्त्रसिद्धं नेति सुधियो विचारयन्तु ।

B. कर्मप्रदीपः ३।९।१३-१४ ।

C. अथाऽऽग्रहायणीप्रयोग उच्यते—आग्रहायण्यां मार्गशीर्षपौर्णमास्यां बलिहरणं श्रवणाकर्मवत् कर्तव्यम् । नमः पृथिव्या इत्येतन्मन्त्रं न जपति, विशेषस्तूच्यते—प्रथमारम्भे नान्दीश्राद्धम् । प्रातराहुतिं हुत्वा दर्भान् शमीं वीरणां फलयुक्तबदरीशाखामपामार्गं शिरीषञ्चाऽऽहृत्याऽऽहार्यं वाऽक्षतसक्तून् कृत्वा तेषामेकदेशं तूष्णीमग्नौ प्रक्षिपेत्। ततो ब्राह्मणान् स्वस्ति वाचयित्वा तेभ्यो यत्किञ्चिद् दत्वा पूर्वाहृतैः षड्भिर्दर्भादिभिरेकीकृतैः सम्भारैः प्राद्क्षिण्येन नित्याग्निशाला-मारभ्य भित्तिपटलादिसंलग्नं धूमं शातयन् सर्वान् गृहाननुगच्छेत्। एवं धूमशातनानन्तरं दर्भादीन् सम्भारानुत्सृजेत्। ततस्तूष्णीमैशान्यां स्थापितासु तिसृषु जातशिलासु वास्तोष्पत इत्यनेन सामद्वयेन तद्वा च मणिकं प्रतिष्ठापयति, जातशिला शर्करशिलेत्यर्थः। मणिकं
५र र २ १ १ र
बृहदुदकभाण्डमित्यर्थः। वास्तोष्पतिसामप्रकाशो यथा—वास्तोष्पताइ। ध्रुवा। स्थू णा
२ ५ १ २ र १र र १ २ ५ र र २ १ ३
ओ २३४ वा। अं सत्रं सोम्या ना २म्। द्र प्सः पुराम्भे ता शश्वता २३इ नाम्। आ

---

1. 'अप' नास्ति घ। 2. 'यथार्थं' नास्ति घ। 3. 'प्रयोजनं' नास्ति घ। 4. 'इत्यर्थः' नास्ति घ। 5. 'सद्यःपक्षे अभिप्रेतशयने शयीतेति' इत्यधिकम् ख। 6. नास्ति ख। 7. नास्ति ख।

५ १ २र २ ३ ५ ३र ४१ ५ र १
२३४ इन्द्राः । मु नी २ । ना ३१ उवा २३ । मा २३४ खा ॥ वा स्तो ष्प ते ध्रुवा ।
३र २ १ ४ ५ र ४र ५ २ १ र र २
स्थूणा ३ । आ २३४ । सत्रं सो । म्यानाम् । द्र प्सः पुराम्भेत्ता शश्वता २३ इनाम् ।
१ २ र ५ १ ५ ३ १ २ ३ २ २र
आ २३ इन्द्राः । मुनी २ । नो २३४ वा । मा २३४ खा ॥ वास्तोष्पते ध्रुवा स्थूणा सत्रं
२ १ २ ३ २ ३ २ ३ १ २र ३ २३ १ २ ३ १ २
सोम्यानाम् । द्र प्सः पुराम्भे त्ता शश्वतीनामिन्द्रोमु नी नां सखा । ततो मणिके समन्या यन्तीत्यृचा द्वावुदकुम्भावासिञ्चेत्, प्रतिकुम्भमृगावृत्तिः । अस्या गृत्समद ऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवता सेचने विनियोगः । समन्या यन्तीति मन्त्रः, एतावत् कृत्यं पूर्वाह्णे कुर्यात् । श्रवणाकर्मवदस्तमिते बलिहरणम् । ततः सायंसन्ध्यां नित्यहोमञ्च निर्वर्त्य पयसि चरुः कर्तव्यः । आग्रहायणीस्थालीपाकं करिष्ये इति संकल्प्य आग्रहायण्यै त्वा जुष्टं निर्वपामीति निर्वापः । आज्यभागान्ते चरुमवदाय जुहुयात् प्रथमा ह व्युवास सेति मन्त्रेण । अस्य मन्त्रस्य प्रजापतिऋषिरनुष्टुप् छन्दः आग्रहायणी देवता चरुहोमे विनियोगः । प्रथमेति मन्त्रः, इदमाग्रहायण्यै न मम । अन्यत् सर्वं पार्वणस्थालीपाकवत् कर्तव्यम् । दक्षिणादानान्ते पश्चादग्नेर्बर्हिषि न्यञ्चौ पाणी प्रतिष्ठाप्य प्रति क्षत्र इत्येतां व्याहृतीश्च जपति । अनयोः प्रजापतिऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवता जपे विनियोगः । प्रतिक्षत्रे मन्त्रः । ॐ भूर्भुवः स्वः । केचिदत्र वामदेव्यं गीत्वा आग्रहायणीकर्म समापयन्ति स्वस्तरारोहणं कर्मान्तरम् इति च वदन्ति, एवं तु स्वस्तरारोहणमाग्रहायण्यङ्गम्, सूत्रे तस्य कर्मान्तरत्वबोधकाथशब्दाभावात्, अध्याहारे प्रमाणाभावाच्च । पश्चादग्नेर्बर्हिषि न्यञ्चकरणवत् स्वस्तरारोहणमपि तस्मिन्नेव दिने वामदेव्यगानात् पूर्वं कर्तव्यम् इत्याहुः । इत्याग्रहायणीप्रयोगः ।

अथ स्वस्तरारोहणप्रयोग उच्यते—उदगयने प्राग् वसन्तात् पुण्येऽहनि पूर्वाह्णे नान्दीश्राद्धं विधाय सायं बलिहरणान्ते पश्चादग्नेरुदगग्रैस्तृणैरुदक्प्रवणं स्वस्तरमास्तीर्य तस्मिन्नहतान्यूर्णामयानि कार्पासमयानि वास्तरणान्यास्तीर्य दक्षिणतो गृहपतिरुपविशति, तस्योत्तरतस्तद्भ्रातर एकपाकोपजीविनश्च यथाज्येष्ठमुपविशन्ति । ततस्तेषामुत्तरतो गृहपतिप्रभृतीनां पत्न्यः क्रमेणोपविशन्ति । ततस्तासामपत्यान्यपि क्रमेण स्वायाः स्वाया मातुरुत्तरत उपविशन्ति । सम्यक् प्राङ्मुखेषूपविष्टेषु गृहपतिः सर्वोपद्रवशान्त्यर्थं स्वस्तरारोहणं करिष्ये इति सङ्कल्प्य स्वस्तरेऽधोमुखौ हस्तौ संस्थाप्य 'स्योना पृथिवी'त्येतामृचं जपेत् । अस्याः प्रजापतिऋषिरनुष्टुप् छन्दः पृथिवी देवता जपे विनियोगः । समाप्तायामृचि सर्वे दक्षिणपार्श्वैः प्राक्शिरसः संविशन्ति । एवमुपवेशनक्रमेण संवेशनमुत्थानञ्च त्रिवारमभ्यास्यं कार्यम् । ततो यथाज्ञानं स्वस्त्ययनमुच्चार्य वामदेव्यं गायेत् । स्वस्त्ययनप्रयोगे 'महि त्रीणामि'ति द्वे 'स्वावत' इत्येकं साम प्रयोक्तव्यम् । अरिष्टवर्गसामगानमेके वदन्ति । तत अप उपस्पृश्य यथाकाममन्यत्र शयनं कुर्युः । इति स्वस्तरारोहणप्रयोगः ।

# तृतीयप्रपाठकस्य दशमी कण्डिका

## अष्टका रात्रिदेवता पुष्टिकर्मा(A) ॥ १ ॥

अष्ट[1]केत्येकवचनमधिकारार्थम्, 'चतुरष्टको हेमन्त' इत्युपरिष्टादष्टकाबहुत्व-निर्देशात्। एवञ्च [2]या काचिदष्टका वक्ष्यमाणा सा सर्वा रात्रिदेवता प्रत्येतव्या। नाऽऽनन्तर्यादपूपाष्टकैव[3]*। [4]रात्रिर्देवता यस्याः सेयं रात्रिदेवता। पुष्टिफलमस्यास्तु भवतीति पुष्टिकर्मा। ननु अष्टका पुष्टिकर्मा 'रात्रिदेवता आग्नेयी पित्र्या वेति[5]'* वक्तव्ये [6]पुष्टिकर्मेति पदद्वयेन"* कस्मात् देवतानिर्देशपदानां व्यत्ययः क्रियते[8]? उच्यते—अष्टका पुष्टि[7]कर्मेत्युच्यमाने पुष्टिफलतैवास्य [8]केवला स्यात्, [9]तथाच अष्टकाकर्मणः [10]काम्यत्वप्रसङ्गः स्यात्। न चैतद् युक्तम्, अतत्प्रकरणत्वात्, नित्याधिकारा[11]म्नानाच्च।

[12]तथाच गौतमः[12]—

अष्टकापार्वणश्राद्धश्रावण्याग्रहायणीत्यादि(B)।

[14]तस्मादष्टका नित्या, पुष्टिफलम[15]प्यानुषङ्गिकम् इच्छतो भवती(C)ति [16]द्रष्टव्यम्, अतो व्यवायः क्रियत इति। नन्वेतावत्समस्ता अपि देवता निर्दिश्य पुष्टिकर्मेति

---

A. 'पुष्टिकर्मा' इति पृथक् सूत्रम् इति कल्पयतः सामश्रमितर्कालङ्कारौ।

B. गौतमसंहिता ८।

उक्तञ्चैतत् कर्मप्रदीपेऽपि—

संस्काराः पुरुषस्यैते स्मर्यन्ते गौतमादिभिः।
अतोऽष्टकादयः कार्याः सर्वे कालक्रमोदिताः॥ इति। ३।७।१४।

C. फलवाद उक्तः कर्मप्रदीपेऽपि—

सकृदप्यष्टकादीनि कुर्यात् कर्माणि यो द्विजः।
स पङ्क्तिपावनो भूत्वा लोकान् प्रैति घृतच्युतः॥ इति ३।७।१९।

---

1. '-कैत्येक-' ख। 2. नास्ति च। 3. 'सर्वा रात्रिदेवता रात्रिर्देवताऽस्याः सा' च। 4. नास्ति च। 5. नास्ति च। 6. 'इति' इत्यधिकम् ख। 7. '-कर्मेत्येवमुच्य-' ख। 8. 'प्रवक्ता' च। 9. 'एवं सति' ख। 10. 'काम्यत्वं स्यात्' च। 11. '-नानाच्च' च। 12. 'तत्र' च। 13. 'नित्यानामेव पुरुषसंस्काराणां मध्ये भूतानां' इत्यधिकम् ख। 14. 'तस्मान्नित्य एवैतन्नित्याष्टकाख्ये कर्मणि' ख। 15. 'अपि' नास्ति च। 16. 'द्रष्टव्यमि'त्यादि—'अष्टा मा भूदि'त्यन्तोंऽशो नास्ति च।

वक्तव्यम्। एवमुच्यमाने उत्तरसूत्रेण सहास्यैकसूत्रशङ्का मा भूत्[10]* इत्यतो युक्तमुक्तम् अष्टका रात्रिदेवता पुष्टिकर्मेति[1]।

आग्नेयी पित्र्या वा प्राजापत्यर्त्तुदेवता वैश्वदेवीति देवताविचाराः ॥ २ ॥

अग्नेरियमाग्नेयी प्रकृतत्वादष्टका। वाशब्दः प्रत्येकं सम्बध्यते। पितृणामियं पित्र्या, प्रजापतेरियं प्राजापत्या। ऋतवो वसन्त-ग्रीष्म-वर्षा-शरद्धेमन्त-शिशिराख्याः षट्, ते [2]देवता यस्याः सा [3]इयम् ऋतुदेवता। विश्वे देवाः सर्वे देवास्तेषामियं वैश्वदेवी। इत्येते रात्रिप्रभृतयः [4]षड् अष्टकाया देवताविचारा[5] देवताविकल्पा [6]इत्यर्थः। [7]अत्र सन्देहः—किं पशुप्रोक्षणनिर्वापहोमकालेष्वेतद्विकल्पोक्तानां देवतानामिच्छयाऽन्यतरस्या अभिसन्धानं कर्त्तव्यम्? सर्वासामित्युच्यते; अन्यतरस्यास्तावदभि[8]*सन्धानं न घटते, [8]कुतः? मध्यमाष्टकायामग्नावग्निरि[9]त्यष्टर्चमन्त्रलिङ्गविरोधात्(A)। तस्मात् सर्वासामभिसन्धानं [10]कार्यम्। तत्रापि यत्र मन्त्रान्तरेण होमस्तत्र होमकाले होममन्त्रदेवतामेवाभिध्यायेत्। [11]तथैव तथाऽभिध्याततया भक्तिसाहचर्यात् सर्वा अपि [12]एता देवता अभिध्याता इष्टाश्च भवन्ति(B)।

A. द्रष्टव्यं सूत्रम् ४।१।१३।

B. अत्र तर्कालङ्कारः—"इदमिदानीं सन्दिह्यते किं पशुप्रोक्षणनिर्वापहोमेष्वेतद्विकल्पोक्तानां देवतानां मध्यादिच्छया अन्यतमस्या अभिसन्धानं कर्त्तव्यम्, आहोस्वित् सर्वासाम्, उताहो नैकस्या अपीति? नैकस्या अपीति ब्रूमः; किंदेवताका तर्ह्यष्टका, न खल्वदेवताका भवितुमर्हति? उच्यते—न वयमदेवताकामष्टकामाचक्ष्महे, रात्रिदेवताकान्तु ब्रूमहे; कस्मात् पुनः कारणात् सतीष्वेतद्विकल्पोक्तास्वन्यास्वपि देवतासु रात्रिदैवतैवाष्टकाऽभ्युपगम्यते? सूत्रप्रामाण्यादित्याह, 'अष्टका रात्रिदेवता' इति खल्वाचार्येण सूत्रितम्, तत्प्रामाण्याद् रात्रिदेवता अष्टकाऽभ्युपगम्यते। ननु आग्नेयी पित्र्या वा इत्येतदप्याचार्यस्यैव सूत्रम्? सत्यमाचार्यस्यैव सूत्रमेतत्, किन्तु नैतद् देवताविधानार्थम्, परन्तु परमतोपन्यासार्थम्। कथं पुनरवगम्यते परमतोपन्यासार्थमेतदिति? शृणु यथाऽवगम्यते—अष्टका रात्रिदेवता इति देवतामष्टकायाः सूत्रयित्वा पुष्टिकर्मा इति च फलवादम्, आग्नेयीत्यादिकं सूत्रयन्नाचार्यः परमतमेतदिति दर्शयति; तदिदमर्थं पुष्टिकर्मा इति मध्ये सूत्रितम्, अन्यथा देवतोपदेशानां मध्ये फलवादोपन्यासोऽनुचित एव स्यात्।

1. 'पुष्टिकर्मेत्यतुरष्टको ह्येमम इत्येकसूत्रशङ्का मा भूदित्यतो देवतामध्ये पुष्टिकर्मेत्युक्तम्' इत्यधिकम् च। 2. 'यस्या देवता' ख। 3. 'इयं' नास्ति च। 4. 'षष्टकाया: षट्' ख। 5. 'देवता' नास्ति ख। 6. 'इत्यर्थः' नास्ति च। 7. 'तत्रैवकालि-' च। 8. 'कुतः' नास्ति च। 9. '-त्यष्टर्च मन्त्र-' ख। 10. 'कर्त्तुं युक्तम्' ख। 11. 'तथैव' च। 12. 'एता' नास्ति च।

कियत्य[1]श्च ता अष्टका इत्यत आह—

**चतुरष्टको हेमन्तः(A) ॥ ३ ॥**

चतस्रः अष्टका यस्मिन् हेमन्ते शीतकाले स चतुरष्टकः ।

---

यच्च—उत्तरेण सूत्रेण सहैकसूत्रताशङ्कानिरासार्थं मध्य एव फलवादोपन्यास इति वर्णितम्, तदपि नातीव समीचीनम्। कस्मात्? तदाशङ्काया अकिञ्चित्करत्वात्, एकसूत्रतायामपि क्षतेरभावाच्च। तस्माद् अष्टका रात्रिदेवता पुष्टिकर्मा इत्यनेन स्वमतमभिधाय आग्नेयीत्यादिना परमतमादर्शितमित्यादरणीयम्। गृह्यान्तरेऽप्येकैकमतपरतयैवैतासां देवतानामुपन्यासो दृश्यते। तथाच गृह्यान्तरम्—'तां हैके वैश्वदेवीं ब्रुवत आग्नेयीमेके...प्राजापत्यामेके रात्रिदेवतामेके...ऋतुदेवतामेके पितृदेवतामेके' इति। तस्मादेता देवता नैकस्याभिमताः, अपि त्वेकैका देवता एकैकस्याऽऽचार्यस्य। तत्र 'रात्रिदेवतामेके' इत्येतदस्मदाचार्यमतस्योपन्यासः, इति बोद्धव्यम्। अत एवाऽऽचार्येण अष्टका रात्रिदेवता इति सूत्रयित्वा इति देवताविचारा इति सूत्रितम्, न देवताविकल्प इति। एतासां देवतानां स्वाभिमतत्वे तु नव षट् त्रय इति विकल्प इतिवद् देवताविकल्पा इत्येव कुर्यात्। तस्माद् देवताविचारा एवैते न पुनरेता देवता भवन्ति। देवता त्वस्माभिरुक्तैव अष्टका रात्रिदेवता इति। सोऽयमाचार्यस्याभिप्रायः, देवताविचारप्रकारश्च सुधिभिरभ्यूहनीयः, ग्रन्थगौरवभयादुपारम्यतेऽस्माभिः।

यच्च मन्त्रलिङ्गमग्न्यादीनामस्ति, न तद् देवताश्रुतिचोदितां रात्रिं बाधितुमीष्टे। दुर्बलं हि लिङ्गं श्रुतेरिति स्वल्पवोचाम। यथाच मन्त्रलिङ्गावगताऽपि देवता तद्धितशिष्टया देवतया बाध्यते, तथैव देवताशब्दशिष्टयाऽपि बाधिष्यते, न्यायस्याविशेषात्। अन्ये तु मन्यन्ते—'अन्यतरस्या देवताया अभिसन्धानं न घटते, कुतः? मध्यमाष्टकायाम् अग्नावृग्भिरिति मन्त्रलिङ्गविरोधात्। तस्मात् सर्वासामभिसन्धानं कर्तुं युक्तम्, अत्रापि यत्र मन्त्रान्तरेण होमस्तत्र होमकाले मन्त्रदेवतामेवाभिध्यायेत्। तथैव तत्राभिध्यातया भक्तिसाहचर्यात् सर्वा अप्येकदा देवता अभिध्याता इष्टाश्च भवन्ती"त्याह। भाष्यकाराविरोधिमतमस्मत्सम्प्रदायविदान्तु कण्डिकाशेषे प्रयोगसङ्कलने प्रदर्शयिष्यते।

A. सूत्रमिदं परसूत्रेण सहैकत्र पठतः सामश्रमितर्कालङ्कारौ। तत्र च तर्कालङ्कारस्य विवृतिः—

"अत्र भट्टभाष्ये 'चतुरष्टको हेमन्तः' इति 'ताः सर्वाः समांसाश्चिकीर्षेदिति कौत्सः' इति सूत्रद्वयं कल्पितम्। चतुरष्टकपक्षस्यापि कौत्सीयत्वाद् भट्टभाष्यीयमुत्तरसूत्रं 'ताः सर्वाः समांसाश्चिकीर्षेत्',—'इति कौत्सः' इति च द्विधा भङ्क्त्वा सूत्रत्रयं कल्पितमासीन्मया प्रथमसंस्करणे, इदानीन्तु त्रयाणामेकसूत्रत्वमेवोचितं पश्यता तथैव कृतम्" इति।

---

1. 'च' नास्ति ख।

## ताः सर्वाः समांसाश्चिकीर्षेदिति कौत्सः ॥ ४ ॥

ता अष्टकाः, सर्वाश्चतस्रोऽपि [1]इत्यर्थः, अधिकारात् गोपशुमांसेन सह [2]समांसाः चिकीर्षेत् कर्तुमिच्छेत् कुर्यादित्यर्थः, इति कौत्सः [3]आहेति शेषः[3]* । कुत्सस्यापत्यं कौत्सः[4] ।

## त्र्यष्टक इत्यौद्गाहमानिः ॥ ५ ॥

उद्गाहमानस्यापत्यम् औद्गाहमानिः, [5]स एवमाह त्र्यष्टको हेमन्त इति । [6]यथौद्गाहमानिः[6]*—

## तथा गौतम-वार्कखण्डी ॥ ६ ॥

गौतमश्च वार्कखण्डिश्च गौतमवार्कखण्डी । [7]तयोरप्येतदेव मतम्, यथौद्गाहमानेः । यदेतेषां त्रयाणामौद्गाहमानिप्रभृतीनामाचार्याणां मतं गोभिलाचार्यस्याप्येतदेव मतमनुमीयते, कुतः ?[7]* सूत्रे तिसृणाम् [8]एव विधानात् । त्र्यष्टकपक्षे[9] [10]मध्यमैव समांसा [11]कर्त्तव्या [12]न पुनस्तिस्रोऽपीति । [13]कुतः ? विधानसामर्थ्यात्—प्रथमामतिक्रम्य[13]* मध्यमायामेव पशोर्विधानात् । यत्र च पशु[14]स्तत्रैवान्वष्टक्यमपि स्यात्[14]*, विधानसामर्थ्यात्—[15]"वामं सक्थ्यन्वष्टक्याय निदध्यादिति"[15]* [ सू० ४।१।५ ] पशुसाध्यत्वादन्वष्टक्यस्य ।

[16]तथाचोक्तम्—

अन्वष्टक्यं मध्यमायामिति गोभिलगौतमौ ।
वार्कखण्डिश्च सर्वासु कौत्सो मेनेऽष्टकासु च(A) ॥ इति ।

अत्र सन्देहः—किं चतुरष्टकपक्षोऽङ्गीकर्त्तव्य उत त्र्यष्टकपक्ष इति ? उच्यते[16]*—[17]अत्र चतुरष्टकपक्षो नाङ्गीकर्तव्यः[17]* । [18]कुतः ? अविधाना[19]देव चतुर्थ्याः, [20]मतचतुष्टयेनास्या बाधितत्वाच्च । [21]तथाच वाक्यार्थविद्भिरुक्तम्—

---

A. कर्मप्रदीपः २।७।२४ ।

---

1. 'इत्यर्थः' नास्ति घ । 2. 'समांसाः' नास्ति घ । 3. 'तस्यैतन्मतम्' ख । 4. 'चतुरष्टको हैमन्तस्तासु सर्वासु गोपशुरिति' इत्यधिकः पाठः ख । 5. 'स' नास्ति घ । 6. नास्ति घ । 7. 'यथौद्गाहमानिश्चेति, त्र्यष्टको हैमन्त इत्यर्थः' इति घ । 8. 'एव' नास्ति घ । 9. 'च' इत्यधिकम् ख । 10. 'मध्यमाष्टकैव' ख । 11. 'कर्त्तव्या' नास्ति घ । 12. 'न तिस्रोऽ-' घ । 13. नास्ति घ । 14. '-रन्वष्टक्यमपि तत्रैव स्यात्' ख । 15. नास्ति घ । 16. नास्ति घ । 17. 'चतुरष्टकपक्षस्तावन्नाङ्गीकर्त्तुं युक्तः' ख । 18. 'कुतः' नास्ति घ । 19. 'एव' नास्ति घ । 20. 'चतुरष्टकैनास्या' घ । 21. 'तत्र वाक्यार्थविदः' घ ।

अल्पानां यो विघातः स्यात् स बाधो बहुभिः स्मृतः ।
प्राणसम्मित इत्यादिर्वासिष्ठं बाधितं यथा(A) ॥

[1]इति । तस्मात् त्र्यष्टकपक्ष एवाङ्गी[2]क्रियत इति सिद्धान्तः ।

[3]अथ तिसृणां स्वरूपाण्याह—

## योर्ध्वमाग्रहायण्यास्तामिस्राऽष्टमी तामपूपाष्टकेत्याचक्षते ॥७॥

[4]आग्रहायणी व्याख्याता, तस्या ऊर्ध्वं या तामिस्राऽष्टमी तामपूपाष्टकेत्याचक्षते[4]* अपूपाष्टकाभिधानां कथयन्ति । अपूपा मण्डका [5]उच्यन्ते । तथाचोक्तम्—

त्रैयम्बकं करतलमपूपा मण्डकाः स्मृताः ।
पालाशा गोलकाश्चैव लोहचूर्णं तु चीवरम्(B) ॥

इति । यथेयमपूपविधानादपूपाष्टका, एवं मध्यमा मांसविधानान्मांसाष्टका, उत्तमा च शाकविधानाच्छाकाष्टकेति द्रष्टव्यम्[6]* । अपूपविधानादेवाभिधानसिद्धेः[6] अपूपाष्टकेत्यवाच्यमिति चेत्, न[6]* ; गुणार्थोऽयमनुवादः । तेन [7]किम् ? ब्राह्मणभोजनेऽप्यपूपाः कर्त्तव्या इति(C) ।

## स्थालीपाकावृता तण्डुलानुपस्कृत्य चरुं [8]श्रपयति ॥ ८ ॥

स्थालीपाकावृतेति प्राप्ते पुनर्वचनं प्रकृतौ पक्षे प्राप्तानां यवानामिह प्रतिषेधार्थम् । एवञ्चात्र व्रीहीणां नियमः । अथवा स्थालीपाकावृता चतुर्थमपूपार्थञ्च तन्त्रेणैव तण्डुलानुपस्कृत्येति तन्त्रप्रज्ञापनार्थं पुनर्वचनम् । कथं नाम ? व्रीहिनिर्वपणादितण्डुलप्रक्षालनान्तस्तन्त्रेणैव संस्कारः कर्त्तव्य इति । उक्तञ्च—'देवतादेशकालकर्मैक्ये तन्त्रमि'ति, अष्टकायै त्वेति निर्वापः । एवं मन्त्रेणैव तण्डुलानुपस्कृत्य चरुं श्रपयति । श्रपिते च चरौ तच्छेषांस्तण्डुलान् शिलायां पिष्ट्वा—

A. कर्मप्रदीपः ३।९।१६ ।

B. कर्मप्रदीपः ३।९।१८ ।

C. तथाच पुराणेषु स्मर्यते—

आद्याऽपूपैः सदा कार्या मांसैरन्या भवेत् सदा ।
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः ॥ इति चन्द्रकान्तः ।

1. 'इति' नास्ति घ। 2. '-कर्त्तव्यः' घ। 3. 'तासामिदानीं तिसृणां क्रमशः स्व' घ। 4. नास्ति घ। 5. नास्ति घ। 6. नास्ति घ। 7. 'किम्' नास्ति घ। 8. 'श्रपयत्यष्टौ चापूपान् कपालेऽपरिवर्त्तयन् उपकृत्य चरुं कुर्वन् चतुश्चालयन् श्रपयतीति' घ।

अष्टौ चापूपान्(A) ॥ ९ ॥

अपयतीति वर्त्तते । ऋज्वन्यत् ।

क अपयति कथं चेत्यत आह—

कपालेऽपरिवर्त्तयन् ॥ १० ॥

कपाले कर्परे ।

'कपालस्य प्रमाणेन अपूपानष्टकाविधौ(B)'

इति, वचनात् करतलप्रमाणे कपाले अपरिवर्त्तयन् परिवर्तनमकुर्वन् अनुपक्षय-मित्यर्थः । अपयतीति वर्त्तते[1]* ।

कपालप्रसङ्गात् पुरोडाशधर्मप्रसङ्गो मा भूदित्यत[2]स्तत्प्रतिषेधार्थमिदमाह—

एककपालानमन्त्रा(C)नित्यौद्गाहमानिः ॥ ११ ॥

*एककपालानिति एकैककपालानित्यर्थः । कुतः ?

'पृथक् कपालान् कुर्वीत अपूपानष्टकाविधौ(D)'

इति वचनात् । अमन्त्रान् मन्त्ररहितान् इत्यौद्गाहमानिराचार्य आह[2]* ।

कपालस्या[3]पूपानां प्रमाणेनैव प्रमाणसिद्धेरपूपानामेव प्रमाणे नियमार्थमिदमाह—

त्रैयम्बकप्रमाणान् ॥ १२ ॥

करतलप्रमाणानित्यर्थः । अपयतीति [4]वर्त्तते ।

शृतानभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ॥ १३ ॥

वैकृतत्वान्न यावद्वचनप्रसङ्गो मा भूदित्यतः पुनर्वचनम् ।

---

A. सूत्रमिदं परसूत्रेण सहैकत्र पठतः सामश्रमिसत्यव्रतौ ।

B. गृह्यासंग्रहः २।७० ।

कपाललक्षणन्तु—

कपालं मृन्मयं पात्रं चक्राघटितमुच्यते ।

आढ्रं चक्रघटितं दैवे पैत्रे च वर्जयेत् । इति च० त० भा० ।

C. अमन्त्रानित्यादि पृथक् सूत्रमिति चन्द्रकान्तस्य कल्पना ।

D. गृह्यासंग्रहः २।७१ ।

अस्य पूर्वार्द्धन्तु—

चतुर्भागं प्राणितकात् कपालं याज्ञिका विदुः ॥ इति ।

---

1. 'स्विमब तत्-' ख। 2. नास्ति च। 3. '-पूपानां-' ख। 4. 'वर्त्तते' नास्ति च।

**स्थालीपाकावृताऽवदाय चरोश्चापूपानां चाष्टकायै स्वाहेति जुहोति ॥ १४ ॥**

स्थालीपाकधर्मेण[1] च चरोरपूपानां चावदाय तन्मन्त्रेणैवाष्टकायै स्वाहेति जुहोति। [2]अत्र सन्देहः—किं सर्वापूपानां सर्वमध्येभ्यो गृहीत्वा ततः सर्वपूर्वार्धेभ्यो गृह्णीयाद् उत प्रत्येकं मध्यात् पूर्वार्धादित्येवमुच्यते? प्रत्येकमिति ब्रूमः। कुतः[2]*? चरोश्चापूपानां चेति प्रत्येकं चशब्दप्रयोगात्, [3]इतरथा चरोरपूपानाञ्चेति पाठः स्यात्; तस्मात् प्रत्येकमिति स्थितम्[3]*।

**स्थालीपाकावृताऽन्यत् ॥ १५ ॥**

[4]ऋज्वर्थम्। इत्यपूपाष्टका [5]समाप्ता।

[6]अथ मांसाष्टका[7]प्रकरणं प्रस्तूयते—

**तैष्या ऊर्ध्वमष्टम्यां गौः ॥ १६ ॥**

तिष्यः पुष्यः, तस्य पौर्णमासी [8]पौषी, तस्या [9]ऊर्ध्वमष्टम्यां गौः, आलब्धव्येति शेषः। कथमालब्धव्येत्यत आह—

**तां सन्धिवेलासमीपं पुरस्तादग्नेरवस्थाप्योपस्थितायां जुहुयाद् यत् पशवः प्रध्यायतेति ॥ १७ ॥**

सन्धिरेव वेला तस्याः [10]समीपं सन्निधौ, [11]सन्धिवेलासमीपम् उदयसन्निधौ[11]*, प्रातराहुतेरनन्तर[12]मेवेत्यर्थः। अग्नेः पूर्वस्यां दिशि तां गां प्रत्यङ्मुखीमवस्थाप्य उपस्थितायां [13]यत् पशव(A) इत्यनेन मन्त्रेण[13]* परिभाषा[14]सिद्धत्वात् स्रुवेणाऽऽज्यं जुहुयात्।

---

A. मन्त्रस्तु—

ॐ यत् पशवः प्रध्यायत मनसा हृदयेन च।
वाचा सहस्रपाशया मयि बध्नामि वो मनः ॥ इति।

सामंमन्त्रब्राह्मणम् २।२।९।

अस्य व्याख्या—पशवो हन्यमानगोसहायभूता यन्मरणकर्म प्रध्यायत प्रकर्षेण चिन्तयत, केन?

---

1. 'च' इत्यधिकम् ख। 2. 'प्रत्येकं मध्यात् पूर्वार्धादिति गृह्णीयात्' इति च। 3. नास्ति च। 4. 'ऋज्वर्थम्' ख। 5. 'समाप्ता' नास्ति च। 6. 'इदानीं' ख। 7. 'प्रकरणं' नास्ति च। 8. 'तैषी' ख। 9. 'ऊर्ध्वमष्टम्यां' नास्ति च। 10. 'समीपं' नास्ति च। 11. नास्ति च। 12. 'एव' नास्ति च। 13. 'मन्त्रं' च। 14. '-सामान्यात्' ख।

'मन्ववस्याप्येति सिद्धे पुनरुपस्थितायामिति कस्मादुच्यते अहो'* अस्य होमस्य पशूपस्थानेन [1]सहाऽभिसम्बन्धार्थम्। तेन किम्?[2]* पश्वभावे 'अपि [3]वा स्थालीपाकं कुर्वीते'त्येतस्मिन् पक्षे 'उपस्थितस्य होममन्त्रस्य[4]* निवृत्ति[5]रेव स्यात्। [6]एवञ्चेदनुमन्त्रणावसेकसंज्ञप्तहोममन्त्राणामपि स्थालीपाकपक्षे निवृत्तिरेव स्यात्[6]*। प्रोक्षणपर्यग्निकरणमन्त्रौ[7] तु स्थालीपाकपक्षे[8]ऽप्यविरोधात् स्यातामिति वा। [9]यद्वा[9]* आज्यसंस्कारप्रतिषेधार्थमुपस्थितायामेवं पुनर्वचनम्। [10]कथं नाम? उपस्थितायां जुहुयादेव न तावदाज्यं संस्कुर्यादित्यर्थः। अथवा आसादनीयेष्वासादितेषु कर्मणः कृताकृतप्रत्यवेक्षणकर्त्तरि ब्रह्मणि चोपविष्टे तन्त्रान्वितहोमस्य प्राप्तत्वात् तथा मा भूदित्यानन्तर्यार्थं पुनर्वचनम्, तेनोपस्थितायामनन्तरमेव जुहुयात् न तावत् किञ्चिदपि कुर्यादित्यर्थः।

## हुत्वा चानुमन्त्रयेतानु त्वा माता मन्यतामिति ॥ १८ ॥

हुत्वा चशब्दात् यवमिश्रमुदकं पवित्रक्षुरमेकशाखं-विशाखे पलाशकाष्ठे बर्हिरिध्माऽऽज्यं समिधौ स्रुक्स्रुवमित्येतान्यासाद्य ब्रह्माणं चोपवेश्य [11]ततोऽनु त्वे(A)त्यनेन मन्त्रेण गामनुमन्त्रयेत[11]*। अनुमन्त्रणं चानामिकया गामुपस्पृश्य कर्त्तव्यम्। [12]तथाचोक्तम्—

स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि।
अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेत्(B) ॥ इति।

---

इति मनसा यजमानो हनिष्यति वा न वेति संशयात्मकेन, हृदयेन कृपायुक्तया बुद्ध्या। प्रत्यक्षेणोच्यते—हे पशवः, यो युष्माकम् उक्तचिन्तात्मकं मनो वाचा मन्त्ररूपया; कीदृश्या? सहस्रपाशया परिमितबन्धया प्रतिबध्नामि प्रतिबद्धं करोमि, मन्त्रेण मनः प्रसादयामीत्यर्थः।

A. मन्त्रस्तु—

ॐ अनु त्वा माता मन्यतामनुपिताऽनुभ्राता।
अनुसगर्भ्योऽनुसखा सयूथ्यः ॥ इति।

सामममन्त्रब्राह्मणमाकरः २।२।६।

अस्य व्याख्या—हे आलभ्यमानपशो, त्वा च उपयुज्यमानं त्वां माता तव जननी अनुमन्यताम् अनुमतिं कुरुताम्, एवं पित्रादयोऽनुमन्यन्ताम्, सगर्भ्यः समान एकस्मिन्नेव गर्भे उत्पन्नः, सोदर इत्यर्थः। सयूथ्यः समानयूथार्हः, समानवयस्क इत्यर्थः।

B. कर्मप्रदीपः ३।९।१९।

---

1. नास्ति च। 2. 'सह संबन्धार्थमुपस्थितायामित्युक्तम्, तेन' च। 3. 'वा' नास्ति ख। 4. नास्ति च। 5. 'एव' नास्ति ख। 6. नास्ति च। 7. 'तु' नास्ति च। 8. '-ऽप्यधिकारात्' ख। 9. न चेति, यथा' ख। 10. 'कथं नाम' नास्ति च। 11. 'ततोऽनुमन्त्रयेत्' च। 12. नास्ति च।

'क्वचिद्वालोकयन्नपी'त्येतत् "अध्वनि चतुष्पथान् प्रतिमन्त्रयेत् नदीश्च विषमाणि च" [ सू० २।४।२ पृ० ३२८ ] इत्येवमादिविषयं द्रष्टव्यम् । प्रतिमन्त्रणाभिमन्त्रणशब्दौ अनुमन्त्रणपर्यायौ ।

## यवमतीभिरद्भिः प्रोक्षेदष्टकायै त्वा जुष्टं प्रोक्षामीति ॥१६॥

यवमतीभिर्यवमिश्रा[1]भिरद्भिः पूर्वासादिताभिः[1]* । [2]"अष्टकायै त्वा जुष्टं प्रोक्षामी'त्यनेन मन्त्रेण गां प्रकर्षेणोक्षेत्[2]*, उक्ष सेचने [3]प्रकर्षेणाभिषिञ्चेदित्यर्थः[3]* ।

## उल्मुकेन परिहरेत् परिवाजपतिः कविरिति ॥ २० ॥

[4]उल्मुकं प्रसिद्धम्, तेन[4]* [5]गां परिहरेत् प्रदक्षिणीकुर्यात् [6]"परि वाजपतिः कवि'रित्येतयर्चा(A) । न यजुषा, न साम्ना । कुतः ? ऋगधिकारात्[6]* ।

## अपः पानाय दद्यात् ॥ २१ ॥

[7]तूष्णीं प्रकृतायै[7]* गवे [8]इति ।

## पीतशेषमधस्तात् पशोरवसिञ्चेद् (B)आर्त्तं देवेभ्यो हविरिति ॥२२॥

ऋज्वर्थम्(C) ।

A. मन्त्रस्तु—

ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।
दधद्रत्नानि दाशुषे ॥ इति ।

वाजसनेयिसंहिता ११।२५ । छन्दआर्चिके च १।१।३।१० ।

अस्य व्याख्या—वाजपतिः वाजानामन्नानां पतिः पालकः, कविः क्रान्तदर्शी मेधावी वा दाशुषे हविर्दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधत् प्रयच्छन् अग्निः हव्यानि हवींषि पर्यक्रमीत् परिक्रामति व्याप्नोतीत्यर्थः । इति ।

B. मन्त्रस्तु—

ॐ आर्त्तं देवेभ्यो हविः । इति । मन्त्रब्राह्मणम् २।२।७ ।

अस्य व्याख्या—यत्त्वत्तदीयमङ्गं देवेभ्यः देवार्थम् आर्त्तं गृहीतं स्वीकृतं मया, केवलभक्षणार्थहिंसाभावाद् देवतार्थमुपयुक्तत्वात्, ततः सर्वेऽप्यनुमतिं कुर्वन्त्वित्यभिप्रायः । इति ।

C. आर्त्तं देवेभ्य इति मन्त्रेण तस्या गोः पीतावशिष्टमुदकं तस्या एवाधस्तादवसिञ्चेत् अवाचीनं सिञ्चेदित्यर्थः ।

1. '-भिः पूर्वासादिताभिरद्भिः' ख । 2. 'प्रोक्षेत्' च । 3. 'सिञ्चेदित्यर्थः' ख । 4. नास्ति च । 5. 'गौः' च । 6. 'परीत्यर्चा' च । 7. नास्ति च । 8. 'इति' नास्ति ख ।

## अथैनामुदगुत्सृप्य संज्ञपयन्ति ॥ २३ ॥

[1]अथशब्द आनन्तर्यार्थः, एवञ्चेत् पूर्वमेव (A)शमितृनाहूयोपकल्पयेत्। इतरथा आनन्तर्यव्याघातः स्यात्[1]*। अथानन्तर[2]मेवैनां गाम् [3]उदगुत्सृप्य उत्तरस्यां दिशि नीत्वा शमितारो येनकेनापि[4]ऽभ्युपायेन संज्ञपयन्ति मारयन्ति[5]।

संज्ञपनविधिमाह—

## प्राक्शिरसमुदक्पदीं देवदैवत्ये ॥ २४ ॥

[6]प्राक्शिरसं प्राङ्मुखशिरस्काम् उदक्पदीमुदङ्मुखपादाम्। देवानुद्दिश्य यत् कर्म क्रियते तद् देवदैवत्यम्, तस्मिन् देवदैवत्ये वास्तुकर्मादौ एवं संज्ञपयन्ति[6]*।

## दक्षिणशिरसं प्रत्यक्पदीं पितृदैवत्ये ॥ २५ ॥

पितृनुद्दिश्य यत् कर्म तत् पितृदैवत्यम्। तस्मिन् [7]पितृदैवत्ये 'श्रोत्रियेऽभ्यागते [8]श्राद्धं महोक्षेण महाजेन वा पयस्विन्या वा दद्या[9]दि'त्येवमादौ(B)। [10]दक्षिणशिरसं दक्षिणा[11]भिमुखशिरस्कां [12]प्रत्यक्पदीं प्रत्यङ्मुखपादां संज्ञपयन्तीति [13]वर्त्तते। सेयम् [14]अष्टकाप्रसङ्गात् साधारणी[14]* सर्वपशुपरिभाषा।

ततश्च दैवतावशेन प्रोक्षणमन्त्रमूहेत्, [15]तद् यथा—वास्तुकर्मणि[15]* वास्तोष्पतये त्वा जुष्टां [16]प्रोक्षामीति। [17]पितृभ्यस्त्वेति। अजश्चेदुक्षा वा तदा जुष्टं प्रोक्षामीति पुंस्त्वमूहेत्[17]*।

[18]तथाचोक्तम्—

ऊहः प्रोक्षणमन्त्रे स्याल्लिङ्गदैवतयोर्वशात्[18]*(C)। इति।

---

A. ऋग्वेदमहाभारतादिप्रामाण्यात् शमितृशब्दो घातकार्थकः इति M. W. कोषः।

B. प्रमाणीकृतं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये।

C. प्रमाणत्वेनोपन्यस्तं वचनमिदं चन्द्रकान्तेनापि स्वभाष्ये।

---

1. नास्ति च। 2. 'एव' नास्ति च। 3. 'उदगुत्सृप्य' नास्ति च। 4. '-ऽभ्युपायेन' नास्ति च। 5. 'मारयन्ती'त्यनन्तरं—'तेन पूर्वमेव शमितृनाहूयोपकल्पयेत्' इति च-पुस्तके। 6. 'प्राक्शिरसं पूर्वमुखीम्। देवानुद्दिश्य यत् कर्म क्रियते तद् देवदैवत्यम्। तस्मिन् वास्तुकर्मादौ एव' इति च। उद्धृतोऽयं 'दक्षिणशिरसमि'त्यादिसूत्रानन्तरम्। 7. 'पितृदैवत्ये' नास्ति च। 8. 'श्राद्धे' च। 9. '-दित्यादि' च। 10. 'दक्षिणशिरसं' नास्ति च। 11. 'भिमु' नास्ति च। 12. 'प्रत्यक्पदीं' नास्ति च। 13. 'वर्त्तते' नास्ति च। 14. नास्ति च। 15. नास्ति च। 16, 'प्रोक्षामि' नास्ति च। 17. नास्ति च। 18. नास्ति च।

## संज्ञप्तायां जुहुयाद् यत् पशुर्मायुमकृतेति(A) ॥ २६ ॥

संज्ञप्तायां मृतायाम्। (B)[1]यत् पशुरित्यनेन मन्त्रेण पूर्ववज्जुहुयात्[1]*।

## पत्नी चोदकमादाय पशोः सर्वाणि स्रोतांसि प्रक्षालयेत् ॥ २७ ॥

[2]पत्नी उदकमादाय[2]* चशब्दाद् दर्भकूर्चञ्चाऽऽदाय।

[3]तथाचोक्तम्—

क्षालनं दर्भकूर्चेन सर्वत्र स्रोतसां पशोः।
इच्छाक्रमेण पार्श्वे स्याद् वपार्थं पार्श्वदारुणी(C) ॥

इति। तेन[3]* दर्भकूर्चेन [4]पशोः सर्वाणि स्रोतांसि[4]* प्रकर्षेणोद्घृष्योद्घृष्य क्षालयेत् [5]इति। [6]स्रोतांसि च—

सप्त तावन्मूर्धन्यानि तथा स्तनचतुष्टयम्।
नाभिश्रोणिरपानं च गोः स्रोतांसि चतुर्दश(D) ॥ इति[6]*।

## अग्रेण नाभिं पवित्रे अन्तर्धायानुलोममाकृत्य वपामुद्धरन्ति ॥ २८ ॥

---

A. तर्कालङ्कारस्तु मायुरकृतेति मूले निवेश्य मायुमकृतेति पाठान्तरमिति टिप्पण्यां जगौ। परमत्राऽऽकरग्रन्थे सायणादिकृतव्याख्याने च मायुमकृतेत्येवमेव मन्त्रस्य पाठः स्वीकृत इति कस्मात् तत्रभवता मायुरकृतेति अनाकरपाठस्य प्राधान्येनोपन्यासः कृत इति भवन्तोऽनूचाना विचारयन्तु।

B. मन्त्रस्तु—

ॐ यत् पशुर्मायुमकृतोरो वा पद्भिराहते।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ इति।

मन्त्रब्राह्मणम् २।२।८।

अस्य व्याख्या—हन्यमानः पशुर्वधासहिष्णुः सन् मायुं शब्दम् अकृत कृतवान्। अथ वा उरो हृदयप्रदेशं पद्भिः पादैराहते हिनस्ति सन्ताडयति, तस्मान्मायुकरणपादहननरूपादेनसः पापाद् अग्निर्देवः मा मां मुञ्चतु मोचयतु। न केवलमुक्तरूपादेव पापादपि तु विश्वादंहसः सर्वस्मात् संज्ञपननिमित्तात् पापान्मुञ्चतु। इति।

C. कर्मप्रदीपः ३।१०।१। मुद्रितपुस्तकेषु 'तूष्णीमिच्छाक्रमेण स्यात्' इति तृतीयपादपाठः।

D. कर्मप्रदीपः ३।१०।२।

---

1. नास्ति ग। 2. नास्ति ग। 3. नास्ति ग। 4. नास्ति ग। 5. 'इति' नास्ति ग।
6. 'स्रोतांसि च सप्त तावन् मूर्धन्यानि' ग।

अग्रेण नाभिं नाभेरग्रतः। [1]पूर्वासादिते [2]प्रागग्रे पवित्रे अन्तर्धाय। द्विवचनं वलापेक्षम्। [3]लोम्नामनुकूलमनुलोमम्[3]*। पूर्वासादितेन क्षुरेण आकृत्य पाटयित्वा मांसचर्मणोरवान्तरवर्त्तिनीं वपामुद्धरन्ति। बहुवचनाद् वपाहर्त्तुरनियमः(A)।

## तां शाखाविशाखयोः काष्ठयोरवसज्याभ्युक्ष्य श्रपयेत् ॥ २९ ॥

शाखा एकशाखं काष्ठम्। विशाखं नानाशाखं द्विशाखमित्यर्थः। शाखा च विशाखञ्च शाखाविशाखे [4]काष्ठे च ते पलाशे, उक्तञ्च 'वपार्थे पार्श्वदारुणी' इति[4]*। तयोः [5]शाखाविशाखयोः[5]* तां वपामवसज्य आवेष्ट्य [6]अभ्युक्ष्य उदकेन प्रोक्ष्य श्रपयेत्।

## प्रच्युतितायां विशसथेति ब्रूयात् ॥ ३० ॥

प्रकर्षेण च्युतितायां विस्रावीभूतायां पक्वायामित्यर्थः, विशसथेत्युच्चैर्यजमानो ब्रूयात्। [7]विशसथ गां विकृन्तत अपगतचर्मां कुरुतेत्यर्थः। [8]सहायानामयं प्रैषः[8]*। [9]एवं सहायान् प्रेषेत[9]*।

ततोऽर्थलक्षणया वाचा [10]तानवबोधयेत्, तथा विशसथ—

## यथा न प्रागग्नेर्भूमिं शोणितं गच्छेत् ॥ ३१ ॥

यथा येन प्रकारेण [11]विशस्यमानाया गोः अग्नेः पुरस्ताद् भूभागे[11]* शोणितं [12]न यायात्। [13]एतस्मादग्नेः समीपं विशस्यत इति ज्ञायते[13]*।

---

A. यद्यप्यत्र मन्त्रो नोपदिश्यते तथाऽपि 'यत्र मन्त्रा न विद्यन्ते' इत्यादिगृह्यासंग्रह-वचनोपदिष्टव्याहृतिजपो न कर्त्तव्यः। कथमिति चेत्,

वपाहोमे स्रुवेणैव होमे स्विष्टकृते तथा।
व्याहृतिर्न प्रयोक्तव्या स्रुवेणाप्सु च लक्षणम् ॥

इति गृह्यासंग्रह ( २।७२ )वचनबलादिति। ननु वचनादस्माद् वपाहोम एव व्याहृतिप्रयोग-निषेधोऽवगम्यते, किन्तु वपाहोमे आचार्येण मन्त्रोपदेशात् प्रसक्तिरेव नास्ति व्याहृतिप्रयोगस्येति निषेधो व्यर्थ इति चेत्? न, वपाहोमे कर्त्तव्ये तदनुकूलं यत्किञ्चित् क्रियते तत्रैवास्य निषेधस्य तात्पर्यादिति बोध्यम्।

---

1. 'पूर्वासादितादिति' ख। 2. 'द्वे पवित्रे प्रागग्रे' ख। 3. 'अनुलोमं लोम्नामनुकूलम्' ख। 4. नास्ति घ। 5. नास्ति घ। 6. 'अभ्युक्ष्य' नास्ति घ। 7. 'विशसथ' नास्ति घ। 8. ख-पुस्तकेऽयमंशः 'विशसथ···कुरुतेत्यर्थः' इत्यतः प्राग् वर्त्तते। 9. नास्ति घ। 10. 'तानेवं बोधयेत्' ख। 11. 'अग्नेः पुरस्ताद् भूभागे विशस्यमानाया गोः' ख। 12. 'नेयात्' घ। 13. 'एतस्मादेतद् गम्यते अग्नेः समीप एव विशसति इति' ख।

शृतामभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ॥ ३२ ॥

वैकृतत्वाद् यावद्वचनप्रसङ्गशङ्कानिवृत्त्यर्थो नित्यानुवादः। [1]ऋज्वर्थम्।

स्थालीपाकावृता वपामवदाय स्विष्टकृदावृता वाऽष्टकायै स्वाहेति जुहोति ॥ ३३ ॥

स्थालीपाका[2]वृतेति 'उपस्तीर्य मध्यात् पूर्वार्धाद्'इत्यनेन न्यायेन। क्षुरेण वपा[3]मवदाय, [4]यद्वा स्विष्टकृदावृता [5]उत्तरार्द्धपूर्वार्धादित्येवं प्राप्ते(A) [6]कृत्स्नां स्विष्टकृदावृतेति वचनात्[6]* निःशेषया स्विष्टकृतं यजेतेति।

[7]तथाचोक्तम्—

क्षुरो मांसावदानार्थः कृत्स्नां स्विष्टकृदावृता।
वपामादाय जुहुयात् तन्त्रमत्र समापयेत्(B) ॥ इति[7]*।

अनन्तरमेवान्यस्य कर्मणो विधानात्[8] एककर्माशङ्का मा भूदित्यतस्तन्त्रमत्र समापयेदित्यनेन कर्मनानात्वं स्पष्टयति।

स्थालीपाकावृताऽन्यत्(C) ॥ ३४ ॥

अयमत्र विशेषः—निःशेषया वपया स्विष्टकृदाहुतिर्होतव्येति, [9]अतो यदन्यत् तत् सर्वं स्थालीपाकावृता प्रकृतिवदेव भवतीत्यर्थः(D)।

इति [10]भट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये[10]*
तृतीयप्रपाठकस्य दशमी कण्डिका।

इति [11]गोभिलगृह्यभाष्ये[11]* तृतीयः प्रपाठकः समाप्तः ॥

---

A. द्रष्टव्यं सूत्रम् १।८।१० (पृ० २२१)।

B. कर्मप्रदीपः ३।१०।३। वचनेऽत्र 'तत्र तन्त्रम्' इति तर्कालङ्कारधृतः पाठः; आनन्दाश्रम-"वङ्गवासी"मुद्रितपुस्तकयोस्तु 'तत्र मन्त्रम्' इति पाठ इति।

C. सूत्रमिदमभ्यस्य पठतः सामश्रमितर्कालङ्कारौ। द्विर्वचनं प्रपाठकपरिसमाप्त्यर्थमिति च तत्र कारणमुपन्यस्तं ताभ्यामिति।

D. अथात्राष्टकाप्रयोगो गृह्यकर्मप्रकाशिकानुसारेण तत्प्रयोगबुभुत्सूनां परिज्ञानायोच्यते—"अष्टका च रात्रिर्देवता अग्निर्देवता पितृदेवता प्रजापतिर्देवता ऋतुदेवता वैश्वदेवी वा।

---

1. 'ऋज्वर्थम्' नास्ति घ। 2. '-वृतेति सुचाष्टमुपस्तीर्य' ख। 3. '-मादाय' ख। 4. 'अथवा' ख। 5. 'उत्तरार्धादित्येवं' ख। 6. नास्ति घ। 7. नास्ति घ। 8. 'च' इत्यधिकः पाठः घ। 9. 'अतो' नास्ति ख। 10. नास्ति ख। 11. नास्ति ख।

अन्ये तु अग्न्यादयो देवता मतान्तराभिप्रायेण, गोभिलाचार्यस्य तु रात्रिदेवताऽष्टका इति वदन्ति। तत्र सूत्रविरोधः स्पष्ट एव। तच्च कर्म नित्यं पुरुषसंस्कारमध्ये पठितत्वात्। यत्तु पुष्टिफलं श्रूयते तथाऽऽनुषङ्गिकमिति स्पष्टं भाष्ये। बहुदैवत्यानुसन्धानमात्रं सर्वास्वष्टकासु, न तु निर्वापकाले उक्तदेवतानामुच्चारणम्। सर्वत्राष्टकादेवताः। तास्त्वष्टकास्तिस्रो हेमन्ते मांसयुक्ताः कर्तव्या इति कौत्स ऋषिर्मन्यते। अष्टकात्रयं हेमन्ते कर्तव्यमित्यौद्गाहमानिमतम्। तथैव गौतमवार्कखण्डिमतम्। अस्मदाचार्याणां मते त्वष्टकात्रयमेव, हेमन्ते तस्यैवोत्तरत्रोपदेक्ष्यमाणत्वात्। मध्यमाष्टका च मांससहिता। तिसृणामष्टकानां मध्ये प्रथमा या मार्गशीर्षपौर्णमास्या ऊर्ध्वं कृष्णाष्टमी साऽपूपसाध्या अपूपाष्टका।

पौषपौर्णमास्या ऊर्ध्वं या कृष्णाष्टमी सा मांससाध्या मांसाष्टका। या च माघपौर्णमास्या ऊर्ध्वं कृष्णाष्टमी सा शाकसाध्या शाकाष्टकेत्युच्यते। अष्टकाश्राद्धकरणे न नान्दीमुखश्राद्धम्, न श्राद्धे श्राद्धमिष्यते इति कर्मप्रदीपस्मरणात्। प्रातर्होमान्ते अपूपाष्टकां करिष्ये इति संकल्प्याग्निमुपसमाधाय पात्रासादनकाले प्रकृतिवत् पात्राण्यासाद्य अपूपाष्टकाकरणार्थं करतलप्रमाणान्यष्टौ कपालान्यासाद्य चर्वर्थं व्रीहीनपूपार्थं पिष्टान् दृषदं दृषत्पुत्रञ्च समूलं बर्हिः परिस्तरणार्थं समूलदर्भांश्चाऽऽसादयेत्। निर्वापकाले तण्डुलान् पिष्टांश्च गृहीत्वा तन्त्रेण निर्वपति। अष्टकायै त्वा जुष्टं निर्वपामि। तन्त्रेणावहत्य प्रक्षाल्य इमे चर्वर्थास्तण्डुला इमे चापूपार्था इति तण्डुलान् विभज्य पिष्टार्थं तण्डुलान् दृषदि संस्थाप्य दृषत्पुत्रेण पिष्टान् करोति।

छिन्ने पिष्टे तथा लूने सान्नाय्ये मार्तिके तथा।
पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः॥

इति सुदर्शनभाष्यस्मरणात्, सिद्धे पिष्टे मन्त्रसंस्कारः, ततश्चरुं श्रपयेत्। भाष्यकारमते तु श्रपिते चरौ तच्छेषांस्तण्डुलान् शिलायां पिष्ट्वा अष्टावपूपान् श्रपयेत्, पिष्टैरपूपान् कृत्वा श्रपयति। तत्प्रकारश्च—चरोरुत्तरत अष्टावष्टौ कपालानि संस्थाप्य तेषु परिवर्तनमकुर्वन् अपूपान् श्रपयति। अभिघार्य चरुमुदगुद्वास्य अपूपांश्चोदगुद्वास्य प्रत्यभिघारयति। आज्यभागान्ते स्रुचि सकृदुपस्तीर्यावदानधर्मेण चरोर्मध्यात् पूर्वार्धाच्चावद्यति। पञ्चार्षेयश्चेत् पश्चार्धाच्च तृतीयमवद्यति। एवमपूपेभ्यः प्रत्येकं प्रत्येकं द्विर्द्विरवदाय सकृदभिघार्य सर्वाणि हवींषि पृथक् पृथक् प्रत्यभिघार्यावदानान्येकीकृत्य "अष्टकायै स्वाहे"ति जुहोति। इदमष्टकायै न मम। अन्यत् सर्वं पार्वणस्थालीपाकवत् कर्तव्यम्। अपूपैर्ब्राह्मणान् भोजयेत्। इत्यपूपाष्टकाप्रयोगः।

अथ मध्यमाष्टकाप्रयोग उच्यते—यद्यप्यत्र सूत्रकृता गोः संज्ञपनमुल्लिखितम्, तथाऽपि कलिवर्ज्यप्रकरणे गवालम्भस्य निषेधात् तत्प्रतिनिधित्वेन छागस्य स्मरणात्, अत्रैव प्रकरणे सूत्रकारेण शक्तस्य छागेन विहितत्वात् तत्पक्षमवलम्ब्यते। पौष्याः पौर्णमास्या ऊर्ध्वं या कृष्णाष्टमी तस्यां प्रातर्होमान्ते अनुज्ञां कृत्वा मध्यमाष्टकां करिष्ये इति संकल्प्य, सूर्योदयकाल एवाग्नेः पूर्वस्यां दिशि प्रत्यङ्मुखं छागमवस्थाप्योपस्थिते पशौ 'यत् पशव' इति मन्त्रेण

जुनेनाऽऽज्यं जुहोति। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः पशवो देवताः पशोरुपस्थितिहोमे विनियोगः। ततो मन्त्रः। इदं पशुभ्यो न मम। तत उपविष्टे ब्रह्मणि पात्राण्यासादयति—यव-मिश्रोदकं पवित्रे क्षुरमेकशाखाविशाले, पलाशकाष्ठे बर्हिरिध्ममाज्यं समिधौ स्रुक्स्रुवावाज्यस्थाली-मनुगुप्ता अपश्चाऽऽसाद्याऽऽज्यतन्त्रेणाऽऽज्यसंस्कारान्तं प्रकृतिवत् कुर्यात्। ततः पशुमनामिकाग्रेण स्पृशन् 'अनु त्वा माते'त्यनुमन्त्रयते—अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः पशुर्देवताऽनुमन्त्रणे विनियोगः। ततो मन्त्रः। ततो यवयुक्तेन जलेन पशुं प्रोक्षति अष्टकायै त्वा जुष्टं प्रोक्षामीति सौत्रो मन्त्रः। उल्मुकेन पशुं प्रदक्षिणीकुर्यात् 'परिवाजपतिरि'त्यृचा—अस्याः प्रजापतिर्ऋषिर्गायत्री छन्दोऽग्निर्देवता उल्मुकेन पशुपरिहरणे विनियोगः। तत ऋक्। पशोः पानार्थं जलं तूष्णीं दद्यात्, व्याहृतिभिरन्ये। पीतशेषमुदकं पशोरधोभागे सिञ्चेन्मन्त्रेण। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः-पशुर्देवता उदकसेचने विनियोगः। 'ॐ आत्तं देवेभ्यो हविः'। अथैनं पशुमुत्तरस्यां दिशि नीत्वा संज्ञपयन्ति। बहुवचनादनियताः शमितारः। ते च देवदैवत्ये पशौ प्राक्शिरसमुदक्पादं पितृ-दैवत्ये च दक्षिणशिरसं प्रत्यक्पादं संज्ञपयन्ति। मृते पशौ 'यत् पशुरि'तिमन्त्रेण जुहोति—अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽग्निर्देवता संज्ञप्तहोमे विनियोगः। ततो मन्त्रः। इदमग्नये न मम। ततः पत्नी चोदकमादाय पशोर्मूर्ध्नि सप्त द्वाराणि नाभिं श्रोणिमपानञ्च प्रक्षालयति। नाभेरग्रतः प्रागग्रे पूर्वासादितपवित्रे अन्तर्धाय क्षुरेणानुलोमं छित्त्वा मांसचर्मणोरन्तरवर्तिनीं वपा-मुद्धरन्ति। तत उद्धृतां वपां पूर्वासादितशाखाविशाखयोः प्रसार्याभ्युक्ष्याग्नौ श्रपयेत्। ततः पक्वायां वपायां यथा न प्रागग्नेर्भूमिं शोणितं गच्छेत् तथा विदासयेति सम्प्रेषणं यजमानोऽन्यान् प्रति वदेत्। एतेनाग्नेः पूर्वस्यां दिशि विदासनं ज्ञायते। शृतां वपामभिघार्योदगुद्वास्य प्रत्यभिघारयेत्। ततः स्रुचि सकृदुपस्तीर्य कृत्स्नां वपां क्षुरेणावदाय द्विरभिघारयति त्र्यार्षेयाणाम्। पञ्चार्षेयाणान्तु द्विरुपस्तीर्य कृत्स्नां वपामवदाय द्विरभिघारयति। ततोऽष्टकायै स्वाहेति वपां जुहोति। इदमष्टकायै न मम। ततोऽन्यत् कर्म स्थालीपाकवत् कर्तव्यम्। ततोऽग्नेरुत्तरतो व्रीहीन् उलूखलं मुसलं शूर्पं चरुस्थालीं पवित्रे मेक्षणद्वयं क्षुरं कांस्यपात्रत्रयं प्लक्षशाखायुक्तं प्रस्तरञ्चाऽऽसादयेत्। अत्र पात्राणां द्वन्द्वश आसादनम्। ततः सर्वाण्यङ्गानि गृहीत्वाऽग्नौ श्रपयेत्। वामं सक्थि क्लोमानञ्च वक्ष्य-माणान्वष्टक्याय स्थापयेत्। अवत्तान्यङ्गानि हृदयकांस्यपात्रे निक्षिप्य प्रकृतगृह्याग्नौ श्रपयति। अस्मिन्नेव क्रमे अष्टकायै त्वा जुष्टं निर्वपामीति व्रीहीन् निरुप्यावहत्य त्रिः फलीकृत्य प्रक्षाल्य श्रपयति। ततः शृतमोदनचरुं मांसचरुञ्च प्रादक्षिण्येन पृथक्मेक्षणाभ्यां मिश्रीकरोति। यद्यपि पशोः सामित्राग्नौ श्रपणमुपदिष्टं तथाऽप्यत्र 'तस्मिन्नेवाग्नौ श्रपयती'ति सूत्रकृदुक्तेर्गृह्याग्नौ श्रपणं न तु तस्मादुद्धृतेऽग्नौ। ततः शृतं चरुद्वयमभिघार्योदगुद्वास्य प्रत्यभिघारयेत्, अस्मिन् क्रमे परिसमूहनादि समिदाधानान्तं कर्म कुर्यात्। ततः पूर्वासादिते एकस्मिन् कांस्यपात्रे मांसरसमवनयति। ततोऽग्नेः पश्चात् पूर्वासादिते बर्हिषि प्लक्षशाखां प्रागग्रां निधाय तस्मिन् कांस्ये मांसावदानानि स्थापयति। अथवा प्लक्षशाखायुक्तप्रस्तरं प्रागग्रमस्मिन् एव काले अग्नेः पश्चान्निधाय तस्मिन्

मांसावदानान्यासादयति प्रागपवर्गम्। ततोऽन्यस्मिन् कांस्यपात्रे द्वादशानामवदानानां पृथक् पृथगवदानधर्मेणावदानं कुर्यात्। पुनरन्यस्मिन् पात्रे स्विष्टकृद्धोमार्थं सर्वेभ्योऽङ्गेभ्य उत्तरार्ध-पूर्वार्धेभ्यः पृथक् पृथगवद्यति। अत्रोपस्तरणादिकं प्रकृतिवत्। ओदनचरोरप्यवदानधर्मेण पूर्ववदेव पात्रे बिल्वफलप्रमाणमवदानम्। उत्तरार्धात् पूर्वार्धाच्च स्विष्टकृदर्थमोदनचरोरपि स्विष्टकृत्पात्रेऽवदानम्। ततः स्विष्टकृद्धोमावदानं परिहाय पूर्वगृहीतैर्मांसावदानैः सह रसमप्येकी-कुर्यात्। तत आज्यभागौ हुत्वा चतुर्गृहीतमाज्यं गृहीत्वा 'अग्नावग्निरि'ति प्रथमया ऋचा जुहुयात् पञ्चार्षेयाणाम्। त्र्यार्षेयाणामपि चतुर्गृहीतमेवात्र पूर्ववद् विशेषाभावात्, चतुर्गृहीतमाज्यं गृहीत्वेत्यत्र विशेषोपदेशाच्च। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्विराट् त्रिष्टुप् छन्दोऽग्निर्देवता होमे विनियोगः। मन्त्रः। इदमग्नये न मम। ततः प्रथमपात्रे यद् गृहीतं मांसजातं तस्मात् तृतीयांशं हस्तेन गृहीत्वा स्रुचि संस्थाप्य द्वितीयतृतीयाभ्यामृग्भ्यां जुहोति। अनयोः प्रजापति-ऋ॑षिस्त्रिष्टुप् छन्दोऽष्टका देवता होमे विनियोगः। मन्त्रौ। इदमष्टकायै न मम। ततस्तस्मादेव मांसजातादेकमंशं हस्तेन गृहीत्वा स्रुचि निधाय चतुर्थीपञ्चमीभ्यामृग्भ्यां जुहोति। अनयोः प्रजापतिऋ॑षिस्त्रिष्टुब्-बृहती छन्दसी अष्टका देवता होमे विनियोगः। मन्त्रौ। इदमष्टकायै न मम। पुनस्तस्मिन्नेवावशिष्टं मांसजातं हस्तेनाऽऽदाय स्रुचि निधाय षष्ठीसप्तमीभ्यामृग्भ्यां जुहोति। अनयोः प्रजापतिऋ॑षिर्बृहती छन्दोऽष्टका देवता होमे विनियोगः। मन्त्रौ। इदमष्टकायै न मम। ततः पात्रान्तरे स्विष्टकृदर्थमवदाय यत् स्थापितं तत् सर्वं हस्तेन स्रुचि संस्थाप्याष्टम्यर्चा उत्तरार्धपूर्वार्धे जुहोति। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽग्निर्देवता होमे विनियोगः। ततो मन्त्रः। इदमग्नये स्विष्टकृते न मम। ततो व्याहृतिहोमादि तन्त्रशेषं पार्वणस्थाली-पाकवत् समापयेत्।

छागस्यासम्भवे स्थालीपाकः कर्तव्यः। तस्य प्रयोगः—पशोः स्थाने स्थालीपाकं करिष्ये इति सङ्कल्प्य पात्रासादनकाले प्रकृतिवत् पात्राण्यासाद्य चरुस्थालीद्वयमोदनचर्वर्थं मांसस्थानीयपायस-चर्वर्थञ्च शूर्पद्वयं तण्डुलान् पयश्च कांस्यपात्रत्रयं प्लक्षशाखां मेक्षणद्वयञ्चाऽऽसादयेत्, निर्वापकाले अष्टकायै त्वा जुष्टं निर्वपामीत्यादि तण्डुलप्रक्षालनान्तं कृत्वा अन्यशूर्पस्थितपायसचर्वर्थतण्डुलान् पुरस्तादग्नेः संस्थाप्य पयोदकेनाष्टकायै त्वा जुष्टं प्रोक्षामीति प्रोक्ष्य गृह्याग्नेरङ्गारमादाय पशुवत् 'परि वाजपतिरि'ति तण्डुलानामुपरि भ्रामयेत्। एतत् पर्यग्निकरणम्। ततः पर्यग्निकृतानामवहननादि कुर्यात्। अत्र तण्डुलानामेकदेशं गृहीत्वा अन्वष्टक्यार्थमन्यत्र स्थापयेत्। ओदनचरुमन्यस्यास्थाल्यां पायसचरुञ्चान्यस्थाल्यां दक्षिणतः पूर्वस्याधिश्रयणमुत्तरतोऽपरस्य। पृथङ्मेक्षणाभ्यां मिश्रीकरोति। ततः कांस्यपात्रे पायसचरोरासादनम्। ततोऽभिघारादि। अग्नेः पश्चाद् बर्हिष्योदनचरुमासाद्य प्लक्षशाखायुक्ते प्रस्तरे पायसचरोर्द्वादश पिण्डान् कृत्वासादयेत्। आज्यभागान्ते मांसावदानवद् द्वादशपिण्डेभ्य एकस्मिन् कांस्यपात्रेऽवदानधर्मेणावदाय मांसाष्टकावदोदनचरुमप्येवं बिल्वफल-मात्रं मेक्षणेनावदाय स्विष्टकृदर्थमन्यस्मिन् कांस्यपात्रे बिल्वमात्रमवदाय रसमपि गृहीत्वा

मांसावदानहोमवद्दर्वेण होमं कुर्यात्, अन्यत् सर्वं प्रकृतिवत्। अत्र पशोः स्थाने पायस-चरोर्विधानेऽपि पशूपस्थितहोमप्रभृतिवपाहोमान्तानां पदार्थानां निवृत्तिः। एवमनुमन्त्रणा-सेचन-संज्ञपितहोममन्त्राणामपि निवृत्तिरेव। प्रोक्षणमन्त्रस्तु स्थालीपाकपक्षेऽप्यविरोधात् स्यादेव। स्थालीपाककरणेऽप्यशक्तौ स्वस्या अन्यस्या वा गोर्यवासम्भवं ग्रासम् 'एषा मेऽष्टका' इत्येतावता मन्त्रेण दद्यात्, तत्राप्यशक्तौ वनं गत्वा कक्षमुपसमाधाय 'एषा मेऽष्टका' इति मन्त्रं पठेत्। उक्तानां पक्षाणामन्यतममाश्रित्य प्रत्यष्टमष्टका कर्तव्यैव। केचित्तु कलौ पैतृके कर्मणि पशुबन्धस्य निषेधात् स्थालीपाकपक्ष एव मुख्य इति वदन्ति।



# चतुर्थप्रपाठकस्य प्रथमा कण्डिका

—:०:—

एवं वपाहोमे कृते वपाश्रपण्योः पलाशशाखयोः का प्रतिपत्तिरित्यत आह—

## अनुप्रहरति वपाश्रपण्यौ ॥ १ ॥

वपा ययोः शाखयो[1]रवसज्य भूता[1]* ते शाखे वपाश्रपण्यावुच्येते ; प्रहरति-शब्देन होमो विधीयते। कुतः? याज्ञिकप्रसिद्धेः, श्रुतिश्च 'गार्हपत्ये प्रहरामहे' इत्यादिः। तथाच सूत्रकारः—'अष्टावष्टौ शकलान्याहवनीये प्रहरेयुरि'ति(A)। ते वपाश्रपण्यौ शाखे अनु पश्चात् प्रहरति जुहोति। कस्य पश्चात्? उच्यते—पात्रासादनब्रह्मोपवेशनयोः। कुतः? आरम्भसामर्थ्यात्, क्षुरः, कंसपात्रत्रयम्, प्लक्षशाखावत्प्रस्तर इति। अत्र वैकृतमधिक[2]मासादनम्; प्राकृतानाञ्च चरुस्थालीपवित्रमेक्षणानि विनियोग-सामर्थ्यात् क्लृप्तश्च आसादनीयानि।

ते शाखे कथमनुप्रहरतीत्यत आह—

## प्राचीमेकशूलां प्रतीचीमितराम् ॥ २ ॥

एकं शूलमग्रं यस्याः शाखायाः सेयमेकशूला, तां प्राचीं प्रागग्रां प्रहरति ; इतरां द्विशूलां प्रतीचीं प्रत्यगग्राम्। प्रहरतीति वर्तते।

## अवद्यन्त्यवदानानि सर्वाङ्गेभ्यः ॥ ३ ॥

अवद्यन्तीति बहुवचनात् अवदानकर्तुरनियमः। प्रकृतेन क्षुरेणावद्यन्ति गृह्णन्ति, प्रकृतस्य पशोरवदानानि [3]मांसबहूनि। कुतोऽवद्यन्ति? उच्यते—सर्वाङ्गेभ्यः, सर्वेभ्योऽङ्गेभ्यः। अङ्गानि चैकादश [4]पशोः श्रूयन्ते। तथाचोक्तम्—

हृज्जिह्वाक्रोडसक्थीनि यकृद्वृक्कौ गुदं स्तनाः।
श्रोणिस्कन्धसटाः पार्श्वे पश्वङ्गानि प्रचक्षते ॥

---

A. कात्यायनश्रौतसूत्रम् २।११।१४।

---

1. '-रवसृज्य प्रता' ख। 2. '-माऽऽसादनम्' ख। 3. '-मांसावयवानि' ख। 4. 'पशोः' नास्ति ख।

एकादशानामङ्गानामवदानानि संख्यया ।
पार्श्वस्य वृकसक्थ्न्योश्च छित्वाद्याश्चतुर्दश(A) ॥ इति ।

ननु अवद्यन्त्यवदानानीति वक्तव्ये सर्वग्रहणं किमर्थम् ? उच्यते—

हृदयं [1]जिह्वां क्रोडं सव्यसक्थिपार्श्वनडकं पार्श्वे [2]च ।
यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि(B) ॥

इति ग्रन्थान्तरवचनादिह च जुह्वा होमस्य विधानात् जौहवानामेवावदानानामिह ग्रहणम् अभूत्, न सर्वेषामित्यतः सर्वाङ्गेभ्य इत्युक्तम् ।

सर्वाङ्गेभ्य इत्यस्यापवादार्थमिदमाह—

## अन्यत्र वामाच्च सक्थ्नः क्लोम्नश्च ॥ ४ ॥

वामं सव्यं सक्थि (C)क्लोमानं च मुक्त्वा अन्यत्रावद्यन्ति, एवं चतुर्दशानां मध्यादवदानद्वयापवादेन द्वादशावदानानि भवन्ति ।

अनेनावदानद्वयेन [3]किं प्रयोजनमित्यत[3]* आह—

## वामं सक्थ्यन्वष्टक्याय निदध्यात् ॥ ५ ॥

वामं सव्यं सक्थि अपवादसामर्थ्यात् क्लोमानं चान्वष्टक्याय वक्ष्यमाणस्यान्वष्टक्यकर्मणोऽर्थाय निदध्यात् स्थापयेत् ।

## तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च मांसचरुञ्च पृथङ्मेक्षणाभ्यां प्रदक्षिणमुदायुवन् ॥ ६ ॥

तस्यै[4]वाधिकृतत्वात् तस्मिन्नेवाग्नावित्यवाच्यमिति चेत्, न ; इतरथा पशुकर्मणि

A. कर्मप्रदीपः ३।१०।४-५ ।

B. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि पाठभेदेन । स च पाठः—"यकृच्च वृक्कौ च गुदं दक्षिणश्रोणिरितरा नाभिः" इति । "वृक्कौ=Kidneys" इति M. W. कोशकारः ।

C. क्लोमानं फुस्फुसम् । 'तिलकं क्लोम' इत्यमरः । "बाह्वोर्द्वयोर्मध्ये वक्षस्तन्मध्ये हृदयं तत्पार्श्वे क्लोम पिपासास्थानम् इति वैद्यकम्" इति शब्दकल्पद्रुमः ।

1. 'जिह्वा' ख । 2. 'च' नास्ति च । 3. 'किमित्यत' ख । 4. '-वाधिविकृतत्वात्' ख ।

[1]अवदानानामभ्यन्तरे (A)शामित्रे श्रपणस्य दृष्टत्वादिहाप्यभ्यन्तरस्योपादानं मा भूदित्यतस्तस्मिन्नित्युच्यते। ओदनचरुः व्रीहितण्डुलनिष्पन्नः, एवञ्चात्रापि व्रीहीणां नियमः ओदनचरुं श्रपयति मांसचरुं [2]चालनीभिरेवावदानैः। वि-समासकरणं श्रपणस्य कालपृथक्त्वप्रज्ञापनार्थम्। उक्तार्थमन्यत्(B)।

## शृतावभिघार्योद्वगुद्वास्य प्रत्यभिघारयेत् ॥ ७ ॥

[3]वैकृतत्वात् मांसचरावेव वक्तव्ये परिसंख्यानभयादुभयवचनम्।

एतस्मिन् क्रमे परिसमूहनादि समिदाधानान्तं कृत्वा ततः—

## कंसे रसमवासिच्य ॥ ८ ॥

कंसे कंसपात्रे प्रागासादितानामेकस्मिन् रसम् अवदानमांसयूषम् अवसिच्य निनीय—

## प्लक्षशाखावति प्रस्तरेऽवदानानि कृत्वा ॥ ९ ॥

प्रस्तरः कुशमुष्टिः, प्लक्षः प्रसिद्धो वृक्षविशेषः। प्लक्षशाखा यस्मिन् प्रस्तरे विद्यन्ते सोऽयं प्लक्ष[4]शाखावान् प्रस्तरः। तस्मिन् प्लक्षशाखावति प्रस्तरे भूमौ प्रागग्रे [5]निहिते तान्यपनीतयूषाणि[5]* मांसावदानानि कृत्वा—

## स्थालीपाकावृताऽवदानानां कंसेऽवद्यति ॥ १० ॥

स्थालीपाकावृता प्रत्येकं मध्यात् पूर्वार्धादित्यनेनापूपन्यायेन द्वादशानामप्यवदानानां [6]क्षुरेण कंसे [7]अन्यस्मिन् कंसपात्रे अवद्यति(C) न यत्र यूषोऽवसिक्तः।

---

A. पशुपाकविषेये।

B. पृथक् पृथगेव श्रपयति मेक्षणाभ्यां प्रदक्षिणमुदायुवन्, प्रदक्षिणं यथा भवति तथा अर्ध्वोभीयन्निमन्थन्नित्यर्थः। इति।

C. क्षुरेणावदाय स्थापयतीत्यर्थः।

---

1. 'अवदानमभ्य-' ख। 2. 'चालनिभिरेवा-' ख। 3. 'प्रकृतत्वात्' ख। 4. 'शाखावत्-प्रस्तरः' ख। 5. 'निहिते तान्यनिपातः यूषाणि' ख। 6. 'च क्षुरेण' ख। 7. 'यस्मिन्' ख।

## स्विष्टकृतश्च पृथक् ॥ ११ ॥

स्विष्टकृदुकलक्षणः, स्विष्टकृतश्च स्विष्टकृदर्थं [1]च। किं स्थालीपाकावृताऽवदानानां कंसेऽवद्यतीति वर्तते ? किं तस्मिन्नेव कंसेऽवद्यति ? न, पृथक् [2]अन्यस्मिन्नित्यर्थः। अत्र स्विष्टकृदर्थत्वात् उत्तरार्धपूर्वार्धेभ्यो ग्रहणम्। पृथक्-शब्दः काकाक्षिन्यायेनो-भयत्र संबध्यते।

## [3]चरोरुद्धृत्य बिल्वमात्रमवदानैः सह यूषेण सन्नयेत् ॥ १२ ॥

चरोः प्रकृतत्वादोदनस्य बिल्वमात्रं यथा भवति तथा मेक्षणेनोद्धृत्य गृहीत्वा। किं सकृदेवैकस्मिन्नेव पात्रे ? न, पृथक् मध्यात् पूर्वार्धादित्यनेन पूर्वप्रकृतन्यायेनैकस्मिन् पात्रे गृह्णाति। उत्तरार्धपूर्वार्धादित्यनेन च स्विष्टकृत्पात्रे इति। सर्वैरपि सर्ववदानै-र्बिल्वमात्रं यथा भवति तथोद्धरेदित्यर्थः। ततस्तद् बिल्वमात्रमुद्धृतं पृथक्पात्रस्थमेव पूर्वगृहीतैर्मांसावदानैः सह यूषेण च पूर्वावसिक्तेन सह सन्नयेत्। समित्येकीभावे, एकीकुर्यात् मिश्रयेदित्यर्थः।

एतस्मिन् क्रमे आज्यभागौ हुत्वा ततः—

## चतुर्गृहीतमाज्यं गृहीत्वाऽष्टर्चप्रथमया जुहुयादग्नावग्नि-रिति ॥ १३ ॥

चतुर्गृहीतमाज्यं गृहीत्वा (A)अग्नावग्निरिति योऽयमष्टर्चः, अष्टानामृचां समाहारः

---

A. मन्त्रब्राह्मणोक्तानामग्नावग्निरित्याद्यष्टानामृचां प्रथमा ऋक्—

ॐ अग्नावग्निश्चरति प्रविष्ट
ऋषीणां पुत्रो अधिराज एषः।
स नः स्योनः सुयजा यजाति
यथा देवानां जनिमानि वेद ॥ इति। सा० म० ब्रा २।२।१।

अस्या व्याख्या—अग्नावाहवनीये, योऽयमग्निः पुनर्मन्थनसम्पादितः प्रविष्टो मिश्रितः सन् चरति हुतस्ततो ज्वालया व्याप्नोति हविर्भक्षयति वा। कीदृशोऽयम् ? ऋषीणां मन्त्राणां पुत्रः पुत्रस्थानीयः मन्त्रेण मथनाद् उत्पन्नत्वात्। यद्वा ऋषिभिर्मरीच्यादिभिरुत्पादितत्वात् पुत्रत्व-मुपपद्यते। तथाऽधिराजः सर्वस्य स्वामी अधिकं राजमानो वा। सोऽग्निरस्माकम् अर्थाय

---

1. 'च' नास्ति ख। 2. 'चन्निन्नित्यर्थः' ख। 3. 'पृथक् चरो-' ख।

तस्य प्रथमया आग्रयर्चा जुहुयात्। भृगूणामपि चतुर्गृहीतमेवैतत्। कुतः? [1]पूर्ववद् विशेषाभावात्।

## सन्नीतात् तृतीयमात्रमवदाय द्वितीयातृतीयाभ्यां जुहोति ॥१४॥

[2]यत् तत् प्रथमपात्रे सन्नीतं तस्मात् सन्नीतात् तृतीयमात्रं तृतीयांशं हस्तेनैव स्रुच्यवदाय प्रकृतस्याहर्वस्य(A)द्वितीयातृतीयाभ्यामृग्भ्यां जुहोति।

---

स्योनः सुखकारी सन् यजाति यजत्वान् देवान् यजतु पूजयतु, हविः प्रापयत्वित्यर्थः। कीदृशः? सुयज्ञाः, शोभनं देवान् यजतीति वा सुष्ठु यजनीयो वा। यागप्रकार उच्यते—यथा येन प्रकारेण देवानां यजनीयानां जनिमानि जन्मानि वेद जानाति तेन प्रकारेण यजतु। इति। मन्त्रेऽस्मिन् यजा च इति पाठान्तरं वर्तते तत् तु सायणाचार्यासम्मतमिति ज्ञायते।

A. द्वितीया ऋक्—

ॐ औलूखलाः सम्प्रवदन्ति ग्रावाणो
हविष्कृण्वन्तः परिवत्सरीणाम्।
एकाष्टके सुप्रजसः सुवीरा
ज्योग् जीवेम बलिहृतो वयं ते॥ इति।

अस्या व्याख्या—औलूखला उलूखलरूपेण परिणताः ग्रावाणः सम्प्रवदन्ति सम्यक् प्रकर्षेण शब्दयन्ति, अवहननशब्दमुत्पादयन्तीत्यर्थः। तथा ग्रावाणः पाषाणाः साधनाश्च सम्प्रवदन्ति। यद्वा औलूखला उलूखलसम्बन्धिनः तद्रूपेण निष्पादिता ग्रावाणः संप्रवदन्ति। कीदृशास्ते? परिवत्सरीणाम्, परीत्ययं सम् इत्यस्यार्थे, संवत्सरे यष्टव्या एकाष्टका देवता परिवत्सरीणा, ताम् उद्दिश्य हविश्चरुपुरोडाशादिकं कृण्वन्तः कृतवन्तः, यत एवम् अतो हे एकाष्टके, ते तुभ्यं बलिहृतः पूजाकर्तारो वयं सुप्रजसः शोभनपुत्रादिप्रजोपेताः, सुवीराः शोभनभृत्याद्युपेताः सन्तः ज्योक् चिरकालम्, जीवेम प्राणान् धारयेम, यतो बलिहृतः अत एवं स्याम इत्यभिप्रायः। इति।

तृतीया ऋक्—

ॐ इडायास्पदं घृतवत् सरीसृपं
जातवेदः प्रतिहव्या गृभाय।
ये ग्राम्याः पशवो विश्वरूपा-
स्तेषां सप्तानां मयि रन्तिरस्तु (स्वाहा)॥ इति।

सा० म० ब्रा० २।२।१०-११।

अस्या व्याख्या—हे जातवेदो जातविद्य जातधन वा, अग्ने, त्वम् इडायाः मनोः पुत्र्याः

---

1. 'पूर्वविधौ विशेषाभावात्' घ। 2. 'यत् प्रथमपात्रे' ख।

## उत्तरस्यां स्वाहाकारं दधाति ॥ १५ ॥

'मन्त्रान्ते स्वाहाकार' इति वचनात् [ सू० १।१।२१ ] प्रतिमन्त्रं स्वाहाकारो मा भूदित्यत इदमुच्यते। उत्तर[1]स्यामृचि न पूर्वस्याम्, स्वाहाकारं दधाति करोति। तत्रैव च जुहोति।

## एवमेवापरे चतुर्थीपञ्चमीभ्यां षष्ठीसप्तमीभ्याञ्च ॥ १६ ॥

एवमेव अनेनैव पूर्वोक्तेन [2]प्रकारेण विधिना अपरे द्वे तृतीयमाने प्रकृतस्याष्टर्चस्य (B) चतुर्थीपञ्चमीभ्यामृग्भ्यां षष्ठीसप्तमीभ्याञ्च जुहोति। अत्राप्युत्तरस्याम् [3]उत्तरस्यां[3]* स्वाहाकारं दधाति।

---

गोरूपायाः पदं स्थानम् उत्तरवेदिलक्षणम्, घृतवद् घृतोपेतम्, यद्वा इडा भूमिः, तस्याः पदम् उत्तरवेदिलक्षणम्, तच्च घृतवद् घृतोपेतं दीप्तिमद् वा, सरीसृपं सरणयोग्यम्। तत्र प्रतिष्ठितः सन् हव्या हवींषि, प्रतिगृभाय गृहाण, ये ग्राम्याः ग्रामभवाः पशवः, विश्वरूपाः गवादिभेदेन नानारूपाः, तेषां सप्तानां गवाश्वोष्ट्रमहिषाजाविपुरुषभेदेन सप्तविधानां रन्तिः क्रीडनं मय्यस्तु, भवतु।

B. चतुर्थी ऋक्—

ॐ इयेव सा या पूर्वा व्यौच्छत्  
सेयमप्स्वन्तश्चरति प्रविष्टा।  
वधूर्जिगाय प्रथमा जनित्री  
विश्वे ह्यस्यां महिमानो अन्तः ॥ इति।

अस्या व्याख्या—एषैव एषाऽष्टकैव, सा प्रसिद्धा वक्ष्यमाणा, या पूर्वा प्रथमा सूर्यादिभ्यः प्रथमभाविनी, सती व्यौच्छत्, उच्छी विवासे, विवासो वर्जने तमो विध्वंसितवती, किञ्च येयम् एकाष्टका, सा अप्सु अन्तर्व्याप्तेषु रश्मिषु उदकेषु अन्तरिक्षप्रदेशेषु वा मध्ये प्रविष्टा समीपे चरति गच्छति, किञ्चैवं महानुभावा एषा प्रथमा सर्वेषां प्रथमभूता मुख्या जनित्री सर्वेषामुत्पादयित्री सती वधूर्वस्तव्यानि भवानि जिगाय अस्मदर्थं जितवती, वज्जयसम्भावनाय महिमा, हि प्रसिद्धौ अस्याम् उषोरूपायामष्टकायाम् अन्तर्मध्ये महिमानः सर्वाणि बहुधनत्वादीनि माहात्म्यानि, वर्तन्ते इति शेषः।

---

1. '-स्यामृचि' ख। 2. 'प्रकारेण' नास्ति घ। 3. नास्ति ख।

एतस्मिन् कर्मे सर्वप्रायश्चित्तं हुत्वा [1]ततः—

**शेषमवदाय सौविष्टकृतमष्टम्या जुहुयात् ॥ १७ ॥**

[2]शेषं यद् तत् पृथक्पात्रे सन्नीतमास्ते सौविष्टकृतं स्विष्टकृदर्थम्। उत्तरार्धपूर्वार्धेभ्यो गृहीतं तदवदाय[3]पूर्वस्या(A)ष्टम्यर्चा उत्तरार्धपूर्वार्धे जुहुयात्। [4]इयमेवात्र

---

पञ्चमी ऋक्—

ॐ एषैव सा या प्रथमा व्यौच्छत्
सा धेनुरभवद् विश्वरूपा।
संवत्सरस्य या पत्नी
सा नो अस्तु सुमङ्गली ( स्वाहा )॥ इति।

अस्या व्याख्या—उक्तः प्रथमपदार्थः। विश्वरूपा बहुरूपधारिणी धेनुः अभवत् देवेभ्यो धेनुवत् प्रीणयित्री, धेनुः पयःसम्पन्ना, किञ्च या अष्टका संवत्सरस्य पत्नी ( 'एषा वै संवत्सरस्य पत्नी, यदेकाष्टकेति', मन्त्रब्राह्मणम् तै० स० ७।४।८।१ ) सा नः अस्माकम्, सुमङ्गली शोभनमङ्गलधारिणी अस्तु भवतु।

षष्ठी ऋक्—

ॐ यां देवाः प्रतिनन्दन्ति रात्रीं धेनुमिवाऽऽयतीम्।
सा नः पयस्वती दुहा उत्तरामुत्तरां समाम्॥ इति।

अस्या व्याख्या—यां रात्रिरूपां भूतानां प्रेरयित्रीं या अष्टकाम्, आयतीं धेनुमिव देवाः प्रतिनन्दन्ति सा नः पयस्वती उत्तरामुत्तरां समाम्, उपर्युपरि संवत्सरे दुहा दुग्धा।

सप्तमी ऋक्—

ॐ संवत्सरस्य प्रतिमां यां त्वा रात्रि यजामहे।
प्रजामजर्यां नः कुरु रायस्पोषेण संसृज ( स्वाहा )॥ इति।

अस्या व्याख्या—संवत्सरस्य प्रतिमां प्रतिबिम्बरूपाम्, यां त्वा त्वाम्, हे रात्रि यजामहे पूजयामि, नः अस्माकं प्रजां पुत्रादिलक्षणाम्, अजर्याम् जराशून्यां, ( सायणमते तु अजर्यां अन्यैर्जेतुमशक्यां ) कुरु, किञ्च रायस्पोषेण धनपुष्ट्या, संसृज अस्मान् संयोजय।

A. अष्टमी ऋक्—

ॐ अन्विमन्नो अनुमतिर्यज्ञं देवेषु मन्यताम्।
अग्निश्च हव्यवाहनः स नोऽदाद्दाशुषे मयः॥
मन्त्रब्राह्मणम् २।२।१२-१६।

अस्या व्याख्या—अनुमतिर्देवता देवेषु इमं यज्ञं यागम् अनुमन्यतां मया क्रियमाणमिमं

---

1. 'च ततः' च। 2. 'पूर्वं' ख। 3. 'पदर्चेन' नास्ति ख। 4. 'यवमेवात्र' ख।

स्विष्टकृदाहुतिः। अत्र '[1]व्याहृतितन्त्रं समापयेत्। एवं [2]यथोक्तविधिना प्रत्यक्षं गवा यागः कर्तव्यः। इत्ययं तावत् प्रथमः कल्पः।

यदा तु गौर्न संपद्यते तदा कथमित्यत आह—

**यद्यु वा अल्पसम्भारतमः स्यादपि पशुनैव कुर्वीत ॥ १८ ॥**

द्रव्यसहायहीनोऽल्पसम्भार उच्यते, यस्ततोऽ[3]प्यधिकः सोऽल्पसम्भारतमः। उ वै इति निपातौ। यदि कथञ्चिदल्पसम्भारतमः स्यात्तु भवेत् स इममष्टकायागम् अपि पशुनैव कुर्वीत। 'गोरनादेशे पशुरि'ति गृह्यान्तरवचनात् (A)। 'छागपक्षे चराचपी'ति [4]च लिङ्गात्(B) छागेन पशुना कुर्वीत। एवकारकरणं [5]पूर्वोक्तस्य विधेर्नियमार्थम्[6]। एवञ्चात्राप्युपस्थितहोमादिः सौविष्टकृतमष्टम्यां जुहुयादित्येवम्, अतः पूर्वोक्त एव कृत्स्नो विधिः स्यात्। यस्तु प्रोक्षणमन्त्रे विशेषः स पुरस्तादेवोक्तः। समानमन्यत्।

छागस्याप्यभावे कथमित्यत आह—

**अपि वा स्थालीपाकं कुर्वीत ॥ १९ ॥**

ऋज्वर्थम्।

अथ[6]च स्थालीपाक ओदनचरोः पश्चान्मांसचरुस्थाने पयसि कर्तव्यः।

तथाचोक्तम्—

स्थालीपाकं [7]पशोः स्थाने कुर्यात् [8]यथानुकल्पिकम्।
श्रपयेत् तं सवत्सायास्तरुण्या गोः पयस्यनु (C) ॥ इति।

---

यागं देवेभ्योऽनुमतिः अनुज्ञायतामित्यर्थः। किञ्च हव्यवाहनोऽग्निः वायुषे वाजे, वचनमत्रनचनः, नो मह्यं मयः सुखम् भवात्।

A तर्कालङ्कारस्तु 'अनादेशे पशुश्छागः' इत्येवं गृह्यान्तरवचनं पठति।

B. तथाच कर्मप्रदीपवचनमिदं वक्ष्यति परसूत्रे भाष्यकारः—

चरितार्था श्रुतिः कार्या यस्मादप्यनुकल्पतः।
अतोऽर्धेन होमः स्याच्छागपक्षे चराचपि ॥ इति ३।१०।६।

C. कर्मप्रदीपः २।७।२९।

---

1. 'व्याहृत्यादि' ख। 2. 'यथोक्तेन वि-' ख। 3. '-प्यधिकारः' ख। 4. 'च' नास्ति ख। 5. 'पूर्वोक्तविधिनियमार्थम्' ख। 6. 'च' नास्ति ख। 7. 'पशुस्थाने' ख। 8. 'यथानुकल्पितम्' ख।

स्थालीपाकं पशुस्थाने [1]इत्येतस्मादेव वचनाद् गोपशुस्थाने चरुद्रव्यस्य विधानमेतदिति गम्यते, एवञ्च 'तत्कार्यापत्तेस्तद्धर्मलाभ' इति न्यायादवाप्यर्थेनैव होमः स्यात् ।

तथाचोक्तम्— चरितार्थां श्रुतिः कार्या यस्मादप्यनुकल्पतः ।
अतोऽर्थेन होमः स्याच्छागपक्षे चरावपि ॥
अवदानानि यावन्ति क्रियेरन् प्रस्तरे पशोः ।
तावतः पायसान् पिण्डान् पश्वभावेऽपि कारयेत् (A) ॥ इति ।

ननु 'अपि वा स्थालीपाकेने'ति वक्तव्ये [2]प्रकृतविभक्त्यतिक्रमः किमर्थम् ? उच्यते— वपायागनिवृत्त्यर्थम् । इतरथा पश्वभावेऽ[3]प्यविलोपा[4]र्थमस्य वपाहोमस्य स्थालीपाकेनैव[4]* यागो मा भूदित्यतः [5]प्रकृतविभक्त्यतिक्रमेणैतन्निवर्तयति । अन्यत् पुरस्तादेवोक्तम्, स्थालीपाकपक्षे येषां मन्त्राणां निवृत्तिर्येषां [6]च नेत्येतत् ।

स्थालीपाकस्याप्यभावे कथमित्यत आह—

## अपि वा गोर्ग्रासमाहरेत् ॥ २० ॥

गोरविशेषचोदितत्वात् नात्र लिङ्गविवक्षा स्यादिति केचित् । तन्न; कुतः ? विव[7]क्षितलिङ्गस्यैव गोद्रव्यस्य प्रकृतत्वात् । एव[8]ञ्चाविशेषात् यस्या एव कस्याश्चिदात्मीयायाः परकीयाया वा गोः, गुरुसत्काया वा ; कुतः ? यावज्जीवं तदुपकारप्रवृत्त्युपदेशात् । ग्रस्यत इति ग्रासः । स चायं ग्रासमात्र एव स्यात् ; कुतः ? शब्दार्थमुख्यत्वात्, तृप्तिपर्यन्तो वा स्यात् ; कुतः ? साधनस्य साध्यानुरूपत्वात्, अष्टकायागफलस्य चात्र साध्यत्वात् । तस्मात् तृप्तिपर्यन्तं ग्रासं हरितदूर्वादिकं पिण्याकादिकं(B)वा, एषा मेऽष्टका इत्यनेन वक्ष्यमाणेन मन्त्रेण हरेत् निवेदयेत् । कुतः ? अनुषङ्गेऽस्य विधानात् ।

तथाचोक्तम्—

कक्षोपधानमन्त्रो यः स गोर्ग्रासे विधीयते(C) । [9]इति ।

---

A. कर्मप्रदीपः ३।१०।६-७ ।

B. 'तिलकल्के च पिण्याकः' इत्यमरः, 'खरी' 'खइल' इति प्रसिद्धः ।

C. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि ।

1. 'तस्मादेव' ख । 2. 'प्रकृतिविभक्त्य-' ख । 3. '-पिलोपार्थम्' ख । 4. '-र्थं नास्य स्थालीपाकेनैव' ख । 5. 'प्रकृतिविभ-' ख । 6. 'यातो तत्' (?) ख । 7. '-क्षितस्य लिङ्ग-' ख । 8. '-चानाविशेषात्' ख । 9. 'इति' नास्ति ख ।

एतस्याप्यभावे कथमित्यत आह—

## अपि वाऽरण्ये कक्षमुपाधाय(A) ब्रूयादेषा मेऽष्टकेति ॥ २१ ॥

अपि वा अथवा अरण्ये ग्रामाद् बहिः कक्षं नदीतीरे पर्वतसानौ वा बहुतृण-काष्ठादियुक्तं प्रदेशम् उपाधाय अग्निना सन्धुक्ष्य, एषा मेऽष्टकेति(B) इमं मन्त्रं ब्रूयाद् जपेत्। उपाधानं चात्र स्थलीकृतस्य तृणकाष्ठादेः कर्तुं [1]युक्तम्(C)। इतरथा बहु-प्राण्यादिदाहदोषप्रसङ्गः स्यात्। अविशेषोपदेशात्, वचनाददोष इति च न्यायात् नैवमित्यन्ये ; तदत्र भगवन्तो भूमिदेवाः प्रमाणम्(D)। एवमेते गोपश्वादयः पञ्चाभाव-विकल्पाः। तत्र योऽयमाद्यो गोपशुपक्षः स साम्प्रतं शिष्टैः परिहृतत्वात् पुराकल्पीभूतः।

तथाच वाक्यार्थविद्भिरुक्तम्—

विधिर्योऽनुष्ठितः पूर्वं क्रियते नेह साम्प्रतम्।
पुराकल्पः स यद्वच्च विधवाया नियोजनम्॥
गोवधो मधुपर्कादौ महोक्षोऽतिथिपूजने।
सम्प्रत्यकरणात् तस्य पुराकल्पत्वमागतम् (E) ॥ इति।

---

तृप्तिपर्यन्तगोग्रासदानस्य प्रमाणन्तु—

यतः कुतश्चित् सम्प्राप्य गोभ्यो वाऽपि गवाह्निकम्।
अभावे प्रीणयंस्तस्मात् श्रद्धायुक्तः प्रदास्यति ॥ इति।

A. '-मुपधाय' इति चन्द्रकान्तमुद्रितः पाठः।

B. मन्त्रस्तु—

ॐ एषामेऽष्टका।

आचार्यपरिगृहीत एवायं मन्त्र इति ज्ञायते।

C. प्रमाणमत्र गृह्यान्तरम् 'अग्निना वा कक्षमुपोषेत्' इति चन्द्रकान्तः।

D. अत्र च श्राद्धाशक्तौ गवाह्निकप्रदानस्याप्यसद्भावे पुराणस्मरणम्—

सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः।
सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति॥
न मेऽस्ति वित्तं न धनं न चान्यच् श्राद्धोपयुक्तं स्वपितॄन् नतोऽस्मि।
तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य॥

इति। एवञ्च वचनबलात् कक्षं बाहुमूलकोटरप्रदेशम् उपाधाय, हीनाधानं कृत्वा, कक्षतिरोधान-मपनीय, ऊर्ध्वबाहुर्भूत्वेति यावदित्यर्थोऽपि संग्रहीतुं शक्यते इति सुधीभिरवधेयम्।

E. प्रमाणरूपेणोपस्थापितौ श्लोकाविमौ तर्काङ्कारेणापि स्वभाष्ये।

---

1. 'प्रयुक्तम्' ख।

एवमेतेषां कल्पानां यथासम्भवमन्यतमे[1]नेममष्टकायागम्—

न त्वेव न कुर्वीत न त्वेव न कुर्वीत ॥ २२ ॥

[2]नेति नेति प्रतिषे[3]धार्थौ द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः । '[4]न न कुर्वीत अपि तु कुर्वीतैव अवश्यं कुर्यादित्यर्थः । अभ्यासः प्रकरणपरिसमाप्त्यर्थः । अथवा अष्टकालोपे दोषगुरुत्वप्रज्ञापनार्थः अविलोपे [5]च फलभूयस्त्वप्रज्ञापनार्थोऽभ्यासः । तथाच यास्केनोक्तम् 'अभ्यासे भूयांसमर्थं मन्यन्त' इति(A) । अथवा सूत्रद्वयमेतत्, तत्र पूर्वस्य यथोक्त एवार्थः उत्तरं चोत्तरेण सह सम्बध्यते । न त्वेव न कुर्वीत श्वस्ततोऽन्वष्टक्यमिति । तेन किम् ? स्थालीपाकपक्षेऽप्यन्वष्टक्यमवश्यं कुर्यादिति दर्शयति, इतरथा पश्वभावे सकृच्छ्राद्धभावा-दस्य लोपो मा भूदिति । अतश्चरुपक्षेऽप्यन्वष्टक्यस्यावश्य[6]कर्त्तव्यत्वद्योतनार्थोऽभ्यासः ।

तथाचोक्तम्—

ओदनव्यञ्जनार्थन्तु पश्वभावेऽपि पायसम् ।
[7]सद्रव्यं श्रपयेत् तद्वदन्वष्टक्येऽपि कर्मणि (B) । इति ।

इति [8]भट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये[8]* चतुर्थप्रपाठकस्य प्रथमा कण्डिका ॥

---

A. यास्कोक्तिरियं प्रमाणत्वेनोपन्यस्ता चन्द्रकान्तेनापि स्वभाष्ये ।

B. कर्मप्रदीपः ३।१०।८ । अत्र 'ऊहनव्यञ्जनार्थमिति' 'वङ्गवासी'मुद्रितः पाठः ।

अथाऽऽश्वयुजीकर्माग्रहायणकर्माष्टकाकर्मणां विषये यदुक्तं गृह्यान्तरेषु तदत्र संगृह्य यथासम्भव-मुपस्थाप्यते । तत्र—छन्दोग-द्राह्यायण-खादिर-गृह्याणां प्रायः समानुपूर्वीकाणि सूत्राणि—

आश्वयुज्यां रुद्राय पायसः । मा नस्तोके इति जुहुयात् । पयस्यवनयेदाज्यं तत् पृषातकम् । तेनाभ्यागता गा उक्षेद् आ नो मित्रावरुणेति । वत्सांश्च मातृभिः सह वासयेत् तां रात्रिम् । नवयज्ञे पायस ऐन्द्राग्नः । शतायुधायेति चतसृभिराज्यं जुहुयादुपरिष्टात् । अग्निः प्राश्नात्विति च । तस्य शेषं प्राश्नीयुर्यावन्त उपेताः । उपस्तीर्यापो द्विरवदायाभिघारयेत् । त्रिर्भृगूणाम् । अपां चोपरिष्टात् । भद्रान्न इत्यसंखाद्य प्रगिरेत् त्रिस्त्रिः । एतमुत्यमिति वा यथालिङ्गम् । अमोऽसीति मुख्यान् प्राणानभि-मृशेत् । आग्रहायणं कर्म श्रावणेन व्याख्यातम् । नमः पृथिव्या इति न जपेत् । प्रदोषे

---

1. 'इमं' नास्ति ख । 2. 'नेति' नास्ति ख । 3. '-धार्थं वह ती' ख । 4. 'न न कुर्वीत इति विधाऽपि ख । 5. 'च' नास्ति ख । 6. '-कर्त्तव्यत्वद्योतनार्थोऽभ्यासः' ख । 7. 'सद्रव्यं' ख । 8. नास्ति ख ।

पायसस्य जुहुयात् प्रथमेति। न्यञ्चौ पाणी कृत्वा प्रतिक्षत्र इति जपेत्। पश्चादग्नेः स्वस्तर-मुदगग्रैस्तृणैरुदक्प्रवणमास्तीर्य तस्मिन्नास्तरणे गृहपतिरास्ते। अनुपूर्वमितरे। अनन्तरा भार्या पुत्राश्च। न्यञ्चौ पाणी कृत्वा स्योनेति गृहपतिर्जपेत्। समाप्तायां दक्षिणैः पार्श्वैः संविशेयु-स्त्रिस्त्रिरभ्यात्ममावृत्य। स्वस्त्ययनानि कुर्युः। ततो यथार्थं स्यात्। ऊर्ध्वमाग्रहायण्या-स्तिस्रस्तामिस्राष्टम्योऽष्टका इत्याचक्षते। तासु स्थालीपाकाः। अष्टौ चापूपाः प्रथमायाम्। तानपरिवर्तयन् कपाले श्रपयेत्। उत्तमायां शाकमन्वाहार्यं। अष्टकायै स्वाहेति जुहुयात्। मध्यमायां गौः। तां पुरस्तादग्नेः प्रत्यङ्मुखीमवस्थाप्य जुहुयाद् यत् पशव इति। हुत्वा चानु-मन्त्रयेतानु त्वेति। यवमतीभिरद्भिः प्रोक्षेदष्टकायै त्वा जुष्टां प्रोक्षामीति। प्रोक्ष्योल्मुकेन परिहृत्य प्रोक्षणीः पाययेत्। उदगुत्सृप्य प्रत्यक्छिरसीमुदक्पादीं संज्ञपयेत्। संज्ञप्तायां जुहुयात् यत् पशुरिति। तस्याः पत्नी स्रोतांसि प्रक्षालयेत्। पवित्रे अन्तर्धायोत्कृत्य वपामुद्धारयेत्। यज्ञियस्य वृक्षस्य विशाखा-शाखाभ्यां परिगृह्याग्नौ श्रपयेत्। प्रसृतायां विशसेत्। उक्तमुप-स्तरणाभिघारणं यथा स्विष्टकृतः। अष्टकायै स्वाहेति जुहुयात्। सर्वाङ्गेभ्योऽवदानान्यु-द्धारयेत्। न सव्यात् सक्थ्नः। न क्लोम्नः। सव्यं सक्थि निधाय। पृथङ्मेक्षणाभ्यामवदानानि स्थालीपाकञ्च श्रपयित्वा। कंसे रसं प्रस्राव्य। प्लक्षशाखास्ववदानानि कृत्वा। एकैकस्मात् कंसे अवद्येत्। स्थालीपाकाच्च। चतुर्गृहीतमष्टगृहीतं वाऽत्र जुहुयादग्नाविति। कंसात् पराभिर्द्वाभ्यां द्वाभ्यामेकैकामाहुतिम्। सौविष्टकृतीमष्टम्या। वह वपामिति पित्र्ये वपा-होमः। जातवेद इति दैवत्ये। तदादेशमनाज्ञाते। यथाऽष्टकाया इति। पशुरेव पशो-र्दक्षिणा। स्थालीपाकस्य पूर्णपात्रम्। इति।

जैमिनिगृह्यसूत्राणि च—नवेन यक्ष्यमाणः पुराणेनाग्नं यजेताग्निधन्वन्तरी प्रजापतिमिन्द्रं तिस्रश्च नवाहुतीर्नवेन यजेत शरदि व्रीहीणां वसन्ते यवानां वर्षासु श्यामाकानामैन्द्राग्नो वैश्वदेवो द्यावापृथिव्यश्चरव एकचरुर्वोक्ते एवोपस्तरणाभिघारणे द्विर्हविषोऽवद्यति अथ प्राशनीयात् भद्रान् नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा। स नो मयोभूः पितो आविशस्व शं तोकाय तनुवे स्योन इति, एतमुत्यं मधुना संयुतं यवं सरस्वत्या अधिमना वचर्कृषुः। इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानव इति यवस्य प्राशनीयात्। अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः। शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणीरिति श्यामाकस्य प्राशनीयात् प्राशनीयात्।

ऊर्ध्वमाग्रहायण्याऽपरपक्षास्तेषामेकैकस्मिन् एकैकाऽष्टका भवति। शाकाष्टका मांसाष्टका-ऽपूपाष्टकेति। तत्र शाकमांसापूपानि हवींष्योदनञ्च तेषां हविषां स्थालीपाकावृता अग्नौ जुहुया दष्टकायै स्वाहा, एकाष्टकायै स्वाहा, अष्टकायै सुराधसे स्वाहा संवत्सराय परिवत्सरायेदा-वत्सरायेद्वत्सरायावत्सराय कृणुता नमोभिः। त्वया वयं सुमतौ यज्ञियानां ज्योग् जीता अहताः स्याम स्वाहेति हुत्वोपतिष्ठते—धुहि अग्नौहि अग्नौति अग्नेति, मध्यमायां गां कारयेत् तामष्टकायै प्रोक्षेत

तस्याजीनि सव्यान्युपोद्धरति पार्श्वमपवर्गी श्रोणीमिति, क्वोभूते श्राद्धमन्वष्टक्यं तद्वर्या ब्राह्मणान् हविरद्दांनुपवेश्य तांस्तर्पयित्वा तस्मादग्नेर्दक्षिणतः षडग्नीन् प्रणीय तेषामेकैकस्मिन्नेकैकां कर्षू खानयेदायामेन प्रादेशमात्रीं पार्थिवेन त्र्यङ्गुलामवाग् वैकाङ्गुलामिति, तासु पिण्डान् निधायास्तु नामापहस्तेन मज्जाः पितृभ्यः उपकर्षति, पाश्वांनि स्त्रीणां तत्राध्वर्यवः केचिद्धीयते मध्यमं पिण्डं पत्नी प्राश्नीयात् प्रजाकामस्य तथा श्राद्धस्य स्थालीपाकं वा श्राद्धस्य स्थालीपाकं वा। इति।

लौगाक्षिकाठकगृह्ययोश्च—आग्रहायण्यामेतान्येव चत्वारि हवींष्यासादयेद् यानि श्रावण्यां यवमयस्त्वपूपः। पृथावन्द्वेत्यपूपस्य जुहोति। उप ते गा इति स्थालीपाकस्य। उक्तं धानासक्तूनाम्। अवते हेड इति वारुणीभिरभिजुहुयात् नित्यामिश्च त्वामग्ने वृषभं चेकितानं संवत्सरस्य प्रतिमामिति च। उदगग्रशमास्तरणमास्तीर्य शिरस्त उदकं निधाय व्रीहियवानोप्य आपो हिष्ठीयाभिः शय्यामभ्युक्ष्य त्रातारमिन्द्रमिति शमीशाखया शय्यां निर्मार्ष्टि। ऐन्द्राग्नं वर्मेत्यहतं वासः परिधाय स्योना पृथिवीति दक्षिणेन पार्श्वेन संविशति ज्योतिष्मतीत्यन्तेन। अभ्युक्षणादि संवेशनान्तमेवं द्विरुत्तरम्। चैत्र्यामुद्रोहणमुपरि शय्या नात्र स्थालीपाको न शाखया निर्मार्ष्टि। तिस्रोऽष्टकाः पितृदेवत्याः। ऊर्ध्वमाग्रहायण्यास्त्रयस्तामिस्रास्तेष्वष्टमीष्वष्टका यज्ञाः। प्रथमां शाकेन द्वितीयां मांसेन तृतीयामपूपैः। ऋतूनां पत्नीति षड् द्वे द्वे स्थालीपाकस्य जुहोति। देवा ग्रावाण इति सर्वत्र तृतीया। इयमेवेत्यनुवाकेन पञ्चभिः पञ्चभिरभिजुहुयात्। गवा चेदष्टका स्यात् पशुना वा तदुक्तम्। वह वपामिति वपां जुहुयात्। पेश्योऽवदानस्थाने ऽङ्गारिणीः कुर्यात्। यथाकामं मज्जका। ये समाना इति द्वाभ्यां स्थालीपाकस्य पेशीनां च जुहोति। स्विष्टकृद्धर्मेण वहान्नं वह मांसं जातवेदः पितृभ्य इति जुहुयात्। इति।

आश्वलायनगृह्यसूत्राणि च—आश्वयुज्यामाश्वयुजीकर्म। निवेशनमलंकृत्य स्नाताः शुचि-वाससः पशुपतये स्थालीपाकं निरूप्य जुहुयुः, पशुपतये शिवाय, शङ्कराय, पृषातकाय स्वाहेति। पृषातकमञ्जलिना जुहुयात् ऊनं मे पूर्यतामिति। सजूर्ऋतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्यो देवेभ्यः स्वाहा। सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहेत्याहिताग्नेराग्रयणः स्थालीपाकः। अनाहिताग्नेरपि शालाग्नौ। मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्याम्। पौर्णमास्यां वा। निवेशनं पुनर्नवीकृत्य लेपनस्तरणो-पस्तरणैरस्तमिते पायसस्य जुहुयुरपश्वेत पदा अहि पूर्वेण चापरेण च। सस च वारुणीरिमाः सर्वाश्च राजबान्धवीः स्वाहा, न वै श्वेतस्याभ्यागारेऽहिर्जघान किञ्चन। श्वेताय वैदार्वाय नमः स्वाहेति। नात्र सौविष्टकृत्। अभयं नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपति शिवो नः सुमना भवेति हेमन्तं मनसा ध्यायात्। पश्चादग्नेः स्वस्तरः स्वास्तीर्णः। तस्मिन्नुपविश्य स्योना पृथिवी भवेति जपित्वा संविशेत् सामात्यः प्राक्शिरा उदक्मुखः। यथावकाशमितरे। ज्यायान् ज्यायान् वाऽनन्तरः। मन्त्रविदो मन्त्रान् जपेयुः। संहाय अतो देवा अवन्तु न इति त्रिः। एतां दक्षिणामुखाः प्रत्यङ्मुखा उदङ्मुखाश्चतुर्थम्। संहाय सौर्याणि स्वस्त्ययनानि च जपित्वा-

अन्नं संस्कृत्य ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत। हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः। एकस्यां वा। पूर्वेद्युः पितृभ्यो दद्यात्। ओदनं कृसरं पायसम्। चतुःशरावस्य वाऽपूपान्। उदीरतामवर उत् परास इत्यष्टाभिर्हुत्वा यावतीभिर्वा कामयीत। अथ श्वो भूतेऽष्टकाः पशुना स्थालीपाकेन च। अप्यनडुहो यवसमाहरेत्। अग्निना वा कक्षमुपोषेत्। एष मेऽष्टकेति। नत्वेवानष्टकः स्यात्। तां हैके वैश्वदेवीं ब्रुवत आग्नेयीमेके सौर्यामेके प्राजापत्यामेके रात्रिदेवतामेके नक्षत्रदेवतामेके ऋतुदेवतामेके पितृदेवतामेके पशुदेवतामेके। पशुकल्पेन पशुं संज्ञप्य प्रोक्षणोपाकरणवर्जं वपामुत्खिद्य जुहुयात् वह वपां जातवेद इति। अथावदानानां स्थालीपाकस्य च अग्ने नय सुपथेति, शान्ता पृथिवीति, आपो मरीचीः प्रवहन्त्विति, विश्व आदित्या वसवश्चेति, प्रजापते न त्वदेतान्यन्यः। सौविष्टकृत्यष्टमी। ब्राह्मणान् भोजयेदित्युक्तम्। इति।

आपस्तम्बगृह्यसूत्राणि तु—धानाः कुमारान् प्राशयन्ति। एवमत ऊर्ध्वं यवशमीयस्य सक्तूनां वैतं बलिं हरेदा मार्गशीर्ष्याः। मार्गशीर्ष्यां पौर्णमास्यामस्तमिते स्थालीपाकः। अहार्षमिति बलिमन्त्रस्य सन्नामः। अग्नेनमुत्सृजति। अनाहिताग्नेराग्रयणम्। नवानां स्थालीपाकं श्रपयित्वा आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो हुत्वा तण्डुलानां मुखं पूरयित्वा गीर्त्वाचम्यौदनपिण्डं संवृत्योत्तरेण यजुषाऽऽरस्तूप उद्गिरेत्। हेमन्तप्रत्यवरोहणम्। उत्तरेण यजुषा प्रत्यवरुह्योत्तरैर्दक्षिणैः पार्श्वैः नवस्वस्तरे संविशन्ति। दक्षिणतः पितोत्तरामौतथमवशिष्टानां ज्येष्ठोऽज्येष्ठोऽनन्तरः। संहायोत्तराभ्यां पृथिवीमभिमृशन्ति। एवं संवेशनादि त्रिः। ईशानाय स्थालीपाकं श्रपयित्वा क्षेत्रपत्यं च प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य स्थण्डिलं कल्पयित्वाऽग्नेरुपसमाधानादि। अपरेणाग्निं द्वे कुटीकृत्वा। उत्तरया दक्षिणस्यामीशानमावाहयति। लौकिक्या वाचोत्तरस्यां मीढुषीम्। मध्ये जयन्तम्। यथोढमुदकानि प्रदाय त्रीनोदनान् कल्पयित्वा अग्निमभ्यानीयोत्तरैरुपस्पर्शयित्वा उत्तरैर्यथास्वमोदनेभ्यो हुत्वा सर्वतः समवदायोत्तरेण यजुषाऽग्निं स्विष्टकृतम्। उत्तरेण यजुषोपस्थायोत्तरैः सहोदनानि पर्णान्येकैकेन द्वे द्वे दत्वा देवसेनाभ्यो दशोत्तराभ्यः। पूर्ववदुत्तरैः। ओदनपिण्डं संवृत्य पर्णपुटेऽवधायोत्तरेण यजुषा वृक्ष आसजति। अत्र रुद्रान् जपेत्। प्रथमोत्तमौ वा। अभित एतमग्निं गाः स्थापयति यथैना धूमः प्राप्नुयात्। ता गन्धैर्दर्भग्रमुष्टिनाऽवोक्षति वृषाणमेवाग्रे। गवां मार्गेऽनग्नौ क्षेत्रस्य पतिं यजते। ईशानवदावाहनम्। चतुर्षु सप्तसु वा पर्णेषु नामादेशं दधाति। क्षिप्रं यजेत पाको देवः। उत्तराभ्यामुपतिष्ठते। स्थालीपाकं ब्राह्मणान् भोजयेत्। क्षैत्रपत्यं प्राश्नन्ति ये सनाभयो भवन्ति। यथा वैषां कुलधर्मः स्यात्। या माघ्याः पौर्णमास्या उपरिष्टाद् व्यष्टका तस्यामष्टमीज्येष्ठया सम्पद्यते तामेकाष्टकेत्याचक्षते। तस्याः सायमौपकार्यम्। अपूपं चतुःशरावं श्रपयति। अष्टाकपाल इत्येके। पार्वणवदाज्यभागान्तेऽञ्जलिनोत्तरयाऽपूपाज्जुहोति। सिद्धः शेषस्तमष्टधा कृत्वा ब्राह्मणेभ्य उपहरति। श्वो भूते दर्भेण गामुपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमीति। तूष्णीं पञ्चाऽऽज्याहुतीर्हुत्वा तस्यै वपां श्रपयित्वोपस्तीर्णामि-

धारितां मध्यमेनान्तमेन वा पलाशपर्णेनोत्तरया जुहोति। मांसौदनमुत्तराभिः। पिष्टान्नमुत्तरया। आज्याहुतीरुत्तराः। स्विष्टकृत्प्रभृति समानमा पिण्डनिधानात्। अन्वष्टकायामेवैके पिण्डनिधानमुपदिशन्ति। अथैतदपरं दध्न एवाञ्जलिना जुहोति यथाऽपूपमिति।

मानवगृह्यसूत्राणि च—आश्वयुज्यां पौर्णमास्यां प्रातर्नित्येषु स्थालीपाकेषु स्थालीपाकमन्वायातयति। तस्याग्नि रुद्रं पशुपतिमीशानं त्र्यम्बकं शरदं पृषातकं गा इति यजति। दधिघृतमिश्रः पृषातकः। तस्याऽऽनो मित्रावरुणा प्रवाहयेति च हुत्वा। अन्नमः स्थाम्भो वो भक्षीयेति गाः प्राशयति। अवसृष्टाश्च वसेयुः। ब्राह्मणान् घृतवद् भोजयेत्। नानिष्ट्वाग्रयणेन नवस्याश्नीयात्। पर्वण्याग्रयणं कुर्वीत। वसन्ते यवानां शरदि व्रीहीणाम्। अग्रपाकस्य पयसि स्थालीपाकं श्रपयित्वा। तस्य जुहोति। सजूरग्नीन्द्राभ्यां स्वाहा। सजूर्विश्वेभ्यो देवेभ्यः स्वाहा। सजूर्द्यावापृथिवीभ्यां स्वाहा। सजूःसोमाय स्वाहेति। शरदि सोमाय श्यामाकानां वसन्ते वेणयवानाम्। उभयत्र वाज्येन। वत्सः प्रथमजो दक्षिणा। ब्राह्मण एव हविःशेषं भुञ्जीतेति श्रुतिः। आग्रहायण्यां पौर्णमास्यां पयसि स्थालीपाकं श्रपयित्वा तस्य जुहोति। अपःश्वेतपदागहीति, श्वेतो रथस्यो विधर्तास्यव इति, नवै श्वेतस्याभ्याचारे अहिरिति, अभयं नः प्राजापत्येभ्यो भूयात् स्वाहा इति। स्वस्तरेऽहतं वास उदगुदशमास्तीर्योदकान्त्येऽक्षमानं व्रीहीन् यवान् वाऽस्य परिषिञ्चति। स्योना पृथिवि भवेति द्वाभ्यां सुत्रामाणमिति द्वाभ्याम्। शमीशाखया च सपलाशयोदग्रं त्रिः समुन्मार्ष्टि—स्योना पृथिवि भवेति द्वाभ्यां सुत्रामाणमिति द्वाभ्यां नमोऽस्तु सर्पेभ्य इति तिसृभिश्च। शाम्यन्तु सर्पा इति ज्येष्ठप्रथमानुदीच आवेशयति। उदीर्ध्वं जीवो असुर्न आगादप इति कनिष्ठप्रथमानुजिहते। वैश्यानामुद्गोहणम्। न तत्र स्थालीपाको न शाखया समुन्मार्ष्टि। अयं तल्पः प्रतरणो वसूनामिति तल्पमभिमन्त्रयते। त्रीणि नाभ्यानि फाल्गुन्यामाषाढ्यां कार्तिक्याम्। तासु नाधीयीत। तासु पयसि स्थालीपाकः स व्याख्यातः। तिस्रोऽष्टकाः। ऊर्ध्वमाग्रहायण्याः प्राक् फाल्गुन्यास्तामिस्राणामष्टम्यः। तासु नाधीयीत। तासु पयसि स्थालीपाकं श्रपयित्वा तस्य जुहोति या देव्यष्टकेष्वपसाप इति। उलूखलग्रावाणो घोषमकुर्वत इति। यां जनाः प्रतिनन्दन्तीति। चतस्रः स्थालीपाकस्य। अष्टकायै सुराधसे स्वाहेति सर्वत्रानुषजति। हेमन्तो वसन्तो ग्रीष्म ऋतव इति। शान्ता पृथिवी शिवमन्तरिक्षमिति। आपो मरीचीरिति। कविरग्निरिन्द्र इति। विश्व आदित्या वसवश्च सर्वे इति। पञ्चाऽऽज्यस्य। जयान् हुत्वेडामग्न इति स्विष्टकृदिति। एवं सर्वासु। उत्तमायाः प्रदोषे चतुष्पथेऽङ्कुशो गां कारयेत्। यो य आगच्छेत् तस्मै दद्यात्। श्वोऽन्यां कारयेत्। तस्या वपां जुहुयात्—वह वपां जातवेद इति। अथास्या वक्षस उदगोदनं श्रपयति। तस्याष्टकाहोमकल्पेन शेषो व्याख्यातः। अवशिष्टं भक्तं रन्धयति। श्वोऽवशिष्टं भक्तं रन्धयित्वा पिण्डानामावृता त्रीन् मांसौदनपिण्डान् निदधाति। अपरपक्षे पितृभ्यो दद्यात्। अयुग्मान् ब्राह्मणान् भोजयेत्। नावेदविद् भुञ्जीतेति श्रुतिः। यदि गवा पशुना वा कुर्वीत प्रोक्षण-

मुपपायनं पर्यग्निकरणमुल्मुकहरणं वपाहोममिति। अर्धं वपां जुहुयात्। स्थालीपाकमवदानानि च। सोमाय पितृमते स्वधा नम इति जुहोति। यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयाम्। अग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम्। एवं मासि मासि नियतम्। तन्त्रं पिण्डपितृयज्ञे। इति।

पारस्करगृह्यसूत्राणि च—आश्वयुज्यां पृषातकाः। पायसमैन्द्रं श्रपयित्वा दधि-मधु-घृतमिश्रं जुहोति इन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति। प्राशनान्ते दधि पृषातक-मञ्जलिना जुहोति—ऊनं मे पूर्यतां पूर्णं मे मा व्यगात् स्वाहेति। दधि-मधु-घृतमिश्रममात्या अवेक्षन्त आयात्विन्द्र इत्यनुवाकेन। मातृभिर्वत्सान् संसृज्य तां रात्रिमाग्रहायणीञ्च। ततो ब्राह्मणभोजनम्। मार्गशीर्ष्यां पौर्णमास्यामाग्रहायणीकर्म। स्थालीपाकं श्रपयित्वा श्रवणा-वदाज्याहुती हुत्वाऽपरा जुहोति। यां जनाः प्रतिनन्दन्तीति संवत्सरस्येति। संवत्सरायेति। ग्रीष्मो हेमन्त इति। स्थालीपाकस्य जुहोति सोमाय मृगशिरसे मार्गशीर्ष्यै, पौर्णमास्यै हेमन्ताय चेति। प्राशनान्ते सक्तुशेषं सूर्पे न्युप्योपनिष्क्रमणप्रभृत्या मार्जनात्। मार्जनान्त उत्सृष्टो बलिरित्याह। पश्चादग्नेः स्रस्तरमास्तीर्याहतञ्च वास आप्लुता अहतवाससः प्रत्यवरोहन्ति दक्षि-णतः स्वामी जायोत्तरा यथाकनिष्ठमुत्तरतः। दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं शमीशाखा सीतालोष्टाश्मनो निधायाग्निमीक्षमाणो जपति अयमग्निरिति। पश्चादग्नेः प्राञ्चमञ्जलिं करोति। देवीं नावमिति तिसृभिः स्रस्तरमारोहन्ति। ब्रह्माणमामन्त्रयते ब्रह्मन् प्रत्यवरोहामेति। ब्रह्मानुज्ञाताः प्रत्यवरोहन्ति आयुःकीर्तिर्यशोबलमन्नाद्यं प्रजामिति। उपेता जपन्ति सुहेमन्तः सुवसन्त इति। स्योना पृथिवि नो भवेति दक्षिणपार्श्वैः प्राक्‌शिरसः संविशन्ति उपोदतिष्ठ-न्तीति। एवं द्विरपरं ब्रह्मानुज्ञाताः। अधः शयीरंश्चतुरो मासान् यथेष्टं वा।

ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः। ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येति। अपूपमांसशाकैर्यथा-संख्यम्। प्रथमाष्टका पक्षाष्टम्याम्। स्थालीपाकं श्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति। त्रिंशत्स्वसार उपयन्तीति। ज्योतिष्मतीति। एकाष्टकेति। अनानुजामनुजामिति। अभून्मम सुमताविति। पञ्चव्युष्टीरनुपञ्चेति। पञ्चदिशः पञ्चदशेनेति। ऋतस्य गर्भः प्रथमेति। या प्रथमेति। शुक्र ऋषभेति। ऋतूनां पत्नीति। स्थालीपाकस्य जुहोति शान्ता पृथिवीति। आपो मरीचीः परिपान्त्विति। विश्वे आदित्या इति। अष्टकायै स्वाहेति। मध्यमा गवा। तस्यै वपां जुहोति वह वपां जातवेदः पितृभ्य इति। श्वोऽन्वष्टकासु सर्वासां पार्श्वसक्थि सव्याभ्यां परिवृते पिण्डपितृयज्ञवत्। स्त्रीभ्यश्चोपसेचनञ्च कर्षूषु सुरया तर्पणेन चाञ्जनानुलेपनं स्रजञ्च। आचार्यायान्तेवासिभ्यश्चानपत्येभ्य इच्छन्। मध्या वर्षे च तुरीया शाकाष्टका इति।

बौधायनीयगृह्यसूत्राणि तु—अथाष्टकाहोमः। तैषे मास्यपरपक्षस्याष्टम्यां क्रियेत। एवं माघ एवं फाल्गुने यदि विहृतः। यद्यु वै समस्त उपरिष्टान्माघ्याः पौर्णमास्या अपरपक्षस्य सप्तम्यामष्टम्यां नवम्यामिति क्रियेतापि वाऽष्टम्यामेव। श्वः करिष्यामीति ब्राह्मणान् निमन्त्रयते

योनिगोत्रश्रुतवृत्तसम्बन्धानित्येके। कामं सम्बन्धानपि श्रुतवृत्तसम्पन्नान् श्रुतवृत्तयोर्हि स्वधा निधीयत इत्युपदिशन्ति। तान् वचो भूते समभुक्तमांभ्यञ्जनज्ञानैर्यथोपपादं सम्पूज्य स्ववमाप्लुत्य शुचौ समे देशे देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा बर्हिरादाय गामुपाकरोति पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टामुपाकरोमीति। तूष्णीमित्येके। अथैनामग्निः प्रोक्षति, पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टां प्रोक्षामीति। तूष्णीमित्येके। तामत्रैव प्रतीचीनशिरसीं दक्षिणापदीं संज्ञपन्ति। तस्यै संज्ञप्ताया अद्भिरभिषेकम्। प्राणानाप्याययति तूष्णीम्। तूष्णीं वपामुत्खिद्य हृदयमुद्धरति। प्रज्ञातानि चावदानानि। तान्येतेष्वेव शूलेषूपनिक्षिप्यैतस्मिन्नेवाग्नौ श्रपयन्ति। पृथङ्मांसं चौदनं चापूपांश्च श्रपयन्त्यन्यांश्च भक्ष्यविशेषान् सर्वं सिद्धं समानीयायुग्मान् ब्राह्मणान् सुप्रक्षालितपाणिपादानप आचमय्य सदर्भोपक्लृप्तेष्वासनेषु द्वौ दैवे त्रीन् पित्र्ये एकैकमुभयत्र वा प्राङ्मुखानुपवेशयत्युदङ्मुखान् वा। स यदि प्राङ्मुखान् दक्षिणापवर्गाः। यद्युदङ्मुखान् प्रागपवर्गाः। तेषामेवोदकं निनीय सप्रणवेन क्षणं ग्राहयति। अष्टकाश्राद्धे क्षणं क्रियतामित्योँ तथेति प्रतिवचनम्। प्राप्नोतु भवान् प्राप्नोतु भवानिति। प्राप्नवानि प्राप्नवानीतीतरे प्रत्याहुः।

अथैनान् तिलमिश्रा अपः प्रतिग्राहयति अमुष्मै स्वधा नम इति। त्रिस्तिलोदकमेके समामनन्ति पुरोऽन्नं द्विस्तिलोदकं दद्यात् भुक्तवत्सु च तृतीयमिति। अथैनान् वस्त्रगन्धपुष्पधूपदीपमाल्यैर्यथोपपादं सम्पूज्य पृच्छति उद्ध्रियतामग्नौ च क्रियताम्, काममुद्ध्रियतां काममग्नौ च क्रियतामितीतरे प्रत्याहुः। अपि वा अग्नौ करिष्यामीति कुरुष्वेतीतरे प्रत्याहुः। अथाभ्यनुज्ञातः परिधानप्रभृत्याऽग्निमुखात् कृत्वा शृतायां वपायां पञ्च स्रुवाहुतीर्जुहोति याः प्राचीरिति। त्रेधा वपां विच्छिद्यौदुम्बर्या दर्व्या जुहोति सोमाय पितृमत इति। अथाष्टकाहोमं जुहोति इयमेव सा या प्रथमा व्यौच्छत् इति पञ्चदश। ईयुष्टे ये पूर्वतरामपश्यन् इत्येकाम्। संवत्सरस्य प्रतिमाणम् इत्येकाम्। ताः सप्तदश। अथापूपमष्टधा विच्छिद्य त्रीण्यवदानानि वपायाः कल्पेन हुत्वाऽथेतराणि ब्राह्मणेभ्यो दत्त्वा अत्रैतान्यवदानानीडासूने प्रतिच्छाद्यौदनं मांसं सूपमित्याज्येन समुदायुत्यौदुम्बर्या दर्व्योपघातं दक्षिणार्धे जुहोति पितृभ्यः स्वधा नमः स्वाहेत्यादि। अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेति दक्षिणार्धपूर्वार्धे। मांसौदनं पात्रेषूद्धृत्य विशेषानुपनिक्षिप्य हुतशेषेण संसृज्य दक्षिणाग्रेषु दर्भेषु सादयित्वा दक्षिणाग्रैर्दर्भैः प्रतिच्छाद्याभिमृशति पृथिवी ते पात्रमिति। अथैतानि ब्राह्मणेभ्य उपनिक्षिप्य ब्राह्मणानामङ्गुष्ठेनान्नलेनानुदिशति अमुष्मै स्वधा नम इति। भुञ्जानान् समीक्षते प्राणे निविष्टोऽमृतं जुहोमीति पञ्चभिः। ब्रह्मणि म आत्माऽमृतत्वायेत्यात्मानम्। न चात ऊर्ध्वं निरीक्षते ह्रीका हि पितर इति विज्ञायते। सर्वैः कामैस्तर्पयन् स्वधायुक्तानि ब्रह्माण्यभिश्रावयन् राक्षोघ्नानि च नैर्ऋतानि च। तृप्यन्तो तृप्ताः स्थेत्युक्त्वा तृप्ताः स्म इति प्रतिवचनम्। तृप्तानप आचमय्याचमय्योच्छेषान् सम्प्रकिरति येऽग्निदग्धा इति। अथैनान् संक्षालनेन विपिञ्ञ्जयकीर्य स्वदितमिति वाचयित्वा दक्षिणाभिराराधयति। सुवर्णहिरण्यप्राणि-

वस्त्रकोहभूमिभाण्डैर्गवाश्वाजाविकहस्तिदासपुरुषव्रीहियवमाषतिलकुण्डोपानच्छत्रकमण्डल्वासनशयनोपधानैः सर्वोपकरणैर्यथोपपादं सम्पूज्याक्षय्यं वाचयित्वोपसंगृह्य स्वधां वाचयित्वोत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्यान्नशेषान्निवेदयते। यथा ब्रूयुस्तथा कुर्याद् तैस्त्वभ्यनुज्ञेयम्। अथाभ्यनुज्ञातो दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वन्नशेषैः पिण्डं ददाति पितृभ्यः स्वधा नम इति चतुर्विंशतिः। अथैनान् संक्षालनेन त्रिरपसव्यैः परिषिञ्चति ऊर्जं वहन्तीरिति। जयप्रभृति सिद्धमा धेनुवरप्रदानात्। आचमने चाग्निमुखे चाभिश्रावणे चोपसंग्रहणे च पश्चाद्धोमेषु च यज्ञोपवीतम्। अथेतरत्र प्राचीनावीतम्। एवमेव श्वोभूते मांसशेषेणैवमेव श्वोभूते यदि श्राद्धम्। अथ यदि गां न लभते मेषमजं वालभते। आरण्येन वा मांसेन यथोपपन्नेन। खड्गमृगमहिषमेषवराहपृषतशशरोहितशार्ङ्गतित्तिरिकपोतकपिञ्जलवार्ध्रीणसानामक्षय्यं तिलमधुसंसृष्टम्। तथा मत्स्यस्य शतवलैः क्षीरोदनेन वा सूपोदनेन वा। यद्वा भवत्यामैर्वा मूलफलैः प्रदानमात्रम्। हिरण्येन वा प्रदानमात्रम्। अपि वा गोग्रासमाहरेत्। अपि वा अनूचानेभ्य उदकुम्भामाहरेत्। अपि वा श्राद्धमन्त्रानधीयीत। अपि वाऽरण्येऽग्निना कक्षमुपोषेदेषा मेऽष्टकेति। न त्वेवानष्टकः स्यात्। सिकता श्राद्धे पवित्रं यद्यध्यवसानाय यद्यन्ववकिरणाय। कुशा कुतपो दूर्वा इति श्राद्धे पवित्रं यद्यासनाय यदि परिस्तरणाय यद्युत्पवनाय। तिलाः श्राद्धे पवित्रं यदि दानाय यदि भोजनाय यद्यपां संसर्जनाय। खड्गः श्राद्धे पवित्रं यदि मांसं यद्यस्थिमयं पात्रम्। दौहित्रः श्राद्धे पवित्रं यदि भोक्ता यदि परिवेष्टा यद्यभिश्रावयिता। इत्यष्टकाहोमो व्याख्यात इति।

---

सभाष्य-गोभिल-गृह्यसूत्रे

## चतुर्थप्रपाठकस्य द्वितीया कण्डिका

—:०:—

**श्वस्ततोऽन्वष्टक्यम् ॥ १ ॥**

'तत इति तस्मादनन्तरोपदिष्टान्मां[1]साष्टकाकर्मणः श्वः अन्यस्मिन्नहनि नवम्यामित्यर्थः, अन्वष्टक्यं कर्तव्यमिति वाक्यशेषः। अन्वष्टक्यमिति कर्मणो नामधेयम्। कश्चित्तु ततःशब्दस्य वीप्सां कृत्वा [2]अन्यथा व्याख्यातवान्, ततस्ततोऽष्टकाकर्मण इति। कथं नाम? सर्वास्वष्टकासु अन्वष्टक्यं कर्तव्यमिति। तदेतन्नोपपद्यते, कुतः? अन्वयेऽनुषङ्गे वाऽस्याविधानात्।

तथा चोक्तम्—

अन्वयी चानुषङ्गी च द्वौ स्तो भावानुकीर्तितौ।
अन्वयी तत्पदात् पूर्वं अनुषङ्गी पदात् परः॥ इति।

मांसाष्टकाप्रकरणानुरोधाच्च, [3]'अष्टम्यामन्तर'[4]अन्वष्टक्यमन्त्रपाठाच्च, ततःशब्दस्य वीप्साया अश्रुतत्वाच्च। तस्मात् यथोक्त एवार्थः। ननु एवं चेत् प्रकरणानुरोधात् एवान्यताप्राप्तेस्तत इत्यवाच्यम्? न; सप्तम्युपाष्ट[5]कोच्यते, अष्टम्यष्टका, नवम्यष्टकेति, अन्वष्टकायां नवमन्वष्टक्यमिति समाख्यानात् सर्वास्वष्टकासु[6] अन्वष्टक्यप्राप्त्याशङ्का मा भूदित्यत[7]स्तत इत्युच्यते। तस्मादेव मांसाष्टकाकर्मणो नान्यस्मादिति। तदेतत् पुरस्तादेव व्याख्यातम् 'अन्वष्टक्यं मध्यमायामि'ति।

**अपरश्वो वा(A) ॥ २ ॥**

एकान्तरितेऽह्नि वा अन्वष्टक्यं कर्तव्यमिति वर्तते। तिथि[8]कृतव्यपेक्षोऽयं विकल्पः। कथं तदन्वष्टक्यं कर्तव्यमित्यत आह—

**दक्षिणपूर्वेऽष्टमदेशे परिवारयन्ति ॥ ३ ॥**

---

A. प्रथमद्वितीयसूत्रे सह एकीकृत्य पठति सामश्रमी।

---

1. 'तेन' ख। 2. '-ष्टका वा' ख। 3. 'नान्यथा' ख। 4. 'अष्टम्यामनन्तर-' ख। 5. '-ष्वनुपती' ख। 6. 'ष्ट-कमष्टका-' नास्ति ख। 7. '-मत' नास्ति ख। 8. '-क्षयापेक्षो विकल्पः' ख।

येऽग्नयो दक्षिणपूर्वेऽष्टमदेशे आग्नेय्यां दिशि परिवारयन्ति कटादिभिश्छन्नं कुर्वन्ति। बहुवचनाद् ये एव केचित्।

कीदृशं परिवारयन्ति—

**तथायतम् ॥ ४ ॥**

दक्षिणपूर्व'मष्टमदेशायतमित्यर्थः। आयामो दैर्घ्यमुच्यते 'प्रकृतत्वाद् दक्षिणपूर्वकोणायतमिति चेत्, न; कुतः? उत्तरार्धदक्षिणार्धयोरुपरिष्टात् कर्मोपदेशात्'*।

**तथामुखैः कृत्यम् (A) ॥ ५ ॥**

'यद् वक्ष्यमाणकं कर्म तत् तथामुखैर्दक्षिणपूर्वमष्टमदिङ्मुखैरेव कर्तव्यम्।

कियत्प्रमाणं परिवारयन्तीत्यत आह—

**चतुरवरार्ध्यान् प्रक्रमान् ॥ ६ ॥**

अवरार्ध्यशब्दो निकृष्टवचनः, चतुर्निकृष्टान् प्रक्रमान्। कथं नाम? सर्वनिकृष्टोऽयं पक्षो यत्प्रक्रमचतुष्टयमिति। अधिकं त्विच्छया कुर्यात्। प्रक्रमः श्रवणाकर्मण्येवोक्तः(B)।

तस्य च परिवृतस्य—

**पश्चादुपसञ्चारः ॥ ७ ॥**

'पश्चिमस्यां दिश्युपसञ्चारः'*। द्वारं कर्तव्यमिति शेषः।

**उत्तरार्द्धे परिवृतस्य लक्षणं कृत्वाऽग्निं प्रणयन्ति(C) ॥ ८ ॥**

ऋज्वर्थम्। लक्षणावृदेषा सर्वत्रेति प्राप्तत्वादत्र' लक्षणाग्रहणमयुक्तमिति चेत्, न; प्राप्ते पुनर्वचनं परिसंख्यानार्थम्। एवञ्चात्र 'यावदुक्तत्वाद् ब्रह्मासनादीनां निवृत्तिः

A. 'दक्षिणपूर्वे' इत्यादिसूत्रत्रयी सामश्रमिमते एकसंख्याकेति।

B. गृह्य सू० ३।७।६ (पृ० ६११)

C. 'चतुरवरा'दि'प्रणयन्ती'त्यन्तसूत्रत्रयी सामश्रमिमते एकैवेति ज्ञेयम्।

1. '-मदेशायत-' ख। 2. नास्ति ख। 3. अतः पूर्वं 'दक्षिणाप्रत्यग्निरित्यर्थः। किं प्रमाणात् तत्रैव परिधारणं तस्मिन्' इत्यधिकः पाठः ख, 'अथ वक्ष्यमाणं कर्म' ख। 4. 'पश्चिमायामुपसञ्चारः' ख। 5. 'अत्र' नास्ति ख। 6. 'बहुलत्वात्' ख।

स्यात् (A)। अत्र सन्देहः—किमेतदग्निप्रणयनादि [1]वक्ष्यमाणकं कर्म प्राचीना[2]वीतिना कर्तव्य[3]मुतोपवीतिनेति ? उच्यते—'उपरिष्टादत ऊर्ध्वं प्राचीनावीतिने'ति [सू० ४।३।१] निर्देशादतो यदधस्तात् किञ्चित् प्राचीनावीतिना कर्तव्यं किञ्चिदुपवीतिनेति गम्यते, तत्र यद् यथा कर्तव्यं तत् तथैव वक्ष्यामः। [4]तत्रैतदग्निप्रणयनं तावदुपवीतिना प्राङ्मुखेण कर्तव्यम्। कुतः ? 'लक्षणावृदेवा सर्वत्रे'ति [ सू० १।१।१० ] नियमात्। हविष्करणाद्य-[5]वहननान्तं तु दक्षिणपूर्वमध्यमदिङ्मुखेन प्राचीनावीतिना कर्तव्यम्। कुतः ? पित्र्यत्वात्, पितृदेवानां साधारणत्वा[6]द्धविषोऽयुक्तमिति चेत्, न; कुतः ? [7]पित्र्यस्यात्र प्रधानत्वाद् दैवस्य [8]च तदङ्गत्वात् प्रधानवशेन धर्मनियमाच्च। दैवमेवात्र प्रधानमिति चेत्, न; कुतः ? तथामुखैः कृत्यमिति वचनात्। हविषश्च सकृद्ग्रहणात् सव्योत्तराभ्यां चावहननात् सकृ[9]च्च फलीकरणात् प्रसव्यं चावघट्टनोपदेशात् दक्षिणतश्चोद्वासनात् प्रत्यभिघारस्य [9]च प्रतिषेधात् दक्षिणाग्र[10]कुशैर्दक्षिणाप्रवणे च स्वस्तरे हविरादीना-मपादक्षिण्येनाऽऽहृत्याऽऽसादनादनुज्ञातस्य होमोपदेशाच्च। किं बहुना पित्र्यमेव श्राद्धे प्रधानं न [11]दैवतमिति।

तथाच मनुः—

देवकार्याद् द्विजातीनां पितृकार्यं विशिष्यते।
दैवं हि पितृकार्यस्य पूर्वमाप्यायनं स्मृतम्(B) ॥ इति।

---

A. प्रमाणमत्र गृह्यासंग्रहोऽपि—

एकाग्नौ पितृयज्ञे च ब्राह्मणं नोपकल्पयेत्।
सायंप्रातश्च होमेषु तथैव बलिकर्मसु ॥ इति १।९१।

पितृयज्ञे अन्वाहार्यकर्मणि पिण्डपितृयज्ञे चेत्यस्य दीक्षितभाष्यम्।

B. मनुसंहिता ३।२०३।

अस्य व्याख्यायां मेधातिथिः—"देवानुद्दिश्य यत् क्रियते तद् दैवं कार्यम्, ततः पितृकार्यं विशिष्यते विशेषेण कर्तव्यमुपदिश्यते। अनेन पित्र्यस्य प्राधान्यमाह दैवं तत्राङ्गं कर्मेत्युक्तं भवति। अङ्गकर्मतामेव स्पष्टयति दैवं हि यद् ब्राह्मणभोजनं तत् पितृकार्यस्याप्यायनं न स्वतः प्रधानं किन्तु पित्र्यस्यैव पोषकम्" इत्याह।

---

1. 'वक्ष्यमाणं' ख। 2. '-वीतिना' घ। 3. '-मथतो-' घ। 4. 'तत्र चैतदग्नि-' ख। 5. '-वहननान्तं' घ। 6. '-द्धविषो युक्तमेतदिति चेत्, कुतः ?' ख। 7. 'पित्र्यस्यात्र-' घ। 8. 'च' नास्ति ख। 9. 'च' नास्ति घ। 10. '-कुशैः दक्षिणे प्रवणे स्वस्तरे' ख। 11. 'दैवमिति' ख।

तस्माद् यथोक्त एवार्थः। अलमतिप्रसङ्गेन प्रकृतमधुनोच्यते।

एवमुपवीतिनाऽग्निप्रणयनं कृत्वा, अथ प्राचीनावीती दक्षिणाग्रेषु कुशेषु—

**पश्चादग्नेरुलूखलं दृंहयित्वा सकृत् संगृहीतं व्रीहिमुष्टिमवहन्ति सव्योत्तराभ्यां पाणिभ्याम्॥ ६॥**

सव्यः पाणिः 'उत्तरो दक्षिणश्चाधरो'[1] ययोः पाण्योस्ताविमौ सव्योत्तरौ। ताभ्यां सव्योत्तराभ्यां पाणिभ्यां मुषलमादाय सकृत् संगृहीतं व्रीहिमुष्टिमवहन्ति। उक्तार्थमन्यत्। अत्र सन्देहः—किमत्र पित्र्यत्वात् पितृभ्यस्त्वा जुष्टं निर्वपामीति हविर्ग्रहणम् [2]उतानुक्तत्वादमन्त्रकमिति? पितृभ्यस्त्वेति ब्रूमः। कुतः? प्रकृतौ तथा [3]दृष्टत्वात्। तथा [4]चाग्नौकरणहोमविचारश्लोके लिङ्गदर्शन[5]मस्ति,

अपसव्येन वा कार्यो दक्षिणाभिमुखेन च।
निरूप्य हविर[6]न्यस्मा अन्यस्मै न हि हूयते(A)॥ इति।

एतस्मादेव लिङ्गान्मन्त्रवद् ग्रहणमनुमीयते। तथाच वाक्यार्थविद्भिरुक्तम्—

लिङ्गादपि विधिर्ज्ञेयो दर्भेषु विकरो यथा(B)॥ इति।

एवं चात्रापि कंसादिना ग्रहणम् अनुनिर्वापयोश्चात्र निवृत्तिः(C)। सकृत् संगृहीतमिति वचनात्। व्रीहिग्रहणं हविरन्तरप्रतिषेधार्थम्। यद्यप्यत्र मुष्टिमात्रस्य ग्रहणं श्रूयते तथाऽपि तथा गृह्णीयाद् यथा होमस्य पिण्डानां च [7]निर्वृत्तिः स्यात्(D)।

एवं यथोक्तेन विधिना अवहननं [8]कुर्वतः—

---

A. कर्मप्रदीपः २।७।१३।

B. तर्कालङ्कारोऽप्यत्राऽऽह—

"एतस्माल्लिङ्गान्मन्त्रवद् ग्रहणमवगम्यते। पित्र्यं निर्वापः सत्यस्य हविषो हेतुतयोपन्यस्यते। तच्चैवं सति माङ्गल्येनोपपद्यते। तथाच पुराणस्मरणम्—

अग्निमान् निर्वपेत् पित्र्यं चरुं वा सत्यमुष्टिभिः।
पितृभ्यो निर्वपामीति सर्वं दक्षिणतो न्यसेत्॥" इति।

C. अत्र विशेषो द्रष्टव्यः ( पृ० २०२ )

D. अत्रापि 'यावता होमनिर्वृत्तिरि'त्यादि कर्मप्रदीपवचनमुक्तं भाष्यकृता, तदपि द्रष्टव्यम् (पृ० २०२ )

---

1. 'उत्तरतो दक्षिणश्चाधरो' ख। 2. 'उत वाचकुत्वादम-' ख। 3. 'दृष्टत्वात्' ख। 4. 'च' नास्ति ख। 5. '-मिति' ख। 6. '-न्यस्मादन्यस्मै' ख। 7. 'निवृत्तिः' ख। 8. 'कुर्वीत' ख।

## यदा वितुषाः स्युः ॥ १० ॥

यदा यस्मिन् काले वितुषा नानातुषास्तण्डुलाः स्युर्भवेयुः, तदा शूर्पेण शोधयित्वा—

## सकृदेव सुफलीकृतान् कुर्वीत(A) ॥ ११ ॥

फलीकरणं [1]कम्बूकापनयनमुच्यते, सुशब्दोऽतिशयवचनः, सुफलीकृतानिति अपगत-समस्त[2]कम्बूकानित्यर्थः। [3]प्रक्षालनमपि सकृदेव स्यात् 'सकृत् पितृभ्य' इति(B) वचनात्।

## अथामुष्माच्च सक्थ्नो मांसपेशीमवकृत्य नवायां सूनाया-मनुशश्छेदयेत् ॥ १२ ॥

अथशब्दः पूर्वप्रकृतार्थः। अमुष्मात् [4]च पूर्वप्रकृतात् सक्थ्नः, सक्थिग्रहणं क्लोम्नो-ऽप्युपलक्षणार्थम्;(C) क्लोम्नश्च मांसपेशीमवकृत्याऽऽच्छिद्य नवायां सूनायाम्, सूनाशब्देन काष्ठमयमधिकरणमुच्यते। तस्याम् अणुशः अल्पशश्छेदयेत्।

तथाच[5] छेदयेत्—

## यथा मांसाभिघाराः पिण्डा भविष्यन्तीति(D) ॥ १३ ॥

यथा येन प्रकारेण मांसाभिघारा मांसव्यञ्जनाः पिण्डा भवन्ति।

## तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च मांसचरुञ्च पृथङ्-मेक्षणाभ्यां प्रसव्यमुदायुवन् ॥ १४ ॥

प्रसव्यमप्रादक्षिण्येन। उक्तार्थमन्यत्(E)। अत्रापि मांसाभावे पायसः स्यात्, तदुक्तमधस्तादेव ओदनव्यञ्जनार्थं [6]त्विति(F)।

A. यदादि कुर्वीतान्तम् एकमेव सूत्रमिति सामश्रमी।

B. द्रष्टव्यं सूत्रम् १।७।९। ( पृ० २०४ )

C. क्लोमलक्षणमुक्तं प्राक् ४।१।४ सूत्रपादटीकायाम् ( द्र० पृ० )

D. अथामुष्माच्चेत्यादि पिण्डा भविष्यन्तीत्यन्तमेकं सूत्रमिति सामश्रमी।

E. द्रष्टव्यं ४।१।६ सूत्रभाष्ये पादटीकायाञ्च ( पृ० ७१६ )

F. चतुर्थप्रपाठकप्रथमकण्डिकाभाष्यस्यान्तिमवचनमिदम् ( पृ० ७२४ )

1. 'कचुकाप-' ख। 2. '-कचुका-' ख। 3. 'एककालमपि' ख। 4. 'च' नास्ति ख। 5. 'च' नास्ति ख। 6. 'चेति' ख।

**शृतावभिघार्य दक्षिणोद्वास्य न प्रत्यभिघारयेत् ॥ १५ ॥**

ऋज्वर्थम् ।

**दक्षिणार्द्धे परिवृतस्य तिस्रः कर्षूः खानयेत् पूर्वोपक्रमाः ॥१६॥**

दक्षिणार्द्धे [1]दक्षिणभागे परिवृतस्य तिस्रः [2]त्रिसंख्याकाः कर्षूः गर्ताः कस्यचित् सकाशात् खानयेत्, अन्यस्याभावे स्वयमेव खनेत्। किमनियमेन ? न; पूर्वोपक्रमाः यासां पूर्वा प्रथमं खातुमुपक्रम्यते, अथ मध्यमा, अथोत्तमा। ता इमाः पूर्वोपक्रमाः। का पूर्वेति चेत् ?

पुरतो यात्मनः कर्षूः सा पूर्वा परिकीर्त्यते।
मध्यमा दक्षिणेनास्यास्तद्दक्षिणत उत्तमा(A) ॥

अथवा प्रत्येकं पूर्वस्याः [3]पूर्वस्यां दिशि [4]याः खातुमुपक्रम्यन्ते ताः पूर्वोपक्रमा इति। एवञ्च [5]पित्र्यत्वात् प्रसव्यं खननम्(B)।

कीदृशीः खानयेदित्यत आह—

**प्रादेशायामाश्चतुरङ्गुलपृथ्वीस्तथाऽवखाताः(C) ॥ १७ ॥**

प्रादेशायामाः प्रादेशदीर्घाः, आयामो दैर्घ्यम्; पृथुत्वं चतुरङ्गुलं यासां ताश्चतुरङ्गुल-पृथ्वीः, तथाऽवखाताश्चतुरङ्गुलावखाता इत्यर्थः। अयञ्च तासां विशेषः—

वाय्वग्निदिङ्मुखान्तास्ताः कार्याः सार्धाङ्गुलान्तराः।
तीक्ष्णान्ता यवमध्याश्च मध्यं नाव इवोत्किरेत्(D) ॥

इति। ताश्च दक्षिणासंस्था न कोणसंस्था इति,

मध्यमा दक्षिणेनास्यास्तद्दक्षिणत उत्तमा। इति वचनात्।

**पूर्वस्याः कर्ष्वाः पुरस्ताल्लक्षणं कृत्वाऽग्निं प्रणयन्ति ॥ १८ ॥**

ऋज्वर्थम्।

---

A. कर्मप्रदीपः २।७।१ ।

B. खननञ्चामूषां शङ्कुना करणीयम्। शङ्कुश्च—

शङ्कुश्च खादिरः प्रोक्तो रजतेन विभूषितः। शङ्कुश्चैवोपवेशश्च द्वादशाङ्गुल इष्यते ॥

इति ( २।७।३ ) कर्मप्रदीपोक्तलक्षण इति।

C. 'दक्षिणे'त्यादि 'खाताः' इत्यन्तमेकमेव सूत्रमिति सामश्रमी।

D. कर्मप्रदीपः २।७।२

---

1. 'दक्षिणदिग्भागे' ख। 2. 'त्रि:संख्यकाः' ख। 3. 'पूर्वदिशि' ख। 4. 'याः' नास्ति ख। 5. 'पित्र्याद् वाऽपसव्यं' ख।

लक्षणग्रहणस्य पूर्वोक्त एवार्थः(A)। किमनियमेनाऽऽहृत्य प्रणयन्ति? न; कथं तर्हि? उच्यते—

## अपरेण कर्षूः पर्याहृत्य लक्षणे निदध्यात्॥ १६॥

अपरेण कर्षूणां [1]पश्चिमेनेत्यर्थः। ऋज्वन्यत्(B)। एतदग्निप्रणयनमुपवीतिना प्राङ्मुखेण कर्तव्यम्। कुतः? होमार्थत्वात् प्रणयनस्य होमस्य च देवतार्थत्वात्। पितृयज्ञाङ्गत्वाद् होमोऽपि प्राचीनावी[2]तिना एवेति चेत्? न; कुतः?

दक्षिणं पातयेज्जानु देवान् परिचरन् सदा।
पातयेदितरज्जानु पितॄन् परिचरन्नपि(C)॥

इति वचनात्। अनेनैतद् दर्शयति पितृकर्मान्तःपात्यपि दैवमुपवीतिना कर्तव्यम्, तथेतरान्तःपात्यपि पित्र्यं प्राचीनावीतिनेति। एतच्छ्लोकोक्तस्य [3]सदाशब्दस्यैवमर्थत्वात्। [4]ननु होममन्त्रयोः पितृकव्यशब्दश्रवणात् पित्र्य एवायं होम इति चेत्? न; कुतः? पितृकव्यशब्दयोः सोमाग्निविशेषणत्वात्, माध्यन्दिनश्रुतेश्च 'स उद्रास्याग्नौ द्वे आहुती जुहोति देवेभ्य इत्यारभ्य सदेवैः प्रसूतोऽथैतत् पितृभ्यो ददाती'ति।

तथाच कर्मप्रदीपः—

अग्नौ करणहोमश्च कर्तव्य उपवीतिना।
प्राङ्मुखेणैव देवेभ्यो जुहोतीति श्रुतिश्रुतेः(D)॥ इति। ननु—
अपसव्यमग्नौ कृत्वा सर्वमावृत्[5]परिक्रमम्(E)। इति मनुवचनात्,

---

A. लक्षणावृदुक्ता प्रथमप्रपाठकस्य प्रथमकण्डिकायां नवमसूत्रे (पृ० ११)

B. चन्द्रकान्तस्तु—"अपरया अदूरवर्तिन्या दिशा इत्यर्थे एनप्प्रत्ययान्तोऽयम् अपरेणशब्दः, तद्योगात् कर्षूरिति द्वितीया। तथाचायमर्थः—कर्षूणामदूरवर्तिन्या पश्चिमया दिशा अग्निं पर्याहृत्य सर्वतोभावेनाऽऽहृत्य लक्षणे निदध्यात्" इत्येवं व्याचख्यौ।

C. कर्मप्रदीपः १।२।९। उक्तं वचनमिदं प्राक् (पृ० ३३)।
अस्य व्याख्यायां प्रकाशकारः—
"पार्वणे वसिष्ठोक्ते देवार्थश्राद्धे देवान् परिचरन् दक्षिणजानुपातनं कुर्यात्। पितॄन् पुनस्तदर्थश्राद्धकरणे परिचरन् वामं जानु पातयेदिति।" एवमाह।

D. कर्मप्रदीपः २।७।१२।

E. मनुसंहिता ३।२१४। मुद्रितपुस्तकेषु 'आवृत्य विक्रमम्' इत्यपपाठः। अस्योत्तरार्धन्तु—'अपसव्येन हस्तेन निर्वपेदुदकं भुवि।' इति।

---

1. 'पश्चिमे पश्चिमेनेत्यर्थः' ख। 2. '-तिन एव चेत्' ख। 3. 'सदा' नास्ति ख। 4. 'ननु' नास्ति ख। 5. 'परिक्रमे इति' ख।

अपसव्येन वा कार्यो दक्षिणाभिमुखेन च ।
निरूप्य हवि[1]रन्यस्मा अन्यस्मै नहि हूयते(A) ॥

इति [2]च कर्मप्रदीपवचनाद् विकल्पस्तर्हि युक्तः ? सत्यम् ; किंतु व्यवस्थया । [3]कीदृशी व्यवस्था ? उच्यते—येषां तिस्र आहुतयस्तेषां चाग्निः पूर्वम् इज्यते स्वधाकारान्ताश्च मन्त्राः, तद्विषयोऽयं प्राचीना[4]वीतित्वपक्षः । येषां तु द्वे एवाऽऽहुती तेषामुपवीतिपक्ष एवेति । कुतः ? अथोपवीती सोमं पितृमन्तमग्निं कव्यवाहनं च यजेत । प्राचीनावीतीति चेत् 'अग्निं पूर्वं यमं तृतीयं स्वाहास्थाने स्वधां च दधाती'ति सूत्रान्तरवचनात्(B) । [5]मनुनाऽपि तिस्र एवाऽऽहुतय आम्नाताः । तत्राप्यग्निरेव पूर्वो यमस्तृतीयः ।

अग्नेः सोमयमाभ्यां च कृत्वाप्यायनमादितः ।
हविर्दानेन विधिवत् पश्चात् सन्तर्पयेत् पितॄन्(C) ॥ इति ।

अत एव चापसव्यमग्नौ [6]कृत्वेत्युक्तम् । अन्यान्यप्येवं[7]रूपाणि सूत्राणि सन्ति ग्रन्थगौरवभयान्न लिख्यन्ते । तस्माद् यथोक्त एव विषयः । प्रकृतमधुनोच्यते ।

---

अस्य मेधातिथिकृता व्याख्या—अग्नौ यत् कर्तव्यम् 'अग्नये स्वधा नमः' इति आहुतिप्रक्षेपलक्षणं कार्यं तदपसव्यं दक्षिणेन हस्तेन कर्तव्यं न सव्येन नोभाभ्याम्, 'उभयोर्हस्तयोर्मुक्तमि'ति निषेधात् । हस्तद्वयसंयोगेन कर्तव्यताशङ्कया अपसव्येनेत्युक्तमिति केचित् । इदमत्र युक्तम् । या अग्नावाहुतयो हूयन्ते तासाञ्च य आवृत्परिक्रमस्तस्यापसव्यता विधीयते । दक्षिणसंस्था आहुतीः कुर्यात् नोदक्संस्थाः यथा दैवे, दर्व्या वा हविर्भिस्तु कारयितव्यं नोदीच्याम्, किन्तर्हि ? दक्षिणाभिमुखम् ; यथोदकं पित्र्येण तीर्थेन कार्यते । सर्वग्रहणादन्यदपि परिवेषणाद्यपसव्यमेव कर्तव्यम् , अपसव्येन हस्तेनोदकं निर्वपेत् । शनैरिति वा पाठः, अत्रार्थः, अन्यथा राजतैर्भाजनैरित्यनेन राजतभाजनप्राप्तये सव्यहस्तविधिः । आवृत्तिरावृत् । इति ।

A. कर्मप्रदीपः २।७।१३

B. प्रमाणीकृतं सूत्रान्तरवचनमिदं तर्कालङ्कारेणापि स्वभाष्ये । मतेऽस्मिन्नापत्तिरप्युद्भाविता तेन । तत्तु प्रदर्शयिष्यतेऽस्माभिरुपरिष्टात् कण्डिकाशेषे ।

C. मनुसंहिता ३।२११ । कुल्लूकभट्टकृताऽस्य व्याख्या—"अग्नेः सोमयमयोश्च विधिवत् पर्युक्षणादिपूर्वं हविर्दानेन प्रीणनमादौ कृत्वा पश्चादन्नादिना पितॄंस्तर्पयेत् । सोमयमयोर्द्वन्द्वनिर्देशेऽपि पृथगेव देवतात्वम् । सहादिशब्दप्रयोगाभावात् । यत्र साहित्यं विवक्षितं तत्र सहादिशब्दं करोतीत्युक्तं प्राक्" । इति ।

---

1. '-रन्यस्माद्-' ख । 2. 'च कर्मप्रदीप' नास्ति ख । 3. 'कीदृग् व्यवस्था' ख । 4. '-वीतीति पक्षः' ख । 5. 'मनुना ह्येवं तिस्र' ख । 6. 'कृत्वेति युक्तम्' ख । 7. '-विधानि'. ख ।

एवं प्राङ्मुखमुपवीत्यग्निप्रणयनं कृत्वा, ततः—

सकृदाच्छिन्नं दर्भमुष्टिं स्तृणोति ॥ २० ॥

एकप्रयत्नलूनेन दर्भमुष्टिना प्रकृतस्याग्नेः स्तरणम् अल्पत्वाद् 'दर्भाणां[1] पश्चाद् वास्तीर्य'त्यनेन न्यायेन करोति(A)। देवतार्थत्वाच्चात्र विशाखा लूनाः कुशाः स्युः।

अथ प्राचीनावीती भूत्वा सकृदाच्छिन्नैरेव पित्रर्थत्वात् उपमूललूनैर्दर्भमुष्टिभिः—

कर्षूश्च ॥ २१ ॥

स्तृणोतीति वर्तते। किमनियमेन? [2]न;

पूर्वोपक्रमाः (B) ॥ २२ ॥

उक्तार्थम्। यदग्रा कर्षूस्तदग्रैरेव कुशैः स्तरणं कर्तव्यम्।

उक्तञ्च— अग्रप्राशाग्रैः कुशैः कार्यं कर्षूणां स्तरणं घनैः।
[3]दक्षिणान्तां तदग्रैस्तु पितृयज्ञे परिस्तरेत्(C) ॥ [4]इति।

अत्र सन्देहः—किं कर्षूणां मध्यतः स्तरणं कर्तव्यम् उताग्नेरिव पार्श्वत इति? [5]मध्यत इति भ्रमः। कुतः? वक्ष्यत्युपरिष्टात् 'पूर्वस्यां कर्ष्वां दर्भेषु निनयेदि'त्यादि(D)।

A. "आच्छिन्नम् आ सम्यक् उपमूले छिन्नं दर्भमुष्टिं सकृदेकवारं स्तृणोति—पश्चाद् वास्तीर्य इत्युक्तया रीत्या प्रकृतस्याग्नेश्चतुर्दिक्षु। अत्र आ छिन्नम् इति वचनस्यार्थवत्त्वार्थम् उपमूललूनत्वा-वगमात्, तस्य च पित्रर्थत्वात् प्राचीनावीतिनैतत् कर्तव्यम्" इति, सूत्रमिदमेवं व्याचख्यौ तर्कालङ्कारः। द्रष्टव्ये सूत्रे १।९।१७-१८। (पृ० १८०)

B. कर्षूश्च पूर्वोपक्रमा इत्येकमेव सूत्रमिति सत्यव्रतस्य कल्पना।

C. कर्मप्रदीपः २।७।४।

D. द्रष्टव्यं सूत्रम् ४।३।६। अत्र तर्कालङ्कारः—अग्निस्तरणसमभिव्याहारेणोपदेशाद् अग्निवद्-भितः स्तरणमुपदिशति, तथाहि अग्नेः स्तरणं खल्वभित इति निर्विवादम्, अतस्तत्सामान्यात् कर्षूणामपि तथैव स्तरणमागच्छति हृदयम्। लेखाकरणोपपत्तेश्चेति कर्षूणां मध्यतः किल लेखाकरणम्, तदुपपत्तयेऽपि अभितः कर्षूणां स्तरणमिति। न खलु कुशैः स्तृतानां कर्षूणां मध्यतो लेखा कर्तुं शक्यते इति च तस्य युक्तिः। युक्त्या चानया भाष्यकारमप्याक्षिपति सः—"अपरे पुनरेतदविद्वांसो भाषन्ते स्तरणमिदं कर्षूणां मध्यतः करणीयम्" इति। परमत्रैतद् विवेचनीयम्—यत् खलु आचार्य-

1. 'अन्यथा दर्भाणां' ख। 2. 'न' नास्ति ख। 3. 'दक्षिणायां' ख। 4. 'इति' नास्ति ख। 'मध्यत इति' नास्ति ख।

**पश्चात् कर्षूणां स्वस्तरमास्तारयेत्(A) दक्षिणाग्रैः कुशैर्दक्षिणा-प्रवणम् ॥ २३ ॥**

ऋज्वर्थम् ।

**बृषीश्चोपदध्यात् ॥ २४ ॥**

[1]बृषी-शब्देन सोपग्रहं काष्ठमयमासनमुच्यते(B)। च-शब्दात् प्रकृते स्वस्तरे तामुपदध्यात्[1]*। अदृष्टार्थमस्या उपकल्पनम्। उपवेशनार्थत्वाद् [2]दृष्टार्थमिति चेत्? न; कुतः? उपदध्यादिति वचनात् (C)।

**तत्रास्मा आहरन्त्येकैकशः सव्यं बाहुमनु(D) ॥ २५ ॥**

तत्र तस्मिन् स्वस्तरे वक्ष्यमाणानि द्रव्याण्ये[3]कैकश आहरन्ति आनयन्ति। किमनियमेनाऽऽहरन्ति? न; अस्मै सव्यं बाहुमनु, अस्मा इति षष्ठ्यर्थे चतुर्थी। अस्य यजमानस्य सव्यं बाहुमनु अप्रादक्षिण्येनेत्यर्थः। अथ[4]वा तादर्थ्ये चतुर्थी। अस्मै अर्थायान्ये शिष्यादय आहरन्ति। अन्यस्याभावे स्वयमप्येवमेवाऽऽहरेत्।

कानि पुनस्तानि [5]द्रव्याणीत्यत आह—

**चरुस्थाल्यौ मेक्षणे कंसं दर्वीमुदकमिति ॥ २६ ॥**

---

सूत्रमुल्लिख्य भाष्यकारपादैरुक्तम्—पूर्वस्यां कर्ष्वां दर्भेषु निनयेदिति सूत्रबलान्मध्यत एव स्तरणीयमिति, अन्यथा अभितः स्तरणे कर्षूणां मध्ये दर्भाभावाद् दर्भेषु निनयेदित्यसङ्गतोक्तिः स्यात्। तत्र च किमुत्तरं तर्कालङ्कारस्येति न विद्मः। अतो मध्यत एव स्तरणमुचितम्, लेखाकरणस्यासङ्गतिरिति चेल्लेखाकाले स्तृतदर्भान् पुञ्जीकृत्य लेखां कृत्वा पुनः स्तृणुयादिति नानुपपत्तिः। अथवा अत्र स्तरणोपदेशेऽपि लेखां विना स्तरणानुपपत्तिभिया लेखां कृत्वा ततः स्तरणं भविष्यतीत्यार्थतः पौर्वापर्यं कर्तव्ये इति। तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

A. आस्तारयेद् इत्यत्र कुशैरित्यत्र च विभज्य सूत्रत्रयी परिकल्पिता तर्कालङ्कारेण।

B. तदासनन्तु दैर्घ्येणाऽऽयामेन च द्वादशाङ्गुलम् इत्यभियुक्ताः। 'ऋषीणामासनं बृषी' इति चामरः।

C. उपधानं नाम स्थापनम्, तत्तु अदृष्टार्थमेव कर्त्तव्यम्, न पुनरुपवेशनार्थं बृष्याधानमिति भावः।

D. अत्र च 'स्वस्तरे सर्वमासाद्य' इत्यादिवक्ष्यमाण( पृ० ७४४ )कर्मप्रदीपवचनैकवाक्यतया 'तत्र'पदेन स्वस्तरस्यैव परामर्शो न बृष्याः। एवञ्च बृष्या अपि स्वस्तरे आसादनमेतेनैव वचनबलेनाऽऽयातीति बोध्यम्।

---

1. नास्ति ख। 2. 'दृष्टार्थ-' च। 3. 'एकैकशः' इति 'आनयन्ती'त्यनन्तरम् ख-पुस्तके। 4. 'वा' नास्ति ख। 5. 'द्रव्याणि' नास्ति ख।

ऋज्वर्थम्। इतिकरणादन्यानि चोल्लेखनपिञ्जुल्या[1]दीनि यवतिलपुष्पप्रभृतीनि, येषामुपरिष्टाद् विनियोग उक्तः [2]इह चाऽऽसादनं नोक्तं तानि चाऽऽहरन्ति। [3]इति।

**पत्नी बर्हिषि शिलां निधाय स्थगरं पिनष्टि ॥ २७ ॥**

पत्नी जाया प्रकृते बर्हिषि शिलां निधाय स्थापयित्वा स्थगरं पिनष्टि चन्दनादिगन्धद्रव्यपेषणं करोति। तथाचोक्तम्—

स्थगरं सुरभि [4]प्रोक्तं चन्दनादिविलेपनम्(A)। इति।

**तस्यां चैवाञ्जनं निघृष्य तिस्रो दर्भपिञ्जुली[5]रञ्जयति सव्यन्तराः ॥ २८ ॥**

चशब्दात् प्रकृता पत्नी तस्यामेव शिलायाम् अञ्जनं[6] निघृष्य, घर्षणोपदेशात् सौवीराञ्जनम्, इतरस्य घर्षणानुपपत्तेः। उक्तञ्च—

सौवीराञ्जनमित्युक्तं पिञ्जुलीनां यदञ्जनम्(B)। इति।

तेनाञ्जनेन तिस्रः त्रिःसंख्याका दर्भपिञ्जुलीरुक्तलक्षणाः[6]* (C)[7]अञ्जयति क्लेदयति। किं समस्ताः? न; सव्यन्तराः, विशब्दो नानावचनः, सह नानान्तरैः सव्यन्तराः [8]श्वाविच्छलाकाकारवत् (D)।

**तैलञ्चोपकल्पयेत् ॥ २९ ॥**

तिलेषु भवं तैलम्।

**क्षौमदशाश्च ॥ ३० ॥**

क्षौमदशा अतसीसूत्रदशा, ताश्च उपकल्पयेदिति वर्तते।

**शुचौ देशे ब्राह्मणाननिन्द्यानयुग्मानुदङ्मुखानुपवेश्य ॥३१॥**

शुचावनुपलिप्ते देशे(E)कर्षूणां दक्षिणतः यथा भुक्तवतां ब्राह्मणानामग्रतः [9]कर्षूषु

---

A. कर्मप्रदीपः २।७।९।

B कर्मप्रदीपः २।७।९।

C. द्रष्टव्यं १।७।६ सूत्रभाष्यम् ( पृ० २०४ )।

D. 'श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्' इत्यमरः।

E. तथाच मनुः—

शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत्।
दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत् ॥ इति ३।२०६।

1. 'चादीनि' नास्ति ख। 2. 'च इहाऽऽसादनं' ख। 3. 'इति' नास्ति घ। 4. 'प्रोयं' ख। 5. '-रञ्जति' ख। 6. '-नम् उक्तलक्षणम्' ख। 7. 'यञ्जति' ख। 8. 'शापिच्छिलाकावत्' ख। 9. 'ह कर्षूषु' ख।

पिण्डा भवन्ति, तथा ब्राह्मणान् अनिन्द्यान्

अग्र्याः सर्वेषु [1]वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः(A) ॥

इत्येवमादीन् शाखान्तरप्रसिद्धान् अयुग्मान् विषमसंख्याकान्, बहुवचनात् त्रिप्रभृतीन् उदङ्मुखानुपवेश्य । अत्र सन्देहः—[2]किमत्र वैश्वदेवार्थं ब्राह्मणानुपवेशयेत् उत यावदुक्तत्वान्नेति । तत्रैक आहुः—[3]अविधानादिह वैश्वदेवाभाव इति । तदयुक्तम्, कुतः ? शाखान्तरे [4]दैवपूर्वस्य श्राद्धस्य विधानात्, इह च शाखान्तरापेक्षायोगात् दैवहीनस्य श्राद्धस्य रक्षोऽभिघातदोषश्रवणाच्च ।

तथाच मनुः— तेषामारक्षभूतं तु पूर्वं दैवं नियोजयेत् ।
रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम्(B) ॥ इति ।

यस्य यस्य [5]हि पदार्थस्य ग्रन्थान्तरापेक्षया [6]विधानं न क्रियते तस्य तस्याभाव इत्येवं चेदुदङ्मुखानामपि तर्हि ब्राह्मणानामुपवेशनमात्रमेव स्यात्, न तु भोजनादिकम् अविधानात् । नचैतदिष्यते, कुतः ? 'वृद्धिपूर्तेषु युग्मानाशयेत्' [ सू० ४।३।३४ ] इति

---

"अस्पृश्यप्राकारानुपहतं देशं निर्जनञ्च गोमयेनोपलेपयेत् । दक्षिणाप्रवणतञ्च प्रयत्नतः संपादयेत्" इति चास्य कुल्लूककृता व्याख्या ।

A. मनुसंहिता ३।१८४ । अस्य व्याख्यायां कुल्लूकभट्टः—"सर्वेषु वेदेषु चतुर्ष्वप्यग्र्याः श्रेष्ठाः सम्यग् गृहीतवेदा ब्राह्मणाः पङ्क्तिपावनाः । अत एव यमः पंक्तिपावनगणनायाम्—'चतुर्वेदविदे चैव' इति पठितवान् । तथा प्रकर्षेणैवोच्यते वेदार्थ एभिरिति प्रवचनान्यङ्गानि, तेष्वप्यग्र्याः षडङ्गविदः, ते च चतुर्वेदिनोऽपि पङ्क्तिपावनाः । 'न्यायविच्च षडङ्गवित्' इति पङ्क्तिपावनमध्ये यमेन पृथक् पठितत्वात्, तथा 'छन्दसां दशपुरुष' इत्युशनोवचनात् दशपुरुषपर्यन्तमविच्छिन्नवेदसंप्रदायवंशजाः पङ्क्तिपावनाः" इत्याह ।

B. मनुसंहिता ३।२०४ । अस्य व्याख्या—"रक्षैव आरक्षं तत् प्राप्तम् आरक्षभूतम् आरक्षार्थमित्युक्तं भवति । उपमायां वा भूतशब्दः । यद्वा तु रक्षार्थम्, अतः पूर्वं दैवं ब्राह्मणं नियोजयेत् निमन्त्रयेत आसने चोपवेशयेत् । अपरोऽर्थवादः । रक्षांसि अदृश्यानि कानिचित् सत्त्वानीतिहासे । क्रिया विप्रलुम्पन्ति आच्छिन्दन्ति पितृभ्यः श्राद्धम् । के पुनर्देवा उद्देश्याः गृह्ये तावद् 'विश्वान् देवान् हवामहे' इति मन्त्रस्य विनियोगाद् विश्वे देवाः प्रतीयन्ते ; पुराणेऽप्युक्तं 'विश्वे देवा इति श्रुतिः' इति" इति मेधातिथिकृता ।

---

1. 'दैवेषु' ख । 2. 'किमर्थं' ख । 3. 'अवधानादिह' ख । 4. 'दैवपूर्वस्य' ख । 5. 'हि' नास्ति, च । 6. 'विधानेन' च ।

लिङ्गा[1]दिह एतेषामयुग्माना[2]माशनप्रतीतेः। 'यो वा तेषां ब्राह्मणानामुच्छिष्ट[3]भाक स्यात्' [ सू० ४।३।२८ ] इति च लिङ्गात्। तस्माद्र वैश्वदेवमत्र पितृयज्ञाङ्गत्वात्, प्रधाननिर्देशेऽङ्गानामनिर्दिष्टानामपि प्राप्तत्वात् श्राद्धकल्पस्यापेक्षित[4]त्वाच्च न विधीयते।

अथवा अविधानेनात्र ब्राह्मणपरीक्षायामनियमं दर्शयति।

तथाच मनुः—

न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित्।

पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः(A)॥ [5]इति।

तस्मात् [6]पूर्वं तावद्र वैश्वदेवार्थं ब्राह्मणान् युग्मान् प्राङ्मुखानुपवेश्य तत उदङ्मुखानुपवेशयेदिति सिद्धान्तः।

तथाचोक्तम्—

स्वस्तरे सर्वमासाद्य यथा यदुपयुज्यते।

दैवपूर्वं ततः श्राद्धमत्वरः शुचिरारभेत्॥ (B) इति।

एवमुपवेश्य ततो यथाविधानमासनेषु—

## दर्भान् प्रदाय॥ ३२॥

दर्भासनग्रहणमधीतस्य कर्मण उपलक्षणार्थम्। एवञ्चाऽऽदिशब्दलोपेन व्याख्या दर्भादि प्रदायेति(C)। ततः प्राचीनावीती कर्तृष्ववनेजनार्थं पात्रेष्वेतस्मि[7]न्नत्र कर्मे दक्षिणासं[8]स्थतया।

## उदकपूर्वं तिलोदकं ददाति पितुर्नाम गृहीत्वाऽसावेतत् ते तिलोदकं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति॥३३॥

A. मनुसंहिता ३।१४९। अस्य कुल्लूकभट्टोक्ता व्याख्या—धर्मज्ञो दैवश्राद्धे भोजनार्थं न ब्राह्मणं यत्नतः परीक्षेत। लोकप्रसिद्धिमात्रेणासौ साधुतया भोजयितव्यः। पित्र्ये पुनः कर्मण्युपस्थिते पितृपितामहाद्यभिजनपरीक्षा कर्तव्येति प्रयत्नतःशब्दस्यार्थः। इति।

B. कर्मप्रदीपः २।७।६।

C. तदुक्तं कर्मप्रदीपे—

आसनाद्यर्घ्यपर्यन्तमित्यादि २।७।७।

1. '-दिहैव तेषाम-' ख। 2. '-मासन-' ख। 3. '-भक्स्यादिति च' ख। 4. '-त्वात् तु' ख। 5. 'इति' नास्ति ख। 6. 'तावत् पूर्वं' ख। 7. 'एव' नास्ति ख। 8. '-स्थतया:' ख।

केवलमुदकं पूर्वं [1]यस्य तदिदमुदकपूर्वं [2]तिलमिश्रमुदकं तिलोदकमिति[3]। असाविति संबोधनविभक्त्या पितुर्नाम गृहीत्वा पात्रे ददाति—विष्णुशर्मन् एतत् [4]ते तिलोदकं (A) ये चात्र त्वेति। पात्राणामनिर्देशाद् [5]ब्राह्मणानाञ्च प्रकृतत्वात्[5]* [6]ब्राह्मणहस्तेषूदकपूर्वं तिलोदकं ददातीति चेन्न, कुतः ?

आसनाद्यर्घ्यपर्यन्तं वसिष्ठेन यथेरितम्।
कृत्वा कर्माथ पात्रेषु उक्तं दद्यात् तिलोदकम्(B) ॥ इति वचनात्।

अत्र सन्देहः—किमानन्तर्यात् [7]तिलोदक एव मन्त्र उतानुषङ्गे विधानात् गन्धोदकेऽपीति[7]* ? तिलोदक एवेति ब्रूमः। कुतः ?

तूष्णीं पृथगपो दत्त्वा मन्त्रेण तु तिलोदकम्।
गन्धोदकञ्च दातव्यं सन्निकर्षक्रमेण तु(C) ॥

इति वचनात्।

## अप उपस्पृश्यैवमेवेतरयोः ॥ ३४ ॥

---

A. ॐ ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा। इति।

मन्त्रस्यास्य विनियोगप्रमाणन्तु खादिरगृह्येऽपि ३।५।१६।

अस्य व्याख्या—ये अत्र श्राद्धकर्मणि त्वामनु तव पश्चाद् भोक्तारः, यांश्च त्वमनु त्वं येषां पश्चाद् भोक्ता असि, तस्मै तवानुयायिने ते तुभ्यं नम इति। तस्मै इति बहुवचनस्यैकवचनं तेभ्य इत्यर्थः। इति।

B. कर्मप्रदीपः २।७।७।

तिलोदकदानपात्रञ्च—

आहरेण तु पात्रेण यस्तु दद्यात् तिलोदकम्।
पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च ॥
कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम्।
तदेव हस्तघटितं स्थाल्यादि दैविकं स्मृतम् ॥

इति कर्मप्रदीपोक्तलक्षणलक्षितं ज्ञातव्यम्। २।७।९-१०।

C. कर्मप्रदीपः २।७।८। अत्र गन्धोदकञ्च इति चकारं कुर्वन् गन्धोदकस्यापि तिलोदकवत् मन्त्रेण पात्रेषु दानं बोधयति। व्यक्तीकृतमेतद् भट्टपादेन 'तथा गन्धान्' इति सूत्रभाष्ये।

---

1. 'यजात्' ख। 2. 'तिलोदकमिश्र-' ख। 3. 'इति' नास्ति घ। 4. 'ते' नास्ति ख। 5. नास्ति ख। 6. 'ब्राह्मणानां ह-' ख। 7. 'तिलोदकमनन्तरं मन्त्रमनुषङ्गे विधानवद् गन्धोदकमपीति' इति ख।

पित्र्यमन्त्रानुद्रवणे [1]उदकालम्भविधानादप उपस्पृश्येत्युच्यते(A)। [2]एवमेव अनेनैव[3] प्रकारेण [4]इतरस्मिन् पात्रद्वये उदकपूर्वं तिलोदकं ददातीति, इतरयोः पितामह-प्रपितामहयोः, नाम गृहीत्वेति वर्तते।

## तथा गन्धान् ॥ ३५ ॥

तथा तेनैव प्रकारेण पितुर्नाम गृहीत्वा इतरयोश्च, प्रकृतान् गन्धान् प्रकृतेषु पात्रेषु ददातीति। विष्णुशर्मन् एष ते गन्ध इति। एतेषाञ्च पात्राणामिह पूरणमात्रमेव तावत्। अवनेजनं तु पिण्डदानकाल एव कर्तव्यम्।

'अथोदपात्रान् कर्षूषु निदध्यादि'त्यत्र [सू ४।३।५] एतस्मिन् क्रमे ब्राह्मणानां गन्ध-दानादौ पात्रप्रक्षालनान्ते [5]कृते ततोऽस्योपवीतिनः[5]*—

## (B)अग्नौ करिष्यामीत्यामन्त्रणं होष्यतः ॥ ३६ ॥

कुत एतत्? गन्धान् ब्राह्मणसात् कृत्वा पुष्पाण्यृतुभवानि च।
धूपञ्चैवाऽऽनुपूर्व्येण अग्नौ कुर्यादतः परम्(C) ॥

इति वचनात्। होष्यतः होतुमिच्छतः(D)। प्रकृतत्वात् सर्वेषां ब्राह्मणानां सकृदामन्त्रणम् एकस्य वा प्रधानस्य। तथाच ग्रन्थान्तरम्—सर्वत्र प्रश्नेषु (E)पङ्क्तिमूर्धन्यं पृच्छति सर्वान् वेति।

तैश्च ब्राह्मणैः—

## कुर्वित्युक्ते कंसे चरुं समवदाय मेक्षणेनोपघातं जुहुयात्

A. द्रष्टव्यम् सू० १।३।१३ ( पृ० ६२ )

B. अग्नौ करिष्यामि। इति। मन्त्रस्याऽऽकरस्थानन्तु मानवश्रौतसूत्रम् ११।९।१।

C. कर्मप्रदीपः २।७।११।

D. ननु आमन्त्रणं करोतीति वक्तव्ये होष्यत इति किमर्थं विभक्त्यतिक्रमः क्रियते? तथोक्तौ गन्धादिदानानन्तरमेवाऽऽमन्त्रणं स्यात्। होष्यत इति कुर्वन्नाचार्यो होमं करिष्यत एवाऽऽमन्त्रणं न गन्धादिदानात् परत एवेत्युपदिशति, तेन मध्ये भूमिशोधनमण्डलकरणाद्यपि कर्मास्तीति ज्ञायते एवमेके वर्णयन्ति, अन्ये तु 'अग्नौ कुर्यादतः परम्' इति वचनान्नात्रास्मिन्नवसरे भूमिशोधनादीत्याहुः। तत्र भगवन्तोऽनूचानाः प्रमाणम्।

E. प्रमाणत्वेन परिगृहीतं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये।

1. 'उदकलाभ-' ख। 2. 'एवमेवं' ख। 3. 'एव' नास्ति ख। 4. 'एतस्मिन्' ख। 5. 'प्रकृतस्योपवीतिनः' ख।

**(A)स्वाहा सोमाय पितृमत इति पूर्वां स्वाहाऽग्नये कव्यवाहनायेत्युत्तराम्॥ ३७ ॥**

ऋज्वर्थम्। अत्र सन्देहः—किमत्र मन्त्रान्ते स्वाहाकारः कर्तव्य उत नेति? [1]नेति ब्रूमः, कुतः? [2]आम्नातस्वाहाकारत्वात्। एवञ्च स्वाहाकारस्य [3]सम्प्रदानार्थत्वात् स्वाहाकारेणाऽऽदावाहुतिप्रक्षेपः पश्चान्मन्त्रोच्चारणमिति। कुतः?

स्वाहां कुर्यान्न चात्रान्ते न चैव जुहुयाद्धविः।

स्वाहाकारेण हुत्वाऽग्नौ पश्चान्मन्त्रं समापयेत्(B)॥ इति वचनात्।

ननु उपदेशक्रमादेव [4]सिद्धं पूर्वामुत्तरामिति कस्मादुच्यते? आह—स वा[5] अग्नये च सोमाय च जुहोतीत्यध्वर्यु[6]वेदे(C) [7]देवता[8]विपर्यासश्रवणात्, 'सर्वशाखाप्रत्ययमेकं

A. ॐ स्वाहा सोमाय पितृमते।

ॐ स्वाहा अग्नये कव्यवाहनाय। इति।

मन्त्रब्राह्मणम् २।३।१-२।

अनयोर्व्याख्यायां सायणाचार्यः—"यजुर्मन्त्राविमौ। पितृमान् सोमः कव्यवाहनोऽग्निश्च देवते। पितृमते अग्निष्वात्तादिपितृयुक्ताय सोमाय स्वाहा, हविर्दत्तमस्तु इत्यर्थः। तथा कव्यवाहनाय, कव्यं पितृभ्यो दीयमानं हविस्तस्य तेषां प्रापयित्रे अग्नये स्वाहा, कव्यवाहनसंज्ञकायाग्नये इत्यर्थः। 'एषो वाऽग्ने कव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणाम्' इति हि श्रुतिः (तै० स० २।५।८।६)" एवमाह। पितृदयिता-श्राद्धविवेक-श्राद्धचिन्तामणि-श्राद्धतत्त्वकारा अनिरुद्धभट्ट-शूलपाणि-वाचस्पतिमिश्र-रघुनन्दनादयोऽप्येवमेव गोभिलाचार्यपरिगृहीतं मन्त्रब्राह्मणपाठमनुलङ्घ्य छन्दोगानां कृते स्वस्वनिबन्धेषु प्रयोगं प्रदर्शयाम्बभूवुः। न ज्ञायते कथं छन्दोगमन्त्रभाष्यमारचयताऽपि मन्त्रब्राह्मणपाठमधरीकृत्य भट्टगुणविष्णुना "अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहा" इति वाजसनेयिसंहिता(२।२९) पाठमेव स्वाहापदं विपरिवर्त्य पठितम्—"स्वाहा अग्नये कव्यवाहनाय, स्वाहा सोमाय पितृमते" इति अग्नये स्वाहा, किम्भूताय? कव्यवाहनाय, कव्यं पितॄणामन्नं तद् वहतीति कव्यवाहनः। सोममण्डलाधारत्वात् पितॄणाम्, पितृमान् सोम" इति च व्याख्यातम्। तदत्र कौथुमराणायनीयानामग्नौकरणहोमे गुणविष्णुमतानुसरणमुचितमनुचितं वेति भगवन्तोऽनूचाना निर्दिशन्तु।

B. कर्मप्रदीपः २।७।१४।

C. प्रमाणत्वेनाऽऽम्नातं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये।

1. 'नेति' नास्ति ख। 2. 'आम्नात' नास्ति ख। 3. 'सम्प्रदर्शनात्' ख। 4. 'सिद्धः' ख। 5. 'एव' ख। 6. '-वेदे' ख। 7. 'देवता' नास्ति ख। 8. '-पर्यासे श्र-' ख।

कर्मेति [1]च न्यायात् अध्वर्युक्रमेणैव होमो मा भूदित्यत[2]स्तत्प्रतिषेधार्थं पूर्वामुत्तरामित्युक्तम्। एवं कृतहोमः सर्वान्नसंस्कारार्थं हुतशेषात् किञ्चिद् ब्राह्मणेभ्यो दत्वाऽश्नत्सु ब्राह्मणेषु पवित्राणि जपन्नासीत। तथाच मनुः—

स्वाध्यायं श्रावयेत् पित्र्ये(A) इत्यादि।

अयमपि जपः प्राचीनावीतिना कर्तव्यः। कुतः ?

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा।
पित्र्यमा निधनात् कार्यं विधिवद् दर्भपाणिना(B)॥

इति मनुवचनात्(C)।

इति [3]भट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये[3]* चतुर्थप्रपाठकस्य द्वितीया कण्डिका॥

---

A. स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि।
आख्यानानीतिहासांश्च पुराणानि खिलानि च॥ इति

मनुसंहिता ३।२३२। व्याख्यायामस्य कुल्लूकः—"स्वाध्यायं वेदम्, मानवादीनि धर्मशास्त्राणि, आख्यानानि सौपर्णमैत्रावरुणादीनि, इतिहासान् महाभारतादीन्, पुराणानि ब्रह्मपुराणादीनि, खिलानि श्रीसूक्तशिवसंकल्पादीनि श्राद्धे ब्राह्मणान् श्रावयेत्" एवमाह।

B. मनुसंहिता ३।२७९। कुल्लूकभट्टोकाऽस्य व्याख्या—"दक्षिणसंस्थितयज्ञोपवीतेनानलसेन दर्भहस्तेनापसव्यं पितृतीर्थेन यथाशास्त्रं सर्वं पितृसम्बन्धि कर्म, आं निधनादासमाप्तेः कर्तव्यम्। आ निधनात् यावज्जीवमिति मेधातिथिगोविन्दराजौ" इति।

C. अत्र तर्कालङ्कारवक्तव्यं किञ्चित् प्रदर्शयामः। तत्रोक्तं तेन—"ॐकारश्च प्रत्येकं मन्त्रादौ न करणीयः, तथाच कर्मप्रदीपः—'नोङ्कुर्याद्धोममन्त्राणामि'त्यादि ( क० प्र० २।७।१६ )। इदमिदानीं सन्दिह्यते—किमयमग्नौकरणहोमः प्राचीनावीतिना कर्तव्य आहोस्विदुपवीतिना उताहो अनियमेनेति? अनियमेनेत्याह, इतः परं प्राचीनावीतिना कृत्योपदेशात्। अत्राग्नौकरणहोमे प्राचीनावीतित्वोपवीतित्वयोरनियमं दर्शयति कर्मप्रदीपः—अग्नौ करणहोमश्चेत्यादिना। तथाच श्रूयते—अग्नौ करणहोमे प्राचीनावीती भूत्वा इत्यादि। स उद्वाल्याग्नौ द्वे आहुती जुहोति देवेभ्य इति च माध्यन्दिनीये ब्राह्मणे।

अग्निमान् निर्वपेत् पूर्वं चरुं वा शस्यमुष्टिभिः।
पितृभ्यो निर्वपामीति सर्वं दक्षिणतो न्यसेत्॥

इति च मात्स्ये पुराणे। तस्मादुभयत्वरसाद्विकल्प इति परिशिष्टकृतः कात्यायनस्याभिप्रायः।

---

1. 'वचन-' ख। 2. 'तत्' नास्ति ख। 3. नास्ति ख।

तस्मादूर्ध्वं प्राचीनावीतित्वोपदेशाद् अग्नौकरणहोमे प्राचीनावीतित्वोपवीतित्वयोरनियम इति भट्टनारायण-शूलपाणि-रघुनन्दनादिमतमादरणीयम्।

यच्च वर्णितम्—येषां तिस्र आहुतयो हूयन्ते येषां चाग्निः पूर्वं लिख्यते स्वधाकारान्ताश्च मन्त्राः, तद्विषयं प्राचीनावीतित्वम्। येषां तु द्वे आहुती सोमश्च पूर्वं हूयते स्वाहान्ताश्च मन्त्राः, तेषामुपवीतित्वम्, अथोपवीती सोमं पितृमन्तमग्निं कव्यवाहनञ्च यजेत प्राचीनावीती चेदग्निं पूर्वं स्वाहास्थाने स्वधापदञ्च दत्त्वा जुहोति इति सूत्रान्तरादिति। तदसङ्गतम्, अस्मद्गृह्ये सोमपूर्वाहुतिद्वयस्यैव स्मरणात्। अस्मत्परिशिष्टकारेणैव द्वयोरेव पक्षयोः स्वहस्तितत्वाच्च। अपि च अग्न्याद्याहुतित्रयपक्ष एवोपवीतित्वं दृश्यते।

तथा च मत्स्यपुराणे—

अग्नेः सोमयमाभ्याञ्च कुर्यादाप्यायनं बुधः। इत्यभिधाय,
यज्ञोपवीती निर्वर्त्य ततः पर्युक्षणादिकम्।
प्राचीनावीतिना कार्यमतः सर्वं विजानता॥

इत्युक्तम्। आदिपदाद्धोम उक्त इति वाचस्पतिमिश्राः। तथा तैत्तिरीयशाखायामापस्तम्बसूत्रम्—अथ पुनरुपवीती दक्षिणजान्वाच्य मेक्षणेनोपस्तीर्य तेनावदायाभिघार्य सोमाय पितृमते स्वधा नम इति दक्षिणाग्नौ जुहोति, यमायाङ्गिरसे स्वधा नम इति द्वितीयाम्, अग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम् इति। तथा सांख्यायनसूत्रम्—दक्षिणजान्वाच्य यज्ञोपवीती प्रागासीनो मेक्षणेन जुहोति अग्नये कव्यवाहनायेत्यादि। तस्मात् सूत्रान्तराणि तत्तच्छाखिनामेव प्राचीनावीतित्वादिकमुपदिशन्ति, नास्माकम्।

यदपि शौनकवचनम्—

स्वाहाकारेण होमे तु भवेद् यज्ञोपवीतवान्।
तत्र प्रागग्नये हुत्वा पश्चात् सोमाय हूयते॥

इति, तदपि बह्वृचविषयम्। तथाचाऽऽश्वलायनकल्पसूत्रम्—प्राचीनावीतीध्ममुपसमाधाय मेक्षणेनावदायावदानसम्पदा जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति, स्वाहाकारेण वाऽग्निं पूर्वं यज्ञोपवीती इति। परिशिष्टवचनद्वयस्य व्यवस्थितविषयत्वं गोभिलीयानामग्नौकरणहोमे उपवीतित्वञ्च परिशिष्टप्रकाशकारः प्राह, तदपि न समीचीनम्; न खलु व्यवस्थायां किमपि प्रमाणमुपलभामहे शाखान्तरविषयत्वाद् वचनान्तराणां न खलु व्यवस्था परिशिष्टकारेण दर्शिता। कल्प्यत इति चेद् यदृच्छोपनता खल्वियं कल्पना, न तु प्रमाणोपेता, एवं खल्वपहस्तितैव शास्त्रमर्यादा स्यात्। अस्मत्परिशिष्टं खल्वेतत् कात्यायनकृतं कर्मप्रदीपाख्यम्। कथं ज्ञायते? अध्येतृसम्प्रदायसिद्धेः। अत एव छन्दोगपरिशिष्टमित्याख्यायते। भवानपि नात्र विप्रतिपद्यते। एवञ्चास्माकमेवैष विकल्पः कात्यायनेनोपदिष्ट इत्यकामेनापि वक्तव्यम्। न खल्वस्मत्परिशिष्टे शाखान्तरेषां विधिर्वचितो वर्णयितुम्। 'अस्मद्गृह्यकारेण परतः प्राचीनावीतित्वोपदेशाद् व्यक्तमग्नौकरणहोमे उपवीतित्वं दर्शितम्' इति

ब्रुवाणो वाचस्पतिरप्यनादेयवागेव। कुतः? परतः प्राचीनावीतित्वोपदेशस्य पुरतो नित्यवदुपवीतित्वाभिप्रायकल्पे प्रमाणाभावात्। तस्यानियममात्रपरताया एव परिशिष्टकृता स्पष्टीकृतत्वाच्च। परिशिष्टवचने सव्यापसव्ययोर्विकल्प इति स एवाऽऽह। 'परिशिष्टीयं पूर्ववचनं पूर्वपक्षाभिप्रायम् उत्तरवचनन्तु सिद्धान्ताभिप्रायम्, अत एव तत्र सिद्धान्तद्योतनार्थो वाशब्दः' इति महायशाः। तदप्यसङ्गतम्। कस्मात्? वाशब्दस्य विकल्पार्थत्वात्। श्रुतिद्वैविध्येन विकल्पस्योपपन्नतरत्वाच्च। अपि चैवं खल्वग्नौकरणहोमेऽपि नियमतः प्राचीनावीतित्वे, अत ऊर्ध्वं प्राचीनावीतिना इति सूत्रणमाचार्यस्यासङ्गतं स्यात्, तस्मादाचार्यविरुद्धोऽयं पक्षः।

अनग्निमता खल्वत्र पित्र्यब्राह्मणपाणावग्नौकरणहोमः करणीयः। तथाचात्रैव कर्मणि कर्मप्रदीपः—

पित्र्ये यः पङ्क्तिमूर्धन्यस्तस्य पाणावनग्निमान्।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निःक्षिपेत्॥ (२।७।१९)

इति। यच्च 'अग्निमतामेवात्राधिकारः अन्वष्टकास्वष्टकावदग्नौ हुत्वा मात्रे पितामह्यै प्रपितामह्यै च पूर्ववद् ब्राह्मणान् भोजयित्वा इति विष्णुसूत्रे 'वह्नौ हुत्वा' इत्यादि'ति कात्यायनसूत्रे च अग्निवचनाद् विप्रपाण्यादेर्व्यवच्छेदात् शरमयबर्हिषा कुशमयबर्हिर्बाधवत् पितृयज्ञीयहोमस्य लौकिकाग्नौ निषेधाच्च' इति तत्त्वकारेणोक्तम्, तन्न समीचीनम्। कस्मात्? अस्मत्परिशिष्टकारेणास्मिन्नेव कर्मणि अनग्निमतो विप्रपाणौ होमोपदेशात्। आचार्येणापि 'जुहुयाद्'इति सूत्रितम्, न पुनरग्नौ जुहुयादिति। अग्नौ होमोपदेशस्तु कठादिशाखिविशेषाणामेव नास्माकम्, कथं ज्ञायते? विष्णुप्रभृतीनां तत्सूत्रकारत्वात् अन्वष्टकासु इति बहुवचनोपन्यासाच्च। मध्यमायां खल्वस्माकमन्वष्टक्यं कर्म, इत्यवोचाम। न खलु स्वशाखोपरोधेन परशाखादरणं कर्तुमुचितम्, तथात्वे वा तदुक्तमात्रादिश्राद्धमप्यस्माकं स्यात्। न चैवमिष्यते, तस्मादनादरणीयमेतत्। अस्मिन्नेवावसरे पात्रेषु हुतशेषदानादिकं करणीयम्, कुतः? तूष्णीं पात्रेषु निःक्षिपेदिति वचनात्। ब्राह्मणभोजनादिकमप्यस्मिन्नेवावसरे कर्तव्यम्। न चानुपदेशान्नास्त्येव ब्राह्मणभोजनादिकमिति वक्तव्यम्, तस्यास्मच्छाद्धकल्पादिसिद्धत्वात्, यो वा तेषां ब्राह्मणानामुच्छिष्टभाक् स्याद् इति च लिङ्गात् ब्राह्मणोपवेशनस्य पात्रेषु हुतशेषदानादेश्चार्थवत्त्वोपपत्तेश्च" इति।

निर्णयसिन्धौ कमलाकरस्तु—"शौनकः—स्वाहाकारेण होमे तु···

अग्नौ यज्ञोपवीत्येव प्रक्षिपेन्मेक्षणं ततः।

छन्दोगपरिशिष्टे अग्नौकरणहोमश्चेति। अपसव्येनेति, कातीयानां त्वपसव्यमेव। पिण्डपितृयज्ञवद्धुत्वा इति सर्वातिदेशात्। सव्यं तु छन्दोगपरम्, गोभिलेनैतदुत्तरमेवापसव्योक्तेः।

छन्दोगा जुहुयुः सव्येनापसव्येन याजुषाः" इति वृद्धयाज्ञवल्क्योक्तेश्च।

एवमुक्ता ४।२।२९ सूत्रभाष्योक्तां व्यवस्थां परिपुष्णाति। तदत्राग्नौकरणहोमे भाष्यकारमतमादरणीयमनादरणीयं वेति निर्णये भगवन्तोऽनूचानाः प्रमाणम्।

# चतुर्थप्रपाठकस्य तृतीया कण्डिका

इदानीम् अथ तृप्तेष्वन्न[1]मुच्छिष्टाभ्यासं प्रकिरेदित्येवमादि 'तृप्ताः स्थः' प्रभ्रान्तं कर्म [2]कृतवता—

## अत ऊर्ध्वं प्राचीनावीतिना वाग्यतेन कृत्यम् ॥ १ ॥

वाग्यते[3]नेति लौकिक्या वाचः प्रतिषेधः, न मन्त्राभ्यायायाः(A), कुतः ? मन्त्रोपदेश-सामर्थ्यात् । [4]ऋज्वर्थमन्यत् ।

## सव्येन पाणिना दर्भपिञ्जूलीं गृहीत्वा दक्षिणाग्रां लेखा-मुल्लिखेदपहता असुरा इति ॥ २ ॥

सव्येन वामेन पाणिना हस्तेन दर्भपिञ्जुलीं गृहीत्वा, तदेतत् सव्यस्यात्र पिञ्जुल्यादीनां [5]द्रव्याणां ग्रहणमात्रमेव द्रष्टव्यम् । उल्लेखनादिकन्तु दक्षिणे[6]नैव कर्तव्यम् ।

तथाचोक्तम्—

सव्येन पाणिनेत्येवं यदत्र समुदीरितम् ।
परिग्रहणमात्रं तु सव्यस्याऽऽदिशति व्रतम् ॥
पिञ्जुल्याद्यभिसंगृह्य दक्षिणेनेतरात् करात् ।
अन्वारभ्य च सव्येन कुर्यादुल्लेखनादिकम्(B) ॥ इति ।

तस्मात् [7]'सव्येन पाणिना'* दर्भपिञ्जुलीं गृहीत्वा सव्यादपि दक्षिणेनाऽऽदाय सव्येन

---

A. वाग्यमनोपदेशान्मनसैव मन्त्रोच्चारणमित्युक्त्वा चन्द्रकान्तो भाष्यकारमतमसमीचीन-मित्युद्गिरति । परन्त्वत्र 'अपहता' इत्यादिमन्त्राणां मनसोच्चारणस्यादृष्टचरत्वात् तदेवा-समीचीनमिति प्रतिभाति, तदत्र भगवन्तोऽनूचानाः प्रमाणम् ।

B. कर्मप्रदीपः २।७।१७-१८ ।

---

1. '-मुच्छिष्टाचारं' ख । 2. 'कृतवतः' ख । 3. 'इति' नास्ति ख । 4. 'ऋज्वन्यत्' ख । 5. 'ग्रोक्षणपश्च-' ख । 6. 'एव' नास्ति ख । 7. नास्ति क ।

अन्वारभ्य दक्षिणाग्रां दक्षिणासंस्थां प्रकृतत्वात् कर्षूणां मध्यतः (A) [1]अपहता इत्यनेन मन्त्रेण लेखामुल्लिखेत् ।

**सव्येनैव पाणिनोल्मुकं गृहीत्वा [2]दक्षिणार्धे कर्षूणां निदध्याद् (B)ये रूपाणि प्रतिमुञ्चमाना इति ॥ ३ ॥**

ऋज्वर्थम् ।

**अथ पितॄनावाहयत्येत पितरः सौम्यास(C) इति ॥ ४ ॥**

अथशब्दोऽन्यकर्तृकपक्षेऽपि यजमानपितॄणामेव नियमार्थः । पितॄनिति बहुवचनं पितामहप्रपितामहयोरपि पितृशब्दप्रसिद्ध्यर्थम् । तौ [3]हि पितुः पितामहस्य च पितृत्वात् पितरौ भवतः । ऋज्वन्यत् ।

---

A. मन्त्रस्तु—

ॐ अपहता असुरा रक्षांसि वेदिषदः । इति ।

मन्त्रब्राह्मणम् २।३।३ ।

अस्य व्याख्या—असुरा वेदिषदो वेद्यां सीदन्तोऽपहताः प्रनष्टाः, भवन्त्विति शेषः । इति ।

B. मन्त्रस्तु—

ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात् प्रणुदात्वस्मात् ॥ इति ।

साममन्त्रब्राह्मणम् २।३।४ । विनियोगप्रमाणन्तु खादिरगृह्येऽपि ३।५।१३ । वाजसनेयि-संहितायान्तु 'प्रणुदात्यस्मात्' इति पाठः । जैमिनिगृह्ये च ( पृ० २७ पं० १० ) 'प्रणुनोत्वस्मात्' इति पाठः ।

अस्य व्याख्या—असुराणां वेद्यां प्रसक्तिं दर्शयति—ये वस्तुतोऽसुरा देवविरोधिनः पश्चात् स्वधया पिण्डायन्नेन निमित्तम् । 'स्वधेत्यन्ननाम' रूपाणि प्रतिमुञ्चमाना अन्यैर्दुर्विज्ञेयानि स्वरूपाणि धारयमाणा वेदिषदः सन्तश्चरन्ति । किञ्च ये पुरः पुरोदेशे पराभरन्ति देवेभ्यो दत्तं हविः परापहरन्ति तथा पुरः पुरस्तान्नितरां हरन्ति, तान् सर्वानसुरान् अस्माल्लोकात् पिण्डदानस्य निधानकर्षूप्रदेशात् प्रणुदतु प्रकर्षेण प्रेरयतु । इति ।

C. मन्त्रस्तु—

ॐ एत पितरः सौम्यासो गम्भीरेभिः पथिभिः पूर्वीणेभिः ।
दत्तास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत ॥ इति ।

मन्त्रब्राह्मणम् २।३।५ ।

---

1. 'अपहताऽसुरा' ख । 2. 'दक्षिणार्धं-' घ । 3. 'हि च' ख ।

अथोदपात्रान् कर्षूषु निदध्यात् ॥ ५ ॥

उदपात्राणीति प्राप्ते उदपात्रानिति पुंस्त्वं छान्दसम्। अथशब्दः पूर्वप्रकृतार्थः। अथ पूर्वपूरितानि उदपात्राणि कर्षूषु निदध्यात् कर्षूणां सन्निधावानुपूर्व्येण स्थापयेत्।

सव्येनैव पाणिनोदपात्रं गृहीत्वाऽवसलवि पूर्वस्यां कर्ष्वां दर्भेषु निनयेत् पितुर्नाम गृहीत्वाऽसाववनेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति ॥ ६ ॥

अवसलवि-शब्देन पितृतीर्थमुच्यते, तेन निनयेत्। क ? पूर्वस्यां कर्ष्वां दर्भेषु, असाविति सम्बोधन[1]विभक्त्या सर्वत्र नामनिर्देशः। उक्तार्थमन्यत्।

अप उपस्पृश्यैवमेवेतरयोः ॥ ७ ॥

उक्तार्थम्(A)।

सव्येनैव पाणिना दर्वीं गृहीत्वा सन्नीतात् तृतीयमात्रमवदायावसलवि पूर्वस्यां कर्ष्वां [2]दर्भेषु निदध्यात् पितुर्नाम गृहीत्वाऽसावेष ते पिण्डो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति ॥ ८ ॥

(B) दर्वीलक्षणं मेक्षणप्रसङ्गेन पुरस्तादेवोक्तम्। तथा "दर्व्यां सन्नीतात्, समित्येकीभावे, एकीकृताच्चरु-हविषः। केन सह 'सन्नीतात्? उच्यते—सर्वपाकात् स्तोकस्तोकेन। कुत एतत् ?

---

अस्य व्याख्या—हे पितरः सोम्यासः सोमसम्पादिनः, सोमयागं कृत्वा बर्हिषत्संज्ञां दधाना इत्यर्थः। एवम्भूता एत आगच्छत। कैर्मार्गैरित्युच्यते—गम्भीरेभिः गम्भीरैर्निम्नैः अवाङ्मुखैरित्यर्थः पूर्वीणेभिः पूर्वकालसम्बन्धिनः पूर्वीणाः, पूर्वं यैरागतास्तैरित्यर्थः। तादृशैः पथिभिर्मार्गैः। आगत्य चास्मभ्यम् इहास्मिन् कर्मणि द्रविणानि भद्रं कल्याणञ्च दत्त प्रयच्छत नोऽस्मभ्यं सर्ववीरं बहुविधभृत्योपेतं रयिञ्च गवादिधनं च नियच्छत नितरां दत्त। इति।

A. अपरकर्षूद्वये इतरयोः पितामहप्रपितामहयोर्नाम गृहीत्वेति। ( द्र० सू ४।२।३४। पृ० ७४९ )।

B. दर्वीलक्षणमुक्तं प्राक् ( पृ० १८४ )।

---

1. '-विभक्तिः' ख। 2. 'पिण्डे' ख। 3. 'सन्नात्' ख। 4. 'सन्नीताद् यथोक्तेन प्रकारेण' ख।

यावदर्थमुपादाय हविषोऽर्भकमर्भकम् ।

चरुणा सह संनीय पिण्डान् दातुमुपक्रमेत्(A) ॥ इति वचनात् ।

तृतीयमात्रं तृतीयांशम् अवदाय यथोक्तेन प्रकारेण यथोक्तप्रदेशे निदध्यात् निर्वपेदिति । उक्तमन्यत् ।

**अप उपस्पृश्यैवमेवेतरयोः ॥ ९ ॥**

उक्तार्थम्(B) ।

पितृप्रभृतीनां यदि नामानि न ज्ञायन्ते तदा कथम् इत्यत आह—

**यदि नामानि न विद्यात् (C)स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात्, स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयम्, स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम् ॥ १० ॥**

ऋज्वर्थम् । पित्रादिनामाज्ञाननिमित्तं मन्त्रान्तरविधानमेतत् । एवं चास्य सम्प्रदानार्थत्वात् पूर्वस्य निवृत्तिः स्यात् । अत्रैक आहुः – अन्यतरस्यापि नाम्न्यविज्ञायमाने सर्वेषामप्यनेनैव मन्त्रान्तरेण पिण्डविधानं कर्तव्यम् । कुतः ? बहुवचनार्थत्वात्, लोकत्रयसम्बन्धाविघातात् प्रयोगैकरूप्याच्च । अन्ये तु—यस्यैव नाम न ज्ञायते तस्यैव मन्त्रान्तरेण पिण्डविधानम् इतरस्य तु पूर्वोक्तेन मन्त्रेणेति । कुतः ? निमित्ते नैमित्तिकस्य युक्तत्वात् नित्यमन्त्रानुग्रहाच्च । तदेतद् यथाभिप्रेतम् । अत्र सन्देहः—अर्घ्यतिलोदकगन्धावनेजनदानानि नाम्ना[1]ऽविज्ञाने कथं कर्तव्यमिति ? तत्रैक आहुः—तुल्यहेतुत्वादने-

---

A. कर्मप्रदीपः २।७।१९ ।

B. अत्र च मध्यमायां कर्ष्वां पितामहस्य पिण्डदानम्, दक्षिणस्यां प्रपितामहस्येति ज्ञातव्यम् । तदुक्तं कर्मप्रदीपे—

पितुरुत्तरकर्ष्वन्ते मध्यमे मध्यमस्य तु ।

दक्षिणे तत्पितुश्चैव पिण्डान् पर्वणि निर्वपेत् ॥ इति २।७।२० ।

C. मन्त्रास्तु—

ॐ स्वधा पितृभ्यः पृथिविषद्भ्यः

ॐ स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः

ॐ स्वधा पितृभ्यो दिविषद्भ्यः । इति

अथर्ववेदे १८।४।७४ ।

---

1. '-मविज्ञानेन' ख ।

नैव मन्त्रान्तरेण कर्तव्यमिति। तदयुक्तम्; कुतः? [1]अतिक्रम्य विधानात् पिण्डवाक्य-संयोग[2]विधेश्च। अन्ये त्वाहुः—मन्त्रान्तराविधानात् तूष्णीमेव कर्तव्यम् इति। [3]एतदप्य-युक्तम्; कुतः? मन्त्रवत्सम्प्रदान[4]स्थानापत्तावमन्त्रकसम्प्रदानक्रियावैयर्थ्यात्[4]*। कथं तर्हि कर्तव्यम्? उच्यते—मन्त्रान्तरविहितैरेव नामभिः पूर्वप्रकृतयैव सम्बोधनविभक्त्या कर्तव्यमिति, [5]कुतः? उभयानुग्रहाविरोधाभ्याम्। अत एव गोभिलाचार्येण तिलोदक-दानानन्तरमेव नामधेयाविज्ञाननैमित्तिकं मन्त्रान्तरं नाभिहितम्। तस्माद् यथोक्त एवार्थः। प्रयोगः प्रदर्श्यते—पृथिवीषदेतत् तेऽर्घ्यम्, अन्तरिक्षसदेतत्, दिविषदेतदिति; पृथिवीषदेतत् ते तिलोदकम्, पृथिवीषदेष ते गन्धः, पृथिवीषदवनेनिक्ष्वेत्यादि। ये चात्र त्वेति सर्वत्र स्यात्(A)।

प्रकृतमधुनोच्यते—

**निधाय जपत्यत्र (B)पितरो मादयध्वं यथाभागमावृषायध्व-मिति ॥ ११ ॥**

निधायेति पितृनाम्ना ज्ञानाज्ञानपक्षयोरुभयोरपि जपस्य प्राप्त्यर्थम्, प्रतिनिधानं वा जप[6]प्रतिषेधार्थम्।

---

A. विशेषमाहात्र तर्कालङ्कारः—

"तथा च स्मरणम्—

पृथिवीषत् पिता वाच्यस्तत्पिता चान्तरिक्षसत्।
अभिधानापरिज्ञाने दिविषत् प्रपितामहः॥ इति।

तदिदं स्मरणमाचार्यसंवादितमर्थं वदतीत्यादरणीयम्। रघुनन्दनस्तु छन्दोगोऽप्येतदजानानः 'नामान्यविद्वांस्ततपितामहप्रपितामहेति' इति पिण्डपितृयज्ञीयमाश्वलायनकल्पसूत्रमाकुलीकृत्य 'नामान्यविद्वांस्तत्पितृपितामहप्रपितामहाः' इति परिकल्प्य लिखित्वा बहु विरुद्धं वर्णयाञ्चकारे"ति।

B. मन्त्रस्तु—

ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्। इति।

साममन्त्रब्राह्मणम् २।३।६। विनियोगप्रमाणन्तु खादिरगृह्ये ३।५।१७।

अस्य व्याख्या—हे पितरः, अत्रास्मिन् पिण्डकर्मणि मादयध्वं तृप्ता भवत; तदर्थं यथाभागं

---

1. 'अभिक्रम्य' ख। 2. '-विधित्व' ख। 3. 'तदप्ययुक्तम्' ख। 4. '-स्थानात् तावमन्त्रक-सम्प्रदानवैयर्थ्यात्' ख। 5. 'कुतः' नास्ति ख। 6. '-निषेधार्थम्' ख।

अथवा— तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्(A) ।

इत्येतस्य पुनरवनेजनस्यात्र व्यावृत्त्यर्थम् । ऋज्वन्यत् ।

**अपपर्यावृत्य पुरोच्छ्वासादभिपर्यावर्त्तमानो जपेदमीमदन्त पितरो यथाभागमावृषायिषतेति ॥ १२ ॥**

अपशब्दप्रयोगादप्रादक्षिण्येन पर्यावृत्य परिभ्रम्य उदङ्मुखो भूत्वा दक्षिणाभिमुखो वा ।

तथाचोक्तम्— वाममावर्त्तनं केचिदुदगन्तं प्रचक्षते ।
सर्वं गौतमशाण्डिल्यौ शाण्डिल्यायन एव च(B) ॥ इति ।

यथाशक्ति प्राणमायम्य उच्छ्वासात् प्राणविमोकात् पुरा पूर्वम् (C)अमीमदन्त इति जपेत् । किं कुर्वन् ? [1]अभिपर्यावर्त्तमानः[1]* प्रदक्षिणं पर्यावर्त्तमानः ।

तथाचोक्तम्— आवृत्य प्राणमायम्य पितॄन् ध्यायन् यथार्थतः ।
जपंस्तेने[2]वमावृत्य ततः प्राणं प्रमोचयेत्(D) ॥ इति ।

---

स्वं स्वं पिण्डभागम् अनतिक्रम्य आवृषायध्वम्, आ सर्वतो वृष इवाऽऽचरत, वृषो यथाऽन्यविषयनिवर्त्तनेन स्वविषये रमते तथा कुरुत । इति ।

A. कर्मप्रदीपः १।३।४ । अस्य पूर्वार्धन्तु—
अवनेजनवत् पिण्डान् दत्त्वा बिल्वप्रमाणकान् । इति ।

B. कर्मप्रदीपः २।७।२१ ।

C. मन्त्रस्तु—
ॐ अमीमदन्त पितरो यथाभागमावृषायिषत । इति ।

मन्त्रब्राह्मणम् २।३।७ । विनियोगप्रमाणन्तु खादिरगृह्ये ३।५।१९ जैमिनिगृह्येऽपि । उ० ख० २ ।

अस्य व्याख्या—यथाशक्ति निरुच्छ्वास आसीन उच्छ्वास्येदम् अस्त्विति अभिलषितं ध्यायन् जपेदित्यर्थः । पितरः पिण्डैरमीमदन्त मत्तास्तृप्ता अभवन्, यथाभागं स्वं स्वं पिण्डभागमादाय, आवृषायिषत सर्वतो वृषा इवाऽऽचरणमकुर्वन्, वृषा यथा तृप्ताः सञ्चरन्ति तथाऽकुर्वन्नित्यर्थः । इति ।

D. कर्मप्रदीपः २।७।२२ ।

---

1. नास्ति ख । 2. '-न चाऽऽत्म' ख ।

**सव्येनैव पाणिना दर्भपिञ्जुलीं गृहीत्वाऽवसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वाऽसावेतत् ते आञ्जनं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति ॥ १३ ॥**

[1]ऋज्वर्थम् ।

**अप उपस्पृश्यैवमेवेतरयोः ॥ १४ ॥**

ऋज्वर्थम् ।

**तथा तैलम् ॥ १५ ॥**

विष्णुशर्मन्नेतत् ते तैलम् इति प्रयोगः ।

**तथा सुरभि ॥ १६ ॥**

विष्णुशर्मन्नेतत् ते सुरभीति । अञ्जनतैलसुरभीणां पूर्वप्रकृतानामयं विनियोगः । कुतः ? द्रव्य[2]प्रक्लृप्तेः [3]कार्यार्थत्वात् ।

**अथ निह्नुते ॥ १७ ॥**

अथशब्द आनन्तर्ये, इतरथाऽनुषङ्गे विधाना[4]दञ्जन-तैल-सुरभीणां प्रत्येकं निह्नव[5]प्राप्त्याशङ्का मा भूदित्यत आनन्तर्यार्थोऽथ-शब्दः प्रयुक्तः । अञ्जनतैलसुरभीणि निधाय अथानन्तरं निह्नुते नमस्करोति । निह्नवो नमस्कार [6]उच्यते ।

कथं [7]निह्नुत इत्यत आह—

**[8]पूर्वस्यां कर्ष्वां[8]* दक्षिणोत्तानौ पाणी कृत्वा नमो वः पितरो जीवाय नमो वः पितरः शूषायेति ॥ १८ ॥**

दक्षिणः पाणिरुत्तानः सव्यश्च न्युब्जो ययोः पाण्योः ताविमौ दक्षिणोत्तानौ तौ तथा, पूर्वस्यां कर्ष्वां कृत्वा (A)नमो वः पितरो जीवाय, नमो वः पितरः शूषायेति । किम् ? जपतीति वक्ष्यमाणेन क्रियापदेन सह सम्बन्धः । अनेने[9]वोत्तरसूत्रद्वयं व्याख्यातम् ।

---

A. मन्त्रस्तु—

ॐ नमो वः पितरो जीवाय नमो वः पितरः शूषाय । इति ।

मन्त्रब्राह्मणम् २।३।८ ।

अस्य व्याख्या—प्रथमकर्ष्वाः पश्चात् समीपे दक्षिणं पाणिं प्रागङ्गुलिम् उत्तानं भूमौ निधाय

---

1. 'ऋज्वर्थम्' नास्ति ख । 2. '-क्लृप्तः' ख । 3. 'कार्यार्थत्वाच्च' ख । 4. '-दञ्जने' ख । 5. '-प्राप्तिवशा' ख । 6. 'इति' ख । 7. 'निह्नुते' नास्ति ख । 8. नास्ति ख । 9. '-व चोत्तर' ख ।

मध्यमायां सव्योत्तानौ (A)नमो वः पितरो घोराय नमो वः पितरो रसायेति(B) ॥ १९ ॥

उत्तमायां दक्षिणोत्तानौ (C)नमो वः पितरः स्वधायै नमो वः पितरो मन्यव इति ॥ २० ॥

अथाञ्जलिकृतो जपति नमो वः पितरः पितरो नमो वः [1]इति ॥ २१ ॥

अथ-शब्दः पूर्वप्रकृतार्थः। पूर्वप्रकृतं कर्षूत्रयमभिसन्धाय अञ्जलिकृतः कृताञ्जलिः, (D)नमो वः पितरः पितरो नमो व इति जपति। अञ्जलिश्चात्र संहतः कर्त्तव्यो न तु व्याकोशः, कुतः? निह्नवे संहतस्यौपयिकत्वात्। व्याकोशस्य च चन्द्रदर्शनाद्युपस्थानेषु युक्तत्वात्।

तदुपरि तथैव सव्यं न्यञ्चं कृत्वा जपेदिति सूत्रार्थः। हे पितरः, वो युष्माकं सम्बन्धिने जीवाय जीवनगुणाय नमो नमस्कारोऽस्तु। हे पितरः, वः शूषाय युष्माकं बलाय नमः।

A. मन्त्रस्तु—

ॐ नमो वः पितरो घोराय नमो वः पितरो रसाय। इति।

मन्त्रब्राह्मणम् २।३।९।

अस्य व्याख्या—सव्योपरि दक्षिणं न्यञ्चं कृत्वेति सूत्रार्थः। घोरं भयजननसामर्थ्यम्। रसः सारभागः। शिष्टमुक्तार्थम्।

B. मध्यमायां कर्ष्वां सव्योत्तानौ पाणी कृत्वा जपतीमं मन्त्रमित्यर्थः।

C. मन्त्रस्तु—

ॐ नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे। इति।

मन्त्रब्राह्मणम् २।३।१०।

अस्य व्याख्या—स्वधा नमः। मन्युः क्रोधः। शेषं पूर्ववत्। हे पितरः, युष्माकं गुणा यतः प्रत्येकं द्वन्द्वम् अतस्तेभ्यो नमस्करोमीति सर्वस्यार्थः।

D. मन्त्रस्तु—

ॐ नमो वः पितरः पितरो नमो वः। इति।

मन्त्रब्राह्मणम् २।३।११।

विनियोगप्रमाणन्तु खादिरगृह्येऽपि ३।५।२४-२६।

"नमो व इति पितॄन् नमस्काराञ्जलिं कृत्वा उपतिष्ठते।" इति सायणाचार्यः।

---

1. 'इति' नास्ति ख।

गृहानवेक्षते (A) गृहान् नः पितरो दत्तेति ॥ २२ ॥

[1]ऋज्वर्थम्। गृहाः पत्नीति वचनात् पत्नीमवेक्षते इति चेत्, [2]न; कुतः? गृहप्रार्थनेनैव पत्न्याः प्रार्थितत्वात्, गृहशब्दस्य पत्न्याम् [3]अरूढत्वा[4]च्च।

पिण्डानवेक्षते (B)सदो वः पितरो देष्मेति ॥ २३ ॥

ऋज्वर्थम्।

सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वाऽवसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वाऽसावेतत् ते वासो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति ॥ २४ ॥

सूत्रतन्तुः [5]प्रकरणसामर्थ्यात् क्षौमदशा। उक्तमन्यत्।

अप उपस्पृश्यैवमेवेतरयोः ॥ २५ ॥

उक्तार्थम्।

सव्येनैव पाणिनोदपात्रं गृहीत्वाऽवसलवि पिण्डान् परिषिञ्चेत् (C)ऊर्जं वहन्तीरिति ॥ २६ ॥

---

A. ॐ गृहान् नः पितरो दत्त। इति मन्त्रस्तु मन्त्रब्राह्मणीयः २।३।१२।

B. ॐ सदो वः पितरो देष्म। इति मन्त्रस्तु मन्त्रब्राह्मणीयः २।३।१३।

अनयोर्व्याख्या—हे पितरः, गृहान् नोऽस्मभ्यं दत्त प्रयच्छत। तथा सति अस्मदीयेषु गृहेषु वो युष्मभ्यं सदः स्थानं देष्म दद्याम। इति सायणाचार्यकृता। गुणविष्णुस्तु—अत्र च 'गृहिणी गृहमुच्यते' इति गृहिणीप्रार्थनं वाक्यार्थः, सदः स्थानं पुत्राद्युत्पादनद्वारेण इति च व्याचख्यौ। चन्द्रकान्तस्तु—बहुवचनान्तपुंलिङ्गगृहपदोपादानात् पत्नीव्याख्यैव ज्यायसीत्याह, तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

C. मन्त्रस्तु—

ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालम्।
परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन्॥ इति।

मन्त्रब्राह्मणम् २।३।१९। विनियोगप्रमाणन्तु खादिरगृह्येऽपि ३।५।२९।

अस्य सायणाचार्यकृता व्याख्या—हे कर्ष्वः, यूयम् ऊर्जम् अन्नम्, अमृतम् अमरणम्, घृतम्

---

1. 'ऋज्वर्थम्' नास्ति ख। 2. 'न' नास्ति ख। 3. 'अ-' नास्ति ख। 4. 'च' नास्ति ख। 5. 'प्रकल्पन-' ख।

पूर्वव[1]दविधानात् सकृन्मन्त्रान्तेन त्रीनपि[2] पिण्डान् परिषिञ्चेत्(A)। एतच्च परि[3]षेचनमाचम्य ब्राह्म[4]णेषु चाऽऽचान्तेषु(B)।

अथाग्रभूमिमासिञ्चेत् सुसंप्रोक्षितमस्त्विति(C)।

एवमादि स्वधावाचनान्तं कृत्वा कृतोत्तानपितृपात्रस्तत्पवित्राणि च पिण्डाना-[5]मुपरि निधाय कुर्यात्।

---

आज्यम्, पयः क्षीरम्, कीलालम् उदकम्, परिस्रुतं सुराञ्च वहन्तीः वहन्त्यो भवथ। किञ्च यूयं स्वधा स्थ स्वधारूपा भवथ अतोऽन्नेन पितॄन् तर्पयत। गुणविष्णुस्तु—हे आपः इति सम्बोधनपरं जगौ।

A. अत्र पूर्ववत् 'एवमेवेतरयोः' इत्यविधानात् अकथनात्, 'पिण्डान्' इति बहुवचनाच्च सकृदेव मन्त्रमुच्चार्य त्रीन् पिण्डान् परिषिञ्चेद् इति बोद्धव्यम्।

B. अत्र कर्मप्रदीपोक्तः कर्मक्रमस्तु—

गन्धादीन् निक्षिपेत् तूष्णीं तत आचामयेद् द्विजान्।
अन्यत्राप्येष एव स्याद् यवादिरहितो विधिः॥
दक्षिणाप्लवने देशे दक्षिणाभिमुखस्य च।
दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः॥ इति १।४।३-४।

अनयोर्नारायणकृता व्याख्या—

"पिण्डेष्वमन्त्रकं गन्धपुष्पादीनर्पयित्वा ब्राह्मणाचमनं कारयेत्। एष एव पिण्डदानविधिरन्यत्रापि पार्वणादौ यव-देवतीर्थोपवीतदक्षिणोपचारे शून्यः स्यात्। न केवलं यवादिरहितः, दक्षिणाप्लवे, न वृद्धाविव प्राचीनप्लवे दक्षिणामुखस्य दातुर्न प्राङ्मुखस्य। दक्षिणाग्रेषु दर्भेषु न प्रागग्रेषु। एष पिण्डदानविधिः पार्वणादौ मुनिभिः स्मृत इति।" इति।

C. कर्मप्रदीपः। अस्योत्तरार्द्धादिग्रन्थोल्लेखेन कर्मक्रम उच्यते—

शिवा आपः सन्त्विति च युग्मानेवोदकेन तु॥
सौमनस्यमस्त्विति च पुष्पदानमनन्तरम्।
अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतान् प्रतिपादयेत्॥
अक्षय्योदकदानन्तु अर्घ्यदानवदिष्यते।
षष्ठ्यैव नित्यं तत् कुर्यान्न चतुर्थ्या कदाचन॥ इति क० प्र० १।४।५-७।

एतेषां प्रकाशव्याख्या—

आचमनानन्तरं ब्राह्मणाग्रभूमिं सुसंप्रोक्षितमस्त्विति प्रोक्षयेत्। शिवा आप इत्यादिना

---

1. '-दवधानात्' ख। 2. 'अपि' नास्ति ख। 3. '-षिञ्चन-' घ। 4. '-षे चाचान्ते' ख। 5. '-मभिनिधाय' ख।

तथाचोक्तम्— प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः ।
पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् (A) ॥ इति ।

---

युग्मानेव नैकम् उदकेन हस्ते आसिञ्चेत् ।५। सौमनस्येति हस्ते पुष्पदानं कुर्यात्, अनन्तरमक्षतमित्यादिना यवान् दद्यात् ।६। अर्घ्यजलदानवत् ज्येष्ठोत्तरकरयुग्मब्राह्मणकरे प्रत्येकं कुर्यादित्यर्थः । किन्तु तन्नामगोत्रान्तोच्चारितषष्ठ्यैव कुर्यात्, न कदाचिदपि चतुर्थ्येति ; षष्ठ्यैव नित्यमिति गोत्रनामान्ते संबुद्धिस्थाने षष्ठी विधत्ते । न चतुर्थ्या कदाचनेति तस्मै ते स्वधेति चतुर्थीनिषेधकमित्यपुनरुक्तिः । अत्र गोभिलीयः 'गोत्रं स्वरान्तमि'त्यादि—तथा 'शर्मन्नर्घ्यादिके कार्यमि'त्यादि ।७। इति ।

A. कर्मप्रदीपः १।४।९ । अस्य व्याख्या—

अनन्तरञ्च सुसंप्रोक्षितमस्त्वित्यासास्तु पत्रासु प्रार्थनासु ब्राह्मणैरस्तु सन्त्वित्याद्युत्तरे प्रोक्ते स्वधावाचनस्थानेऽर्घ्यपात्रीयपवित्राच्छादितान् पिण्डान् 'नान्दीमुखेभ्यः पितृभ्यः प्रीयन्ताम्' इत्युक्त्वा सिञ्चेत् । अनन्तरं न्युब्जीकृतं पात्रमुत्तानं कृत्वा युग्मानेवेत्यादि वक्ष्यमाणं कुर्यात् । गोभिलभाष्यकृता तु सुसंप्रोक्षितमस्त्वित्यादि स्वधावाचनान्तं कृत्वा कृतोत्तानपात्रस्तत्पवित्राणि पिण्डानामुपरि दत्त्वा पिण्डानूर्जं वहन्तीरिति सिञ्चेदिति व्याख्यातम् । इति ।

एतस्मिन्नेव क्रमे—

युग्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा ।
कृत्वा धुर्यस्य विप्रस्य प्रणम्यानुव्रजेत् ततः ॥ ( क० प्र० १।४।१० )

इति कर्मप्रदीपाद्युक्तम्, "विश्वे देवाः प्रीयन्तामिति दैवे वाचयित्वा पिण्डपात्राणि चालयित्वा यथाशक्ति दक्षिणां दद्यात्" इति श्राद्धकल्पाद्युक्तञ्च कर्म कुर्यात् ।

अस्य व्याख्या—युग्मानेव नैकं दक्षिणादानेन स्वस्तिवाच्य धुर्यस्य पङ्क्तिमूर्धन्यस्य ब्राह्मणस्याङ्गुष्ठपाणिग्रहणं कृत्वा प्रणम्य ततोऽनुगच्छेत्, अत्र च दक्षिणा द्राक्षामलकादि ।

तथाच ब्रह्मपुराणम्—

द्राक्षामलकमूलानि यवांश्चाथ निवेदयेत् ।
तान्येव दक्षिणार्थन्तु दद्यात् विप्रेषु सर्वदा ॥ इति ।

मूलमार्द्रकादि निवेदयेत् श्राद्धेष्विति । वृद्धौ च गोभिलीयैर्मातृश्राद्धं न कर्तव्यम्, 'न योषिद्भ्यः पृथग् दद्यादि'ति वक्ष्यमाणवचनात् गोभिलेनानुक्तत्वाच्च । अन्यैस्तु कर्तव्यमेव ।

तथाच शातातपः—

मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् ।
ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम् ॥
त्रिष्वप्येतेषु युग्मांस्तु भोजयेद् ब्राह्मणान् शुचिः ।
प्रदक्षिणं तु सव्येन प्रकुर्यात्तैलपूर्वकम् ॥ इति ।

मध्यमं पिण्डं पत्नी पुत्रकामा प्राश्नीयात् (A)आधत्त पितरो गर्भमिति ॥ २७ ॥

मृज्वर्थम्। स्वभोजनकाले प्राश्नीयान्नैतस्मिन्नेव कर्मे(B)।

यो वा तेषां ब्राह्मणानामुच्छिष्टभाक् स्यात् ॥ २८ ॥

अथवा यस्तेषां प्रकृतत्वात् नियुक्तानां ब्राह्मणानामुच्छिष्टभाक् स्याद् भवेत्, उच्छिष्ट-शब्देनात्र भुक्त[1]शेषपाकोऽभिप्रेतः, न तु भुज्यधिकरणस्थमन्नम्; तद् यो भजते भज सेवायां सेवते [2]भक्षयति, स उच्छिष्टभाक्। कश्च तद् भजते? उच्यते—यजमान-[3]स्येष्टः पुत्रपौत्रभ्रात्रादिः, कुतः? शेषमन्नमिति निवेदिते इष्टैः सह भुज्यतामिति प्रत्यभ्यनुज्ञानात्, तस्योच्छिष्टभाजः पत्नी, '[4]पुत्रकामा प्राश्नीयादिति वर्तते(C)।

---

अनेन च मातृश्राद्धस्यापि सदैवत्वाभिधानाद् वृद्धौ मातृश्राद्धमदैवमिति यत् कैश्चिदुक्तं तन्निरस्तम्।
यत्तु मार्कण्डेयपुराणम्—

वैश्वदेवविहीनन्तु केचिदिच्छन्ति मानवाः ॥ इति,

तच्छाखिविशेषव्यवस्थितम्। अत एव कात्यायनः—

मातृश्राद्धं तु युग्मैः स्यात् सदैवं प्राङ्मुखैः पृथक्। इति १।४।९।९।

A. मन्त्रस्तु—

ॐ आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्।
यथेह पुरुषः स्यात् ॥ इति। मन्त्रब्राह्मणम् २।३।१६।

विनियोगप्रमाणन्तु खादिरगृह्येऽपि ३।५।३०।

अस्य सायनकृता व्याख्या—"हे पितरः, यूयम् अस्यां गर्भम् आधत्त स्थापयत। स एव विशेषेणाप्युच्यते—पुष्करस्रजं पद्माकरसम्योग्यम्, कुमारं गर्भमाधत्त। 'पुष्करं पद्मपुष्करमि'ति निरुक्तम्। यथेह अस्यां पुरुषः सामर्थ्योपेतः पुत्रः स्याद् भवेत्, तथा गर्भमाधत्तेति समन्वयः। कुमारग्रहणेनैव पुरुषत्वे सिद्धे पुनर्ग्रहणं विशिष्टपुरुषप्रतिपत्त्यर्थम्"। इति। गुणविष्णुस्तु—"पुष्करस्य पद्मस्य माला ययोः तौ पुष्करस्रजौ अश्विनीकुमारौ ताविव पुष्करस्रजं नीरुजं दीर्घायुषं सम्पद्योत्पन्नं; यथा इह क्रतौ पुरुषः स्यात् न दुहिता इति" इति व्याचख्यौ।

B. मन्त्रं च पतिः पठति, कस्मात्? वैदिकमन्त्रेषु स्त्रीशूद्राणामनधिकारात्। इति केचित्। 'यथेह पुरुषः स्यात्'—इति मन्त्रलिङ्गादित्यपरे।

C. अत्र तर्कालङ्कारः—"तथा स्मृत्यन्तरम्—

---

1. '-शिष्टः पाको-' ख। 2. 'भजति' ख। 3. '...स्येष्ट-' च। 4. 'पुत्रकामा' नास्ति ख।

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्। इति। तथा देवलः—

निवृत्ते पितृमेधे तु दीर्घं प्रच्छाद्य पाणिना।
आचम्य पाणी प्रक्षाल्य ज्ञातीन् शेषेण भोजयेत्॥

ततो ज्ञातिषु भुक्तेषु स्वान् भृत्यानपि भोजयेत्।
पश्चात् स्वयञ्च पत्नी च श्राद्धशेषमुदाहरेत्॥ इति।

तैत्तिरीयशाखायामापस्तम्बसूत्रम्—'सर्वतः समवदाय, ग्रासावरार्धमश्नीयाद् यथोक्तम्' इति। अत्र भूरिद्रव्य-कृच्छ्रव्याधि-सर्वशब्दान्नियमोऽयमदृष्टार्थः—इत्याचक्षते, श्लोकमप्युदाहरन्ति—

श्राद्धं कृत्वा तु यः शेषं नाश्नाति मन्दधीः।
लोभान्मोहाद् भयाद् वाऽपि तस्य तन्निष्फलं भवेत्॥

इति। "पित्र्यमात्रेयं तत्रैव प्राशितं नैवाप्राशितञ्च भवति"। इति।

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम्॥

इति च श्रुतिस्मृती नियममवगमयतः। आचार्योऽपि प्राश्नीयादिति प्रयत्नेनैतदेव दर्शयति। शेषमुच्छिष्टस्य प्रतिपत्तिः। अतो यत्रोच्छिष्टं न शिष्यते तत्र नैव नियमः, प्रतिपत्तेः प्रतिपाद्य-प्रयोजकत्वात्।

यत् पुनर्यमवचनम्—

भक्ष्यं भोज्यं तथा पेयं यत्किञ्चित् पच्यते गृहे।
न भोक्तव्यं पितॄणां तदनिवेद्य कथञ्चन॥

इति। यच्च शङ्खवचनम्—

यत् किञ्चित् पच्यते गेहे भक्ष्यं भोज्यमथापि वा।
अनिवेद्य न भुञ्जीत पिण्डमूले कथञ्चन॥ इति,

तत् श्राद्धार्थपाकवदन्यदपि यत् किञ्चिद् भक्षणार्थं गृहे पच्यते तदपि पितॄणां निवेद्यैव भोक्तव्यम्—इत्युपदिशति, न पुनः श्राद्धशेषातिरिक्तस्य भोजनं निषेधति। कथं ज्ञायते? अनयोरेव श्राद्धशेषव्यतिरिक्तस्यापि पितॄणां निवेद्य भोजनोपदेशात्। 'यत्किञ्चिदि'ति 'गृहे' इति च करणादेवमवगच्छामः। अत एव पिण्डमूले पिण्डान्तिके निवेदनमुपदिश्यते, न तु तेनैव पिण्डदानं ब्राह्मणभोजनं वा। आह—कुतः पुनरियमवधारणा पिण्डमूले निवेदनं न ब्राह्मण-भोजनार्थमिति, ननु येषां पिण्डदानात् परतो ब्राह्मणभोजनं तेषां ब्राह्मणभोजनार्थमपि पिण्डमूले निवेदनं सम्भवति। उच्यते—सत्यं सम्भवति न तु तेषामयमुपदेशः, केषां तर्हि? येषां ब्राह्मण-भोजनात् परतः पिण्डदानं तेषामिति ब्रूमः। कस्मात् कारणात्?

उच्छिष्टसन्निधौ कार्यं पिण्डनिर्वपणं बुधैः।

# (A)अभून्नो दूतो हविषो जातवेदा इत्युल्मुकमद्भिरभ्युक्ष्य ॥२६॥

इति तेनैव ब्राह्मणभोजनात् परतः पिण्डप्राशनोपदेशात्। शङ्खवचनस्य तु पूर्वार्धं शङ्खसंहितायामेवं पठ्यामः—

पक्किञ्चिदात्मनो गेहे भक्ष्यं वाऽभक्ष्यमेव वा।

इति। तदा व्यक्त एवायमर्थो यः खल्वस्माभिर्वर्णितः। कुतः? अभक्ष्यमपि भुञ्जतः पिण्डमूले निवेदनोपदेशात्। शङ्खवचनं न श्राद्धेतरभोजनव्यावर्तकं किन्तु यत्किञ्चित् इति श्राद्धार्थत्वेन विशेषणीयम्। अन्यथा श्राद्धप्रतिषिद्धद्रव्याणां भक्ष्यत्वं न स्यात्। तेन श्राद्धार्थं पक्वं यत् तददत्त्वा न भोक्तव्यमिति तस्यार्थः। इति वचनतात्पर्यमपर्यालोचयतो रघुनन्दनस्य कल्पनान्तु नाभिनन्दामहे। प्रमाणाभावात्। युक्तेश्चाकिञ्चित्करत्वात्। भिन्नौ खल्वेतौ पदार्थौ यत् पिण्डमूले निवेदनं यच्च श्राद्धावशिष्टमिति। अलमसद्वावेगेन। प्रकृतमनुसरामः। कश्चित् पुनरन्यथेमं ग्रन्थं वर्णयाञ्चकार 'यो वा तेषां ब्राह्मणानाम्' इत्यादिकम्। यस्तेषां ब्राह्मणानामुच्छिष्टं भजते तस्योच्छिष्टभाजो यजमानस्येतस्य पुत्रपौत्रादेः पत्नी मध्यमं पिण्डं प्राश्नीयादिति। तन्मते ज्ञातिप्रभृतीनामपि तदुच्छिष्टभाक्त्वात् तेषामपि पत्न्यः प्राश्नन्तु न चैवमिष्यते, तस्मान्न किञ्चिदेतत्।" इत्याद्युक्त्वा भाष्यकारमाक्षिपति, सोऽयमाक्षेपोऽकिञ्चित्कर एव प्रतिभाति। यतः पिण्डप्राशनात् पुत्रपौत्रादिपत्नीनामेव गर्भो भवति नान्यासां ज्ञातिपत्नीनामित्येवं निर्णयस्याभावात्। पिण्डप्राशनन्तु गर्भसम्भावनया क्रियते नेदमव्यभिचरितो हेतुर्गर्भस्य। अथ सम्भवत्येव गर्भ इति चेत् केषाञ्चिद् दुराग्रहः स्यात् तदा ज्ञातिपत्नीनामपि सम्भवन् गर्भः कथं तर्काङ्कुरेण नेष्यताम्? इति जानाति स एव। तदेतत् कथं भाष्यव्याख्यानमुपेक्षणीयमिति सुधियो विचारयन्तु।

A. मन्त्रस्तु—

ॐ अभून्नो दूतो हविषो जातवेदा
अवाड्ढव्यानि सुरभीणि कृत्वा।
प्रादात् पितृभ्यः स्वधया ते अक्षन्
प्रजानन्नग्ने पुनरेहि योनिम् ॥ इति।

मन्त्रब्राह्मणम् २।३।१७।

अस्य व्याख्या—अयं जातवेदा अग्निर्देवो नोऽस्माकं हविषः प्रापणे दूतोऽभूद् दूतस्थानीयोऽभवत्। तथाभूतः सन् अस्मद्दत्तानि हव्यानि सुरभीणि सुगन्धयुक्तानि कृत्वा अवाड् देवेभ्यः पितृभ्यश्च अवहद् अनयत्। नीत्वा च पितृभ्यः प्रादात् दत्तवान्। दत्तेन स्वधया अन्नेन पितरः अक्षन् भोजनमकुर्वन्। अथ प्रत्यक्षवादः—हे अग्ने, अमुम् अर्थं प्रजानन् प्रकर्षेण जानन्, अथवा यस्माद् एवम्भूतः स्वस्थानं प्रति पुनर्गन्तव्यमिति अवगच्छन् योनिं स्वकीयं स्थानं पुनरेहि गच्छ। इति।

[1]यत् तत्[1]* दक्षिणार्धे [2]कर्षूणां निहितम् ।

## द्वन्द्वं पात्राणि प्रक्षाल्य प्रत्यतिहारयेत् ॥ ३० ॥

चरुस्थाल्यादीनि पात्राणि प्रक्षाल्य निर्णिज्य कस्यचित् सकाशात् प्रत्यतिहारयेत् । प्रतिशब्दप्रयोगाद् येन यथाहृतानि तेनैव पुनरतिहारयेत् । अन्यस्याभावे स्वयमप्यतिहरेत् । कथं प्रत्यतिहारयेत् ? द्वन्द्वं द्वन्द्वश इत्यर्थः । अथवा द्वन्द्वशब्दः प्रक्षालनेन सह संबध्यते, द्वन्द्वशः प्रक्षाल्येति ।

एतस्मिन् क्रमे ब्राह्मणान् विसृज्य ततः—

## अप्सु पिण्डान् सादयेत् ॥ ३१ ॥

उदके निक्षिपेत् । पिण्डद्वयातिरिक्तत्वात् पिण्डानिति बहुवचनं षट्पिण्डश्राद्ध[3]-विषयम्(A) । उक्तञ्च—

कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिक[4]ञ्च शेषेषु[4]* पिण्डाः स्युः षडिति [5]स्थितिः ॥(B) इति[5]* ।

## प्रणीते वाऽग्नौ ॥ ३२ ॥

प्रणीते लक्षणनिहिते, पिण्डान् सादयेदिति वर्त्तते ।

## ब्राह्मणं वा भोजयेद् (C)गवे वा दद्यात् ॥ ३३ ॥

अधिकारात् पिण्डानेव(D) ।

---

A. अत्र तर्कालङ्कारः—"पिण्डान् इति बहुवचनं व्यक्त्यपेक्षम्, द्वयोरेवावशिष्टत्वात् । पत्न्याः प्राशनस्यानियतत्वात् तदभावपक्षाभिप्रायं वा वर्णनीयम् । अपरे पुनरेतदविद्वांसो आचक्षते पिण्डान् इति बहुवचनं षट्पिण्डश्राद्धविषयम्" इत्युक्त्वा भाष्यकारमाक्षिपति । परमत्र भाष्यकारो बहुवचनबलेन एकपिण्डादिषट्पिण्डपर्यन्तस्यश्राद्धमात्रमेव बहुवचनप्रयोग आचार्यस्येति भङ्ग्या स्वीकरोति, इति प्रणिहितैर्द्रष्टव्यम् ।

B. कर्मप्रदीपः ३।५।१४ ।

C. गवे वा दद्यादिति पृथक् सूत्रमिति कल्पयतः सामश्रमितर्कालङ्कारौ ।

D. इदमिदानीं विचार्यते किमत्राम्बष्टक्ये श्राद्धे मात्रादीनां मातामहादीनाञ्च श्राद्धमस्ति उत यावदुक्तत्वान्नेति ? नेति ब्रूमः । कस्मात् ? यावदुक्तत्वादेव । अस्माकं खलु षोडिश्राद्धमवसानदिनव्यतिरेकेण पृथक् नास्ति । तथाच कर्मप्रदीपः—

---

1. 'यत' ख । 2. 'कर्षूणां' नास्ति ख । 3. '-विषयमुक्तम्' ख । 4. '-कं मासशेषेषु' ख । 5. नास्ति ख ।

## वृद्धिपूर्तेषु युग्मानाशयेत् ॥ ३४ ॥

वृद्धिः पुरुषसंस्कारार्थं[1]जातकर्मादिका। पूर्तानि वापीकूपतडागारामदेवतागारादीनि(A), वृद्धिश्च पूर्तानि च वृद्धिपूर्तानि तेषु वृद्धिपूर्तेषु पित्रर्थमपि युग्मान् ब्राह्मणानाशयेत्।

## प्रदक्षिणमुपचारः ॥ ३५ ॥

प्रदक्षिणं प्रादक्षिण्येन दर्भासनादिक उपचारः, कर्तव्य इति शेषः।

## यवैस्तिलार्थः ॥ ३६ ॥

आवाहनादिकस्तिलार्थस्तिलनिष्पाद्यपदार्थः, यवैः कर्तव्य इति वर्तते। अन्योऽपि— "प्रातरामन्त्रितान् विप्रान्" इत्येवमादिको विशेषः(B) कर्मप्रदीपाद् वासिष्ठाच्च श्राद्धकल्पादुपलब्धव्यः। श्राद्धमन्त्राश्चाऽऽवाहनादयः परिसंख्यानादुपलब्धव्याः।

तथाचोक्तम्—

इदं शास्त्रं च गृह्यञ्च परिसंख्यानमेव च।
वसिष्ठोक्तञ्च यो वेद स श्राद्धं वेद नेतरः(C) ॥ इति।

---

न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ॥ इति २।६।२२।

वचनबलात् तु क्वचित् क्रियते, तदप्याह स एव—

मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः।
द्वितीयन्तु पितुस्तस्यास्तृतीयञ्च पितुः पितुः ॥ २।६।२३। इति

मातुः सपिण्डीकरणं पितामह्या सहोदितम्। इति च।

तस्मात् मात्रादिश्राद्धमत्र न कर्तव्यमेव, न च मातामहादीनामपि। कर्षूसमन्वितमित्या-( क० प्र० ३।५।१४ ) युक्तेः। तस्मात् पित्रादित्रयाणामेवात्र श्राद्धमिति सिद्धम्।

A. पूर्तलक्षणमुक्तम्—

वापीकूपतडागादिदेवतायतनानि च।
अन्नप्रदानमारामाः पूर्तमित्यभिधीयते ॥ इति तर्कालङ्कारीये भाष्ये।

B. तथाच— प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा।
उपवेश्य कुशान् दद्यादृजुनैव हि पाणिना ॥ इति। क० प्र० १।२।१।

C. कर्मप्रदीपः १।४।१२।

अस्य व्याख्या—श्रोतृप्रोत्साहार्थं स्वग्रन्थं स्तौति—इदमस्मदुक्तं शास्त्रं गोभिलोक्तं गृह्यम्, परिसंख्यानं स्वनामप्रसिद्धं श्राद्धमन्त्रावाहनादिप्रतिपादकं ग्रन्थम्, वसिष्ठोक्तं छान्दोग्यगृह्य-नामकं श्राद्धकल्पञ्च यो जानाति स श्राद्धं जानीते नेतरो मान्य। इति।

---

1. '-जात-' नास्ति ख।

इदानीमेतच्चिन्त्यते—किं ब्राह्मणभोजनं श्राद्धे प्रधानम् [1]उत पिण्डदानमिति ?

तत्रैते श्लोका भवन्ति—

प्राधान्यं पिण्डदानस्य केचिदाहुर्मनीषिणः ।
गयादौ पिण्डमात्रस्य दीयमान[2]स्य दर्शनात् ॥
श्रुतौ च पिण्डदानस्य केवलस्य विधानतः ।
भीष्मस्य ददतः पिण्डान् हस्तोत्थानस्मृतेरपि ॥
भोजनस्य प्रधानत्वं वदन्त्यन्ये महर्षयः ।
ब्राह्मणानां परीक्षायां महायत्नप्रदर्शनात् ॥
महाफल[3]विधेश्चैव पङ्क्तिपावनभोजनात् ।
अपाङ्क्तयभोजनाद्व दातुर्महानर्थप्रदर्शनात् ॥
आमश्राद्धविधानस्य विना पिण्डैः क्रियाविधेः[4] ।
तदालभ्या[5]प्यनाध्यायविधानश्रवणादपि ॥
विद्वन्मतान्युपादाय मम त्वेतद्व हृदि स्थितम् ।
प्राधान्यमुभयोर्यस्मात् तस्मादेव समुच्चयः(A) ॥ [6]इति ।

इति [7]भट्टनारायणकृतौ गोभिलीय-गृह्यसूत्रभाष्ये[7]* चतुर्थप्रपाठकस्य
तृतीया कण्डिका ॥

---

A. कर्मप्रदीपः ३।१०।९-१४ ।

अत्र सर्काङ्कारः "त इमे श्लोकाः कर्मप्रदीपस्य तृतीयप्रपाठकस्यान्तिमे खण्डे पठ्यन्ते ; क्वचिद्व द्वितीयचतुर्थौ विहाय । तस्मादस्माकं समुच्चयपक्ष आदरणीयः । अत्र च निमित्ततो ब्राह्मणभोजनस्य पिण्डदानस्य चाननुष्ठानेऽपि उभयोः प्राधान्यं नानुपपन्नम् । असोमयाजिपक्षे दधिपयोयागवत् । फलश्रुतिश्च उभयत्राप्यस्ति ; ब्राह्मणभोजनं प्रधानं पिण्डदानमङ्गम् इति शूल-पाणिप्रभृतयः । अन्नोत्सर्गः प्रधानम् इति वाचस्पतिमिश्रादयः । स्मरन्ति च—

श्राद्धं कृत्वा प्रयत्नेन त्वराक्रोधविवर्जितः ।
उष्णमन्नं द्विजातिभ्यः श्रद्धया प्रतिपादयेत् ॥

इति । अत्र खल्वन्नोत्सर्गे श्राद्धपदं प्रयुक्तम् ।

तथा स्मृत्यन्तरम्—

संस्कृतं व्यञ्जनाढ्यान्नं पयोदधिघृतान्वितम् ।
श्रद्धया दीयते यस्मात् तेन श्राद्धं निगद्यते ॥

---

1. 'पिण्ड' प्रधानमिति' ख । 2. '-मिदर्शनात्' ख । 3. '-विधि-' च । 4. '-विधिः' ख । 5. '-प्यनध्याय-' ख । 6. 'इति' नास्ति च । 7. नास्ति ख ।

इति। अपि च नित्यश्राद्धादौ तावत् पिण्डनिषेधोऽवगम्यते; स च प्राप्तस्यैव भवति। प्राप्तिश्चातिदेशादेव। स खल्वङ्गानामेव न प्रधानस्य। कस्मात्? उपकारकस्येवैवातिदेशस्य सप्तमाध्याये सिद्धान्तितत्वात्, तस्मात् पिण्डदानमङ्गमेव। अङ्गे तु फलश्रुतिरर्थवाद एव। केवलपिण्डदानविधिस्तु अङ्गभूतपिण्डदानात् कर्मान्तरमेव, प्रकरणाधिकरणन्यायात्—इति श्राद्धविवेकः। इदन्त्विह वक्तव्यम्—'मासमग्निहोत्रं जुहुति' इति कुण्डपायिनामयने यथा अग्निहोत्रवत् जुहुति इति वचनव्यक्त्या नैयमिकस्याग्निहोत्रस्य धर्मा अतिदिश्यन्ते प्रधानञ्च होमो योऽग्नये च प्रजापतये च इति, यथा वा 'उद्भिदा यजेत' इत्येवमादौ अव्यक्तयजतौ सौमिकधर्मा इव प्रधाना अपि यजतयः प्रदिश्यन्ते तयो रूपान्तराभावात् तद्वदत्रापि स्यात्। आनर्थक्याद्धि प्रधानस्यानतिदेश उक्तः। न चैवमानर्थक्यं शक्यते वक्तुम्। अथ मन्यसे—नासौ प्रधानस्यातिदेशः। कस्य तर्हि? अङ्गस्यैव। प्रधानं खल्वत्र जुहोतिना यजतिना च विहितम्, द्रव्यदेवते पुनरङ्गे एवातिदिश्येते अङ्गान्तरवत् इति। एवं तर्हि प्रकृतेऽपि श्राद्धचोदनया प्रधानं विहितम् इति न प्रधानस्यातिदेशः, अपि तु अङ्गमेव—इतिकर्त्तव्यताकलापः प्रदिश्यताम्। कथं तर्हि पिण्डदानस्य निषेधः क्रियते? इतिकर्त्तव्यतानिषेधाभिप्रायतया इति गृहाण। नायं पिण्डदानस्य निषेधः अपि तु तदितिकर्त्तव्यताया एव। तस्याश्च निषेधात् पिण्डोऽपि न दीयते उत्तरवेदेर्निषेधात् वैश्वदेवे शुनासीरीये च यथा नाग्निः प्रणीयते तद्वत्।

अपि च कस्मात् कारणादुभयोः प्राधान्यपक्षे पिण्डदानस्य निषेधो न घटते इति तावदसौ प्रष्टव्यः। स यदि ब्रूयात् प्राप्तेरभावादिति, तं प्रतिब्रूयात् विध्यन्तेन प्राप्तेरभावेऽपि विध्यादितः प्राप्तिरस्त्येव, कुतः? श्राद्धपदस्यैवैवमर्थ्यात्। तत्र विध्यादितः प्राप्तः पिण्डः प्रतिषिध्यमानस्तदितरकरणमेव प्रयोजयति। सोऽयं पर्युदासो न निषेधः। यथा सर्वस्वं दद्यात्—इत्यत्र भूम्यादिप्रतिषेधात् तदितरत् सर्वस्वमर्थः, तथैवात्रापि पिण्डेतरत् श्राद्धमर्थ इति न किञ्चिदनुचितम्।

एतेन 'श्राद्धं सपिण्डकं कृत्वा' इत्यादिवचनान्यपि व्याख्यातानि। गोबृषन्यायात् खल्वेवमुच्यते प्रशंसार्थम्। तदेवमादिवचनवैचित्र्यमृषीणामबुद्ध्वा न बुद्धिमद्भिर्भ्रमितव्यम्। यत् पुनरङ्गभूतपिण्डदानादितरदेव कर्मान्तरं प्रधानं पिण्डदानम् इति वर्णितम्, तत्र पृच्छामः तस्य श्राद्धत्वमिष्यते न वा? इति। यदि तावत् प्रथमः पक्षः, तदा विफलप्रयासः; पिण्डदानस्यापि श्राद्धत्वाभ्युपगमात्। कर्मान्तरवचनानुपपत्तिश्च स्यात्, सति ब्राह्मणभोजने पिण्डदानमङ्गम्, असति प्रधानम् इति ब्रवीमि, इति चेत्? नैतत् प्रमाणोपेतं ब्रवीषि। कस्मात्? रूपभेदाभावाद् यदेव खल्वस्य रूपमङ्गस्य तदेव प्रधानस्यापि, इति सति ब्राह्मणभोजने अङ्गं विपरीतमन्यथा, इत्यत्र विशेषहेतुर्नास्ति फलश्रुतेरुभयत्राप्यविशेषेणैकशेषस्य दुष्करत्वात्। अपि च एतावताऽपि श्राद्धसञ्ज्ञाभिधेयत्वमस्याभ्युपगच्छत्येव भवान् इति, असतीव ब्राह्मणभोजने, सत्यपि तस्मिन् प्राधान्यमेवास्याभ्युपगम्यतां कृतमर्धजरतीयेन। कुशविदेकस्य कुशविद्धान्यस्य प्राधान्ये पुनरभ्युपगम्यमाने अनेकार्थत्वमस्य कल्पनीयं स्यात्, तदन्याय्यम्।

उत्तर इति चेन्न, आचार्यविरोधात्; इति चेत् पश्यसि, उत्तरः पक्षस्तर्हि समाश्रयिष्यते इति। एतदपि न पारयसि, कस्मात्? आचार्यविरोधात्। 'तत् श्राद्धम्' इति सूत्रयन्नाचार्यः पिण्ड-पितृयज्ञस्यापि श्राद्धत्वमुपदिशति, विरुध्यते खल्वेतद् भवताम्। पिण्डप्रधानो हि सः; तस्मात् पिण्डमन्तरेणैव ब्राह्मणभोजनमन्तरेणापि श्राद्धदर्शनात् नैतदेकतरस्मिन्नेव पक्षे चोदयितव्यं भवति; द्वयोः समानत्वादिति सन्तोष्टव्यम्। समुच्चयपक्षः खल्वेवमुपोद्बलितो भवति। यस्तु ब्राह्मणभोजनमात्रं प्रधानमाह स कथं पिण्डदानमात्रस्य श्राद्धत्वं समर्थयितुं शक्ष्यतीति न विद्मः।

यदपि शङ्खवचनमुपन्यस्तं 'श्राद्धं कृत्वा प्रयत्नेन' इत्यादि, सोऽयं केवलान्नोत्सर्गे श्राद्धपद-प्रयोग इति वर्णितञ्च तदप्यसङ्गतम्।

कस्मात्?

भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम्।

इति।

उच्छिष्टसन्निधौ कार्यं पिण्डनिर्वपणं बुधैः।

इति च ब्राह्मणभोजनं पिण्डनिर्वपणञ्चाभिधाय पश्चात् तद्वचनारम्भात्। तदनेनायमपि समुच्चय-पक्षमुपोद्बलयतीत्यवगच्छामः। तस्मात् पौर्वापर्यपरामर्शाभावादन्नोत्सर्गे श्राद्धपदं प्रयुक्तमिति भ्रान्तिरुद्बभूव।

तथाचोक्तम्—

पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम्।

इति। यच्च पुलस्त्यवचनमुपदर्शितं 'संस्कृतं व्यञ्जनाढ्यञ्च' इत्यादि, तस्यापि श्रद्धया यस्मा-दन्नं दीयते तस्मादिदं कर्म श्राद्धमित्युच्यते इति वचनव्यक्त्या अन्नदानादतिरिक्तमपि किञ्चिदव-गम्यत एव। तदिदं 'संज्ञायाम्' इति वा, 'तेन कृतम्' इति वा 'तस्येदम्' इति वा भवति। जयादित्यस्तु 'चूडादिभ्य उपसंख्यानम्' इत्यभिधाय चूडा प्रयोजनमस्य चौडम्, श्रद्धा प्रयोजनमस्य श्राद्धम् इत्युदाजहार। रघुनन्दनस्तु पुलस्त्यवचनमालोचनमात्रेण पश्यन् श्रद्धया अन्नादेर्यद् दानं तत् श्राद्धमिति वैदिकप्रयोगाधीनयौगिकमिति वर्णयाञ्चकार। तदसङ्गतम्, कुतः? तदभिप्रेतस्य योगार्थस्यावाच्यत्वात्। न खलु श्रद्धया अन्नादेर्दानमित्ययमर्थः श्राद्धशब्दादवगम्यते, न खलु दानार्थे तद्धितमुपदिशन्त्याचार्याः। वस्तुतस्तु पुलस्त्यवचनं खल्वेतत्, दीयते इति कर्मणि तिङः प्रयोगात् दीयमानस्यान्नस्य श्राद्धत्वमाह न त्वन्नदानस्येति कस्य केनाभिसम्बन्धः। दर्शितञ्चा-स्माभिः पिण्डपितृयज्ञस्यापि श्राद्धत्वमाचार्यस्यानुमतम्, तदपि न प्रस्मर्तव्यम्। यच्च—

अदैवं भोजयेच्छ्राद्धं पिण्डमेकञ्च निर्वपेत्।

इति वचनम्, तत्र खल्वन्ने श्राद्धशब्दः प्रयुक्तः। यदपि—

आमश्राद्धं यदा कुर्याद् विधिज्ञः श्राद्धदः स्मृतः।
तेनाग्नौकरणं कुर्यात् पिण्डांस्तेनैव निर्वपेत्॥

इति वाक्यम् । तत्रापि तेनाग्नौकरणम् इति हेतुत्वेनोपादानम्, यतस्तेनाग्नौकरणम् अतस्तेनैव पिण्डदानमिति तस्यार्थः, अग्नौ करणशेषेण पिण्डदानम् इत्ययमत्र हेतुः । तदिदं वाक्यम्—

आमश्राद्धं यदा कुर्यात् पिण्डदानं कथं तदा ।

गृहादाहृत्य पक्वान्नं पिण्डं दद्यात् तिलैः सह ॥

इत्येतत्पक्षानुज्ञानार्थम् । प्रथमोद्दिष्टस्यैव वा आवृत्य 'पिण्डांस्तेनैव निर्वपेत्' इति पर्याया-न्तरेण परिकीर्तनम् । पिण्डनिर्वपणस्यैव श्राद्धपदार्थत्वादित्यभिप्रायः । तथा मनुः—

सहपिण्डक्रियायान्तु कृतायामस्य धर्मतः ।

अनयैवाऽऽवृता कार्यं पिण्डनिर्वपणं सुतैः ॥

इति । न च पिण्डनिर्वपणं पित्रे दानम् इति रघुनन्दनव्याख्यानं युक्तमिति वाच्यम्, यथाश्रुतार्थ-परित्यागे मानाभावात्, 'अस्य' इति करणाच्च- पिण्डदानस्यैवावगतेः, पित्रुद्देश्यकदान-मात्रस्यैव तदितिकर्तव्यतापत्तेश्च । 'न निर्वपति यः पिण्डम्' इति 'पिण्डदोऽशहरः' इति 'पिण्ड दद्यात् धनं हरेत्' इति 'त्रिषु पिण्डः प्रवर्तते' इति 'पिण्डोदकक्रियाहेतोः' इति 'नरकस्थाश्च तृप्यन्ति पिण्डैर्दत्तैः' इति चैवमादिषु शतशः पिण्डदानस्य प्राधान्यावगमाच्च ।

पूर्वं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम् ।

इति परतस्तेनैव पिण्डनिर्वपणस्योपसंहाराच्चैवमवगच्छामः । उपसंहारः खल्वयं श्राद्धप्रकरण-शेषे दृश्यते, तस्मात् पिण्डप्रदानस्यैवायमुपसंहारो न श्राद्धकर्मण इत्यपि न शक्यते वक्तुम् । अपि च पिण्डदान एव पिण्डनिर्वपणपदं प्रयुक्तवान् मनुः, इत्यवगच्छामः । कथं कृत्वा ? शृणु, पुरस्तात् तावत्—

त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समाहितः ।

औदकेनैव विधिना निर्वपेद्द दक्षिणामुखः ॥

इति । परस्तादपि—

पिण्डनिर्वपणं केचित् पुरस्तादेव कुर्वते ।

इति पिण्डप्रदान एव पिण्डनिर्वपणपदप्रयोगो दृश्यते । अपि च कस्यचित् पिण्डदानम्, कस्यचिच्च ब्राह्मणभोजनं प्रधानम्, इत्यतो हि कारणात् समुच्चयपक्षः प्रादुर्भवति । तत् किमत्र करिष्यन्ति अन्यतरप्राधान्यावेदकानि वचनानि । स खल्वयमलङ्कारः समुच्चयपक्षस्य न दोषः । तस्मात् तत्तद्वाक्यपर्यालोचनया क्वचित् पिण्डः प्रधानम्, यथा गयापिण्डपितृयज्ञादौ । क्वचिद्द ब्राह्मणभोजनम्, यथा नित्यश्राद्धादौ । अन्यत्र त्वविशेषादुभयं प्रधानम्, यथा सपिण्डी-करणादौ । इत्यलन्तु किं विस्तरेणे''त्याह ।

अथान्वष्टक्यप्रयोग उच्यते—अष्टम्यां मध्याष्टकां कृत्वोत्तरेऽहनि नवम्यां दशम्यां वाऽन्वष्टक्यं कुर्यात् । तत्रापराह्णे पैतृकत्वात् । श्राद्धकल्पोक्तनियमाः स्युर्विप्रनिमन्त्रणादिकञ्च । गृहस्याऽऽग्नेय्यां दिशि समे देशे चतुःप्रक्रमपरिमितां ततोऽधिकप्रक्रमपरिमितां वा दक्षिणपूर्वायतां वा चतुरस्रां

वेदिकां निर्माय पश्चिमद्वारं कृत्वा परितः कटादिभिराच्छादयेत्। अत्र वक्ष्यमाणं कर्म दक्षिणपूर्वाभिमुखेनैव कर्तव्यम्। प्रक्रमस्त्रिपदो ग्राह्यः। ततोऽपराह्ने यजमानः स्नात्वा यज्ञोपवीत्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य प्राचीनावीती गोत्राणां पित्रादीनां तृप्त्यर्थमन्वष्टक्यं करिष्ये इति सङ्कल्प्य परिवृतदेशस्योत्तरार्धे उपलिप्ते देशे विदिक्कोणं समं चतुरस्रं स्थण्डिलमरत्निमात्रं पूर्ववत् संस्कृत्य भूर्भुवः स्वरित्यौपासनाग्निमुपवीती प्रणयति। नात्र ब्रह्मा, ततः प्राचीनावीत्याग्नेय्याभिमुखोऽग्नेः पश्चाद् दक्षिणसंस्थमुलूखलं मुसलं सहविस्सूर्पं चरुस्थालीद्वयं पवित्रद्वयमुदकपात्रं यवोदकं मेक्षणद्वयं स्रुवमाज्यं रजतभूषितं खादिरं शङ्कुं दर्भमुष्टिं सकृदाच्छिन्नकुशान् स्तरणार्थं सकृदाच्छिन्नप्रस्तरमुष्टिं यज्ञियकाष्ठासनं कांस्यपात्रत्रयं समिद्द्वयं तिलान् दर्वीं पिञ्जुलीत्रयं सौवीराञ्जनं तैल-चन्दन-क्षौमदशासूत्राणि पिञ्जुलीमेकाञ्चाऽऽसादयेत्। तत आग्नेय्याभिमुखोऽग्नेः पश्चाद् दक्षिणाग्रेषु दर्भेषूलूखलं दृढं संस्थाप्य तस्मिन् सकृद् गृहीतव्रीहिमुष्टिं पितृभ्यस्त्वा जुष्टं निर्वपामीति मन्त्रेण होमपिण्डदानापेक्षितान् तण्डुलान् पितृतीर्थेन सकृन्निरुप्य सव्योत्तराभ्यां पाणिभ्यां मुसलमादाय सकृद् व्रीहीनवहन्ति। ततः सकृत् फलीकृत्य सकृत् प्रक्षालयेत्। ततो मध्यमाष्टकायां स्थापितं वामसक्थ्नः क्लोम्नश्च मांसपेशीमवच्छिद्य नूतनकाष्ठफलके संस्थाप्याणुशश्छिनत्ति यथा मांसमिश्रिताः पिण्डा भवेयुः। ततोऽणुशश्छिन्नं मांसजातं तस्मिन्नेवाग्नौ श्रपयति। पूर्वप्रक्षालिततण्डुलानपि पृथक्पात्रे श्रपयति। मध्यमाष्टकायां स्थालीपाकपक्षे मांसस्थाने अत्रापि पायसचरुं कुर्यात्। मध्यमाष्टकायां मांसस्थानीयस्थालीपाके प्रक्षालिततण्डुलानामेकदेशं श्रपणात् पूर्वं संस्थापितं यत् तेनैवात्र पायसचरुकरणं न्याय्यम्। स्थाल्यां तण्डुलावापे एकपवित्रान्तर्धानम्। पृथक् पृथक् मेक्षणेन मांसमोदनं चाप्रादक्षिण्येन मिश्रीकुर्यात्। मांसाभावे पायसचरुम्। ततः शृतं मांसमोदनं चाभिघार्याग्नेर्दक्षिणत उद्वास्य चरुद्वयं न प्रत्यभिघारयेत्। ततः परिवृतदेशस्य दक्षिणार्धे प्रादेशायामांश्चतुरङ्गुलखातांश्चतुरङ्गुलविस्तृतान् यवाकारान् सार्धाङ्गुलान्तरालान् वाय्वग्निदिङ्मुखान्तान् त्रीन् गर्तान् शङ्कुना कुर्यात्। ततः पूर्वकृतस्य गर्तस्य पुरस्ताद् विधिवत् संस्कृते देशे गर्तानां पश्चिमेनैकदेशमग्निमाहृत्य प्राङ्मुखो यज्ञोपवीती स्थापयति। ततो मूलसमीपच्छिन्नैर्दर्भैरेतमग्निं परिस्तीर्य मध्ये गर्तान् परिस्तृणोति। अग्निदिगग्रैः। अत्रापि प्राचीनावीतित्वमग्निदिगाभिमुख्यञ्च कर्तुः। ततो गर्तानां पश्चाद् दक्षिणाग्रैः कुशैः प्रस्तरमास्तारयेद् दक्षिणाप्रवणम्। तस्मिन् प्रस्तरे काष्ठमयमासनमुपदध्यात्। आसनस्य स्थापनं नोपवेशनार्थं किन्त्वदृष्टार्थं प्रस्तरे आसनासम्भवात्। तस्मिन् त्रीण्युदकपात्राणि वक्ष्यमाणानि द्रव्याणि चैकैकशः स्थापयेत्। अन्ये तु 'पुत्रादिः पूर्वमासादितानामेकमेकं यजमानस्याप्रादक्षिण्येनाऽऽहरति, यजमान आहृतं प्रस्तरे स्थापयती'त्याहुः। प्रकृते प्रस्तरे चरुस्थालीद्वयं कांस्यपात्रं दर्वीमुदकं समिद्द्वयं पिञ्जुलीमेकां चान्यान्यप्यासादयति। तान्युच्यन्ते—पत्नी प्रकृते बर्हिषि शिलां संस्थाप्य चन्दनादिगन्धद्रव्यपेषणं करोति। तस्यामेव शिलायां सौवीराञ्जनस्य घर्षणं कृत्वा तेनाञ्जनेन तिस्रो दर्भपिञ्जुलीरार्द्रीकरोति मध्ये मध्ये किञ्चि-

कृत्तं कृत्वा ततश्चन्दनमञ्जनासकर्दर्भपीञ्जुलीश्च तिलतैलं क्षौमदशाश्च स्वस्तरे स्थापयति। ततः पूर्वनिमन्त्रितानभिन्दितान् श्रेष्ठानुदङ्मुखानयुग्मान् ब्राह्मणान् पित्रार्थं गर्तानां दक्षिणतः शुचौ देश उपवेशयेत्। अत्र निमन्त्रणवरणक्रमावन्यतो ग्राह्यौ। प्रागेव विश्वेदेवार्थं युग्मब्राह्मणोपवेशनञ्च। एतत् सर्वं कल्पसूत्रादौ द्रष्टव्यम्। अत्र तु गृह्यसूत्रोक्तो यावद्विशेषः प्रदर्श्यते। प्राचीनावीत्युपविष्टेभ्यो ब्राह्मणेभ्य आसनार्थं दर्भान् प्रदाय तूष्णीमुदकं दत्त्वा तिलोदकं ददाति मन्त्रेण। पितुर्नाम गृहीत्वा अमुकशर्मन्नेतत्ते तिलोदकं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा। अथाप उपस्पृश्यैवं पितामहस्य प्रपितामहस्य नाम गृहीत्वा तिलोदकं दद्यात्। ततो गन्धान्—अमुकदेवशर्मन्नेष ते गन्धः ये चात्रेत्यूहः। एतत्तिलोदकं पूर्वासादितोदकपात्रेषु तूष्णीं जलमासिच्य मन्त्रेण दातव्यं न ब्राह्मणहस्तेष्विति केचित्। ब्राह्मणहस्तेषु प्रकृतत्वादित्यन्ये। अस्मिन् काले ब्राह्मणानां गन्धाद्युपचाराः कर्तव्याः। ततोऽग्नौ करिष्यामीति पितृननुज्ञाप्य कुर्वित्यनुज्ञातस्त्रिरुदकाञ्जलिसेचनं पर्युक्षणं समिदाधानञ्च कृत्वा कांस्यपात्रे चरुद्वयं निःशेषं पृथक्स्रुवेक्षणेनावदाय संमिश्र्य मेक्षणेनातिप्रणीताग्नावुपघातं जुहोति। तत्र मन्त्रौ—अनयोः प्रजापतिर्ऋषिर्यजुः पितरो देवता होमे विनियोगः। स्वाहा सोमाय पितृमते। पूर्वाहुतिमन्त्रः। स्वाहा अग्नये कव्यवाहनाय। उत्तराहुतिमन्त्रः। स्वाहापदोच्चारेणाग्नौ हुत्वा पश्चान्मन्त्रं समापयेत्। ततः समिदाधानादि। निरग्निश्चेद् यजमानो ब्राह्मणहस्ते जुहुयात्। ततो हुतशेषात् किञ्चिद् ब्राह्मणेभ्यो दत्त्वा पिण्डार्थमवशेषयेत्। ब्राह्मणभोजनकाले श्रुत्यादिकं श्रावयेत्। अत्र भोजनार्थं ब्राह्मणोपवेशन-भोजनपात्रालम्भन-संतृप्तिप्रश्नादिकं मासश्राद्धप्रयोगवत् कर्तव्यम्। पिण्डदानं ब्राह्मणानामुत्तरापोशनानन्तरमुच्छिष्टपात्रसन्निधौ छन्दोगानां कर्तव्यमिति श्राद्धकल्पोक्तं ग्राह्यम्। अत ऊर्ध्वं पिण्डदानम्। तत्र प्राचीनावीती वाग्यतो यजमानः सव्येन हस्तेन दर्भपिञ्जूलीं गृहीत्वा सव्याद् दक्षिणेन पिञ्जूलीं गृहीत्वा सव्येनान्वारभ्य दक्षिणाग्रां गर्तानां मध्ये रेखामुल्लिखेद् अपहता इति मन्त्रेण। प्रतिगर्तं मन्त्रावृत्तिः। अस्य प्रजापतिर्ऋषिः पितरो देवता यजुर्लेखोल्लेखने विनियोगः। मन्त्रः। ततः सव्यहस्तेनातिप्रणीताग्नेरुल्मुकं गृहीत्वा दक्षिणेनाऽऽदाय सव्येनान्वारभ्य गर्तानां दक्षिणभागे ये रूपाणीति मन्त्रेण स्थापयेत्। अस्य मन्त्रस्य प्रजापतिर्ऋषिरग्निर्देवता त्रिष्टुप् छन्द उल्मुकस्थापने विनियोगः। मन्त्रः। गर्तेषु दर्भानास्तीर्य अथ पितॄन् आवाहयेत् एत पितर इति मन्त्रेण। अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः पितरो देवता पित्रावाहने विनियोगः। मन्त्रः। अथोदकपात्राणि त्रीणि पूर्वमासादितानि गर्तानां सन्निधौ क्रमेण स्थापयेत्। ततो वामहस्तेन प्रथमगर्ते स्थापितमुदकपात्रं गृहीत्वा दक्षिणेनाऽऽदाय सव्येनान्वारभ्य पितृतीर्थेन पूर्वकृतगर्तदर्भेषूदकं निनयेत्। तत्र पितुर्नाम सम्बोधनान्तमसावित्यस्य स्थाने कृत्वा मन्त्रः पठनीयः। मन्त्रश्च असाववनेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा। अथाप उपस्पृश्य द्वितीयोदकपात्रं वामहस्तेन गृहीत्वा द्वितीयगर्तदर्भेषु पितामहस्य सम्बोधनान्तं नाम गृहीत्वा अवनेनिक्ष्व ये चात्रेत्यादिना पितृतीर्थेनोदकं निनयेत्। अथाप उपस्पृश्य तृतीयोदकपात्रं वामहस्तेन गृहीत्वा

प्रपितामहनामयुक्तेन पूर्वोक्तमन्त्रेण तृतीयगर्तदर्भेषु पितृतीर्थेन निनयेत्। सर्वत्रोदकनिनयनं दक्षिणहस्तेन वामहस्तेन पात्रग्रहणम्। सव्येनान्वारम्भश्च। ततो हुतशेषस्य ब्राह्मणभोजनार्थं पक्वान्नस्य चैकीकरणम्। ततः सव्येन हस्तेन दर्वीं गृहीत्वा तत्तृतीयांशं दर्व्याऽवदाय दक्षिणहस्तेन गृहीत्वा सव्येनान्वारभ्य पूर्वकृतगर्तदर्भेषु पिण्डं निदध्यात् पितुर्नामयुक्तमन्त्रेण। अमुकशर्मन्नेष ते पिण्डो ये चात्र त्वेति। अप उपस्पृश्य पितामहप्रपितामहयोः पिण्डौ द्वितीयगर्ते तृतीयगर्ते च पूर्ववत् क्रमेण स्थापयेत्। पितामहपिण्डदानमन्त्रे पितामहस्य प्रपितामहपिण्डदाने च प्रपितामहस्य नामग्रहणमिति विशेषः। यदि पित्रादीनां नामानि न जानाति तदा 'स्वधा पितृभ्यः पृथिवीषद्भ्य' इति पितृपिण्डं स्थापयेत्, 'स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः' इति पितामहपिण्डम्, 'स्वधा पितृभ्यो दिविषद्भ्यः' इति प्रपितामहपिण्डम्। अत्र केचित् पित्रादीनामन्यतमस्य नाम्नयज्ञाते त्रयाणामपि सौत्रनामभिः पिण्डनिधानम्। बहुवचनार्थत्वाल्लोकत्रयसम्बन्धविधानात् प्रयोगैकत्वाच्च। अन्ये तु पित्रादीनां मध्ये यस्य नाम न ज्ञायते तस्यैव सौत्रनाम्ना पिण्डदानम्, यस्य तु नाम ज्ञायते तस्य तन्नामयुक्तपूर्वोक्तमन्त्रेण पिण्डदानमिति न्याय्यम्, निमित्ते नैमित्तिकस्य युक्तत्वान्नित्यमन्त्रानुग्रहाच्च इति वदन्ति। यथोचितमत्र ग्राह्यम्। अत्र पित्रादिनामापरिज्ञाने पृथिवीषदादिनामान्तरविधानाद् इतः पूर्वं विहितेष्वर्घ्यतिलोदकगन्धावनेजनोदकदानेष्वपि तथैव ग्राह्यम्। एवं त्रीन् पिण्डान् निधाय—अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता जपे विनियोगः। ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्। अप्रादक्षिण्येन पर्यावृत्योदङ्मुखोऽनुच्छ्वसन्, अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता जपे विनियोगः। ॐ अमीमदन्त पितरो यथाभागमावृषायिषत इति जपेत्। ततस्तेनैव पर्यावर्तमान आगत्योच्छ्वसेत्। ततो वामहस्तेनाञ्जनयुक्तदर्भपिञ्जूलीं गृहीत्वा दक्षिणेनाऽऽदाय सव्येनान्वारभ्य पितृतीर्थेन पितृपिण्डे स्थापयेत् पितृनामयुक्तमन्त्रेण। अमुकगोत्र पितरमुकशर्मन्नेतत् त आञ्जनं ये चात्र त्वेति। अप उपस्पृश्य पूर्वं पितामहप्रपितामहपिण्डयोरपि स्थापयेत्। एवं तिलतैलं सुरभिचन्दनञ्च दद्यात्। अथ यजमान उत्तानदक्षिणपाण्युपरि वामहस्तमधोमुखमितरेतरसंलग्नं कृत्वा पूर्वकृतगर्ते संस्थाप्य ॐ नमो व इत्यादिमन्त्राणां प्रजापतिर्ऋषिरुष्णिक् छन्दः पितरो देवता निह्नवजपे विनियोगः। ॐ नमो वः पितरो जीवाय, ॐ नमो वः पितरः शूषायेति नमस्कुर्यात्। सव्योत्तानौ पाणी कृत्वा द्वितीयगर्ते ॐ नमो वः पितरो घोराय, ॐ नमो वः पितरो रसायेति। तृतीयगर्ते दक्षिणोत्तानौ पाणी कृत्वा ॐ नमो वः पितरः स्वधायै, ॐ नमो वः पितरो मन्यव इति नमस्करोति। ततः कृताञ्जलिः ॐ नमो वः पितरः पितरो नमो वः इति जपति। ततः पत्नीमवेक्षते, अस्य मन्त्रस्य प्रजापतिर्ऋषिः गायत्री छन्दः पितरो देवता पत्न्यवेक्षणे विनियोगः। ॐ गृहान् नः पितरो दत्त इति। ततः पिण्डानवेक्षते अस्य मन्त्रस्य प्रजापतिर्ऋषिर्गायत्री छन्दः पितरो देवता पिण्डावेक्षणे विनियोगः, ॐ सदो वः पितरो देष्म। ततो दक्षिणहस्तेन पूर्वासादितसूत्रं गृहीत्वा वामेनान्वारभ्य पितृतीर्थेन प्रथमे निदध्यात्, पितरमुकशर्मन्नेतत्ते वासो ये चात्र त्वेति। अप उपस्पृश्य पितामहप्रपितामह-

पिण्डयोरपि। तत आचान्तेषु ब्राह्मणेषु मासश्राद्धवत् सुसंप्रोक्षितमस्तु इत्याद्यर्घपात्रोत्तान-करणान्तं कर्म कुर्यात्। ततः सव्येन पाणिनोदकपात्रं गृहीत्वा पितृतीर्थेन पिण्डान् परिषिञ्चेत्, अस्य मन्त्रस्य प्रजापतिर्ऋषिः पिपीलिकामध्योष्णिक् छन्दः पितरो देवता पिण्डपरिषेचने विनियोगः। ॐ ऊर्जं वहन्तीरिति। ततो मध्यमपिण्डं पत्न्यै प्रयच्छति पुत्रकामा चेत् पत्नी, अस्य मन्त्रस्य प्रजापतिर्ऋषिर्गायत्री छन्दः पितरो देवता पिण्डप्राशने विनियोगः ॐ आधत्त पितरो गर्भमिति। अथवा यजमानपुत्रपौत्रभ्रात्रादिस्तेषां पत्न्यो वा पुत्रकामाः प्राश्नीयुः। पुत्रकामा एकैव समग्रं पिण्डं प्राश्नीयादिति विशेषः। अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवता उल्मुकाभ्युक्षणे विनियोगः। ॐ अभून्नो दूतो इति मन्त्रेणोल्मुकं जलेनाभ्युक्ष्य द्वन्द्वं चरुस्थाल्या-दिकं प्रक्षाल्यान्यत्र स्थापयेत्। अस्मिन्नेव क्रमे दक्षिणादानादिकं मासश्राद्धवत् कृत्वा ब्राह्मणान् विसर्जयेत्। ततो वामदेव्यं गीत्वा जले पिण्डान् प्रक्षिपेत् प्रणीतेऽग्नौ वा, ब्राह्मणं वा भोजयेत्, गवे वा दद्यादिति।

---

## चतुर्थप्रपाठकस्य चतुर्थी कण्डिका

इदानीं लाघवार्थमन्वष्टक्यविधिना पिण्डपितृयज्ञविधिमतिदिशन् आह—

**अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञो व्याख्यातः ॥ १ ॥**

[1]ननु[1]* अन्वष्टक्येन पितृयज्ञो व्याख्यात इति [2]वक्तव्ये स्थालीपाकपिण्ड[3]शब्दयोः किमर्थं ग्रहणमिति उच्यते—स्थालीपाकग्रहणं मांसचरुनिवृत्त्यर्थम्। पिण्डग्रहणं ब्राह्मणभोजननिवृत्त्यर्थम्। उभयोरप्य[4]तिदेशात् प्राप्तत्वात् स्थालीपाक[5]पिण्डशब्दाभ्यां व्यावृत्तिः क्रियते, पिण्डैरेव केवलैः पितरो यत्रेज्यन्ते सोऽयं पिण्डपितृयज्ञः(A) अन्वष्टक्यविधिना व्याख्यातः। अतिदेशात् नवम्याम् [6]एवं मा भूदित्यतः कालान्तर-विधानार्थमिदमाह—

**अमावास्यायां तत् श्राद्धम् ॥ २ ॥**

पूर्वोक्तलक्षणायाममावास्यायां [7]तत् पिण्डपितृयज्ञाख्यं श्राद्धं कर्तव्यमिति शेषः।

**इतरदन्वाहार्यम् ॥ ३ ॥**

इतरत् अपरं द्वितीयमित्यर्थः। पिण्डपितृयज्ञस्य [8]अनु पश्चादाह्रियते[8]* क्रियते इत्यन्वाहार्यं श्राद्धं कर्तव्यम् इति वर्तते। [9]तत्रोभयमपि स्यात् ब्राह्मणभोजनञ्च[10] पिण्डदानं (B)चेति। तथाच सूत्रान्तरम्—'मध्यमं पिण्डं [11]पत्न्यै प्रदाय ब्राह्मणान्

---

A. अत्र प्रमाणत्वेनोपस्थापयति तर्कालङ्कारः—'तथाच निगमः, आहिताग्नेः पित्रर्चनं पिण्डैरेव अपि वा ब्राह्मणान् भोजयेत्' इति।

B. अन्वाहार्यलक्षणमुक्तं कर्मप्रदीपे—

'यच्छ्राद्धं कर्मणामादावि'त्यादि ३।८।१। द्रष्टव्यम् (पृ० ७)।

म च—पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः।
तच्चाऽऽमिषेण कर्तव्यं प्रशस्तेन प्रयत्नतः॥ म० स० ३।१२३।

---

1. 'तथाच मनुः' ख (?)। 2. 'वक्तव्यम्', ख। 3. 'शब्द' नास्ति ख। 4. 'मतिदेशात्' नास्ति ख। 5. '-पिण्डाभ्यां' ख। 6. 'एव' ख। 7. 'तत्' नास्ति ख। 8. 'पश्चादनुक्रियते' ख। 9. 'तदत्रोभय-' घ। 10. 'च' नास्ति ख। 11. 'पत्नी प्रदाय' ख।

भोजयित्वाऽथैवमेवैतेभ्यो मातुश्च पितृभ्यस्त्रींस्त्रीन् पिण्डानवनेज्य निदध्यादिति(A)। एवञ्चैतस्मादेव[1] वचनात् [2]षट्पिण्डमेतदन्वाहार्यं स्यात्(B)।

तथाचोक्तम्—

कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम्।

प्रत्याब्दिकं [3]च शेषेषु पिण्डाः स्युः षडिति स्थितिः(C)॥ [4]इति।

सकृत् कृते कृतो वाक्यार्थ इति मा भूदित्यत आवृत्त्यर्थमिदमाह।

## मासीनम्(D) ॥ ४ ॥

मासि मासि क्रियत इति मासीनम्। अधिकारात् श्राद्धद्वयमपि [5]नाऽऽनन्तर्यादन्वाहार्यमेव।

## दक्षिणाग्नौ हविषः संस्करणम् ॥ ५ ॥

आहिताग्नेरपि शालाग्नावेव मा भूदित्यतो दक्षिणाग्नावित्याह।

## [6]ततश्चैवातिप्रणयः ॥ ६ ॥

ततश्च तस्मादेव दक्षिणाग्नेः अतिप्रणयः[6] अग्निप्रणयः, च-शब्दाद्धोमश्च तत्रैव कर्तव्य इति शेषः[6]*।

## शालाग्नावनाहिताग्नेः ॥ ७ ॥

[7]प्रकृतहोमानां[7]* प्रकृतत्वाद्धविषः संस्क[8]रणातिप्रणयहोमाः स्युरिति[8]*। नन्वे-

---

इति स्मरणात् 'पिण्डानां पितॄणामन्वाहार्यं मासैकतृप्तिजनकं यत् तत् तथे'ति तस्वकारोक्तं युक्तमिति वाच्यम्? केवलान्वाहार्यपदे तदर्थस्यासम्भवात्, व्युत्पत्तेरशब्दत्वाच्च, पूर्वोक्त'पञ्चाद्धं कर्मणामादा'वित्यादिकर्मप्रदीपवचनविरोधाच्च। प्रकरणञ्चैवमुपरुध्येत तस्मादनग्नेरमावास्याश्राद्धं नान्वाहार्यमित्यादरणीयम्। इति च प्राह चन्द्रकान्तः।

A. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि 'तथाच गृह्यान्तरम्' इत्युदाहारेण। अत्र मध्यमं पिण्डमिति पिण्डपितृयज्ञविषयम्। 'ब्राह्मणान्' भोजयित्वा इत्यादिकमन्वाहार्यश्राद्धपरम्, एतेभ्य इति पिण्डपितृयज्ञोपात्ताः स्वपितरः परामृश्यन्ते। एवं मातुश्च पितृभ्य इत्यादिकं पुनरन्वाहार्यश्राद्धपरम्। इति।

B. पिण्डपितृयज्ञे च कर्षूरस्तीति पित्रादित्रयाणामेव पिण्डदानं स्यादिति।

C. कर्मप्रदीपः ३।९।१४।

D. अत्र 'इतरदन्वाहार्यम्' 'मासीनम्' इति सूत्रद्वयमेकमेवेति कल्पयति सामश्रमी।

---

1. 'एव' नास्ति ख। 2. 'प्रथम-' ख। 3. 'तु' ख। 4. 'इति' नास्ति ख। 5. 'न' नास्ति ख। 6. नास्ति ख। 7. नास्ति घ। 8. '-रणानि स्युरिति' ख।

तद्वाच्यं तदर्थत्वादेव शालाग्नेः ? [1]न ; दक्षिणाग्निपरामर्शादनाहिताग्नेः पिण्डपितृयज्ञाप्राप्त्या निवृत्त्याशङ्का मा भूदित्यत[2]स्तन्निवृत्त्यर्थमिदमुच्यते(A) ।

**एका कर्षूः ॥ ८ ॥**

खातव्येति शेषः । अतिदेशात् तिसृणां प्राप्तत्वादेकेत्युच्यते, सा चात्र दक्षिणाग्रा स्यात् न तु पूर्ववत् कोणाग्रेति । कुतः ?

दक्षि[3]णान्तां तदग्रैस्तु पितृयज्ञे परिस्तरेत् (B) । इति वचनात् ।

**तस्या दक्षिणतोऽग्नेः स्थानम् ॥ ९ ॥**

तस्याः कर्ष्वा दक्षिणतः दक्षिणस्यां दिशि अग्नेः स्थानम्, [4]न पुरस्ताद् यदुक्तमासीत् (C) ।

**नात्रोल्मुकनिधानम् ॥ १० ॥**

दक्षिणार्धे कर्षूणां यदुक्तमासीत् ।

**न स्वस्तरः ॥ ११ ॥**

पश्चात् कर्षूणां यदुक्तमासीत् ।

**नाञ्जनाभ्यञ्जने ॥ १२ ॥**

सौवीराञ्जनतैले ।

**न सुरभि ॥ १३ ॥**

गन्धद्रव्यम् ।

**न निह्नवनम् ॥ १४ ॥**

नमस्कारोपलक्षितैर्मन्त्रैर्दक्षिणोत्तानौ पाणी कृत्वेत्येवमादिना पाणिविन्यासेन यदुक्तमासीत् । अतिदेशात् प्राप्तत्वादेतेषां प्रतिषेधः क्रियते ।

**उदपात्रान्तः ॥ १५ ॥**

पिण्डपरिषेकार्थमुदपात्रमन्ते यस्य पिण्डपितृयज्ञस्य सोऽयमुदपात्रान्तः । कर्म्मेतत्तु

A. तथाच दक्षिणाग्नेरुपदेशादनाहिताग्नेः स्मार्ताग्नेः पिण्डपितृयज्ञ एव न स्यादु इत्यपि कस्यचिदाशङ्का स्यात्, अतस्तन्निरासार्थमेतदुच्यते इति विशकलितोऽर्थः । एवं तावत् श्रौताग्निस्मार्ताग्न्योर्विशेषं सूत्रयित्वा उपरिष्टादुभयसाधारणीमितिकर्तव्यतां वक्तुमुपक्रमते ।

B. कर्मप्रदीपः २।७।४ ।

C. न पुनरन्वष्टक्यकर्मवत् पूर्वत इति । द्र० सू० ४।२।१८ ( पृ० ७३७ ) ।

1. 'मा' घ । 2. '-लक्षितैः-' ख । 3. '-णायादवाग्रैस्तु' ख । 4. 'न' नास्ति घ ।

अवाच्यम्, अतिदेशा[1]देवान्तसिद्धेः ? न ; इतरथा ब्राह्मणविसर्गान्तं नवपिण्डमेकमेवेदं श्राद्धमित्येक[2]श्राद्धाशङ्का मा भूदित्यतः श्राद्ध[3]नानात्व[4]ज्ञापनार्थमिदमुच्यते(A)

## वासस्तु निदध्यात् ॥ १६ ॥

वासः क्षौमदशा । नन्वेतद[5]प्यवाच्यम् ? अतिदेशादेव वासोनिधानस्य प्राप्तत्वादप्रतिषिद्धत्वाच्च, न ; पूर्वोक्तस्य वासोनिधान[6]विधेर्निवृत्त्यर्थमेकवासो-नियमार्थं [7]च पुनरिदमुच्यते । तेन किम् ? वासस्तु निदध्यात् इत्येकवचनोप-देशाद् "एतद् वः पितरो वास" इत्यनेन(B) यथाम्नातेन मन्त्रेणैकमेवात्र वासो

A. तथाच पिण्डपितृयज्ञे त्रयः पिण्डा अन्वाहार्ये च षडिति नवत्वं पिण्डानाम् इति । अत्र तर्कालङ्कारस्तु—"यावदुक्तकरणार्थमेतदुच्यते, तेन 'गन्धादीन् निक्षिपेत् तूष्णीम्' इत्यादिकं कर्मात्र न भवति । अन्यदपि प्रयोजनमुत्तरत्र वक्ष्यामः" इत्याह ।

B. मन्त्रस्तु— ॐ एतद् वः पितरो वासः । इति

मन्त्रब्राह्मणम् २।३।१४ ।

विनियोगप्रमाणमस्य जैमिनिगृह्यसूत्रेऽपि २७।२० ।

अस्य व्याख्या—हे पितरः, वो युष्माकम् एतत् तन्तुरूपं वासः आच्छादनयोग्यं वस्त्रम् । इति ।

अत्र रघुनन्दनः—"पिण्डोपरि सूत्रदाने मन्त्रवाक्यपूर्वकतामाह ब्रह्मपुराणम्—

एतद्वः पितरो वास इति जल्पन् पृथक् पृथक् ।
अमुकामुकगोत्रैतत् तुभ्यं वासः पठेत् ततः ॥
दद्यात् क्रमेण वासांसि श्वेतवस्त्रभवा दशाः । इति ।

तेन वामहस्तोद्धृतसूत्रतन्तुं दक्षिणहस्तेन गृहीत्वा वामान्वारब्धेन 'एतद् वः पितरो वास' इति पठित्वा गोत्राद्यभिलापपूर्वकमुत्सृज्य पिण्डे दद्यात् । इत्युक्त्वा मन्त्रस्यास्य प्रयोगं प्रदर्शयामास । शूलपाणिरपि—"अत एव 'एतद् वः पितरो वासः' इति मन्त्रस्य बहुवचनस्थाने नैकवचनोहः प्रकृतावेकैकत्र पित्रादौ प्रयुक्तस्य एतस्यानर्थकत्वात्" इत्युक्त्वा वासोदाने मन्त्रस्यास्योपयोगं व्यवस्थापयामास । श्राद्धचिन्तामणिकृतो वाचस्पतिमिश्रा अपि—"तथा हि कुथुमिशाखीयस्य साग्नेरप्यष्टकाकर्मणि स्वस्तरादि न स्यादविधानादिति, न नमो व इत्यस्य पाठः । एतद् वः पितरो वासः इत्यस्यैव परं पाठः, पिण्डपात्रप्रक्षालनजलेन प्रत्यवनिज्य अत्र पितरो मादयध्व-मित्यादेः पाठः, पिण्डे गन्धादिकं दत्त्वा वसन्तायेत्यादिना षडृतुनमस्कारः पूर्वलिखितब्रह्म-पुराणात् ।" इत्युक्त्वा मन्त्रस्यास्य सूत्रदाने पाठं स्वीकुर्वन्ति । निर्णयसिन्धावप्येवमेव । एवञ्च यद्यप्यत्र सूत्रे गोभिलाचार्येण मन्त्रस्यास्योल्लेखो न कृतः, तथाऽपि मन्त्रब्राह्मणस्यास्य

1. '-देव सिद्धेः' ख । 2. '-श्राऽऽशङ्का' ख । 3. '-नमत-' ख । 4. '-प्रज्ञापनार्थ-' ख । 5. 'चपि' नास्ति ख । 6. '-विधिनिवृत्त्यर्थं-' ख । 7. 'न' ख ।

निदध्यादिति(A)। इदानीमेतच्चिन्त्यते—किमाहिताग्नेः श्रौतस्मार्तयोः पिण्डपितृयज्ञयोः

मन्त्रस्य विनियोगान्तराभावादत्रैव विनियोग उपयुक्त इति भाष्यकाराणां निबन्धकारणां निबन्ध-कारणां च मतमेव न्याय्यः। न तु केचाञ्चिदाधुनिकप्रयोगकाराणां प्रयोगेऽनुक्तत्वात् मन्त्रस्यास्य पाठो नास्तीत्यवगन्तव्यमिति।

A. न तु प्रत्येकं पिण्डेष्वित्यर्थः। अत्र तर्कालङ्कारः—"अपूर्वं त्वत्र वासो विधीयते, अतस्तदेकत्वमपि प्रत्येकत्ववद् विवक्षितं भवितु युक्तम्। तदस्माद् वैकृताद् विशेषोपदेशात् प्राकृतं प्रत्येकं वाससो निधानं निवर्तते। न ह्येकं वासः प्रत्येकं शक्यं निधातुम्। तस्माद् 'एतद् वः पितरो वासः' इति मन्त्रे बहुवचनान्तपितृपदोपादानात् सूत्रे मन्त्रे च वासस एकवचनसंयोगाच्च तन्त्रेण त्रीन् पित्रादीनुद्दिश्यैकमेव वासः पिण्डत्रये निधातव्यम्। पित्रादित्रिके त्वस्मिन् प्रदेशे बहुवचनान्तस्य पितृशब्दस्य प्रयोग इति ब्रवीयाम। अत एव कर्मप्रदीपे कात्यायनः—

अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने।

तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एव च॥ क० प्र० १।४।८।

इत्यर्घ्यादौ तन्त्रविनिवृत्तिं ब्रुवाणः परिगणितव्यतिरिक्तेषु तन्त्रमभ्यनुजानाति। अन्यथा परिगणनानर्थक्यापत्तेः, अर्घ्यादिवद् वासोनिधानमपि वा परिगणयितव्यं स्यात्। अथैवं कात्यायनस्योपजीव्यविरोधः। आचार्यो ह्यन्वष्टक्यकर्मणि प्रत्येकं वाससः प्रदानं सूत्रयाञ्चकार। नैष दोषः, अन्यत्रैतदभिधानात्। अभविष्यत् कात्यायनस्योपजीव्यविरोधो यद्यसावन्वष्टक्यकर्मणि एतदभ्यधास्यत्, न तु तत्रैतदभ्यधात्, किन्तु ततोऽन्यत्रैव तेनेदमभ्यधायि। अन्वष्टक्यादन्यच्च श्राद्धजातं साक्षात् परम्परया वा पिण्डपितृयज्ञेन विक्रियते स त्वन्वष्टक्यस्याळीपाकेन। पिण्ड-पितृयज्ञे चैकत्वाद् वाससः प्राकृतं वाससो बहुत्वं निवर्तते। तस्मान्नास्त्युपजीव्यविरोधः।

ननु तथाऽपि विरोध एव। कथम्? उच्यते—अन्वष्टक्ये तावत् प्रत्येकं तिलोदकदानमुक्त-माचार्येण न चात्र तन्निषिद्धम्। तस्मादत्र यथानेन विक्रियते तत्र च तत् करणीयं भवति। तत्र यदि प्रत्येकं क्रियेत तदा परिगणनानर्थक्यप्रसङ्गः। अथ तदर्थवत्त्वार्थं तन्त्रेण क्रियेत तर्हि आचार्यसूत्रविरोधः। नैष दोषः, कुतः? विषयभेदोपपत्तेः। आचार्येण ह्यन्वष्टक्ये प्रत्येकं तिलोदकदानमुक्तम्, कात्यायनोऽपि—

तूष्णीं पृथगपो दद्यान्मन्त्रेण तु तिलोदकम्।

इत्यनेन तत्र तथैवाऽऽह। अन्यत्रैव तु तेनार्घ्यादिव्यतिरिक्तेषु तन्त्रमनुज्ञातम्, न प्रकृतौ, तत्र तथाभ्यनुज्ञाने विरोधो भवेत्, न त्वेवम्। चोदको हि विकृतावुपकारकाकाङ्क्षिणा-मुपकारकान् प्राकृतान् पदार्थान् प्रापयति; क्रमश्चोपकुर्वतां तेषां साहाय्यं कुर्वन् गुणभूतः। उत्तरकालं हि प्रयोगप्राप्तुभावाय क्रमस्यापेक्षा भवति। यथा चातुर्मास्येषु तृतीये पर्वणि प्रातर्मध्यन्दिने सायमित्यहः कालेष्विष्टीनामवगमात् तदृत्कालतायां विवेकाभावात् प्राकृत-

स्मार्तस्य निवृत्तिः स्यादुत समुच्चयः [1]स्यादाहोस्विद् विकल्प इति ? उच्यते—स्मार्तस्य "निवृत्तिस्तावन्न भवति[2]*, कुतः ? उपदेशानर्थक्यप्रसङ्गात् ; समुच्चयोऽपि न भवत्येकार्थत्वात् । तत्रैक आहुः—परिशेषात् समानार्थत्वाच्च विकल्पो युक्त इति । अन्ये तु—श्रौतस्य निवृत्तिमिच्छन्ति स्वशाखायामेव विधाने सति पारशाखिकस्य कर्तुमयुक्तत्वात् । युक्तञ्चैतत्, कुतः ?

प्रक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।
प्रक्रिया च परोक्ता च तृतीया चायथाक्रिया ॥
स्वशाखाश्रयमुत्सृज्य परशाखाश्रय"न्तु यः ।
कर्तुमिच्छति दुर्मेधा मोघं तत् तस्य चेष्टितम् ॥
यन्नाऽऽम्नातं स्वशाखायां परोक्तमविरोधि च ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्(A) ॥

इति वचनत्रयसामर्थ्यात् । तस्माच् छन्दोगानां श्रौतस्य निवृत्तिरिति युक्तम्(B) ।

---

धर्मस्य द्व्यहकालत्वस्य लोपः, एवमिहापि परिगणितव्यतिरिक्तेषु तन्त्रानुमानात् प्राकृतधर्मस्य प्रत्येकं दानस्य लोपः स्यात् । तथाचोक्तम्—'अपि वा क्रमकालसंयुक्ताः सद्यः क्रियेत यत्र विधेरनुमानात् प्रकृतिधर्मलोपः स्यादि'ति । यथा कृष्णलचरौ प्रकृतौ भक्षाणां विहृतत्वात् चोदकेन विहृतानां प्राप्तत्वेऽपि सहभक्षाणां समर्पणम्, तथा अत्रापि प्रकृतौ तिलोदकस्य प्रत्येकं दानात् चोदकेन तथाभूतस्य प्राप्तावपि तन्त्रेणैव तद्दानम् । ननु कृष्णलचरौ 'एकधा ब्रह्मणे परिहरति' इति वचनात् सहसमर्पणम् । तथाचोक्तम्—'एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वाद्' इति । उच्यते—इहापि 'अर्घ्येऽक्षय्योदके चैव' इत्यादिवचनात् परिगणितव्यतिरिक्तेषु तन्त्राभ्यनुज्ञानाद् वचनावगतमेव तन्त्रमनुष्ठानमिति समासम्" इत्याह । रघुनन्दनादयस्तु प्रत्येकं पिण्डेषु सूददानं प्रमाणयन्ति, तत्र भगवन्तोऽनूचानाः प्रमाणम् ।

A. कर्मप्रदीपः १।३।१—३ ।

B अपि च पूर्वंत्रोदपात्रान्तं पिण्डपितृयज्ञस्य सूत्रयन्नाचार्यः पारशाखिकं श्रौतं नानुमन्यते । श्रौते पिण्डपितृयज्ञे स्वधावधानाजिघ्रणादिकमप्युदकनिषेकात् परतः श्रूयते । अपरे तु गृह्याग्निमतः स्मार्त एवाऽऽचार्यसम्मतः पिण्डपितृयज्ञः, श्रौताग्निमतस्तु पारगामिकोऽपि श्रौत एव अग्निहोत्रादिवदिति । तत्र भगवन्तोऽनूचानाः प्रमाणम् ।

अथ पिण्डपितृयज्ञप्रयोग उच्यते—अन्वष्टक्यस्थालीपाकवत् पिण्डपितृयज्ञः कर्तव्यः । मांसचरुं ब्राह्मणभोजनञ्च वर्जयेत्, स चामावास्यायामन्वाधानदिनेऽपराह्णे कर्तव्यः । पिण्डपितृयज्ञं कृत्वा तस्मिन्नेव दिने मासश्राद्धं च ब्राह्मणभोजनपिण्डसहितं कर्तव्यम् । आहिताग्नेर्दक्षिणाग्नौ हविष्यश्रपणं

---

1. 'स्यात्' नास्ति घ । 2. 'तावन्निवृत्तिर्न भवति' ख । 3. '-च' ख ।

अन्वष्टक्यप्रसङ्गेन पिण्डपितृयज्ञमभिधाय इदानीं पुनरेवाष्टकाप्रकरणशेषमाह—

**माघ्या ऊर्ध्वमष्टम्यां स्थालीपाकः ॥ १७ ॥**

माघस्य पौर्णमासी माघी, तस्या ऊर्ध्वमष्टम्यां स्थालीपाकः, कर्तव्य इति शेषः। अष्टकायै त्वेति निर्वापः।

**तस्य जुहुयाद्(A) अष्टकायै स्वाहेति जुहोति ॥ १८ ॥**

तस्य स्थालीपाकस्य, अष्टकायै स्वाहेति जुहुयात्, पकेनैव जुहोतिशब्देन सिद्धत्वात् पुनर्जुहोतिग्रहणं [2]शाकचरोरपि तन्त्रेणैव होमप्रज्ञापनार्थम्।

---

तस्मादतिप्रणीताग्नौ होमः। अनाहिताग्नेर्गृह्याग्नौ हविषस्संस्करणम्। ततोऽतिप्रणीताग्नौ होमः, अमावास्यायामपराह्णे वैश्वदेवबलिहरणं कृत्वा पितॄणां तृप्त्यर्थं पिण्डपितृयज्ञं करिष्ये इति सङ्कल्प्य गृह्याग्निमुपसमाधाय प्राचीनावीती अग्नेः पश्चाद् दर्भेषूलूखलं मुसलं शूर्पमाज्यस्थालीं चरुस्थालीं पवित्रं व्रीहीन् मेक्षणं दर्वीं त्रीण्युदकपात्राणि स्रुवं शङ्कुं समूलबर्हिर्मुष्टिं क्षौमदशां समूलकुशान् समिद्द्वयम् एकां पिञ्जूलीं कांस्यपात्रं तिलांश्च दक्षिणापवर्गमासादयेत्। अथाग्नेः पश्चाद् दक्षिणाग्र-दर्भेषूलूखलं संस्थाप्य व्रीहिनिर्वापप्रभृति चरुश्रपणान्तं कर्म अन्वष्टक्यस्थालीपाकोक्तविधिना कुर्यात्। ततोऽग्नेर्दक्षिणतश्चरुमुद्वास्याग्नेर्दक्षिणत एकं गर्तं कुर्यात्। गर्तस्य दक्षिणतः पञ्चभूसंस्कारान् कृत्वा तत्र गृह्याग्नेरेकदेशं प्रणयति। ततो बर्हिषा प्रणीतमग्निं समूलकुशैर्दक्षिणाग्रैर्गर्तमध्ये च परिस्तरेत्। गर्तस्य पश्चाच्च प्रस्तरासादनम्। अनुज्ञाभ्यनुज्ञनवन्दनानां नाऽऽसादनं निषेधात्। अत्र ब्राह्मण उपवेशनम्। ततः पूर्ववत् पात्रेषु तिलोदकं दद्यात्। नात्राग्नौकरणस्यानुज्ञा ब्राह्मणाभावात्। पूर्ववन्मेक्षणेन चरुमवदायाऽऽहुतिद्वयं कुर्यात्। अत ऊर्ध्वं प्राचीनावीती गर्तलेखाकरणं पूर्ववत् कुर्यात्। नात्रोल्मुकनिधानं निषेधात्। अथ गर्तमध्ये स्तरणम्, तत आवाहनम्। ततो रेखायां दर्भेषूदकावनेजनं पिण्डस्थापनं पर्यावर्त्य जपश्च पूर्ववत् कुर्यात्। नात्रानुज्ञाभ्यनुज्ञ-वन्दनदानानि नमस्कारश्च, निषेधात्। ततोऽभिक्रान्तजपः। ततः पत्न्यवेक्षणं पिण्डावेक्षणं वासोनिधानं चावशिष्टानि पूर्ववत् कुर्यात्। वासोनिधाने न पूर्वोक्तो मन्त्रः, किन्तु यथा मन्त्रकाण्ड-पठितः। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्गायत्री छन्दो वासो देवता पिण्डे वासोदाने विनियोगः ॐ एतद्वः पितरो वासः। इति। ततः पिण्डपरिषेचनम्, मध्यमपिण्डदानम्, पात्रक्षालनजले पिण्डप्रक्षेपणञ्च। इति। केचित्तु पिण्डपितृयज्ञविधेरन्वष्टक्यस्थालीपाकातिदेशाद् वासोनिधानं तत्रोक्तमन्त्रेणैव, अत्र विशेषानुक्तेः। मन्त्रकाण्डपठितमन्त्रः सूत्रान्तरविषयो भवितुमर्हतीति युक्तमित्याहुः। तन्न; प्रागेव ४।४।१६ सूत्रस्थटीकायां मतस्यास्य निरासादिति। ( पृ० ७७८ )

A. 'तस्य जुहुयात्' इति पृथक् सूत्रमिति कल्पयतः सामश्रमि-तर्काळङ्कारौ।

---

1. 'एव' नास्ति र। 2. 'शाकचरो-' ख।

तथाचोक्तम्— शाकञ्च फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत् ।
यस्तु शाकादि[1]होमः स कार्योऽपूपाष्टकावृता(A) ॥ इति ।

## स्थालीपाकावृताऽन्यत् ॥ १९ ॥

उक्तार्थम् ।

## [2]शाकं व्यञ्जनमन्वाहार्यम् ॥ २० ॥

अनु पश्चात् ओदनचरोः आह्रियते [3]क्रियते इत्यन्वाहार्यश्चरुः, स [4]च ओदनव्यञ्जनार्थः । कुत एतत् ?

ओदनव्यञ्जनार्थं तु पश्वभावेऽपि पायसम्(B) ।

इति पूर्वा[5]ष्टकायां विधानात् सामान्यन्यायत्वादत्र मांसव्यञ्जनस्थाने शाकं नियमयति "शाकं व्यञ्जनमन्वाहार्यमिति"[6]* । न चान्वाहार्यशब्देन श्राद्धमुच्यते 'नाष्टकासु भवेत् श्राद्धमि'ति [7]निषेधात्(C) । [8]सर्वाण्येवान्वाहार्यवन्तीत्युक्तं पुरस्तात् [ सू० १।१।१५ ] । तत्र ब्राह्मणभोजनार्थं व्यञ्जनस्यानियमे प्राप्ते शाकाष्टकायां शाकव्यञ्जननियमः क्रियते । कश्चिदत्र छागं व्यञ्जनमन्वाहार्यम् इति पाठं कृत्वा छागमांसं व्यञ्जनार्थमाह । तदयुक्तम्, कुतः ? वृद्धिश्राद्धापवर्गभोजनयोर्मांसभोजनप्रतिषेधात् । तस्मात् यथोक्त एव पाठोऽर्थश्च[8]*(D) ।

## अथ पितृदेवत्येषु पशुषु—वह वपां जातवेदः पितृभ्य इति वपां जुहुयात् ॥ २१ ॥

अथशब्दः पूर्वप्रकृतायाः पश्वितिकर्तव्यताया अनुवृत्त्यर्थः । पित्रर्थमालम्भो येषां

A. कर्मप्रदीपः २।७।२३ ।

B. कर्मप्रदीपः ३।१०।८ । उक्तं वचनमिदं प्राक् ४।१।२२ सूत्रभाष्ये ( पृ० ७२४ )

C. 'नाष्टकासु भवेत् श्राद्धं न श्राद्धे श्राद्धमिष्यते' इत्यादिकर्मप्रदीपवचनम् ( १।५।४ ) उक्तं प्राक् १।१।१५ सूत्रभाष्यपादटीकायाम् ( पृ० ८ )

D. अथ शाकाष्टकाप्रयोग उच्यते—सा च माघमासे पौर्णमास्या अनन्तरं कृष्णाष्टम्यां कर्तव्या, अस्याः प्रयोगोऽपूपाष्टकाप्रयोगवत् कर्तव्यः । अत्रापूपानां निवृत्तिः । ओदनचरुं कृत्वा शाकव्यञ्जनं अपयेत् शाकव्यञ्जनं चरुञ्च पृथक् मेक्षणाभ्यां तुल्यवदाय मिश्रीकृत्य अष्टकायै स्वाहेति जुहोतीति विशेषः । इति ।

1. '-होमस' ख । 2. 'शाकं च' ख । 3. 'पच्यते' ख । 4. 'च' नास्ति च । 5. '-ष्टका-विधानात्' ख । 6. 'शाकव्यञ्जनमन्वाहार्येऽपि' ख । 7. 'निषेधति' ख । 8. नास्ति ख ।

पशूनां क्रियते त इमे पितृदेवत्याः । [1]ते च श्रोत्रियेऽभ्यागते श्राद्धं महोक्षेण महाजेन वा वधादित्येवमादयः (A)शास्त्रान्तरसिद्धा [2]उपादेयाः, स्वशास्त्रे विधानाभावात् । तेषु पितृदेवत्येषु पशुष्वयं विशेषः (B)वह वपामित्यनेन मन्त्रेण वपां जुहुयात् । ओदनचरोश्चात्र पितृभ्यस्त्वेति निर्वापः स्यात् [3]पित्र्यत्वात् । एवञ्च सव्योत्तराभ्यां [4]'सकृदवहन्यात्, सकृच्च फलीकुर्यात्, सकृच्च प्रक्षालयेत्, प्रसव्यं चावघट्टयेत्, दक्षिणतश्चोद्वासयेत्, न च प्रत्यभिघारयेदिति । अष्टर्चस्य [5]चात्र निवृत्तिः स्यात्, कुतः ? मन्त्रलिङ्गविरोधात् । एवञ्चावदानानि सन्नीय त्रिधा विभागमकृत्वैव सकृदेव सर्वमवदाय पितृभ्यः स्वाहेति जुहुयात्; पशुप्रोक्षण[6]निर्वापप्रधान[6]होमाश्चात्र प्राचीनावीतिना कर्तव्याः । कुतः ? [7]पित्र्यत्वात् ।

तथाचोक्तम्—

> प्राचीनावीतिना कार्यं पित्र्येषु प्रोक्षणं पशोः ।
> दक्षिणोद्वासनान्तञ्च चरोर्निर्वपणादिकम् ॥
> सव्यश्चावदानानां प्रधानार्थो न हीतरः ।
> प्रधानहवनञ्चैव शेषं प्रकृतिवद् भवेत् (C) ॥ इति ।

## देवदेवत्येषु जातवेदो वपया गच्छ देवानिति ॥ २२ ॥

---

A. प्रमाणत्वेन परिगृह्योपन्यस्तं वचनमिदं तर्कालङ्कारेणापि ।

B. मन्त्रस्तु—

> ॐ वह वपां जातवेदः पितृभ्यो यत्रैतान् वेत्थ निहितान् पराचः ।
> मेदसः कुल्या अभि तान् स्रवन्तु सत्या एषामाशिषः सन्तु कामाः (स्वाहा) ॥
> इति मन्त्रब्राह्मणम् २।३।१८ ।

अस्य व्याख्या—हे जातवेदो जातप्रज्ञ, जातधनाग्ने, वपां वपारूपं हविः पितृभ्यो वह प्रापय, पितरो विशिष्यन्ते, यत्र यस्मिन् स्थाने एतान् पितॄन् पराचोऽवाङ्मुखान् 'हविः कदा गच्छती'ति आकाङ्क्षमाणान् इत्यर्थः, निहितान् स्थापितान् वेत्थ जानासि, किञ्च मेदसः कुल्या वपारसस्य प्रवाहाः, तान् पितॄन् अभि सर्वतः, स्रवन्तु प्रवहन्तु । एषामिदानीं प्रार्थिता वपाप्रापणादय आशीरूपाः कामाः सत्याः सन्तु अवितथा भवन्तु । स्वाहा इदं द्रव्यं सु आहुतमस्तु । सामश्रमी त्वत्र कामात् इति पठित्वा इच्छात इति व्याचख्यौ, तस्याऽऽकरस्तु मृग्य इति ।

C. कर्मप्रदीपः ३।१०।१३-१४ ।

---

1. 'तेन' ख । 2. 'उपदेयात्' ख । 3. 'पित्र्यत्वात्' ख । 4. 'सकृदवहन्यात्' ख । 5. 'च' नास्ति ख । 6. 'निर्वापः' ख । 7. 'पित्र्यत्वात्' ख ।

[1]देवार्थमालम्भो येषां पशूनां क्रियते त इमे देवदेवत्याः, यथा वास्तुकर्मणि कृष्णया गवा यजेतेति [सू० ४।७।२३], तथा तन्त्रान्तरे काम्येषु हिरण्यकामोऽमावास्यायां [2]मणिभद्रं रोहितेना[3]जेन यजेत गोऽश्वकामः पौर्णमास्यां श्वेतेनेति(A)। तेषु देवदेवत्येषु [4]पशुषु जातवेद (B) इत्यनेन मन्त्रेण वपां जुहुयात्। [5]तत्र वास्तुकर्मणि [6]वास्तोष्पतये त्वेति निर्वापः। [7]होमे तु विशेषं वक्ष्यति [8]मणिभद्रयागादिषु [9]मणिभद्राय त्वेत्यादि-[10]निर्वापः, मणिभद्राय स्वाहेति होमः[10]*। समानमन्यत्।

कथमेतज् ज्ञायते [11]यन्मणिभद्रयागादिषु [12]मणिभद्राय त्वेत्यादि निर्वापहोमा भवन्तीत्यत आह—

## अनाज्ञातेषु तथादेशं यथाऽष्टकायै स्वाहेति जुहोति ॥२३॥

येषु चरुकर्मसु होममन्त्रस्याऽऽ[13]ज्ञातनिर्देशो नास्ति यथा समशनीयोपनयन[14]व्रतान्तनवयज्ञादिषु[14]*, येषु च होममन्त्राज्ञाने सति देवताया [15]ज्ञानं नास्ति[15]* यथा आग्रहायण्याम्, येषु च [16]न होममन्त्रस्य ज्ञानं[16]* न देवतायाः यथा चैत्र्याम्, तानीमानि [17]सर्वाण्यनाज्ञाता[17]*न्युच्यन्ते, [18]तेष्वनाज्ञातेषु[18]* कर्मसु निर्वाप[19]काले होमकाले च देवतानाम्न आदेशमुच्चारणं तथा कुर्यात्। कथम्? यथाऽष्टकायै स्वाहेति[20] जुहोतीति। किमनेनोक्तं

A. प्रमाणत्वेनोपन्यस्तं तन्त्रान्तरवचनमिदं तर्काङ्कारेणाप्यत्र सूत्रे।

B. मन्त्रस्तु—

ॐ जातवेदो वपया गच्छ देवांस्त्वं हि होता प्रथमो बभूव।
सत्या वपा प्रगृहीता मे अस्तु समृध्यतां मे यदिदं करोमि॥ इति।

मन्त्रब्राह्मणम् २।३।१९।

अस्य व्याख्या—हे जातवेदः पूर्वोक्तलक्षणाग्ने, त्वं वपया वपारूपेण हविषा सह देवान् गच्छ प्राप्नुहि। त्वं हि खलु, देवानां मखे प्रथमभावी मुख्यो होता बभूव बभूविथ, किञ्च मे मत्सम्बन्धिनी प्रतिगृहीता होमार्थं प्रसारिता वपा सत्याऽस्तु देवैः स्वीकृता भवतु। नहि देवार्थं त्यक्तं हविर्देवप्राप्तिमन्तरेण सत्यं भवति। मे मदीयम् इदं कर्म समृध्यतां सम्यग् वर्धताम्। यदिदं वपाप्रापकरूपम् आचार्यमस्ति तदग्निः करोतु। इति।

1. 'दैवतार्थ-' ख। 2. 'माणिभद्र'' ष। 3. 'चैत्रेण' नास्ति ख। 4. 'पशुषु' नास्ति ख। 5. 'तदत्र' ख। 6. 'वास्तोष्पत इति' ष। 7. 'होमेषु' ख। 8. 'माणिभद्र-' ष। 9. 'माणि-' ष। 10. नास्ति ख। 11. 'यन्माणि-' ष। 12. 'माणि-' ष। 13. '-ज्ञाज्ञानिर्देशो' ख। 14. '-व्रतान्त नवयज्ञादिषु इति' ख। 15. 'चाज्ञानं' ख। 16. 'होममन्त्रस्याज्ञानं' ख। 17. 'सर्वाण्याज्ञाता-' ख। 18. 'तेष्वज्ञातेषु' ख। 19. 'काले' नास्ति ख। 20. 'इति' नास्ति ख।

भवति ? देवतानामभिरेव चतुर्थ्यन्तैर्निर्वापहोमाः कर्त्तव्या इति। यथा समशनीयचरावग्नये त्वेत्यादिनिर्वापोऽग्नये स्वाहेत्यादिहोम इति। अष्टकादृष्टान्तेनैतद् दर्शयति—यथाव्यक्तलिङ्गो होममन्त्रो यथाग्रहायण्याम्, तत्र यदेव कर्मणो नाम सैव देवतेति प्रत्येतव्यम्। यथाऽष्टकायाम् अष्टकायै त्वेति '[1]निर्वपति, अष्टकायै स्वाहेति'* जुहोति '[2]एवमाग्रहायण्यामाग्रहायण्यै त्वेति '[3]निर्वपति आग्रहायण्यै स्वाहेति जुहोतीति'*, '[4]तथा चैत्र्यां चैत्र्यै त्वेति निर्वपति चैत्र्यै स्वाहेति जुहोतीति'[5]।

## स्थालीपाकावृताऽन्यत् ॥ २४ ॥

[6]उक्तार्थम्। (A)इदानीमेतच्चिन्त्यते—[7]किमेते अष्टकादयः पाकयज्ञाः सकृत् कर्तव्या उत [8]प्रत्यब्दमिति ? तत्रैके आहुः—अष्टकादीनां पुरुषसंस्कारार्थत्वात् पुरुषस्य च सकृत्करणेनैव संस्कृतत्वात् सकृत् कर्त्तव्या इति। अन्ये तु—

तस्मादुत्सृज कौन्तेय गोवृषान् प्रतिवत्सरम्।

इति पुराणवचनात्,

सकृदप्यष्टकादीनि कुर्यात् कर्माणि यो द्विजः।
[9]स पङ्क्तिपावनो भूत्वा लोकान् प्रैति घृतश्च्युतः(B) ॥

इत्यत्र श्लोके अपिशब्दश्रवणाच्च[10] प्रत्यब्दमावृत्तिं[11] मन्यन्ते। अन्ये तु—ज्ञापकज्ञापितत्वाच्च प्रत्यब्दमावृत्तौ नात्यन्तनियममाहुः। [12]ततश्चाऽऽवृत्तावभ्युदयः, अनावृत्तावपि न प्रत्यवाय इति; तदत्र[13] भगवन्तो भूमिदेवाः प्रमाणम्(A*)। प्रकृतमधुनोच्यते—'[14]ऋणदायिनोऽष्टकादिकर्मफलभाजो'* भवन्ति, नेतरे। उक्तञ्च—

अग्निहोत्री तपस्वी च ऋणवान् म्रियते यदि।
अग्निहोत्रं तपश्चैव सर्वं तद् [15]धनिनो भवेत् ॥

तथा—　ऋणं ये न प्रयच्छन्ति बुद्धिमोहात् कथञ्चन।
धनदातुस्तदीयं स्यात् [16]पुण्यं ते च पुरोहिताः(C) ॥ इति।

अतोऽवश्यमृणं देयम्।

---

A. ग्रन्थभागोऽयं तर्कालङ्कारेण चतुर्थप्रपाठकस्य प्रथमकण्डिकाशेषसूत्रव्याख्यानावसरे निवेशितः। अत्र च भाष्योल्लिखितम् अन्ये त्विति मतं तेनाप्युरीकृतम् इति।

B. कर्मप्रदीपः ३।७।१९।

C. प्रमाणत्वेन गृहीतेयं वचनद्वयी तर्कालङ्कारेणापि स्वभाष्ये।

---

1. नास्ति ख। 2. 'एवमाग्रहायण्यां' नास्ति ख। 3. 'निर्वपतीति' ख। 4. 'यथा' ख। 5. 'इति' नास्ति ख। 6. 'उक्तार्थम्' ख। 7. 'किमनेन' ख। 8. 'प्रतिवर्ष-' ख। 9. 'सपङ्क्ति-' ख। 10. 'च' नास्ति ग। 11. 'आवृत्ति'' नास्ति ख। 12. 'तत आवृत्ता-' घ। 13. 'तत्र' च। 14. 'ऋणदा अपि नाष्टकाफलभागिनो' ख। 15. 'धनिनां' ख। 16. 'पुण्यं चैव पुरोहितः' ख।

यदा पुनर्धनिकाभावोऽन्येषां च तद्रिक्थभाजां तदा ऋणिकेन किं कर्तव्यमित्यत आह—

**ऋणे प्रज्ञायमाने गोलकानां मध्यमपर्णेन जुहुयात्—यत् कुसीदमिति ॥ २५ ॥**

ऋणं प्रकर्षेण ज्ञायमाने नष्टे विनष्टे वा धनिनि तत् सकुल्येषु [1]चासत्सु A) गोलकानां पलाशानां(B) मध्यमपर्णेन 'आज्यहोमं चोदनासु' इति वचनाद् यावत्-प्रमाणमृणं तावदाज्यं क्रीत्वा (C)यत् कुसीदमित्येतं मन्त्रमभ्यस्य तावत् जुहुयाद् यावत् सर्वहोम इति । क्षिप्रहोमश्चायम् ।

---

A. अत्र तर्कालङ्कारः—"ऋणानाञ्चानपक्रिया' इति चोपपातकगणनायां मनुनोक्तम् । यदि पुनरत्यन्तमेवाधनो न शक्नोति तदपाकर्तुं तदैवं जुहुयादिति । अन्ये तु वर्णयन्ति नष्टे धनिके तद्रिक्थभागिनि च ऋणापाकरणासम्भवे जुहुयाद् इति । तदसङ्गतम्, कस्मात् ? राज्ञोऽप्यन्तत-स्तद्रिक्थभाक्त्वात् । नहि कदाचिदपि राज्ञोऽभावोऽस्ती"त्युक्त्वा भाष्यकारमाक्षिपति, सोऽय-माक्षेपः प्रेक्षावद्भिरुपेक्षणीयः, राज्ञां ब्राह्मणधनानधिकारित्वात् । तथाच विष्णुः—"अपुत्रधनं पत्न्यभिगामि । तदभावे दुहितृगामि । तदभावे पितृगामि । तदभावे मातृगामि । तदभावे भ्रातृगामि । तदभावे भ्रातृपुत्रगामि । तदभावे सकुल्यगामि । तदभावे बन्धुगामि । तदभावे शिष्यगामि । तदभावे सहाध्यायिगामि । तदभावे ब्राह्मणधनवर्जं राजगामीति । वि० सं० १७ । एवञ्च ऋणापाकरणाशक्तावेव होमः । अत्यन्तनिर्धनपक्षोऽपि तद्वर्णित उपेक्षणीय एव । अत्यन्तनिर्धनस्य 'तमिमं होमं यावत्संख्यमृणं तावत्संख्यमिच्छन्तीति' स्ववर्णितर्णसंख्य-होमकरणसामर्थ्यस्य नितरामभावात् प्रमाणवचने 'बुद्धिमोहादि'त्युक्तेश्च । इति ।

B. तदुक्तं कर्मप्रदीपे—

पलाशा गोलकाश्चव लोहचूर्णन्तु चीवरम् । इति क० प्र० ३।९।१८ ।

C. मन्त्रस्तु—

ॐ यत् कुसीदमप्रदत्तं मयेह येन यमस्य निधिना चराणि ।
इदं तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते ददामि ॥ इति ।

मन्त्रब्राह्मणम् २।३।३० ।

अस्य व्याख्या—हे अग्ने, यत् कुसीदम् ऋणतुल्यम् अवश्यं प्रदेयम् अप्रदत्तं मया इह जन्मनि येन प्रदत्तेन विधिना यमस्य सदने चराणि, तत् प्रदेयम् इदम् आज्यं तद् देयं प्रति

---

1. 'चाऽसत्सु' क ।

## अथातो हलाभियोगः ॥ २६ ॥

अथेति पूर्वप्रकृतापेक्षः, यथा पूर्वाण्यष्टकादीनि नित्यानि, एवमिदमप्येतस्मिन् निमित्ते सति नित्यरूपतयैव द्रष्टव्यमिति। अत इति हेत्वर्थः, यस्माद् ब्राह्मणस्यापि कृषिर्जीवनार्थं मन्वादिभिराम्नाता।

ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा(A) इत्यादि।

अतस्तत्रापि यत् कर्म तदुच्यते—हलं लाङ्गलम्, तस्याऽऽभिमुख्येन योगः योजनं हलाभियोगः, कृषिप्रारम्भ इत्यर्थः, वर्तिष्यत इति वाक्यशेषः।

## पुण्ये नक्षत्रे स्थालीपाकं श्रपयित्वैताभ्यो देवताभ्यो जुहुयात् इन्द्राय मरुद्भ्यः पर्जन्यायाशन्यै भगाय ॥ २७ ॥

पुण्ये कर्तुर्बलवति नक्षत्रे। ऋज्वन्यत्। विसमासकरणं निर्वापहोमयोः पृथक् प्रज्ञापनार्थम्।

## सीतामाशामरडामनघां च यजेत ॥ २८ ॥

ऋज्वर्थम्। नन्वत्र कस्मात् 'प्रकृतविभक्त्यतिक्रमः क्रियते? उच्यते—पूर्वासामेव

---

तत् समाधानाय ददामि, अप्रदत्तकुसीदस्थानीयस्य विहितकरणीयस्यैवम् आज्यप्रदानं कुसीद-प्रदानम्। अनृणः तेनाहम् इह जन्मनि एवानृणो भवामीत्यर्थः। इति।

A. मनुसंहिता ४।४। अस्योत्तरार्धन्तु—

सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥ इति।

विवरणन्त्वस्य तत्रैव—

ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥ ४।५।

अनयोः कुल्लूकभट्टोक्ता व्याख्या—

अनापदीत्यनुवर्तते। ऋतादिभिरनापदि जीवेत्। सेवया त्वनापदि कदाऽपि न वर्तेत। अप्रसिद्ध-त्वादृतादीनि व्याचष्टे। अबाधितस्थानेषु पथि वा क्षेत्रेषु वाऽप्रतिहतावकाशेषु यत्र यत्रौषधयो विद्यन्ते, तत्र तत्राङ्गुलिभ्यामेकैकं कणं समुच्चयित्वेति बौधायनदर्शनाद् एकैकधान्यादिगुडकोच्चयनमुञ्छः। मञ्जर्यात्मकानेकधान्योच्चयनं शिलः। उञ्छश्च शिलश्चेत्येकवद्भावः। तत् सत्यसमानफल-त्वादृतमित्युच्यते। अयाचितोपस्थितममृतमिव सुखहेतुत्वादमृतम्। प्रार्थिते पुनर्भैक्षं भिक्षा-समूहरूपं मरणसमपीडाजननान्मृतम्। एतच्च सामेर्गृहस्थस्य भैक्षमपक्वतण्डुलादिरूपम्, न

---

1. 'प्रकृति-' ख।

वरु[1]यागादिसम्बन्धार्थम्, उत्तरास्तु प्राक् स्विष्टकृत आज्येनेज्येरन्। तदेतदुक्तमधस्तादेव(A)।

**एता एव देवताः सीतायज्ञ-खलयज्ञ-प्रवपण-प्रलवन-पर्ययणेषु ॥ २६ ॥**

सीता कृष्टं क्षेत्रम्, तत्र यज्ञः सीतायज्ञः। स च शरद्वसन्तयोः पक्वव्रीहियवशस्यमध्ये क्षेत्रस्य पूर्वार्धे उत्तरार्धे वा शस्य[2]मनुवघ्नतः स्यात्; पक्वं शस्यं क्षेत्रादाहृत्य यत्र खलीक्रियते (B)तत् खलम्, तत्र यज्ञः खलयज्ञः। स चोभयत्र स्यात् शारदे धान्यखले ग्रैष्मिके चेति। कुतः? वक्ष्यत्युपरिष्टाद्दोषपरिहारे। प्रकर्षेण वपनं क्षेत्रे बीजस्योप्तिः [3]प्रवपणम्, प्रशब्दप्रयोगात्'* सर्वस्मिन्नुप्ते यज्ञः। प्रकर्षेण लवनं शस्यलूननं ?(C) प्रलवनम्, प्रशब्दः पूर्ववत्। परीति सर्वतोभावम्, सर्वस्य धान्यस्य [4]कृष्टस्योत्पूतस्य च सतः खलाद् [5]गृहं प्रत्यानयनं पर्ययणम्, एतेषु सीतायज्ञादिषु एता एव पूर्वोक्ता देवता [6]यजेतेति वर्तते। ननु प्रवपणाप[7]क्रमस्य युक्तत्वात् कस्मात् क्रमभेदः? उच्यते—नायं क्रमभेदः, कुतः? शारद-धान्यं प्रति प्रवपणादीनामप्राप्तेः पूर्वयोश्चोभयत्र[8] प्राप्तेरित्यभेदः। एवं चैते सप्त यज्ञा भवन्ति(D) हलाभियोगोऽष्टम इति। उक्तञ्च—"सप्त सीता[9]मखादय" (E)इति। अत्र सन्देहः—एता एवेत्यनेन किमनन्तरोक्ता एव गृह्येरन् उत पूर्वाः पञ्च उत सर्वा इति। तत्रैक आहुः—पूर्वाः पञ्चेति, कुतः? देवता[10]शब्दप्रयोगात् पूर्वास्वेव हि देवताशब्दः प्रयुक्तो नोत्तरासु एताभ्यो देवताभ्यो जुहुयादिति, तदयुक्तम्; कुतः? [11]उत्तरासां परित्यागे

---

* तु सिद्धान्तम्, पराग्निपक्षेन स्वाग्नौ होमाभावात्। कर्षणं च भूमिगतप्रचुरप्राणिमरणनिमित्तत्वाद् बहुदुःखफलकं प्रकर्षेण मृतमिव प्रमृतम् इति।

A. तृतीयप्रपाठकस्याष्टमकण्डिकाद्वितीयसूत्रभाष्ये ( पृ० ६७३ )

B. पक्वं शस्यं च छेदनात् परतः क्षेत्रादाकृष्य यत्र परिष्कृते स्थाने स्थाप्यते तत् खलमित्युच्यते।

C. शस्यच्छेदनम् इत्यर्थः।

D. तथाच सीतायज्ञखलयज्ञयोः शारदे ग्रैष्मिके च करणाच्चत्वारो यज्ञा भवन्ति प्रवपणप्रलवनपर्ययणस्य च सकृत् करणात् त्रय इति. मिलित्वा संवत्सरे सीतायज्ञादयः सप्त सम्पद्यन्ते इति।

E. प्रमाणरूपेणोक्तं वचनमिदं तर्कालङ्कारेणापि।

---

1. '-यागाभि-' ख। 2. '-मनु यतः' ख। 3. 'प्रवपणशब्दप्रयोगात्' ख। 4. 'कृष्टस्योत्पूतस्य' ख। 5. 'गृहान् प्रत्यायनं' ख। 6. 'यजेनेति' ख। 7. 'उपक्रमस्य' नास्ति ख। 8. '-त्र' नास्ति ख। 9. 'मखादय' ख। 10. '-पद-' ख। 11. 'उत्तरायाः' ख।

सीतायाः परित्यागः स्यात्, सीतायज्ञे च तत्परित्यागाद् विरोधः। अन्ये तु—पूर्ववदेवेच्छन्ति पूर्वाः पञ्च चर्वाहुतयः, उत्तराश्चाऽऽज्याहुतय इति; तदप्य[1]युक्तम्, कुतः? एवमित्यवचनात्। अन्ये तु—अनन्तरा एवेच्छन्ति, तदप्ययुक्तम्; कुतः? सर्वनाम्नः प्रकृतप्रा[2]हित्वात्। कथं तर्हि? उच्यते—सर्वनाम्नः प्रकृतप्रा[3]हित्वादेवमित्यवचनाच्च पूर्वा उत्तराश्चाऽऽज्येनैवेज्येरन् इति।

उक्तञ्च—

'केवलाज्यहविष्काः स्युः सप्त सीतामखादयः। (A)इति।

किमेता एव यजेत? न; कथं तर्हि?

## आखुराजं चोत्करेषु यजेत[4]* ॥ ३० ॥

आखुराजो मूषकराजः, तं चोत्करेषु आखूत्कीर्णपांशुषु तदुपद्रवोपशमनाय सीतायज्ञादीनामन्ते क्षिप्रहोमन्यायेनाग्नावाज्येन यजेत।

तथाचोक्तम्—

आज्येनाऽऽखुं यजेदग्नौ तदन्ते नित्यहोमवत्(B)। इति।

आखुराजाय स्वाहेति होमः।

## इन्द्राण्याः स्थालीपाकः ॥ ३१ ॥

कर्तव्य इति शेषः। इन्द्राण्यै त्वेति निर्वापः।

## तस्य जुहुयादेकाष्टका(C) तपसा तप्यमानेति ॥ ३२॥

ऋज्वर्थम्।

---

A. प्रमाणरूपेणोपस्थापितं वचनमिदं तर्काङ्कारेणापि।

B. प्रमाणत्वेनोपस्थापितं वचनमिदं तर्काङ्कारेणापि स्वभाष्ये पाठभेदेन। स च पाठः—'तदन्ते नित्यमेव तत्' इति।

C. 'एकाष्टके'त्यादिमन्त्रस्तु—

ॐ एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्।
तेन देवा असहन्त शत्रून् हन्ताऽसुराणामभवच्छचीभिः॥ इति।

मन्त्रब्राह्मणम् २।३।२१।

अस्य व्याख्या—एकाष्टका संवत्सराभिमानिदेवस्य पत्नीरूपा पुत्रोत्पादनसाधनेन क्लेशसहनरूपेण तपसा तप्यमाना क्लिश्यमाना महिमानं माहात्म्ययुक्तम् इन्द्रं जजान। इन्द्राख्यं गर्भमुदपादयत्। तेनेन्द्रेण देवा अग्न्यादयः शत्रून् स्वनाशयितॄन् असुरादीन् असहन्त अभ्यभावयन्, स च इन्द्रः शचीभिः स्वशक्तिभिः कर्मभिर्वा असुराणां हन्ता घातकोऽभवत्। इति।

---

1. 'अपि' नास्ति ख। 2. ग्राहित्वात्' घ। 3. 'ग्राहित्वा-' घ। 4. 'नास्ति' ख।

## स्थालीपाकावृताऽन्यत् स्थालीपाकावृताऽन्यत् ॥ ३३ ॥

उक्तार्थम्। ननु अस्य कर्मणः कालो न श्रूयते न च निमित्तम्, कस्तर्हि [1]अस्य काल इति ? [2]तत्रैके [3]तावच्चतुरष्टको हेमन्त इति वचनात् चतुर्थ्यष्टकायां च कर्मणोऽनुपदेशात् तद्विषयमेतदिति मन्यन्ते। तदयुक्तम्; कुतः ?[3]* चतुरष्टकपक्षस्य [4]बाधितत्वात्, यथा च बाधस्तदुक्तं पुरस्तादेव। अन्ये तु—चैश्याः पाक[5]यज्ञे पाठात्, कर्मणश्च तत्रानुपदेशात् तद्विषयता[6]मस्याऽऽहुः[6]*। तदप्ययुक्तम्; कुतः ? अनाम्नातेष्विति तस्याः सिद्धत्वात्, एतस्य [7]च हलाभियोगादूर्ध्वमाम्नाना[8]देकाष्टकेति मन्त्रलिङ्गविरो[9]धाच्च। कथं तर्हि ? उच्यते—प्रौष्ठपद्या ऊर्द्ध्वं वर्षाकालभाविन्यामष्टकायामनेन भवितव्यम्। [10]कुतः ? अष्टकाशब्दवाच्यत्वात् तस्याः, एतस्य च हलाभियोगादूर्ध्वमाम्नानात् एकाष्टकेति मन्त्रलिङ्गसंयोगाच्च, इतराभ्योऽष्टकाभ्यो विप्रकृष्टत्वादियमेकाष्टकेत्युच्यते(A)। इन्द्राणीशब्देन चात्रादितिरिन्द्रमाता अभिप्रेता, न चेन्द्रजाया। कुतः[10]* ? मन्त्रलिङ्गात्। ननु कोऽस्य मन्त्रस्यार्थः ? उच्यते—एका चेयमष्टका च एकाष्टका। काऽसौ अदितिः ? इन्द्रस्य माता। सा इन्द्रं जनयितुं तपसा तप्यमाना जजान जनितवती, किम् ? आत्मनि गर्भम्, कीदृशम् ? महिमानं महिशब्दो महन्नाम महामानम् अतिमानिनमित्यर्थः, महिमायुक्तं वा। किंनामानम् ? इन्द्रम्, तेन च जातेनेन्द्रेण देवा मरुत्प्रभृतयः असहन्त सह अभिभवे

---

A. अत्र तर्कालङ्कारः—"का पुनरियमेकाष्टका नाम ? तत्र व्याख्यातारो विवदन्ते माघ्यमन्तरा अष्टका एकाष्टका, इति पूर्वमीमांसाभाष्ये आचार्येण शबरस्वामिना निर्णीतम्। "माघी चैकाष्टका श्रुतेः" इति सूत्रयतो भगवतो जैमिनेरप्येष एवाऽऽशयोऽवधार्यते। 'अन्याऽपीति चेन्न भक्तित्वादेषा हि लोके' इति सूत्रयंस्तत्र भगवान् जैमिनिर्माघ्यनन्तराया अष्टम्या एकाष्टकात्वं लोकप्रसिद्धमित्याह। तथा आपस्तम्बोऽपि—माघ्याः पौर्णमास्या उपरि व्यष्टका तस्यामष्टमी ज्येष्ठा या सम्पद्यते तामेकाष्टकेत्याचक्षते इति सूत्रयन्नेतदेवाऽऽह। महाब्राह्मणभाष्ये तु चैत्र्यनन्तरायामष्टम्यामेकाष्टकाशब्दप्रयोगः समर्थितः। केचित्तु ( भाष्यकारास्तु ) प्रौष्ठपद्या ऊर्ध्वं कालभाविन्यामष्टकायामेतेन भाव्यम् इति वदन्ति, तस्यास्त्वेकाष्टकात्वे न किञ्चित् प्रमाणं पश्यामः। माघ्यनन्तरायास्त्वष्टम्यास्तथात्वन्तु लोकवेदसिद्धमित्यवोचाम। तदत्र भगवन्तो भूमिदेवाः प्रमाणम्" इत्याह।

---

1. 'अस्य' नास्ति ख। 2. 'तत्रैते' ख। 3. नास्ति ख। 4. 'बाधितत्वात्' ख। 5. '-यज्ञपाठात्' ख। 6. 'स्यात्' ख। 7. 'च' नास्ति ख। 8. '-देकाष्टकेति' ख। 9. '-धत्वाच्च' ख। 10. नास्ति ख।

अभिभूतवन्तः, कान् ? शत्रून् । स च गर्भो जातः सन्निन्द्रः कीदृशो'ऽभवत् ? आह—हन्ता हिंसिता, केषाम् ? असुराणां "नमुचिप्रभृतीनाम्, अभवद् भूतवान्। शचीभिः कर्मभिः, 'धीः शची'ति कर्मनामसु पाठात् "यागकर्मनामैतत्, क्रतु'शतयजनादिभिः स्वकर्मभिरित्यर्थः। एतस्मान्मन्त्रार्थाद्वदितिमिन्द्राणीमाह। अजातशत्रुस्तु विभक्तिव्यत्ययेन व्याख्याय "इन्द्रजायामेवेन्द्राणीमाह 'जजान गर्भं महिमानमिन्द्रादि'ति, तदत्र भगवन्तो भूमिदेवाः प्रमाणम्। बृहस्पति-भगवत्तयोर्जपयज्ञप्रसिद्धिकारस्य चादितिरभिप्रेता। अन्त्यसूत्रेऽभ्यासः प्रकरणपरिसमाप्त्यर्थः(A)।

इति "श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये"*
चतुर्थप्रपाठकस्य चतुर्थी कण्डिका ॥

---

A. अथ प्रसङ्गाद् वपाहोममन्त्रादीनां विनियोग उच्यते—पितृदैवत्येषु पशुषु वह वपामिति मन्त्रेण वपां जुहोति। अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवता वपाहोमे विनियोगः। ततो मन्त्रः। इदमग्नये न मम। यद्यप्यत्र गृह्ये आचार्येण अष्टकाव्यतिरिक्तं पितृदैवत्यपशुसहितं कर्म नोक्तम्, तथाऽपि 'श्रोत्रियेऽभ्यागते श्राद्धं महोक्षेण महाजेन वा दद्याद्' इत्यादिशास्त्रान्तरविहितकर्मान्तराभिप्रायेण वपाहोमे मन्त्रविशेष उक्तः। अनुपयोगात् स्पष्टमनुक्तत्वाच्च तस्य प्रयोगो नोक्तः। देवदैवत्येषु पशुषु जातवेदो वपया गच्छेति मन्त्रेण वपां जुहोति प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दस्तत्र तत्रोद्देश्या देवता वपाहोमे विनियोगः। ततो मन्त्रः। एतेषां पशूनां सूत्रान्तरे काम्यत्वावगमात् सूत्रकृद्भिरनुपदिष्टत्वाच्च नात्र प्रयोग उक्तः। येषु चरुकर्मसु होममन्त्रस्यानुपदेशः, तेषु अष्टकायै स्वाहा श्रवणायै स्वाहा इत्यादयो मन्त्रा ऊह्याः। इति।

अथ ऋणनिवृत्तिप्रयोग उच्यते—स्वस्य ऋणे प्रकर्षेण ज्ञायमाने नष्टे धनिनि तद्वर्ण्येषु चासत्सु पलाशानां मध्यमपर्णेन यत् कुसीदमित्याज्याहुतिं जुहुयात्। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽग्निर्देवता होमे विनियोगः। ततो मन्त्रः। यावदृणं तावता द्रव्येणाऽऽज्यं गृहीत्वा होमः कर्तव्यः। अत्र क्षिप्रहोमविधिर्ग्राह्यः। इति।

अथ हलाभियोगप्रयोगः। अयमपि नित्यः काम्यश्च नित्यप्रयोगपठितत्वात्, मन्वादिभिर्ब्राह्मणस्यापि जीवनार्थं कृषिकर्मणोऽभ्यनुज्ञातत्वात्। अस्य नोदगयनापेक्षा असम्भवात्। अथ वसन्त एव पुण्ये नक्षत्रे हलाभियोगकर्माङ्गं नान्दीमुखश्राद्धं ब्राह्मणानुज्ञां गणेशपूजनञ्च कृत्वा हलाभियोगं करिष्ये इति सङ्कल्प्य इध्माबर्हिर्वोरुपकल्पनादि पूर्णपात्रदक्षिणादानान्तं पार्वणस्थालीपाकवत् कुर्यात्। निर्वापकाले इन्द्राय त्वा जुष्टं निर्वपामि, मरुद्भ्यस्त्वा जुष्टम्। एवं पर्ज-

---

1. 'भवेत् ग'। 2. 'मुनि-' ख। 3. 'याग-' नास्ति च। 4. '-मत-' नास्ति ख। 5. 'इन्द्रजायामिव' नास्ति । 6. नास्ति च।

न्याय स्वा, अशन्यै त्वा, भगाय त्वा । आज्यभागान्ते चरुहोमाः । इन्द्राय स्वाहा, इदमिन्द्राय न मम । एवं मरुद्भ्यः, पर्जन्याय, अशन्यै, भगाय । ततः स्विष्टकृतः प्रागाज्यहोमाः । सीतायै स्वाहा, आशायै स्वाहा, अरडायै स्वाहा, अनघायै स्वाहा । दक्षिणादानान्ते वामदेव्यगानं ब्राह्मणभोजनञ्च । एवं कृष्यारम्भे हलाभियोगस्थालीपाकं कृत्वा कर्षणं कुर्यात् । ततः स्वीयक्षेत्रेषु सर्वेषु कृष्टेषु शरदि वसन्ते च सीतायज्ञः क्षेत्रस्य पूर्वार्धे उत्तरार्धे वा कार्यः । ततः सर्वक्षेत्रेषु बीजवपने कृते प्रवपणयज्ञः कर्तव्यः । स्वीयसर्वशस्यलवनानन्तरं प्रलवनयज्ञः कर्तव्यः । पक्वं शस्यं क्षेत्रादाहृत्य यस्मिन् प्रदेशे खलीकृतं तत्र खलयज्ञः कर्तव्यः । खलाद् गृहे धान्ये समागते पर्ययणयज्ञः कर्तव्यः । सीतायज्ञः शरदि वसन्ते च भवति । सीतायज्ञादिषु हलाभियोगस्थालीपाकोक्ता नव देवता आज्येन यष्टव्याः । अत्राऽऽज्यतन्त्रम्, क्षिप्रहोमतन्त्रमिति केचित् । अथ सीतायज्ञादीनामन्ते उक्तकाले क्षिप्रहोमविधिना अन्नावाखुराजाय स्वाहेत्येकामाज्याहुतिं जुहोति । अत्राऽऽखुराजयज्ञं करिष्ये इति संकल्पः ।

अथेन्द्राणीस्थालीपाकप्रयोगः । अस्य स्थालीपाकस्य एकाष्टकेति नामान्तरम् । प्रौष्ठपद्या ऊर्ध्वं कृष्णाष्टम्यामिन्द्राणीस्थालीपाकं करिष्ये इति संकल्प्य सर्वं पार्वणस्थालीपाकवत् कुर्यात् । निर्वापकाले इन्द्राण्यै त्वा जुष्टं निर्वपामीति निर्वापः । आज्यभागान्ते चरुमवदाय एकाष्टका तपसेति मन्त्रेण एकामाहुतिं जुहोति । अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्द इन्द्राणी देवता स्थालीपाकहोमे विनियोगः । ततो मन्त्रः । इदमिन्द्राण्यै न ममेति । ततो वामदेव्यगानान्तं कर्म कर्तव्यमिति ।

## चतुर्थप्रपाठकस्य पञ्चमी कण्डिका

——:::——

उक्तो नित्यनैमित्तिकविधि[1]रथेदानीं पूर्वोक्तेषु वक्ष्यमाणेषु च—

**काम्येष्वत ऊर्ध्वम् ॥ १ ॥**

विधिमुपदेक्ष्याम इति शेषः।

न केवलं काम्येषु, किं तर्हि?

**पूर्वेषु चैके ॥ २ ॥**

पूर्वेषु च नैमित्तिकेषु एष [2]वक्ष्यमाणो विधिर्भवतीत्येके मन्यन्ते।

कीदृशः स विधिरित्यत आह—

**पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्येदं भूमेर्भजामह इति ॥३॥**

पश्चादग्नेरित्यादि व्याख्यातम्(A)। अग्निग्रहणाद्धोम[3]संयुक्तेष्वेतद् भवति। (B)इदं भूमेरिति मन्त्रं जपतीति शेषः। किं यथाम्नातमेव, न; किं तर्हि?

**वस्वन्तं रात्रौ धनमिति दिवा ॥ ४ ॥**

रात्रौ यानि कर्माणि तेषु वस्वन्तं जपति। वसुशब्दोऽन्ते यस्य स वस्वन्तः। दिवा यानि कर्माणि तेषु(C) धनमित्येव[4]मन्तम्।

---

A. गृ० सू० २।१।१९ (पृ० २९१)।

B. मन्त्रस्तु—ॐ इदं भूमेर्भजामह इदं भद्रं सुमङ्गलम्।
परा सपत्नान् बाधस्वान्येषां विन्दते वसु ॥ इति।

C. ॐ इदं ... ... ... धनम्। इति। मन्त्रब्राह्मणम् २।४।१।

अस्य व्याख्या—हे अग्ने, यदिदं भूसम्बन्धि स्थण्डिलं भवताऽधिष्ठितम्, इदं भजामहे सेवामहे, गृह्णीम इति यावत्। किम्भूतमिदम्? भद्रं कल्याणकरम्, इदं सुमङ्गलम्, सुष्ठु प्रशस्तम्, सम-स्यकमित्यर्थः। इदमिति पृथगभिधानमादरार्थम्। किञ्च हे अग्ने, सपत्नान् शत्रून् अस्मत्सम्बन्धान् पराबाधस्व पीडय। किञ्च हे अग्ने, त्वदधिष्ठितम् अग्नेः पश्चाद्भागम्, यो गृह्णाति सोऽपि अन्येषाम् ईश्वराणां सम्बन्धि वसु धनं विन्दते। अत्रान्त्ययोः पदयोरेकार्थत्वात् प्रयोगभेदेन पाठो गृह्ये व्यवस्थितः। इति।

---

1. 'अथ' नास्ति ख। 2. 'वक्ष्यमाणेन' ग। 3. '-संयुक्तेन ह्येतद् भवति' ख। 4. '-मन्त्रः' ख।

## इमं स्तोममिति तृचेन परिसमूहेत् ॥ ५ ॥

परिसमूहनमग्नेर्विक्षिप्तानामवयवानामेकीकरणमुच्यते। तत्तु (A)इममिति तृचेन(B) कुर्यात्।

---

A. इममित्यादीनां प्रथमा ऋक्—

ॐ इमं स्तोममर्हते जातवेदसे रथमिव सम्महेमा मनीषया।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ इति।

द्वितीया ऋक्—

ॐ भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणा पर्वणा वयम्।
जीवातवे प्रतरां साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ इति।

तृतीया ऋक्—

ॐ शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम्।
त्वामादित्याँ आवहतान्ह्युश्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ इति।

मन्त्रब्राह्मणम् २।४।२-४। विनियोगप्रमाणन्तु खादिरगृह्येऽपि १।२।६।

एतासां व्याख्या—तत्र प्रथमायाः—"इमं स्तोमं स्तवं वयं सम्महेम सम्यक् पूजोपकरणयुक्तं कुर्याम जातवेदसे जातविद्यो जातधनो वा जातप्रज्ञो वा जातवेदाः, तदर्थम्; किम्भूताय? अर्हते स्तुतियोग्याय, कया? मनीषया प्रज्ञया, रथम् इव सारथिः। हि यस्मात् नोऽस्माकं अस्याग्नेः सकाशात् प्रसादाद्वा भद्रा कल्याणी शुभा वा प्रमतिः प्रकृष्टा बुद्धिः संसदि जनसमाजे यथा जनम् अपि स्तोतुं जानीमः, तस्माद्धे अग्ने, यः त्वम् एवम्भूतः, तस्य तव सख्ये मित्रत्वे स्थिता वयं केनचिद्दुरात्मना मा रिषामा मा हिंस्यामहै। एतदाशास्महे"। इति।

द्वितीयायाः—हे अग्ने, तदर्थम् इध्मम् अग्निसमिन्धनार्थं काष्ठम् इध्ममुच्यते। तम् इध्मं भराम हराम, हवींषि चर्वादीनि पर्वणा पर्वणा पर्वणि पर्वणि चितयन्तो जानन्तो वयं ते तव कृणवामा सम्पादयाम निर्वापयामेति यावत्। प्रतरां जीवातवे अत्यन्तजीवनाय। हे अग्ने, साधया धियः अस्माभिः क्रियमाणानि कर्माणि साधय निष्पादय, सफलानि कुरु इत्यर्थः। इति।

तृतीयायाः—हे भगवन् अग्ने, त्वं धियः कर्माणि बुद्धिर्वा साधया त्वदाराधनकर्माणि निष्पादय, येन त्वा त्वां समिधं समिद्धं परिचरितुं शकेम इत्येतदाशास्महे। त्वे त्वयि हविः हव्यम्, आ हुतं देवा इन्द्रादयः अदन्ति भक्षयन्ति, त्वन्मुखत्वात् तेषाम्। किञ्च त्वम् आदित्यान् आवह, अदितेरपत्यानि आदित्याः सर्वे देवा उच्यन्ते, तान् आदित्यान् वयम् उशमसि कामयामहे अत्रोद्देश्येनेच्छामहे इत्यर्थः। अग्ने सख्ये मा रिषामेति सर्वत्र तुल्योऽर्थः। इति।

B. त्रयाणामृचां समाहारस्तृचः। ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि (वा०) इति तत् एवं सिद्धम्। छन्दोवत् सूत्राणि कवयः कुर्वन्ति इत्यभ्युपगमात्।

कृत्वाऽग्न्यभिमुखौ पाणी [1]स्वस्थानस्थौ सुसंयतौ[1]* ।

इत्यनेन न्यायेन(A) । किं सर्वत्र ? न, क्षिप्रहोमवर्जम् ; कुतः ? भरामेध्ममिति मन्त्रलिङ्गविप्रतिषेधात् । क्षिप्रहोमेषु शकेम त्वा समिधमिति [2]मन्त्रलिङ्गादविरोध इति चेत् ? [3]न ; कुतः[3]* ? उभयलिङ्गसामर्थ्यादाज्य[4]चरुपशु[4]*तन्त्रेष्वेतद् [5]भवति न क्षिप्रहोमेषु । तथाचोक्तम्—

न कुर्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम्(B) । इति ।

## वैरूपाक्षः पुरस्ताद्धोमानाम् ॥ ६ ॥

विरूपाक्षशब्दोऽस्मिन् विद्यत इति वैरूपाक्षो मन्त्रः विरूपाक्षोऽसीत्येवमादिकः । स पुरस्तात् पूर्वं होमानां होमसंयुक्तानां कर्मणां स्यादिति शेषः । असावपि क्षिप्रहोमवर्जमेव ।

उक्तञ्च—

न कुर्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम् ।
वैरूपाक्षं च न जपेत् प्रपदं च विवर्जयेत्(B) ॥ इति ।

## काम्येषु च प्रपदः ॥ ७ ॥

द्विविधानि काम्यानि होमसंयुक्तान्यहोमसंयुक्तानि च । तत्र [6]वैरूपाक्षो होमः होमसंयुक्तेषु[6]*, प्रपदश्चोभयेषु होमसंयुक्तेष्वहोमसंयुक्तेषु च । होमसंयुक्तेषूभावपि मन्त्रौ जप्तव्यावित्युक्तम्(C) ।

A. प्रथमप्रपाठकस्य तृतीयकण्डिकायां प्रथमसूत्रभाष्यपादटीकायामुक्तमिदं कर्मप्रदीपवचनम् । ( पृ० पृ० ४९ ) ।

B. उक्तं कर्मप्रदीपवचनमिदं प्राक् प्रथमप्रपाठकस्य तृतीयकण्डिकाप्रथमसूत्रभाष्ये ( पृ० पृ० ४८ ) ।

C. अत्र तर्कालङ्कारः—"तदिदं काम्यपदं होमादन्येषामपि काम्यानां ग्रहणार्थम् । काम्येष्वत ऊर्ध्वम् इति खल्वाचार्यः सहोमकान्येव काम्यान्यभिप्रेत्य सूत्रयाञ्चकारेति लिख्यते । अत एव चशब्दः सहोमकानां समुच्चयार्थः । अथवा 'पूर्वेषु चैके' इत्युभयेषामधिकारात् पूर्वेष्वप्ययं विधिः स्यात् ; अतस्तन्निरासार्थं काम्यग्रहणम् । चशब्दमेवकारार्थं वर्णयतस्तस्यकारस्याप्येवैव वर्णना अनुमतेति गम्यते । एवञ्च पूर्वाणि पूर्वेष्वपि प्राप्तानीति बोद्धव्यम्" इत्याह ।

1. नास्ति घ । 2. 'समिधलिङ्गा-' ख । 3. नास्ति ख । 4. '-पशुचरु-' ख । 5. 'भवतीति' ख । 6. 'वैरूपाक्षहोमसंयुक्तेषु' ख ।

कथं तयाः प्रयोग इत्यत आह—

**तपश्च तेजश्चेति(A) जपित्वा प्राणायाममायम्यार्थमना वैरूपाक्षमारभ्योच्छ्वसेत् ॥ ८ ॥**

(B)तपश्चेत्यादिकं प्रपदं जपित्वा तत्परिसमाप्तौ 'सव्याहृतिकां सप्रणवामि'त्येवं-लक्षणं प्राणायाममेकम् आयम्य कृत्वा अनुच्छ्वसन्नेव अर्थमनाः यः कश्चि[1]दर्थः कामः साधयितुमभिप्रेतस्तन्मनाः तं ध्यायन् (C)विरूपाक्षोऽसीत्यादिकं वैरूपाक्षमारभ्यो-च्छ्वसेत् प्राणान् विमुञ्चेत्, विमुच्य [2]च मन्त्रं समापयेत्। अयं च प्राणायामगर्भः काम्येष्वेव जपः; कुतः? अर्थमना इति वचनात्; पूर्वेषु [3]यथाम्नात एव।

---

A. सूत्रभागोऽयं पूर्वसूत्रान्तर्गत इति सत्यव्रतकल्पना।

B. प्रपदमन्त्रस्तु—

ॐ तपश्च तेजश्च श्रद्धा च ह्रीश्च सत्यञ्चाक्रोधश्च त्यागश्च धृतिश्च धर्मश्च सत्त्वञ्च वाक् च मनश्चात्मा च ब्रह्म च तानि प्रपद्ये तानि मामवन्तु।

ॐ भूर्भुवः स्वरोम् महान्तमात्मानं प्रपद्ये ॥ इति।

C. वैरूपाक्षमन्त्रस्तु—

ॐ विरूपाक्षोऽसि दन्ताञ्जिस्तस्य ते शय्या पर्णे गृहा अन्तरिक्षे विमितं हिरण्मयं तद्देवानां हृदयान्ययस्मये कुम्भे अन्तः सन्निहितानि तानि बलभृच्च बलसाच्च रक्षतो-ऽप्रमणी अनिमिषतः सत्यं यत्ते द्वादश पुत्रास्ते त्वा संवत्सरे संवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्ति त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मण-मुपधावत्युप त्वा धावामि जपन्तं मा मा प्रतिजापीर्जुह्वन्तं मा मा प्रतिहौषीः कुर्वन्तं मा मा प्रतिकार्षीस्त्वां प्रपद्ये त्वया प्रसूत इदं कर्म करिष्यामि तन्मे राध्यतां तन्मे समृध्यतां तन्म उपपद्यतां समुद्रो मा विश्वव्यचा ब्रह्माऽनुजानातु तुथो मा विश्ववेदा ब्रह्मणः पुत्रोऽनुजानातु श्वात्रो मा प्रचेता मैत्रावरुणोऽनुजानातु तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः ॥

इति। मन्त्रब्राह्मणम् २।४।५-६। विनियोगप्रमाणन्तु खादिरगृह्यसूत्रेऽपि १।२।२२

अत्र गुणविष्णुस्तु 'अनिमिषत् तत् सत्यं' इति पठति व्याकरोति च तथैव।

अनयोर्व्याख्या—"यजुर्निगदरूपोऽयं मन्त्रः। ब्रह्मरूपोऽग्निर्देवता, तपः पयोव्रतादिजन्यम्, तेजः शरीरकान्तिः, श्रद्धा कर्मसु आस्तिकताम्, ह्रीः अननुष्ठानजनिता लज्जा, सत्यं यथार्थ-

---

1. '-दर्थःकामः' ख। 2. 'तं' ख। 3. 'न यथा-' ख।

वदनम्, अक्रोधः क्रोधनिमित्तेषूपेक्षा, त्यागो यज्ञादौ दक्षिणादिरूपेण धनप्रदानम्, धृतिः विकारनिमित्ते सत्यपि मनसश्चाञ्चल्याभावः। धर्मः वेदोक्ताभ्युदयस्य निःश्रेयससाधनम्, सत्त्वं कर्मानुष्ठानेषु सात्त्विकता, वाक् सर्वस्य प्रकाशिका वाक्, अभिवादनसाधनम् इन्द्रियम् अभिवादो वा। मनः मननसाधनम् आन्तरम् इन्द्रियम्, आत्मा कर्ता क्षेत्रज्ञः। ब्रह्म नितराम् उपस्थानोपपदिकम् आत्मचैतन्यम्, तानि तप-आदीनि प्रपद्ये शरणं प्रविष्टोऽस्मि। यत्किञ्चित् कश्चित् कर्म करोति तस्य तप-आद्यपेक्षितम् एव, अतस्तेषाम् इत्थं प्रार्थनमुचितम्। तानि माम् अनुष्ठातारम् अवन्तु। भूर्भुवः स्वरिति पृथिव्यादित्रयो लोकाः, तान् नमस्य इति शेषः। ओम् इति प्रणवाभिधानं ब्रह्म, तद् ध्यायामीत्यर्थः। किञ्च महान्तम् आत्मानं रुद्ररूपं माहात्म्योपेतं सर्वेषाम् आत्मभूतम् अग्निं प्रपद्ये प्राप्नोऽस्मि। हे रुद्ररूपाग्ने, त्वं विरूपाक्षोऽसि, नानारूपबहुक्षियुक्तो भवसि। तथाच स्मृतिः—

सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः। विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु॥ इति। तथा दन्ताञ्जिः—दन्तैरनक्ति प्रकाशयतीति दन्ताञ्जिः, दीप्तदन्त इत्यर्थः, तथाविधो भवसि। तस्य तादृशस्य ते शय्या शयनाश्रयः, पर्णे पर्णवदाश्रितायां भूम्याम् आसीदित्यर्थः। भूमौ हि अग्निर्निहितः। तथा गुहा गृहम् अन्तरिक्षे हिरण्मयम् हिरण्मयं विमितं विनिर्मितम्, भूम्यां निहितो ज्वालाभिरन्तरिक्षे सञ्चरति। यद्वा विद्युद्रूपेणान्तरिक्षे सञ्चरति। तत् तस्मिन् अयस्मये कुम्भे सुवर्णकुम्भसदृशे अग्नौ, अन्तः तन्मध्ये देवानां हृदयानि अभिप्रायविशेषाणि संनिहितानि सम्यक् स्थापितानि। तेषां हविर्लक्षणस्य अन्नस्य अग्न्याधीनत्वात् तद्धृदयनिधानमुचितम्। तानि हृदयानि वलभृच्च वलसाच्च एतन्नामकौ। उभावप्यग्नेर्द्वारपालौ, अप्रमणी अनन्यमनस्कौ अनिमिषतो निमेषरहितौ रक्षतः पालयतः, सत्यम् एवमेव तत्। किञ्च हे रुद्ररूपाग्ने, यद् ये ते तव द्वादश पुत्राः द्वादश संख्याका धिष्ण्या हवनीयाद्यभिमानिनो वक्ष्यमाणाः समुद्रादिसंज्ञकाः सन्ति, ते त्वा त्वां प्रीणयितुं संवत्सरे संवत्सरे सर्वेषु संवत्सरेषु यजमानं कामप्रेण स्वेच्छया सम्पादकेन ज्योतिष्टोमादिना याजयित्वा यागं कारयित्वा पुनर्ब्रह्मचर्यम् उपयन्ति, यज्ञीयाद् रूपाद् विमुक्ता भवन्तीत्यर्थः। संवत्सरे संवत्सरे सोमयागेन वसन्ते वसन्ते ज्योतिष्टोमेन यजेतेति श्रुतिः। अपवृत्ते कर्मणि लौकिकः सम्पद्यत इति सूत्रितत्वात्। तेषां यज्ञसाधनताम् उपेक्ष्य पुनर्ब्रह्मचर्यावासित्वपर्यवते। यतस्तव पुत्रा ईदृशाः, अत एव महानुभावस्त्वम् इत्यर्थः। किञ्च हे अग्ने, त्वं देवेषु मध्ये ब्राह्मणोऽसि। अतो देवेष्वपि ब्राह्मणादिवर्णव्यपदेशः। 'ब्रह्म वै बृहस्पतिरि'ति ब्राह्मणम्। बृहदारण्यकेऽपि, 'यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोम' इत्यादि। तथाऽहं मनुष्येषु ब्राह्मणजातिः। लोके ब्राह्मणो वै ब्राह्मणम् उपधावतीति प्रसिद्धिद्योतनार्थम्। ब्राह्मणस्य ब्राह्मणं गतिरिति लौकिका वदन्ति। अतस्त्वाम् उपधावामि। किञ्च उपध्नन्तं मा मां त्वं मा प्रतिज्ञापीः अपविधातं मा कुरु इत्यर्थः। एवमुत्तरत्रापि योज्यम्। जुह्वन्तं मा मां मा प्रतिहौषीः, कुर्वन्तं दानं कुर्वन्तं मा मां मा प्रतिकार्षीः, दानदानहोमेष्वनुकूलो

कश्चित्तु [1]'अविशेषोपदेशात् [2]प्राणवृत्तिनिरोधमात्रमेव प्राणायाममाह, [3]तदयुक्तम्; कुतः? प्राणायाममायम्येति वचनात्, इतरथा प्राणा[4]नायम्येति पाठः स्यात्, [5]तस्मात् यथोक्त एवार्थः[5]*(A)।

## काम्येषु त्रिरात्राभोजनम् ॥ ९ ॥

काम्यानामेवाधिकृतत्वात् पुनः काम्यग्रहणमयुक्तमिति चेत्? [6]न; पूर्वेषु चैके [सू० ४।५।२] इत्यनेनोभयेषामधिकारात्। पूर्वेष्व[7]प्येष त्रिरात्राभोजनादिको विधिर्मा भूदित्यतस्तन्निवृत्त्यर्थं पुनः काम्येष्वित्युक्तम्। त्रिरात्रमभोजनं भक्तपरित्याग-स्त्रिरात्राभोजनम्।

तदशक्तौ कथमित्यत आह—

## त्रीणि वा भक्तानि ॥ १० ॥

प्रकृते त्रिरात्रे त्रीणि वा [8]अभक्तानि अभोजनानि भक्तानीति वा, उभयथाऽपि समानोऽर्थः। कथं नाम? [9]त्रिरात्रमेकभक्तं नक्तं वा कुर्यादित्यर्थः।

---

भवेत्यर्थः। तदर्थं त्वां प्रपद्ये प्रपन्नोऽस्मि। त्वया प्रसूतोऽनुज्ञातः सन् इदं क्रियमाणं कर्म करिष्यामि, तत्कर्म मे मह्यं समृध्यतां सम्यक् प्रवर्धताम्, तदेव कर्म मे ममोपपद्यतां फलोत्पत्तिं कुरुताम्, फलप्रदानसमर्थं भवत्वित्यर्थः। यस्मादेते द्वादशाग्नेः पुत्रा इत्युक्तं नामप्रभेदं किञ्चिद् दर्शयितुमाह—समुद्रः फलानां समुद्रवत् साधकः एतन्नामकोऽग्निः, विश्वव्यचाः सर्वत्र व्यापकः, ब्रह्मा परिवृध एतन्नामकः सोऽग्निर्माम् अनुजानातु, तथा तुथ एतन्नामकः, विश्ववेदा विश्वस्य वेदिता, अथवा वेदो धननाम विश्वधनः ब्रह्मणः पुत्रोऽग्निर्माम् अनुजानातु। किञ्च श्वात्रः आशु हविषाम् अत्ता क्षिप्रगामी वा एतन्नामकः, प्रचेताः प्रकृष्टमतिः, मैत्रावरुणः, मित्रः अहरभिमानी देवः वरुणः रात्रेः, तयोः सम्बन्धिरूपोऽग्निः, माम् अनुजानातु, यद्वा प्रतिवाक्यं निर्दिश्यमानाः पृथग् एवाग्नयोऽवगन्तव्याः। तस्मै विरूपाक्षाय, दन्ताञ्जये, उक्तरूपाय, ब्रह्माख्यायाग्नये, समुद्राय विश्वव्यचसे, तुथाय विश्ववेदाय (?) श्वात्राय प्रचेतसे सहस्राक्षाय, देवाय ब्रह्मणः स्वयम्भुवः पुत्रायाग्नये नमो नमस्करोमि। तदेवं सर्वहोमसामान्याभिमुखप्रभृत्यष्टकापर्यन्ता मन्त्रा व्याख्याताः। इति सायणाचार्यकृता।

A. अत्र तर्कालङ्कारः—"एतेन प्राणधारणमात्रं वदता रघुनन्दनेन एतदनुपपत्तिभिया प्राणामायम्य इति यत् परिकल्प्य लिखितं तदप्यनादरणीयम्; 'प्राणायाममायम्य' इत्येतस्यैव पाठस्य सर्वत्रोपलम्भात्, पूर्वव्याख्यातृभिस्तथैव वर्णनाच्च। शिष्टाश्च प्राणायाममेव यथोक्तलक्षणमाचरन्ति न प्राणधारणमात्रम्" इत्याह।

---

1. 'अपि विशेषो-' ख। 2. 'तत् प्राणनिवृत्ति-' ख। 3. 'तदयुक्तम्' नास्ति ख। 4. '-यामेति पाठः' ख। 5. नास्ति ख। 6. 'न' नास्ति ख। 7. 'अपि' नास्ति ख। 8. 'भक्तानि' घ। 9. 'त्रिरात्रं' नास्ति ख।

## नित्यप्रयुक्तानान्तु[1] प्रथमप्रयोगेषु ॥ ११ ॥

नित्यमहरहर्यानि कर्माणि प्रयुज्यन्ते क्रियन्ते तानि नित्यप्रयुक्तानि, यथा हरित गोमय-कम्बूक-व्रीहि-यवहोमादीनि ; तेषां नित्यप्रयुक्तानां प्रथमप्रयोगेषु प्रथमारम्भेषु त्रिरात्राभोजनादि पुरश्चरणं न [2]प्रतिप्रयोगमपीति। तुशब्दोऽनर्थको निपातः, अमितान्तरे[3]ष्वनर्थका इति वचनात्।

## उपोष्य तु यजनीयप्रयोगेषु ॥ १२ ॥

यजनीयशब्देन 'प्रतिपद्यपपन्नादियज्ञकर्मोच्यते'[4]। तत्र येषां कर्मणां प्रयोगः करणं तानि [5]यजनीयप्रयोगाणि, यथा अलक्ष्मीनिर्णोद-पूर्णहोमादीनि। तेषु यजनीयप्रयो[6]गेषु उपोष्य प्रयोगः। कथं नाम ? यजनीयप्रयोगेषूपवसथ एव पुरश्चरणं न तु त्रिरात्रादि। तु-शब्दः पूर्ववत्(A)।

## उपरिष्टाद्दैक्षं साभिपातिकम् ॥ १३ ॥

यत् सन्निपतितमेव ज्ञायते तत् सान्निपातिकमनियतनिमित्तमुच्यते। यथा "आदित्ये परिविष्यमाणे" इति [ सू ४।५।२६ ] तदुपरिष्टाद् दैक्षं भवति। उपरिष्टात् कर्मणः पश्चाद् दीक्षा पुरश्चरणं त्रिरात्राभोजनादि यस्य, तदिदमुपरिष्टाद्[7]दैक्षमुच्यते।

काम्यपरिभाषामभिधायेदानीं विशेषार्थमिदमाह—

## अरण्ये प्रपदं प्रयुञ्जीत दर्भेष्वासीनः (B) प्राक्कूलेषु ब्रह्मवर्चसकामः ॥ १४ ॥

ब्रह्मवर्चसमध्ययनाश्रया लक्ष्मीः, तत्कामो ब्रह्मवर्चसकामः, अरण्ये ग्रामाद् बहिः आ कामप्राप्तेरहरहः प्रपदं प्रयुञ्जीत। कथम् ? आसीनः उपविष्टः। क ? दर्भेषु कुशेषु प्राक्कूलेषु प्रागग्रेषु।

## उदक्कूलेषु पुत्रपशुकामः ॥ १५ ॥

[8]पुत्रकामः पशुकामो वा, उदगग्रेषु अरण्ये प्रपदं प्रयुञ्जीतेति वर्तते।

---

A. अत्र तर्कालङ्कार आह—"अथेदमवाच्यम्, ननु तत्रोपवासविधानादेव स प्राप्यते, अथोच्यते कारणं वक्तव्यम्। उच्यते—नित्ये तावत् पक्षादिषरावुपवासः, सूत्रितः न स काम्येषु प्राप्नोति, अतः काम्येष्वपि तस्य प्राप्त्यर्थमेतत् सूत्रितम्। अथवा उपवासवत् त्रिरात्राभोजनादि-कमपि स्यादतस्तन्निवृत्त्यर्थमेतदुच्यते। कथं नाम ? उपोष्यैव न पुनस्त्रिरात्राभोजनादिकमपि कृत्वा-इति। एवञ्च तुशब्दस्त्रिरात्रभोजनादिव्यवच्छेदको भवती"ति।

B. एतदन्तं सूत्रमेकं परिकल्प्य प्राग् इत्यादि पृथक् सूत्रं कल्पयति चन्द्रकान्तः।

---

1. 'तु' नास्ति ख। 2. 'प्रति' नास्ति ख। 3. '-ष्वनर्थना' ख। 4. 'प्रतिपदुच्यते' ख। 5. 'यजमानीय-' ख। 6. '-गेऽप्यप्रयोग:' ख। 7. 'दैर्घ्य-' ख। 8. 'उभयीपृभयकामः, पशुकामो वा, उदगग्रेषु' ख।

## उभयेषूभयकामः ॥ १६ ॥

उभयेषु प्रागग्रेषूदगग्रेषु च उभयकामः ब्रह्मवर्चसकामः पुत्रकामश्च, अथवा ब्रह्मवर्चसकामः पशुकामश्च[*] अरण्ये प्रपदं प्रयुञ्जीतेति वर्तते ।

## पशुस्वस्त्ययनकामो व्रीहियवहोमं प्रयुञ्जीत सहस्रबाहुर्गौपत्य इति ॥ १७ ॥

पशुशब्देनात्र गावोऽभिप्रेताः । कुतः ? [1]बृहत्पत्रक्षुद्रपशूनाम् [2]उपरिष्टात् पृथङ् निर्देशात् [ सू० ४।५।३०-३१ ], गौपत्य इति मन्त्रलिङ्गाच्च । स्वस्त्ययनमारोग्यमुच्यते । पशूनां स्वस्त्ययनं पशु[*]स्वस्त्ययनम् , तत्कामः [3]प्राग् व्याधिसम्भवात् तत्परिहारार्थं (A)सहस्रबाहुरिति मन्त्रेण त्रिप्रहोमन्यायेन व्रीहियवहोमं प्रयुञ्जीत कुर्यात् । व्रीहियवौ प्रसिद्धौ, ताभ्यां मिश्राभ्यां होमो व्रीहियवहोमः ।

## कौतोमतेन महावृक्षफलानि परिजप्य प्रयच्छेत् ॥ १८ ॥

महागुणयोगात् महावृक्ष उच्यते, न तु प्रमाणमहत्त्वात् (B) । [4]स च य एव कश्चिद् भोज्यफलभूतनारिकेलबीजपू[5]रादीनामन्यतमः कौतोमतशब्दोऽस्मिन् विद्यत इति कौतोमतो मन्त्रः (C)कौतोमतमित्यादिक[6]स्त्र्यवसानः । तेन मन्त्रेण महावृक्षफलानि परिजप्याभिमन्त्र्य प्रयच्छेद् दद्यात् ।

---

A. मन्त्रस्तु—ॐ सहस्रबाहुर्गौपत्यः स पशूनभिरक्षतु ।
मयि पुष्टिं पुष्टिपतिर्दधातु मयि प्रजां प्रजापतिः (स्वाहा) ॥ इति ।
मन्त्रब्राह्मणम् २।४।७ ।

अस्य व्याख्या—सहस्रबाहुः योऽनेकबाहुः गौपत्यः रुद्रपुत्रः सः अस्माकं पशून् सञ्चारस्थान् अभिरक्षतु, पुष्टिपतिः पोषाभिमानी देवो मयि पुष्टिं शरीरपोषं दधातु स्थापयतु । तथा मयि प्रजां पुत्रादिरूपां प्रजापतिर्देवो दधातु । इति ।

B. 'महागुणयोगात् परिमाणमहत्त्वाच्च महावृक्षः, एवमपरे' इति चात्र चन्द्रकान्तः प्राह ।

C. मन्त्रस्तु—ॐ कौतोमतं संवननं सुभागं करणं मम ।
नाकुली नाम ते माताऽथाहं पुरुषामयः ।
यन्नौ कामस्य विच्छिन्नं तन्नौ सन्धेह्योषधे ॥ इति ।
मन्त्रब्राह्मणम् २।४।८ ।

अस्य व्याख्या—कौतोमतं कुतः कुत्रापि नास्ति अमतः असम्प्रतिपन्नो यस्य तत् कुतोमतम् उदुम्बरादि, तस्य सम्बन्धि फलम् कौतोमतम्, एतच्च संवननं, सम्यग्वननीयम्, सर्वैः

---

1. 'बृहत्प्रक्षुद्र-' घ । 2- नास्ति ख । 3. 'प्राग्' नास्ति ख । 4. 'स य एव' घ ।
5. '-रादामन्य-' ख । 6. '-स्त्र्यव···' ख ।

कस्मै ?

**यस्याऽऽत्मनि प्रसादमिच्छेत्(A) तस्मै ॥ १९ ॥**

यस्य सकाशादात्मनि प्रसादमर्थप्राप्तिमिच्छेत् तस्मै [1]प्रयच्छेत्। किं यानि परिजप्तानि तानि सर्वाणि प्रयच्छेत् ?[2] न ; किं तर्हि ?

**एकभूयांस्यात्मनो युग्मानि कुर्यात् ॥ २० ॥**

तेषां फलानां मध्यात् आत्मनः आत्मार्थम् एकभूयांसि युग्मानि कुर्यात् कल्पयेत्। एकेन भूयांसि एकभूयांसि, एकाधिकानीत्यर्थः। युग्मानि [3]युग्मसंख्याकानि समानीत्यर्थः(B)। [4]सन्धिसामान्यादयुग्मानीति चेत् ? न ; कुतः ? मङ्गलाचारत्वात्, [5]माङ्गलिकत्वात् च [6]युक्संख्यायाः, आत्मार्थत्वाच्चैषां फलानाम्।

**वृक्ष इवेति पञ्चर्चः ॥ २१ ॥**

(C)वृक्ष इवेत्ययं पञ्चर्चः। (D)पञ्चानामृचां समाहारः पञ्चर्चः, अधिकृतो वेदितव्य [7]इति शेषः[7]*।

---

सम्भजनीयम्, मम मह्यम्, सुभागंकरणं भगः सौख्यम्, शोभनश्चासौ भगश्च सुभगः, तस्य करणं कारकम्। भकारस्य छान्दसो दीर्घः। ईदृशं फलं भक्षयामीति सम्बध्यते। किञ्च हे फल, ते तव माता नाकुली नकुली जिह्वा 'ओष्ठापिधाना नकुलीत्यत्र तथोक्तत्वात्', तस्य सम्बन्धिनी वाग् नाकुली, सा ते माता निर्मात्री। वाचा हि सर्वं प्रस्तुत्य तदीदृशं तदीदृशमिति निर्मीयते, अथातः पुरुषामयः, पुरुषेषु मध्ये आमयवन्तम् परित्यज्यानापन्नं सम्भजामीति शेषः। किञ्च हे ओषधे उदुम्बरादिफलविशेष, कामस्य इच्छाया विषयमन्त्रितं यद् धनं कनकं नौ आवयोः जायापत्योः, विच्छिन्नं तत् नौ आवयोः सन्धेहि सन्धानं कुरु संयोजय। इति।

A. इदंमग्रिमञ्च सूत्रमेकसंख्याकमिति सत्यव्रतः कल्पयामास।

B. एतेनैतदुक्तं भवति कानिचित् फलानि परिजप्य तेषां मध्यात् कियन्ति अयुग्मानि फलानि यस्याऽऽत्मनि प्रसादमिच्छेत् तस्मै प्रयच्छेत् तेभ्यश्च एकेन फलेनाधिकानि अत एव युग्मानि फलानि आत्मनोऽर्थे कुर्यादिति।

C. वृक्षादिपञ्चानामृचां प्रथमा ऋक्—

ॐ वृक्ष इव पक्वस्तिष्ठसि सर्वान् कामान् भुवस्पते।
यस्त्वैवं वेद तस्मै मे भोगान् धुक्ष्वाक्षतान् बृहन् ॥ इति।

द्वितीया ऋक्—

ॐ ऋतं सत्ये प्रतिष्ठितं भूतं भविष्यता सह।
आकाश उपनिरज्जतु मह्यमन्नमथो श्रियम् ॥ इति।

D. अत्र समाहारशब्दस्य समासार्थपरत्वेऽपि न नपुंसकत्वापत्तिः सूत्रत्वेन छन्दोवत्त्वात् मुनीनां स्वतन्त्रेच्छत्वाच्चेति।

---

1. 'प्रयच्छन्' ख। 2. 'न' नास्ति ख। 3. 'युग्माख्यानि' ख। 4. 'स वै सामान्या च' ख। 5. 'माङ्गलिकत्वात्' नास्ति ख। 6. 'युग्म-' ख। 7. 'इत्यर्थः' ख।

तृतीया ऋक्—

ॐ अभिभागोऽसि सर्वस्मिंस्तदु सर्वं त्वयि श्रितम्।
तेन सर्वेण सर्वो मा विवासन विवासय॥ इति।

चतुर्थी ऋक्—

ॐ कोश इव पूर्णो वसुना त्वं प्रीतो ददसे धनम्।
अदृष्टो दृष्टमाभर सर्वान् कामान् प्रयच्छ मे॥ इति।

पञ्चमी ऋक्—

ॐ आकाशस्यैष आकाशो यदेतद् भाति मण्डलम्।
एवं त्वा वेद यो वेदेशानेशान् प्रयच्छ मे॥ इति।

मन्त्रब्राह्मणम् २।५।९-१३।

एतासामृचां व्याख्या—हे भुवस्पते भूम्याः प्रद्योतकद्वारेण पालयितरादित्य, हे बृहन् महन्, बृहस्पते इति केचित् पठन्ति, तस्मिन् पक्षे बृहतो महतो लोकस्य पालयितः, तव मण्डलं पक्वो वृक्ष इव परिणतः, पर्णफलाद्युपेतो वृक्षो यथा पिङ्गलवर्णो दृश्यते तद्वत् तिष्ठसि, अथवा शोभनवर्णेन युक्तो वर्तस इत्यर्थः। अतः सर्वान् कामान् काम्यमानान् भोगान् प्रयच्छेति शेषः। यः अहं त्वा त्वाम् एवम् उक्तविधं वेद जानामि, तस्मै मे मह्यं तव स्वरूपम् अधिगच्छते अक्षतान् अक्षीणान् भोगान् धुक्ष्व पूरय। सायणाचार्यमते तिष्ठसीत्यत्र तिष्ठतीति पाठः, बृहन् इत्यत्र च बहून् इति। स च बहून् इयत्तारहितान् भोगान् इत्येवं व्याचख्यौ। इति प्रथमायाः।

सत्ये सत्यभूते प्रत्यक्षेण दृश्यमाने आदित्ये ऋतं व्यावहारिकभूतं कृत्स्नं जगत् प्रतिष्ठितम्, सूर्याधीनत्वाज्जगन्निर्वाहस्य। न केवलं वर्तमानमेव किन्तु भूतं भूतकालविशिष्टम् अपि जगद् भविष्यता आगामिकालविशिष्टेन जगता सह सत्यादित्ये प्रतिष्ठितम्, पूर्वम् उत्पन्नम् उत्पत्स्यमानञ्च सर्वं सूर्याधीनमित्यर्थः; कालात्मकत्वादित्यभिप्रायः। आकाश आ समन्तात् काशमान आदित्यो मह्यम् अन्नं प्रदत्तम् उपनिरजतु नितराम् उपरक्तो भवतु, अथापि श्रियं श्रयणीयम् ऐश्वर्यं च जातम् उपनिरजतु। यद्वा स आदित्य आकाशे उपनिरजतु उपसमीपे समन्ततो नितरां रजतु परिविष्टो भवतु इत्यर्थः। अथापि स मह्यम् अन्नं श्रियञ्च ददात्विति शेषः। इति द्वितीयायाः।

सर्वस्मिन् जगति हे चन्द्र, त्वम् अभिभागोऽसि अभिप्राप्तभागो भवसि, सर्वेषु भागेषु वर्तसे इत्यर्थः। तद् उ सर्वं तत् सर्वं जगदपि त्वयि श्रितं वर्तते। हे विवासन सर्वस्य विशेषेण विवासयितः, सर्वं उक्तरूपेण सर्वात्मकस्त्वम्, तेन त्वयि प्रतिष्ठितेन सर्वेणाजाविकादिना क्षुद्रपशुना मा मां विवासय। यद्वा हे विवासन विवासो वर्जनम्, तमोवर्जनेन त्वया सहाविभक्तेन सर्वेण सर्वः मर्त्यान्तकस्त्वं मा मां विवासय पापाद् वियोजय। इति तृतीयायाः।

## तस्मिन् प्रथमं पार्थिवं कर्म ॥ २२ ॥

तस्मिन् पञ्चर्वे प्रथममाद्यं कर्म पार्थिवम् पृथिव्यर्थं क्रियत इति पार्थिवं ग्राम-क्षेत्रगृहादिलाभार्थमित्यर्थः ।

[1]तत्र—

## अर्धमासमभुक्त्वा ॥ २३ ॥

कुर्यादिति शेषः । पुरश्चरणविशेषोपदेशात्तत्र सामान्यस्य निवृत्तिः[1]* ।

## अशक्तौ वा पेयामन्यतरं कालं यत्राऽऽत्मानं परिपश्येत्(A) ॥२४॥

यद्वा पक्षोपवासाशक्तौ प्रकृतमर्धमासं पेयां पीत्वा, किं सायं प्रातः ? [2]न ; अन्यतरं कालं प्रातर्वा सायं वेति । यत्र यस्मिन् काले [3]पेयां पिबन् आत्मा[4]नमपीड्यमानं परिपश्येत् । अथवा यत्र यस्यां पेयायाम् आत्मानम् आत्मच्छायां प्रतिबिम्बं परिपश्येत् , तां तादृशीं स्वच्छामल्पतण्डुलां पेया(B)मर्धमासं पीत्वा पार्थिवं कर्म कुर्याद् इति ।

## एतद् व्रतमर्धमासव्रतेषु ॥ २५ ॥

अन्यत्रापि यत्रार्धमासव्रतादेशस्तत्रैतद् व्रतं प्रत्येतव्यम् । यथा आचितशतकामो-ऽर्धमासव्रत इति [ सू० ४।६।१२ ] एकाष्टकायामर्धमासव्रत इति च [ सू० ४।८।११ ] ।

---

हे आदित्य, वसुना वासकेन धनेन पूर्णः कोश इव धनागार इव स्थितस्त्वं प्रीतोऽस्मत्-स्तुत्या परितुष्टः सन् धर्नं रतिसाधनं गवादिकं दधसे पुष्णासीत्यर्थः । किञ्च अदृष्टः अन्यैर्दुर्विज्ञेयस्त्वं दृष्टं दर्शनयोग्यं धनम् आभर आहर । स्पष्टश्चतुर्थः पादः । इति चतुर्थ्याः ।

हे सूर्य, यद् एतन्मण्डलं भाति एष मण्डल आकाशस्य स्वाश्रयभूतस्य अन्तरिक्षस्य आकाशः सर्वतः प्रकाशः, हे ईशान सर्वस्य स्वामिन्, त्वाम् एवम् उक्तप्रकारेण यो वेद जानाति स एव वेद तव तत्त्वं जानातीत्यर्थः । अत एवंविदे मे मह्यम् ईशान् ईशितव्यान् भोगान् प्रयच्छ । इति पञ्चम्याः ।

A. यत्राऽऽत्मानमित्यादि पृथक् सूत्रमिति कल्पयतः सामश्रमितर्कालङ्कारौ ।

B. 'पेया श्राणाऽच्छमण्डयोः' इति कोशः ।

---

1. नास्ति ख । 2. 'न' नास्ति ग । 3. 'पेयां' घ । 4. '-नं पीडामानं' घ ।

प्रासङ्गिकमभिधायेदानीं प्रकृतमेव पार्थिवं कर्माऽऽह—

पौर्णमास्यां रात्रावविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षत-तण्डुलानृगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके ॥ २६ ॥

पौर्णमास्यां पञ्चदश्यां रात्रौ निशि, विदासः शोषः, स यस्य ह्रदस्य विद्यते स विदासी न विदासी अविदासी ग्रीष्मेऽप्यक्षीणजल इत्यर्थः(A)। तस्मिन्नविदासिनि ह्रदे नाभिमात्रमुदकमवगाह्य अवतीर्य अक्षततण्डुलान् यवमिश्रान् व्रीहितण्डुलान् ऋगन्तेषु प्रकृतानां पञ्चानामृचामवसानेषु आस्येन मुखेन 'उदके जुहुयात्। स्वाहाकारैरिति। अनग्निकत्वाद्धोमस्य स्वाहाकारलोपो मा भूदित्यतः प्राप्ते पुनः स्वाहेत्युक्तम्। अत्र कश्चिदक्षतशब्देन तण्डुलानेव विशेषयति, अक्षततण्डुलान् अखण्डिततण्डुलानिति। तदसत्, कुतः ?

गोवाहनक्षुद्रपशुस्वस्तिकर्मस्वपि त्रिषु।
जलहोमे च "मिश्राभ्यां द्रव्याभ्यां होम इष्यते"*(B) ॥ इति वचनात्।

अथापरम् ॥ २७ ॥

अथशब्दः पूर्वप्रकृतस्य त्रिरात्राभोजनादेः पुरश्चरणस्यानुसन्धानार्थः। यद्वा ³पञ्चर्चाधिकारानिवृत्त्यर्थः। अथैतस्मिन्नेव पञ्चर्चे अपरं द्वितीयकर्म वर्तिष्यत इति शेषः।

कीदृशं तदित्यत आह—

प्रथमयादित्यमुपतिष्ठेत भोगकामोऽर्थपतिचक्षुर्विषये सिध्य-त्यर्थः ॥ २८ ॥

---

A. अत्र गृह्यासंग्रहे तु—

मध्ये स्थण्डिलमन्ते च वारिणा परिसंवृतम्।
अविदासिनं ह्रदं विद्यात् तादृशं कर्मणो विदुः ॥ २।११ । इति।

अस्य चन्द्रकान्तोक्तं भाष्यम्—"मध्ये स्थण्डिलं स्थलम्, अन्ते च वारिणा परि सर्वतो भावेन संवृतं वेष्टितम्। एवम्भूतं ह्रदमविदासिनं जानीयात्। तादृशं ह्रदं कर्मणो विदुर्ज्ञानमस्याचार्याः। कर्मण इति सम्बन्धलक्षणा षष्ठी। तदनेन पौर्णमास्यां रात्रावित्यादिसूत्रोक्तः अविदासी ह्रदो व्याख्यातः। इति।

B. भाष्यपरिगृहीतं वचनमिदमुपस्थापयति प्रमाणत्वेन चन्द्रकान्तोऽपि।

---

1. 'उदकं' घ। 2. 'मिश्राभ्यां होम इष्यते' इति ख। 3. 'पञ्चर्चाधिकारानुवृत्त्यर्थः' ख।

कृतपुरश्चरणः पूर्वमेवार्थपतिमुपसृत्य पञ्चर्चस्य प्रथमया वृत्त इवेत्यनयर्चा 'तद्दर्श[1]सक [2]पार्ष्णिर्वे(A)'त्यनेन धर्मेणाऽऽदित्यमुपतिष्ठेत, भोगकामो भोगार्थे। क? अर्थपतिचक्षुर्विषये यस्य सकाशाद् भोगान् साधयितुमिच्छेत् [3]तत्सन्दर्शने [4]एवमनुतिष्ठतोऽस्य योऽभिप्रेतः स सिध्य[5]तीत्यर्थः।

द्वितीययादित्ये परिविष्यमाणेऽक्षततण्डुलान् जुहुयाद् बृहत्पत्त्रस्वस्त्ययनकामः ॥ २९ ॥

पादौ त्रायत इति पत्त्र वाहनमुच्यते, बृहच्छब्दो महद्वचनः, [6]बृहच्च तत् पत्त्र[6]* रथहस्त्यश्वादिकम्, बृहत्पत्त्राणां स्वस्त्ययनं बृहत्पत्त्रस्वस्त्ययनम्, स्वस्त्ययनमारोग्यं तत्कामः, द्वितीयया ऋतमित्यनयर्चा आदित्ये सवितरि परिविष्यमाणे परिवेष-संयुक्ते(B) अक्षततण्डुलान् यवमिश्रान् व्रीहितण्डुलान् क्षिप्रहोमन्यायेनाग्नौ जुहुयात्। तदेतदुपरिष्टाद् दैवं परश्च[7] सान्निपातिकत्वात्।

तृतीयया चन्द्रमसि तिलतण्डुलान् क्षुद्रपशुस्वस्त्ययन-कामः ॥ ३० ॥

क्षुद्रपशुशब्देनाजाविकमुच्यते, तस्य स्वस्त्ययनं क्षुद्रपशुस्वस्त्ययनम्, तत्कामः।

---

A. तद्दर्शसकपार्ष्णिर्वा पूर्णपार्श्वपादपि।
कुर्वीत कृताञ्जलिर्वाऽपि ऊर्ध्वबाहुरथापि वा ॥ इति।
कर्मप्रदीपः २।१।१२।

अस्य व्याख्यायां प्रभाकारः—'तदिति भूम्यलग्नगुल्फतलभागो वा भूमिलग्नैकचरणो वा भूमिलग्नचरणाग्रो वा तदुपस्थानं कुर्यात्। तत्रापि कृताञ्जलिर्वा ऊर्ध्वबाहुर्वा कुर्यात्। अत्र सन्ध्यात्रयप्रक्रमे कृताञ्जलिर्वा ऊर्ध्वबाहुर्वेति तुल्यवद् विकल्पाभिधानात्—
सायं प्रातरुपस्थानं कुर्यात् प्राञ्जलिरानतः।
ऊर्ध्वबाहुश्च मध्याह्ने तथा सूर्यस्य दर्शनात् ॥
इति हारीतोक्ता व्यवस्था गोभिलीयव्यतिरिक्तविषया'। इत्येवमाह।

B. यत्र किल सवितुः किरणा वातेन मण्डलीभूतास्तस्य परितो मालाभा लक्ष्यन्ते सोऽय-मादित्यस्य परिवेषः। तथा चोक्तम्—
वातेन मण्डलीभूताः सूर्याचन्द्रमसोः कराः।
मालाभा व्योम्नि तन्वन्तः परिवेषाः प्रकीर्तिताः ॥ इति।

---

1. '-कुल-' ख। 2. '-पार्ष्णी'त्यनेन' ख। 3. 'तत्' नास्ति ख। 4. 'एव-' ख। 5. 'सिध्य त्यर्थः' ख। 6. 'बृहत्पत्त्र' च' ख। 7. 'वा' ख।

तृतीयया 'अभिभागोऽसी'त्येतयर्चा चन्द्रमसि सोमे, परिविष्यमाणे इति वर्तते। [1]मिश्रांस्तिलतण्डुलान् पूर्ववज्जुहुयादिति।

**चतुर्थ्यादित्यमुपस्थायार्थान्(A)प्रपद्येत स्वस्त्यर्थवानागच्छति ॥३१॥**

चतुर्थ्या 'कोश इवे'त्यनया पूर्ववदादित्यमुपस्थाय अर्थान् प्रतिग्रहप्रायोग्यसेवादीन् साधयितुमिति शेषः, प्रपद्येत गच्छेत्। ततः किमस्य भवति? स्वस्त्यर्थवानागच्छति। यमर्थमभिसन्धाय गच्छति तद्वान् स्वस्तिमांश्चाऽऽगच्छति।

**पञ्चम्यादित्यमुपस्थाय गृहान् प्रपद्येत स्वस्ति गृहानागच्छति [2]स्वस्ति गृहानागच्छति[2]* ॥ ३२ ॥**

पञ्चम्या 'आकाश[3]स्ये'त्यनया पूर्ववदादित्यमुपस्थाय प्रवासाद् गृहान् प्रपद्येत आगच्छेत् स्वस्तिमान् गृहानागच्छति(B)।

इति 'श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये'* चतुर्थप्रपाठकस्य पञ्चमी कण्डिका ॥

---

A. 'प्रपद्येत'स्थाने 'प्रतिपद्येते'ति पठति तर्कालङ्कारः। 'प्रपद्येत' इत्यपि पाठः पाठान्तरत्वेनाङ्गीकृतस्तेन।

B. अथ कण्डिकास्थकाम्यकर्मप्रयोगा उच्यन्ते—तत्र ब्रह्मवर्चसकामोऽरण्यं गत्वा प्रागग्रेषु दर्भेष्वासीनः कामसिद्धिपर्यन्तं प्रपदमन्त्रं प्रयुञ्जीत। पुत्रकामः पशुकामो वा उदगग्रेष्वासीनोऽरण्ये प्रयुञ्जीत। उभयकामस्योदगग्रेषु प्रागग्रेषु वाऽऽसनम्। प्रपदप्रयोगार्थं प्रपदकर्मारम्भात् पूर्वं ब्राह्मणानुज्ञां गृहीत्वा सगणाधिपमातृकापूजनं नान्दीमुखश्राद्धञ्च कर्तव्यम्।

अथ पशुस्वस्त्ययनकर्मोच्यते—उदगयने शुक्लपक्षे पुण्यनक्षत्रे प्रातः कृतनित्यक्रियः, गवां स्वस्त्ययनार्थं पशुस्वस्त्ययनकर्म करिष्ये इति संकल्प्य पूर्ववदग्निं प्रतिष्ठाप्य क्षिप्रहोमविधिना व्रीहियवौ मिश्रीकृत्य ताभ्यां सहस्रबाहुर्गौपत्य इति मन्त्रेण जुहुयात्। अत्र परिसमूहन-विरूपाक्ष-प्रपदजपाः। अस्य मन्त्रस्य प्रजापतिर्ऋषिरुष्णिक् छन्दः प्रजापतिर्देवता पशुस्वस्त्ययनहोमे विनियोगः। मन्त्रेण होमः। इदं प्रजापतये न मम। ततः प्रतिपत्तिकर्म ब्राह्मणभोजनञ्चेति।

अथ परचित्तप्रसादककर्मप्रयोगः। यस्य पुरुषस्य प्रसादात् स्वकार्यानुकूल्यमिच्छेत् तस्मै महावृक्षफलानि कौतोमतादिमन्त्रेण परिजप्य दद्यात्। मन्त्रितफलानि आत्मन एकाधिकानि कुम्भानि चत्वारि षडष्टौ वा स्थापयेत्। वृक्षाश्च चूत-पनस-नारिकेल-बीजपूरादयः। एषामन्यतमफलान्यभिमन्त्र्य दद्यात्, विशेषानुक्तेः। कौतोमतमिति मन्त्रस्य प्रजापतिऋषिर्निचृदनुष्टुप् छन्दः वागोषधी देवते कुम्भमहावृक्षफलदाने विनियोगः। मन्त्रपाठः। इति।

---

1. 'तिलमिश्रांस्तण्डुलान्' ख। 2. 'इति' ख। 3. '-स्तवा' ख। 4. नास्ति ख।

अथ बृह इवेति पञ्चर्चप्रयोगा उच्यन्ते। तत्राऽऽद्यं पृथिवीप्राप्त्यर्थं पार्थिवकर्म, तत्र बृह-इवेत्यादिपञ्चर्चविषयम्। तदनुष्ठानायार्धमासमुपवासः। अशक्तावर्धमासं दिवा नक्तं वा पेयां पीत्वोपवसेत्। पेयाशब्देन यवागूर्ग्राह्या। अथवा यस्यां पेयायामात्मप्रतिबिम्बदर्शनं भवेत् सा ग्राह्या। इत ऊर्ध्वं यत्रार्धमासव्रतकथनं तत्राशक्तौ पेयापानं सेवितव्यम्। उपवासान्ते पौर्णमास्यां निशि ग्रीष्मेऽप्यक्षीणजलह्रदं गत्वा गुह्यसंग्रहोक्तलक्षणं वा ह्रदं गत्वा नाभिमात्र-जले स्थित्वा वाऽऽस्ये अक्षततण्डुलान् प्रक्षिप्य मनसा पञ्चर्चं उच्चार्य प्रत्यृचमन्ते स्वाहापदमुच्चार्य आस्येनोदके आस्यस्थान् तण्डुलान् जुहुयात्। प्रतिस्वाहाकारं होमः। अस्या ऋचः प्रजापतिर्ऋषि-रनुष्टुप् छन्द आदित्यो देवता अक्षततण्डुलहोमे विनियोगः। ततो मन्त्रः। इदमादित्याय न मम। एवमुक्ताभिश्चतसृभिः स्वाहाकारान्ताभिरृग्भिरक्षततण्डुलान् जुहुयात् प्रत्यृचा। एतैर्होमैर्न गृहक्षेत्रराज्यादिप्राप्तिः।

अथास्यामेव ऋचि भोगार्थं कर्मोच्यते—त्रिरात्रमुपोष्य, उपवासान्ते पौर्णमास्यां मध्याह्ने यस्य धनिकस्य सकाशादात्मनो भोगान् साधयितुमिच्छेत् तस्य सन्दर्शने स्थित्वा बृह इवेत्यृचा आदित्यमुपतिष्ठेत। एवमुपस्थानेनाभिप्रेतार्थसिद्धिर्भवति।

अथ बृहत्पत्त्रस्वस्त्ययनप्रयोगः—तस्य फलं महावाहनानां हस्त्यश्वादीनामायुरारोग्यसिद्धिः। तदर्थमादित्ये परिवेषसंयुक्ते अक्षततण्डुलान् द्वितीययर्चा क्षिप्रहोमविधिना अग्नौ जुहुयात्। आदित्यपरिवेषस्यानियतकालत्वादेतत् कर्म कृत्वा पश्चात् त्रिरात्रव्रतमनुष्ठेयम्। अस्या ऋचः प्रजापतिर्ऋषिरनुष्टुप्छन्द आदित्यो देवता पत्त्रस्वस्त्ययनार्थम् अक्षततण्डुलहोमे विनियोगः। ॐ ऋतं सत्ये इति द्वितीयमन्त्रः। इदमादित्याय न मम।

अथ क्षुद्रपशुस्वस्त्ययनप्रयोगः—फलमस्य क्षुद्रपशूनामजादीनामायुरारोग्यप्राप्तिः। यदा चन्द्रमा परिवेषितो भवेत् तदा तृतीययर्चा पूर्ववज्जुहुयात् पश्चादुपवासः। अस्याः प्रजापतिर्ऋषि-रनुष्टुप् छन्दश्चन्द्रमा देवता तिलतण्डुलहोमे विनियोगः। ॐ अभिभागोऽसीति मन्त्रः। इदं चन्द्राय न मम। इति।

अथ स्वस्त्यर्थकर्मप्रयोगः—यान् अर्थान् साधयितुं पुरुषोऽन्यत्र गच्छति गमनात् पूर्वं चतुर्थ्या ऋचा आदित्योपस्थानं कर्तव्यम्। तेनाभिप्रेतार्थवान् स्वस्तिमांश्च पुनरागच्छति। अस्या ऋचः प्रजापतिर्ऋषिरनुष्टुप् छन्द आदित्यो देवता उपस्थाने विनियोगः। ततः कोष इवेतिमन्त्रपाठः।

अथ प्रवासाद् गृहगमनप्रयोगः—पञ्चम्या सूर्यमुपस्थाय प्रवासाद् गृहमागच्छेत्। अस्या ऋचः प्रजापतिर्ऋषिरनुष्टुप् छन्द आदित्यो देवता उपस्थाने विनियोगः। ॐ आकाशस्यैष आकाश इति मन्त्र इति। सर्वत्र प्रयोगेषु यथासम्भवं तन्त्रशेषं समापयेदिति।

---

# चतुर्थप्रपाठकस्य षष्ठी कण्डिका

—:*:—

## भूरित्यनकाममारं नित्यं प्रयुञ्जीत ॥ १ ॥

भूरि[1]त्येव मन्त्रप्रतीकः (A)'भूर्भुवः स्वरोम् सूर्य [2]इवे'त्येतस्य मन्त्रस्य। अनकाममारशब्देनाय[3]मेव मन्त्रोऽभिधीयते। मारो मरणम्, कामेन मारः काममारः, इच्छतो मरणं [4]जरयाऽतिजीर्णस्य मर्तुमपि कामो भवति। न काममारः अकाममारः अनिच्छतो मरणम्, प्रागप्यतिवृद्धभावाद् व्याघ्रतस्करादिभ्यो भवति; यस्य मन्त्रस्याहरहः प्रयोगाद्काममारो न भवति सोऽयमनकाममारो मन्त्रः, तम् अनकाममारं[4]* नित्यम् अहरहः प्रयुञ्जीत।

---

A. मन्त्रस्तु—

ॐ भूर्भुवः स्वरोम् सूर्य इव दृशे भूयासमग्निरिव तेजसा वायुरिव प्राणेन सोम इव गन्धेन बृहस्पतिरिव बुद्ध्याऽश्विनाविव रूपेणेन्द्राग्नी इव बलेन ब्रह्मभाग एवाहं भूयासं पाप्मभागा मे द्विषन्तः॥ इति।

मन्त्रब्राह्मणम् २।४।१४।

अस्य व्याख्या—भूर्भुवः स्वरिति भूरादित्रयो लोकाः, ओमिति तत्कारणभूतं ब्रह्मोच्यते। 'ब्रह्मवाचकः प्रणव' इति पातञ्जलं सूत्रम्। लोकत्रयं तत्कारणभूतं ब्रह्म च प्रार्थ्यते इति शेषः। किञ्च सूर्य इव सूर्यो यथा सर्वैर्दर्शनीयो भवति तद्वदहमपि दृशे द्रष्टुं योग्यो भूयासम्, सर्वदा-सर्वैर्दृश्यमानो भवानीत्यर्थः। तथा अग्निरिव अग्निर्यथा तेजस्वी भवति एवम् अहमपि तेजसा युक्तो भूयासम्। उत्तरेष्वपि वाक्येषु युक्तो भूयासम् इति योज्यम्। वायुरिव प्राणेन, वायुर्यथा नित्यं चेष्टते तद्वदहमपि प्राणेन प्रकर्षेण देहे चेष्टमानेन वायुना। सोम इव, सोमश्चन्द्रमाः स इव अहमपि गन्धेन परिमलेन, अथवा गन्धशब्देनात्र सर्वप्रियत्वमुच्यते; तेन युक्तो भूयासम्। बृहस्पतिरिव, बृहस्पतिर्देवमन्त्री स यातीव बुद्धिमान् तद्वदहमपि लौकिकविषयबुद्ध्या युक्तः।

---

1. '-त्यर्य' ख। 2. 'इवेत्यस' ख। 3. 'एव' नास्ति ख। 4. नास्ति ख।

किमनेन प्रयुक्तेन भवतीत्यत आह—

**न पापरोगान्नाभिचाराद् भयम् ॥ २ ॥**

पापरोगः कुष्ठ-राजयक्ष्मादिः, तस्माद् भयं न भवति, [1]न चाभिचरणात् श्येन-सन्दंशयज्ञादिकात् ।

**अलक्ष्मीनिर्णोदः ॥ ३ ॥**

अलक्ष्म्या निर्णोदः निर्मोकः अलक्ष्मीनिर्णोदः, अलक्ष्मी[2]निर्हार इत्यर्थः । कोऽसौ ? वक्ष्यमाणको होमः ।

स च—

**यजनीयप्रयोगः ॥ ४ ॥**

यजनीयेऽहनि प्रयुज्यत इति यजनीयप्रयोगः प्रतिपदीत्यर्थः । नित्यचलतन्त्रेणाऽऽज्यं जुहुयात् तन्त्रसमन्वितम्, 'आज्यं हव्यमनादेशे' इति वचनात्(A) । [3]स चायं परिभाषासामर्थ्यात् प्राक् स्विष्टकृत आज्येन स्यात् ।

कीदृशोऽसावित्यत आह[3]*—

**मूर्ध्नोऽधि म इत्येकैकया(B) ॥ ५ ॥**

(C)मूर्ध्नोऽधि म इत्येतासामष्टानामृचाम् एकैकया, होमः स्यादिति शेषः । अलक्ष्मीनिर्णोद इत्येकवचनात् सर्वाभिरप्येकाहुत्याशङ्का मा भूदित्यत एकैकयेत्युक्तम् ।

---

अश्विनाविव अश्विनौ यथा देवानां मध्ये रूपवन्तौ तद्वदहमपि रूपेण । इन्द्राग्नी इव बलेन, इन्द्राग्न्योः प्रकृष्टबलत्वं प्रसिद्धम्, तद्वद् बलेन सामर्थ्येन । किञ्च अहं ब्रह्म परिवृधं कर्म, तद्भाग एव सर्वदा सकृतसाधनतत्कर्मोपेतम् एव भूयासम् । एवशब्देन व्यावर्त्यमाह मे मम द्विषन्तो द्वेषं कुर्वन्तः शत्रवः पाप्मभागा नरकोत्पादकपाप्मयुक्ता भवन्तु इति शेषः । इति ।

A. कर्मप्रदीपवचनमिदमुक्तं प्राक् १।३।१० सूत्रभाष्ये ( पृ० ९७ )

B. "इत्येकैकया" इत्यन्तसूत्रत्रयी सामश्रमिमते एकैव ।

C. तत्राष्टानां प्रथमा—

ॐ मूर्ध्नोऽधि मे वै श्रवणाङ्गिरसोऽनुप्रवेशिनः ।
ललाटाद् घस्वरान् घोरान् विघनान् विवृहामि वः (स्वाहा) । इति ।

अस्या व्याख्या—मे मम शिरसः श्रवणात् श्रोत्रात्, मूर्ध्नश्च अधि अनुप्रवेशिनः अधीति सर्वत्र सम्बध्यते, शिरस इति उत्तमावयवसामान्यात् मूर्ध्न इति तदुपरि मध्यप्रदेशात्, मे मूर्धनि श्रवणे,

---

1. 'नचाभिचरणात्' ख । 2. '-निर्णोद इत्यर्थः' ख । 3. नास्ति ख ।

शिरसि चानुप्रविष्टान् इत्यर्थः । वा इति अनर्थः । वैश्रवणान् इति पाठे विश्रवणस्य पुत्रान् असुरान् व्याधिरूपेण शिरआदिषु प्रविष्टान् इत्यर्थः । किञ्च ललाटाद् अधि अनुप्रविष्टान् अस्वरान् अस्मरान् अदनशीलान् घोरान् भयङ्करान् विघनान् विविधहन्तॄन् वो युष्मान् विवृहामि विविधं नाशयामीत्यर्थः । स्वाहेति स्पष्टम् । इति ।

द्वितीया—

ॐ ग्रीवाभ्यो मे स्कन्धाभ्यां मे नस्तो मेऽनुप्रवेशिनः ।

मुखान् मे वद्वदान् घोरान् विघनान् विवृहामि वः ( स्वाहा ) ॥ इति ।

अस्या व्याख्या—मे ग्रीवाभ्यः, अवयवापेक्षया बहुवचनम्, ग्रीवावयवेभ्यः, तथा स्कन्धाभ्यां स्कन्धेभ्य इत्यर्थः । नस्तो नासिकातः, तथा मुखात् मे वदनाच्च अनुप्रवेशिन आनुपूर्व्येण प्रविष्टान् वद्वदान्, वध्वन्धने वदन्तीति वादः, अन्नान्तर्भाविण्यर्थो द्रष्टव्यः । व्यधनार्थं देहं सम्बध्य वादयन्ति आक्रोशयन्तीति वद्वदाः, तान् घोरान् इत्यादि । शिष्टं पूर्ववत् । प्रत्यवयवं मे इति पृथक्निर्देश आदरार्थः । इति ।

तृतीया—

ॐ बाहुभ्यां मे यतो यतः पार्श्वयोरुद्भतानधि ।

उरसो वद्वदान् घोरान् विघनान् विवृहामि वः ( स्वाहा ) ॥ इति ।

अस्या व्याख्या—मे मम बाहुभ्यां यतो यतो यस्माद् यस्माद् बाहुप्रदेशात् तु, अपि च पार्श्वयोः उद्भतान् अनुप्रवेशिनः, तथोरस उरःप्रदेशात् अपि अनुप्रविष्टान् विवृहामि । शिष्टमुक्तम् । इति । 'रुत्तुतानधि' इत्यपि पाठः ।

चतुर्थी—

ॐ वङ्क्षणाभ्यो मे लोहितादान् योनिहान् पञ्जिहानधि ।

ऊरुभ्यां निम्लिषो घोरान् विघनान् विवृहामि वः (स्वाहा) ॥ इति ।

अस्या व्याख्या—मे मम वङ्क्षणाभ्यः ऊरुसन्धिभ्यः अनुप्रवेशिनः लोहितादान् सर्वाङ्गा-श्रितरुधिरभक्षकान् योनिहान् प्रवृद्धान् पञ्जिहान् बलक्षयकारान् ऊरुभ्यां निम्लिषो निविडसम्बद्धान्, अधीत्ययं विवृहामीत्यत्र सम्बध्यते । निम्रिषान् इति सायणसम्मतः पाठः । इति ।

पञ्चमी—

ॐ जङ्घाभ्यां मे यतो यतः पार्ष्ण्योरुद्भतानधि ।

पादयोर्विकिरान् घोरान् विघनान् विवृहामि वः ( स्वाहा ) ॥ इति ।

अस्या व्याख्या—मे जङ्घाभ्यां यतो यतो यस्माद् यस्माद् प्रदेशात् अपि च पार्ष्ण्योः पार्ष्णिप्रदेशयोः पादयोश्च विकिरान् विविधं विक्षिपन्त इति विकिराः सर्वत्र व्याप्ताः, तान् अपि विवृहामि । इति । 'रुत्तुतानधि' इत्यपि पाठः ।

किमयं यथाक्रमपठिताभिरेव होमः ? न ; किं तर्हि ?

## या तिरश्चीति सप्तमी ॥ ६ ॥

(A)या तिरश्चीत्यनयर्चा त्र्यवसा[1]नया, सप्तमी आहुतिः कार्येति शेषः। तदनन्तरञ्च[2]—

## वामदेव्यर्चः ॥ ७ ॥

[3]वामदेव ऋषिः, तेन दृष्टं [4]वामदेव्यं साम 'कया न' इत्येतत्, तदीया ऋचो वामदेव्यर्चः, तासामप्येकैकयेति द्रष्टव्यम्। न तृचवान्तेनेति, कुतः ? एकैकयेति पुरस्तान्निर्देशात्।

---

षष्ठी—

ॐ परिबाधं यजामहे निजङ्घं शवलोदरम्।
यो नोऽयं परिबाधते दानाय च भगाय च ( स्वाहा )॥ इति।

मन्त्रब्राह्मणम् २।६।१-६।

अस्या व्याख्या—मन्त्रपञ्चकेन सर्वाङ्गपीडाकारिणोऽपनुत्य तदभिमानिदेवम् अनेन प्रार्थयते—परिबाधं परितः सर्वाङ्गेषु बाधमानं निजङ्घं नितरां घातकं निकृष्टजङ्घं वा, शवलोदरं शवलवर्णोदरोपेतम्, उक्तरूपं पापाभिमानिनं देवं यजामहे पूजयामः, योऽयम् उक्त-लक्षणो देवः नोऽस्मान् परिबाधते देहे परितः पीडां करोति। किमपेक्ष्येति ? उच्यते—दानाय हविःप्रदानार्थं सर्वावयवपीडनाय भवाय स्वप्रादुर्भावनाय च तं यजामहे इति सम्बन्धः। '-ऽनुजङ्घ' इत्यपि पाठः। इति।

A. सप्तमी—

ॐ या तिरश्ची निपद्यते अहं विधरणी इति।
तां त्वा घृतस्य धारया यजे संराधनीमहम्॥
संराधन्यै देव्यै देष्ट्र्यै स्वाहा। इति।

मन्त्रब्राह्मणम् १।५।६।

अस्या व्याख्या—या तव शुभे कर्मणि प्रस्तूयमाने अहं विधरणी शुभफलविघातकारिणी इत्येवं मन्यमाना तिरश्ची वाञ्छितफलविघ्नकरी निपद्यते निपतनं करोति आगच्छति, अहं तां त्वा त्वां देवतां यजे पूजयामि। कया ? घृतस्य धारया आज्याहुत्या। किम्भूतां त्वाम् ? संराधनीं सम्यक् साधनीं प्राणिनामिष्टफलस्य देष्ट्र्यै इष्टफलदात्र्यै। स्वाहा इति वाक्यशेषः। इति।

ततोऽष्टमी—

ॐ कया नश्चित्र आभुवदूती सदावृधः सखा।
कया शचिष्ठया वृता। इति।

सामसंहिता उत्तरार्चिके १।१।१२

1. '-नयर्चा' ख। 2. 'च' नास्ति ख। 3. 'वामदेव' ख। 4. 'वामदेव्यं' नास्ति ख।

तथाचोक्तम्—

[1]विहारो नामधेयर्चा व्याहृतीनां तथैव च ।
अलक्ष्मीनाशहोमे स्याद् अपेहीति चतुर्दशी(A) ॥ इति ।

तदनन्तरञ्च[2]—

महाव्याहृतयः ॥ ८ ॥

(B)महाव्याहृतयो भूराद्यास्तिस्रः, तासामप्येकैकयेति द्रष्टव्यम् ।

तदनन्तरं[3]ञ्च—

प्रजापत इत्युत्तमा ॥ ९ ॥

'प्रजापते न त्वदि'त्येतयर्चा उत्तमा अन्त्या आहुतिः कार्येति शेषः । नन्वेतद्-वाच्यम्, पाठक्रमविधानाभ्यामेवोत्तमत्वसिद्धेः ? न; अपेहि त्वमित्येतस्या आहुतेरुपोत्तमत्वप्रज्ञापनार्थमुत्तमेत्युक्तम् । कथं नाम ? अपेहि त्वमित्युपोत्तमा

---

नवमी—

ॐ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृढाचिदा रुजे वसु ।

सामसंहिता उत्तरार्चिके १।१।१२ ।

दशमी—

ॐ अभीषूणः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतये ।

सामसंहिता उत्तरार्चिके १।१।१२ ।

व्याख्यातेयमन्तिमा ऋक्त्रयी प्राक् प्रथमप्रपाठकस्य नवमकण्डिकायाम् ( पृ० २७९ )।

A. प्रमाणत्वेनोरीकृत्य लिखितं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये । परं तत्रान्तिमेऽर्धे पाठभेदो वर्तते स च—'अलक्ष्मीनाशके होमे स्यादपेहि चतुर्दशी' इति ।

B. एकाहुती—

ॐ भूः स्वाहा । इति ।

द्वाहुती—

ॐ भुवः स्वाहा । इति ।

त्र्याहुती—

ॐ स्वः स्वाहा । इति ।

---

1. 'नामर्चा' ख । 2. 'च' नास्ति ख । 3. 'च' नास्ति ख ।

प्रजापते न त्वदेतान्यन्यो इत्युत्तमेति । उक्तश्च—अपेहीति चतुर्दशीति । एवमेताः पञ्चदशाऽऽहुतयो भवन्तीति[1] ।

**यशोऽहं भवामीति यशस्काम आदित्यमुपतिष्ठेत पूर्वाह्ण-मध्यन्दिनापराह्णेषु प्रातरह्णस्येति सन्नामयन् ॥ १० ॥**

(A)यशोऽहमित्यनेन पञ्चर्चेन यशस्कामो यशोऽर्थी पूर्ववदादित्यमुपतिष्ठेत । कस्मिन् काले ? पूर्वाह्णमध्यन्दिनापराह्णेषु तिसृष्वपि सन्ध्यास्वि[2]ति । एवञ्च नित्योपस्थानानन्तर-मनेनोपतिष्ठेत, [3]किम् ? यथापठितेनैव पञ्चर्चेन प्रातरह्णस्येति संनामयन् मध्यन्दि-

---

चतुर्दशी—

ॐ अपेहि त्वं परिबाध मा विबाध विबाधथाः ।
सुगं पन्थानं मे कुरु येन मा धनमेष्यति (स्वाहा) ॥ इति ।

अस्या व्याख्या—हे परिबाध मार्गेऽस्मान् परितो बाधमान देव, त्वम् अपेहि मार्गादपगच्छ । हे विबाध विविधं बाधमान सर्वथा मार्गे पीडमान, त्वं मा विबाधथाः अस्मान् मा बाधस्व, यद्यपि तव पीडाकरणमेव स्वभावस्तथाऽपि मा अस्माकं तथा कुरु इत्यर्थः । मे मम पन्थानं गन्तव्य-मार्गं सुगं सुखेन गन्तुं शक्यं कुरु । येन पथा मा मां धनमेष्यति तं मार्गं सुखं कुरु । इति ।

पञ्चदशी—

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां (स्वाहा) ॥
इति । मन्त्रब्राह्मणम् २।५।७-८ ।

अस्या व्याख्या—हे प्रजापते प्रजानां पालक ब्रह्मन्, एतानि समाधेयानि निमित्तानि तद्व्यति-रिक्तानि न भवन्ति, प्राजापत्यान्येव ; यतस्त्वत्तोऽन्यो न कश्चिदस्ति, ततो जातानि वैगुण्यानि यानि सन्ति तानि सर्वाणि परि ता बभूव कुरु इत्यर्थः । किञ्च यत्कामा यत् कामयमानाः ते त्वाम् उद्दिश्य जुहुमः, तत्फलं नोऽस्माकम् अस्तु । वयं स्याम पतयः स्वामिनः । केषाम् ? रयीणां धनानाम् । स्वाहा हविर्दत्तम् अस्तु । इति ।

A. तत्र पञ्चानामृचां प्रथमा—

ॐ यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशाम् ।
यशः सत्यस्य भवामि भवामि यशसां यशः ॥ इति ।

अस्या व्याख्या—हे आदित्य, ब्राह्मणानां यद् यशः श्रुत्यध्ययनजन्यं तदहं भवामि यशस्वी भूयासमित्यर्थः । तथा राज्ञां क्षत्रियाणां यद् यशः प्रजापालनतया जन्यं तदहं भवामि, विशां

---

1. 'इति' नास्ति ख । 2. '-स्वित्यर्थः' ख । 3. 'नामयन' ख ।

कृषिपशुपालनादिजन्यं यद् यशः तदहं भवामि, तथा सत्यस्य अभिवादितुर्यत् सत्यवचनमस्ति तस्य यद् यशः तदहं भवामि। किञ्च यशसः सर्वविषयस्य यद् यशोऽस्ति तस्यापि यशो भवामि यशःस्थानीयो भवामीत्यर्थः। इति।

द्वितीया—

ॐ पुनर्मायन्तु देवता या मदपचक्रमुः।
महस्वन्तो महान्तो भवाम्यस्मिन्
पात्रे हरिते सोमपृष्ठे ॥ इति।

अस्या व्याख्या—या देवताः चक्षुराद्यभिमानिन्यः मत् मत्तः अपचक्रमुः अपक्रान्ताः पुनः मा माम् आयन्तु आगच्छन्तु, स्वयं मामधितिष्ठन्तु इत्यर्थः। किञ्च अस्मिन् त्वयि पात्रे देवैः पातव्ये हरिते हरितवर्णे सोमपृष्ठे सोमशब्देनात्र मध्वित्युच्यते। यदाहुतिद्वारा प्राप्तं सोमरूपं हविः तत्पृष्ठे उपरि अस्य तथाविध आदित्ये मयि अनुग्रहयुक्ते सतीत्यर्थः। महस्वन्तः तेजस्वान् महान्तो महान् गुणैः प्रवृद्धश्च भवामि। इति।

तृतीया—

ॐ रूप रूपं मे दिश प्रातरह्नस्य तेजसः।
अन्नमुग्रस्य प्राशिषमस्तु वै
मयि त्वयीदमस्तु त्वयि मदीयम् ॥ इति।

अस्या व्याख्या—किञ्च हे रूप रूप्यत इति रूपः प्रकाशः, तद्वन् आदित्य रूपं तावकं प्रकाशं मे मह्यं दिश देहि। कीदृशं रूपमिति तदुच्यते अह्नस्याह्न उदयास्तमयमध्यमकालस्य सम्बन्धी यः प्रातःकालः तस्मिन् काले यत् तव तेजः तस्य रूपमित्यर्थः। एवं सायमह्नस्य इत्यपि पक्षे बोद्धव्यम्। किञ्च उग्रस्य उग्रवर्णबलस्य सूर्यस्यान्नं वृष्टिद्वारेण निष्पन्नं प्राशिषं प्रकर्षेण अश्नामि। किञ्च हे आदित्य, यद् हविः मयि अस्ति वै, वै इति प्रसिद्धौ। दातव्यम् अस्ति तदिदं त्वयि हुतम् अस्तु, तत् त्वयि वर्तताम् इत्यर्थः। तथा त्वयि यद् वृष्ट्यादिफलमस्ति तत् मयि अस्तु इत्यर्थः। केचनास्तु इति पठन्ति। इति।

चतुर्थी—

ॐ यदिदं पश्यामि चक्षुषा त्वया दत्तं प्रभासया।
तेन मा भुञ्ज तेन भुक्षिषीय तेन मा विश ॥ इति।

अस्या व्याख्या—यदिदमिति तदुच्यते यदिदम् अन्नादिरूपं फलं चक्षुषा पश्यामि। यद्वा पृथगेव वाक्यम्, यदिदं रूपं त्वयि चक्षुषा पश्यामि तदपि मय्यस्तु इत्यर्थः। किञ्च त्वया दत्तं फलं त्वमेव प्रभासय लोके प्रसिद्धं कुरु, तेन त्वद्दत्तेन अनेन मा मां भुञ्ज भोजय, भोगपर्यवसायि कुरु इत्यर्थः। तेनान्नेन भुक्षिषीय भुञ्जीय। तेन भोगसाधनेन फलेन मा मां विश तेजोरूपेण प्रविश। इति।

नापराह्णोपस्थानयोः प्रातरह्न'स्येत्येतं मन्त्रभागं (A)संनामयन् यथालिङ्गमूह्य, कथम्? ²उच्यते—प्रातरह्नस्य तेजस इति पूर्वाह्णे, मध्यन्दिनस्य ³तेजस इति मध्यन्दिने अपराह्णस्य तेजस इत्यपराह्णे।

## सन्धिवेलयोरुपस्थानं स्वस्त्ययनमादित्यनावमित्युद्यन्तं त्वादित्यनूदियासमिति पूर्वाह्णे प्रतितिष्ठन्तं त्वादित्यानु-प्रतितिष्ठासमित्यपराह्णे ॥ ११ ॥

(B)आदित्यनावमित्यनयाऽनुष्टुभा (C)यजुर्द्वयसहितया सन्धिवेलयोः सन्ध्याकालयोः पूर्ववदुपस्थानं कर्तव्यमिति शेषः। कस्य? मन्त्रलिङ्गादादित्यस्य, किमर्थम्? स्वस्त्ययनं स्वस्त्ययनार्थमित्यर्थः। ⁴अन्त्यस्य यजुषः सालिङ्ग्याद् विनिवेशः कर्तव्यः। कथम्? उद्यन्तं त्वेत्येतद् यजुः, पूर्वाह्णे ब्रूयादिति शेषः। प्रतितिष्ठन्तं त्वेत्येतदपराह्ण इति।

---

पञ्चमी—

ॐ अहर्नो अत्यपीपरद्रात्रिर्नो अतिपारयत्।
रात्रिर्नो अत्यपीपरदहर्नो अतिपारयत् ॥ इति।

पञ्चानामासामाकरो मन्त्रब्राह्मणम् २।५।९-१३।

अस्या व्याख्या—किञ्च अहर्दिवा नोऽस्मान् अत्यपीपरत् अत्यन्तं पालयतु। भोगान् दत्त्वा रक्षतु इत्यर्थः। तथा रात्रिः नोऽस्मान् अतिपारयत् स्वामतिक्रामयित्वा पारयतु। स्वस्मिन् सम्भवदुपद्रवपरिहारेण दिवं प्रापयत्वित्यर्थः। तथोत्तरवाक्यद्वयेऽपि उक्तवैपरीत्येन योजनीयम्। एवमभिधानेन अहनि रात्रौ च दुःखाभावेन सुखं प्रार्थितं भवति। इति।

A. संनामयन् परिवर्तयन् इत्यर्थः। अत्र ऊहित्वा इत्यर्थे ऊह्येति प्रयोगो लिपिकरप्रमाद इति प्रतिभाति आदर्शपुस्तकानुरोधात् यथावत् सन्निवेशितो मूले इति।

B. मन्त्रस्तु—

ॐ आदित्यनावमारोक्षं पूर्णामपरिपादिनीम्।
अच्छिद्रां पारयिष्णवीं शतारित्रां स्वस्तये।

( ॐ नम आदित्याय नम आदित्याय नम आदित्याय )। इति।

C. यजुर्द्वयी च—

ॐ उद्यन्तं त्वादित्यानूदियासम्।
ॐ प्रतितिष्ठन्तं त्वादित्यानुप्रतितिष्ठासम् ॥ इति।

मन्त्रब्राह्मणम् २।५।१४-१६।

---

1. '-ह्नेत्' ख। 2. 'उच्यते' नास्ति ख। 3. 'तेजस' नास्ति ख। 4. 'अन्त्यस' ख।

**आचितशतकामोऽर्धमासव्रतस्तामिस्रादौ व्रीहिकांसौदनं ब्राह्मणान् भोजयित्वा ॥ १२ ॥**

आचितं शकटमुच्यते 'आचितं शकटं प्राहुरि'ति वचनात्(A)। शतशब्दो बहुवाची, शतं सहस्रमरितमिति पाठात्; आचितानां शतं कामयते इत्याचितशतकामः, आचितद्वारेणात्र बहुपशुधन'धान्यत्वमात्मनः प्रार्थ्यते'*। तथाहि चरितार्थत्वाच्चाचितानाम्(B) अर्द्धमास-व्रतः, पूर्वोक्तेन विधिना शुक्लपक्षमुपोष्य, तामिस्रः कृष्णपक्षः, तस्याऽऽदिः प्रतिपत्। व्रीहयः प्रसिद्धाः, व्रीहीणां कांसं व्रीहिकांसं व्रीहि'द्रोणमित्यर्थः। कुतः ? द्रोणः स्यात्

---

एतेषां व्याख्या—

अहम् आदित्यनावम् आदित्याख्यं नावं महासंसारसागरतारिकाम् आरोक्षम् आरूढोऽस्मि। कीदृशीम् ? पूर्णां काम्यैर्द्रव्यैर्भरिताम्। अपरिपादिनीं विपदामप्रापयित्रीम् ( सायणमते ) तथा परिपाथिनीं परितः प्राप्तोदकाम्, नहि असत्युदके नौका गच्छति। किञ्च अच्छिद्रां छेदरहिताम्, पारयिष्णुं पारप्रापणशीलां शतारित्रां बह्वरित्रोपेताम्। किमर्थमिति स्वस्तये अविनाशाय। ममैतत् क्षेमाय सुखेन संसारमुत्तरितुं योग्यमित्यर्थः। ओमिति ॐकाराय प्रणवप्रतिपाद्याय परमात्मने नम इति शेषः। अथ तस्य परमात्मनोऽधिष्ठानभूतां देवतां नमस्करोति, आदित्याय अदितेः पुत्राय सूर्याय भगवते नमः। यद्वा प्रणवप्रतिपाद्याय आदित्याय आदित्याभिमानिने नमः। त्रिरावृत्ति-रादरार्था। ( त्रिरभिधाने हि देवा विश्वसन्ति 'त्रिसत्या हि देवाः' इति श्रुतेः )। हे आदित्य उद्यन्तम् उदयं गच्छन्तं त्वाऽनु त्वाम् अनुसृत्य उदियासम् उन्नतिं विद्याकीर्तिपुत्रपश्वादिसमृद्धि-रूपां प्राप्नुयाम्। तथा प्रतितिष्ठन्तं प्रतिष्ठां प्राप्नुवन्तं त्वाम् अनुप्रतितिष्ठास' प्रतिष्ठितो भूयासम्। त्वत्कैरेव विद्यादिभिरविचलबलो भूयासम्। इति। अत्र भाष्यकारमते त्रयो मन्त्राः सायणाचार्यमते तु एको मन्त्र इति। तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

A. प्रमाणत्वेनानुवदति वचनमिदं तर्कालङ्कारोऽपि स्वभाष्ये।

B. यद्यपि आचितशब्देन शकटो भण्यते, तथाऽप्यत्र शाकटो भारः तावत्परिमितं सुवर्ण-मिहाभिप्रेतमित्यवगच्छामः। कस्मात् ? शकटमात्रस्यानतिप्रयोजनत्वात्, तावति सुवर्णेऽपि आचितशब्दस्य सङ्केतितत्वाच्च।

तथाचोक्तममरसिंहेन—

सुवर्णबिस्तौ हेम्नोऽक्षे कुरुविस्तस्तु तत्पले।
तुला स्त्रियां पलशतं भारः स्याद् विंशतिस्तुलाः।
आचितो दशभाराः स्युः शाकटो भार आचितः॥ इति।

1. '-धान्यादयमात्मनः प्रार्थितम्' ख। 2. 'द्रोणपरिमितमित्यर्थः' ख।

कांसमानक इति वचनात्(A)। व्रीहिकांसस्य 'ओदनं भक्तं व्रीहिकांसौदनम्'*। ननु "व्रीहिकांसयोः*[2] व्रीहिकांसानामिति त्रिधाऽपि[3] विग्रहस्य[4] सम्भवात्, कस्मादेकत्वेन विग्रहः क्रियते? उच्यते —[5]द्वित्वबहुत्वाभ्यां ब्राह्मणबहुत्वं स्यात्, ब्राह्मणबहुत्वस्य च श्राद्धदोषबहुत्वेन दुष्टत्वात्। तथाच मनुः—

सत्क्रियां देशकालौ च द्रव्यं ब्राह्मणसम्पदम्।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम्(B)॥

इति, तस्य कणानित्येकत्वदर्शनाच्च। तस्मादेकत्वेन विग्रह इति युक्तम्।

तामिस्रादौ व्रीहिकांसौदनं ब्राह्मणान् भोजयित्वा ततः [6]किं कुर्यादित्यत आह—

**तस्य कणानपरासु सन्धिवेलासु प्रत्यग्ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधायाऽऽदित्यमभिमुखो जुहुयात् भलाय स्वाहा भल्लाय स्वाहेति ॥ १३ ॥**

तस्य [7]प्रकृतत्वाद् व्रीहि[8]कांसस्य कणान् कम्बूकान् फलीकरणतुषानित्यर्थः।

उक्तञ्च—कम्बूकाश्च कणाश्चैव फलीकरणकुक्कुसाः(C)। इति।

अपरासु सन्धिवेलासु अस्तमयसन्ध्यास्वित्यर्थः, [9]प्रत्यक् पश्चिमायां दिशि ग्रामात् निवासात् निष्क्रम्य गत्वा, चतुष्पथे चत्वरे अग्निमुपसमाधाय आदित्यमभिमुखः प्रत्यङ्मुख इत्यर्थः, (D)भलाय स्वाहा भल्लाय स्वाहेति यजुर्भ्यां त्रिप्रहोमवत् [10]पृथक् पृथक् जुहुयात्।

---

A. प्रमाणत्वेनोपन्यस्यते वचनमिदं चन्द्रकान्तेनापि।

B. मनुसंहिता ३।१२६। अस्य व्याख्यायां कुल्लूकभट्टः—

"सत्क्रियां ब्राह्मणस्य पूजां देशं दक्षिणप्रवणत्वादि वक्ष्यमाणं कालमपराह्णं शौचं श्राद्धकर्तृभोक्तृब्राह्मणप्रैष्यगतं गुणवद्ब्राह्मणलाभञ्च ब्राह्मणविस्तरो नाशयति। तस्मान्न ब्राह्मणविस्तरं न कुर्यादिति सत्क्रियादिविरोधतो ब्राह्मणविस्तरनिषेधात् सत्क्रियादिसंभवे पित्रादेरेकैकस्यापि ब्राह्मणत्रयाभ्यनुज्ञानमि"त्याह।

C. प्रमाणत्वेन परिगृहीतं वचनमिदं तर्कालङ्कारेणापि।

D. ॐ भलाय स्वाहा ॐ भल्लाय स्वाहा।

इति मन्त्रौ तु मन्त्रब्राह्मणीयौ २।५।१७-१८।

---

1. 'ओदनभक्तः व्रीहिकांसौदनः' ख। 2. नास्ति ख। 3. 'अपि' नास्ति ख। 4. 'स्य' नास्ति ख। 5. 'तद्द्वित्व' ख। 6. 'किं' नास्ति ख। 7. 'प्रकृतस्य' ख। 8. '-कांसस्य' ख। 9. 'प्रत्यक्' ख। 10. 'पृथक्' नास्ति ख।

किञ्च—

## एतयैवाऽऽवृताऽपरौ तामिस्रौ ॥ १४ ॥

ऋज्वर्थम्। अत्र सन्देहः—एतयैवेत्यनेन किं ब्राह्मणभोजनादेरावृत्तिरुतार्धमासव्रतादेरिति ? ब्राह्मणभोजनादेरिति ब्रूमः। कुतः ? एतस्यैव कर्मण आवृत्त्युपदेशात्, अभ्यस्तेषु च सकृद्व्रतस्य इष्टत्वात्, तामिस्रान्तरेषु ब्रह्मचारी स्यादिति व्रतान्तरोपदेशाच्च। इतरथा अर्धमासव्रतादेव ब्रह्मचर्यस्य प्राप्तत्वादिदमवाच्यं स्यात्; तस्माद् ब्राह्मणभोजनादेरिति [1]युक्तम्।

## तामिस्रान्तरेषु ब्रह्मचारी स्यादा समापनादा समापनात् ॥१५॥

[2]तामिस्रान्तरयोर्द्वित्वाद् बहुवचन[2]*मयुक्तमिति चेत् ? न; कुतः ? अहर्भेदापेक्ष्यत्वाद् बहुवचनस्य। तामिस्रयोरन्तरे तामिस्रान्तरे शुक्ल[3]पक्षावित्यर्थः। तामिस्रान्तरयोर्भवान्यहानि तामिस्रान्तराणि, तेष्वन्तरेष्वहःसु ब्रह्मचारी मैथुनवर्जी स्याद् भवेत्। [4]तामिस्रेषु कर्मण उपदेशादवान्तराहःसु अनियमो मा भूदित्यत इदमुक्तम्। आ समापनात् [5]प्राग् व्रतसमाप्तेरिति। अभ्यासः कण्डिकापरिसमाप्त्यर्थः(A)।

इति [6]भट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये[6]*
चतुर्थप्रपाठकस्य षष्ठी कण्डिका ॥

---

अनयोर्व्याख्या—अनयोः सूर्यो देवता, भलभल्लौ परिभाषणहिंसादानेषु, परिभाष्यते सर्वैः स्तूयते इति वा, हिनस्ति तम इति वा, आदत्ते रसान् इति वा भल-भल्लशब्दौ सूत्रे व्युत्पन्नौ। तस्मै स्वाहा स्वाहुतमस्तु। इति सायणीया।

A. अथ कण्डिकोक्तकर्मणां प्रयोगः। तत्रान्नकाममारकर्मप्रयोग उच्यते—तस्य फलं कुष्ठराजयक्ष्मादिभ्यः पापरोगेभ्यः परप्रयुक्ताभिचाराच्च यद् भयं तन्निवृत्तिः। तदर्थम् अहर्नित्यकर्मानुष्ठानान्ते अन्नकाममाराख्यं मन्त्रं जपेत्। अस्य मन्त्रस्य प्रजापतिऋ॑षिर्यजुरात्मा देवता जपे विनियोगः। ॐ भूर्भुवः स्वरोम् सूर्य इव दृशे इत्यादिमन्त्रः। इति।

अथालक्ष्मीनिर्णोदहोमप्रयोगः—तस्य फलम् अलक्ष्मीनिवृत्तिः। तेषां होमानामनुष्ठानं शुक्लपक्षे कृष्णपक्षे च प्रतिपदि स्थालीपाके प्रधानचरुहोमानन्तरं स्विष्टकृद्धोमात् प्रागाज्येन कर्तव्यम्। तत्र पञ्चदश मन्त्राः। मूर्ध्नोऽधि मे इत्यादिपञ्चदशानां मन्त्राणां प्रजापतिऋ॑षिरनुष्टुप् छन्दोऽग्निर्देवता अलक्ष्म्यपनोदने विनियोगः। ॐ मूर्ध्नोऽधि मे इत्यादि स्वाहान्ता मन्त्राः, प्रत्येकम् इदमग्नये न ममेति संकल्पत्यागः। ततः सप्तमे, अस्य मन्त्रस्य प्रजापतिऋ॑षिरनुष्टुप् छन्दः संराधनी

---

1. 'नियुक्तम्' ख। 2. 'तामिस्रान्तरेषु द्वित्वबहुत्ववचन-' ख। 3. '-पक्षावदित्यर्थः' ख। 4. 'तामिस्रेष' ख। 5. 'प्राक्व्रतसमाप्ते-' ख। 6. नास्ति ख।

देवताऽलक्ष्म्यपनोदने विनियोगः, ॐ या तिरश्चीति होमः, ॐ संराधन्यै देव्यै देष्ट्र्यै स्वाहा। इदं संराधन्यै न मम। वामदेव्यसाम्नामृचां वामदेव ऋषिर्गायत्रीच्छन्द इन्द्रो देवताऽलक्ष्म्यपनोदन-

१ २ ३ १ २र ३ २ ३ २ ३ १ २ ३ १ २ ३ २

होमे विनियोगः। ॐ कया नश्चित्र आभुवदूती सदा वृधः सखा। कया शचिष्ठया वृता स्वाहा।

१ २ ३ १—२र ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २उ ३

कस्त्वा सत्यो मदानां म॑ꣳहिष्ठो मत्सदन्धसः। दृढाचिदारुजे वसु स्वाहा। अभीषुणः

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

सखीनामविता जरितॄणां। शतं भवास्यूतये स्वाहा। इति। सर्वत्र इदमिन्द्राय न मम। ॐ भूः स्वाहा इदमग्नये न मम, ॐ भुवः स्वाहा इदं वायवे न मम। ॐ स्वः स्वाहा इदं सूर्याय न मम। अपेहीति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽग्निर्देवताऽलक्ष्म्यपनोदनहोमे विनियोगः। ॐ अपेहि त्वमिति, इदमग्नये न मम। प्रजापत इति मन्त्रस्य प्रजापतिर्ऋषिः पङ्क्तिश्छन्दः प्रजापतिर्देवताऽलक्ष्म्यपनोदनाज्यहोमे विनियोगः। ॐ प्रजापतये इति इदं प्रजापतये न मम। इत्यलक्ष्मीनिर्णोदप्रयोगः।

अथ यशस्कामोपस्थानप्रयोग उच्यते—प्रतिदिनं नित्योपस्थानानन्तरं यशोवृद्ध्यर्थं यशोऽहं भवामीत्यादिभिः पञ्चभिर्ऋग्भिरादित्यमुपतिष्ठेत। प्रातःकाले 'दिशः प्रातरह्नस्य तेजसः' इति पाठः। मध्याह्ने 'मध्यन्दिनस्य तेजस' इति पाठः। अपराह्ने 'अपराह्नस्य तेजस' इति पाठः। एषां मन्त्राणां प्रजापतिर्ऋषिर्लिङ्गद आदित्यो देवता उपस्थाने विनियोगः। ततः पञ्चानां मन्त्राणां पाठः। इति।

अथ स्वस्त्ययनकरोपस्थानमुच्यते—तत्र प्रातःकाले नित्योपस्थानान्ते आदित्यं नाव-मित्यृचा उद्यन्तं त्वेति यजुषा च कर्तव्यम्। सायंकाले आदित्यं नावमित्यृचा प्रतितिष्ठन्तं त्वेति यजुषा चोपस्थानं कर्तव्यम्। उपस्थानमन्त्रे आदित्यपदश्रुतेरादित्यस्योपस्थानमेतदिति शिष्टा मन्यन्ते। आदित्यं नावमिति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्द आदित्यो देवता स्वस्त्ययनो-पस्थाने विनियोगः। ॐ आदित्यं नावमारोक्षं पूर्णामपरिपादिनीम्। अच्छिद्रां पारयिष्णवीं शतारित्रां स्वस्तये। ॐ नम आदित्याय ॐ नम आदित्याय ॐ नम आदित्याय। उद्यन्त-मिति मन्त्रस्य प्रजापतिर्ऋषिर्यजुरादित्यो देवता पूर्वाह्णप्रार्थने विनियोगः। ॐ उद्यन्तं त्वादित्या-नूदियासम्। प्रतितिष्ठन्तं त्वेति मन्त्रस्य प्रजापतिर्ऋषिर्यजुरादित्यो देवता सन्धिवेलायामपराह्ण-प्रार्थने विनियोगः। ॐ प्रतितिष्ठन्तं त्वादित्यानुप्रतितिष्ठासम्। इति।

अथाऽऽचितशतकामप्रयोगः—आचितः शकटभारः, शतमित्युपलक्षणम्, तेन बहुशकटभार-धनधान्यादिप्राप्तिः फलमित्यर्थः। आचितशतकामः पूर्ववदर्धमासव्रतं शुक्लपक्षे कृत्वा व्रतान्ते कृष्णप्रतिपदि द्रोणपरिमितं कृतौदनं ब्राह्मणान् भोजयित्वाऽस्तमयसन्धिवेलायां ग्रामात् प्रत्यग् गत्वा चतुष्पथेऽग्निमुपसमाधाय क्षिप्रहोमविधिनादित्याभिमुखः प्रकृतव्रीहिकणान् जुहुयात्। ॐ भगाय स्वाहा ॐ भगाय स्वाहेति मन्त्राभ्याम्। इदं भगाय न मम। ततः क्षिप्रहोमशेषं समापयेत्। एवमेवोत्तरत्र कृष्णपक्षद्वये कर्तव्यम्। कृष्णपक्षद्वयमध्ये शुक्लपक्षे कर्तुर्ब्रह्मचर्यमात्रं न तूपवासः। इति।

## चतुर्थप्रपाठकस्य सप्तमी कण्डिका

——:*:——

### अवसानं जोषयेत(A) ॥ १ ॥

[1]अवस्यन्ति निवसन्ति अस्मिन्नित्यवसानमावासः[1]*, गृहार्थं भूस्थानमत्राभिप्रेतं न तु गृहमेवेति। कुतः ? 'सममि'त्येवमादीनां विशेषणानामेव[2]मर्थत्वात्, 'तत्रावसानं प्राग्द्वारं यशस्कामो [3]बलकामः कुर्वीते'ति [ सू० ४।७।१४ ] [4]च परस्तान्निर्देशात्। जोषयेत जुषी प्रीतिसेवनयोः सेवयेत्, परिगृह्णीयादित्यर्थः।

कीदृशमित्यत आह—

### समं लोमशमविभ्रंशि ॥ २ ॥

समम् [5]अनिम्नोन्नतम्[5]*, लोमशं सतृणम्, 'तृणानि भूमेर्लोमानी'ति वचनात्; यद्वा [6]लोमानीव यत्र मृदूनि [7]तृणानि तल्लोमशम्। अविभ्रंशि [8]यत्र कृतस्य वेश्मनो नदीतीरतडागभेदवृक्षपातमार्गादिभ्यो विभ्रंशो विनाशो न स्यात् तदिदमविभ्रंशि[8]*। [9]स्थानं जोषयेतेति [10]सर्वत्रानुषज्यते।

### प्राच्य उदीच्यो वा यत्राऽऽपः प्रवर्तेरन् ॥ ३ ॥

प्राच्यः प्राङ्मुखा उदीच्यो वा उदङ्मुखा वा यत्र यस्मिन् स्थाने आपः प्रवर्तेरन् गच्छेयुः। स चायमिच्छाविकल्पः।

### अक्षीरिण्योऽकण्टका अकटुका यत्रौषधयः स्युः ॥ ४ ॥

क्षीरिण्यः क्षीरवत्यः, न क्षीरिण्यः अक्षीरिण्यः अर्कादिभ्योऽन्याः; अकण्टकाः कण्टकरहिताः वर्वुलादिभ्योऽन्याः; [11]अकटुकाः कटुगुणरहिताः[11]* निम्बादिभ्योऽन्याः; यत्रौषधयः स्युः भवेयुः।

A. 'जोषयेत्' इति पाठान्तरम् इति तर्कालङ्कारः।

1. 'अवसन्त्यवसानम्, आवासः' ख। 2. '-मर्थवत्त्वात्' घ। 3. 'बलकामः' नास्ति ख। 4. 'च' नास्ति ख। 5. 'अनिम्नोन्नतं' ख। 6. 'लोमानीति' ख। 7. 'च तृणानि' ख। 8. नास्ति ख। 9. 'अवसानं' ख। 10. 'सर्वत्रानुपपद्यते' ख। 11. 'कटुगुणरहिता अकटुकाः' ख।

## गौरपांसु ब्राह्मणस्य ॥ ५ ॥

गौरा गौरवर्णाः पांसवो रेणवो यस्मिन् अवसाने, तद् गौरपांस्ववसानम्, तद् ब्राह्मणस्य भवति। उत्तरसूत्रयोरप्येवमेव विग्रहः(A)।

## लोहितपांसु क्षत्रियस्य ॥ ६ ॥

## कृष्णपांसु वैश्यस्य ॥ ७ ॥

## स्थिराघातमेकवर्णमशुष्कमनूषरममरुपरिहितमक्लिन्नम् ॥ ८ ॥

मुद्गरादिभिरपि [1]यदाहन्यमानं न विदीर्यते तत् स्थिराघातम्। एकवर्णमभिन्नवर्णम्। यत्रोत्पद्यमाना एवौषधयो न शुष्येयुस्तदिदमशुष्कम्। ऊषरमिरिणम्, यत्रोप्तं न प्ररोहति; न ऊषरमनूषरम्। मरुशब्देन उदकरहितः [2]प्रदेश उच्यते, यत्र दूरमपि खनद्भिः किञ्चिदेवोदकमुपलभ्यते।

उक्तञ्च — द्वीपमुन्नतमाख्यातं शाद्वा चैवेष्टका स्मृता।
किलिन्नं [3]सजलं प्रोक्तं दूरखातोदको मरुः(B) ॥ इति।

तथा मरुभूम्या यत् परिहितं सर्वतो वेष्टितं स्थानं तन्मरुपरिहितम्, न मरुपरिहितम् अमरुपरिहितम्, किलिन्नं प्रत्यासन्नोदकत्वादुदकक्लिन्नमुच्यते।

उक्तञ्च— किलिन्नं [4]सजलं प्रोक्तमिति।

## दर्भसम्मितं ब्रह्मवर्चसकामस्य ॥ ९ ॥

दर्भसम्मितं (C)दर्भसंयुक्तम्, ब्रह्मवर्चसं व्याख्यातम्(D)। तत्कामस्य।

## बृहत्तृणैर्बलकामस्य ॥ १० ॥

---

A. अत्र सूत्रानङ्गस्यापि अवसानपदस्य कथं समासेऽन्तर्भावः कृतो भाष्यकारेणेति न ज्ञायते, 'अवसाने' इति पदं लिपिकरप्रमादेनातिरिक्तं वा निवेशितं स्यात्। सत्यालङ्कारेण तु अवसानम् इति सम्बध्यते इत्युक्तम्। प्रमाणमत्र भगवन्तोऽनूचानाः।

B. कर्मप्रदीपः ३।१०।१९।

C. दर्भैः कुशैः सम्यक् मीयते ज्ञायते परिच्छिद्यते वा यत् तदेवेत्यक्षरार्थः। प्रमाणमत्र गृह्यान्तरम्—यस्मिन् कुशवीरणप्रभूतम् इति।

D. द्रष्टव्यं ४।९।१४ सूत्रभाष्यम् (पृ० ७९९)।

---

1. 'यदा-' नास्ति ख। 2. 'प्र-' नास्ति घ। 3. 'विक्लिन्नं' घ। 4. 'विक्लिन्नं' घ।

बलं भरं भरतीति बिभर्त्ती[1]ति वा, [2]तत्कामस्य बृहत्तृणैः वीरणादिभिः संमित-मिति वर्तते।

## मृदुतृणैः पशुकामस्य ॥ ११ ॥

संमितमिति वर्तते(A)।

## शादासम्मितं(B) मण्डलद्वीपसम्मितं वा ॥ १२ ॥

शादा इष्टका देशान्तरप्रसिद्धा। उक्तञ्च—शादा [3]चैवेष्टका स्मृतेति। तथा सम्मितं तदाकृति, चतुरस्रमित्यर्थः। कथं नाम? गृहस्थानस्य परि[4]वृतस्य चतुरस्रं कार्य-मिति। मण्डलं परिमण्डलं वर्तुलमित्यर्थः। द्वीपशब्देन [5]उन्नतमभिधीयते 'द्वीप-मुन्नतमाख्यातम्' इति वचनात्। मण्डलं च तत् द्वीपश्च मण्डलद्वीपम्। तत्सम्मितं वा तदाकृति वा। कथं नाम? उन्नतस्य सतः परिवृत्तिः परिमण्डला कार्या चतुरस्रा वेति।

## यत्र वा श्वभ्राः स्वयंखाताः सर्वतोऽभिमुखाः स्युः(C) ॥ १३ ॥

यत्र वा यस्मिन् वा स्थाने श्वभ्राः अवटाः स्वयंखाताः स्वयमुत्पन्नाः सर्वतः सर्वासु दिक्षु(D) अभिमुखाः इतरेतराभिमुखेणावस्थिताः स्युर्भवेयुः।

---

A. मृदुतृणैः दूर्वादिभिः। सेयं त्रिसूत्री यथाक्रमं ब्राह्मण-क्षत्रिय-वैश्यानाम् अवसानस्य विशेषणार्था। कथं ज्ञायते? तथैव ब्रह्मवर्चस-बल-पशुकामनानाम् आञ्जस्येनोपपत्तेः। यथाचोक्तम्—

कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही।
अनुवर्णं वृद्धिकरी मधुरकषायाम्लकटुका च।

इति चात्र तर्कालङ्कारीया व्याख्या।

B. चन्द्रकान्तमते सम्मितम् इत्यन्तमेकं सूत्रं ततोऽपरमिति। इदमपिमञ्च सूत्रम् एक-सूत्रतया परिगणितं सत्यव्रतेन।

C. एतत्सूत्रानन्तरम् अनुद्धारम् इति सूत्रं कल्पयति सामश्रमी।

D. यत्र खलु दिशां विदिशाञ्च विचारणा नाभिप्रेयते तत्र 'सर्वतः' इति शब्दः प्रयुज्यते आचार्येण, तथाच गृह्यासंग्रहः—

दिशाञ्च विदिशाञ्चैव यत्र नोक्ता विचारणा।
सर्वतस्तत्र शब्दोऽयं विधियोगे निपात्यते ॥

इति गृ० स० १।९४।

---

1. 'इति वा' नास्ति घ। 2. 'एतत्-' ख। 3. 'वे चेष्टका' घ। 4. '-वृतमपि' ख। 5. 'म उन्नत-' ख।

## तत्रावसानं(A) प्रागद्वारं यशस्कामो बलकामः कुर्वीत ॥ १४ ॥

तत्र तस्मिन् एवंगुणविशिष्टे स्थाने अवसानं गृहम्, अयमवसानशब्दो गृहवचनः; कुतः? पुनरवसानग्रहणात्, 'अनुद्वारं च गृहद्वारमि'ति गृहशब्दश्रुतेश्च। [1]प्रागद्वारं प्राङ्मुखद्वारं यशस्कामो बलकामः कुर्वीत, कामशब्दाभ्यासादन्यतरकामो नोभयकामः, यद्युभयमभिप्रेतं स्यात् तथा सति यशोबलकाम इत्यवक्ष्यत्। तस्माद् यशस्कामो बलकामो वेति द्रष्टव्यम्।

## उदगद्वारं पुत्रपशुकामः ॥ १५ ॥

अवसानं कुर्वीतेति वर्तते।

## दक्षिणद्वारं (B)सर्वकामः ॥ १६ ॥

दक्षिणद्वारे वास्तुनि यद् यत् कामयते तत् तद् भवतीति दर्शयति।

## न प्रत्यगद्वारं कुर्वीत ॥ १७ ॥

ऋज्वर्थम्।

## अनुद्वारं च (C)गृहद्वारम् ॥ १८ ॥

न कुर्वीतेति वर्तते। अनु पश्चाद् द्वारमनुद्वारम्, तादृशं गृहद्वारं न कुर्वीतेति द्विद्वारमित्यर्थः, अथवा द्वारमनु गृहद्वारं न कुर्वीत। कथं नाम? अन्यगृहद्वाराभिमुखं [2]गृहद्वारं न कुर्वीतेत्यर्थः। तथाच वास्तुविद्याविद्भिरुक्तम्—

द्वारगवाक्षस्तम्भैः कर्दमभित्यन्तकोणवेधैश्च।
नेष्टं वास्तुद्वारं विद्धमनाक्रान्तमार्गैश्च(D) ॥

तथा[3]च 'गृहद्वारं कुर्यात'[4]*—

## यथा न संलोकी स्यात्(E) ॥ १९ ॥

---

A. 'तत्रावसानमि'त्यादि चतुःसूत्री सामश्रमिणा एकसूत्रतया परिगणिता।

B. 'दक्षिणाद्वारमि'ति सामश्रमितर्कालङ्कारौ पठतः।

C. तर्कालङ्कारमते चान्तम् एकसूत्रम्, 'गृहे'त्याद्यपरमिति। सत्यव्रतमते 'अनुद्वारञ्च' इति सूत्रमत्र न वर्तते।

D. कर्मप्रदीपः ३।१०।१६। प्रमाणत्वेन पठितं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये चतुर्थचरणपाठभेदेन। स च पाठः 'विद्धमनाक्रान्तमन्यैश्च' इति।

E. 'गृहद्वारम्' इत्यादि 'संलोकी स्यादि'त्यन्तमेकमेव सूत्रमिति सत्यव्रतस्य कल्पना।

---

1. 'प्राक् पूर्व' ख। 2. 'गृहद्वारं' नास्ति ख। 3. 'च' नास्ति ख। 4. 'द्वार न कुर्वीत' घ।

यथा येन प्रकारेणायं वास्तुनि सन्ध्योपासनहोमार्चनभोजनादिक्रियाप्रवृत्तौ बहिर्वर्तिनां 'श्वचाण्डालपतितादीनां संलोकी आलोकनगम्यो न स्यात् न भवेत्। अन्ये तु यथा न संलोकि स्यादिति पठन्ति। तत्रार्थः—यथा गृहमध्ये धनधान्यादिकं बालसुवासिनी²स्नुषादिकं च बहिर्जनस्य संलोकि आलोकनगम्यं न स्यादिति। किमुक्तं भवति? स्वावृतद्वारं(A) वेश्म कर्तव्यमिति।

तस्य च वेश्मनो "हि सुपरिवृतस्यापि"³—

वर्जयेत्(B) पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा।
न्यग्रोधमपराद् देशाद् उत्तराच्चाप्युदुम्बरम्॥ २०॥

अश्वत्थादयः प्रसिद्धाः।

एतैरेतासु दिक्ष्ववस्थितैः किं भवतीत्यत आह—

अश्वत्थादग्निभयं ब्रूयात् (C)प्लक्षाद् ब्रूयात् प्रमायुकान्।
न्यग्रोधाच्छस्त्रसंपीडामक्ष्यामयमुदुम्बरात्॥ २१॥

प्रमायुकानल्पायुषः। अक्ष्यामयोऽक्षिरोगः। ऋज्वन्यत्।

आदित्यदेवतोऽश्वत्थः प्लक्षो यमदेवतः(D)।
न्यग्रोधो वारुणो वृक्षः प्राजापत्य उदुम्बरः॥ २२॥

देवतानिर्देश उक्तार्थः। ऋज्वन्यत्।

तानस्वस्थानस्थान् कुर्वीत॥ २३॥

येषु स्थानेषु वर्ज्यत्वेनैते अश्वत्थादय उपदिष्टास्तान्येषां स्वस्थानानि, स्वेषु स्थानेषु तिष्ठन्तीति स्वस्थानस्थाः, न स्वस्थानस्था अस्वस्थानस्थाः, अन्यदिक्स्था

A. कपाटयुक्तं गृहप्रवेशमार्गं कर्तव्यमित्यर्थः।

B. 'वर्जयेद्' इत्यादिसूत्रत्रयम् एकं सूत्रं सत्यव्रतमते। रघुनन्दनस्तु प्लक्षस्थाने अक्षं पपाठ।

C. 'विद्यात्' इति पठति चन्द्रकान्तः।

अत्रापि 'अक्षणो भयादि'ति रघुनन्दनधृतपाठः, तत्कृता व्याख्या च—अक्षः पर्कटी। प्रमायुकान् प्रकृष्टपित्तान्। 'मायुः पित्तम्' इत्यमरः। इति।

D. 'अश्वत्थादग्निभयं ब्रूयाद्' इत्यत्र एकाक्षराधिक्ये 'प्लक्षो यमदेवतः' इत्यत्र एकाक्षरन्यूनतायामपि न छन्दोभङ्गदोषश्चोदयितव्यो भवति। भवति चात्र ब्राह्मणं प्रमाणम्—'नह्येकस्मादक्षराद् विराधयन्ति' इति।

1. 'श्व-' नास्ति ख। 2. '-सुखादिकं' ख। 3. 'उपरिवृतस्यापि' ख।

इत्यर्थः। तानेतानश्वत्थादीन् अस्वस्थानस्थान् कुर्वीत अन्यविकृक्षान्नाश्रयेदित्यर्थः। अथवा अस्वस्थानस्थान् कुर्वीत समूलानुद्धरेदित्यर्थः। तदेतद् यथाभिप्रेतम्।

उद्धरणपक्षे त्वयं विशेषः(A)—

A. अत्र तर्कालङ्कारः—"तान् स्वस्थानस्थान् कुर्वीत' इति पाठे तानश्वत्थादीन् स्वस्थानस्थान् स्वेषु स्थानेषु स्थितान् कुर्यादिति व्याख्येयम्। यस्मात् पूर्वादिष्ववस्थितेषु अश्वत्थादिषु अग्निभयादिकं स्वस्थानस्थितेष्वप्यभ्युदयः, तस्मात् तान् स्वस्थानस्थितान् कुर्वीत स्वेषु स्थानेषु रोपयेदित्यर्थः। आह—कानि पुनरमीषां स्वस्थानानि? पूर्वविपरीतानीति ब्रूमः। कस्मात्? वास्तुविद्याविदां वचनात्। तथाचोक्तम्—

याम्यादिष्वशुभफला जातास्तरवः प्रदक्षिणेनैते।
उदगादिषु प्रशस्ताः प्लक्षवटोदुम्बराश्वत्थाः॥ इति
भवनस्य वटः पूर्वे जातः स्यात् सार्वकामिकः।
उदुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः।
प्लक्षश्चोत्तरतो धन्यो विपरीतो विपर्यये॥

इति चैवमादि" इत्याह।

अथ गृहारम्भगृहप्रवेशविषये यो विशेष उक्तो रघुनन्दनेन तस्मात् किञ्चिदाहृत्योपन्यस्यते—

सुनिश्चितां मन्दिरभूमिमादौ निधाय तोयावधि यत्नतस्ताम्।
कुर्याद् विशल्यामथवा नृमानं खात्वाऽथवा प्रश्नवशाद् विधिज्ञः॥

देवीपुराणम्—

पुरुषाधः स्थितं शल्यं न गृहे दोषदं भवेत्।
प्रासादे दोषदं शल्यं भवेद् यावज्जलान्तकम्॥
गृहारम्भेऽतिकण्डूतिः स्वाम्यङ्गे यदि जायते।
शल्यं त्वपनयेत् तत्र प्रासादे भवनेऽपि वा॥

सारसंग्रहे—

न कोणेषु गृहं कुर्यान्नाप्यन्ते नापि मध्यतः।
कोणे च धनहानिः स्यादन्ते रिपुभयं भवेत्॥
मध्ये च सर्वनाशः स्यात् तस्मादेतद् विवर्जयेत्॥
पूर्वप्लवो वृद्धिकरो धनदश्चोत्तरप्लवः।
दक्षिणप्लवतो मृत्युर्धनघ्ना पश्चिमप्लवः॥

वास्तुनः प्रागादिनीचत्वफलम्—

प्रागादिन्ये सलिले सुतहानिः शिखिभयं रिपुभयञ्च ।
स्त्रीकलहः स्त्रीदौष्ट्यं नैःस्वं वित्तात्मजविवृद्धी च ॥
जम्बीरपूगपनसाम्रककेतकीभिर्जातीसरोजतगरापुरमल्लिकाभिः ।
यन्नारिकेलकदलीदलपाटलाभिर्युक्तं तदाश्रमपदं श्रियमातनोति ॥
शोभना दाडिमाशोकपुन्नागबिल्वकेशराः ।
रक्तपुष्पाद् भयं राज्ञः क्षीरिणा च पशोर्भयम् ॥
कण्टकारिर्भयं कुर्याद् गृहभेदञ्च शाल्मलिः ।
कृत्तिकायास्तु पूर्वादौ सप्तसप्तोदिताः क्रमात् ।
यद्दिक्स्थं यस्य नक्षत्रं तत्र तस्य शुभं गृहम् ॥
वास्तुप्रमाणेन तु गात्रकेण वामेन शेते खलु नित्यकालम् ।
त्रिभिस्तु मासैः परिवृत्य भूमौ तं वास्तुनागं प्रवदन्ति सिद्धाः ॥
भाद्रादिके वासवदिक्शिराः स्यान्मार्गादिकेषु त्रिषु याम्यमूर्धा ।
प्रत्यक्शिराः स्यात् खलु फाल्गुनादौ ज्यैष्ठादिकौबेरशिराः स नागः ॥
मूर्ध्नि खाते भवेन्मृत्युः पृष्ठे स्यात् पुत्रभार्ययोः ।
जघनेऽर्थक्षयं विद्यात् सर्वसम्पत् तथोदरे ।
एकं नागोदुसंयुक्तो द्वे चेद् दक्षिणपश्चिमे ॥
त्रिशालं पूर्वतो हीनं कार्यं वा सौम्यवर्जितम् ।
केचिद् दक्षिणभागे तु वदन्त्येकं गृहं बुधाः ॥
ऐशान्यां देवशाला स्यादाग्नेय्याञ्च महानसम् ।
आयुष्करन्तु नैर्ऋत्यां वायव्यां कोशमन्दिरम् ॥

मत्स्यपुराणे—

चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ।
वैशाखे धनरत्नानि ज्यैष्ठे मृत्युस्तथैव च ॥
आषाढे धनरत्नानि पशुवर्जमवाप्नुयात् ।
श्रावणे काञ्चनं पुत्रान् हानिं भाद्रपदे तथा ॥
पत्नीनाशो वृषे मासि कार्त्तिके धनधान्यभाक् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम् ॥
माघे चाग्निभयं विद्यात् फाल्गुने काञ्चनं सुतान् ।
शुक्लपक्षे भवेत् सौख्यं कृष्णे तस्करतो भयम् ॥

विशेषयति भोजः—

कर्किकुम्भहरिनक्रगतेऽर्के पूर्वपश्चिममुखानि गृहाणि ।
तौलिमेषवृषवृश्चिकजाते दक्षिणोत्तरमुखानि कुर्यात् ॥
अन्यथा यदि करोति दुर्मतिर्व्याधिशोकधनहानिमश्नुते ।
मीनचापमिथुनाङ्गनागते कारयेन्न गृहमेव भास्करे ॥
न प्रधानगृहारम्भं कुर्यात् पौषे शुचावपि ।
यदि कुर्यात् सोऽचिरेण महतीमापदं व्रजेत् ॥

महाभारते—

निषिद्धेऽपि हि काले तु स्वानुकूले शुभे दिने ।
तृणवक्षगृहारम्भे मासदोषो न विद्यते ॥
छेदनं संग्रहश्चैव काष्ठादीनां न कारयेत् ।
श्रवणादौ बुधः षट्के न गच्छेद् दक्षिणां दिशम् ॥
अग्निपीडाभयं शोको राजपीडा धनक्षयः ।
संग्रहे तृणकाष्ठानां कृते वस्वादिपञ्चके ॥
क्षीरिवृक्षोद्भवं दारु गृहेषु न निवेशयेत् ।
कृताधिवासं विहगैरनिलानलपीडितम् ॥
गजैर्विभग्नञ्च तथा विद्युन्निर्घातपीडितम् ।
चैत्यदेवालयोत्पन्नं वज्रभग्नं श्मशानजम् ॥
देवाद्यधिष्ठितं दारु नीपनिम्बविभीतकान् ।
कण्टकिनोऽसारतरून् वर्जयेद् गृहकर्मणि ॥
वटाश्वत्थौ च निर्गुण्डी कोविदारविभीतकौ ।
प्लक्षकं शाल्मलीञ्चैव पलाशञ्च विवर्जयेत् ॥
विस्ताराद् द्विगुणोच्छ्रायं द्वारं कुर्यात् तथा शुभम् ।

गृहारम्भन्तु श्रवणादावप्याह राजमार्तण्डः—

आदित्येज्यभरोहिणीमृगशिरश्चित्राधनिष्ठोत्तरा-
पौष्णीविष्णुशतानुराधपवनैः शुद्धैः सुतारान्वितैः ।
सौम्यानां दिवसेऽथ पापरहिते योगे विरिक्ते तिथौ
विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादिकार्यं शुभम् ॥

मत्स्यपुराणम्—

चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् ।
स्तम्भोच्छ्रायादि कर्तव्यमन्यत्र परिवर्जयेत् ॥

## एताश्चैव देवता अभियजेत ॥ २४ ॥

'चशब्दोऽनन्तरोक्तकल्पाभिसम्बन्धार्थः। समूलानुद्धरेत् तद्दोषोपशमाय च

अश्विनी रोहिणी मूलमुत्तरत्रयमैन्दवम् ।
स्वाती हस्ताऽनुराधा च गृहारम्भे प्रशस्यते ॥
वज्रव्याघातशूले च व्यतीपातेऽतिगण्डके ।
विष्कुम्भगण्डपरिघवर्ज्यं योगेषु कारयेत् ॥
आदित्यभौमवर्ज्यास्तु सर्वे वाराः शुभावहाः ।
प्रासादेऽप्येवमेव स्यात् कूपवापीषु चैव हि ॥

राजमार्तण्डे—

पूर्णिमातोऽष्टमीं यावत् पूर्वास्यां वर्जयेद् गृहम् ।
उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम् ॥
अमावास्याऽष्टमीमध्ये पश्चिमास्यं विवर्जयेत् ।
नवमीतश्च याम्यास्यं यावच्छुक्लचतुर्दशीम् ॥

ज्योतिषे—

उग्रं विशाखामदितिञ्च शक्रं भुजङ्गमश्विञ्च विहाय गेहम् ।
ग्राम्यस्वलग्नस्थिरमन्दिरेषु कुर्याच्छुभैर्युक्तनिरीक्षितेषु ॥
नवग्रहा भवेयुश्च यदि केन्द्रत्रिकोणगाः ।
दोषस्तदा क्षयं याति तमः सूर्योदये यथा ॥

देवगृहे तु विशेषः—तत्र कल्पतरौ देवीपुराणम्—

यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे ।
गर्तापूरशिलान्यासे शुभदस्तस्य पूजितः ॥

मात्स्ये—

चैत्रेऽथ फाल्गुने वाऽपि ज्यैष्ठे वा माधवेऽपि वा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

प्रतिष्ठासमुच्चये 'ज्यैष्ठाषाढकयोर्वाऽपि' इत्युक्तेराषाढे दक्षिणायनेऽपि दुर्गाप्रतिष्ठामाह देवीपुराणम्—

महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने ॥ इति ।

कृत्यचिन्तामणौ—

गृहेषु यो विधिः प्रोक्तो विनिवेशप्रवेशयोः ।
स एव विदुषा कार्यो देवतायतनेष्वपि ॥

एतत्तु मासव्यतिरिक्तशुभचन्द्रादिविषयम्, अन्यथा प्रागुक्तविरोधापत्तेः। इति ।

---

1. नास्ति च ।

एता एव देवता अभियजेतेति। अथवा अस्य प्रायश्चित्तस्याल्पत्वात् स्मृत्यन्तरोक्त-प्रायश्चित्तसमुच्चयार्थश्चशब्दः। एता एव देवता अभियजेत ऋक्शतं च जपेदिति'*। उक्तञ्च मनुना—

फलदानाञ्च वृक्षाणां छेदने जप्यमृक्शतम्(A)। इति।

एवकारकरणाद् यद्दैवत्य'मेव वृक्षमुद्धरेत् तामेव देवतामभियजेत न ततोऽपीति(B)।

## मध्येऽग्निमुपसमाधाय कृष्णया गवा यजेत ॥ २५ ॥

कस्य मध्ये, निष्पन्नस्य ²गृहस्य? न तदर्थपरिगृहीताया भूमेः; कुतः? पूर्वैः प्रोष्ठपदैः गृहेऽग्निं प्रतिष्ठाप्येति सामविधौ दृष्टत्वात्(C)। अग्निमुपसमाधायेति

A. मनुसंहिता ११।१४२। अस्योत्तरार्धन्तु—

गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधाम्। इति।

अस्य व्याख्यायां कुल्लूकभट्टः—"फलदानामाम्रादीनां वृक्षाणां गुल्मानां कुब्जकादीनां वल्लीनां गुडुच्यादीनां लतानां वृक्षशाखासक्तानां पुष्पितानाञ्च वीरुधां कुष्माण्डादीनां प्रत्येकं छेदने पाप-प्रमोचनार्थं सावित्र्यादि ऋक्शतं जपनीयम्।

इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् (११।६४)

इत्यादुपपातकमध्ये पठितस्य गुरुप्रायश्चित्ताभिधानात्। इदं फलवद्वृक्षादिच्छेदने लघुप्रायश्चित्तं सकृदबुद्धिपूर्वकविषयं वेदितव्यम्"। इत्याह।

B. केचित्तु कल्पान्तरसमुच्चयार्थमपि चशब्दं वर्णयन्ति। कथं नाम? यदि तान् अन्यस्थानस्थान् न कुर्यात् तदा—

छिन्द्याद् यदि न तरूंस्तांस्तदन्तरे पूजितान् वपेदन्यान्।
पुन्नागाशोकारिष्टबकुलपनसाम्लशमीशालौ ॥

इति वास्तुविद्याविदुक्तं कुर्यादिति, तदिदं कल्पान्तरं चशब्देन समुच्चीयते इति मन्यन्ते।

C. तथाच वास्तुशमने सामविधानब्राह्मणम्—प्रदक्षिणं प्रतिदिशं रज्ज्वा यच्छेदवान्तर-देशेषु च यत्राभिसमेयुस्तत्रोपलिम्पेद् रज्ज्वन्तेषु च शमीपलाशाश्वत्थपर्णानां पात्रैर्वास्तूपकिरेत, अक्षतैश्च सुमनोभिश्च पूर्वैः प्रौष्ठपदैर्गृहे अग्निं प्रतिष्ठाप्य धामावन्तं कल्मिणमित्येतद् गीत्वा पायस-मग्नौ जुहुयात् परेषाञ्च पलाशपर्णमध्यमेषु बल्युपहारः प्रजापतये स्वाहेति मध्य उपहरेत्, इन्द्रायेति पुरस्ताद् वायव इत्यवान्तरदेशे यमायेति दक्षिणतः पितृभ्य इत्यवान्तरदेशे वरुणायेति पश्चान्महाराजायेत्यवान्तरदेशे सोमायेत्युत्तरतो महेन्द्रायेत्यवान्तरदेशे वासुकये इत्यधस्ताद् ऊर्ध्वं नमो ब्रह्मण इति दिवि बहुपशुजनधान्यहिरण्यमायुष्मत्पुरुषं वीरसूः सुधर्मा अविपन्न-

1. 'एव' नास्ति ख। 2. 'गृहस्य मध्ये' ख।

व्याख्यातम्(A)। कृष्णया कृष्णवर्णया [1]गवा यजेत।

गोरभावे कथमित्यत आह—

## अजेन वा श्वेतेन ॥ २६ ॥

यजेतेति वर्तते। गो-पशुभ्यां यथालाभमन्यतरेण यजेतेत्युक्तम्।

तत् किं केवलाभ्यां यजेत? न; किं तर्हि?

## सपायसाभ्याम् ॥ २७ ॥

गवा पायससहितया यजेत, अजेन वा सपायसेनेति।

पशुद्वयाभावे कथमित्यत आह—

## पायसेन वा ॥ २८ ॥

केवलेन पायसेन वा [2]यजेतेति वर्तते। तदत्र पशुप्रोक्षणे पायसहविषश्च निर्वापे वास्तोष्पतये त्वेति देवतानिर्देशः स्यात्, कुतः? समाख्यानात्। उक्तञ्च अनाम्नातेष्विति(B)। जातवेदो वपया गच्छ देवानिति च वपाहोममन्त्रः स्यात्, कुतः? देवदेवत्यत्वात्, केवलपायसपक्षे तु वपायागलोपः स्यात्, प्रधानाभावे गुणानां दूरत एवाभावात्। अवदानान्यप्यत्र चतुर्दशावदेयानि, कुतः? वामसक्थिलोम्नोरपवादाभावात्(C)।

एवं प्रकृतिवत् पायसमांसचरू श्रपयित्वा ततः—

## वसामाज्यं मांसं पायसमिति संयूय ॥ २९ ॥

वसा [3]शृतावदानमांसयूषः(D)। आज्यं घृतम्। मांसं पश्ववदानमांसम्, पयसि

---

क्षीकं शिवं पुण्यं वास्तु भवति, चतुर्षु मासेषु प्रयोगः संवत्सरे वा पुनः प्रयोगः पुनः प्रयोगः। इति ३।३।

A. द्रष्टव्यं सूत्रम् १।३।१ ( पृ०-४५-४६ )।

B. द्रष्टव्ये सूत्रे ४।४।२२-२३ ( पृ० ७८३-८४ )।

C. द्र०, सू० ४।१।१४ ( पृ०, ७१९ )।

D. अत्र तर्कालङ्कारः—"वसाम् इति शृतावदानमांसयूषमाहुः। तद्धि वसासम्पृक्तं भवति। शृते खलु मांसे निर्गच्छन्ती वसा यूषेणैव मिश्रीभवति न पृथगुपलभ्यते। आह—एतस्माल्लिङ्गात् पूर्वमेव वसां पृथगुद्धरिष्यामः? न इत्युच्यते, कुतः? कल्पनागौरवापत्तेः, प्रमाणविशेषस्य चाभावात्। तस्मात् वचनद्वयस्यैव श्रवणमात्रादवगतेरन्यथोपपन्नं लिङ्गं न

---

1. 'गवा' नास्ति च। 2. 'यजेत' नास्ति ख। 3. 'पूतावदानानां यूषः' च।

भवः पायसः, एतानि वसादीनि चत्वारि संयूय, यु मिश्रणे संमिश्र्य। अत्र चावदानानां प्रकृतिव[1]न्मध्यपूर्वार्धेभ्यो नावदेयम्, कुतः? अष्टगृहीतं गृहीत्वेत्युपरिष्टाद्[2] ग्रहण-विशेषोपदेशात्। तस्मादवदानानि श्रपयित्वा कंसे वसामवसिच्य प्रस्तरेऽवदानानि कृत्वा नवायां सूनायाम् अणुशश्छेदयित्वा कंसपात्रे वसाज्यपायसैः सह संयूय ;

ततः—

अष्टगृहीतं गृहीत्वा जुहुयात् ॥ ३० ॥

"अष्टावदानानि [4]यत्र गृह्यन्ते तदिदमष्टगृहीतम्(A)। तच्च सन्नीतस्य "मध्य-पूर्वार्धाभ्यां त्रिर्ग्रहणात् षडवदानानि भवन्ति, भृगूणान्तु मध्यपूर्वार्धपश्चार्धेभ्यो द्विर्ग्रहणात् षडेव भवन्ति। पुरस्ताच्चोपरिष्टाच्चाऽऽज्यस्य", एवमष्टगृहीतं भवति। अवदानस्थानानि चात्र पृथगाज्येनावनेजयेत्, प्रत्यनक्त्यवदानस्थानानीति (B)प्रकृताव-विशेषेण विधानात्।

वास्तोष्पत इति प्रथमा(C) वामदेव्यर्चो महाव्याहृतय इत्युत्तमा ॥ ३१ ॥

(D)वास्तोष्पते प्रतिजानीहि इत्यनेन मन्त्रेण प्रथमा आहुतिर्भवतीति शेषः। वाम-

---

पर्यन्तरमनुमापयति इत्यास्थेयम्। दृश्यते खल्वन्यत्रापि तत्सम्बन्धात् ताच्छब्द्यम्। दण्डयोगाद् दण्डः पुरुष इत्येवमादौ बहुलम्" इत्याह।

A. अत्र तर्कालङ्कारः—"अष्टगृहीतं गृहीत्वा अष्टकृत्वो गृहीतं कृत्वा इत्येतत्। कस्मा-दष्टगृहीतं गृहीत्वा? संमिश्रितादित्याह। कुतः? मिश्रणस्य तदर्थत्वात्, पूर्वत्र तथैव दृष्टत्वात्। अत्र च मध्यात् पूर्वार्धादिति प्राकृतो धर्मो निवर्तते। कस्मात्? वैकृतस्य विशेषोपदेशस्यार्थवत्त्वात्। भृगूणामपि नात्र कश्चिद् विशेषः, एवमेके" इत्याह।

B. द्रष्टव्यं सूत्रम् १।८।८ ( पृ० २२० )।

C. सूत्रमिदं प्रथमा इत्यत्र—'देव्यर्चे' इत्यत्र—'हृतय' इत्यत्र च विभज्य चतुःसंख्याकं कृतवांश्चन्द्रकान्तः।

D. मन्त्रस्तु—

ॐ वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशो अनमीवो भवा नः।
यत्ते महे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥ इति।

मन्त्रब्राह्मणम् २।६।१ विनियोगप्रमाणन्तु खादिरगृह्येऽपि ४।२।१८।

अस्य व्याख्या—हे वास्तोष्पते वास्तोर्गृहाधिष्ठानस्यास्य पालयितः, एतन्नामकदेव,

---

1. '-मध्यात् पूर्वा-' ख। 2. '-ष्टाद्' नास्ति ख। 3. 'षट् चावदानानि' ख। 4. 'यत्र' नास्ति ख। 5. 'मध्यमपूर्वाभ्यां' ख। 6. '-ज्यम्' ख।

देव्यर्चौ महाव्याहृतय इति व्याख्यातम्(A)। प्रजापतये स्वाहेत्यनेन च मन्त्रेण उत्तमा आहुतिर्भवतीति वर्त्तते। उपदेशक्रमादेव सिद्धे प्रथमोत्तमाग्रहणमयुक्तमिति चेत्? 'न; एतयोरेव देवतयोः संनीत'हविर्यागाभिसम्बन्धार्थं प्रथमोत्तमाग्रहणम्। वामदेव्यर्ग्भि-र्महाव्याहृतिभिश्चैतयोरेवान्तराज्यं जुहुयात्।

उक्तञ्च—

आश्वयुज्यां तथा कृष्यां वास्तुकर्मणि याज्ञिकाः (B)।

इत्यादि। एवञ्च द्वे एवाष्टगृहीतेन भवतः। अन्तरा षडाज्याहुतयः सकृद्गृहीतेनेति(C)।

## हुत्वा दश बलीन् हरेत्॥ ३२॥

हुत्वेति प्राप्तत्वात् अवाच्यमिति चेत्? न; 'प्राक् स्विष्टकृत आवापः' [सू० १।८।१५] इति वचनाद् बलिहरणस्याप्ययमेव क्रमो मा भूदित्यतः स्विष्टकृदादेर्यज्ञवास्त्वन्तस्य कर्मण उपसंग्रहार्थं प्राप्ते पुनर्वचनम्।

अथवा कर्मापवर्गत्वात्कृत एव बलिहरणे वामदेव्यगानं मा भूदित्यतः क्रमार्थं पुनर्वचनम्। हुत्वा दश बलीन् हरेत् ततो वामदेव्यं गायेदिति। अथवा हुतशेषेण

---

अस्मान् अनुष्ठातॄन् गृहवासिनो वा प्रतिजानीहि प्रतिज्ञां कुरु रक्षिष्यामीति। अथवा प्रत्येकमस्मान् रक्षया एवेत्यवबुध्यस्व। किञ्च नोऽस्माकं स्वावेशः सुष्ठु आ सर्वतः प्रवेशयुक्तो भव। तथा अनमीवो रोगरहितोऽव्याधितो भव। अस्माकं शोभननिवेशनं रोगाभावञ्च कुरु इत्यर्थः। किञ्च ते त्वां यत् फलं महे तन्नोऽस्मभ्यं जुषस्व प्रयच्छेत्यर्थः। किञ्च नोऽस्माकं द्विपदे पुत्रभृत्यादिकाय शं सुखकरो भव, तथा चतुष्पदे पश्वादये शं भव इति। इति।

A. वामदेव्यर्क्त्रयी महाव्याहृतयश्च उक्ताः प्राक्। द्र० सू० ४।६।७-८। (पृ० ८११-१२)

B. कर्मप्रदीपवचनमिदमुक्तं प्राक् ३।८।२ सूत्रभाष्ये ( पृ० ६७ )

C. अत्र तर्कालङ्कारः—"उच्यते—अनयोः प्रथमोत्तमत्वमभिदधानः खल्वनयोरेवाऽऽहुत्यो-र्हव्यागाभिसम्बन्धं ज्ञापयत्याचार्यः। न सर्वासामाहुतीनाम्। तस्माद् वामदेव्यर्चौ महाव्याहृतय इत्यन्तरुपसृताः षडाहुतय आज्येनैव स्युः, न चरुणा। तथाचोक्तम्—

आश्वयुज्यां तथा कृष्यां यज्ञकर्मणि याज्ञिकाः।

यज्ञार्थतत्त्ववेत्तारो होममेवं प्रचक्षते॥

द्वे पञ्च द्वे क्रमेणैता हविराहुतयः स्मृताः।

शेषा आज्येन होतव्या इति कात्यायनोऽब्रवीत्॥ इति।

सोऽप्यमर्थः। रघुनन्दनादयस्त्वेतदजानन्तः सर्वा एव चर्वाहुतीरिच्छन्ति। तदयुक्तम्" इत्याह।

---

1. 'न' नास्ति ख। 2. 'हविः' नास्ति ख।

बलिदानप्रदर्शनार्थं हुत्वेत्युक्तम्। हुत्वा तच्छेषेण दश बलीन् हरेदिति। दशाना-मेवोपरिष्टा'न्निर्देशाद् 'दशेत्यवाच्यमिति चेत्? न; 'प्राच्यूर्ध्वावाचीभ्योऽहरहर्नित्य-प्रयोगः' [ सू० ४।७।३७ ] इति वचनात्। इहैतस्य बलित्रयस्या"नित्यत्वप्रसक्तो मा भूदित्यतस्तदाशङ्काव्यावृत्त्यर्थं दशेत्युक्तम्(A)।

'बलीन् हरेदित्युक्तम्, क तान् हरेदित्यत आह—

## प्रदक्षिणं प्रतिदिशम् ॥ ३३ ॥

बलिहरणदेवतोपदेशसूत्रात् प्रादक्षिण्यसिद्धेः प्रदक्षिणमित्यवाच्यमिति चेत्? न; अग्नेः प्रदक्षिणं कृत्वा'* बलीन् हरेदित्येवमर्थं प्रदक्षिणमिति वचनम्, इतरथा विशेषा-भावाद् ब्रह्मणोऽग्नेश्चान्तरा अप्रादक्षिण्येन वा गच्छेत्; तदनिष्टमतः प्रदक्षिण"मिति वचनम्। दिशं दिशं प्रति प्रतिदिशम्। बलीन् हरेदिति वर्तते।

"किं मुख्यास्वेव चतसृषु दिक्षु? न; किं तर्हि?

## अवान्तरदेशेषु ॥ ३४ ॥

च-शब्दो लुप्तवद् द्रष्टव्यः, अवान्तरदेशेषु च बलीन् हरेदिति वर्तते"*।

कथं हरेदित्यत आह—

## आनुपूर्व्येणाव्यतिहरन्(B) ॥ ३५ ॥

ननु इद'मनारभ्यं सूत्रमुत्तरसूत्रात् तदर्थ"सिद्धेः? न; एतस्मिन्ननुच्यमाने पूर्वसूत्रसामर्थ्याद् बलिमन्त्रान् विहृत्य चतसृषु मुख्यासु दिक्षु हृत्वा ततोऽवान्तर-

---

A. "अथवा 'प्रजापतये स्वाहेति मध्य उपहरेत्' इति सामविधानब्राह्मणे एकादशानां बलीनां हरणदर्शनादत्रापि मध्यतोऽप्यधिकं बलिहरणं स्यादितीमामधिकाशङ्कामपनेतुं दश इत्याह। दशैवात्र बलयो भवन्ति न पुनः सामविधानवदेकादश। प्रजापतये स्वाहेति होम एवात्र स्यात् न बलिरित्यभिप्रायः। न चैवं ब्राह्मणविरोध इति शङ्कनीयम्, तस्मात् कल्पात् कल्पान्तरत्वादेतस्य, अत एव होमेऽपि तत्र विशेषः श्रूयते। स च तत्रैवानुसन्धेयः। तस्माद् ब्राह्मणं श्रौताग्निविषयं कल्पान्तराभिप्रायं वेत्यास्थेयम्" इति चात्र तर्कालङ्कारीये भाष्ये।

B. 'हुत्वे'त्यादि'व्यतिहरन्' इत्यन्तसूत्रचतुष्टयी सामश्रमिमते एकसंख्यकेति।

---

1. 'निर्देशात्' नास्ति ख। 2. 'दशेत्येतदवाच्य-' ख। 3. '-स्यापि नित्यत्व-' ख। 4. नास्ति ख। 5. '-मिति' नास्ति ख। 6. नास्ति ख। 7. '-मनारभ्यं' ख। 8. '-सिद्धिः' ख।

दिक्षु हरेत् ; तदनिष्टमत इदमुक्तम् । आनुपूर्व्येण यथाक्रमेण । अव्यतिहरन् बलिमन्त्राणां दिशाञ्च व्यत्यासमकुर्वन्(A) ।

केषु प्रदेशेषु हरेत् काभ्यश्च देवताभ्य इत्यत आह—

**इन्द्रायेति पुरस्ताद् वायव इत्यवान्तरदेशे यमायेति दक्षिणतः पितृभ्य इत्यवान्तरदेशे वरुणायेति पश्चान्महाराजायेत्यवान्तरदेशे सोमायेत्युत्तरतो महेन्द्रायेत्यवान्तरदेशे वासुकय इत्यधस्तादूर्ध्वं नमो ब्रह्मण इति दिवि ॥ ३६ ॥**

अधस्तादिति नीचप्रदेश इत्यर्थः । 'दिवीति आकाश इत्यर्थः'[1] । कुतः ?

विश्वेभ्य[2]श्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत्(B) ॥

---

A. सूत्रन्यासस्य व्याख्यायां तर्कालङ्कारः—"कस्य पुनर्व्यतिहारो निषिध्यते ? आनुपूर्व्यस्येत्याह । कुतः ? सन्निधानात्, मन्त्राणामिति च प्रतिपद्यामहे । कस्मात् ? तेषामपि बौद्धसन्निधानस्य सम्भवात् । न वक्तव्यं तर्हि ? ननु विधानसामर्थ्यादेव व्यतिहारो न भविष्यति, अथोच्यते—कारणं वक्तव्यम् । आदरार्थमिति ब्रूमः । आह—ननु सूत्रमेवैतदवाच्यं पूर्वसूत्राभ्यामुत्तरसूत्रेण चास्य गतार्थत्वात् ? उच्यते—नैष दोषः । कस्मात् ? सामान्यप्राप्तेर्विशेषकथनस्यापुनरुक्तत्वात् । लेखशैली खल्वियमाचार्याणाम्, त खल्वादितः सामान्येनाभिधाय पुनस्तदेव विशेषेणाभिदधते । सोऽयमलङ्कारो न दोषः । एतस्मिन् खल्वनुक्ते पूर्वसूत्रद्वयक्रमानुरोधान्मन्त्रान् विहृत्य किमादितः सर्वासु दिक्षु बलिहरणं ततोऽवान्तरदेशेषु ? उत उत्तरसूत्रानुसारात् तदुक्तेनैव क्रमेण ? उताहो उभयत्रापि पाठक्रमस्याविशेषाद् विकल्पः ? इति कदाचित् शिष्या मुह्येयुः, अतः परमकारुणिक आचार्यः सूत्रमिदं रचयाञ्चकार । ननु तथाऽपि न ज्ञायते प्राचीनस्य पराचीनस्य वा क्रमस्यानुपूर्व्यमत्राभिप्रेतमिति, पराचीनस्येत्याह । कुतः ? यतः प्राचीनस्य क्रमस्यानुपूर्व्ये खल्वभिप्रेयमाणे मन्त्राणां व्यतिहारः स्यात्, तच्चानिष्टम्, उत्तरसूत्रतात्पर्यपर्यालोचनाच्चैवमवगच्छामः । यदि तावत् प्राचीनस्य क्रमस्याऽऽनुपूर्व्यमिहाभिप्रेतमभविष्यत् नूनमुत्तरत्र पुरस्तादिति, अवान्तरदेशे इति चैवमादि देशकीर्तनं नाकरिष्यत् । अकार्षीच्चाऽऽचार्यः, तस्मादवगच्छामो न प्राचीनस्य क्रमस्याऽऽनुपूर्व्यमिह प्रतिपिपादयिषितम् इति" एवमाह ।

B. मनुसंहिता ३।९० ( वचनमिदमुक्तं प्राक् पृ० ७६-७७ ) ।

1. नास्ति ख । 2. 'चैव' नास्ति ख ।

इति 'मनुवचनात्। ब्रह्मणे इत्यत्रान्ते नमस्कारः स्यात्, कुतः? प्रकृतौ तथा दृष्टत्वात्।

अमुष्मै नम इत्येवं बलिदानं विधीयते(A)। इति वचनात्।

यथोपदेशं वा स्यादुपदेशसामर्थ्यात्। एवं चेद् विकल्पस्तुल्यबलत्वात्(B)। अत्रापि भूमिकरणमद्भिश्चोभयतः परिषेकः स्यात्। कुतः? प्रकृतौ तथा दृष्टत्वात्(C)।

A. कर्मप्रदीपवचनमिदमुक्तं प्राक् १।४।८ सूत्रभाष्ये ( पृ० ८३ )।

B. अत्र तर्कालङ्कारः—

"पितृभ्य इत्यत्र चान्ते स्वधाकारः स्यात्। कस्मात्?

स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा।

इति कर्मप्रदीपवचनात्। ब्रह्मबलौ तु यावदुक्तत्वादादित एव नमस्कारः स्यात्। विशेषवचनस्य सत्यर्थवत्त्वार्थं सामान्यवचनस्योपरोध इष्यत एव। न च विकल्पः, अतुल्यबलत्वात्। सामान्यविशेषयोर्विकल्पस्य क्वचिदप्यदर्शनात्। उपजीव्यश्च सत्वाचार्यः कात्यायनस्य, इति नैतदन्यथयितुं शक्यम्। सामविधानब्राह्मणेऽप्येवमेवैतत् समाम्नायते, इति नात्र विकल्पो युक्तः कल्पयितुम्। अपरे पुनरेतद्विद्वांसो भाषन्ते 'ब्रह्मणे इत्यत्रान्ते नमस्कारः स्यात्। कुतः? प्रकृतौ तथा दृष्टत्वात्, यथोपदेशं वा स्यादुपदेशसामर्थ्यात्, एवञ्चेद् विकल्पस्तुल्यबलत्वादि"ति एवमुक्त्वा भाष्यकारमाक्षिपति। परमिदमत्रावधेयम्—आचार्येण 'नमो ब्रह्मणे' इति पदं विहाय कुत्रापि बलिहरणे नमःपदस्य प्रयोगो न कृत इति कथं ज्ञायते सर्वत्र नमःशब्दपूर्वकत्वं बलिहरणे भवतीति? अमुष्मै नम इत्यादिकर्मप्रदीपवचनमेव प्रमाणमिति चेत्, सर्वत्र तदेव प्रमाणमादरणीयम्, यतस्तद्ग्रन्थकारेण कात्यायनेन ग्रन्थारम्भ एव प्रतिज्ञातम्—

अथातो गोभिलोक्तानामन्येषाञ्चैव कर्मणाम्।

अस्पष्टानां विधिं सम्यग् दर्शयिष्ये प्रदीपवत्।

इति। एवञ्च सर्वत्रानुक्तस्थले यदि नमःपदान्तमन्त्रप्रयोगे दोषो न स्यादत्रापि न भविष्यति। यदि ब्रह्मणे नम इति मन्त्र आचार्यविरुद्धोऽभविष्यत् तर्हि कात्यायनोऽवश्यमेवाकथयिष्यत्—ब्रह्मबलिभिन्नबलिषु नमःपदान्तमन्त्रो वक्तव्य इति। किन्तु सामान्यत एव तेनोक्तं नमःपदान्तत्वम्, पितृबलौ स्वधाप्रयोगस्यापि विशेषत्वमुक्तं तेन, ब्रह्मबलौ तु विशेषेण किमपि नोक्तम्; अत एव भाष्यकारपादैरवधारितं यतः कात्यायनेन गोभिलाचार्यभावाभिज्ञेन ब्रह्मबलौ विशेषो नोक्तः, आचार्येण तु सूत्रे नमःपदादित्वमुक्तम्, अतो विकल्प एव युक्तः स्यात्। इति भाष्यकारमते न दोषलेशोऽपि, तत् कथं महामहोपाध्यायेन भाष्यकारोऽविद्वानित्याक्षिप्त इति वयं न विद्मः। तदत्र विकल्पो भवितुमर्हति नवेति निर्णये भगवन्तोऽनूचानाः प्रमाणम्।

C. द्रष्टव्यं प्रथमप्रपाठकस्य चतुर्थकण्डिकापञ्चमसूत्रं भाष्यञ्च ( पृ० ८१ )

1. 'मनु' नास्ति ख।

## प्राच्यूर्ध्वावाचीभ्योऽहरहर्नित्यप्रयोगः ॥ ३७ ॥

प्राच्यूर्ध्वावाचीभ्यो दिग्भ्यो 'या देवतास्ताभ्यः[1] अहरहः "प्रत्यहं नित्यप्रयोगः[2]"* । अहरहरित्युक्ते नित्यप्रयोग इत्यनेनैतद् दर्शयति—"नित्ये बलिहरणतन्त्रे[3] बलित्रयस्यास्य नित्यरूपतया प्रयोगो न काम्यरूपतयेति नित्यप्रयोगः(A) । क्रमश्चैतेषां पूर्वसूत्रोक्तो नैतत्सूत्रोक्त इति[4] ।

## संवत्सरे संवत्सरे नवयज्ञयोर्वा ॥ ३८ ॥

वाशब्दो लुप्तवद् द्रष्टव्यः । संवत्सरे संवत्सरे वा परिगते प्रकृतस्य बलित्रयस्य प्रयोग इति वर्तते । नवयज्ञयो'रित्यत्रापि[5] वीप्सा द्रष्टव्या । द्विवचनाद् व्रीहि-यवयज्ञयो'रेव द्रष्टव्यम् । कुतः ? श्यामाकयज्ञस्य वानप्रस्थविषयत्वात् । एवं सुपरीक्षितायां भूमौ कृतम् अनेन च संस्कारेण संस्कृतं वास्तु तन्नि"वासिनां गृहमेधिनां[6] दृष्टादृष्टोपकाराय महते भवतीति । उक्तञ्च सामविधौ—

बहुपशुधनधान्यहिरण्यमायुष्मत्पुरुषं वीरसूः सुभगा अविधवस्त्रीकं शिवं पुण्यं वास्तु भवतीति(B) ।

इति श्रीभट्टनारायणकृतौ गोभिलगृह्यसूत्रभाष्ये चतुर्थप्रपाठकस्य सप्तमी कण्डिका ॥ ७ ॥

---

A. नित्यबलौ कर्मप्रदीपः—

'इन्द्राय वासुकये ब्रह्मणे' इति २।४।१ ( उक्तमिदं प्राक् पृ० ८२ ) ।

B. प्रमाणत्वेनोपन्यस्तं वचनमिदं प्राक् ४।७।२९ सूत्रपाठटीकायाम् ( पृ० ८२९ ) ।

अत्र तर्कालङ्कारः—"आह—कस्य नित्यप्रयोगः ? यथोक्तस्य कर्मण इत्याचक्ष्महे । कस्मात् ? अव्यक्तं प्रधानगामीति वचनात् । तथाच सामविधानब्राह्मणे अथातो वास्तूपशमनम् इत्येतस्मिन् प्रकरणे बहुपशु······चतुर्षु मासेषु संवत्सरे वा पुनः प्रयोग इत्याम्नातम् । तस्मात् प्रकृतस्य बलित्रयस्य पयोग इत्यसङ्गतैवा वर्णना । सामविधाने खल्वहरहर्बलित्रयस्योपदेश-विरहात् प्रकृतस्यैव कर्मणः पुनः प्रयोगोऽवगम्यते । तस्मादिहापि तथैव वर्णयितुमुचितम्" इत्याह । सम्प्रदायविदस्तु भाष्यकारमतानुसारेण बलित्रयस्यैवाऽऽवृत्तिं मन्यन्ते प्रतिसंवत्सरे । तदत्र तर्कालङ्कारमतमुचितमनुचितं वेति विचारे भगवन्तोऽनूचानाः प्रमाणम् ।

अथ वास्तोष्पतियज्ञप्रयोग उच्यते—तस्योदगयनादिकालः प्रागेवोक्तः । तत्र प्रथमं

---

1. 'या' नास्ति ख । 2. 'प्रत्यहमीति प्रयोगः' ख । 3. 'नित्यबलि-' ख । 4. 'इति' नास्ति ख । 5. '-रिति' ख । 6. 'वासगृहमेधिनां' ख ।

गृहनिर्माणार्थं भूमिपरिग्रहाय लक्षणान्युच्यन्ते, समं तृणादियुक्तं नदीतटाकादिभेदवृक्षपाषाणादिपतनप्रभृतिनिमित्तविशेषैर्भाविभिरविनाशि, प्रागुदगन्यतरदिगवस्थितप्रवाहोदकं क्षीरिणीकण्टकयुक्तकटुयुक्तौषध्युत्पत्तिरहितम्, ब्राह्मणस्य गौरपांसुसहितं क्षत्रियस्य लोहितधूलिसहितं वैश्यस्य कृष्णरजस्कं मुद्गरादिभिरपि हन्यमाने विदारणरहितम् एकवर्णमशुष्कमनूषरं सर्वदिक्षु मरुप्रदेशरहितं सदा जलेनाक्लिन्नम्, ब्रह्मवर्चसकामस्य दर्भसंयुक्तं बलकामस्य वीरणादिमहातृणसहितं पशुकामस्य मृदुतृणयुतं चतुरस्रं चोन्नतं वा मण्डलाकारं वा सर्वदिक्षु इतरेतराभिमुखावस्थितस्वयमुत्पन्नाल्पगर्तयुक्तं भूस्थानं परिगृह्णीयात्। तस्मिन्नुक्तलक्षणे प्रदेशे यशस्कामो बलकामः प्राग्द्वारं गृहं कुर्वीत पुत्रपशुकाम उदग्द्वारं सर्वकामो दक्षिणद्वारम्, प्रत्यग्द्वारं न कुर्वीत, अन्येषामनुद्वारं गृहद्वारं न कुर्वीत, यथाऽन्येषां संलोकि गृहमध्यस्थं वस्तु न स्यादिति।

तत्र पूर्वतोऽश्वत्थम्, दक्षिणतः प्लक्षम्, पश्चिमतो वटम्, उत्तरत उदुम्बरं वर्जयेत्। यद्यन्यथा स्यात् तदा तान् समूलानुद्धरेत्। उद्धरणे च यस्य वृक्षस्य या देवता तामभियजेत। अश्वत्थ आदित्यदैवतः, प्लक्षो यमदैवतः, न्यग्रोधो वरुणदैवतः, उदुम्बरः प्रजापतिदैवतः। अत्र विशेषानुक्तेरभियजेतेति चोदनया तत्तद्देवताकवैदिकमन्त्रजपो वा आज्यहोमो वा उभयं वा कुर्यात्। ततो गृहनिर्माणानन्तरं गृहमध्ये अग्निं प्रतिष्ठाप्य गोपयसि कृतौदनेन सह श्वेतेनाजेन यजेत, पशोरसम्भवे पायसेन चरुणा वा यजेत। तत्र यथोक्ते पुण्ये तिथौ वास्तोष्पतियज्ञाङ्गं नान्दीमुखश्राद्धं कृत्वा ब्राह्मणाननुज्ञाप्य गणेशपूजनञ्च कृत्वा वास्तोष्पतियज्ञं करिष्ये इति सङ्कल्प्य, अग्निमुपसमाधाय मध्याष्टकोक्तप्रकारेणाजमुपस्थाप्य उपस्थितहोमादिवपाहोमान्तं कुर्यात्। पशुस्थानीयपायसचरुर्मध्याष्टकायां पशुस्थानोक्तस्थालीपाकवत् कर्तव्यः, तत्र प्रोक्षणे वास्तोष्पतये त्वा जुष्टं प्रोक्षामि, निर्वापे वास्तोष्पतये त्वा जुष्टं निर्वपामीति विशेषः। वपाहोमे जातवेदो वपया गच्छ देवानिति मन्त्रः पूर्वमुक्तो देवदैवत्यत्वात् चरुहोमे वास्तोष्पतये स्वाहेति मन्त्रः, सर्वत्र इदं वास्तोष्पतये न मम। अङ्गावदाने मध्याष्टकायां द्वादशोक्तानि अत्र चतुर्दशाङ्गानीति विशेषः। वपाहोमानन्तरं मध्याष्टकावत् पायसचरुं मांसचरुञ्च श्रपयित्वा प्लक्षशाखायुक्तप्रस्तरे आसादयेत्। ततो नवे काष्ठे मांसावदानानि संस्थाप्य अणुशश्छित्त्वा एकस्मिन् कांस्यपात्रे संस्थाप्य तत्र वसाज्यपायसान्यवसिच्य सर्वं मिश्रीकरोति। ततः श्रुचि सकृदुपस्तीर्य त्र्यार्षेयश्चेद् यजमानो वसाज्यपायसमिश्रीकृतमांसावदानं हविषो मध्यात् त्रिवारं पूर्वार्धाच्च त्रिवारमवद्यति। पञ्चार्षेयश्चेदुक्तहविषो मध्याद् द्विः पूर्वार्धाद् द्विः पश्चार्धाद् द्विरवद्यति। सकृदभिघार्य हविषोऽवदानस्थानानि च पृथक् पृथगाज्येन प्रत्यभिघार्य वास्तोष्पत इति मन्त्रेण जुहुयात्। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दो वास्तोष्पतिर्देवता वास्तोष्पतिहोमे विनियोगः। ततो मन्त्रः, संस्रवत्यागः। पशुस्थाने पायसचरुपक्षे पायसचरुपिण्डांश्चतुर्दशसंख्याकान् कृत्वा तान् घृतादिभिः संसृज्यैकस्मिन् कांस्यपात्रे संस्थाप्य प्रस्तर आसाद्य तस्माद्धविषो मांसावदानवत् सकृदभिघार्य यदुक्तवोऽवदाय पुनः सकृदभिघार्यावदानस्थानानि प्रत्यभिघार्य वास्तोष्पत इत्यृचा जुहोति।

ततो वामदेवीभिर्ऋग्भिस्तसृभिर्महाव्याहृतिभिस्तिसृभिश्च षडाज्याहुतीर्हुत्वा प्रथमाहुतिवन्मांसावदानानि पायसचरुं वाऽस्पृहीतमवदाय प्रजापतये स्वाहेति जुहोति। वामदेव्यस्तिस्र ऋचोऽलक्ष्मीनिर्णोदप्रयोगे उक्ताः। ततः स्विष्टकृदादिकं कर्म प्रकृतिवत् समाप्य वक्ष्यमाणान् दश बलीन् हुतशेषेण कुर्यात्। ततोऽग्नेः प्रदक्षिणं गत्वा प्रथमम् इन्द्राय नम इति पुरस्ताद् बलिं दद्यात्। वायवे नम इत्याग्नेये। यमाय नम इति दक्षिणतः। पितृभ्यः स्वधेति निर्ऋतिदिशि, वरुणाय नम इति प्रतीच्याम्, महाराजाय नम इति वायव्याम्। सोमाय नम इत्युत्तरतः। महेन्द्राय नम इत्यैशान्याम्। वासुकये नम इत्यधस्तात्। नमो ब्रह्मणे इति दिवि। अत्रापि बलिहरणे सभूमिकरणमुभयतः परिषेचनञ्च वैश्वदेवबलिहरणवत् कर्तव्यम्। ततो वामदेव्यगानं ब्राह्मणभोजनञ्च। इति। ततः प्रतिदिनं वैश्वदेवे नित्यबलिहरणानन्तरं नित्यतया इन्द्राय नमः, वासुकये नमः, नमो ब्रह्मणे, इति (सुब्रह्मण्यस्तु काम्यतया—प्राच्यै नमः, ऊर्ध्वायै नमः, अवाच्यै नम इति) बलित्रयं कुर्यात्। एतस्य बलित्रयस्य पूर्वस्मिन् वास्तोष्पतियज्ञेऽपि दशबलिहरणानन्तरमनुष्ठानं मन्यन्ते। प्रकृतबलित्रयस्य संवत्सरे संवत्सरे व्यतीते उत्तरदिने वा प्रयोगः। अथ व्रीह्याग्रयण-यवाग्रयणयोर्मध्यकाले प्रतिदिनं प्रकृतकर्मणि बलित्रयं कर्तव्यम् इति।

रघुनन्दनस्तु विशेषमाह ज्योतिस्तत्त्वे—दीपिकायाम्—

गणेशं गन्धपुष्पाद्यैर्लोकपालानथ ग्रहान्।
पूजयेत् क्षेत्रपालांश्च क्रूरभूतांश्च बाह्यतः॥
ब्रह्माणं वास्तुपुरुषं तद्गेहस्थाश्च देवताः।

ताश्च शिखिप्रभृतयः। यथा—

शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः।
सूर्यः सत्यो भृगुश्चैव आकाशो वायुरेव च॥
पूषा च वितथश्चैव गृहक्षतयमावुभौ।
गन्धर्वो भृगुराजश्च मृगः पितृगणस्तथा॥
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः।
असुरः शोषपापौ च रोगाहिर्मुख्य एव च॥
भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा।
आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च॥
अर्यमा सविता चैव विवस्वान् विबुधाधिपः।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात्॥
आपवत्सस्तथा ब्रह्म वास्तुगेहगतास्त्विमे।
चरकी च विदारी च पूतना पापराक्षसी॥

स्कन्दोऽर्यमा जम्भकाश्च पिलिपिञ्जस्तथाऽष्टमः ।
एतान् मत्स्यपुराणोक्तान् गृहारम्भे प्रपूजयेत् ॥

महाकपिलपञ्चरात्रे—

जलाधारगृहार्थञ्च यजेद्वास्तुं विशेषतः ।
ब्रह्माद्यदितिपर्यन्ताः पञ्चाशत् त्र्यसंयुताः ॥
सर्वेषां किल वास्तूनां नायकाः परिकीर्त्तिताः ॥
असम्पूज्य हि तान् सर्वान् प्रासादादीह कारयेत् ॥
अनिष्पत्तिर्विनाशः स्यादुभयोर्धर्मधर्मिणोः ।

तत्तद्देवताभेदेन बलिमन्त्रविशेषा उक्ताः—

स्वर्गपातालमर्त्येषु ये देवा वास्तुसम्भवाः ।
गृह्णन्त्विमं बलिं हृष्टं तुष्टा यान्तु स्वमालयम् ॥
मातरो भूतवेताला ये चान्ये बलिकाङ्क्षिणः ।
विष्णोः पारिषदा ये च तेऽपि गृह्णन्त्विमं बलिम् ॥
पितृभ्यः क्षेत्रपालेभ्यो बलिं दत्त्वा प्रकामतः ।
अभावादुक्तमार्गस्य कुशपुष्पादिभिर्यजेत् ॥
आकुञ्चितकरं वास्तुमुत्तानमसुराकृतिम् ।
स्मरेत् पूजासु कुड्यादिनिवेशे त्वधराननम् ॥

देवीपुराणे—

मध्यभागे ततः कुर्याद् वासुदेवस्य पूजनम् ।
श्रियश्च पूजनं कुर्याद् वसुदेवगणस्य च ॥
गन्धार्घ्यपुष्पनैवेद्यधूपाद्यैः सुरसत्तम ।
ततः संपूजयेत् तस्मिन् सर्वलोकधरां महीम् ॥
सुरूपां प्रमदारूपां क्रियाभरणभूषिताम् ।
ध्यात्वा नामचर्येद् देवीं पत्तिुष्टां स्मिताननाम् ॥
ततः प्रणम्य विज्ञाप्य तन्मयत्वेन चिन्तयेत् ।

तथा— एवं प्रपूजिता देवाः शान्तिपुष्टिप्रदा नृणाम् ।
अपूजिता विनिघ्नन्ति गृहारम्भेषु कारकम् ॥
गृहादेः शिल्परूपत्वाद् विश्वकर्माऽपि पूज्यते ।
शिल्पाचार्याय देवाय नमस्ते विश्वकर्मणे ।
स्वाहा ब्रह्मपुराणीयमन्त्रेणेति मतं मम ॥

ज्योतिषे—

तद्धस्तायतमात्रगर्तमतुलं कर्तुं विशुद्धे दिने
खात्वा शाद्वलगोमयैः शुचितरं कृत्वाऽम्बुपूर्णं छरान् ।
संपूज्यामलपुष्पकैर्जलघटं कृत्वाम्रशाखायुतं
दद्यादर्घ्यमनेन विप्रवचसा मन्त्रेण वास्तोष्पतेः ॥
वास्तोष्पते त्वमुत्तिष्ठ संसारस्थितिकारक ।
गृहाणार्घ्यं मया दत्तं गृहारम्भं करोम्यहम् ।
मम सर्वहितार्थाय विष्णुलोकाय वै नमः ॥
गर्ते तस्मिन् सलिलभरिते निश्चलं वारि भर्तुः
स्थैर्यं कुर्याज्जनयति हितं दक्षिणावर्तयोगात् ।
वामावर्तो भवति विपदे स्वामिनाशश्च कुर्याद्
भूमिच्छेदाद् व्रजति लघुतां वित्तनाशं लभेद् वा ॥

देवीपुराणे—

ततो गर्तं खनेन्मध्ये हस्तमात्रं प्रमाणतः ।
चतुरङ्गुलिमात्रं तदधः खन्यात् सुसम्मितम् ॥
आचार्यः प्राङ्मुखो भूत्वा ध्यायेद् देवं चतुर्मुखम् ।
अर्घ्यं दद्यात् सुरश्रेष्ठ कुम्भतोयेन मन्त्रवित् ॥
तस्मिञ् शुक्लानि पुष्पाणि प्रक्षिपेदोमिति स्मरन् ।
तदा गर्तं परीक्षेत दधि भक्तान्वितं क्षिपेत् ॥
ईशाने सूत्रपातः स्यादाग्नेय्यां स्तम्भरोपणम् ।
द्वारं नवमभागे तु कार्यं वामात् प्रदक्षिणम् ॥

द्वारस्य विशेषमाह—

तृतीय-तुर्ययोः प्राच्यां याम्ये तुर्ये च पश्चिमे ।
तुर्यपञ्चमयोः पञ्च त्रिचतुर्थेषु चोत्तरे ॥

वामात् प्रदक्षिणमिति गृहाभ्यन्तरे स्थित्वा ऐशान्यादिक्रमेण कार्यमित्यर्थः ।

तत्र प्रयोगः—कृतस्नानादिः शुभे लग्ने वास्तुदक्षिणभागे चतुरङ्गुलखातहस्तमात्रगर्ते बहुतर-नूतनतृणगोमयोपलिप्तजलपूरिते शालग्रामे वा गणेशादीन् प्रणवादिनमोऽन्तेन स्वस्वनाम्ना पूजयेत् । तत्र गणेशमित्यादिना नामान्युक्तान्यधस्तात् । ततः ॐ नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहेति मन्त्रेण वासुदेवं पूजयेत् । ततः श्रियै वासुदेवगणाय, पृथिव्यै ।८१। पृथिव्यर्घ्यमन्त्रस्तु—

हिरण्यगर्भे वसुधे शेषस्योपरि शायिनि ।
वसाम्यहं तव पृष्ठे गृहाणार्घ्यं वरित्रि मे ॥

ततः प्रणम्य प्रार्थयेत्—

शुभे च शोभने देवि चतुरस्रे महीतले ।
शुभदे सुखदे देवि गृहे काश्यपि रम्यताम् ॥
अव्यङ्गे चाक्षते पूर्णे मुनेश्चाङ्गिरसः सुते ।
तुभ्यं कृता मया पूजा समृद्धिं गृहिणः कुरु ॥
वसुन्धरे वरारोहे स्थानं मे दीयतां शुभे ।
त्वत्प्रसादान्महादेवि कार्यं मे सिध्यतां द्रुतम् ॥
"अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः ।
तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम् ॥
भूतानि राक्षसा वाऽपि येऽत्र तिष्ठन्ति केचन ।
ते गृह्णन्तु बलिं सर्वे वास्तु गृह्णाम्यहं पुनः ॥"

इति मन्त्राभ्यां माषभक्तबलिं दद्यात् । ततः प्रणमेद् दण्डवद् भूमौ मन्त्रेणानेन भक्तितः ।

भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिनोपपादितम् ।
अन्यत्र वासं परिकल्पयन्तु क्षमन्तु तानीह नमोऽस्तु तेभ्यः ॥

ततस्तस्मिन् गर्ते दधिदूर्वापुष्पफलाम्रपल्लवमुखेनाम्बुघटेन इदमर्घ्यम् ॐ वास्तोष्पतये नम इत्यर्घ्यं दद्यात् । ततः शिल्पाचार्यायेति मन्त्रेण विश्वकर्माणं पूजयेत् । ततः—

वास्तुदेवगणाः सर्वे पूजामादाय याज्ञिकात् ।
इष्टकर्मप्रसिद्ध्यर्थं पुनरागमनाय च ॥

क्षमध्वम्, इति विसर्जयेत् । ततस्तदर्घ्यजलपूरितगर्ते प्रणवेन शुक्लपुष्पं क्षिप्त्वा शुभाशुभं पश्येत्, निश्चलश्चेत् कर्तुः स्थैर्यं जनयति दक्षिणावर्ताद् हितं वामावर्ताद् विपदं नाशं च भूमिच्छेदाद् वित्तनाशं लघुतां वा । ततस्तत्र दधिदूर्वादिकं दत्त्वा मृत्तिकया गर्तं पूरयेत् । ततः सूत्रपाताच ईशानादिप्रदक्षिणाच्चतुरः कीलकान्—

विशन्तु ते जले नागा लोकपालाश्च कामगाः ।
गृहे त्वस्मिंश्च तिष्ठन्तु आयुर्बलकराः सदा ॥

इति मन्त्रेण चतुष्कोणेषु दृढं रोपयेत् । तत ईशानादिक्रमेण सूत्रेण तं वेष्टयेत् । तत आग्नेय्यां गर्ते गन्धपुष्पाद्यलङ्कृतं स्तम्भं रोपयेत् । तत्र मन्त्रः—

यथाऽचलो गिरिर्मेरुर्हिमवांश्च यथाऽचलः ।
शुभप्रदगृहस्तम्भ तथा त्वमचलो भव ॥ इति ।

अथ गृहप्रवेशः—

स्थाप्यं समाप्यं क्रतुयूपकाष्ठं गृहप्रवेशो गजवाजिबन्धः ।
ग्रामे प्रवेशो नगरे पुरे वा दिने प्रशस्तानि शनैश्चरस्य ॥

ज्येष्ठादितिभ्यां संयुक्तं गृहारम्भोदितञ्च यत् ।
तत् सर्वं योजयेद् वेश्मप्रवेशे दैवचिन्तकः ॥

विष्णुधर्मोत्तरे—

गोपुच्छविन्यस्तकरः प्रविशेच्च गृहं गृही ।
अनुलिप्तः स्रग्वी स्नग्वी सपत्नीकस्तथैव च ॥
कृत्वाऽग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रदलपुष्पफलोपशोभम् ।
दत्त्वा हिरण्यवसनानि तदा द्विजेभ्यो माङ्गल्यशान्तिनिलयं निलयं विशेच्च ॥

महाभारते—

पारावतमयूराश्च शुका वै सारिकास्तथा ।
गृहस्थेन सदा पोष्या आत्मनः श्रेय इच्छता ॥

मत्स्यपुराणम्—

गोगजाश्वाविशालाद्य तत्पुरीषस्य निर्गमम् ।
अस्तं गते न कर्तव्यं देवदेवे दिवाकरे ॥ इति ।

———

## चतुर्थप्रपाठकस्य अष्टमी कण्डिका

—— —:०:———

### श्रवणाग्रहायणीकर्मणोरक्षताञ्छिष्ट्वा ॥ १ ॥

[1]श्रवणाग्रहायण्यौ व्याख्याते। श्रवणाग्रहायण्योः कर्मणी श्रवणाग्रहायणीकर्मणी, तयोः श्रवणाग्रहायणीकर्मणोः प्रक्रान्तयोः'* अक्षतान् [2]यवान् शिष्ट्वा शेषान् कृत्वा, [3]उर्वरयित्वेत्यर्थः। अवशेषणं [4]चैषामाम्नाविताना मध्यात् प्राग् भर्जनात् कर्तव्यम्। प्रागवचूर्णनाद् भृष्टानामिति चेत्? न; कुतः? अनक्षतत्वात् तेषाम्,

उक्तश्च—

अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते।

[5]भृष्टास्तु व्रीहयो लाजा घटाः खाण्डिक उच्यते[5]*(A) ॥ इति।

तांश्चाक्षतान्—

### प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधाय हये राक इत्येकैकयाऽञ्जलिना जुहुयात् ॥ २ ॥

प्राङ् वोदङ् वेत्युक्तार्थम्। निष्क्रमणस्य[6]वैव नियमो न चतुष्पथस्य। ननु अग्निमुपसमाधायेत्यवाच्यं जुहोति-शब्दादेवाग्नेः प्राप्तत्वात्? न; इतरथा चतुष्पथ एव होमः स्यात् उदकेऽक्षत[7]तण्डुलानामिव, तस्माद् वाच्यम्। (B)हये राक इति चतुर्ऋचस्य

A. कर्मप्रदीपः ३।९।१। उक्तं वचनमिदं प्राक् (पृ० ९९६)

B. अथ चतुर्णामृचां प्रथमा—

ॐ हये राके सिनीवालि सिनीवालि पृथुष्टुके।

सुभद्रे पथ्ये रेवति पथा नो यश आवह (स्वाहा) ॥ इति।

अस्या व्याख्या—हे राके पौर्णमासिदेवते, हे सिनीवालि अमावस्ये देवते, तथाचोक्तम्—

राका चानुमतिश्चेति पूर्णमासी द्विधा मता।

सिनीवाली कुहूश्चेति अमावास्या द्विधा मता ॥

1. 'प्रक्रान्तयोः श्रवणाग्रहायणीकर्मणोः' ख। 2. 'यवानिमान्' ख। 3. 'उर्वरितमित्यर्थः' ख।
4. 'तेषा-' ख। 5. नास्ति ख। 6. 'एव' नास्ति ख। 7. '-तण्डुलानि च' ख।

राका सम्पूर्णचन्द्रा स्यात् कलोनाऽनुमतिः स्मृता ।
दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूरिति ॥

इति । सिनीवालीशब्दो यास्केन निरुक्तः—सिनम् अन्नं भवति सिनाति भूतानि बलं पर्व वृणोतेः, तस्मिन्नन्नवती वालिनी वा वालेनैवास्याम् अनुत्वात् चन्द्रमाः सेवितव्यो भवतीति वा । इति । पृथुष्टुके पृथुजघने पृथुकेशे वा, एतत् सिनीवालीविशेषणम् । सिनीवालीति पुनः पाठस्तद्गत-गुणातिशयख्यापनपरः । सैव विशेष्यते—सुभद्रे शोभनकन्यके, पथ्ये पथि हिते, रेवति बहुधनोपेते, यथा श्रेयःप्रापणेन मार्गेण नोऽस्मभ्यं यशोऽन्नं कीर्तिं वा आवह प्रापय । स्वाहा हविर्दत्तमस्तु । यद्वा राकासिनीवालीवत् सुभद्रादयोऽपि पृथगेव देवता अवगन्तव्याः । पृथुष्टुक इत्येतत् तु 'सिनीवालि पृथुष्टुके या देवानाम्' ( ऋ० वे० २।३२।६ ) इत्यत्र विशेषणत्वादत्रापि सिनीवाली-विशेषणम् । देवतान्तरपक्षे यथा न इत्यादि प्रत्येकमपि सम्बध्यते । इति ।

द्वितीया—

ॐ ये यन्ति प्राञ्चः पन्थानो य उ चोत्तरत आययुः ।
ये चेमे सर्वे पन्थानस्तेभिर्नो यश आवह (स्वाहा) ॥ इति ।

अस्या व्याख्या—द्वितीयपादे एकाक्षराधिकेऽपि 'नवा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' इत्युक्तत्वात् नानुष्टुप्छन्दोहानिः । ये पन्थानो मार्गाः प्राञ्चः प्राङ्मुखाः यन्ति प्रवृत्ताः, तथा य उ उ चेति अप्यर्थे, येऽपि चोत्तरत उत्तरां दिशामुपक्रम्य आययुरागताः । ये चेमे पुरतो दृश्यमाना अनुक्ता दक्षिणतः प्रत्यक्तश्च प्रवृत्ताः सर्वे पन्थानः सन्ति ; तेभिः तैः पथिभिः नोऽस्मभ्यं हे सिनीवालि यश आवह ! इति ।

तृतीया—

ॐ यथा यन्ति प्रपदो यथा मासा अहर्जरम् ।
एवं मा श्रीधातारः समवयन्तु सर्वतः (स्वाहा) ॥ इति ।

अस्या व्याख्या—यथा यन्ति प्रपदो दत्तपादाग्राः, यथा सर्वाभ्यो दिग्भ्यो यन्ति गच्छन्ति यथा मासा मार्गशीर्षप्रभृतयोऽहर्जरम् आदित्यम् यन्ति । एवं श्रीधातारो मा मां समवयन्तु, द्रव्यप्रदानेन मदभिमुखा भवन्तु इत्यर्थः । इति । प्रतिपद इति सायणभाष्यधृतः पाठः ।

चतुर्थी—

ॐ यथा समुद्रं स्रवन्तीः समवयन्ति दिशो दिशः ।
एवं मा सखायो ब्रह्मचारिणः समवयन्तु दिशो दिशः (स्वाहा) ॥

मन्त्रब्राह्मणम् २।६।२-५ ।

अस्या व्याख्या—यथा समुद्रं सरितां नाथं स्रवन्तीः स्रवन्त्यो बहुप्रवाहाः नद्यो दिशो दिशः सर्वाभ्यो दिग्भ्यः प्रवृत्ताः समवयन्ति सम्यगभिमुखं गच्छन्ति, एवं मा मां सखायः समानाख्यानाः सखीभूता हितकारिणः शुश्रूषका ब्रह्मचारिणो दिशो दिशः सर्वाभ्यो दिग्भ्यः समवयन्तु सम्मुखम् आगच्छन्तु । इति । 'दृशदिशः' इति सायणधृतः पाठः ।

एकैकया ऋचा अञ्जलिना पाणिद्वयेन प्रकृतान् अक्षतान् अक्षतहोमसामान्यात् क्षिप्रहोम-[1]न्यायेन जुहुयात् ।

हुत्वा च—

**प्राङुत्क्रम्य वसुवन एधीत्यूर्ध्वमुदीक्षमाणो देवजनेभ्यः ॥ ३ ॥**

प्रकृतानामक्षतानामञ्जलिमूर्ध्वमुत्क्षिपेदिति शेषः । अत्र सन्देहः—(A)वसुवन एधीत्यस्य किमुत्क्रमणेन सह सम्बन्धः ? उतोर्ध्वावेक्षणेन ? आहोस्विदक्षतबलिनेति ? तत्रैक आहुः— उत्क्रमणेनेति । तदसत्, कुतः ? एवं सत्यक्षतबलिरमन्त्रक एव स्यात्, तत् [2]तु नेष्यते, कुतः ? 'द्रव्यत्यागो न निर्देव' इति स्मरणात्(B) । अन्ये तु—ऊर्ध्वावेक्षणेनेति मन्यन्ते । तदप्यसत्, कुतः ? एतस्मादेव कारणात् । अन्ये तु—देवजनेभ्य इति चतुर्थी-प्रयोगादयमेव नमस्कारान्तो बलिमन्त्र इति मन्यमानाः पूर्वस्योत्क्रमणेनैव[3] सह सम्बन्ध-माहुः । तदप्ययुक्तम्, कुतः? देवजनेभ्य इत्यत्रेतिकरणाभावात्, 'पूर्वस्योत्क्रमणेन सह सम्बन्धे'[4] मन्त्रलिङ्गविरोधाच्च ; तस्मात् प्राङ् प्राङ्मुखः तूष्णीमेव कतिपय-पदान्युत्क्रम्य गत्वा, तूष्णीमेव ऊर्ध्वमुदीक्षमाणः ऊर्ध्वमवलोकयन् 'वसुवन एधी'त्यने-नाग्नेयेन यजुषा त्रिरभ्यस्तेन, [5]कुतः ? तथाभूतस्य पाठात् नम आदित्यायेतिवत्, देवजनेभ्योऽर्थाय प्रकृतानामक्षतानामञ्जलिम् ऊर्ध्वमुत्क्षिपेदिति । ननु आग्नेयं यजुः, देव-जनेभ्यो बलिरित्यनुपपन्नम्, न ; कुतः ? "देवजनार्थमेवाग्नेरभ्येषितत्वात्[6]" - वसुवन-शब्देनाग्निरुच्यते, वस्विति धननाम, वनषणसंभक्तौ । हे अग्ने त्वमस्मिन् कर्मणि वसुवनः धनसंविभागशीलः एधि भव, योऽयमक्षतबलिर्मयोत्सृष्टः तं विभज्य देवजनेभ्यः प्रापयेत्यर्थः । तस्मादुपपद्यमानत्वाद् यथोक्त एवार्थः ।

---

A. मन्त्रस्तु—

ॐ वसुवन एधि वसुवन एधि वसुवन एधि । इति ।

मन्त्रब्राह्मणम् २।६।६ ।

अस्य व्याख्या—हे वसुवने ( वन सम्भक्तौ ) अधिकधनप्रभ, एधि एहि आगच्छ, व्यत्ययेन धकारः, 'इन्'इत्यनुवृत्तौ 'छन्दसि वनसनरक्षिमथाम्' (पा० सू० ३।२।२७) इतीन् प्रत्ययः । उक्त-मन्त्रसाध्यं वास्तुकर्म पूर्वप्रोष्ठपदनक्षत्रे कार्यम् । एवं कृते पशुधान्यं हिरण्मयम् आयुष्मत्पुत्रम् वीरमूसुभगाविधवास्त्रीकं शिवं पुण्यं वास्तु भवति । मन्त्रस्य त्रिरावृत्तिर्बोध्या । इति ।

B. प्रमाणत्वेनोपन्यस्यति स्मरणमिदं चन्द्रकान्तोऽपि ।

---

1. 'धर्मेण' ख । 2. 'न' ख । 3. 'एव' नास्ति ख । 4. नास्ति ख । 5. 'न कुतः' ख । 6. 'देवजनार्थमेवार्थमेवाभ्येषितत्वात्' ख ।

तथाचोक्तम्— ऊर्ध्वं वस्विति मन्त्रेण देवेभ्योऽस्येद्द यथाञ्जलिम् ।
तथेतरजनेभ्यश्च प्राञ्चमन्यद्द यथाविधि(A) ॥ इति ।

## तिर्यङ्ङितरजनेभ्योऽर्वाङवेक्षमाणः ॥ ४ ॥

तिर्यक् तिरश्चीनम्, दिगनादेशात् प्राञ्चम् । उक्तञ्च—प्राञ्चमन्यद्द यथाविधीति । इतरजनेभ्योऽर्थाय वस्विति मन्त्रेणाक्षताञ्जलिमुत्सृजेदिति वर्तते । किमविशेषेण ? न ; अर्वाङ् अधः अवेक्षमाणः अवलोकयन् ।

## [1]अनवेक्षमाणः प्रत्येत्याक्षतान् प्राश्नीयात् ॥ ५ ॥

अनवेक्षमाणः[1]* अनवलोकयन् ; किम् ? प्रकृतत्वाद्द [2]बलिम् ; बलिदिग्देशात् प्रत्येत्य प्रकृतस्याग्नेः समीपमागत्य होमबलि[3]शिष्टानक्षतान् प्राश्नीयाद्द भक्षयेत् । एवञ्च पूर्वकर्मसु न सर्वे[4]षामक्षतानां विनियोगः स्यात्[4]* ।

किमेक एव प्राश्नीयात् ?

## उपेतैरमात्यैः सह ॥ ६ ॥

उपसमीपे [5]इतैरागतैः[5]* अमात्यैर्भ्रातृपुत्रशिष्यादिभिः स्निग्धैः सह । अत्र कर्मापवर्गत्वाद्द वामदेव्यगानम् ।

कः पुनरनेन कर्मणा कामः साध्यत [6]इत्यत आह—

## स्वस्त्ययनम् ॥ ७ ॥

उक्तार्थम् ।

## वशङ्गमौ शङ्खश्चेति पृथगाहुती व्रीहियवहोमौ प्रयुञ्जीत ॥ ८ ॥

ननु पृथगाहुती इत्यवाच्यम्, कुतः ? (B)वशङ्गमौ (C)शङ्खश्चेति पृथगुपन्यासा-

---

A. प्रमाणत्वेनोपन्यस्तं वचनमिदं तर्कालङ्कारेणापि स्वभाष्ये ।

B. मन्त्रस्तु—

ॐ वशङ्गमौ देवयानौ युवं स्थो यथा युवयोः सर्वाणि, भूतानि वशमायन्ति, एवं ममासौ वशमेतु ( स्वाहा ) ॥ इति ।

C. मन्त्रस्तु—

ॐ शङ्खश्च मम आयुश्च देवयानौ युवं स्थो यथा युवयोः सर्वाणि, भूतानि वशमायन्ति, एवं ममासौ वशमेतु ( स्वाहा ) ॥ इति ।

मन्त्रब्राह्मणम् २।६।७-८ ।

---

1. 'अर्वाङ्नवेक्षमाणः प्रत्यवेक्षमाणः' ख । 2. 'बलिम्' नास्ति ख । 3. '-शिष्टानक्षत-' ख । 4. '-षां अक्षतानां विनियोगः स्यात्' ख । 5. 'इत्यागतैः' ख । 6. 'इत्यतः' नास्ति ख ।

देवाऽऽहुतिद्वय[1]प्राप्तेः, व्रीहियवहोमाविति द्विवचनाच्च, न ; कुतः ? व्रीहियवयोः पृथक्त्वेन होमप्रज्ञापनार्थत्वात्, पृथगाहुतिवचनस्य । कथं नाम ? एकैकेन मन्त्रेण एकैकद्रव्यहोमः [2]कार्यः, वशङ्गमावित्यनेन मन्त्रेण व्रीहिहोमः कार्यः, शङ्खश्चेत्यनेन यवहोम इत्येवम् । एते द्रव्यपृथक्त्वाद् पृथगाहुती भवत इति । ननु एकैकेन मन्त्रेणैकैकद्रव्यहोमे मन्त्रलिङ्ग-विरोधः स्यात्, कथम् ? वशङ्गमावित्येवमादीनां द्विवचनानामनुपपत्तेः । न ; कुतः ? मन्त्रदेवताविषयत्वाद् द्विवचनानां वशङ्गमावित्यत्र देवयान-पितृयाणावभिप्रेत्य द्विवचनम् । शङ्खश्चेत्यत्र सूर्याचन्द्रमसाविति, तस्माद् यथोक्त एवार्थः ।

उक्तञ्च—

वशङ्गमाविति व्रीहीञ्छङ्खश्चेति यवांस्तथा ।

असावित्यत्र नामोक्त्वा जुहुयात् चिप्रहोमवत्(A) ॥ इति ।

एवञ्चासावित्येतस्मिन् सर्वनाम्नि नाम गृहीत्वा व्रीहियवहोमौ प्रयुञ्जीत ।

कस्य नाम गृहीत्वा ? उच्यते—

## यस्याऽऽत्मनि प्रसादमिच्छेत् तस्मै ॥ ६ ॥

यस्य कस्यचित् सकाशात्, अविशेषात् स्त्रिया वा पुरुषस्य वा, आत्मनि प्रसादं द्रव्यप्राप्तिमिच्छेत् तस्य । तस्मा इति षष्ठ्यर्थे चतुर्थी ।

---

अनयोर्व्याख्या—वशङ्गमावित्येतौ वशीकरणहोमे विनियुक्तौ । सूत्रितञ्च 'वशङ्गमावित्येताभ्या-माहुती जुहुयात् । यमिच्छेद् वशमायान्तं तस्य नाम गृहीत्वा असाविति वशीहास्य भवती'ति । मम विष्णुशर्मा वशमेतु इतिवत् नाम गृहीत्वेत्यर्थः । हे व्रीहियवौ युवं युवां वशङ्गमौ स्थः अवशानां शत्र्वादीनां वशम् आधीनतां गमयितारौ भवथः, तथा देवयानौ देवप्रापकौ स्थः । आभ्यां द्रव्याभ्याम् आहुतिद्वारा देवप्राप्तेः । यथेत्यादि स्पष्टम् । व्रीह्याद्यन्नप्रदानेन प्राणिनां वशप्राप्तिः सिद्धा । चन्द्रसूर्यदेवतापक्षेऽपि वशङ्गमयितृत्वं जगन्निर्वाहकत्वात् प्रसिद्धम्, देवप्राप्तिमार्गकत्वं च प्राणिनां कर्मानुरोधेन दक्षिणोत्तरमार्गयोर्गन्तव्यदेशप्रापणात् । इति प्रथमस्य ।

हे शङ्ख, शं सुखं खन्यते विदार्यते लभ्यते इति शङ्खः चन्द्रमाः, यद्वा वर्णसादृश्याद् वर्तुलत्वाद् वा शङ्ख इति चन्द्र उच्यते । तथा मनः सर्वैर्मननीयः, आयुः प्राणिनां जीवननिमित्तः सूर्यः, परस्परापेक्षया च-शब्दः । तौ युवं युवां देवयानौ स्थः पूर्वमन्त्रोक्तरीत्या देवप्राप्तिमार्गौ भवथः, यद्यपि सूर्यस्यैव देवयानत्वं न चन्द्रमसः, तथाऽपि तत्साहचर्यात् तस्मिन् प्रयुज्यते उपचारात् । शिष्टं स्पष्टम् । इति । द्वितीयस्य ।

A. कर्मप्रदीपः । ३।१०।१७ ।

---

1. '-प्राप्ती' ख । 2. 'इति कार्यः' ख ।

किमस्य कर्मणः सकृत् करणम्? न; किं तर्हि?

## नित्यप्रयोगः ॥ १० ॥

नित्यमहरहः, अर्थाद्वा कामप्राप्तेः।

## एकाक्षर्यायामर्धमासव्रते द्वे कर्मणी ॥ ११ ॥

'यस्यास्त एकमक्षरम्' इत्यनेनैकाक्षरलिङ्गेनोपलक्षिता ऋगेकाक्षर्योच्यते (A)आकूतीमित्यादिका। तस्यामेकाक्षर्यायामृचि अर्धमासव्रते पक्षोपवासपुरश्चरणके द्वे कर्मणी, भवत इति शेषः। एवं चार्थादेतस्यामे'वर्चि, ये अन्ये द्वे कर्मणी ते परिभाषितव्रते भवतः। कुतः? साध्यसाधनादिभेदभिन्नानां चतुर्णामेव कर्मणामुपदेशात्, द्वयोश्च व्रता²न्तरानुपदेशात्। ³तथा चाऽऽयुष्काममग्रामकामकर्मणोरर्धमासव्रतं स्यात्, कुतः? अनयोरेव विशिष्टतरफलत्वात् ⁴साध्यानुगुणत्वाच्च साधनस्य'*।

तथाचोक्तम्—

चत्वारि चैका⁵क्षर्यायां कर्माणि फलभेदतः।
तत्रार्धमासव्रतता न द्वितीयचतुर्थयोः(B) ⁶इति।

---

A. एकाक्षर्या ऋक् च—

ॐ आकूतीं देवीं मनसा प्रपद्ये यज्ञस्य मातरं सुहवा मे अस्तु।
यस्यास्त एकमक्षरं परं सहस्रा अयुतं च शाखा-
स्तस्यै वाचे निहवे जुहोम्या मा वरो गच्छतु श्रीर्यशश्च (स्वाहा) ॥ इति।

मन्त्रब्राह्मणम् २।६।९।

अस्या व्याख्या—निगदोऽयम्। द्वादशग्रामफलकाङ्क्षायाम् अग्निना तप्तायां भूमावाज्येन शङ्कुशतहोमे विनियोगः। आकूती शरीराधिष्ठात्री देवता, देवी दानादिगुणयुक्ता, तां प्रपद्ये प्रपन्नोऽस्मि। यज्ञस्य माता निर्मात्री, सुहवा शोभनाह्वाना मे मम अस्तु भवतु। सैव प्रत्यक्षीकृत्योच्यते—यस्यास्ते एकमक्षरम्, ॐ इत्येतत् ब्रह्मवद्यमूलम्, परं प्रकृष्टम्, किञ्च सहस्रा बहुप्रकाराः, अयुतञ्च दशसहस्रसंख्याः शाखाः तस्या एवंभूतायै वाचे निहवे आह्वाने सति जुहोमि त्वदुद्देशेनाहुतिः प्रक्षिपामि, मा मां वरो वृतफलम् आगच्छतु। तत्फलमाह—श्रीर्यशश्च। इति।

B. चन्द्रकान्तेनापि प्रमाणमिदमुपन्यस्तं स्वरचिते भाष्ये।

---

1. '-व चर्चि' ख। 2. '-न्तरसमुपदेशात्' ख। 3. 'तत्र' ख। 4. नास्ति ख। 5. 'कार्या-' ख। 6. 'इति' नास्ति ख।

पक्षात्सर्यायां चत्वारि कर्माण्युक्तानि, अतस्तेषां स्वरूपनिरूपणायेदमाह—

**पौर्णमास्यां रात्रौ खदिरशङ्कुशतं जुहुयादायुष्कामः ॥ १२ ॥**

पौर्णमास्यां पञ्चदश्यां रात्रौ निशि आयुष्काम¹श्चिरजीवित्वकामः, अविशेषादात्मनः पुत्रादीनां वा(A) प्रकृतयैकाहुत्यर्था, क्षिप्रहोमन्यायेन खदिरशङ्कुशतं जुहुयात्। खदिरः प्रसिद्धः, तन्मयाः शङ्कवः ²खदिरशङ्कवः, शङ्कवः²*कीलकाः; ते च प्रकृतिधर्मानुरोधात् समित्प्रमाणाः समिल्लक्षण³संयुक्ताः सूचीवत् कार्याः³* ।

उक्तञ्च—

सत्वचः शङ्कवः कार्यास्तीक्ष्णाग्रा वीतकण्टकाः ।
समिल्लक्षणसंयुक्ताः सूचीतुल्यास्तथायसाः(B) ॥ इति ।

खदिरशङ्कूनां शतं ⁴खदिरशंकुशतम्⁴*, शतशब्दोऽत्र संख्यावाची न बहुत्ववाची ।

**आयसान् वधकामः ॥ १३ ॥**

⁵अयो लोहः, अयसि भवानायसान्⁵* शङ्कून्, प्रकृतत्वाच्छतसंख्याकान् प्रकृते काले प्रकृतयैकाहुत्यर्था वधकामः पूर्ववज्जुहुयात्। वधो हननं मारणमित्यर्थः, तत्र ⁶विद्विषामिच्छन् ।

---

A. अत्रेदं विचार्यते—कथं पुनः 'शास्त्रदेशितं फलमनुष्ठातरि' इति स्थिते सिद्धान्ते पुत्रादीनामप्यायुः कामयमानोऽधिकरोतीति वर्ण्यते ? गृह्याकर्मत्वात्। गृह्याकर्म खल्विदं गृह्याणामपि फलजनकं भवितुमर्हति, न केवलं यजमानस्यैव । गृह्याश्च पुत्रादयः । न किलासौ यजमानोऽन्तरेणैतान् स्वमेवाभ्युदयं कामयमानो भवति स्वस्थः, तत्सारत्वात् तस्य ।

तथाच गृह्यासंग्रहः—

पत्न्यः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः ।
गृह्या इति समाख्याता यजमानस्य दायकाः ॥
तेषां संस्कारयोगेण शान्तिकर्मक्रियासु च ।
आचार्यविहितः कल्पस्तस्माद् गृह्या इति स्थितिः ॥

इति गृ० स० १।३२-३६ । ( उक्तं प्राक् पृ० ४ ) ।

B. चन्द्रकान्तेनापि वचनमिदमुल्लिखितं प्रमाणत्वेन स्वरचिते भाष्ये । शङ्कुलक्षणमुक्तं प्राक् पादटीकायाम् ( पृ० ७३७ ) ।

---

1. '-चिरं जीवित-' ख । 2. नास्ति ग । 3. '-युक्ताश्च कार्याः' घ । 4. नास्ति ख । 5. 'आयसं लोहम्, तद्विकाराः आयसाः, तानायसान्' ख । 6. 'विद्विषामिच्छन्' ख ।

**अथापरम् ॥ १४ ॥**

अथशब्दो वधकर्मणा व्यवहितं पूर्वप्रकृतमर्धमासव्रतमनुसन्धधाति। अर्धमासव्रते 'द्वे कर्मणी'[1]* इत्युक्तम्। तत्रैकमुक्तमायुष्कामस्य, अथेदमपरमर्धमासव्रतं ग्रामकामस्येति।

**प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथे पर्वते वारण्यैर्गोमयैः स्थण्डिलं प्रताप्यापोह्याङ्गारान् मन्त्रं मनसाऽनुद्रुत्य सर्पिरास्येन जुहुयात् ॥ १५ ॥**

प्राङ् वोदङ् वेत्यत्रापि निष्क्रमणस्यैवैष नियमो न चतुष्पथपर्वतयोः। चतुष्पथपर्वतौ प्रसिद्धौ, तयोरन्यतरस्मिन् आरण्यैर्न ग्राम्यैः, गोमयैर्न दारुभिः, [2]स्थण्डिलं न लोहपात्रकुण्डादि, प्रकर्षेण भृशं ताप्य, इतरथा मन्दतप्ते ज्वाला न स्यात्। एतस्मिन् क्रमे सर्पिःपूर्णमास्यं कृत्वा तस्मात् [3]प्रतप्तात् स्थण्डिलादङ्गारानग्न्यवयवान् अपोह्य '[4]अपसार्य प्रकृतमेकाक्षर्यामन्त्रं मनसा हृदयेन अनुद्रुत्य [5]अनुस्मृत्य, सर्पिर्घृतम्, आस्येन मुखेन, [6]तस्मिन् प्रतप्ते स्थण्डिले जुहुयात्। जुहोति-शब्दसामर्थ्या[7]दपोढेष्वेवाङ्गारेष्विति चेत? न; कुतः? स्थण्डिलप्रतपनोपदेशानर्थक्यात्। [8]एवं चात्र द्विप्रहोमधर्मोऽपि न स्यात्, कुतः? अनग्निकत्वात्, तस्मादुदकहोमवदिदमपि यथावदुक्तमेव स्यात्(A) वैकृतत्वात्"*।

A. अत्र च स्थण्डिलप्रतापनादौ यद्यपि मन्त्रो नोपदिश्यते, तथापि 'यत्र मन्त्रा न विद्यन्ते' इति गृह्यासंग्रहवचनानुसारेण न व्याहृतिप्रयोगः कर्तव्यः, किन्तु तूष्णीमेव तत्करणीयम् आस्यहोमत्वात्। तथाच गृह्यासंग्रहप्रमाणम्—

वपाहोमे मुखेनैव होमे स्विष्टकृते तथा।
व्याहृतीर्न प्रयोक्तव्या मुखेनाप्सु च लक्षणम् ॥ इति २।७२।

अत्र च आस्येन होमे द्विज उच्छिष्टो न भवतीत्याह स एव—

मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च।
अनुच्छिष्टो भवेद् विप्रो यथा वेदविदो विदुः।
प्राणाहुतिषु सोमेषु मधुपर्के तथैव च।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥ इति गृ० स० २।६६-६७।

अनयोर्व्याख्या—मधुपर्कभक्षणे सोमभक्षणे, अप्सु उदके आस्येन होमे पूर्वोक्तविदासिहदे होमे वा प्राणाहुतिषु च उपनिषद्ब्राह्मणोक्तेषु प्राणव्यानापानसमानोदानरूपपञ्चाहुतिषु विप्रो नोच्छिष्टो

1. 'कर्मणी द्वे' ख। 2. 'स्थण्डिलं' नास्ति ख। 3. 'प्रतप्तात्' ख। 4. 'प्रसार्य' ख। 5. 'अनुस्मृत्य' नास्ति ख। 6. 'तस्मिन्' ख। 7. '-दपोढे-' ख। 8. 'नास्ति' ख।

तस्याश्च स्थण्डिलहुतायामाहुत्याम्—

**ज्वलन्त्यां द्वादश ग्रामाः ॥ १६ ॥**

फलविधिरयं नार्थवादः, कुतः ? काम्यानां श्रूयमाणफलत्वात् ।

**धूमे [1]त्र्यवराद्धर्याः ॥ १७ ॥**

अवरार्द्ध्यशब्दो हीनवचनः, कथं नाम ? धूमेऽप्ययं सर्वावरः पक्षो यद् ग्रामत्रयं फलमिति । धूमे अवरार्द्ध्या इति फलबहुत्वयरोहवचनेनैतद् दर्शयति—ज्वालाधूमयोरुभयोरपि दीप्तिप्रमाणाल्पत्वमहत्त्वापेक्षया फल[2]कल्पना स्यादिति(A) ।

**अमोघं कर्मेत्याचक्षते ॥ १८ ॥**

मोघं विफलम्, न मोघममोघम्, एतद् ग्रामकर्मेत्यृषयो गोभिलादय आचक्षते कथयन्ति । अमोघवचनेनैतद् दर्शयति—धूमेऽप्यसति गृहक्षेत्रादि किञ्चित् फलमवश्यं स्यादिति । कुतः ? अमोघवचनस्यैवमर्थत्वात् ।

**वृत्त्यविच्छित्तिकामो हरितगोमयान् सायं प्रातर्जुहुयात् ॥१६॥**

वृत्तिशब्देन श्रुतिस्मृतिविहितकर्मानुष्ठानमुच्यते । कुतः ?

यावज्जीवमविच्छिन्नां वृत्तिं यस्त्वनुतिष्ठति ।
यथाम्नातेन विधिना परं ब्रह्मैव विन्दति(B) ॥ इति स्मृतेः ।

मनुवचनाच्च—

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती ।
स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः शुभः(C) ॥ इति ।

भवति यथा वेदविदो जानन्ति । आज्यहोमेषु 'सर्पिराज्येन जुहुयात्' इत्यादिसूत्रोक्तेषु 'सर्वेषु' इतिकरणादन्येष्वप्येवंविधेषु उपाकरणादावक्षतधानाभक्षणादिषु द्विजो नोच्छिष्टो भवति । तदेव विशेषाभिधित्सया पुनरारम्भः, पूर्वं विप्रपदोपादानाद् राजन्यवैश्ययोरुच्छिष्टताशङ्काऽपि स्यात् कस्यचिदिति वा पुनरारम्भः, समादरार्थो वा इति ।

A. अत्र धूमप्रमाणाल्पत्वबहुत्वाभ्यां फलाल्पत्वबहुत्वे भवत इति चान्द्री कल्पना ।

B. प्रमाणमिदं लिखति स्म चन्द्रकान्तोऽपि स्वभाष्ये ।

C. मनुसंहिता ४।२५९ । अस्य व्याख्यायां कुल्लूकभट्टः—"एषा ऋतादिवृत्तिर्गृहस्थस्य ब्राह्मणस्योक्ता । शाश्वती नित्या आपदि त्वनित्या वक्ष्यते । स्नातकव्रतविधिश्च सत्त्वगुणस्य वृद्धिकरणे प्रशस्त उक्तः" एवमाह ।

1. 'चवराद्धर्याः' ख । 2. '-कल्पना' ख ।

सा च वृत्तिः पुत्रपौत्रगोभूमिधान्यहिरण्यादिसाधनसाध्या भवति(A)। अत-

A. अत्र तर्कालङ्कारः—"वृत्तिर्वर्त्तनमुपजीवनमित्यनर्थान्तरम्। अविच्छित्तिरविच्छेदः, अविच्युतिरित्येतत्। वृत्तेरविच्छित्तिः वृत्त्यविच्छित्तिः, तां कामयते इति वृत्त्यविच्छित्तिकामः। आह—कतमा पुनरिह वृत्तिरभिप्रेता? शिलोञ्छादिरूपेति ब्रूमः। कुतः? तस्या एव ब्राह्मणादिवृत्तितया प्रशंसनात्। तथाच वृत्तिमुपक्रम्य स्मरति भगवानत्रिः—

मयैष धर्मोऽभिहितः संस्थिता यत्र वर्णिनः।
बहुमानमिह प्राप्य प्रयान्ति परमां गतिम्॥ इति।

मनुरपि—

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः।
अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम्॥
ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन॥

इति,

न लोकवृत्तं वर्त्तेत वृत्तिहेतोः कथञ्चन।
अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम्॥

इति च। तस्माद् युक्ता अभ्युदयहेतोः शुद्धाया वृत्तेरविच्छित्तिकामना। अपर आह—'वृत्तिशब्देन श्रुतिस्मृतिविहितकर्मानुष्ठानमुच्यते। कुतः? यावज्जीवमित्यादिस्मरणात्, मनुवचनाच्च एषोदितेति।' तदसङ्गतम्, कुतः? वृत्तिशब्दस्यैवमर्थाप्रसिद्धेः। स हि जीवनोपायमाह इति स्मृतिषु प्रसिद्धम्। यदपि स्मरणम्—'यावज्जीवमविच्छिन्नाम्' इत्यादि, तदपि अस्मदुक्तामेव वृत्तिं स्तौति। तस्या अपि प्रशंसार्हत्वात्। न भवदुक्ताम्, अप्रसिद्धेरेव। मनुरपि चतुर्थेऽध्याये प्रथममस्मदुपवर्णितां वृत्तिं परतस्तु स्नातकव्रतमभिधाय प्रकरणशेषे 'एषोदिता गृहस्थस्य' इत्यादिना यथाक्रमं तदुभयमेवोपसंहरति इत्यवगच्छामः। कथम्? उपक्रमोपसंहारयोरेकार्थत्वोपपत्तेः। अन्यथा खल्वसावन्यदुपक्रम्य अन्यदुपसंहरन्ननवधेयवचनः स्यात्। भवत्परिकल्पितायाश्च वृत्तेराश्रमान्तरसाधारण्याद् गृहस्थमात्रपरं मनुवचनं पीड्येत। न खल्वेकैव वृत्तिरनेकसाधारणा एकस्य प्रशस्यते नापरस्येति किञ्चित् कारणमत्र शक्यमुत्प्रेक्षितुम्, तस्मादस्मदुक्त एवार्थो विद्वद्भिरादरणीयः"। इत्युक्त्वा भाष्यकारमतं दूषयति। परन्त्विदमत्रावधेयम्—यद्यपि उञ्छशीलादिवृत्तिर्ब्राह्मणानां श्रेष्ठा, तथाऽपि तन्मात्रवृत्तीनामतिथ्यादिव्ययार्थबलिहोमाद्यनुष्ठानासम्भवाद् वृत्तिशब्दस्य लाक्षणिकमर्थं गृहीत्वा भाष्यकारैरेवं व्याकृतमिति।

स्तेषामेव साधनानाम[1]विच्युतिरनवाप्तानां चावाप्तिरविच्छित्तिरुच्यते। तां यः कामयते स वृत्त्यविच्छित्तिकामः, हरितगोमयान् हरिता नीलाः, हरिताश्च ते गोमया हरितगोमयाः, ते च आर्द्राः, कुतः ? सार्द्राणामेव लोके हरितगोमयशब्दस्य रूढत्वात्, हरितगोमयेनोपलिम्पतीतिवत्। 'अप्सु सोमानामचमसाभ्रात्वाल[2]देशेऽद्भिः पूर्णास्तेषु हरितानि तृणानि प्रास्तानि भवन्ती'त्यत्र हरिततृणशब्दः सूत्रकारेणाप्येवमेव[3] व्याख्यातः। अध्वर्यवोऽपि तथारूपाण्येव तृणानि तत्र क्षिपन्ति(A)। तस्मात् हरित[4]गोमयस्य यथोक्त एवार्थः। तान् हरितगोमयान् प्रकृतयैकाहुत्या क्षिप्रहोमन्यायेन सायं प्रातर्जुहुयात्। गोमयानिति बहुवचनम् अहरहरावृत्त्यपेक्षम्। आहुतिबहुत्वापेक्षमिति चेत्? "न; कुतः? एकमन्त्राधिकारादभ्यासानुपदेशाच्च"। एव[5]ञ्चेयमेकैकाहुतिः सायंप्रातःकालयोः स्यात्। तत्रापि नानियमेन, किं तर्हि? सायंहोमस्य पुरस्तात् प्रातर्होमस्य "च परस्तादिति"*। "अन्यथा सायंप्रातर्होमव्यवायः स्यात्। तच्च नेष्यते,

नैकस्मिन् कर्मणि तते कर्मान्यत् तायते यतः(B)।

इति वचनात्। ननु एवमपि प्रादुष्करणहोमयोर्व्यवायो भवत्येव? सत्यम्, तथाऽपि प्रधानव्यवायाद् गुणव्यवाय एवाङ्गीकर्त्तुं युक्तः(C)। अथ कियन्तं कालमस्य कर्मण आवृत्तिरिति? वार्षिकं मासचतुष्टयमिति ब्रूमः। कुतः? [10]"तत्र हि हरितगोमय[11]"होमोपपत्तेः।

उक्तञ्च—

सायंहोमस्य पुरतः परतः प्रातराहुतेः।
आर्द्रा वर्षासु जुहुयात् प्रत्यहं गोमयाहुतिम्(D) ॥ इति।

---

A. 'अप्सु' इत्यादि 'क्षिपन्ती'त्यन्तं भाष्यभागं यथायथमुद्धृत्य प्रामाण्यमस्य स्वीकरोति तर्कालङ्कारोऽपि स्वीये भाष्ये।

B. उक्तं कर्मप्रदीपवचनमिदं प्राक् ( पृ० ७८)

C. प्रादुष्करणहोमौ खलु सायंप्रातर्होमयोरङ्गीभूताविति प्रधानव्यवायापेक्षया गुणव्यवाय एव युक्त इति। न च गुणस्याव्यवायमुपपादयितुं प्रधानयोर्व्यवायो युक्त आश्रयितुम् इति भावः।

D. उपन्यस्तं स्वरचिते भाष्ये वचनमिदं चन्द्रकान्तेनापि 'तथाचोक्तम्' इत्युदाहारेण।

---

1. '-विच्छित्ति-' ख। 2. '-देशेऽद्भिः' ख। 3. 'एव' नास्ति ग। 4. 'गोमयशब्दस्य' ख। 5. 'न कुतः' नास्ति ख। 6. 'च' नास्ति ख। 7. '-मेवैके-' ख। 8. नास्ति ख। 9. 'चैवमा' ख। 10. 'तत्र हि' नास्ति ख। 11. 'होम' नास्ति ख।

## त्रिरात्रोपोषितः पण्यहोमं जुहुयादिदमहमिमं विश्वकर्माणमिति ॥ २० ॥

त्रिरात्रोपोषित इति, प्राप्त(A) पुनर्वचनं 'त्रीणि (1)वा (2)भक्तानी'त्येतस्य [सू० ४।५।१०] व्यावृत्त्यर्थम्। एवञ्चात्र 'त्रिरात्रमेव' (3)नियम्यते। पण्यशब्देन विक्रयबुद्धिगृहीतं द्रव्यमुच्यते। पण्यसम्पदर्थो होमः पण्यहोमः, तं पण्यहोमम्। (B)इदमहमित्यनेन मन्त्रेण (4)पण्यहोमं जुहुयात्। केन द्रव्येण? अनादेशादाज्येनेति। अन्ये तु पण्यावयवेनेति मन्यन्ते (5)कुतः? उत्तरसूत्रात्। अपि त्वाहुर्येषां पण्यानामवयवहोमाद्विनाशो यथा मणिरत्नादीनां तेषामाज्येन होमः, येषां त्ववयवहोमादप्यविनाशो यथा धान्यादीनां तेषां तदवयवेनेति। (C)तदेतद् युक्तम्। एका चेयमाहुतिः, मन्त्रश्च प्रयोग इति।

## वाससस्तन्तून्(D) गोर्वालान् ॥ २१ ॥

वाससः पण्यस्य दशातन्तून् प्रकृतेन मन्त्रेण पूर्ववत् जुहुयात्। गोश्च पुच्छवालानिति।

## गन्धमितरेभ्यः पण्येभ्यः ॥ २२ ॥

ऋज्वर्थम्।

## पूर्णहोमो यजनीयप्रयोगः ॥ २३ ॥

A. प्राप्त इति काम्येषु त्रिरात्राभोजनम् इति [४।५।१९] सूत्रेणेति भावः।

B. मन्त्रस्तु—

ॐ इदमहमिमं विश्वकर्माणं

श्रीवत्समभि जुहोमि ( स्वाहा ) ॥ इति।

मन्त्रब्राह्मणमाकरः २।६।१० ।

अस्य व्याख्या—'निगदोऽयं पण्यफलकामस्य होमे विनियुक्तः, विश्वकर्मा देवता, विश्वकर्माणं विश्वोत्पत्तिपालनविनाशा व्यापारो यस्य स विश्वकर्मा जगतः स्रष्टा तम् इमं विश्वकर्माणं श्रीवत्सम्, श्रीर्वत्सा इव मातुर्यस्य तं तथोक्तम् आभिमुख्येन गत्वा प्रसाद्य, अहं पण्यलाभकाम इदं द्रव्यं जुहोमि स्वाहा।

C. 'पण्यशब्दो बुद्धावपि प्रयुज्यते इति तस्याप्यत्र ग्रहणमिच्छन्ति' इति केचित्।

D. वाससस्तन्तून् इत्यत्र विभज्य सूत्रद्वयी परिकल्पिता सत्यव्रतचन्द्रकान्ताभ्याम्।

1. 'वा' नास्ति ख। 2. 'भक्तोद्दौत्येतस्य' ख। 3. 'नास्ति' ख। 4. 'इति' नास्ति ख। 5. 'कुतः' नास्ति ख।

(A)'पूर्णहोमं यशसे जुहोमी'त्यनेन पूर्णशब्दोपलक्षितेन मन्त्रेण होमः पूर्णहोमः, स च यजनीयप्रयोगः, यजनीयेऽहनि प्रयुज्यत इति यजनीयप्रयोगः 'यजनीय आज्येन कर्तव्य इत्यर्थः'[1]*। कथं नाम? पौर्णमास्याः प्रतिपदि प्रातराहुतेरूर्द्ध मर्वाक् पक्षादेरमावास्यायाः प्रतिपदि पुनः पक्षादेरूर्द्ध माज्येन कर्तव्य इत्यर्थः।

(B)किं पूर्णहोम एव यजनीयप्रयोगः? न, किं तर्हि?

(C)इन्द्रामवदादिति च ॥ २४ ॥

चशब्दादयमपि यजनीयप्रयोग एवेति।

---

A. मन्त्रस्तु— ॐ पूर्णहोमं यशसे जुहोमि
　　योऽस्मै जुहोति वरमस्मै ददाति
　　वरं वृणे यशसा भामि लोके ( स्वाहा ) ॥ इति।

मन्त्रब्राह्मणमाकरः २।६।११। विनियोगप्रमाणमस्य खादिरगृह्येऽपि ४।३।८।

अस्य व्याख्यायां सायणाचार्यः—"पूर्णहोममित्यनेन मन्त्रेण यजनीये अग्नौ यशस्कामो जुहुयात्। यद्वा यत्र यत्र यष्टव्यमस्ति तत्र तत्रानेन जुहुयाद् यशस्कामः। सूत्रितं च 'पूर्णहोमं यजनीये जुहुयाद्' इति। मन्त्रप्रतिपादक 'इति' शब्दाभावो मन्त्रलिङ्गानुस्मरणार्थः, अतो यशस्कामस्यायमिति गम्यते। विराडस्य च्छन्दः। यद्यपि मन्त्रदेवताविशेषो नास्ति तथाऽपि यश आधीनत्वाद् इन्द्रोऽस्य देवता। पूर्णहोममाज्येन पूरितमन्त्रेण कर्तव्यं होमं जुहोमि। अत्र धात्वर्थोऽनुवादः, करोमीत्यर्थः। यशसे कीर्त्यवाप्तये। सोऽहम् अस्मै इन्द्राय जुहोमि आहुतिं प्रक्षिपामि। अस्मै मह्यम् इन्द्रो ददाति वरं यशोरूपफलं प्रयच्छति। केचिज् जुहोतीति पठन्ति, तस्मिन् पक्षे लौकिकोक्तिः। यस्मात् जुहोमि अतो वरं वृणे यशोरूपं वरं लभे, तेन यशसा वरेण लोके भामि दीप्तो भवामि, स्वाहेति पूर्ववत्" एवमाह।

B. ननु 'यज्ञवास्तुक्रियामि'त्यादिवचनबलात् (द्र० पृ० २३३) सर्वत्रैव नित्यकाम्यहोमेषु यज्ञवास्तुक्रियानन्तरं पूर्णहोमः कर्तव्यः। भवदेवरघुनन्दनाभ्यामप्युदीच्यकर्मणि साधारण्येन पूर्णहोम उक्तः। तत्राप्याहुतौ मन्त्रोऽयमेव पठ्यते। तत्र पूर्णाहुतिम् ऊर्ध्वः सन् दद्यात्, नोपविष्टः, कुतः? 'दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन" इति भविष्यपुराणात्। एवमेके। गोभिलीयकर्मण्युपविष्ट एव पूर्णाहुतिं दद्यात् न पुनरूर्ध्वः सन्, कस्मात्? आसीन ऊर्ध्वः प्रह्वो वा इत्यादि ( पृ० २०३ ) वचनबलादेवमपरे। तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

C मन्त्रस्तु— ॐ इन्द्रामवदात् तमो वः पुरस्तात्।
　　अहं वो ज्योतिर्मामभ्येत सर्वे ( स्वाहा ) ॥ इति।

मन्त्रब्राह्मणम् २।६।१२।

---

1. 'नास्ति' च।

'अनयोर्यजनप्रयोगाहुत्योः'[1]* कं काममिच्छन् पूर्वामाहुतिं जुहुयात्, कं चोत्तरामित्य'त आह—

## यशस्कामः पूर्वां सहायकाम उत्तराम् ॥ २५ ॥

ऋज्वर्थम्(A) ।

इति "श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये"* चतुर्थप्रपाठकस्य अष्टमी कण्डिका ॥

---

अस्य व्याख्या—इन्द्राम् इन्द्राणां क्षित्यादिलोकाधीश्वराणाम्, अग्न्यादीनां मध्ये आदित्योऽवदात् मार्गानभिज्ञान् प्रति अवदत् । किम् इत्युच्यते—हे मनुष्याः सहायकामिनो वो युष्माकं पुरस्ताद् उपरि पुरोभागे तम आवारकोऽन्धकारः, तिष्ठतीति शेषः । अहं वो युष्माकं ज्योतिर्दीपिवत् प्रकाशोऽस्मि । अतः सर्वे प्रकाशकामिनो यूयं माम् अभ्येत मामेवाभिमुखं गच्छत । अहं मार्गप्रकाशको भवामि । इति ।

A. अथ कण्डिकोक्तकर्मणां प्रयोगा उच्यन्ते—

अथ स्वस्त्ययनकर्म, श्रवणाकर्मण्याग्रहायणकर्मणि चाऽऽसादितानां व्रीहीनां फलीकृतानां मध्ये एकदेशं गृहीत्वाऽन्यत्र संस्थापयेत् । तानेवाक्षततण्डुलान् समादाय ग्रामात् प्राङ् वोदङ् वा गत्वा चतुष्पथे विधिवदग्निमुपसमाधाय क्षिप्रहोमविधिना हये राक इत्येकैकया अक्षततण्डुलान् अञ्जलिना जुहुयात् । एषां चतुर्णां प्रजापतिऋषिरनुष्टुप् छन्दो हयादयो देवता आरण्याग्रहायणीकर्मणि स्वस्त्ययनहोमे विनियोगः । ततो हये राके इति मन्त्रः । इदं हयादिभ्यो न मम । ये यन्तीति मन्त्रः । इदं हयादिभ्यो न मम । यदा यन्तीति मन्त्रः । इदं हयादिभ्यो न मम । यथा समुद्रमिति मन्त्रः । इदं हयादिभ्यो न मम । इत्थमक्षततण्डुलैश्चतस्र आहुतीर्हुत्वा तन्त्रशेषं परिसमाप्य तूष्णीं कतिपयपदानि प्राच्यां गत्वा ऊर्ध्वं पश्यन् वसुवन एधीत्यनेन मन्त्रेण त्रिरभ्यस्तेन देवजनेभ्य इति प्रकृताक्षततण्डुलान् अञ्जलिनोर्ध्वं क्षिपेत् । अस्य मन्त्रस्य प्रजापतिऋषिर्यजुर्देवजना देवता अक्षततण्डुलानामूर्ध्वप्रक्षेपणे विनियोगः । ॐ वसुवन एधि वसुवन एधि वसुवन एधि, देवजनेभ्यः । ततः पुनरक्षततण्डुलान् गृहीत्वा अधस्तात् पश्यन् तिर्यगितरजनेभ्य इत्यञ्जलिना प्रक्षिपेत् । ततोऽत्रापि वसुवन एधि वसुवन एधि वसुवन एधि, इतरजनेभ्यः, इति प्रयोक्तव्यः । तथेतरजनेभ्य इति, सूत्रे तथाशब्दश्रवणात् । ततो बलिमनवलोकयन् प्रकृताग्निसमीपमागत्य होमबल्यवशिष्टानक्षतान् भ्रातृपुत्रशिष्यादिभिर्मित्रैश्च सह भक्षयेत् । ततो वामदेव्यगानम् । अस्य कर्मणः स्वस्त्ययनं फलम् ।

1. एतयोर्यजनीयाहुत्योः' ख । 2. 'यत आह' नास्ति ख । 3. नास्ति ख ।

अथ प्रसादकरकर्म। अथ पुण्ये दिवसे प्रातर्नित्यकर्मान्ते क्षिप्रहोमविधिना अग्निं प्रतिष्ठाप्य वशङ्गमाविति मन्त्रेण व्रीहिहोमः, शङ्खश्चेति मन्त्रेण यवहोमश्च कर्तव्यः। यस्य कस्यचित् पुरुषस्य स्त्रियो वा सकाशाद् द्रव्यप्राप्तिमिच्छति तस्य नाम मन्त्रे असावित्यस्य स्थाने प्रथमान्तत्वेन प्रयोक्तव्यम्। अनयोर्मन्त्रयोः प्रजापतिऋषिर्यजुश्चन्द्रादित्यौ देवते पृथग् व्रीहियवहोमे विनियोगः। वशङ्गमाविति मन्त्रः। इदं चन्द्राय न मम। शङ्खश्चेति मन्त्रः। इदं सूर्याय न मम। तन्त्रशेषं समापयेत्। होमे यस्य नाम परिगृहीतं स तु प्रसन्नः सन् सर्वस्वं होमकर्त्रे ददाति। उक्तफलप्राप्तिपर्यन्तं प्रतिदिनमेतत् कर्म कर्त्तव्यम्।

अथैकाक्षर्यामृचि चत्वारि कर्माणि फलभेदात् साधनभेदात् प्रथमतृतीययोरनुष्ठानाय पूर्वमर्धमासव्रतं द्वितीयचतुर्थयोर्व्रतविशेषानुक्तौ सामान्यं सूत्रोक्तत्रिरात्रव्रतं कर्तव्यम्। अथ क्रमेण तेषां प्रयोगा उच्यन्ते—तत्र प्रथममायुष्यकामस्याऽऽयुष्करं कर्म। तत्र पौर्णमास्यां रात्रौ सम्पूर्णायुरभिवृद्ध्यर्थमायुष्करं कर्म करिष्ये इति सङ्कल्प्य विधिवदग्निं प्रतिष्ठाप्य क्षिप्रहोमविधिना खादिरान् समिल्लक्षणसंयुक्तान् शतं शङ्कून् एकाक्षर्यया ऋचा जुहुयात्। अस्याः प्रजापतिऋषिर्यजुर्वाग् देवता खादिरशङ्कुहोमे विनियोगः। आकूतीमिति मन्त्रः। इदं वाचे न मम। शङ्कूनां पृथक् पृथङ् मन्त्रेण होमः। ततस्तन्त्रशेषं समापयेत्।

अथ वधकामस्य वधकरकर्मोच्यते। तस्य मारणकर्मेति नामान्तरम्। तत् करिष्यन् प्रथमकर्मोक्तकाले क्षिप्रहोमविधिना एकाक्षर्यामन्त्रेण लोहमयान् सूचीतुल्यान् शतं शङ्कूनग्नौ जुहुयात्।

अथ ग्रामकामस्यामोघनामकं तृतीयं कर्मोच्यते। तस्य प्रयोगः—पूर्वोक्तकाले ग्रामात् प्रागुदग् वा पर्वते चतुष्पथे वा गत्वा परितः शुद्धं स्थण्डिलं परिकल्प्य आरण्यैर्बहुगोमयशुष्कैरेव तत् स्थण्डिलं भृशं प्रतापयेत्। निःशेषाङ्गारापोहनानन्तरं भूमिर्यथा ज्वालायुक्ता स्यात् तथा तपनम्। ततोऽङ्गारान् सर्वानपसार्य शीघ्रम् आस्यं घृतेनाऽऽपूर्य मनसैकाक्षर्यामन्त्रमुच्चार्य आस्येन घृतं प्रतप्ते स्थण्डिले जुहुयात्। नात्र क्षिप्रहोमविधिः। अत्र यावदेवोक्तं तावदेव कर्तव्यं जलहोमवत् ततो ज्वलन्ती भूमिः स्याद् यदि तदा द्वादशानां ग्रामाणां शीघ्रं प्राप्तिः। होमानन्तरे धूमे जाते ग्रामत्रयावाप्तिः फलम्। अथ षण्णामष्टानां वा; एतदमोघकर्मेत्याचक्षते।

अथ वृत्त्यविच्छित्तिकामस्य वृत्तिप्रदकर्मोच्यते—वृत्तीनां पत्नी-पुत्र-गो-भूमि-धान्य-हिरण्यादिसाधनानामविच्छित्तिर्वृत्त्यविच्छित्तिः। अनवाप्तानां तासां प्राप्तिश्च फलम्। तत् करिष्यन् त्रिरात्रं व्रतं कृत्वा प्रतिदिनं सायंप्रातर्विधिवदग्निं प्रतिष्ठाप्य क्षिप्रहोमविधिनैकाक्षर्यामन्त्रेण हरितगोमयान् जुहुयात्। स्मृत्यन्तरप्रामाण्यात् सायंप्रातर्होमकालाविरोधेन प्रातर्होमानन्तरं सायंहोमात् पूर्वं गोमयहोमः। विशेषानुक्तेः प्रातरेकैवाऽऽहुतिः। सायमपि तथेति केचिद् व्याख्यातारः। वार्षिकमासचतुष्टये प्रकृतं कर्म कर्तव्यम्, हरितगोमयकाभसम्भवादिति। पूर्ववत् तन्त्रशेषं समापयेत्। इत्येकाक्षर्यामन्त्रप्रयोगः।

अथ सम्पदर्थं पण्यहोमप्रयोगः। तस्य त्रिरात्रमुपवासः न त्वेकभक्तव्रतम्, पुनर्वचनात्।

व्रतान्ते अग्निं प्रतिष्ठाप्य क्षिप्रहोमविधिना इदमहमिमामिति मन्त्रेण पण्यहोमं कुर्यात्। होमार्हरत्नादिपण्यप्राप्त्यर्थमाज्येन होमः। होमार्हपण्यधान्यादिप्राप्त्यर्थं तत्तद्द्रव्येण होमः। आहुतिरेकैव सकृदेवानुष्ठानं यथोक्तकाले। अथवा काम्यद्रव्यप्राप्तिपर्यन्तं वाल्याऽऽहुतिः। अस्य मन्त्रस्य प्रजापतिऋर्षिर्लिङ्गोक्तो विश्वकर्मा देवता पण्यलाभकर्मणि पण्यहोमे विनियोगः, इदमहमिति मन्त्रः। इदं विश्वकर्मणे न मम। ततस्तन्त्रशेषं समापयेत्।

अथ पण्यवस्त्रप्राप्त्यर्थं तन्तुहोमः। गोप्राप्त्यर्थं गोपुच्छलोमभिः। पण्यस्य वाससस्तन्तून् समादाय प्रकृतमन्त्रेण पूर्ववज्जुहुयात्। ततस्तन्त्रसमापनमिति।

अथ यशस्कामस्य सहायकामस्य चोभयपक्षप्रतिपदि पूर्णहोम उच्यते—पौर्णमास्याः प्रतिपदि यागादर्वाग् वा यागादूर्ध्वम् उक्तफलसिद्ध्यर्थं पूर्णहोमं करिष्ये इति संकल्प्य क्षिप्रहोमविधिना जुहुयात्, पूर्णहोममन्त्रेण सकृदाज्यं यशस्कामश्चेत्, इन्द्रामवदादित्यृचा सहायकामश्चेत्। पूर्णहोममिति। मन्त्रस्य प्रजापतिऋर्षिर्लिङ्गोक्तोऽग्निर्देवता यशस्कामस्य पूर्णहोमे विनियोगः। ॐ पूर्णहोममिति। इदमग्नये न मम। इन्द्रामवदादिति मन्त्रस्य प्रजापतिऋर्षिर्गायत्री छन्द इन्द्रो देवता सहायकामस्य पूर्णहोमे विनियोगः। ॐ इन्द्रामवदादिति। इदमिन्द्राय न मम। ततस्तन्त्रं समापयेदिति। पूर्णहोमे उत्थायैवाऽऽज्याहुतिं जुहुयादिति केचित्, आचार्यानुक्तत्वादुपविश्यैवेत्यपरे। तदत्र भगवन्तोऽनूचानाः प्रमाणमिति।

---

# चतुर्थप्रपाठकस्य नवमी कण्डिका

—:*:—

## पुरुषाधिपत्यकामोऽष्टरात्रमभुक्त्वा ॥ १ ॥

पुरुषाणामाधिपत्यं पुरुषाधिपत्यं [1]सैनापत्यमित्यर्थः। तद् यः कामयते स पुरुषाधिपत्यकामः, अष्टरात्रम् अष्टावहोरात्राणि, अभुक्त्वा [2]उपोष्य।

## औदुम्बरान् स्रुवचमसेध्मानुपकल्पयित्वा ॥ २ ॥

उदुम्बरस्यैतानौदुम्बरान्, वार्क्षान्, न तैजसान्; कुतः? इध्मेन सहैकयोगनिर्देशात्। स्रुवचमसेध्मा व्याख्याताः(A)। तानुपकल्पयित्वा संपाद्य, चमसस्योपकल्पनमिह किमर्थमिति चेत्? प्रणीतार्थमिति ब्रूमः, इतरथाऽस्यादृष्टार्थतैव स्यात्। न च [3]दृष्टार्थत्वोपपत्तौ सत्यामदृष्टार्थकल्पना साध्वी।

## प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथेऽग्निमुपसमाधाय ॥३॥

व्याख्यातमेतदञ्जलिहोमकर्मणि(B)।

## आज्यमादित्यमभिमुखो जुहुयात्—अन्नं वा एकच्छन्दस्यं श्रीर्वा एषेति च ॥ ४ ॥

(C)अन्नं वा एकच्छन्दस्यमित्यनेन मन्त्रेण (D)श्रीर्वा एषेत्यनेन च, आज्यं [4]घृतम्

A. द्रष्टव्यं पृ० ९६, १७७।
B. द्र० सू० ४।८।२। ( पृ० ८४३ )।
C. मन्त्रस्तु—

ॐ अन्नं वा एकच्छन्दस्यमन्नं ह्येकं
भूतेभ्यश्छन्दयति ( स्वाहा )॥ इति।

D. मन्त्रस्तु—

ॐ श्रीर्वा एषा यत् सत्वानो विरोचनो
मयि सत्वमवदधातु ( स्वाहा )॥ इति।

अनयोराकरो मन्त्रब्राह्मणम् २।६।१३-१४। विनियोगप्रमाणमनयोः खादिरगृह्येऽपि ४।३।१०। अनयोर्व्याख्यायां सायणाचार्यः—'अन्नकामोऽन्नं वा इति, श्रीर्वा इति, आभ्यां चतुष्पथे आज्यं जुहुयात्। सूत्रितं च 'अष्टरात्रोपोषितोऽपरं प्राङ् वोदङ् वा ग्रामान्निष्क्रम्य चतुष्पथे समिध्याग्निम्

1. 'सेनाधिपत्य-' ख। 2. 'उपोष्येति' ख। 3. 'दृष्टार्थोपपत्ती' ख। 4. 'जुहुयात्' ख।

आदित्यमभिमुखः आज्यतन्त्रन्यायेन जुहुयात्'*। [1]कुतः? इध्मोपदेशसामर्थ्यात्। आदित्यमभिमुख इत्यनेनैतद् दर्शयति—प्रातराहुत्यनन्तरमेव [2]तत् कर्म कर्तव्यम्, येन प्राङ्मुखत्वं स्यादादित्याभिमुखत्वं चेति। ननु आज्यग्रहणमयुक्तम् अनादेशादेव सिद्धेः? न; इतरथा मन्त्रलिङ्गादन्नहोमाशङ्का स्यात्। अथवा (A)तैलं [3]दधि पयो यवागूं वेत्येतस्य [गृ० १।७।१८] व्यावृत्त्यर्थं प्राप्ते पुन[4]राज्यग्रहणम्। एवं चात्राऽऽज्यमेव नियम्यते।

किमेते एव द्वे आज्याहुती पुरुषाधिपत्यकामो जुहुयात्? न; किं तर्हि?

## अन्नस्य घृतमेवेति ग्रामे तृतीयाम् ॥५॥

(B)अन्नस्य घृतमित्यनेन मन्त्रेण प्रकृतत्वान्मन्त्रलिङ्गाच्चाऽऽज्येन तृतीयामाहुतिं जुहुयादिति वर्तते। ग्राम इति ग्रामे शालाग्निरनतिप्रणीतो यस्तत्र जुहुयात्, न तु ग्राम

औदुम्बर इध्मः स्यात् स्रुवचमसौ च जुहुयादन्नं वा इति श्रीर्वा इतीति। चशब्दात् स्रुवचमसावपि औदुम्बरौ कार्यौ। चमस आज्यधारणार्थः। तत्र प्रथमा अन्नं चेति। अयमुत्तरश्च उभौ मन्त्रौ यजुरन्नदेवताकौ। एकच्छन्दस्यं छन्दयतीति छन्दः, छादनात् छन्दस्त्वं श्रुतौ प्रसिद्धम्। छादयन्ति विषादेन छन्दांसीति श्रुतिः। एकञ्च तत् छन्दः, तदर्हम् एकच्छन्दस्यम्, जगतामन्यनिरपेक्षाच्छादनार्हमित्यर्थः। तदन्नं वा अन्नमेव, नहि अन्नादृते किञ्चिदाच्छादकं रक्षकमस्ति, अन्नं हि एकम्। हीति प्रसिद्धौ। अन्नमेकमेव खलु भूतेभ्यः प्राणिभ्योऽस्मत्-पुत्रभृत्यादिभ्यश्छन्दयति अपावृणोति रक्षतीत्यर्थः। अथ द्वितीया—सत्वानः प्राणिनः पुत्रादयः सामर्थ्यान्निवसन्ति। यदेषा श्रीर्वै, वै इति लोकप्रसिद्धिद्योतनार्थः। लोके खलु प्रभूतपुत्राद्युपेतं श्रीमन्निति व्यवहरन्ति, एषा इत्यत्र श्रीत्वैकत्वे श्रीशब्दापेक्षे, अतो न विरोधः। विरोचनो विशेषेण रोचमानो भोक्तादिर्मयि सर्वं पुत्रादिकं सामर्थ्यं वा मयि प्रयोक्तरि अवदधातु। केचन अनयोर्मन्त्रयोरादित्यो देवतेति ब्रुवते, तस्मिन् पक्षे एकच्छन्दस्यमिति अस्यायमर्थः—एकस्य एव तेजसाच्छादक एकच्छन्दः, तत्र भवमन्नम् एकच्छन्दस्यम्, तथा द्वितीयमन्त्रे विरोचनशब्देन विशेषेण रोचमान आदित्य उच्यते, शिष्टं समानम्' इत्याह। जार्मानमुद्रितपुस्तके तु मूले भाष्ये च 'सत्वानः' इति वर्तते।

A. द्र० पृ० २११।

B. मन्त्रस्तु—

ॐ अन्नस्य घृतमेव रसस्तेजः
सम्पत्कामो जुहोमि ( स्वाहा ) ॥ इति।

मन्त्रब्राह्मणम् २।६।१५। विनियोगप्रमाणमस्य खादिरगृह्येऽपि ४।३।११।

1. 'कुतः' नास्ति ख। 2. 'एतत्' ख। 3. 'दधि' नास्ति ख। 4. 'आज्य' नास्ति ख।

एव, कुतः? अग्नेरेवाधिकृतत्वात्, एकफलत्वाच्च पूर्ववत्त्राप्यग्नावेव होमप्रतीतेः। अत्र सन्देहः—किमेतत् पूर्ववदौदुम्बरस्रुवचमसेध्मयुक्तमाज्यतन्त्रं स्यात्, उत क्षिप्रहोमधर्मकमिति? आज्यतन्त्रमिति ब्रूमः; [1]कुतः? अधिकारात् फलान्तरानुपदेशाच्च। तृतीयाशब्दोऽपि धर्मसामान्यत्वप्रज्ञापनार्थमेवास्मिन् सूत्रे प्रयुक्तः, इतरथा तृतीयामित्यवाच्यं स्यात्, उपन्यासक्रमादेव तृतीयात्वसिद्धेः। तुल्यधर्माणां हि संख्येयानामेकसंख्या उपपद्यते, न विरुद्धधर्माणामित्यत आज्यतन्त्रमिति सिद्धम्।

## गोष्ठे पशुकामः ॥ ६ ॥

पशूनामविशेषात् [2]गोऽश्वमहिष्यादीन्* कामयत इति पशुकामः। गोष्ठे गवामावासे प्रकृतत्वादग्निमुपसमाधायान्नस्य घृतमित्येतां तृतीयामाज्याहुतिमाज्यतन्त्रन्यायेन जुहुयादिति। अत्र सन्देहः—किमियमाहुतिर्निर्देशभेदेन पुरुषाधिपत्यकामस्यैव पूर्वस्मिन्नाहुतिद्वये हुते पशुषु [3]च काम्यमानेषूपदिश्यते? कथं नाम, पुरुषाधिपत्यकामः पशूनपीच्छन् तृतीया[4]माहुतिं गोष्ठे जुहुयात् न तु ग्रामे, उतान्यो य एव कश्चित् पशुकाम इति। अत्र कश्चिदाह[5]—पुरुषाधिपत्यकाम एवेति, तदयुक्तम्; कुतः? पुरुषाधिपत्यत्वे [6]सत्यप्रार्थितानामेव पशूनामनुषङ्गतः सम्भवात्। तस्मादन्यो य एव [7]कश्चित् पशुकाम इति युक्तम्(A), एवञ्चात्राग्रारात्रोपोषणं न स्यात्, न चौदुम्बरस्रुवादि। प्रकृतमेव पुरश्चरणं स्यात् प्रकृतं च [8]स्रुवादीति। पुनरपि सन्देहः—किं कृत्स्नमेव

---

अस्य व्याख्यायां सायणाचार्यः—"अन्नस्येति अन्नेनाधिपत्यकामो जुहुयात्। तथाच सूत्रम्—'ग्रामे तृतीयामन्नस्येत्याधिपत्यं प्राप्नोती'ति। तृतीयामाहुतिमित्यर्थः। अस्मिन्नपि कर्मणि पूर्वोक्ताभ्यां मन्त्राभ्यां चतुर्थं हुत्वा तृतीयामाहुतिमन्नस्येत्यनेन ग्रामे जुहुयादित्यर्थः। अन्नस्येति यजुर्मन्त्रोऽयम्। अन्नस्य घृतमेव रसः सारम् अतो घृतोपेतेनान्नेन सारभूतेन घृतेन वा तेजःसम्पत्कामः शरीरकान्तिरूपां सम्पदं कामयमानो जुहोमि। स्वाहेति स्पष्टम्"। इत्याह।

A. अत्र तर्कालङ्कारः—"स खल्वयं होमः पुरुषाधिपत्यकामस्यैव सतः पशुकामस्य गोष्ठे उपदिश्यते, दर्शपौर्णमासयाजिन एव सतः पशुकामस्य गोदोहेन प्रणयनोपदेशः इति यथा। कथं ज्ञायते? तस्यैवाधिकारात्; तृतीयाम् इत्यनुवर्तनेन एककर्म्मप्रतिपत्तेश्च। 'गोष्ठे पशुकामः' इत्येतावन्मात्रं खल्विहोच्यते, नतु किञ्चिदपि कर्त्तव्यमुपदिश्यते। भवितव्यन्तु तेन, तस्मात्तानन्तर्यातिरेकात् तृतीयामाहुतिं जुहुयादित्यनुषञ्जनीयम्। तस्मान्न येयं तृतीया आहुतिः

---

1. 'कुतः' नास्ति ख। 2. 'गोमहिष्यादीन्' ख। 3. 'एव' ख। 4. '-मेवाऽऽहुतिं' ख। 5. 'आह' नास्ति ख। 6. 'सत्यमप्रार्थितामा-' ख। 7. 'कश्चित्' नास्ति ख। 8. 'स्रुवादीनि' ख।

कर्म आहुतित्रयसंयुक्तं पशुकामस्य गोष्ठदेश उपदिश्यते उतानन्तरा 'तृतीयैवैकेति ? अनन्तरा[1]* तृतीयैवेति ब्रूमः। कुतः, अवान्तराधिकारात्।

## विदूयमाने चीवरम्॥ ७॥

टुदु उपतापे। विविधं दूयमाने उपतप्यमाने विदूयमाने। कस्मिन्? गोष्ठे, कुतः? अधिकारात् सप्तमीप्रयोगाच्च[2]। "देशस्याचेतनत्वादुपतापासम्भवाद् गोष्ठसंबद्धासु गोषु 'प्रतप्यमानास्विति द्रष्टव्यम्'(A)। चीवरशब्देन लोहचूर्णमुच्यते—'लोहचूर्णन्तु चीवरमि'ति (B)वचनात्। किम्? जुहुयादिति वर्तते कुतः? जुहोतेरेवाधिकारात् संपत्कामो जुहोमीति मन्त्रलिङ्गाच्च। क जुहुयात्? अधिकाराद् गोष्ठे अग्निमुपसमा-

केवलं पुरुषाधिपत्यकामस्य ग्रामे उपदिष्टा सैव तस्यैव पशुकामस्य सतो गोष्ठे उपदिश्यते इति श्लिष्यते। तस्मादधिकृताधिकारोऽयमुपदेशः इत्युक्त्वा भाष्यकारापरिगृहीतमतमूरीकरोति। तदत्र भगवन्तोऽनूचानाः प्रमाणम्।

A. अत्र तर्कालङ्कारः—"एतदनेनोक्तं भवति—गोष्ठे अग्निमुपसमाधायैव होमो न कर्तव्यः, किन्तु अग्निमुपसमाधायापि तावत् प्रतीक्षणीयं यावद् गोष्ठमुपतप्यमानं भवति, तत उपतप्यमाने सति गोष्ठे होमः करणीय इति। अपरे पुनर्भाषन्ते गोष्ठस्योपतापासम्भवाद् गोष्ठसम्बन्धाद् गोषु उपतप्यमानास्विति द्रष्टव्यम् इति। तदेवं विदूयमाने गोष्ठे चीवरं जुहुयादिति वर्तते। सम्पत्कामो जुहोमीति मन्त्रलिङ्गाच्चैतदेवं प्रतिपत्तव्यम्। तदत्र चीवरविधानादाज्यस्य निवृत्तिः स्यात्। पूर्वोक्तधर्मसम्बन्धस्तु अत्रापि स्यादेव, तत्सम्बन्धेनैवोपदेशात्। या खल्वियं तृतीयाहुतिराज्येन ग्रामे स्यात् सैव पशुकामस्य सतश्चीवरेण गोष्ठे भवतीति खल्ववोचाम। अत्र पुरुषाधिपत्यकामकर्मणोऽपवर्गः। अन्यः पुनरन्यथेमं ग्रन्थं वर्णयाञ्चकार—गोष्ठं पशुकाम इत्यादिकम्। पशुकामो गोष्ठे तृतीयामाज्याहुतिं जुहुयात्। पशुकाम इति निरपेक्षश्रवणात् अधिकृताधिकारे च प्रमाणाभावात् सर्वस्यैव पशुकामस्य होमोऽयं न पुरुषाधिपत्यकामस्यैव सतः पशुकामस्यैवेति। तस्मात् पुरुषाधिपत्यकामकर्मणः कर्मान्तरमिदम्। एवञ्चात्र अष्टरात्रोपोषणं न स्यात् न वा उदुम्बरस्रुवादीति। कर्मान्तरमाह विदूयमाने चीवरम्। गोष्ठस्योपतापासम्भवाद् गोष्ठसम्बन्धाद् गोषूपतप्यमानासु चीवरं लोहचूर्णं जुहुयात्। इदमपि कर्मान्तरम्। क्षिप्रहोमश्चायम्। एतेषां त्रयाणामपि कर्मणां सकृत्प्रयोगादेव फलं स्यात्; कुतः? अभ्यासानुपदेशात्"। इत्युक्त्वा भाष्यकारानभिमतमर्थमारचयति वयमपि परमतमप्रतिषिद्धमनुमतं भवतीति न्यायेन तन्मतमप्यङ्गीकरोति। तदनयोरुपयुक्तत्वानुपयुक्तत्वे भगवन्तोऽनूचानाः प्रमाणम्।

B. उक्तं कर्मप्रदीपवचनमिदं प्राक् पादटिप्पण्यां (पृ० ७८६)।

1. नास्ति ख। 2. 'च' नास्ति ख। 3. 'चादेवम' ख। 4. 'प्र' नास्ति ख।

ध्यायेति । त्रिप्रहोमश्चायम् । एतेषां त्रयाणामपि कर्मणां [1]सकृत् प्रयोगादेव फलं स्यात्, कुतः ? अभ्यासानुपदेशात् ।

इदानीं पुनरेतस्यैव मन्त्रत्रयस्यान्येष्वपि कर्मसु विनियोगविवक्षयेदमाह—

प्रतिभये(A)ऽध्वनि वस्त्रदशानां ग्रन्थीन् बध्नीत ॥ ८ ॥

भयमेव प्रतिभयम् । अथवा प्रतिशब्दः प्रकर्षवाची, प्रकर्षेण भयं प्रतिभयम् । अथवा प्रत्यासन्नं भयं प्रतिभयम् । तस्मिन् प्रतिभये सति । क ? अध्वनि, गच्छत इति शेषः । वस्त्रं वासः, अविशेषात् स्वकीयमधरीयमुत्तरीयं वा ; वस्त्रस्य दशा वस्त्रदशाः, तासां वस्त्रदशानाम् अन्नं वा एकच्छन्दस्यमित्येतत्प्रभृतिभिस्तिसृभिश्च ग्भिस्त्रीनेव ग्रन्थीन् बध्नीत । कुतः ? एतासामेव प्रकृतत्वात् मन्त्रान्तरानुपदेशाच्च(B) ।

स्ववाससि दशाभावे कथमित्यत आह—

उपेत्य वसनवतः (C)स्वाहाकारान्ताभिः ॥ ९ ॥

स्वपुरुषाणामेक[2]सार्थयायिनां कस्यचिदुपेत्य समीपमागत्य, न तु तत्रैवाऽऽहूय, [3]वसनवत इति सामर्थ्यात् दशायुक्तवसनवतः । [4]स्वाहाकारान्ताभिः प्रकृताभिरन्नं वा एकच्छन्दस्यमित्येताभिः । दशानां ग्रन्थीन् बध्नीतेति वर्तते(D) । अहोमकत्वात् कर्मणः स्वाहाकारलोपो मा भूदित्यतः[4]* स्वाहाकारान्ताभिरित्युक्तम् ।

---

A. प्रतिभये इत्यादि स्वाहाकारान्ताभिरित्यन्तमेकं सूत्रमिति सामश्रमी ।

B. अत्र कश्चिदाह आनन्तर्यातिरेकात् तृतीययैव स्यादिति, तदसङ्गतम् ; स्वाहाकारान्ताभिरिति वक्ष्यमाणसूत्रात् तिसृभिरेव स्यादित्यस्यैवावगतेः । न पुनरानन्तर्यातिरेकात् तृतीययैवेति, अतिक्रान्तसम्बन्धस्यापि आचार्यानुमतत्वादिति ।

C. स्वाहाकारान्ताभिरिति पृथक् सूत्रमिति कल्पयति तर्कालङ्कारः ।

D. इयमपरा सूत्रद्वययोजना—अध्वनि पथि प्रतिभये सति वस्त्रदशानां त्रीन् ग्रन्थीन् बध्नीत प्रकृताभिरृग्भिः । किमात्मनो वस्त्रदशानाम् ? न ; कस्य तर्हि ? उपेत्य वसनवतः । वसनवतः सहगन्तुः कस्यचित् वस्त्रदशानां ग्रन्थीन् बध्नीत । किं कृत्वा ? उपेत्य । एवं वा—प्रतिभये अध्वनि वस्त्रदशानां ग्रन्थीन् बध्नीत । अर्थादात्मनः । न केवलमात्मन एव, किं तर्हि ? उपेत्य वसनवतः । चशब्दोऽत्र लुप्तवद् द्रष्टव्यः । वसनवत इति च द्वितीयाबहुवचनान्तं पदम् । तदयमर्थः—वसनवतश्चैकसार्थगन्तॄन् सहायानुपेत्य तेषामपि वस्त्रदशानां ग्रन्थीन् बध्नीत इति । इति चात्र तर्कालङ्कार आह । प्रकृते तु कीदृशी इतिकर्तव्यतेति भगवन्तोऽनुयोक्ता निर्दिशन्तु ।

---

1. 'सकृत्' नास्ति ख । 2. '-सामर्थ्य-' ख । 3. 'वसना-' ख । 4. नास्ति ख ।

किमनेन कर्मणा भवतीत्यत आह—

सहायानाञ्च स्वस्त्ययनम् ॥ १० ॥

सहायानां च-शब्दादात्मनश्च स्वस्त्ययनमारोग्यम् अभयं भवतीति शेषः। तदेतदु-परिष्टाद् वेदितम्, भयस्यानियतकालत्वात्।

आचितसहस्रकामोऽक्षतसक्त्वाहुतिसहस्रं जुहुयात् ॥११॥

आचितसहस्रकाम इत्येतदाचितशतकाम(A) इत्यनेनैव व्याख्यातम्, सहस्रशत-शब्दयोरेकार्थत्वात्। अक्षतैरपनीततुषैर्यवैर्निष्पन्नाः सक्तवोऽक्षतसक्तव 'उच्यन्ते[1]। कुतः? 'अक्षतास्तु यवाः प्रोक्ता'(B) इति अक्षतशब्दस्यैवमर्थलाभात्। अक्षतसक्तुना-माहुतयोऽक्षतसक्त्वाहुतयः। अक्षतसक्त्वाहुतीनां सहस्रम् अक्षतसक्त्वाहुतिसहस्रं 'दशशतानि जुहुयात्[2] अन्नं वा एकच्छन्दस्यमित्येताभिः त्रिप्रहोमन्यायेन जुहुयात्। कुतः? एतासामेव प्रकृतत्वान्मन्त्रान्तरानुपदेशाच्च। अत्र सन्देहः—किं दण्डकलित-'न्यायेनर्चोऽभ्यस्य[3] सहस्रसंख्यां पूरयित्वा, उत (C)स्वस्थानादिवृद्धिन्यायेनेति? दण्डकलितन्यायेनेति ब्रूमः(D)। कुतः? 'सकृत समाभ्यामृचा'[4] सहस्रसंख्याया असम्भवात् उत्तरकालमभ्यासस्यापेक्षितत्वात्।

श्रीकामश्चापि बिल्वानां लक्षहोमं प्रयोजयेत।
दधिक्षौद्र"घृताक्तानामक्षयां श्रियमश्नुते॥

इत्येवमादि "व्याहृतिहोमेषु"[5] व्याहृतीनामप्येवमेवाभ्यासस्य दृष्टत्वात्। पुनरपि सन्देहः—येयमेकाहुतिरवशिष्यते सहस्रतमी सा कतमयर्चा होतव्येति? आद्ययेति ब्रूमः, कुतः? पुनरपि तस्या एवापेक्षितत्वात्।

A. द्र० सू० ४।६।१२। (पृ० ८५६)

B. उक्तं कर्मप्रदीपप्रमाणमिदं प्राक् (पृ० ७०६)

C. सोऽयं न्यायः, प्रथमया ऋचा प्रथमाहुतिः, द्वितीयया द्वे, तृतीयया तिस्रः, पुनः प्रथमया चतुर्थस्थानस्थितया चतस्रः, पुनर्द्वितीयया पञ्चमस्थानस्थितया पञ्चेति, एवंरूपः, स तु निष्प्रमाणक इत्युपेक्षितः, सर्वत्रैवाभ्यासस्यापेक्षितत्वेऽपि प्रामाणिकोऽभ्यास एव स्वीकर्तव्य इति।

D. मालान्यायेनेति भावः, एवञ्च आद्यया ऋचा प्रथमाहुतिः, द्वितीयया द्वितीया, तृतीयया तृतीया, पुनः प्रथमया चतुर्थी द्वितीयया पञ्चमीत्येवमित्यर्थः। केचित्तु आहुतिसहस्रं त्रिधा विभज्य प्रथमया ऋचा तस्य प्रथमं भागं द्वितीयया द्वितीयं भागं तृतीयया च तृतीयं भागं जुहुयादित्याहुः।

1. 'इत्युच्यन्ते' ख। 2. नास्ति च। 3. '-न्यायेनार्थोऽभ्यस्य' ख। 4. 'स्वस्त्ययनमायाम्यच' ख। 5. '-घृतयुतानां-' ख। 6. नास्ति ख।

'उक्तञ्च—

सकृद्धुतिसहस्रं यत् पुरीषाणाञ्च कीर्त्तितम् ।
त्र्यृचाभ्यासेन तत् कुर्याद्वा²धयाऽन्त्याहुतिर्भवेत्(A) ॥ इति ।

**पशुकामो वत्समिथुनयोः पुरीषाहुतिसहस्रं जुहुयात् ॥ १२ ॥**

³पशून्विशेषात्³* गोऽश्वमहिष्यादीन् कामयत इति पशुकामः, वत्सश्च वत्सिका च वत्समिथुनमुच्यते । कुतः ? द्वन्द्ववाचित्वान्मिथुनशब्दस्य । वत्समिथुनं च वत्समिथुनं च वत्समिथुने. तयोः वत्समिथुनयोः, पुरीषं शकृत्, पुरीषाणामाहुतयः ⁴पुरीषाहुतयः. पुरीषाहुतीनां सहस्रं पुरीषाहुतिसहस्रं दशशतानि, 'अन्नं वा एकच्छन्दस्यम्' इत्येताभिः पूर्ववज्जुहुयात् । कुतः ? एतासामेव प्रकृतत्वात्, मन्त्रान्तरानुपदेशाच्च । अत्र सन्देहः—किमयमाहुतिसहस्रहोमः पूर्वमेव कृतवत्सपुरीषसंग्रहस्यैकस्मिन्नेवाहनि सकृत्प्रयोगेण पूर्वाह्णे स्यात् ? उत पुरीष⁵संपद्वशेन यद् यदैव पुरीषं संपद्येत ⁶तत् तदैव⁶* जुहुयादिति. अनेन न्यायेन 'नानाऽहस्सु'* स्यादिति ? एकस्मिन्नेवाहनि सकृत्प्रयोगेणेति ब्रूमः । कुतः ? होमकर्मणः प्राधान्यात्, प्रधानतश्च फलसंयोगात्, प्रधानगुणविरोधे गुणानां प्रधानवशवर्त्तित्वस्य न्याय्यतरत्वाच्च । पुनरपि सन्देहः—किं प्रकृ⁷तयोरेव⁷* वत्समिथुनयोः ⁸पुरीषसंग्रहः कार्यः उत ययोरेव कयोश्चिदिति ? प्रकृतयोरेवेति ब्रूमः । कुतः ? 'प्रकृतनाशे प्रायश्चित्त¹⁰मन्यद्योपादद्यादि'ति तन्त्रान्तरवचनात्, 'येनाऽऽरम्भस्तेन समाप्तिरि'ति च न्यायात् ।

उक्तञ्च—

चतुर्णां वत्सरूपाणां प्रकृतानाञ्च गोमयम् ।
एकस्मिन्नेव पूर्वाह्णे जुहुयात् सकृद्धोमवत्(B) ॥ इति ।

**अविमिथुनयोः क्षुद्रपशुकामः ॥ १३ ॥**

क्षुद्रपशुशब्देन अजाविकमुच्यते. तत्कामः अविमिथुनयोः उरणमिथुनयोः, ताभिरेव

---

A. प्रमाणत्वेनोल्लिखितं वचनमिदं तर्कालङ्कारेणापि स्वीये भाष्ये ।

B. वचनमिदं संगृहीतं प्रमाणत्वेन चन्द्रकान्तेनापि स्वभाष्ये । अत्र च सकृद्धोमवदिति वचनात् मालान्यायेन तिसृभिर्ऋग्भिर्जुहुयादिति द्रष्टव्यम् । केचित्तु आहुतिसहस्रं त्रिधा विभज्य त्रयस्त्रिंशदधिकत्रिशताहुतीरेकया जुहुयात् एवं पुनरन्यया, अपरया चैवमेवेत्याहुः ॥

---

1. 'उक्तञ्च' नास्ति ख । 2. '-ज्यायां त्वाहुति' ख । 3. 'पशून् विशेषादीन्' ख । 4. 'पुरीषाहुतयः' नास्ति ख । 5. -सम्बन्धवशेन' ख । 6. 'तत' ख । 7. 'कृतयोः' ख । 8. '-तयैव' ख । 9. 'पुरीष' नास्ति ख । 10. '-मन्यथोपा-' ख ।

ऋग्भिः पुरीषाहुतिसहस्रं जुहुयादिति वर्तते ; तासामेव प्रकृतत्वान्मन्त्रान्तरानुपदेशाच्च । मिथुनशब्दः पूर्ववत् । अत्रापि पूर्ववदेवाभ्यासः, तुल्यहेतुत्वात् ।

**वृत्त्यविच्छित्तिकामः कम्बूकान् सायं प्रातर्जुहुयात् क्षुधे स्वाहा क्षुत्पिपासाभ्यां स्वाहेति ॥ १४ ॥**

वृत्त्यविच्छित्तिकाम इत्येतत् सायंप्रातरिति च हरितगोमयहोमे व्याख्यातम् । कम्बूकाः फलीकरणकुक्कुसाः(A) तान्, (B) क्षुधे स्वाहा, क्षुत्पिपासाभ्यां स्वाहेति यजुर्भ्यां क्षिप्रहोमवज्जुहुयात् ।

**मा भैषीर्न मरिष्यसीति विषवता दष्टमद्भिरभ्युक्षञ्जपेत् ॥१५॥**

विषमस्यास्तीति विषवान् वृश्चिकसर्पादिः, तेन विषवता दष्टं स्त्रीपुरुषाख्यं प्राणिनम् अद्भिरुदकेन अभ्युक्षन् आभिमुख्येन 'उक्षन्, उक्ष सेचने, सिञ्चन् (C)मा भैषीरिति मन्त्रमभ्यसन् आ विषप्रक्षयाज्जपेत् । कुतः ? प्राणिपीडापनयनार्थत्वात् कर्मणः, अभ्युक्षञ्जपेदिति वचनात् । जपाभ्युक्षणक्रिययोर्यौगपद्यमत्र स्यात् ; न यथाऽन्यत्र मन्त्रान्ते [2]कर्मेति ।

---

A. 'कम्बूकाश्च कणाश्चैव फलीकरणकुक्कुसाः' इति प्रमाणवचनात् । ( द्र० पृ० ८१७ ) ।

B ॐ क्षुधे स्वाहा । ॐ क्षुत्पिपासाभ्यां स्वाहा ।

मन्त्राविमौ मन्त्रब्राह्मणे २।६।१६-१७ । विनियोगप्रमाणमनयोः खादिरगृह्येऽपि ४।३।१९ ।

अनयोर्व्याख्यायां सायणाचार्यः—"सञ्चितगवादिधनस्य बाहुल्यकामः 'क्षुधे'आदिमन्त्रद्वयेन आज्येनाऽऽहुतिसहस्रं जुहुयात् । तथाच सूत्रितम्—'क्षुधे स्वाहेत्येताभ्याम् आहुतिसहस्रं जुहुयादाचितसहस्रकाम' इति । यावति द्रव्ये सति द्रव्यसञ्चयवानयमिति लौकिका आहुः, तत्सहस्रगुणित मस्य फलम् इत्यर्थः । अथाऽऽभ्यामेव कामनाभेदेन विनियोगः सूत्रितः । वत्समिथुनयोः पुरीषेण पशुकामोऽविमिथुनयोः क्षुद्रपशुकामो हरितगोमयेन सायंप्रातर्जुहुयात, नास्य वृत्तिः क्षीयत इति । क्षुध इति । यजुष्याभ्यां (?) न छन्दोऽस्ति । क्षुत्पिपासे देवते, अर्थो निगमसिद्धः ।" इत्याह ।

C. मन्त्रस्तु—

ॐ मा भैषीर्न मरिष्यसि जरदष्टिर्भविष्यसि ।
रसं विषस्य नाविदमुग्रस्फेनमिवास्यम् ॥ इति ।

मन्त्रब्राह्मणम् २।६।१८ ।

अस्य व्याख्या—"हे विषदष्ट, त्वं मा भैषीः भीतिं मा कार्षीः । भीतिनिमित्ताभावं दर्शयति—न मरिष्यसि मरणं न प्राप्स्यसि, किन्तु जरदष्टिः जरापर्यन्तं व्याप्तो भविष्यसि, यतो

---

1. 'उक्षन्' नास्ति ख । 2. 'न कर्मेति' ग ।

तुर गोपायेति स्नातकः संवेशनवेलायां वैणवं दण्डमुप- निदधीत ॥ १६ ॥

स्नातको गृहमेधी संवेशनवेलायां रात्रौ स्वप्नवेलायाम्, कुतः ? दिवास्वप्नप्रतिषेधात्। वेणुर्वंशः, वेणोरयं वैणवः, दण्डो यष्टिः. कुतः ? 'वैणवीं धारयेद् (A)यष्टिमि'त्युपदेशात् ; तं वैणवं दण्डं उप समीपे शयनसन्निधावित्यर्थः, (B)तुर गोपायेत्यनेन मन्त्रेण निदधीत, दध धारणे धारयेत्। निशब्दप्रयोगात् तत्रैव सर्वां रात्रिं निश्चलं धारयेत्, न तु मन्त्रप्रयोगं कृत्वा अन्यत्रा[1]पनयेदिति।

किमर्थं धारयेदित्यत आह—

स्वस्त्ययनार्थम् ॥ १७ ॥

चोरवृश्चिकसर्पाद्युपद्रवाणामनुत्पत्त्यर्थम्। कुतः ? स्वस्त्ययनशब्द[2]स्यैवमर्थत्वात्।

---

विषस्य विषवतः सर्पादे रसं सारं सामर्थ्यं नाविदं न लब्धवानस्मि। वीर्यं न दृश्यत इत्यर्थः। अथवा विषस्यैव रसं सामर्थ्यं नाविदम्। उग्रस्फेनमिव उद्गीर्णफेनम् आस्यमिव तद् यथा नाविदं तद्वत्। सकारोऽयं छान्दसः, यतो मुखफेनं नाविदम् अतो विषरसं नाविदम्। अत एव न मरिष्यसि मा भैषीरित्यभिप्रायः। इति सायणाचार्यकृता।

A. वैणवीं धारयेद् यष्टिं सोदकञ्च कमण्डलुम्।
यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले ॥ इति।

मनुसंहिता ४।३६।

B. मन्त्रस्तु—

ॐ तुर गोपाय मा नाथ गोपाय मा।
अशस्तिभ्यो अरातिभ्यः स्वस्त्ययनमसि ॥ इति।

मन्त्रब्राह्मणम् २।६।१९।

अस्य व्याख्यायां सायणाचार्यः—"तुर गोपायेत्यनेन स्नातको भयनिवारणार्थं वैणवं दण्डं समीपे निदध्यात्। तथाच सूत्रम्—"स्नातकः संविशन् वैणवं दण्डमुपनिदध्यात् तुर गोपायेति स्वस्त्ययनमिति। दण्डं स्वापकाले शय्यासमीपे निदध्यादित्यर्थः। अस्योपद्रवनिवृत्तिः फलम्। हे तुर गमनविघ्नकारिणस्त्वारयतीति तुरः, हे तादृश दण्ड, नाथ स्वामिन्, मा मां गोपाय रक्ष, तदेवाशस्तिभ्योऽप्रशस्तेभ्योऽरातिभ्यः सुखमप्रयच्छद्भ्यो बाधकारिभ्यो मा मां गोपाय। हे दण्ड यतस्त्वं स्वस्त्ययनं क्षेमप्रापणमसि, अनेनास्मिन् क्षेमसम्भावना प्रदर्शिता भवति।" एवमाह।

1. '-नापि अपे-' ग। 2. '-स्यैव सामर्थ्यात्' ग।

हतस्ते अत्रिणा क्रिमिरिति क्रिमिमन्तं देशमद्भिरभ्युक्षन् जपेत् ॥ १८ ॥

क्रिमयः प्रसिद्धाः, क्रिमयोऽस्मिन् विद्यन्ते इति क्रिमिमान् देशः, प्राणिव्रणप्रदेशो न त्ववस्करगोमयादिः, प्राणिपीडापनयनकर्माधिकारात्। तं क्रिमिमन्तं देशमद्भिरभ्युक्षन् (A)हतस्ते अत्रिणेति जागतं त्र्यृचं जपेत्। उत्तरसूत्रस्य पशुविषयत्वादेतस्य पुरुषविषयता गम्यते।

---

A. अत्र यद्यपि भाष्ये 'जागतं त्र्यृचं जपेदि'त्युक्तम्, तथाऽपि मन्त्रब्राह्मणे प्रकरणेऽस्मिन् चतुर्णां मन्त्रणां सद्भावात् सामश्रमिणा च 'चतुरृचं सूक्तं जपेत्' इत्युक्तत्वात् चतुर्णामेवर्चां पाठो युक्त इत्यवगच्छामः। अत्र तर्कालङ्कारोऽपि—"हतस्ते इत्यादि क्रिमिमन्त्रान् सर्वानेव जपेत्। कथं पुनर्ज्ञायते सर्वेषां क्रिमिमन्त्राणामत्र विनियोग इति? उच्यते—क्रिमिमतो देशस्याभ्युक्षणे विनियोगविधानात् सर्वेषां क्रिमिमन्त्राणामत्रैव विनियोगमवगच्छामः। अन्येषां क्रिमिमन्त्राणां विनियोगान्तरादर्शनात्। न खल्वविनियुक्ता एवान्ये क्रिमिमन्त्राः पठ्यन्त इति युक्तम्। तस्मादुत्तरत्राहंणमन्त्राणां विनियोगोपदेशादिह सर्वेषामेव क्रिमिमन्त्राणां विनियोग इत्यादरणीयम्" इत्याह। गोभिलकर्मप्रकाशिकायान्तु ऋचामासामन्तिमद्वयी एकत्र पठितेति त्रित्वमासां नानुपपद्यते, एवञ्च भाष्यकारवचनविरोधो नास्त्येव। सायणाचार्येण तु षण्मन्त्राः कल्पिताः। वस्तुतस्तु मन्त्रब्राह्मणे द्वितीयप्रपाठके सप्तमखण्डे यावत्य ऋचः सन्ति सर्वा एव पाठ्याः। तास्तु तिस्रश्चतस्रः षड् वेति भगवन्तोऽनूचानाः प्रमाणयन्तु इति। विशेषान्तरानुपदेशादत्रापि समकालमेवाभ्युक्षणस्य मन्त्रजप इत्यवगन्तव्यम्।

तत्र चतसृणामृचामाद्या ऋक्—

ॐ हतस्ते अत्रिणा क्रिमिर्हतस्ते जमदग्निना।
गोतमेन तृणीकृतोऽत्रैव त्वा क्रिमे ब्रह्मवद्यमवद्य॥ इति।

द्वितीया—

ॐ भरद्वाजस्य मन्त्रेण सन्तृणोमि क्रिमे त्वा।
क्रिमिं ह वल्कृतोद्रिनं क्रिमिमान्त्रानुचारिणम्।
क्रिमिं त्रिशीर्षमर्जुनं त्रिशीर्षं ह चतुर्हनुम्॥ इति।

तृतीया—

ॐ हतः क्रिमीणां क्षुद्रको हता माता हतः पिता।
अथैषां भिन्नकः कुम्भो य एषां विषधानकः॥ इति।

चतुर्थी—

ॐ क्रिमिमिन्द्रस्य बाहुभ्यामवाञ्चं पातयामसि ।
हताः क्रिमयः साशातिकाः सनीलमक्षिकाः ॥ इति ।

मन्त्रब्राह्मणम् २।७।१-४ ।

एतेषां सायणाचार्यकृता व्याख्या च—

कृमिनिर्हरणमन्त्रः—अथ हतस्ते इत्यादीनां सर्वप्राणिसामान्ये कृमिनिर्हरणे विनियोगः, तथाच सूत्रम्—'हतस्ते इति कृमिमन्तं देशमद्भिरभ्युक्षन् जपेदि'ति । कृमिनाशोऽस्य फलम् । अथैषामेव पशुकृमिनिर्हरणे च विनियोगमाह सूत्रकारः—पशूनां चेदपराह्णे सीतालोष्टमाहृत्य तस्य प्रातः पांशुभिः प्रतिष्किरन् जपेदिति । तत्र प्रथमः 'हत' इति । बृहत्यस्य च्छन्दः, अत्र्यादयो देवताः । हे कृमे हतप्राणिन्, ते तवाऽऽत्मघाती कृमिः अत्रिणा पापस्य भक्षकेणैव तन्नामकेन महर्षिणा हतो घातितः । एवमुत्तरवाक्येऽपि योज्यम् । किञ्च हे प्राणिन् ते तवात्मघाती कृमिः गोतमेन महर्षिणा तृणीकृतः, नाशित इत्यर्थः । किञ्च हे कृमे, त्वा त्वाम् अत्रैव सव्रणो घातयामीति शेषः । ब्रह्मवर्चं ब्रह्मगो मन्त्रस्य वर्चं जप्यम्, अवद्यमजप्यम् । त्वत एवात्र्यादिभिः हतत्वा-न्मन्त्रजपो निरर्थक इत्यर्थः । यद्वा यथार्थो महतो मन्त्रस्य तुच्छकृमिहवने विनियुक्तत्वादित्य-भिप्रायः । अथ द्वितीयः 'भरद्वाजस्ये'ति । द्विपदा गायत्री छन्दः, भरद्वाजो देवता । स्पष्टोऽर्थः । अथ तृतीयः 'कृमिं हे'ति । अनुष्टुबस्य च्छन्दः, कृमिघातको देवता । वक्रतो दिनम् वक्रं तिर्यग् इतस्ततः, तोदितुं शीलं यस्य तं कृमिं ह तादृशं कृमिं ह, हन्मीति शेषः । तथा आन्त्रानुचारिणमपि द्विशीर्षम् उभयत्र शिरोयुक्तमित्यर्थः । अर्जुनं धवलवर्णं कृमिं तथा द्विशीर्षञ्च, हन्मीति शेषः । यद्यपि द्विशीर्षमित्यनेनैव हनुसंज्ञवदनैकदेशचतुष्टयमपि उक्तं भवति, तथाऽपि तस्यातिशयेन घातकत्वप्रदर्शनार्थमुक्तम् । चतुर्हनुमित्यस्य विशेषणाय द्विशीर्षमित्यस्य पुनर्वचनम् ।

अथ चतुर्थः 'हत' इति । अनुष्टुबस्य च्छन्दः । देवता पूर्ववत् । कृमीणां मध्ये क्षुद्रकः, कः अल्पार्थे । क्षुद्रः कृमिजातिर्हतो मन्त्रेण घातितः । स कृमीणां शिशुर्वा हतः । तथा तेषां माता उत्पादयित्री हता । तथा पिता पालक उत्पादको हतः । एवं सर्वनाशः । पुनरप्युद्-भवायोग्याः । किञ्चैषां कुम्भो भिन्नकः । कुत्सितार्थे कः । भिन्नो भग्नः, कुम्भो विशेष्यते यः कुम्भ एषां कृमीणां विषधानको विषधापको, धारको वा ।

अथ पञ्चमः 'कृमिमिन्द्रस्ये'ति । अस्यापि द्विपदा गायत्री छन्दः, इन्द्रो देवता । कृमिमवाञ्चम् अवाङ्मुखमिन्द्रस्य बाहुभ्यां पातयामसि पातयामः । अथ षष्ठः 'हता' इति । छन्दोदेवते पूर्ववत् । साशातिकाः आ समन्तात् शातयन्तीति आशातिका, ताभिः सह वर्त्तन्त इति साशातिकाः, कृमयो हता नष्टा अभवन् नीलमक्षिकाभिर्विशिष्टाः कृमयोऽपि हताः । एवमविशेषेण कृमीणां हननं प्रार्थितं भवति । इति ।

पशूनां चेच्चिकीर्षेदपराह्णे सीतालोष्टमाहृत्य वैहायसं निदध्यात् ॥ १९ ॥

पशूनां गोऽश्वादीनां चेद् यदि चिकीर्षेत् कर्त्तुमिच्छेत्। किम्? अधिकारात् क्रिमिपीडोपशान्तिम्। अपराह्णे न पूर्वाह्णे. सीता कृष्टं क्षेत्रम्, सीताया लोष्टः सीतालोष्टः; तमाहृत्य वैहायसम् आकाशस्थं निदध्यात् धारयेत्, गृह[1]पटलादिस्थं धारयेदित्यर्थः। निशब्दः पूर्ववत्।

तस्य पूर्वाह्णे पांशुभिः परिकिरञ्जपेत् ॥२०॥

तस्य प्रकृतत्वाल्लोष्टस्य पूर्वाह्णे नापराह्णे पांशुभी रेणुभिः, प्रकृतस्य पशोः क्रिमिमन्तं व्रणदेशं परिकिरन्[2] सर्वतो विकिरन् प्रकृतमेव मन्त्रं जपेत्। कुतः? तस्यैव प्रकृतत्वात्, मन्त्रान्तरानुपदेशाच्च(1)।

इति श्रीभट्टनारायणकृतौ गोभिलीय-गृह्यसूत्रभाष्ये[3] चतुर्थप्रपाठकस्य नवमी कण्डिका ॥

(1). अथ कण्डिकोक्तविषयाणां प्रयोगा उच्यन्ते। तत्र पुरुषाधिपत्यकामस्याऽऽधिपत्यप्रदकर्मप्रयोगः—तत् करिष्यन् पूर्वमष्टरात्रमुपोष्य व्रतान्ते औदुम्बरत्वचमसंस्थानि समाहृत्य ग्रामात् प्रागुदग् वा निष्क्रम्य चतुष्पथे अग्निमुपसमाधाय इदं भूमेर्भजामह इति न्यञ्चौ पाणी कृत्वा इमं स्तोममिति परिसमुह्य आज्यतन्त्रेणाऽऽज्यसंस्कारान्तं कृत्वा अग्निमनुपर्युक्ष्य प्रपदवैरूपाक्षजपं कृत्वा व्याहृतित्रयेण हुत्वा आदित्याभिमुखोऽन्नं वा एकच्छन्दस्यमिति मन्त्रेण श्रीर्वा एषेति मन्त्रेण चाऽऽज्यं जुहुयात्। अनयोः प्रजापतिर्ऋषिर्निगद आदित्यो देवता आज्यहोमे विनियोगः। ॐ अन्नं वेति मन्त्रः। इदमादित्याय न मम। ॐ श्रीर्वा एषेति मन्त्रः। इदमादित्याय न मम। ततस्तन्त्रशेषं समापयेत्। उक्तफलसिद्ध्यं कर्मान्तरम्, अन्नस्य घृतमिति तृतीयामाहुतिं गृह्याग्नौ जुहोति। अत्राप्याज्यतन्त्रम्। अन्नस्य घृतमिति मन्त्रस्य प्रजापतिर्ऋषिर्बृहती छन्दोऽग्निर्देवता आज्यहोमे विनियोगः। ॐ अन्नस्य घृतमेव रसस्तेजः सम्पत्कामो जुहोमि स्वाहा इदमग्नये न मम। तन्त्रशेषं समाप्य ब्रह्मणे दक्षिणां दत्त्वा वामदेव्यगानं कृत्वा ब्राह्मणान् भोजयेत्। इति।

अथ पशुकामस्य पशुप्रदप्रयोग उच्यते—तत् करिष्यन् गोष्ठेऽग्निमुपसमाधाय आज्यतन्त्रेण व्याहृतित्रयहोमान्ते 'अन्नस्य घृतमि'ति पूर्वोक्तमन्त्रेणाऽऽज्याहुतिं कुर्यात्। ततस्तन्त्रशेषं समापयेत्। इति।

1. '-पटलादि-' ख। 2. 'सर्वकिरन्' ख। 3. नास्ति ख।

अथ गोषु तप्यमानासु तत्तापशान्तये होम उच्यते—पूर्ववद् गोष्ठाग्निमुपसमाधाय क्षिप्रहोमविधिना लोहचूर्णानि 'अन्नस्य घृतमि'ति मन्त्रेण जुहुयात्। अस्य चीवरहोमकर्मेति नाम। उक्ताधिपत्यपद-पशुप्रद-चीवरहोमकर्मणां परिभाषासूत्रोक्तकाले सकृदेवानुष्ठानम्, अभ्यासानुपदेशात्। सकृत्प्रयोगेणोक्तफलाप्राप्तावावृत्तिं वा कुर्वीत। ततः क्षिप्रहोमविधिना तन्त्रशेषं समापयेत्। इति।

अथ स्वस्त्ययनग्रन्थिकरणप्रयोगः—मार्गे गच्छतः प्रतिभये जाते स्वकीयस्यान्यस्य वा वस्त्रस्य दशानां त्रीन् ग्रन्थीन् कुर्यात्। अन्नं वा एकं छन्दस्यमित्यादिभिरुक्ताभिस्तिसृभिर्ऋग्भिः स्वाहान्ताभिरेकैकयर्चा एकैकग्रन्थिकरणम्। अनेन कर्मणा सहायानामपि स्वस्त्ययनं भवति। इति।

अथाऽऽचितसहस्रकामस्याक्षतसक्त्वाहुतिप्रयोगः। आचितशब्देन शकटमुच्यते। बहुधनधान्यप्राप्तिफलं कर्मेति प्रागेवोक्तम्। आचितशतकामस्येत्यत्र तद्धनं दशगुणितं यदीच्छेत् तदा क्षिप्रहोमविधिना अग्निमुपसमाधाय अक्षतसक्त्वाहुतिसहस्रं पूर्वोक्ताभिस्त्र्यर्चिशत्युत्तरत्रिशतवारमभ्यस्ताभिस्तिसृभिः ऋग्भिः प्रथमया च मालान्यायेन जुहुयात्। ततस्तन्त्रशेषं समापयेत्। इति।

अथ गवाश्वमहिष्यादिपशुकामस्य गोमयहोमप्रयोग उच्यते—तत् करिष्यन् प्रकृतवत्सतद्वयस्य प्रकृतवत्साद्वयस्य च गोमयसंग्रहं कृत्वा एकस्मिन् दिने क्षिप्रहोमन्यायेनाग्निमुपसमाधाय पूर्ववन्मालान्यायेन पूर्वोक्ताभिः अन्नं वा इत्यादिभिस्तिसृभिर्ऋग्भिः सहस्रं जुहुयात्। होमश्चायं पूर्वाह्णे कर्तव्यः। ततस्तन्त्रशेषं समापयेदिति।

अथ क्षुद्रपशुकामस्याविपुरीषहोम उच्यते—तत्र क्षुद्रपशुकामोऽविमिथुनयोः पुरीषेण सहस्रहोमं करिष्ये इति सङ्कल्प्य पूर्वसंगृहीतपुरीषैः क्षिप्रहोमन्यायेन प्रातर्होमानन्तरं पूर्ववज्जुहुयात्। ततः पूर्ववत् तन्त्रशेषं समापयेत्। इति।

अथ वृत्त्यविच्छित्तिकामस्य कम्बूकहोमप्रयोग उच्यते—तण्डुलानामवहननसमये निर्गतानि चूर्णानि कम्बूका इत्यभिधीयन्ते। तस्य फलं विद्यमानवृत्तीनामविच्छित्तिः, अविद्यमानवृत्तीनां प्राप्तिश्च। तत् करिष्यन् क्षिप्रहोमविधिनाऽग्निं प्रतिष्ठाप्य कम्बूकान् सायंप्रातर्जुहुयात्। ॐ क्षुधे स्वाहा, इदं क्षुधे न मम। ॐ क्षुत्पिपासाभ्यां स्वाहा, इदं क्षुत्पिपासाभ्यां न मम। एतच्च प्रत्यहं सायमाहुतेः पूर्वं प्रातराहुतेश्चानन्तरं कर्तव्यम्। ततस्तन्त्रशेषं समापयेत्। इति।

अथ विषनिवृत्तिजपप्रयोग उच्यते—तत्र विषयुक्तसर्पादिजन्तुभिर्दष्टं प्राणिमात्रं जलेनाभ्युक्षन् मा भैषीर्न मरिष्यसीति मन्त्रं जपेत्, अभ्युक्षणजपौ युगपदेव कुर्यात्। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः सर्पो देवता विषापनोदने विनियोगः। ॐ मा भैषीरिति मन्त्रः। मन्त्रस्यास्य पुनः पुनः पाठः; विषनिवृत्तिस्तेन भवति जीवति च स इति विषचिकित्साप्रयोगः।

अथ जातकस्य स्वस्त्ययनप्रयोग उच्यते—तत्र जातको रात्रौ स्वापसमये ध्रुव गोपायेति मन्त्रेण

वैणवं दण्डं शयनसमीपे स्थापयेत्, अथवा हस्ते स्थापयित्वा स्वापं कुर्यादिति केचित्। अस्य मन्त्रस्य प्रजापतिऋ‍र्षिर्यजुर्दण्डो देवता दण्डस्थापने विनियोगः। ततो मन्त्रः। एवं कृते चोरवृश्चिकसर्पाद्युपद्रवनिवृत्तिर्भवति। इति।

अथ कृमिचिकित्साजप उच्यते—पुरुषस्य स्त्रिया वा यस्मिन्नङ्गे कृमयः सन्ति तदङ्गमभ्युक्षन् हतस्ते अत्रिणा कृमिरिति मन्त्रं जपेत्। अभ्युक्षणजपौ युगपत् कर्तव्यौ। अस्य मन्त्रस्य प्रजापतिऋ‍र्षिर्बृहती छन्दोऽत्र्यादयो देवताः कृमिपातने विनियोगः। हतस्त इति मन्त्रजपः। भरद्वाजस्देति मन्त्रस्य प्रजापतिऋ‍र्षिस्त्रिपादनुष्टुप् छन्दो भरद्वाजो देवता कृमिपातने विनियोगः। ॐ भरद्वाजेति मन्त्रः। कृमिं हेति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः कृमिघातको देवता कृमिपातने विनियोगः। ॐ कृमिं हेति मन्त्रः। हतः कृमीणामिति कृमिमिन्द्रस्येति मन्त्रयोः प्रजापतिर्ऋषिरनुष्टुप् छन्दो भरद्वाजो देवता कृमिपातने विनियोगः। ॐ हतः कृमीणामिति, ॐ कृमिमिन्द्रस्य चेति मन्त्रयोः पाठः। इति।

अथ पशूनां कृमिनिवर्तनजप उच्यते—पशूनामङ्गे विद्यमानकृमिपातनं यदि कर्तुमिच्छेत् तदा कृष्टक्षेत्रे विद्यमानं लोष्टं गृहीत्वा आकाशे गृहपटले निदध्यात्। तस्य लोष्टस्य रेणुभिः पूर्वाह्णे कृमियुक्तपशोरङ्गं परिकिरन् पूर्वोक्तामृचं हतस्ते इत्यादि नीलमक्षिकाः इत्यन्तां सम्पूर्णां जपेत्। एवं मन्त्रपूतरेणुभिः पशोः सर्वाङ्गलेपने कृते तस्य कृमिनिवृत्तिः स्यादिति संक्षेपः।

---

# चतुर्थप्रपाठकस्य दशमी कण्डिका

—o—

क्रमप्राप्तानामिदानीमर्हणमन्त्राणां विनियोगविवक्षयेदमाह—

## उत्तरतो गां बद्ध्वोपतिष्ठेरन् अर्हणा पुत्रवाससेति ॥ १ ॥

उत्तरतः उत्तरस्यां दिशि, कस्य? अर्हणप्रदेशस्य, कुतः? 'यत्रैनमर्हयिष्यन्तः स्युरि'ति [ सू० ४।१०।३ ] लिङ्गात्। गां बद्ध्वा तामेवाभिमुखाः (A)अर्हणेत्यनेन मन्त्रेणोपतिष्ठेरन्, के? अर्हणकर्तारः, कुतः? बहुवचनोपदेशसामर्थ्यात्, अर्हणीयस्य चैकत्वात्। उपतिष्ठेरन्निति बहुवचनेनैतद् दर्शयति—सर्वैरेव गृहैरर्हणीयापचित्यर्थमप्रमत्तैर्भाव्यमिति। तथाच वाजसनेयिनां श्रुतिः—

यत्र वा अर्हन्नागच्छति सर्वं गृह्या इव वै तत्र चेष्टन्ति तथा ह्यपचितो भवतीति(B)। क्व उपतिष्ठेरन्? अर्हणप्रदेशसन्निधौ(C), कुतः? अर्हणोपदेशसामर्थ्यात्।

---

A. मन्त्रस्तु—

ॐ अर्हणा पुत्रवाससा धेनुरभवद् यमे।

सा नः पयस्वती दुहा उत्तरामुत्तरां समाम्॥ इति।

मन्त्रब्राह्मणम् २।८।१। विनियोगप्रमाणन्तु खादिरगृह्येऽपि ४।४।९।

अत्र गुणविष्णुस्तु 'दुहामुत्तराम्' इति पाठमाकल्प्य सा नः अस्माकं मनोरथान् दुहां पूरयतु इति व्याख्यातवान् स्वीये छान्दोग्यमन्त्रभाष्ये।

अस्य व्याख्या—अर्हणा पूजासाधना धेनुः क्षीरादिना प्रीणयित्री गौः, उपोक्ता पुत्रवाससा पुत्ररूपस्य लोकस्य वासयित्री सती, यमे नियमयितरि आदित्ये धेनुः प्रीणयित्री अभवत्। यद्वा पुत्राणां वासनं पुत्रवासः सर्वस्य प्रीणनेच्छया इत्यर्थः। सा नोऽस्माकं पयस्वती बहुपयोयुक्ता सती दुहा दुग्धा, कस्मिन् काले? उत्तरामुत्तरां समाम् उत्तरोत्तरे संवत्सरे अनवच्छेदेन। इति।

B. प्रमाणमिदमुदाजहार चन्द्रकान्तोऽपि स्वभाष्ये 'तथाच वाजसनेयके प्रवचने' इत्युपक्रम्य, इति।

C. विवाहादावर्हणे उपवेशनप्रकारः—

तत्र खुनमन्नः—

"कल्पतरुरत्नाकरयोर्गृह्यपरिशिष्टम्—

कन्यां वरयमाणानामेष धर्मो विधीयते ।
प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः ॥

वरयन्ति गोत्रप्रवराभिधानपूर्वकं ददति, प्रतिगृह्णन्तीति श्रवणात् ।

अत एव दानधर्मोत्तरे—

सर्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः ।
एष दानविधिर्दृष्टो विवाहे तु विपर्ययः ॥

विपर्यय इति प्रत्यङ्मुखः संप्रदाता प्रतिग्रहीता प्राङ्मुखः ।

तथाच शङ्खः—

प्राङ्मुखायाभिरूपाय वराय शुचिलक्षिणौ ।
दद्यात् प्रत्यङ्मुखः कन्यां क्षणे लक्षणसंयुते ॥

इति भवदेवभट्टीयसम्बन्धविवेके ।" इत्येवमाह ।

तर्कालङ्कारस्तु उद्वाहचन्द्रालोके—

"दानधर्मे—

सर्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः ।
एष दाने विधिर्दृष्टो विवाहे तु व्यतिक्रमः ॥

व्यतिक्रम इति ग्रहीता प्राङ्मुखो दाता चोदङ्मुख इत्यर्थः । शिष्टानामाचारश्चैवमेव स्मर्यते, यथा पार्वत्या विवाहे—

उपविष्टस्त्रिनेत्रस्तु प्राचीं दिशमुदैक्षत ।
सप्तर्षिसेवितामाशां शैलेन्द्रोऽप्यवलोकयत् ॥

सप्तर्षिसेवितामाशाम् उत्तरां दिशम् । अवलोकयदित्यडभावश्छान्दसः । तथा प्रभावती-विवाहे—

जयन्तं प्राङ्मुखं कृत्वा विश्वकर्मा ह्युदङ्मुखः ।
कन्यां प्रत्यङ्मुखीं कृत्वा साळङ्कारां प्रभावतीम् ॥
प्रभावत्याः करं कृत्वा जयन्तस्य करोपरि ॥

इत्यादि । यत्तु व्यतिक्रम इति 'प्रत्यङ्मुखः संप्रदाता प्रतिग्रहीता प्राङ्मुखः' इत्याचार्यचूडामणि-व्याख्यानं तत्त्वकृद्भिर्लिखितम् ; तच्चिन्त्यम्, व्यतिक्रमस्य क्रमविपर्ययरूपत्वेन दातृग्रहीत्रोरुपदिष्ट-धर्मपरिवृत्तिरूपतया पर्यवसानात् व्यतिक्रमपदात् तथाऽनवगतेः । तथाच अन्यत्र दातुर्यो धर्मः पूर्वदिङ्मुखत्वं स खलु विवाहे ग्रहीतुः । एवम् अन्यत्र ग्रहीतुर्यो धर्म उदङ्मुखत्वं स इह दातुरित्यय-मेव तस्य वचनस्यार्थः, दातृग्रहीत्रोरपदिष्टधर्मवैपरीत्यस्य व्यतिक्रमरूपत्वे त्वभिप्रेयमाणे दातुः

प्राङ्मुखत्ववैपरीत्येन प्रत्यङ्मुखत्ववत् ग्रहीतुरुदङ्मुखत्ववैपरीत्येन दक्षिणामुखत्वापत्तेः। न चेष्टापत्तिः, केनापि तथाऽनभ्युपगमात् ; भवतामपसिद्धान्तापत्तेः ; पूर्वोपदर्शितशिष्टाचारविरोधात् ;

कन्यां वरयमाणानामेष धर्मो विधीयते ।

प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः ॥

इति कल्पतरु-रत्नाकर-विवाहतत्त्वार्णवोद्वाहतत्त्वादिलिखितगृह्यपरिशिष्टविरोधापत्तेश्च । विवाहात् पूर्वं विवाहकर्तृपक्षाणां कन्यावरणं विहितम् , ये किल कन्यां वरयन्ति तेषामयं धर्मो यत् प्रत्यङ्मुखाः सन्तः कन्यां वरयन्ति ; प्रतिग्रहीतारस्तु प्राङ्मुखाः सन्तः कन्यां प्रतिगृह्णन्ति । वरणे प्रतिग्रहाभावात् प्रतिग्रहीतुर्धर्मः प्राङ्मुखत्वं प्रसङ्गादत्रोक्तः । न तु वरणप्रतिग्रहयोः कोऽप्यभिसम्बन्धोऽस्ति अभिसम्बन्धे वा कन्यावरणं प्राङ्मुख्याः कन्यायाः करे फलदानोपदेशात् तत्प्रतिग्रहपरतया स वर्णनीयः । प्राङ्मुखा इति टापत्त्वार्थत्वादुपपत्तिः कर्तव्या । पृथक्तया प्रतिग्रहीतुर्धर्मोपदेश एव तु समीचीनः प्रतिभाति । एकवचनोपक्रान्ताया बहुवचनोपादानस्याश्लिष्टत्वात् ।

तथाच शाङ्खायनगृह्यम्—

प्रत्यङ्मुखा आवहमानां गोत्रनामान्यनुकीर्तयन्तः कन्यां वरयन्ति ।

आश्वलायनगृह्यपरिशिष्टम्—

'अथ कन्यावरणम्—कन्यां परिणेष्यमाणो द्वौ चत्वारोऽष्टौ वरपितुराप्तान् प्रशस्ताकारकर्मणः "अनृक्षरा ऋजवः सन्तु पन्था" इति प्रहिणुयात् । ते तावतीभिः पुरन्ध्रीभिः सहिता मङ्गलगीततूर्याभ्यां कन्यागृहमेत्य शुभे पीठासने प्राङ्मुखासीनाया दातृज्ञातिबान्धवोपेतायाः कन्यायाः पाणौ फलं प्रदाय कन्यावरणकाले वृणीरन् आसीनाः प्रत्यङ्मुखा वशिष्ठगोत्रोऽग्रयायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्ने वराय वत्सगोत्रोऽग्रयामुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां भार्यात्वाय वृणीमहे इति ब्रूयुरित्यादि । ( आ० गृ० प० १।२१ ) ।

यच्च 'वरयन्ति गोत्रप्रवराभिधानपूर्वकं ददति, प्रतिगृह्णन्तीति श्रवणादि'ति विवाहतत्त्वार्णवोद्वाहतत्त्वयोर्व्याख्यातम्, तदुक्तशाङ्खायनगृह्याद्यनवलोकनेन । कन्यां वरयमाणानामित्युपक्रमोऽपि तद्व्याख्यायां नोपपद्यते ; वृणोतेर्दानार्थतायां लक्षणा च स्यात् । विवाहतत्त्वार्णवे तु वरयन्तीति गृह्यपरिशिष्टीयं तथा व्याख्याय,

'एवञ्च—

प्राङ्मुखायाभिरूपाय वराय शुचितत्त्विषौ ।

दद्यात् प्रत्यङ्मुखो दाता कन्यकां समलङ्कृताम् ॥

इति महाजनपरिगृहीतपुराणवचनमपि न निर्मूलम्' इत्युक्तम् । एतेनैतदवसीयते यत् प्राङ्मुखाय

इत्यादिश्लोकपरिपठितवाक्यस्य निर्मूलत्वशङ्का प्रचरद्रूपैवाऽऽसीत्, गृह्यपरिशिष्टीयसंवादेन तु तस्य समूलत्वं परिचिकल्पयिषितम्। तच्चेद् गृह्यपरिशिष्टीयं प्रबलप्रमाणान्तरानुसारेणान्यपरं निर्णीतं परिकल्पितश्चार्थान्तरं निरालम्बनत्वात् प्रत्यक्षरूपं तदा कैव प्रत्याशा तद्वाक्यस्य समूलतायां तन्निबन्धनस्य च दातुः प्रत्यङ्मुखत्वस्य, 'अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी'ति न्यायापातात्।

प्रत्यङ्मुखीमिति श्लोकपाठः प्रमादादिना प्रत्यङ्मुख इत्यन्यथाभूत इति तु प्रतिभाति। तस्य समूलत्वे तु विकल्प एव मन्तव्यः। केचित्तु क्षुभितश्रियावित्युक्तेः साग्निपरं तदिति वदन्ति। पठन्ति च—

निरग्निकः सम्प्रदाता कन्यां दद्यादुदङ्मुखः।

इति। सर्वथाऽपि सन्दिग्धमूलवाक्यावष्टम्भेन निश्चितमूलदानधर्मवाक्यस्यान्यथा वर्णनमनुचितमेव।

चतुर्वर्गचिन्तामणौ मदनरत्नप्रदीपे च कृष्णभट्टः—

तिष्ठेत् पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत्।
मधुपर्कार्चितायैनां तस्मै दद्यात् सदक्षिणाम्।

इति। अत्रापि विकल्प एव प्रवर्तते"। इत्याह।

प्रकरणेऽस्मिन् निर्णयसिन्धौ कमलाकरः—

"कन्यादाने प्रपितामहपूर्वकम् इत्युक्तं स्मृत्यर्थसारे—
नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्।
नाम सङ्कीर्तयेद् विद्वानन्यत्र पितृपूर्वकम्॥

नान्दीमुखे इति बह्वृचातिरिक्तविषयम्। गृह्यपरिशिष्टे पित्राद्यानुलोम्याम्नानात्।

व्यासः—

भुक्त्वा समुद्वहेत् कन्यां सावित्रीग्रहणं तथा।
उपोषितः सुतां दद्यादर्चिताय द्विजाय तु॥

भुक्त्वेति मधुपर्के वैधभोजनपरम्। गृह्यपरिशिष्टे—

कन्यां वरयमाणानामेष धर्मो विधीयते।
प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः। इति

मदनरत्ने कृष्णभट्टः—

स्वगोत्रं समुच्चार्य प्रपितामहपूर्वकम्।
नाम संकीर्तयेद् विद्वान् कन्यायाश्चैवमेव हि॥
तिष्ठेत् पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत्।
मधुपर्कार्चितायैनां तस्मै दद्यात् सदक्षिणाम्॥

उदपात्रं ततो गृह्य मन्त्रेणानेन दापयेत् ।
गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् ॥
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ।
भूमिं गाश्चैव दासीश्च वासांसि च स्वशक्तितः ॥
महिषीं वाजिनश्चैव दद्यात् स्वर्णमणीनपि ।
ततः स्वगृह्यविधिना होमाद्यं कर्म कारयेत् ॥
यथाचारं विधेयानि माङ्गल्यकुतुकानि च ।

एतत् कन्यादानं त्रिः कार्यम् इति शौनकः'' इत्येवमाह ।

अत्रोपवेशनादौ गृह्यसूत्राणि—तत्र लौगाक्षिकाठकयोः समानुपूर्वीकाणि सूत्राणि । अथ ब्राह्म-देयायाः प्रदानविधिं वक्ष्यामः । शुक्लपक्षस्य पुण्याहे पर्वणि वोदगग्रान् दर्भानास्तीर्य तेषूपविशतः प्राङ्मुखः प्रतिग्रहीता सामात्यः प्रत्यङ्मुखः प्रदाता । मध्ये प्रागग्रोदगग्रान् दर्भानास्तीर्य तेषूदकं सन्निधाय व्रीहियवानोप्य दक्षिणत उदङ्मुखासीन ऋत्विगुपयमनं कारयेत् । समेतेष्वाह ददानीति प्रतिगृह्णामीति त्रिरावेदयते । एतद्व वः सत्यमित्युक्त्वा समाना वः सं वो मनांसि इति ऋत्विगुभौ समीक्षमाणो जपति । इति ।

वाराहमानवगृह्ययोः समानुपूर्वीकाणि सूत्राणि—पश्चादग्रेब्रह्मचार्यासनान्युपकल्पयीत । तेषूपविशन्ति पुरस्तात् प्रत्यङ्मुखो दाता पश्चात् प्राङ्मुखः प्रतिग्रहीता । दातुरुत्तरतः प्रत्यङ्मुखी कन्या । दक्षिणत उदङ्मुखो मन्त्रकारः । तेषां मध्ये प्राङ्मूलान् दर्भानास्तीर्य कांस्य-मक्षतोदकेन पूरयित्वा अविधवाऽस्मै प्रयच्छति । तत्र हिरण्यमष्टौ मङ्गल्यान्यावेदयति । मङ्गल्यान्युक्त्वा ददामि प्रतिगृह्णामीति त्रिर्ब्रह्मदेयापिता भ्राता वा दद्यात् । सहिरण्यानञ्जलीना-वपति । धनाय त्वेति दाता । पुत्रेभ्यस्त्वेति प्रतिग्रहीता । तस्मै प्रत्यावपति । चतुर्व्यतिहृत्य ददाति । सावित्रेण कन्यां प्रतिगृह्य प्रजापतय इति च क इदं कस्मा अदादिति सर्वत्रानुषजति कामैतत् ते इत्यन्तम् । समाना वा आकूतानीति सह जपत्यान्तादनुवाकस्य । ले रयस्येति तेनोदकांस्येन कन्यामभिषिञ्चेत् । इति ।

आश्वलायनगृह्यपरिशिष्टे तु—अथ कन्यावरणम् । कन्यां परिणेष्यमाणो द्वौ चत्वारोऽष्टौ वर-पितुराप्तान् प्रशस्ताकारकर्मणः.........( द्र० पृ० ८७९ ) कन्यां भार्यात्वाय वृणीमह इति ब्रूयुः । अथ दाता भार्याज्ञातिबन्धुसमेतो यथोक्तमनूद्य वृणीध्वमिति ब्रूयादेवं त्रिः प्रयुज्य दाता प्रदास्यामीति चोच्चैर्निर्ब्रूयात् । अथ ब्राह्मणा उक्तस्वस्त्ययनाः शिवा आपः सन्तु, सौमनस्यमस्तु, अक्षतञ्चारिष्टञ्चास्तु, दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु इत्युक्त्वा एतद्वः सत्यमस्त्वित्यनूद्य समानी व आकूतिरिति पठेयुः । पुरन्ध्रयः कन्यायै कल्याणान् कुलधर्माचारान् कुर्युः ।

अथोपयमनम्—लक्षण्यो वरो लक्षणवतीं कन्यां यवीयसीमसपिण्डां...स्नातोऽलङ्कृतो वरः स्वस्ति वाचयित्वा सहितः स्वर्चितैर्ब्राह्मणैः पुरन्ध्रीभिर्ज्ञातिबान्धवैः पदातिभिर्मङ्गलगीततूर्य-

घोषाभ्यां सम्बन्धिनो गृहमेत्य चतुष्पदं सोत्तरच्छदं हरितदर्भास्तीर्णं भद्रपीठं प्राङ्मुख उपविशेत । तस्य पुरस्तात् प्रत्यङ्मुखीं भद्रपीठासीनां सुस्नातामलङ्कृतामहतवाससं सवर्णां कन्यां पुरस्कृत्य दाता सामात्य उपविशेत् वरं विधिवदभ्यर्चयेत् । अथ दक्षिणतः पुरोधा उदङ्मुख उपविश्य मध्ये प्रागग्रोदगग्रान् दर्भानास्तीर्य तैजसमपां पूर्णकलसं निधाय व्रीहियवानोप्य गन्धादिभिरलङ्कृत्य दूर्वापल्लवैर्मुखमवस्तीर्याब्लिङ्गाभिरद्भिरभिमन्त्र्य ताभिरद्भिः प्रयोजयेत् । अथ दाता पुण्याहादीनि वाचयित्वा शिवा आपः सन्तु, सौमनस्यमस्तु, अक्षतञ्चारिष्टञ्चास्तु, दीर्घमायुरस्तु, शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्त्तनक्षत्रसम्पदस्त्वित्युक्त्वा भार्यादिसमेतः कन्यां परिगृह्य वत्सगोत्रोत्पन्नाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां वशिष्ठ-गोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्नेऽस्मै वराय सम्प्रददे, कन्यां प्रतिगृह्णातु भवानिति ब्रुवन् वरस्य पाणौ हिरण्यमुपधाय कलसोदकधारामासिञ्चेत् । मनसा प्रजापतिः प्रीयतामिति ब्रूयात् । अथ शिरसि पुण्याहाशिषो वाचयित्वा दक्षिणेऽंशे कन्या-मभिमृश्य क इदं कस्मा अदादिति जपित्वा प्रजापतिमनुस्मृत्य धर्मप्रजासिद्ध्यर्थं कन्यां प्रति-गृह्णामीति ब्रूयात् । एवं त्रिः प्रयुज्य पुरोधा दातृवर्गं प्रति ऋतस्य हि शुरुधः सन्ति पूर्वीरिति तिस्रो जपित्वा एतद् वः सत्यसमृद्धमस्त्विति ब्रूयात् । इति ।

पारस्करगृह्यसूत्रभाष्ये हरिहराचार्यस्तु—"अथ कन्यापिता कुशजलाक्षतपाणिरुदङ्मुखो-पविष्टः प्राङ्मुखोपविष्टाय वराय प्रत्यङ्मुखोपविष्टां कन्याम् अमुकगोत्रायामुकप्रवरायामुकशर्मणे ब्राह्मणाय इति ब्राह्मणपक्षे, इतरपक्षे तु वर्मणे, अमुकगुप्तायामुकदासायेति विशेषः । अमुकगोत्रा-ममुकप्रवराममुकनाम्नीमिमां कन्यां सालङ्कारां प्रजापतिदैवतां पुराणोक्तशतगुणीकृतज्योति-ष्टोमातिरात्रसमफलप्राप्तिकामः कन्यादानफलप्राप्तिकामो वा भार्यात्वेन तुभ्यमहं सम्प्रददे इत्युक्त्वा सकुशाक्षतजलं कन्यादक्षिणहस्तं वरदक्षिणहस्ते दद्यात् । वरश्च ओमित्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्वित्यनेन मन्त्रेण तां प्रतिगृह्णीयात् ।" इत्याह ।

पारस्करगृह्यसूत्रभाष्यकारो गदाधरदीक्षितस्तु—"अथ विवाहे पदार्थक्रम इत्युपक्रम्य अथ वाग्दानविधिः—ज्योतिःशास्त्रोक्ते शुभे काले द्वौ चत्वारोऽष्टौ वा प्रशस्तवंशा वरपित्रादिना सहिताः शकुनदर्शनपूर्वकं कन्यागृहमेत्य कन्यापितुः प्रार्थनं कुर्युः, मत्पुत्रार्थं कन्यां प्रयच्छेति ; अथ दाता भार्याद्यनुमतिं कृत्वा दास्यामीति त्रोच्चैर्ब्रूयात् । ततः कन्यादाता प्राङ्मुख उपविश्याऽऽचम्य देशकालौ स्मृत्वा करिष्यमाणविवाहाङ्गभूतं वाग्दानमहं करिष्ये, तदङ्गं गणपति-पूजनञ्च करिष्ये इति संकल्प्य गन्धादिदक्षिणान्तैर्गणपतिं पूजयित्वा स्वस्थाने वरपितरं प्राङ्मुखमुपवेश्य स्वयं च तत्प्राच्यां प्रत्यङ्मुख उपविश्य तं गन्धताम्बूलादिभिः पूजयित्वा हरिद्राखण्डपञ्चकं हढपूगीफलानि च गन्धाक्षतालङ्कृतानि गृहीत्वा अमुकगोत्रोत्पन्नाममुक-पुत्रीममुकनाम्नीमिमां कन्यां ज्योतिर्विदादिष्टे मुहूर्ते दास्ये, इति वाचा सम्प्रददे इति वोक्त्वा—

अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते ।
इमां कन्यां प्रदास्यामि देवाग्निद्विजसन्निधौ ॥

इति पठेत्, ततो मन्त्रान्तरं पठेत्—

वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया ।
कन्यावलोकनविधौ निश्चितस्त्वं सुखी भव ॥

वरपिता च ब्रूयात्—

वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया ।
वरावलोकनविधौ निश्चितस्त्वं सुखी भव ।

आग्नादौ स्वीकर्तरि भ्रातृमित्रार्थमित्याग्रहः कार्यः । ततो वरपित्रादिर्गन्धाक्षतशुभवस्त्रादि-युग्मभूषणताम्बूलपुष्पादिभिः कन्यां यथाचारं पूजयेत । ततो ब्राह्मणा आशीर्मन्त्रान् पठेयुः । इति ।

अथ विवाहदिनकृत्यम्, तत्र पूर्वं घटीस्थापनं कार्यम् । नारदः—

षडङ्गुलमितोत्सेधं द्वादशाङ्गुलमायतम् ।
कुर्यात् कपालवत् ताम्रपात्रं तद् दशभिः पलैः ॥
ताम्रपात्रे जलैः पूर्णे मृत्पात्रे वाऽथवा शुभे ।
मण्डलार्धोदयं वीक्ष्य रवेस्तत्र विनिक्षिपेत् ।

तत्र मन्त्रः— मुखं त्वमसि मन्त्राणां ब्रह्मणा निर्मितं पुरा ।
भावाभावाय दम्पत्योः कालसाधनकारणम् ॥ इति ।

ततो वरः कृतनित्यक्रिय इष्टदेवतां पित्रादींश्च नमस्कृत्य तैरनुमोदितो यथाविभवमश्वादियानमारुह्य वधूगृहं गत्वा तद्द्वारदेशे प्राङ्मुखः स्थितो नीराजनपूर्णकुम्भयुक्तैः पुरन्ध्रीजनैः प्रत्युद्यातो नीराजितोऽन्तर्गृहं प्रविश्य प्राङ्मुखस्तिष्ठेत् । ततः कन्यापिता मधुपर्केण समर्चयेत् । ततो मातुलादिः कन्यानयनं करोति, सा चाऽऽगत्य प्रत्यङ्मुखी उपविशति । अत्र वधूवरयोर्मध्ये वस्त्रेणान्तर्धानम् ।···अथ कन्यादानम्, तत्रायं क्रमः—दाता वरदक्षिणतः स्वदक्षिणदेशस्थपत्नी-सहित उदङ्मुख उपविश्य बद्धशिखः शुचिराचम्य कुशपाणिः प्राणानायम्य देशकालाद्यनुसंकीर्त्य मम समस्तपितॄणां निरतिशयानन्दब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये, अनेन वरेण अस्यां कन्यायामुत्पादयिष्यमाणसन्तत्या द्वादशावरान् द्वादशापरान् पुरुषांश्च पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना कन्यादानमहं करिष्ये इति कुशाक्षतयुतजलेन सङ्कल्प्य सपत्नीकः—

कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् ।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥
विश्वम्भरः सर्वभूताः साक्षिण्यः सर्वदेवताः ।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥

एवमर्हणकर्तृषु उपस्थितेष्वर्हणीयः—

(A)इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामीति प्रतितिष्ठमानो जपेत् ॥२॥

"इति मन्त्रौ पठित्वा वरदक्षिणस्थभार्याकृतपूर्वकल्पितजलधारां कन्यादक्षिणहस्तगृहीत-वर-दक्षिणकरे क्षिपेत्।" इत्यादि।

विश्वनाथभट्टोऽपि तत्रैव प्रकरणे—'चतुरिकोत्तरतो वरं प्राङ्मुखं कुशास्तीर्णे आसने उपविष्टं वराद् दक्षिणतः कन्यामुपवेश्य ततः प्राग् उदङ्मुखः प्रदः कन्याया आसने उपविशेत् दक्षिणतः पत्नी तिष्ठेत्' इत्याद्याह।

एवञ्च सर्वेषां गृह्यसूत्राणां निबन्धकाराणां भाष्यकाराणां प्रयोगकाराणाञ्च मतपर्यालोचनया तर्कालङ्कारोक्तमतमेव ज्याय इति प्रतिभाति। यतो दानविषये कन्याया वरणविषये वा छान्दोग्य-खादिर-द्राह्यायण-गोभिल-जैमिनि-गृह्येषु किमपि नोक्तम्, नवोक्तं कर्मप्रदीपेऽपि; आपस्तम्ब-बौधायन-गृह्ययोरपि कन्यां दत्तामित्युक्त्वा अग्निप्रणयनादिकमुक्तं गृह्यकारैः। केवलं लौगाक्षि-काठकगृह्ययोर्मानव-वाराहगृह्ययोश्चोपलभ्यते उद्वाहारम्भेऽणवरणादीनि। आश्वलायनगृह्यपरिशिष्टे च तेषामेव स्वरूपं प्रकटीकृतं वरणदानयोः पृथग्विधिं कल्पयित्वेति सर्वमेवोपस्थापितम्। वयं पुनर्गृह्यसूत्राणामतिदुरूहाणाम् अर्थं स्मृतिपुराणाद्यैकवाक्यतया तेषां वचनानां यथाश्रुतार्थ-मात्रायैव निर्णयामहे। एवञ्च यदि प्रागुक्तगृह्यसूत्राणामपि आश्वलायनगृह्यसूत्रपरिशिष्टैकवाक्यतया कन्यावरणार्थोपवेशन एव तात्पर्यं स्यात् तदा सर्ववचनानामेव सामञ्जस्यं स्यात्, युज्यते चैतत्, अन्यथा पूर्वोत्तरवङ्गीयानामार्यावर्त-महाराष्ट्र-दाक्षिणात्यप्रभृतिदेशवासिनाञ्च सर्वेषामेव निबन्ध-काराणां मते कथमेकवाक्यता स्यात्। केवलं पश्चिमदक्षिणवङ्गीयाः केचन तत्त्वकाररघुनन्दन-मतमाद्रियमाणाः प्रत्यङ्मुखं दातारं स्वीकुर्वन्तीति।

अथ यदि दातुः प्रत्यङ्मुखीकारे एव केषाञ्चिद् आग्रहः स्यात् सोऽपि अस्मत्प्रदर्शित-गृह्यसूत्रानुसारेणैव स्यात्, न पुनः "कन्यां वरयमाणानामि"त्यादिरघुनन्दनधृतप्रमाणबलेनेत्यत्रापि सुधीभिः प्रणिहितैर्भवितव्यम्, तस्य च सयुक्तिभिः पुराणप्रमाणैश्च तर्कालङ्कारेण खण्डितत्वात् उल्लिखितगृह्यसूत्राणां प्रामाणिकभाष्याद्यभावेन तात्पर्यस्यापरिस्फुटत्वात् तर्कालङ्कारोक्तमतस्य च बहुदेशप्रसिद्धैर्गृहीतत्वात् तदेव युक्ततरमित्यस्माकं धारणा। अथवा विकल्पः स्वीकर्तव्यः हेमाद्रिधृतऋष्यशृङ्गवचनानुयायिवत्। अथ यदि केचन दातुरुदङ्मुखत्वमशास्त्रीयमिति रघुनन्दन-मतानुयायिनो ब्रूयुस्तत्तूपेक्ष्यं विबुधैरिति। विशेषत एकतरनिर्णये तु भगवन्तोऽनूचानाः प्रमाणम्।

A. मन्त्रस्त्वयम्—

ॐ इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामि। इति।

मन्त्रब्राह्मणे २।८।२ पठितः। विनियोगप्रमाणञ्चास्य खादिरगृह्येऽपि ४।४।९।

ऋज्वर्थम् । समस्तमन्त्राम्नानं स्वनामाध्याहारप्रतिषेधार्थम् । इतरथा इदमहं देवदत्त इमां पद्यामिति स्यात् ।

क्व प्रतितिष्ठमानो जपेदित्यत आह—

**यत्रैनमर्हयिष्यन्तः स्युः ॥३॥**

यत्र यस्मिन् प्रदेशे एनमर्हणीयम् अर्हयिष्यन्तः अर्हयितुमिच्छन्तः, अर्हणकर्तारः उपस्थिताः स्युर्भवेयुः, तत्र प्रतितिष्ठमानो जपेदिति ।

**(A)यदा वाऽर्हयेयुः ॥ ४ ॥**

अथवा यदा यस्मिन् काले अर्हयेयुः अर्हणं कर्तुमारभेयुः, तदा इदमहमिति जपेत् । न पुनस्तेष्वन्यमनस्केषु । प्रत्युप[1]स्थानं समनन्तरमेवेति(B) ।

अर्हणविधिविवक्षयेदमाह—

**त्रिष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिस्त्रिर्वेदयेरन् ॥५॥**

विष्टरस्त्रिवृत्तो [2]दर्भकूर्चकः, कुतः ? प्रसिद्धेः (C) । पाद्यं पादप्रक्षालनार्थमुदकम् ।

---

अस्य व्याख्या—अहम् इदम् अभितिष्ठामि, इदमिति क्रियाविशेषणम्, अत एव नपुंसकत्वञ्च । अभीत्ययम् अधीत्यर्थे । अधिष्ठानस्य विषय उच्यते इमां प्रसिद्धां पद्यां पदार्थां विराजं विशेषेण राजमानां पृथिवीं दधिमधुघृतसम्मेलनरूपस्य सत्कारस्य मधुपर्कस्योदासीनां करोमि, अभ्युत्थितो भवामीत्यर्थः । इति । एतेन सायणाचार्यमते अभितिष्ठामीति पाठ इत्यवगम्यते । भट्टगुणविष्णुस्तु—'इदम् आसनम्, इमां च पद्यां पादपद्वीम्, विराजं विराजमानाम् अधितिष्ठामि आक्रामामि, किमर्थम् ? अन्नाद्याय अन्नाद्यर्थम् । विराजमिति किबन्तमेतत् । अन्नाद्याय इति, आदौ भवम् आद्यम्, अन्नञ्च तद् आद्यञ्चेति अन्नाद्यम्, तस्मै" इत्येवं व्याचख्यौ ।

A. इदमहमित्यादि यदा वाऽर्हयेयुरित्यन्तसूत्रत्रयी सामश्रमिकल्पनायामेकैव ।

B. अत्र तर्कालङ्कारः—"एवं वा, वाशब्दस्तुशब्दार्थः, यदा पुनरेनमर्हयेयुस्तदा विष्टरादीनि वेदयेरन् इत्यनागतेनाभिसम्बन्धो वर्णनीयः" इत्याह ।

C. अत्र रघुनन्दनः—विष्टरस्तु सार्धद्वितयवामावर्तवलिताधोमुखाग्रा असंख्यातदर्भाः । तथाच गृह्यासंग्रहः—

ऊर्ध्वकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः ॥ इति,

छन्दोगपरिशिष्टम्—

दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि । इति ।

---

1. '-स्थानम्-' च । 2. 'दर्भकूर्चः' ख ।

कुतः ? 'यतो देवीः प्रतिपश्याम्याप' इति 'मन्त्रलिङ्गात्। अर्घ्यम् अर्घ्यार्थमुदकम्, तच्च न केवलम्; किं तर्हि ? दध्यक्षतसुमनोयुक्तम्। कुतः ?

साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम्।
अर्घ्यं दधिमधुभ्याञ्च मधुपर्कोऽभिधीयते(A) ॥

इति वचनात्। आचमनीयम् आचमनार्थमुदकम्। मधुपर्को [2]मधुदधिसंयुक्तः। तानेतान् [3]पञ्च विष्टरादीन् [4]द्रव्यविशेषान् एकैकशः प्रत्येकं त्रिस्त्रिः स्वे स्वे प्रतिपादनकाले अर्हणकर्तारो वेदयेरन् ज्ञापयेयुः। विष्टरादि निवेदनीयं त्रिरुक्त्वा प्रतिगृह्यतामिति सकृत् सर्वत्र वाक्यशेषं कुर्यात्, कुतः ? प्रसिद्धेः। प्रयोगः प्रदर्श्यते—विष्टरो विष्टरो विष्टरः प्रतिगृह्यताम्, एवं पाद्यम् अर्घ्यम् आचमनीयं मधुपर्क इति। विष्टरद्वयपक्षे द्विवचनेन निवेदनमिति(B)।

---

एवञ्च—

'पञ्चाशद्भिर्भवेद् ब्रह्मा तदर्धेन तु विष्टरः'

इति यदि समूलं तदा शाख्यन्तरीयम्। एतेन विष्टरे पञ्चविंशतिसंख्या भवदेवभट्टोक्ता निरस्ता। एवं विष्टरग्रहणमपि हस्ताभ्याम्, इति यदुक्तं तदपि निरस्तम्। 'यत्रोपदिश्यते' इति छन्दोगपरिशिष्टात्। पाद्यं पादप्रक्षालनार्थमुदकम्। तथाचामरः 'पाद्यं पादाय वारिणि' इति। अर्घ्यं दध्यक्षतसुमनोयुक्तं जलम्। 'साक्षत'मिति भट्टभाष्यधृतवचनात्। आचमनीयम् आचमनार्थमुदकम्। दधिमधुमात्रेण मधुपर्काभिधानं घृतासम्भवपरम्। तत्सम्भवे गोभिलः—मधुपर्कं दधिमधुघृतं पिहितं कांस्यस्थं कांस्येनेति। पूर्ववचने पात्रानुपदेशात् कांस्यपात्रं विनाऽपि मधुपर्को दीयते। तान् पञ्च विष्टरादीन् द्रव्यविशेषान् एकैकशः प्रत्येकं त्रिस्त्रिः प्रतिपादनकाले अर्हणकारा निवेदयेरन् ज्ञापयेयुरिति। विष्टरादीनि निवेदनीयानि त्रिरुक्त्वा प्रतिगृह्यतामिति सकृत् सर्वत्र वाक्यशेषं कुर्यात्। पाद्या इति अप्सम्बन्धात् स्त्रीबहुवचनमिति सरला, तन्न; वीक्षणविधौ तन्मन्त्रे च अप इति श्रुत्या ग्रहणे तथा कल्पनानुपपत्तेः। पादार्थमुदकं पाद्यमिति कालिकापुराणात् पाद्यमित्यमरोक्तेश्च। अत एव भट्टभाष्ये पाद्यं पाद्यमित्युक्तम्।" इत्याह। मतस्यास्य खण्डनमण्डने तर्कालङ्कारकृते उपरिष्टात् प्रदर्श्यते, यदुक्तमत्र 'दक्षिणावर्तको ब्रह्मे'ति गृह्यासंग्रहवचनार्धं तदपि चन्द्रकान्तमुद्रितगृह्यासंग्रहे नोपलभ्यते। यदर्धं तु समूलत्वे सन्दिग्धं तत्तपलभ्यते, तदस्य कारणनिर्णये भगवन्तोऽनवानाः प्रमाणम्। ब्रह्मविष्टरयोर्वचनानि द्रष्टव्यानि (पृ० ११८-११) भाष्ये पादटीकायाञ्च।

A. कर्मप्रदीपः। ३।१८।१८।

B. अत्र तर्कालङ्कारः, "विष्टरः—

ब्रह्मविष्टरयोश्चापि सन्देह समुपस्थिते।
ऊर्ध्वकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः ॥

---

1. 'वचनात्' ख। 2. 'दधिमधुयुक्तम्' घ। 3. 'पञ्च' नास्ति ख। 4. 'पञ्चद्रव्य-' ख।

कतिभिस्तु भवेद् ब्रह्मा कतिभिर्विष्टरः स्मृतः ।
पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्धेन तु विष्टरः ॥

इति आचार्यपुत्रेण गृह्यासंग्रहे व्याख्यातः । कात्यायनेन तु कर्मप्रदीपे—

यज्ञवास्तुनि मुष्ट्यां च स्तम्बे दर्भवटौ तथा ।
दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि ॥

इति विष्टरे दर्भसंख्या निषिद्धा । तदनयोर्विकल्पः पञ्चाशदर्धैर्वा कुशैर्विष्टरः स्यात्, असंख्यातैर्वा इति । कथं ज्ञायते ? द्वयोरेवास्मदाचार्याभ्यामनुशिष्टत्वात्, अनन्यगतेर्वचनात् । रघुनन्दनस्तु दर्भसंख्यावचनमाचार्यपुत्रस्यैतदजानानः कात्यायनवचनविरोधात् तद्वचनं शाख्यन्तरीयमिति वर्णयाञ्चकार । स खल्वयं विष्टर एको वा स्याद् द्वौ वा इत्यनियमः । कथं ज्ञायते ? द्वौ चेद् इति वक्ष्यमाणसूत्रपर्यालोचनात् । पाद्यं पादप्रक्षालनार्थमुदकम् । तथाच लाट्यायनसूत्रम्— 'तत्रैतदाहरन्ति विष्टरं पादप्रक्षालनम् अर्घ्यमाचमनीयं मधुपर्कमिति' इति । द्राह्यायणसूत्रम्— 'अर्हयिष्यन्त आहरन्ति विष्टरौ पाद्यमर्घ्यमि'त्यादि । 'विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते' इति च गृह्यान्तरम् ।

पादार्थमुदकं पाद्यं केवलं जलमेव तत् ।
तत् तैजसेन पात्रेण शङ्खेनापि निवेदयेत् ।

इति च स्मर्यते पुराणेषु । तस्मात् पाद्यम् इत्येवमेव प्रयोगो भट्टनारायणाद्यनुमत आदरणीयः । यच्च भवदेवभट्टेन पाद्या इति लिखितम्, यदपि सरलायां 'पाद्याः' इति प्रयोगमभिधाय, पाद्याः इति अप्सम्बन्धात् स्त्रीबहुवचनम् इति वर्णितम्, तदसङ्गतम्, कुतः ? अस्मच्छास्त्रे पाद्यमिति निर्देशात् । न च वीक्षणविधौ मन्त्रे च अपः इति दर्शनादत्रापि तथा कल्पनायां किञ्चित् प्रमाणमस्ति, तस्माद् यथोक्त एव प्रयोगः । अर्घ्यम्—

दध्यक्षतसुमनस आपश्चेति चतुष्टयम् ।
अर्घ्य एष प्रदातव्यो गृह्ये ये अर्घ्यार्हाः स्मृताः ॥
दध्यक्षतसुमनसो घृतं सिद्धार्थका यवाः ।
पानीयञ्चैव दर्भाश्च अष्टाङ्गो ह्यर्घ्य उच्यते ॥

इति गृह्यासंग्रहोक्तलक्षणम् । स खल्वयमर्घ्यः कांस्यपात्रेणार्हणीयस्याञ्जलौ निनेतव्यः । कस्मात् ?

कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ ।

इति वचनात् । आचमनीयम् आचमनार्थमुदकम् । मधुपर्कः—

सर्पिषा मधुना दध्ना अर्चयेदर्हयन् सदा ।
ऋषिप्रोक्तेन विधिना मधुपर्केण याज्ञिकः ॥
कंसे त्रितयमासिच्य कंसेन परिसंवृतम् ।
परिश्रितेषु देयः स्यान्मधुपर्क इति श्रवम् ॥ इति,

दधनि पयसि वाऽथवा कृतान्ने मधु दद्यान्मधुपर्कमेतदाहुः ।
दधिमधुसलिलेषु सक्तवः पृथगेते विहिताश्चपस्तु मन्थाः ॥

इति च गृह्यासंग्रहोक्तलक्षणः। तदेवं छन्दोगानां स्वशाखापरिभाषितश्चतुर्विधो मधुपर्को भवति, सर्पिर्मधु दधि, दधनि मधु, पयसि मधु, कृतान्ने मधु च, इति। तत्र प्रथमो द्वितीयश्च मधुपर्कः कंसस्थः कंसपरिवृतश्च भवति, शिष्टयोः पुनर्नैव नियमः, प्रथमे मधुपर्के तावत् 'कंसे त्रितयमासिच्य' इत्यादिना तदभिधानात्। यथा सवनभिक्रमणं प्रयाजमात्रस्यैवाङ्गं नानुयाजादीनाम्, तद्वदत्रापि स्यात्।

द्वितीये मधुपर्के त्वाह कर्मप्रदीपे कात्यायनः—

साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम् ।
अर्घ्यं दधिमधुभ्याञ्च मधुपर्को विधीयते ॥
कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ ।
कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत् ॥

इति। तदत्र प्रथमश्लोकेनार्घ्यं मधुपर्कञ्च परिभाष्य द्वितीयश्लोकेन यथाक्रमं तयोरर्पणप्रकारमाह। सोऽयं मधुपर्कशब्दः प्रथमश्लोकोक्तमेव मधुपर्कं परामृशति, न त्वन्यम्; कथं ज्ञायते ? प्रकृतप्रत्ययश्च न्याय्य इति शास्त्रतात्पर्यविदां सिद्धान्तात्। इतरथा प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्। न च तत्र प्रमाणं पश्यामः।

रघुनन्दनस्तु छन्दोगोऽप्येतदजानानः साक्षतमिति वचनं लिखित्वा दधिमधुमात्रेण मधुपर्काभिधानं घृतासम्भवपरम् इति परिकल्प्य, तदसम्भवे गोभिलः इत्यभिधाय 'मधुपर्कं दधि-मधु-घृतमपिहितं कांस्ये कांस्येन', इति पारस्करगृह्यसूत्रं 'पिहितं कांस्यस्थम्' इत्याकुलीकृत्य लिखित्वा पूर्ववचने पात्रानुपदेशात् कांस्यपात्रं विनाऽपि मधुपर्को दीयत इति वर्णयाञ्चकार। पृथगमीषां मधुपर्काणामेकविशेषस्यान्यत्राप्रसक्तेः किमर्थमेतावान् प्रयास इति न विद्मः। पूर्ववचने पात्रानुपदेशादिति यदुक्तं तदपि तत्परवचनानवलोकनेन। अपि च मध्वसम्भवे घृतेन मधुपर्कं गृह्यान्तरकाराः स्मरन्ति, स तु मन्यते घृतासम्भवे दधि-मधुमात्रेण मधुपर्क इति, किमत्र ब्रूमः ? तथाच गृह्यान्तरम् 'दधनि मध्वानीय सर्पिर्वा मध्वलाभे' इति। अग्निस्वामिनस्तु कल्पसूत्रवृत्तौ मधुना पृक्तं दधिपयःकृतान्नं वा मधुपर्कं इति द्वितीयादिप्रकारत्रयमेवोक्तवन्तः। मधुपर्को दधि-मधुयुक्तम् इति ब्रुवाणो भट्टनारायणो द्वितीयं मधुपर्कमात्रमेवादर्शितवान्। सूत्रशेषमिदानीं वर्णयामहे तानेतान् विष्टरादीन् मधुपर्कान्तान् द्रव्यविशेषान् एकैकशस्त्रिस्त्रिरथार्यं प्रत्येकं वेदयेरन् निवेदयेरन्—इत्यल्पत्वादर्हयितुः कर्म प्रथमं सूत्रितम्। वेदयेरन् ज्ञापयेयुरिति केचित्। निवेदनञ्च दक्षिणहस्तेनाऽऽदाय कर्तव्यम्। कर्तुरङ्गस्योपदेशाभावे तस्यैव कार्य्य कर्मपारगत्वात्। तथाचोक्तं 'यत्रोपक्रियते कर्मे'ति, तस्माद् विष्टरनिवेदने उत्तानहस्ताभ्याम् इत्यसङ्गता कल्पना भवदेवस्य।" इत्येवमाह।

## या ओषधीरित्युदञ्चं विष्टरमास्तीर्याध्युपविशेत् ॥ ६ ॥

(A)या ओषधी'रित्यनयर्चा उदञ्चम् उदगग्रम् अर्हणकर्त्रा प्रदत्तं विष्टरम् आस्तीर्य, क ? आसने, कुतः ? 'ता मह्यमस्मिन्नासन' इति मन्त्रलिङ्गात् । अधि विष्टरवत आसनस्योपरि अर्हणीय उपविशेत् निषीदेत् ।

## द्वौ चेत् पृथग् ऋग्भ्याम् ॥ ७ ॥

द्वौ चेद् विष्टरावर्हणकर्त्रा प्रदत्तौ स्याताम्, "तदा पृथगृग्भ्यां(B) नानामन्त्राभ्याम्"*

---

A. सा च ऋक्—

ॐ या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
ता मह्यमस्मिन्नासने अच्छिद्राः शर्म यच्छत ॥ इति ।

मन्त्रब्राह्मणम् २।८।३ । विनियोगप्रमाणन्तु खादिरगृह्येऽपि ४।४।९ ।

अस्याः सायणोक्ता व्याख्या—"या ओषधीर्दर्भमय्य ओषध्यः, सोमराज्ञीः सोमो राजा यासां तास्तथोक्ताः, 'सोमो वा ओषधीनां राजेति श्रुतेः' ( तै० स० ६, १, ९, १ ) बह्वीः पञ्चविंशतिभिर्दर्भैर्विष्टरः क्रियते, शतविचक्षणाः या उत्कर्षेण महानुभावाः सन्ति, ता यूयं मह्यम् अस्मिन् आसने कूर्चमय आसने विष्टरे, अच्छिद्रा निबिडाः सत्यः, तोदम् अकुर्वन्त्यः, शर्म सुखं यच्छत कुरुत ।" इति ।

B. द्वितीया च ऋक्—

ॐ या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
ता मह्यमस्मिन् पादयोरच्छिद्राः शर्म यच्छत ॥ इति ।

मन्त्रब्राह्मणमाकरः । २।८।४ । विनियोगप्रमाणन्तु खादिरगृह्यसूत्रेऽपि ४।४।१० ।

अस्या व्याख्यायां सायणः—"मधुपर्ककर्ता आसनपादप्रसारणयोर्विष्टरद्वयं सम्पादितवांश्चेत् तदा या ओषधीरिति द्वितीयया विष्टरे पादौ प्रसारयेत्, तथाचोक्तम्, 'द्वौ चेत् पादयोर्द्वितीयया वक्ष्यमाणैर्मन्त्रैः पादौ प्रक्षाल्य द्वितीयं विष्टरमुदगग्रम् अधस्तात् पादयोर्या ओषधीरिति द्वितीयया स्तृणुयात् । इयान् भेदः—पृथिवीम् अनु प्रसारणार्हायां पृथिव्यां सर्वत्र विष्ठिताः विविधं स्थिता व्याप्ता ओषध्यः सन्ति ।" इत्येवमाह । अनयोर्गुणविष्णुकृता व्याख्या तु—हे ओषधीः ओषध्यः फलपाकान्ताः, या यूयं सोमराज्ञीः सोमश्चन्द्रमाः राजा अधिपतिर्यासां ताः सोमराज्ञ्यः, बह्वीः बहुप्रकाराः, शतविचक्षणाः बहुशः प्रजाजीवने निपुणाः, विशेषेणाऽऽख्यायते कथ्यते इति विचक्षणं मुखम् । शतं विचक्षणं यासां ताः शतविचक्षणाः शतमुख्यः, ता यूयम् अस्मिन् आसने

---

1. '-रित्यनेन मन्त्रेण' ख । 2. 'नानामन्त्राभ्यां तदा द्वयमभ्यां(?)' ख ।

आस्तीर्याभ्युपविशेदिति वर्तते। एतस्मादेव लिङ्गाद् द्वौ वा विष्टरौ स्यातामिति विकल्पो गम्यते।

किं द्वितीयमपि विष्टरमासन एव दत्त्वोपविशेत्? न; किं तर्हि?

पादयोरन्यम् ॥ ८ ॥

अधस्तादास्तीर्याधि पादौ कुर्यादिति शेषः।

यतो देवीरित्यपः प्रेक्षेत ॥ ९ ॥

(A)यतो देवीरित्यनेन मन्त्रेण अपः पादप्रक्षालनार्थमुदकमाहृतम् अर्हणीयः प्रेक्षेत। तेन च उदकेन प्रकृतत्वादर्हणीयः—

(B)सव्यं पादमवनेनिज इति सव्यं पादं प्रक्षालयेत् (C)दक्षिणं पादमवनेनिज इति दक्षिणं पादं प्रक्षालयेत् ॥ १० ॥

---

उपवेशने मह्यं शर्म सुखं यच्छत दत्त। किम्भूताः? अच्छिद्राः निरन्तराः। या ओषधीः पृथिवीम् अनु पृथिव्यां विष्ठिताः विशेषेण स्थिताः, ताः अस्मिन् द्वितीयविष्टरे पादयोः अधस्तान्निहिते, मह्यं शर्म यच्छत इति सम्बन्धः। शेषं पूर्ववत्। इति।

.A मन्त्रस्तु—

ॐ यतो देवीः प्रतिपश्याम्यापस्ततो मा राद्धिरागच्छतु। इति।

मन्त्रब्राह्मणमाकरः २।८।५। विनियोगप्रमाणन्तु खादिरगृह्यसूत्रेऽपि ४।४।११।

भट्टगुणविष्णुस्तु राद्धिस्थाने ऋद्धिपाठं स्वीकुर्वन् विवृणोति स्वीये छन्दोगमन्त्रभाष्ये।

अस्य व्याख्या—देवीः देव्यः द्योतमानाः, आपः आप्तुं शीलाः, उक्तलक्षणान्युदकानि यतोऽहं प्रतिपश्यामि ततो मा मां राद्धिः धनादिसंसिद्धिः आगच्छतु आभिमुख्येन प्राप्नोतु।

B. मन्त्रस्तु—

ॐ सव्यं पादमवनेनिजेऽस्मिन् राष्ट्रे श्रियं दधे। इति।

मन्त्रब्राह्मणम् २।८।६। विनियोगप्रमाणन्तु खादिरेऽपि ४।४।१२।

अस्य व्याख्या—अहं सव्यं पादम् अवनेनिजे प्रक्षालयामि। अस्मिन् राष्ट्रे विषये श्रियं भवात्मिकां दधे अर्पयामि। इति।

C. दक्षिणं पादमित्यादि पृथक् सूत्रमिति सत्यव्रतस्य कल्पना।

मन्त्रस्तु— ॐ दक्षिणं पादमवनेनिजेऽस्मिन् राष्ट्रे श्रियमावेशयामि। इति।

मन्त्रब्राह्मणम् २।८।७। विनियोगप्रमाणन्तु खादिरेऽपि ४।४।१३।

अस्य व्याख्या—दक्षिणम् असव्यं पादम् अवनेनिजे। शिष्टं पूर्ववत्। [illegible]यामि स्थापयामि। इति सायणकृता।

ऋज्वर्थम्(A)।

## पूर्वमन्यमपरमन्यमित्युभौ शेषेण ॥ ११ ॥

(B)पूर्वमन्य[1]मपरमन्यमित्यनेन मन्त्रेणोभावपि पादौ शेषेणोदकेन प्रक्षालयेत्। ननु पूर्वमन्यमित्युभौ शेषेणेति वक्तव्ये कस्माद् ग्रन्थगौरवं क्रियते? उच्यते—अत्रापि [2]पूर्व-क्रमेणैव[2]* पादौ प्रक्षालयेदित्येवमर्थः, इतरथा समाचारादुदक्सं[3]स्थतान्यायाच्च(C)प्रथमं तावद् दक्षिणं पादं प्रक्षालयित्वा अथ सव्यं प्रक्षालयेत्, तदनिष्टम्; कुतः? मन्त्रलिङ्गात्, [4]कथम् पूर्वशब्दोऽग्रिमवचनः, पूर्वमन्यं पूर्वप्रक्षालितमेकम् अग्रिमप्रक्षालितमित्यर्थः। अपरशब्दः पश्चाद्वाची, अपरमन्यं पश्चात् प्रक्षालितमन्यं पादम्; सव्यञ्च दक्षिणञ्च पूर्वेणैव क्रमेणोभावपि पादावववनेनिजे प्रक्षालयामीत्येतस्मान्मन्त्रलिङ्गादिति(D)।

A. अत्र तर्कालङ्कारः—"प्रक्षालयेत् इति क्रियाभ्यासो निर्देशक्रमेण पादयोः प्रक्षालनार्थः, अन्यथा उदक्संस्थतानुरोधाद् दक्षिणं प्रक्षाल्य ततः सव्यस्य पक्षालनं स्यात् तच्चानिष्टम्। पठन्ति च—

पादं प्रक्षालयेद् विप्रो दक्षिणं प्रथमं सदा।
शूद्रस्तु वामं प्रथमं सामवेदी तथा वधूः॥ इति
सामगः क्षालयेत् सव्यमादावन्यत्तु दक्षिणम्।

इति चवमादि" इत्याह।

B. मन्त्रस्तु—ॐ पूर्वमन्यमपरमन्यमुभौ पादाववनेनिजे।
राष्ट्रस्यर्द्ध्या अभयस्यावरुद्ध्यै। इति।

मन्त्रब्राह्मणम् २।८।८। विनियोगप्रमाणन्तु खादिरगृह्येऽपि ४।४।१४।

अस्य व्याख्या—राष्ट्रस्य राज्यस्य ऋद्ध्यै समृद्ध्यर्थम्, उभयस्य लोकद्वयस्यावरुद्ध्यै अवरोधनाय, स्वाधीनकरणाय। इति। अतः सायणमते उभयस्यावरुद्ध्यै इति पाठ इत्यवगम्यते। गुणविष्णुव्याख्यानन्तु—"पूर्वमन्यं सव्यम्, अपरमन्यं दक्षिणम्, एतावुभौ पादौ अवनेनिजे प्रक्षालयामि। राष्ट्रस्य ऋद्ध्यै वृद्ध्यर्थम् अभयस्य अवरुद्ध्यै परिग्रहाय।" इत्येवम्।

C. दक्षिणत आरभ्य उत्तरस्यां समाप्तिः, उदक्संस्थता।

D. पादप्रक्षालने रघुनन्दनः—"पादप्रक्षालनं विशेषयति देवलः—

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः॥

दैवपैतृकेतरत्रापस्तम्बः—'प्रत्यक्पादावसेचनम्' इति। क्रममाह गोभिलः—सव्यं पादमित्यादि, अर्हणीये तथा दर्शनात् सर्वत्र तथा कल्प्यते। पारस्करः "सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयती"ति।

1. '-मपरमन्य' नास्ति च। 2. 'पूर्ववत्' ख। 3. '-स्थान्यायाच्च' ख। 4. 'चव' ख।

## अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात् ॥ १२ ॥

(A)'अन्नस्य राष्ट्रिरसीत्यनेन मन्त्रेण प्रकृतत्वादर्हणीयो यथोक्तमर्घ्यं प्रतिगृह्णीयात्'[1]*। "तच्च न पात्रस्थम् न चैकपाणिना प्रतिगृह्णीयात्, कथं तर्हि? उच्यते—अर्हणकर्त्रा कांस्यपात्रेण साक्षादर्घ्यद्रव्यमेवावसिच्यमानमञ्जलिना गृह्णीयात्। कुतः?

कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ(B)। इति वचनात्।

तदनन्तरं च—

## यशोऽसीत्याचमनीयमाचामेत् ॥ १३ ॥

(C)यशोऽसीत्यनेन मन्त्रेण प्रकृतत्वादर्हणीयः आचमनीयम् आचमनार्थमुदक-

---

सव्यं प्रथमं प्रक्षालयतीति सूत्रेण प्राक् सव्यपादप्रक्षालने सिद्धे सव्यं प्रक्षाल्य दक्षिणं प्रक्षालय-तीत्यत्र सव्यग्रहणं सामान्यार्थम्, तेनान्यस्मिन्नपि पादप्रक्षालने सव्यस्यैव प्राथम्यम्, 'अन्यार्थं पूर्व-वचनम्' इति दर्शनात्। ब्राह्मणश्चेद् दक्षिणं प्रथमम् इति सूत्रं तस्य पादौ यदि ब्राह्मणः प्रक्षालयति तदा दक्षिणं दातव्यं प्रथमम् इति मन्तव्यं न सव्यम्। यथा प्रक्षालयतीत्यनुवृत्तावाश्वलायनः—दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् सव्यं शूद्रायेति। स्वयं प्रक्षालने सव्यस्यैव प्राथम्यम् इति हरिशर्मा। एवञ्च दक्षिणपादप्रक्षालनानन्तरं वामपादप्रक्षालनं वाचस्पतिमिश्रायुक्तं हेयमिति। पादप्रक्षालनं कांस्ये न कर्तव्यमित्याह विष्णुधर्मोत्तरम्—

दर्भैर्न मार्जयेत् पादौ न च कांस्ये प्रधावयेत्।" इति एवमाह।

A. मन्त्रस्तु—

ॐ अन्नस्य राष्ट्रिरसि राष्ट्रिरहं भूयासम् ॥ इति।

मन्त्रब्राह्मणम् २।८।९ विनियोगप्रमाणन्तु खादिरगृह्येऽपि ४।४।१९।

अस्य व्याख्या—हे उदकमयार्घ्य, त्वम् अन्नस्य राष्ट्री राजयिता प्रवर्धयिताऽसि, अहमपि तव स्वीकरणाद् राष्ट्रिः अन्नस्य राजयिता प्रख्यापयिता भूयासम् बह्वन्नस्वामी भूयासमित्यर्थः।

गुणविष्णुस्तु—'अहं'पदस्थाने 'ते'पदमाकल्प्य हे अर्घ्य, अन्नस्य त्वं राष्ट्रिः दीप्तिरसि, अहमपि ते तव प्रसादाद् राष्ट्रिः दीप्तिर्भूयासं भवामीत्येवं व्याचख्यौ। प्रकृतपाठावधारणे भगवन्तो-ऽनूचानाः प्रमाणम्।

B. कर्मप्रदीपः ३।१०।१९।

अत्र तर्कालङ्कारः—"अर्घ्यं प्रतिगृह्णामीत्यर्घ्यं प्रतिगृह्णीयादित्यसङ्गतैषा कल्पना भवदेवभट्टस्य। प्रतिगृह्णीयाद् इत्यस्य अञ्जलौ गृहीत्वा शिरसि दद्यात् इति रघुनन्दनव्याख्यानेऽपि प्रमाणं न पश्यामः। मन्त्रानुपदेशाद् व्याहृतिभिरेव शिरस्यर्घ्यं दद्यादिति तु स्यात्" इत्याह।

C. मन्त्रस्तु—

ॐ यशोऽसि यशो मयि धेहि। इति।

मन्त्रब्राह्मणम् २।८।१०। विनियोगप्रमाणन्तु खादिरगृह्येऽपि ४।४।१६।

---

1. नास्ति ख। 2. 'तच पात्रस्थ'' ख।

माहृतमाचामेद् भक्षयेत्। तच्च सकृन्मन्त्रेण भक्षयित्वा द्विस्तूष्णीं भक्षयेत्। अथ यथोक्तेन विधिनेन्द्रियाण्युपस्पृशेत्। कुतः? उदकाभ्यवहारेऽप्या[1]चमनस्य विधानात्(A)।

**यशसो यशोऽसीति मधुपर्कं प्रतिगृह्णीयात् ॥ १४ ॥**

(B)यशसो यशोऽसीत्यनेन मन्त्रेण प्रकृतत्वादर्हणीयो यथोक्तं मधुपर्कं कांस्यपात्रसम्पुटस्थं प्रतिगृह्णीयात्।

ननु अर्घ्यवन्मधुपर्कमपि कस्मान्न प्रतिगृह्णीयादिति चेत्? [2]न तथा प्रतिगृहीते उत्तरासां क्रियाणामसम्भवात्; 'अपिहितं कांस्ये कांस्येने'ति गृह्यान्तरवचनाच्च।

उक्तञ्च—

कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत्(C)। इति।

तस्य च मधुपर्कस्य—

**(D)यशसो भक्षोऽसि महसो भक्षोऽसि श्रीर्भक्षोऽसि श्रियं मयि धेहीति त्रिः पिबेत् ॥ १५ ॥**

अस्य व्याख्या—हे आचमनीयोदक, त्वं यशोऽसि कीर्तिसाधनं भवसि, अतो यशो मयि धेहि स्थापय। इति।

A. आचमनविधिरुक्तः प्राक् प्रथमप्रपाठकस्य द्वितीयकण्डिकायाम् (सू० ५-२९, पृ० ३३-४१)।

B. मन्त्रस्तु—

ॐ यशसो यशोऽसि।

इति मन्त्रब्राह्मणम् २।८।११। विनियोगप्रमाणञ्चास्य खादिरगृह्येऽपि ४।४।१७।

अस्य व्याख्या—हे दध्यादिसङ्घातात्मक मधुपर्कद्रव्य, त्वं यशसः, अन्ननामैतत्, मीमांसकस्यापि यशोऽसि सारभूतम् अन्नमसि। न हि दधिमध्वादिभ्योऽतिरिक्तं सारवद् अन्नम् अस्मिल्लोके वर्तत इति।

C. कर्मप्रदीपः ३।१०।१९। अत्र तर्कालङ्कारः—'यशसो यशोऽसीत्यनेन मन्त्रेण मधुपर्कमर्हणीयः प्रतिगृह्णीयात्। अपरे पुनरेतद्विद्वांसो भाषन्ते मधुपर्कं प्रतिगृह्णामीति मधुपर्कं प्रतिगृह्णीयादि'त्याह; वस्तुतो भवदेवभट्टस्येयं सर्वत्र प्रतिगृह्णामीति लिखनशैली आचार्यसूत्राननुसारिणीति ब्रूयते नश्चेतसा।

D. मन्त्रस्तु—

ॐ यशसो भक्षोऽसि महसो भक्षोऽसि

श्रीर्भक्षोऽसि श्रियं मयि धेहि। स्वाहा इति।

मन्त्रब्राह्मणमाकरस्थानम् २।८।१२ विनियोगप्रमाणमस्य खादिरगृह्येऽपि ४।४।१८।

1. '-चमनमात्रस्य विहितत्वात्' ख। 2. 'न उच्यते' ख।

अत्र सन्देहः—सूत्रे पिबतिशब्दप्रयोगान्मन्त्रे [1]च भक्षशब्दश्रुतेः किमयं मधुपर्कः पात्रेण पातव्य उत हस्तेन भक्षणीय इति? तत्रैक आहुः—मन्त्रे भक्षशब्दश्रुतेः प्रसिद्धेश्च हस्तेन भक्षणीय इति। अन्ये त्वाहुः—मन्त्राणामविधायकत्वात् प्रसिद्धेश्चानैकान्तिकत्वाद् विधेर्बलीयस्त्वाच्च पात्रेण पातव्य इति। अपरे आहुः—मधुनस्तु संयोगाद् द्रवश्चेन्-मधुपर्कः स्यात् तदा पात्रेण पातव्योऽथ चेद् दध्नः काठिन्यात् पानानुपपत्तिस्तदा हस्तेन भक्षणीयः, एवं व्यवस्थाविकल्पेनोभयानुग्रहो भवतीति। तदेतद् भूमिदेवैर्विचार्य समाधेयम्। कृत्स्नमन्त्राम्नानं किमर्थमिति चेत्? उच्यते—सूत्रे त्रिःपानविधानात् मन्त्रे च भक्षशब्दत्रित्वाद् भक्षशब्दैरेव मधुपर्कभक्षणं मा भूदित्यतस्तदाशङ्काव्यावृत्त्यर्थं मन्त्रान्तेन भक्षणप्रज्ञापनार्थं च कृत्स्नं मन्त्राम्नानमिति(A)।

---

अस्य व्याख्यायां सायणः—"यशस इत्यादि त्रिष्वपि मन्त्रेषु एकैकेनैकवारं मधुपर्कं पिबेत। श्रियं मयि धेहीति एतन्मन्त्रशेषस्य इहोपलक्षणार्थत्वम्। अतो यशो मयि धेहि महो मयि धेहीत्येवं यथालिङ्गमूहेत्। हे मधुपर्कपदार्थ त्वं यशसः कीर्तेरन्नस्य वा भक्षोऽसि अभ्यवहारसाधनोऽसि। अतो यशो मयि धेहि। स्वाहेति हविरभिधानम्। मधुपर्काख्यं हविरात्मनि हुतमस्तु इत्यर्थः। एवमुत्तरेष्वपि योज्यम्। मह इति पूजायां तेज उच्यते, श्रीः प्रसिद्धा"। एवमाह, तेन तन्मते स्वाहान्तोऽयं मन्त्र इति मधुपर्कभक्षणे तु यशसो भक्षोऽसि यशो मयि धेहि, महसो भक्षोऽसि महो मयि धेहि, श्रीर्भक्षोऽसि श्रियं मयि धेहीति मन्त्रत्रयी तेन परिकल्पिता मतेऽस्मिन् भाष्यकार-भवदेव-रघुनन्दनादयो विवदन्ते, इति ज्ञायते। गुणविष्णुस्तु "हे मधुपर्क, यतस्त्वं यशसः यशसे यशस्विनां कीर्तिमतां भक्षः असि भवसि। तथा महसे तेजसे महस्विनां भक्षोऽसि। तथा श्रीमतां त्वं श्रीः श्रियै भक्षोऽसि तद्भक्षणेन कीर्त्तिस्तेजो लक्ष्मीश्च भवति। अतः श्रियं मयि धेहि श्रीमन्तं मां कुरु इत्यर्थः" एवं स्वाहापदं विहाय व्याचख्यौ, सूत्रेऽपि स्वाहापदं नास्ति। आकरग्रन्थस्य प्रकृतपाठविचारे मधुपर्कभक्षणे वा कीदृशो मन्त्रः पठितव्य इत्यत्रापि तु भगवन्तोऽनूचानाः प्रमाणम्।

A. सूत्रस्यास्य व्याख्यायां तर्कालङ्कारः—"यशसो भक्षोऽसीत्येवमादिना मन्त्रेण वारत्रयं पिबेदर्हणीयः। आह—समस्तमन्त्राम्नानं किमर्थम्? उच्यते। मन्त्रे भक्षशब्दस्य त्रिःपाठात् त्रिःपानविधानाच्च भक्षशब्दान्तैरेव मन्त्रावयवैः पानं स्यात्, इत्यपि कदाचिदाशङ्का स्यात् कस्यचिन्मन्दमतेः, अतस्तन्निरासार्थं मन्त्रान्तेन पानप्रतिपादनार्थं समाम्नायप्रज्ञापनार्थञ्च समस्त-मन्त्राम्नानम्। तस्मात् कौथुमादीनां मन्त्रान्तेनैव पानम्। येषान्तु श्रियो भक्षोऽसि, इति मन्त्रपाठः, तेषां मन्त्रावयवैरेव पानं स्यात्, तथाच छन्दोगगृह्यान्तरम् 'मधुपर्कं त्रिः पिबेद् यशसो महसः श्रिय इति तूष्णीं चतुर्थम्' इति, तदत्र मन्त्रप्रतीकोपादानात् प्रतीकैरेव पानमवगम्यते।

---

1. 'त्वपि च' ख।

एवं मन्त्रेण त्रिः पीत्वा ततो मधुपर्कशेषस्य—

**तूष्णीं चतुर्थम् ॥ १६ ॥**

पिबेदिति वर्तते, तूष्णीममन्त्रकमित्यर्थः ।

**भूय एवाभिपाय शेषं ब्राह्मणाय दद्यात् ॥ १७ ॥**

भूय एव पुनरेव, अभिपाय आभिमुख्येन पीत्वा, शेषं पानावशिष्टं ब्राह्मणाय दद्यात्, तच्च पुत्राय शिष्याय वा, नाविशेषाद् यस्मा एव कस्मैचिदिति । कुतः ? "नोच्छिष्टं कस्यचिद् दद्यादन्यत्र जायापुत्रशिष्येभ्यः" इति स्मृत्यन्तरवचनात्(A) उच्छिष्टं'मगुरो-रभोज्यमिति वशिष्ठवचनाच्च(B) । शेषं ब्राह्मणाय(C) दद्यादित्येतस्मादेव वचनात् पूर्वासु पानक्रियासु न सर्वः पातव्य इति गम्यते ।

**आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात् ॥ १८ ॥**

चमु भक्षणे । आचान्तं भक्षितमुदकं येन सोऽयमाचान्तोदकः, तस्मै आचान्तोदकाय प्रकृतत्वादर्हणीयाय सप्तम्यर्थे चतुर्थी आचान्तोदके अर्हणीये इति ; नापितः क्षुरकर्मकृत् । प्रकृताया गोः समीपे अवस्थाय गौरिति त्रिर्ब्रूयात् । ब्रूयादित्यन्तेनोच्चैस्त्वं दर्शयति ; कथं नाम ? यथाऽर्हणीयः शृणोति तथा ब्रूयादिति । अथवा तादर्थ्ये चतुर्थी स्यात्, कथं नाम ? अर्हणीयं प्रति नापितः स्वकीयं चक्षुर्मनश्च सन्धाय गौरिति त्रिर्ब्रूयात् इति ।

---

श्रीर्मयि श्रीरसि इति खल्वस्मच्छाखायां मन्त्रपाठः । इदमिदानीमत्र सन्दिह्यते, किं प्रतिपानं मन्त्रा-वृत्तिः ? उत सकृन्मन्त्रेण पानत्रयम् इति ? सकृन्मन्त्रप्रयोग इति केचित् । कुतः ? 'एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवाचनं कृत्वा' इति वचनात् । तदसङ्गतम्, कस्मात् ? द्रव्यभेदात् । द्रव्यभेदः खल्वत्र भवति । न हि यदेवाऽऽदितः पिबति परस्तादपि तदेव पिबति, इत्यप्रमत्तः शक्नोति गदितुम् । तस्मादस्त्यत्र द्रव्यभेदः, उत्तरत्र तूष्णीमिति करणाच्चात्र प्रतिपानं मन्त्रावृत्तिमव-गच्छामः । आह—मध्ये तर्हि आचमनं प्राप्नोति ? अन्यथा उच्छिष्टः कथं द्वितीयं तृतीयञ्च पानं करिष्यति, मन्त्रं वा पठिष्यति, उच्यते—उत्तरत्र आचान्तोदकायेति करणादिहोच्छिष्टतैव न भवतीत्यवगच्छामः । तस्मात् प्राणाग्निहोत्रवत् सोमभक्षणवच्च अकृताचमनस्यैव मन्त्रपाठः स्यात् । तथाच गृह्यासंग्रहः 'मधुपर्के तथे'त्यादि ( द्र० पृ० ६८१ ) इत्येवमाह ।

A. प्रमाणत्वेन परिगृहीतं वचनमिदं तर्कालङ्कारेणापि ।

B. वशिष्ठसंहिता अ० १४ ।

C. ब्राह्मणाय दद्यादिति—पुत्रशिष्याद्यभावे पुनरब्राह्मणायापि दद्यात्, तच्च अद्भिः

---

1. '-ष्टं गुरोरभोज्य-' ख । 2. 'तस्मै' ख । 3. 'कः नापितः' ख ।

ननु शुचेर्मन्त्रप्रयोगाधिकारात् उत्तर[1]सूत्रेऽस्य मन्त्रप्रयोगोपदेशादाचान्तोदकायेत्य-वाच्यम् ? [2]न, कुतः ? इहाऽऽचान्तोदकायेति वचनात् प्राक् प्रतिभक्ष्यमाचमनं न स्यादिति दर्शयति, एवञ्च प्रागत आचमनाविधानात् उच्छिष्टत्वमेव न स्यादिति गम्यते, यथा प्राणाग्निहोत्रे होमे सोमभक्ष्ये चेति (A)।

एवं नापितेन गौरित्युक्ते तमेव नापितं श्रावयेत्। प्रकृतत्वादर्हणीयः।

(B)मुञ्च गां वरुणपाशाद् द्विषन्तं मेऽभिधेहीति तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकमिति ब्रूयात् ॥ १६ ॥

अमुष्येत्येतस्मिन् सर्वनाम्नि प्रकृतत्वादर्हणकर्तुर्नाम गृह्णीयात्, तं जहि विष्णुदत्तस्य चेत्येवम्। ननु मुञ्च गामिति ब्रूयादित्येतावति वक्तव्ये कस्मात् कृत्स्नो मन्त्र आम्नायते? उच्यते—तं जह्यमुष्य चेत्यनयोः पदयोरन्तरा ममशब्दाध्याहाराशङ्काव्यावृत्त्यर्थम्; इतरथा

---

संप्रोक्ष्येति विशेषः। तथा च द्राह्यायणसूत्रम्—तदभावेऽद्भिः संप्रोक्ष्याब्राह्मणाय इति। लाट्यायनोऽप्येवमेव सूत्रयाञ्चकारेति वर्णनञ्चात्र तर्कालङ्कारस्य।

A. द्रष्टव्या चतुर्थप्रपाठकस्याष्टमकण्डिकापञ्चदशसूत्रपादटीका ( पृ० ८९०-९१ )

B. अत्र मन्त्रस्तु—

ॐ मुञ्च गां वरुणपाशाद् द्विषन्तं मेऽभिधेहि।
तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकम्।

इति मन्त्रब्राह्मणम् २।८।१३।

विनियोगप्रमाणन्तु खादिरगृह्येऽपि ४।४।२१।

अस्य व्याख्या—"हे वरुण वारक बन्धनाभिमानिन् देव, गां बद्धां पाशान्मुञ्च, विमुक्तां कुरु इत्यर्थः। तर्हि कं बध्नामि चेद् उच्यते—मे मम द्विषन्तं द्वेष्टारम् अभिधेहि। अभिपूर्वो-दधातिर्बन्धनार्थे, बधानेत्यर्थः। न केवलमस्मद्द्वेषिणाम्, किन्तु अमुष्य च दातुरपि विष्णुशर्मणो द्विषन्तमपि। किञ्च बद्ध्वा उभयोर्दातुः प्रतिग्रहीतुश्च द्वेषिणं जहि तस्य हिंसां कुरु। किञ्च गामुत्सृज परित्यज्य, किमर्थमित्युच्यते—तृणानि अत्तु भक्षयतु, उदकमपि पिबतु।" इति सायणोक्ता। गुणविष्णुस्तु—'एतां गाम् अर्हणीयाम्, वरुण, पाशाद् बन्धनात् मुञ्च मोचय। मोचयित्वा उत्सृज विसर्जय। सेयं तृणानि अत्तु भक्षयतु उदकं पिबतु। एवं मोचिता उत्सृष्टा च प्रार्थ्यते हे अर्हणीये मे मम अर्हणीयस्य अमुष्य च अर्चयितुः, उभयोः द्विषन्तं द्वेष्टारम्, अभिधेहि बधान तथा जहि विनाशय।' एवं व्याचख्यौ। सत्यव्रतेनात्र मन्त्रद्वयी कल्पितेति।

---

1. 'सूत्रस्य' ख। 2. 'न' नास्ति च।

साकाङ्क्षत्वादध्याहारेण च निराकाङ्क्षीकरणोपपत्तेः, तं जहि मम विष्णुदत्तस्य चेत्येवं प्रयोगः स्यात् ; तच्चायुक्तम्, कुतः ? अवचनात् द्विषन्तं मेऽभिधेहीत्यनेन च मे-शब्देन तदर्थसिद्धेः कृत्स्नमन्त्राम्नानस्य चैवमर्थत्वात् । एवञ्चेदगन्ते ए'वेति'करणाम्नानं युक्तम् कस्मादर्धर्चेऽपि 'इति' करणं क्रियते ? उच्यते—प्रा'गिति' शब्दप्रक्षेपात् 'यथावस्थिताना-मेव पदानां प्रयोगं दर्शयति, इतरथा साकाङ्क्षत्वादध्याहारेण च निराकाङ्क्षीकरणो-पपत्तेः । द्विषन्तं च तं मेऽभिधेहीति प्रयोगः स्यात्, द्विषन्तं मेऽत्राभिधेहीति वा स्यात्, द्विषन्तं मे ²चाभिधेहीति वा स्यात् ; तत् सर्वथाऽप्ययुक्तम्, कुतः ? अवचना'दिति'-शब्दाम्नानवैयर्थ्याच्च । तस्माद् यथोक्त एवार्थः(A) ।

A. सूत्रस्यास्य व्याख्याशयं स्फुटं स्फोरयति तर्कालङ्कारः "आह समस्तमन्त्राम्नानं किमर्थम् ? समाम्नायप्रज्ञापनार्थम् । एवमेव मन्त्रस्य पाठार्थञ्च । तेन मे इत्यादौ निरा-काङ्क्षत्वार्थं न नामप्रयोगः, तेन अमुष्य इत्यस्य लूह एव स्यात्, इति केचित् । ते खलु मेऽ-भिधेहीति इत्यत्र इतिकारं किमिति न लिखितवन्त इति प्रष्टव्याः । तस्मात् अमुष्य-पदस्थाने तावदर्हयितुर्नामादेशः कर्त्तव्यः, कुतः ? अतः पदस्थाने नामादेशस्य प्रसिद्धत्वात् समस्तमन्त्रा-म्नानं जहि अमुष्य इति पदयोरन्तरा शब्दान्तराध्याहारशङ्कानिवृत्त्यर्थम् । अन्यथा मम विष्णु-दत्तस्य च इत्येवं प्रयोगः स्यात् । तच्चायुक्तम्, मेऽभिधेहीति मे-शब्देन तदर्थसिद्धेः । इति केचित् । तेषामपि तदुक्तयैव युक्त्या अध्याहारशङ्काया अप्रसक्तेः समस्तमन्त्राम्नानं किमर्थमिति न विद्मः । मेऽभिधेहीति इत्यत्र इतिकरणं किमर्थम् ? परस्तान्मन्त्रपदस्य रूपान्तरत्व-प्रज्ञापनार्थम् प्रा'गिति'शब्दप्रक्षेपात् यथापठितानामेव मन्त्रपदानां प्रयोगार्थञ्च । तेन अमुष्य-पदस्थाने नामादेशः स्यात् तर्हि मम इत्यत्रापि स्यात् ? नैष दोषः, इति-करणात् प्राक्तनेन द्विषन्तम् इतिपदेन तस्य सम्बन्धात् । तस्मादियमेवावधारणा समस्तमन्त्राम्नानं समाम्नायप्रज्ञापना-र्थम् मध्ये इतिकारकरणं ततः प्राक्तनस्य मन्त्रभागस्य यथाश्रुतपाठार्थम्, पराचीनस्य अमुष्य पदस्य स्थाने नामादेशसूचनार्थञ्च । अन्यस्य पराचीनत्वेऽपि न नामादेशः प्रमाणाभावात् । नाप्यध्याहारः समस्तमन्त्राम्नानात् इति । तथाच छन्दोगगृह्यान्तरम् सञ्चोदितामनुमन्त्रयेत मुञ्च गामित्यमुष्य चेत्यर्हयितुर्नाम ब्रूयाद् इति । भट्टभाष्येऽप्युक्तम् मेऽभिधेहीत्य'न्ते' शब्दप्रक्षेपात् मेऽभिधेहीत्येव प्रयोगः, न तु निराकाङ्क्षीकरणाय मे वक्तुरिति । अमुष्य-पदस्थाने अर्हयितुर्नामादेश इति ।

अत्र च पठ्यमानमन्त्रकाण्डे इति-पदं न पठ्यते केवलमाचार्येणैव उक्तमर्थं प्रतिपिपादयिषुणा प्रक्षिप्तं तदिति बोद्धव्यम् । भट्टनारायणोऽपि प्रक्षिप्तत्व'मिति'कारस्य स्पष्टमाचष्टे, व्याख्याता-

1. 'यथास्थिताना-' ख । 2. 'च' भाति ख ।

एवं नापितेनोक्ते प्रकृतत्वात् तामेव गामालोकयन् अर्हणीयः ।

## (A)माता रुद्राणामित्यनुमन्त्रयेत ॥ २० ॥

ऋज्वर्थम् ।

किं सर्वत्रार्हणीयकर्मणि नापितेन गौरित्युक्ते अर्हणीयो मुञ्च गामित्युक्त्वा माता रुद्राणामित्यनुमन्त्रयेत? न, किं तर्हि—?

---

रोऽपि पूर्वाचार्या एवमेव प्रतिपन्नाः । भवदेवभट्टोऽपि मन्त्रे इतिकारं न लिलेख । यच्च उक्त-भट्टभाष्यप्रतीकं लिखित्वा रघुनन्दनेनोक्तम् 'मेऽभिधंहीत्यत्र भवदेवभट्टेन यद् इति-पदं न लिखितं तद्युक्तं भट्टभाष्यविरोधात् प्रमाणाभावाच्च, इति' तदेव हेयम्; कस्मात्? भट्टभाष्यविरोधाभावात् तत्र खविवति-शब्दस्य प्रक्षेपत्वकथनाद् व्यक्तमिति-शब्दस्य मन्त्रानङ्गत्वमुक्तम्; प्रमाणञ्चात्र मन्त्रसमाम्नायोऽन्येतुसम्प्रदायश्च । तस्माद् भट्टभाष्यपंक्तेस्तात्पर्यापर्यालोचनात् समाम्नायाद-नवलोकनप्रमादाच्च अप्रमाणं प्रमाणविरुद्धञ्च वर्णितम् इत्यनादरणीयम्" इत्युक्तं ॥

A. मन्त्रस्तु—

ॐ माता रुद्राणां दुहिता वसूनां
स्वसादित्यानाममृतस्य नाभिः ।
प्र नु वोचं चिकितुषे जनाय
मा गामनागामदितिं वधिष्ट । इति ।

मन्त्रब्राह्मणम् २।८।१५। विनियोगप्रमाणन्तु आश्वलायनगृह्ये १।२४।२५, पारस्करगृह्येऽपि १।३।२७ ।

अस्य व्याख्या—"इयं गौ रुद्राणाम् एकादशसंख्याकानां माता निर्मात्री, तथा वसूनाम् अष्टसंख्याकानां दुहिता पुत्री, आदित्यानां द्वादशसंख्याकानां स्वसा स्वसृस्थानीया, अमृतस्य यज्ञस्य स्वर्गस्य च नाभिः नाभिवद् बन्धिका । आज्यक्षीरादिहोमसाधनद्रव्यस्योत्पादक-त्वात् । चिकितुषे युक्तायुक्तपरिज्ञात्रे जनाय जात्येकवचनम् जनेभ्यो नु क्षिप्रम् प्रवोचं प्रब्रवीमि । किमिति चेदुच्यते—अनागाम् अनपराधाम्, गाम् उत्कृष्टेण महानुभावाम्, मा वधिष्ट हे देवा हिंसां मा कुरुत । ओमित्यङ्गीकारे अहन्तव्येत्यङ्गीकृत्य उत्सृजत", इति सायणकृता । तेन मन्त्र-स्यान्ते ओम् उत्सृजत इत्यधिकः पाठः सायणसम्मत इत्यवगम्यते । अत्र गुणविष्णुस्तु—"येयमर्हणार्थम् आलम्भार्थम् अर्हणीया गौरानीता सेयं रुद्राणां माता वसूनां दुहिता आदित्यानां स्वसा भगिनी अमृतस्य दधिदुग्धादेः नाभिः कारणम्, अत एव एतां गाम् अनागाम् अनपराधाम् अदितिम् अदीनाम् हे यजमानपरिवारकाः यूयं मा वधिष्ट, मा प्राणैर्वियोजयत । अहमेवं नु भोः जनाय अस्मै यजमानाय प्रवोचम् प्रोक्तवानस्मि गोवधं मा कुरु त्वमिति । किम्भूताय चिकि-तुषे ज्ञानसम्पन्नाय" । एवं व्याचख्यौ ॥

## अन्यत्र यज्ञात् ॥ २१ ॥

यज्ञोऽग्निष्टोमादिः तस्माद् यज्ञादन्यत्रैवं कुर्यात् यज्ञे तु पुनर्नैवं कुर्यादिति ।

कथं तर्हि तत्र कुर्यादित्यत आह—

## कुरुतेत्यधियज्ञम् ॥ २२ ॥

यज्ञमधिकृत्य 'यदर्हणं क्रियते तदधियज्ञम् । तत्र नापितेन गौरित्युक्ते अर्हणीयः कुरुतेति ब्रूयात् । कुरुत आलभतेत्यर्थः(A) ।

के पुनस्तेऽर्हणीया इत्यत आह—

## षडर्घ्यार्हा भवन्ति ॥ २३ ॥

अर्घ्यमर्हणम्, अर्घ्यमर्हन्तीत्यर्घ्यार्हाः षट्संख्याका भवन्ति ।

²ते च—

## आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति ॥ २४ ॥

आचार्यः,— उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते(B) ॥

इत्येवंलक्षणः । ऋत्विक्—
अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते(C) ॥

---

A. 'कुरुतेति गवि प्रोक्तायां ब्रूयात्' इति च लाट्यायनसूत्रम् ।

B. मनुसंहिता २।१४० ।

व्याख्यायामस्य कुल्लूकभट्टः—"यो ब्राह्मणः शिष्यमुपनीय कल्परहस्यसहितां वेदशाखां सर्वामध्यापयति तमाचार्यं पूर्वे मुनयो वदन्ति । कल्पो यज्ञविद्या, रहस्यमुपनिषत् । वेदत्वेऽप्युपनिषदां प्राधान्यविवक्षया पृथङ्निर्देशः" इत्याह ।

C. मनुसंहिता २।१४३।

व्याख्यायामस्य कुल्लूकभट्टः—"आहवनीयाद्युत्पादकं कर्म अग्न्याधेयम्, अष्टकादीन् पाकयज्ञान्, अग्निष्टोमादीन् यज्ञान्, कृतवरणो यस्य करोति स तस्यर्त्विगिह शास्त्रेऽभिधीयते ।

---

1. 'यदर्हणं' ख । 2. 'ते के' ख ।

इत्येवंलक्षणः। स्नातको गृहमेधी(A), राजा अभिषेकादिगुणयुक्तः, विवाह्यो विवाहयिता(B) अतिथिर्महायज्ञप्रकरणे व्याख्यातः, अतिथिभिः कामं संभाषे-

ब्रह्मचारिधर्मेष्वनुपयुक्तमपि ऋत्विग्लक्षणम् आचार्यादिवदृत्विजोऽपि मान्यत्वं दर्शयितु प्रसङ्गादुक्तम्" इत्याह।

A. अचिरनिवृत्तसमावर्तन इति कुल्लूकभट्टः। उक्तानि स्नातकव्रतादीनि तद्भेदाश्च तृतीय-प्रपाठकस्य पञ्चमकण्डिकायाम् ( द्र० पृ० ६३३—४६ )।

B. विवाहे वरार्हणकन्यासम्प्रदानप्रकारमाह रघुनन्दनः—

या ओषधीरित्युदग्रं विष्टरमास्तीर्याध्युपविशति या ओषधीरित्यनया ऋचा। उदग्रम् उदगग्रं विष्टरमास्तीर्योपविशति। पादयोरन्यमध आस्तीर्य उपरि पादौ तूष्णीं कुर्यादिति सरला-भट्टभाष्ये, ततः पादोपवेशने भवदेवमन्त्रलिखनं प्रमाणशून्यम्। ततः पाद्यजलप्रेक्षणमाह स एव, यतो देवीरित्यपः प्रेक्षेत, यतो देवीरिति मन्त्रेणापः पादप्रक्षालनमुदकं प्रेक्षेत। ...सव्यं पादमवनेनिजे इति सव्यं पादं प्रक्षालयेत् तत्र जलाञ्जलिनिक्षेपं कुर्यात्, एवं दक्षिणेऽपि। गोभिलः—पूर्वमन्यमपरमन्यमित्युभौ शेषेण, पूर्वमन्यमपरमन्यमुभाविति मन्त्रेण पूर्वप्रक्षालनावशिष्टजलाञ्जलिकृतेनोभयपादप्रक्षालनं कुर्यात्। गोभिलः—अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात्, कांस्यपात्रेण दध्यक्षतादियुक्तं जलरूपमर्घ्यम् अन्नस्य राष्ट्रिरसीति मन्त्रेणाञ्जलौ गृहीत्वा शिरसि दद्यात्, तथाच भट्टभाष्ये शूलपाणिधृतवचनम्—'कांस्येन चार्हणीयस्य निनयेदर्घ्यमञ्जलौ'। गोभिलः—यशोऽसीत्याचमनीयमाचामेत, यशोऽसीति मन्त्र-मुच्चार्याऽऽचमनीयं जलमाचामेत्, तत्र सकृन्मन्त्रेण ब्राह्मतीर्थेन भक्षयित्वा द्विस्तूष्णीं भक्षयेत् तत इन्द्रियाण्युपस्पृशेत्। गोभिलः—यशसो यशोऽसीति मधुपर्कं गृह्णीयात्, यशसो यशोऽसीति मन्त्रेण गृह्णीयात्, तथा यशसो भक्ष्योऽसि महसो भक्ष्योऽसि श्रीर्भक्ष्योऽसि श्रियं मयि धेहीति त्रिः पिबेत् तूष्णीं चतुर्थमिति, मन्त्रं प्रतिपानं पठित्वा वारत्रयं पिबेत् चतुर्थममन्त्रकं पिबेत्। इदानीं पानव्यवहाराभावान्निवृत्ति। तत आचम्य गोमोक्षणं कारयेत्, गोभिलः—आचान्तो...( सू० १८,१९,२० ) आचान्तोदकाय कृताचमनाय प्रकृतत्वाद् वराय, सप्तम्यर्थे चतुर्थी तेन वरे आचान्ते नापितः प्रकृताया गोः समीपेऽवस्थितो गौरिति ब्रूयात्, एवं नापितेनोक्ते तं श्रावयति वरः मुञ्च गामित्यादि, अत्र मेऽभिधेहीति शब्दप्रक्षेपात् मेऽभिधेहीति इत्येवप्रयोगः न तु निराकाङ्क्षीकरणाय मोचये बन्धुरिति। अमुष्य इत्यनेन कन्यादातुर्नामनिर्देश इति भट्टभाष्यम्। ततश्च भवदेवभट्टेन यदभिधेहीति अत्रेति पदं न लिखितम् अमुष्येत्यनूहेन लिखितं कन्यादानानन्तरञ्च गौरित्यादि गवामन्त्रणपर्यन्तं लिखितं तद्धेयं भट्टभाष्यादिविरोधात् प्रमाणाभावाच्च। अर्हणादित्वेन कन्या-दानात् पूर्वमेव गोमोचनस्य युक्तत्वात् मनुवचने अर्हयित्वेत्यनेन अर्हणानन्तरमेव कन्या-दानविरोधाच्च।

प्रवराभिधानमाह भविष्यपुराणम्—

तुलापुरुषदाने च तथैव हाटकाचले ।

कन्यादाने तथोत्सर्गे कीर्तयेत् प्रवरादिकम् ॥ इति,

हरिशर्मधृतम् आश्वलायनगृह्यपरिशिष्टम्—शिवदत्तप्रपौत्री ब्रह्मदत्तपौत्री विष्णुदत्तपुत्री यज्ञदत्ता कन्या शिवमित्रप्रपौत्राय राममित्रपौत्राय विष्णुमित्रपुत्राय रुद्रमित्राय तुभ्यं सम्प्रदत्तेति । सम्प्रदत्ता इत्यत्र इष्टार्थत्वात् पुंवचसां क्तप्रत्ययार्थाविवक्षितत्वेन संप्रददे इत्येव प्रयोगः ।

तथाच व्यासः—

नामगोत्रे समुच्चार्य प्रदद्यात् श्रद्धयाऽन्वितः ।

परितुष्टेन भावेन तुभ्यं सम्प्रददे इति ॥

स्वगामिफले तुभ्यं सम्प्रददे इति परगामिफले तु 'अहमस्मै ददानीति एवमाभाष्य दीयते' इति छन्दोगपरिशिष्टदर्शनात् ददानीति वाच्यम्, उभयपदिदाधातोः फलवत्कर्तर्यात्मनेपदमफलवत्-कर्तरि परस्मैपदमिति पाणिनिश्रुतेः । अत एवाऽऽत्मनेपद-परस्मैपदयोरात्मने परस्मै इति समाख्या सङ्गच्छते । ददानीत्यस्य दद इति वर्तमानार्थता, अत एव

सकृदंशो निपतति सकृत् कन्या प्रदीयते ।

सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥ (९।४७)

इति मनुनाऽप्युक्तं सङ्गच्छते । अनुमतिग्रहणार्थप्रार्थनार्थत्वे तु सकृत्त्वाभिधानमप्रयोजकमिति । श्राद्धादौ फलभागिनां गोत्राद्युल्लेखदर्शनात् तदितरत्रापि तथोल्लेखाचारः । एवं श्राद्धे—

'अमुकामुकगोत्रैतत् तुभ्यमन्नं स्वधा नमः'

इति ब्रह्मपुराणादिदर्शनाद् देयविशेषणत्वेनैतच्छब्दप्रयोग इति ।

अत्र कन्यावरयोरिति पाठक्रमाद्ऋष्यशृङ्गोक्तशाब्दक्रमस्य बलवत्त्वाद् वरकुलाभिधानानन्तरं कन्याकुलाभिधानसमाचारः । यथा हेमाद्रिधृतम् ऋष्यशृङ्गवचनम्—

वरगोत्रं समुच्चार्येत्यादि ( द्र० पृ० ८७६ )

धनञ्जयकृतसम्बन्धविवेके परिशिष्टीयम्—

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।

वाक्यमुच्चारयेद् विद्वानन्यत्र पितृपूर्वकम् ॥

एतदेव त्रिरुच्चार्य कन्यां दद्याद् यथाविधि ।

विवाहे यो विधिः प्रोक्तो वरणे स विधिः स्मृतः ।

वाक्यं त्रैपुरुषं कार्यं त्रिरावृत्तिविवर्जितम् ॥

इति वचनान्तरात् त्रिरावृत्तिविवर्जितं प्रपितामहपूर्वकं वाक्यं वरणे । 'नान्दी समृद्धिरिति कथ्यते' इति ब्रह्मपुराणात् नान्दीमुखे पुत्रादिसमृद्धीनामादिकारणरूपे, विवाहे, विवाहस्य विशेषत्वन्तु विवाहादेव पुत्रादीनां लाभज्ञापनाय; चकारस्त्वर्थः, अन्यत्र प्राप्तपित्रादिक्रमव्यवच्छेदाय ; नान्दी-मुखपदस्य श्राद्धपरत्वे अनेकवचनप्राप्तपितृपूर्वकाभिलापापराधापत्तेः, वाक्यभेदापत्तेश्च । एत-

दिति प्रपितामहपूर्वकं वाक्यं तच्च ऋग्यजुर्वचनात् कन्यानामान्तम् इति, न तु संप्रददे ददामि वेत्यन्तम्, 'सकृत् कन्या प्रदीयते' इति मनुवचनात् ।

वेदार्थोपनिबन्धत्वात् प्राधान्यं हि मनोः स्मृतम् ।
मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते ॥

इति बृहस्पत्युक्तेश्च । अत्र च पारस्करेण बहिःशालायामुपलिप्ते देशे उद्धृतावोक्षिते अग्निमुपसमाधायेति सूत्रात प्रधानगृहाङ्गणे अग्निस्थापनानन्तरं 'कुमार्याः पाणिं गृह्णीयात् त्रिषु त्रिषूत्तरात्रिषु' इति सूत्रान्तरेण पाणिग्रहणविधानाद् यजुर्वेदिनां सामगदेयकन्याग्रहणेऽपि दानात् पूर्वमग्निस्थापनम् ।

तत्रायं क्रमः—प्राङ्मुखाय वराय प्रत्यङ्मुखः सम्प्रदाता एकादशीतत्त्वोक्तप्रमाणं सर्वकर्म-साधारणम् ॐ नमो नारायणायेत्युच्चार्य नत्वा ॐ तद्विष्णोरिति विष्णुं स्मृत्वा ॐतत् सदित्युच्चार्य तिलकुशाग्रयवसहितं जलं गृहीत्वा अद्यामुके मासि अमुकराशिस्थे भास्करे अमुकपक्षेऽमुकतिथौ अमुकगोत्रोऽमुकदेवशर्मा स्वर्गकामो विष्णुप्रीतिकामो वा इत्यन्तं सकृदुच्चार्य अमुकगोत्रस्यामुक-प्रवरस्यामुकदेवशर्मणः प्रपौत्राय, अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्मणः पौत्राय, अमुकगोत्रस्या-मुकप्रवरस्यामुकदेवशर्मणः पुत्राय, अमुकगोत्रायामुकप्रवरायामुकदेवशर्मणे वराय ; अमुकगोत्रस्या-मुकप्रवरस्यामुकदेवशर्मणः प्रपौत्रीम्, अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्मणः पौत्रीम् अमुक-गोत्रस्यामुकप्रवरस्यामुकदेवशर्मणः पुत्रीम् अमुकगोत्राममुकप्रवराममुकीदेवीम्, इत्यन्तं त्रिरुच्चार्य साळङ्कारां वस्त्राच्छादितां प्रजापतिदेवताकामेनां कन्यां तुभ्यमहं सम्प्रददे इति दद्यात् । परार्थं चेद् ददानीति विशेषः । अमुकगोत्र इत्यादौ षष्ठ्यन्ततानिर्देशश्च । वीरेश्वररामदत्तादयोऽप्येवम् ।

ज्योतिःसारसमुच्चये—

विवाहे तु दिवाभागे कन्या स्यात् पुत्रवर्जिता ।
विवाहानलदग्धा सा नियतं स्वामिघातिनी ॥

अत एव महाभारते—

रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम् ।
विद्यां कन्यां द्विजश्रेष्ठ दीपमन्नं प्रतिश्रयम् ॥

अभयदक्षिणाम् अभयदानम् । प्रतिश्रयः प्रवासिनामाश्रयः ।

विवाहे रात्रौ दानान्तरमप्याह देवलः—

राहुदर्शन-संक्रान्ति-विवाहात्यय-वृद्धिषु ।
स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च ॥

विवाहे दानान्तरमप्याह हेमाद्रिधृतं व्यासवचनम्—

ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥

विवाहप्रवर्तने रजोयोगेऽपि होमादिकं कार्यम्, तथाच गृहस्थरत्नाकरे वृद्धयाज्ञवल्क्यः—

विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्याया ऋतुरागच्छेत् कथं कुर्वन्ति याज्ञिकाः ॥

स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
हुत्वाज्यञ्चैव लाजांश्च ततस्तन्त्रं प्रवर्त्तयेत् ॥

हुत्वा चाऽऽज्याहुतीस्तत्रेति यज्ञपार्श्वः । मन्त्रानादेशे गायत्री हविषोऽनादेशे आज्यमिति कात्यायनसूत्राद् गायत्र्या होम इति पशुपतिः” इति ।

विषयमिममधिकृत्य तर्कालङ्कार उद्वाहचन्द्रालोके—“मधुपर्को गृह्योक्तकर्मविशेषोऽर्घ्यमर्हणमिति चोच्यते । मधुपर्के विशेषमाह गृह्यपरिशिष्टम्—

वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः ।
मधुपर्कः प्रदातव्यो ह्यन्यशाखेऽपि दातरि ॥

अत एवार्च्यशाखया मधुपर्क इत्याहुः । यजमानशाखया मधुपर्क इति केचित् । वृद्धास्तु अर्च्यशाखयैवाऽऽद्रियन्ते । गौडास्तु अर्चकस्यार्च्यस्य च स्वस्वकृत्यं स्वस्वशाखोक्तप्रकारेण कुर्वन्ति । मत्स्यपुराणे—तुलापुरुषदाने···दाने वाग्दाने । उत्सर्गे सम्प्रदाने । प्रवरादिकमित्यादिपदात् गोत्रादिपरिग्रहः । ऋष्यशृङ्गः—वरगोत्रं...आदौ वरस्य गोत्रमुच्चार्य प्रपितामहपूर्वकं वरस्य नामोच्चारयेत् । एवमादौ कन्याया गोत्रमुच्चार्य प्रपितामहपूर्वकं कन्याया नाम उच्चारयेदित्यर्थः । धनञ्जयकृतसम्बन्धविवेके परिशिष्टीयम्—नान्दीमुखे विवाहे च...वृद्धवशिष्टस्येदमिति हेमाद्रिः । नान्दीमुखे प्रपितामहपूर्वकत्वं छन्दोगादिव्यतिरिक्तविषयं तेषां स्वशाखे पितृपूर्वकत्वोक्तेः । अन्यत्र पार्वणादौ । एतदिति वाक्यम् । अनयोर्मते प्रवरोल्लेखो नास्ति अनुपदेशात् । अत एव वक्ष्यमाणाश्वलायनगृह्यपरिशिष्टेऽपि प्रवरोल्लेखो नाभिहितः, ऋष्यशृङ्गवचने वरगोत्रं समुच्चार्येत्यभिधानात् वरस्यैव गोत्रोल्लेखो न तु तत्प्रपितामहादीनामपीति बोध्यम् । कन्यापक्षेऽप्येवम् । अत एव वक्ष्यमाणाश्वलायनगृह्यपरिशिष्टे वरस्यैव गोत्रोल्लेखो दर्शितः, न तस्य प्रपितामहादीनाम् । न खल्वपि कन्यायाः ।

पूर्वोक्तपरिशिष्टीये एतदेव त्रिरुच्चायेत्यवधारणात् वाक्यमेव त्रिरुच्चारणीयम् । न च ऋष्यशृङ्गवचनात् कन्यानामान्तमेव त्रिरुच्चारणीयं न समस्तं वाक्यमिति तत्त्वकारव्याख्यानं युक्तमिति वाच्यम् ? ऋष्यशृङ्गवचने वरकन्ययोः प्रपितामहपूर्वकं नामोच्चारणमात्रोपदेशेन त्रिरुच्चारणस्य च तत्रानुक्तेः, परिशिष्टीये च वाक्यस्य त्रिरुच्चारणोपदेशेनानयोर्विभिन्नार्थतया एकस्यापरविशेषकत्वासम्भवात् । यदप्युक्तं ‘सकृदंशो निपतती’ति मनुवचनात् सम्प्रददे इत्यन्तं वाक्यं न त्रिरुच्चारणीयमिति, तदपि चिन्त्यम्; सम्प्रददे इत्यन्तवाक्यस्य त्रिरुच्चारणेऽपि कन्याप्रदानस्य सकृत्त्वानपायात् । त्रिरुच्चार्य दद्यादिति वचनात् त्रिरुच्चारणात् परत एव दानावगतेः । इदानीत्यस्यानुमतिग्रहणवाक्यस्य सकृद् वचनविधानेन दानवाक्यस्य त्रिरुच्चारणे बाधकाभावात् । सामान्यस्य विशेषेतरपरत्वोपपत्तेश्च । यच्चापरमुक्तम् अनुमतिग्रहणप्रार्थनार्थत्वे सकृदभिधानमप्रयोजकमिति, तदपि चिन्त्यम्; वचनप्रामाण्यात् सकृदभिधानस्यैव प्रयोजकत्वात । अन्यथा दानवाक्येऽपि तस्य प्रयोजकत्वं न स्यात् । लोटो लडर्थेऽननुशिष्टत्वाच्च ।

तस्मादृहणे विष्टरादेस्त्रिरुच्चारणवददृष्टार्थं समस्तमेव वाक्यं त्रिरुच्चारणीयम्, अनन्यगतेर्वचनात्। अत एव यथाविधीत्युक्तम्, अत्र खल्वयमेव विधिरिति। दानवाक्यस्य चादृष्टार्थत्वं निर्विवादमेव। अत एव कन्यावरणवाक्यानन्तरमाश्वलायनगृह्यपरिशिष्टे एवं त्रिः प्रयुज्येत्युक्तम्। तथा कन्या-दानोपक्रमे तत्रैव 'वत्सगोत्रोत्पन्नाममुष्य प्रपौत्रीम्......नाम्नेऽस्मै वराय सम्प्रददे इत्यादिना... कन्यां प्रतिगृह्णामीति ब्रूयादित्यन्तेन ग्रन्थेन दानग्रहणपरिपाटीमभिधाय एवं त्रिः प्रयुज्येत्यभि-हितम् (ग्र० पृ० ८७८)। सुमन्तुनाऽपि त्रींस्त्रीन् वारान् ब्रूयादित्युक्तम्। त्रींस्त्रीनिति वीप्सा दातृग्रहीत्रपेक्षया। निर्णयसिन्धावपि—मदनरत्ने हेमाद्रौ च ऋष्यशृङ्ग इत्युपक्रम्य 'वरगोत्रमि'ति, 'तिष्ठेत् पूर्वमुखो दाते'ति वचनद्वयमभिधाय 'उदपात्रमि'त्यादि 'माङ्गल्यकुतुकानि चे'त्यन्तमृष्य-शृङ्गवाक्यं लिखित्वा एतत् कन्यादानं त्रिः कार्यमिति शौनक इत्युक्तम् (ग्र० पृ० ८७६-७७)। आकरे दृष्ट एव खल्वाश्वलायनगृह्यपरिशिष्टपाठोऽस्माभिः प्रदर्शितः। हरिशर्मणा त्वाश्वलायनगृह्यपरिशिष्टमिति कृत्वाऽन्यथा पठितम्। शिवदत्तप्रपौत्री......तुभ्यं सम्प्रदत्तेति। तदेतदाकरे नोपलभ्यते, परिशिष्टान्तरं वा स्यात्, सम्प्रदानात् परतस्त्वेव पठितव्यं सम्प्रदत्तेति लिङ्गानिर्देशादिति प्रतिभाति। यच्चोक्तं तत्त्वकारेण, आश्वलायनगृह्यपरिशिष्टीयपाठक्रमादृष्य-शृङ्गोक्तशाब्दक्रमस्य बलवत्त्वाद् वरकुलाभिधानानन्तरं कन्याकुलाभिधानमिति, तच्चिन्त्यम्; परिशिष्टवाक्यस्य प्रयोगोपदेशरूपतया तदन्यथाकरणानुपपत्तेः। ऋष्यशृङ्गवचने वरस्य प्रपितामहपूर्वकनामोच्चारणे तद्गोत्रोच्चारणानन्तर्यमात्रस्योक्तत्वेन वरकन्याकुलयोरुच्चारणक्रमस्य तत्र शाब्दादनवगतेश्च। तस्मादुभयथैव शास्त्रार्थः प्रचरति ऋष्यशृङ्गाद्युक्तपाठक्रमाद्वरकुलाभिधानानन्तरं वा कन्याकुलाभिधानम् आश्वलायनगृह्यपरिशिष्टीयप्रयोगवचनात् कन्याकुलाभिधानानन्तरं वा वरकुलाभिधानमिति। तत्राऽऽश्वलायनीयानां स्वशाखोक्त एव क्रमोऽन्येषामस्त्वन्यथा-प्रीति। सम्प्रदानवाक्ये तु सम्प्रददे इत्येव वक्तव्यम्, तथैवाश्वलायनगृह्यपरिशिष्टे दर्शनात्। तथाच व्यासः—नामगोत्रे इति। न तु ददानीत्युल्लेख्यम्, तस्यानुमतिग्रहणार्थत्वेन दानवाक्ये तथोल्लेखे प्रमाणाभावात्। अर्थानन्वयात्, दानस्य वर्तमानतया लडन्तप्रयोगस्यैव युक्तत्वाच्च। तथाच पितृभक्तितरङ्गिण्यां स्मृतिः—

इदं तुभ्यं ददानीति पात्रहस्ते जलं क्षिपेत्।
दद्स्वेति च तेनोक्तस्तुभ्यं सम्प्रददे इति॥

न च 'अहमस्मै ददानीति एवमाभाष्य दीयते' इति छन्दोगपरिशिष्टदर्शनात् ददानीत्यप्युल्लेख्यमिति वाच्यम्? तस्याप्यनुमतिग्रहणार्थत्वात्। एवं हि छन्दोगपरिशिष्टीयं पठ्यते कुलर्त्विजमधीयानं ......(ग्र० पृ० २४२) विप्रयुना सन्निकृष्टौ गुरुकुलर्त्विजौ नातिक्रमितव्यौ, यदा त्वशौचेन तयोः प्रतिग्रहस्यासम्भवस्तदाऽपि अहमस्मै ददानीति तौ पृष्ट्वा तयोरनुमतिं लब्ध्वा अन्यस्मै देयमिति व्यक्तमनुमतिग्रहणार्थत्वं तस्य। एतेन—

द्रव्यस्य नाम गृह्णीयाद् ददानीति ततो वदेत्।
तोयं दद्यात् तथा दाता दाने विधिरयं स्मृतः॥

इति विष्णुधर्मोत्तरीयमप्यनुमतिग्रहणार्थतया व्याख्यातम्। न चानुमतिग्रहणवाक्ये ददानी-त्युल्लेखदर्शनाद् दानवाक्येऽपि तयोल्लेख इति वाच्यम्? मानाभावात्। दानवाक्ये सम्प्रददे इत्यस्योल्लेखविधानेन तत्कल्पनानुपपत्तेश्च। एतेन, आत्मगामिफले संप्रददे परगामिफले ददानीति उभयपदित्वाद् धातोरिति यदुक्तं तदपि चिन्त्यम्। दानवाक्ये सम्प्रददे इत्युल्लेखस्यैव विहितत्वेन ददानीत्युल्लेखे मानाभावात्। उभयपदित्वाद् धातोरित्यप्यसङ्गतं वचनम्। 'डुदाञ् दाने' इत्यनेनैव दानवाक्यरचनेत्यत्र प्रमाणाभावात् दद दाने इत्यात्मनेपदिनाऽपि तत्सम्भवात्, प्रत्युत वचनस्वरसाद् दद दाने इत्यनेनैव वाक्यरचना करणीया भवति। तस्माद् वचनप्रामाण्यात् सर्वत्रैव सम्प्रददे इति प्रयोगः कर्त्तव्यः, भवदेवभट्टप्रभृतिभिरप्यात्मगामिफलपर-गामिफलयोर्विशेषो नाभिहितः।

पित्रादिगतफलोद्देशेनापि कन्या दीयते—

रत्नवस्त्रमहीयानस्वर्णभोगादिकं वसु।
विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति॥

इति विष्णुपुराणीयपितृगाथायां सामान्यतोऽभिधानात्। मत्स्यपुराणे—

माङ्गल्यानि च वाद्यानि ब्रह्मघोषश्च गीतकम्।
ऋद्ध्यर्थं कारयेद् विद्वानमङ्गलविनाशनम्॥

मत्स्यसूक्ते—

बलिकर्मणि यात्रायां प्रवेशे नववेश्मनः।
महोत्सवे च माङ्गल्ये तत्र स्त्रीणां ध्वनिः शुभः॥

दाक्षिणात्यसंग्रहे—

आसने शयने दाने भोजने वस्त्रसंग्रहे।
विवादे च विवाहे च क्षुतं सप्तसु शोभनम्॥

विष्णुधर्मोत्तरे—

नामसंकीर्त्तनं नित्यं क्षुतप्रस्खलितादिषु।
विष्णोर्नरः शीघ्रमाप्नोति सर्वानर्थो न संशयः॥

विष्णोरित्यनुवर्त्तते वाक्यान्तरीयम्।

अथ गोभिलेन पुण्ये नक्षत्रे दारान् कुर्वीतेत्यनेन सूत्रेण दारकरणं सूत्रयित्वा कन्यालक्षण-परीक्षामभिधाय, आसन्नविवाहायाः स्नपनरूपं शान्तिकर्मोक्त्वा पाणिग्रहणे पुरस्ताच्छालाया अग्नि-रुपसमाहितो भवतीति सूत्रेणाग्निस्थापनमभिधाय, अथ जन्यानामेको ध्रुवाणामपां कलसं पूरयित्वे-त्यादिना द्रव्यासादनं सूत्रयित्वा, अथ यस्याः पाणिं ग्रहीष्यन् भवति सशिरस्का साप्लुता भवती-त्यादिना स्नानं वासःपरिधापनञ्चाभिधाय, प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् जपेदित्यनेन वध्वा अग्निसमीपनयनमभिधाय परतो विवाहेतिकर्त्तव्यतायाः सूत्रणात्, पारस्करेण च उपक्रमे

तेत्यत्र(A)। स चायमतिथिर्विशेषोपदेशात् प्रिय एवार्हणीयो न तु य एव कश्चित्, प्रियश्चायं वृत्त-स्वाध्याय-तपोविशेषगुणयोगाद् भवति। स हि पूजितो दृष्टादृष्टसम्बन्धेन [1]महतेऽभ्युदयाय भवति।

उद्धृतायोक्षितेऽग्निमुपसमाधाय इत्यनेन सूत्रेणाग्निस्थापनमभिधाय, उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयादिति पाणिग्रहणं कर्त्तव्यतया सूत्रयित्वा, अथैनां वासः परिधापयतीत्यनेन वासःपरिधापनमुक्त्वा, पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामयतीत्यभिधानाद् गोभिलीयानां पारस्करीयाणाञ्च दानात् पूर्वमग्निस्थापनं कर्त्तव्यम्। यद्यपि गोभिलेन कन्यादानं नोक्तम् तथाऽपि वासःपरिधापनानन्तरमग्निसमीपनयनाभिधानात् पारस्करेण च प्रत्ताया निष्क्रामणाभिधानात् वासःपरिधापनानन्तरमग्निसमीपनयनाच्च पूर्वं पारस्करीयाणामिव गोभिलीयानामपि प्रदानं करणीयं भवति। उभयत्रैव तुल्यवदभिधानात्, यत्राऽऽम्नातं स्वशाखायामित्यादिच्छन्दोगपरिशिष्टाच्च। यजुर्वेदशाखापठितं खल्वग्निहोत्रं छन्दोगैः क्रियते, दातुरेतत् कर्मेति कृत्वा तु दारकरणमुपदिदिक्षु-र्गोभिलो न प्रदानं कन्यायाः सूत्रयाञ्चकार। शाखान्तरोपदिष्टे त्ववसरे प्रदात्रा तत् करणीयम्, यतः कस्मिंश्चिदवसरे तेन तदवश्यं कर्त्तव्यम्, स चावसरः स्नान-वासःपरिधानात् परतोऽग्नि-समीपनयनाच्च पूर्वत एव समीचीनः।

तत्त्वकृतस्तु यजुर्वेदिनां दानात् पूर्वमग्निस्थापनमाहुर्न छन्दोगानाम्, तच्चिन्त्यम्, पूर्वप्रदर्शित-गोभिलसूत्रस्वरसात् छन्दोगानामपि तथात्वावगतेः। यजुर्वेदिनामिति सामान्यतोऽभिधानञ्चा-नुचितम्, बौधायनगृह्ये 'दत्तां वधूं समीक्षते' इत्यनेन दानमभिधाय अन्यदपि किञ्चित् कर्मोक्त्वा अथैनां देवयजनमुदानयत्येकमिषे विष्णुस्त्वा नयत्वित्यादिना सप्तपदीगमनादिपूर्वकं देवयजन-नयनमभिधाय, अथ शुचौ देशे अग्न्यायतनदेशं शकलेन त्रिः प्राचीनमुल्लिखेत्, त्रिरुदीचीनमित्या-दिनाऽग्निस्थापनं सूत्रयित्वा पश्चाद् वैवाहिकहोमाभिधानात्"। इत्याह।

प्रकरणेऽस्मिन् गोभिलाचार्याणां भाष्यकाराणां च वचनदर्शनेन तथा भवदेवरघुनन्दनचन्द्र-कान्तानाञ्च व्याख्यानपर्यालोचनयाऽस्माकमेवमेव प्रतिभाति—ये किल दोषा उद्भाविताः तर्का-लङ्कारेणोक्तियुक्त्या भवदेवरघुनन्दनमतयोरुपरि ते अशक्यसमाधेया एव तदनुयायिभिः, परमत्र विवाहरूपे प्रधानसंस्कारे कथं तौ स्वस्वमतसंरक्षणायैवोपेक्ष्याऽऽचार्यमतं बद्धपरिकरौ जाताविति न विद्मः; तत्र खलु वाक्यानामितिकर्त्तव्यतादीनाञ्च समीचीनत्वमसमीचीनत्वं वा आचार्यसूत्र-भट्टभाष्य-कर्मप्रदीपाद्यनुसारेण निर्णीय तथैव संस्कारे यतितव्यम्; अन्यथा "तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति" इतिवदनाकारे दुराग्रहः करणीयः स्यात्, तदत्र भवन्तोऽनूचानाः प्रमाणम्।

A. प्रथमप्रपाठकस्य चतुर्थकण्डिकाद्वितीयसूत्रभाष्ये ( पृ० ७३ )।

1. 'महतो-' घ।

उक्तञ्च मनुना—

विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु ।
निस्तारयति दुर्गाच्च महतश्चैव किल्बिषात्(A) ॥ इति ।

अतोऽसौ प्रिय इति । एवञ्च य एवंगुणोऽतिथिर्न स्यात् स नार्हणीय इति गम्यते ।

अथ किमेतानाचार्यादीन् सकृदेवार्हयेत् ? न ; 'कथं तर्हि ?

## परिसंवत्सरानर्हयेयुः ॥ २५ ॥

पुनः परिसंवत्सरान् परिगतसंवत्सरान् परिक्रान्तसंवत्सरानित्यर्थः । किमुक्तं भवति ? वर्षादूर्द्ध्व(B)²मेतानागतान् पुनः पुनरर्हयेदित्येतत् ।

## पुनर्यज्ञविवाहयोश्च पुनर्यज्ञविवाहयोश्च ॥ २६ ॥

पुनःशब्दः काकाक्षिन्यायेनोभयत्रापि संबध्यते यज्ञविवाहयोश्च(C) निमित्तयोरर्वा-

---

A मनुसंहिता ३।९८।

अस्य व्याख्यायां मेधातिथिः—"कीदृशाः पुनरभस्मभूतास्तानाह विद्यातपोभ्यां समृद्धाः तद्व्यतिरिक्ता भस्मभूताः समृद्धिरतिशयिनी सम्पत्तिः, बहुविद्यया महता च तपसा युक्ता एवमुच्यन्ते, समुदायसम्बन्धिनी अपि विद्यातपसी सम्बन्धिसम्बन्धादवयवभूतमुखैः सामानाधिकरण्यं प्रतिपद्येते । विप्राणां मुखान्यग्नय इत्यत्र व्याघ्रादेराकृतिगणत्वात् समासः । यथा अग्नौ हुतं फलवद् भस्मनि हुतं निष्फलम् एवमीदृशं भोजनं ब्राह्मणमुखनिक्षिप्तं हुतमिति भोजनमेव स्तुत्योच्यते । यागहोमादिमहाफलतया प्रसिद्धम्, अतः प्रख्याततमगुणेन अप्रख्यातमुपमीयते । निस्तारयति दुर्गात्, दुर्गं व्याधिशत्रुराजपीडादि, ततो निस्तारयति रक्षति न तेन संसृज्यते । महतश्च पापात् परलोकेऽपि नरकादिगतेस्त्रायते । न केवलमाभ्युदयिककर्मैवंरूपात्रविषयम्, प्रायश्चित्तार्थमपि तद्गुणायैव दातव्यम्" इत्याह ।

B. वर्षादूर्ध्वमिति एकस्मादर्हणकालादारभ्य वर्षादूर्ध्वमित्यर्थः ।

C. पूर्वं तावद् विवाहविधिस्तत्रेतिकर्तव्यता कन्यासम्प्रदानादिकञ्चोक्तम्, न निरूपितं विवाहलक्षणम्, न वा विवाहभेदा उक्ता इति तत्रायं संक्षेपः—

तत्र रघुनन्दनस्तु—

"अथोद्वाहनिर्णयः, तत्र मनुशातातपौ—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

दारकर्मणि भार्यात्वसम्पादके कर्मणि, तच्च कर्म ग्रहणरूपम्, 'सदृशानाहरेद् दारान्' इति यम-

1. 'कि' ख। 2. '-मित्येतान' ख।

वचनात्, 'अतःपरं समावृत्तः कुर्यात्तु दारपरिग्रहम्' इति संवर्तवचनात्, 'भार्यां विन्देते'त्यादि विष्ण्वादिवचनाच" भार्यात्वसम्पादकग्रहणं विवाहः इति लक्षणं जगौ।

तत्र हेतुमाह स एव, "विवाहस्तु पाणिग्रहणात् पूर्वं वृत्त एवेति सुव्यक्तं हरिवंशीयत्रि-शङ्कूपाख्याने—

पाणिग्रहणमन्त्राणां विघ्नं चक्रे स दुर्मतिः।
येन भार्या हृता पूर्वं कृतोद्वाहा परस्य वै॥

कृतोद्वाहा पाणिग्रहणात् पूर्वं कृतेत्यर्थः।

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि॥
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने॥

इति मनुवचनान्तरयोरपि उद्वाहपाणिग्रहणयोः पृथक्त्वं प्रतीयते।" इति।

टीकायामस्य काशीरामः—"भार्यात्वसम्पादकग्रहणं विवाह इति यदुक्तं तत्रैवं विचार्यते, ननु किमिदं भार्यात्वसम्पादकत्वम्? तथाहि भार्यात्वसम्पादकत्वं न भार्यात्वजनकत्वम्, यतो ग्रहणविशेषविषयत्वं विषयतासम्बन्धेन ग्रहणविशेषवत्त्वं वा भार्यात्वम्, न च तं प्रति ग्रहण-स्वरूपस्य विवाहस्य हेतुत्वम्। न च भार्यात्वव्यवहारजनकत्वं तदिति वाच्यम्, व्यवहारो हि शब्दप्रयोगः, तं प्रति विवाहस्य हेतुत्वे मानाभावात्, व्यवहर्तव्यतावच्छेदकप्रकारक-व्यवहर्तव्यज्ञानस्यैव हेतुत्वात्। अत्रोच्यते स्वरूपसद्विशेषणत्वेनेति यदुक्तं तस्यैवं तात्पर्यं यत्किञ्चिद्विवाहव्यक्तिमादाय तद्व्यक्तिसमवेतमानसत्वाव्यमानसाव्यसमवेतधर्मसमवायित्वं विवाहत्वम्। तादृशधर्मश्च 'उद्वहामी'तिप्रतीतिसाक्षिको मानसत्वव्याप्यो जातिविशेषः। तमाऽऽदाय सर्वत्र लक्षणसमन्वयः। मानसत्वव्याप्यजात्यन्तरमादायातिव्याप्तिः स्यादत उक्तं तद्व्यक्तिसमवेतेति। मानसत्वमादाय घटादिमानसे अतिव्याप्तिवारणाय मानसत्वाव्येति, प्रत्यक्षत्वज्ञानत्वगुणत्वादिकमादाय चाक्षुषादावतिव्याप्तिवारणाय मानसाव्यसमवेतेति। इदन्त्ववधातव्यम्—संस्कारविशेषो विवाहः स च संस्कारो ज्ञानविशेषो वा तज्जन्यादृष्ट-विशेषो वा, तज्जन्यभावनाख्यसंस्कारविशेषो वा? नाद्यः, ज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रति-योगितया तृतीयक्षणादौ विवाहरूपसंस्काररहितत्वापत्तेः। न द्वितीयः विवाहस्यादृष्टजनकत्वे मानाभावात्; न तृतीयः मरणेन तन्नाशे तस्य संस्काररहितत्वापत्तेः, न चान्येषां ज्ञानानामाशु-विनाशित्वेऽपि विवाहरूपज्ञानस्य न तथात्वं स्वीकार्यमिति वाच्यम्, योग्यविभुविशेषगुणानां नाशं प्रति स्वानन्तरोत्पन्नविशेषगुणत्वेन हेतुत्वात् तन्नाशसामग्रीसत्त्वेन स्थैर्यस्य वक्तु-मशक्यत्वात्। अत्र वदन्ति—ज्ञानविशेषरूपो विवाह एव संस्कारः; न चोक्तदोषः, संस्कृतत्वं हि न समवायसम्बन्धमात्रेण संस्कारवत्त्वम्, किन्तु समवायध्वंसान्यतरसम्बन्धेन संस्कारवत्त्वमिति।

वस्तुतस्तु 'यथा स्वर्गकामो यजेत' इत्यादौ विधिप्रत्ययेन यागजन्यापूर्वापरनामा अदृष्टविशेषो बोध्यते तथा अत्रापि 'भार्यां विन्देत' इति विधिप्रत्ययेन विवाहजन्यापूर्वापरनामा अदृष्टविशेषो बोध्यते, तस्य च स्थिरत्वात् तृतीयक्षणादावपि संस्कृतत्वं मरणेन तन्नाशस्वीकारात्, न जन्मान्तरीयतादृशादृष्टमादाय संस्कृतत्वम्। एतेन जन्मान्तरीयविवाहरूपसंस्कारस्य ध्वंस-सम्बन्धेन सत्त्वात् संस्कृतत्वापत्तिरिति परास्तम्, ज्ञानविशेषरूपविवाहजन्यादृष्टविशेषस्यैव संस्कारत्वात् तस्य च मरणेन नाशात्" इत्याह।

तर्कालङ्कारस्तूद्वाहचन्द्रालोके—"पाणिग्रहणं विवाह इत्यवगम्यते, 'जायाया वा पाणिं जिघृक्षन्' इति सूत्रयता गोभिलेन पाणिग्रहणकालेऽन्याधानं विहितम्, तत्पुत्रस्तु विवाहशब्देन तत्कालं निर्दिशति, एवञ्च पितापुत्रवचसोस्तात्पर्यपर्यालोचनयाऽपि पाणिग्रहणविवाहयोरेकत्वं प्रतीयते, तथाच गृह्यासंग्रहः—'आधानस्य च चत्वार उक्ताः कालाः पृथक् पृथक्। अन्त्या समिद् विवाह-श्चे'ति, अत एव पाणिग्रहणकालीनोऽग्निर्वैवाहिकाग्नितया कात्यायनेन निर्दिष्टः। तथाच कर्मप्रदीपः—

वैवाहिकेऽग्नौ कुर्वीत सायंप्रातस्त्वतन्द्रितः।
चतुर्थीकर्म कृत्वैतदेतच्छाट्यायनेर्मतम्॥

इति। तथा गोभिलः 'पुण्ये नक्षत्रे दारान् कुर्वीत'। गृह्यासंग्रहः—

पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम्।

तदनेन गोभिलेन दारकरणोपदेशात् तत्पुत्रेण च पाणिग्रहणमन्त्राणां दारलक्षणत्वाभिधानात् पाणिग्रहणं दारकरणमित्यवगम्यते। दारकरणं सूत्रयित्वा तद्विवक्षया 'पाणिग्रहणे पुरस्ताच्छालाया अग्निरुपसमाहितो भवती'ति सूत्रणाच्चैतदेवं प्रतिपत्तव्यम्। नारदः—

विवाहादिविधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्यते।
स्त्रीपुंसयोगो नामैतद् विवाहपदमुच्यते॥
स्त्रीपुंसयोस्तु सम्बन्धे वरणं प्राग् विधीयते।
वरणाद् ग्रहणं पाणेः संस्कारोऽयं द्विलक्षणः॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्।
पाणिग्रहणमन्त्राश्च नियतं दारलक्षणम्॥

विवाहादीत्यादिग्रहणात् संग्रहणादेर्ग्रहणम्। तत्र—

परस्त्रिया सहाकालेऽदेशे वा भवतो मिथः।
स्थानसम्भाषणामोदास्त्रयः संग्रहणक्रमाः॥

इत्यादिना नारदेनैव सप्रपञ्चं परतो व्युत्पादितं प्रयोजनाभावान्नेह प्रस्तूयते। स्त्रीपुंसयोरित्य-त्यादिना प्रथमतो विवाहोऽभिधीयते। तदत्र पाणिग्रहणं विवाह इति तथ्यकम्। प्रतिग्रहस्या-कीर्तनात् स न विवाह इति च। वरणम् आश्वलायनगृह्यपरिशिष्टकारेणोक्तम्। तत्र वरणं दोष-

दर्शनादनियतम्। तेन वरणानन्तरं कन्यादोषदर्शने तां जह्यात् वृत्ते तु पाणिग्रहणे नैवमिति नियतदारलक्षणत्वं पाणिग्रहणमन्त्रस्य।

वशिष्ठः—अद्भिर्वाचा चेत्यादि ( द्र० पृ० ३१८ )।

मन्त्रोपनीता पाणिग्रहणमन्त्रजन्यसंस्कारवतीति तत्त्वकृतः। अनेन प्रदानात् परतोऽपि पाणिग्रहणात् पूर्वं यदि वरो म्रियते तदाऽन्यस्मै सा देयेत्युक्तम्।

न च 'प्रदानं स्वाम्यकारणमि'ति मनुवचनेन वरस्य स्वाम्योत्पत्तेः कथमन्यस्मै तस्या दानमिति वाच्यम्? उत्सर्गस्यापवादेतरविषयत्वोपपत्तेः। प्रदानमिति प्रशब्दस्यार्थवत्त्वोपपत्तेश्च। न च वाग्दानव्यावर्तकतयैव तस्यार्थवत्त्वमिति वाच्यम्, तावन्मात्रपरत्वे प्रमाणाभावात्। तस्माद् वाग्दानवदेतद्व्यावर्तनेनापि तस्यार्थवत्त्वं वाच्यम्, विशेषहेतोरभावात्। किञ्च भार्यात्वार्थं किल सा दत्ता भार्यात्वञ्च पाणिग्रहणात् तस्मिंश्चानुत्पद्यमाने प्रदानमपि निवर्तते, यद्धि यदर्थं दत्तं तस्यानिष्पत्तौ तद्दानस्य निवर्तनीयत्वाभिधानात्। तथाच मनुः—

धर्मार्थं येन दत्तं स्यात् कस्मैचिद् याचते धनम्।
पश्चाच्च न तथा तत् स्यान्न दत्तं तेन तद् भवेत्॥

अन्यस्मै तस्या दानोपदेशाच्चैतदेवं प्रतिपत्तव्यम्। पुनर्मनुः—पाणिग्रहणिकेत्यादि, तेषां पाणिग्रहणमन्त्राणां निष्ठा परिसमाप्तिः। सप्तपदीगमनं पाणिग्रहणस्याङ्गमित्यभिप्रायः। तथाच यमः—नोदकेनेति, तुल्यन्यायात् सप्रतियोगिकत्वाच्च भार्यात्वमपि तदैव भवति भार्याशब्दस्य यूपाहवनीयवदलौकिकसंस्कारयुक्तवचनत्वात्। न च यमवचनं पाणिग्रहणात् पूर्वं वरमरणमात्रविषयमिति तत्त्वकारोक्तं युक्तमिति वाच्यम्? तावन्मात्रपरत्वे प्रमाणाभावात्। उत्तरार्धासङ्गतेश्च। लघुहारीतः—तत्रापि न पाणिग्रहणे जायापतित्वं कृत्स्नम्, कृत्स्नं हि जायापतित्वं सप्तमे पदे इति।

यत्तु निष्ठा भार्यात्वस्य समाप्तिरूपेति तत्त्वकृद्भिर्व्याख्यातम्, तच्चिन्त्यम्। तेषामिति, प्रत्यक्षप्रतियोगिनमुपेक्ष्य भार्यात्वस्येत्यध्याहारे मानाभावात्। ( अत्रोपस्थापितप्रमाणवचनानि २।३।१३-सूत्रपादटीकायां द्रष्टव्यानि, पृ० ३१४-१९ )।

तथाच तावदङ्गोपेतं पाणिग्रहणं विवाहः। यदि पाणिग्रहणमेव विवाहस्तदा पाणिग्रहणसंस्कार इत्यादिमनुवचनयोरुद्वाहपाणिग्रहणयोर्भेदप्रतीतिः कथमुपपादनीयेति, यस्मादुद्वाहशब्देन कर्मसमुदायोऽभिधीयते तदेकदेशश्च पाणिग्रहणमिति तयोर्भेदप्रतीतिरुपपद्यत एव। किञ्च उद्वाहकर्मणीत्यनेन पर्यायान्तरेण पाणिग्रहणमेवोच्यते तथाच सवर्णासु तावत् पाणिग्रहणसंस्कारः क्षत्रियादिभिस्तु पाणिग्रहणकर्मणि शरादिर्ग्राह्य इति न काचिदनुपपत्तिः।

तत्त्वकृतस्त्वेतत् सर्वमनालोच्य भार्यात्वसम्पादकग्रहणं विवाह इत्याहुः। तच्चिन्त्यम्, प्रमाणाभावात्। न च 'सदृशानाहरेद् दारान्' इति 'अतः परं समावृत्तः कुर्याद् दारपरिग्रहम्' इति 'भार्यां विन्देत' इत्यादि-यम-संवर्तविष्ण्वादिवचनं प्रमाणमिति वाच्यम्, तथाविधवचन-

व्यक्तेरभावात्। अत्र खल्वाहरणं परिग्रहो वेदनञ्च पाणिग्रहणरूपतयैव पर्यवस्यति ; अत एवानुशासनिके पर्वणि—

अनुकूलामनुवंशां भ्रात्रा दत्तामुपाग्निकाम्।
परिक्रम्य यथान्यायं भार्यां विन्देद् द्विजोत्तमः॥

अनुवंशामनुरूपवंशोत्पन्नाम्। उपाग्निकाम् अग्निसमीपमागताम्। यथान्यायं गृह्योक्तप्रकारेणाग्निं परिक्रम्य भार्यां विन्देतत्यभिधानात् प्रतिग्रह एव भार्यावेदनमित्यसङ्गतं वचनम्। प्रतिग्रहात् परमग्निसमीपगमनस्य परिक्रमणादेश्चोपदेशात्। प्रतिग्रहरूपत्वेऽप्यमीषां विवाहोऽयमित्यत्र प्रमाणाभावस्तदवस्थ एव—

प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेद् वरः।
स विनेयस्त्वकामोऽपि कन्यां तामेव चोद्वहेत्॥

इति नारदवचने प्रतिग्रहोद्वाहयोर्भेदप्रतीतेः। 'दातुमिच्छेोद्‌ हितरं प्राप्य धर्मेण चोद्वहेदि'ति व्यासेन प्राप्त्यनन्तरमुद्वाहोपदेशाच्च। प्राप्तिर्ग्रहणम्। तथा तस्य भार्यात्वसम्पादकत्वाभावाच्च। पूर्वोक्तप्रबन्धेन पाणिग्रहणस्यैव तथात्वावगतेः। अत एव पाणिग्रहणात् पूर्वं दोषदर्शने कन्यायाः परित्यागो न तु तत्परतोऽपि। अत एव 'अस्त्येवापहार आसप्तमात् पदादि'ति मेधातिथिः। सप्तपदीगमनात् प्राग् भार्यात्वानिष्पत्तेः सत्यनुशये जह्यान्नोर्ध्वमिति कुल्लूकभट्टः। अनूपविलासे तु चतुर्थीकर्मणो विवाहैकदेशत्वात् ततः पूर्वं तस्या भार्यात्वासम्भवादित्युक्तम्। किञ्च पारस्करेण उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयादित्यनेन पाणिग्रहणमुपक्रम्य पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामतीति सूत्रेण ग्रहणस्य तत्र इतिकर्तव्यतयोपदेशाच्च ग्रहणं विवाहः, अत एव प्रायः सर्वैरेव गृह्यकारैः पाणिग्रहणं सूत्रितम्। अत एव कन्याविवाहसमयं परिचिन्तय शास्त्राणीति वाक्ये ग्रहणस्याकीर्तनं सङ्गच्छते। किञ्च ग्रहणस्य विवाहत्वे 'तावेहि विवहावहै' इति पाणिग्रहणमन्त्रलिङ्गं विरुध्येत, विवाहस्य पूर्वमेव वृत्तत्वात् लोट्प्रयोगानुपपत्तेः। किञ्च ग्रहणस्य विवाहत्वे स्त्रीणां विवाहसंस्कारः संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे इति विष्णुवचनात् पाणिग्रहणात् पूर्वं कन्याया मरणे पितृपक्षे अशौचं न स्यात्, न स्यादेवेति चेन्न सकलप्रामाणिकविरोधापत्तेः। अकृतपाणिग्रहणसंस्काराणां मरणे भर्तृसपिण्डाः पितृपक्षीयसपिण्डाश्च त्र्यहेण शुध्यन्तीति स्वोक्तविरोधापत्तेश्च।

यत्तु हरिवंशीयत्रिशङ्कूपाख्याने (ह० व०, अ० १२) 'पाणिग्रहणमन्त्राणामि'ति, तस्य कृतोद्वहना विवाहार्थं स्वगृहमानीता पाणिग्रहणात् पूर्वं हृतेत्यर्थः। भार्येति भूतवदुपचारः। पाणिग्रहणात् पूर्वं भार्यात्वोत्पत्त्यसम्भवात्। वस्तुतो भार्यात्वे जाते कृतोद्वाहा इत्यस्याऽऽनर्थक्यापत्तेश्च। अथवा कृतेत्यादि कर्मणि निष्ठा यम्, तथाच कृतोद्वाहा, आरब्धोद्वाहा, पाणिग्रहणात् पूर्वं हृतेति तत्त्वार्थः। अयमपि भाविनि भूतवदुपचारो वा।

बाल्यात् कामाच्च मोहाच्च संहर्षाच्चापलेन च ।
जहार कामात् कन्यां स कस्यचित् पुरवासिनः ॥

इति तदुत्तरश्लोके कन्याग्रहणात् । विवाहितायाः कन्यात्वानुपपत्तेः । अत एव लोकप्रसिद्धस्तु कन्याशब्दः विवाहरहितस्त्रीमात्रमाचष्टे इति माधवाचार्याः ।

तथाचानुशासनिके पर्वण्यष्टावक्रदिक्संवादे वृद्धस्त्रियोक्तम्—

कौमारं ब्रह्मचर्यं मे कन्यैवास्मि न संशयः ।

तथा शल्यपर्वणि वृद्धस्त्रियं प्रति नारदवाक्यम्—

असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे ।

असंस्कृताया अविवाहितायाः, स्त्रीणां विवाहः संस्कार इति विष्णुवचनात् । अत एव कन्यायाः, एतेन विवाहस्तु पाणिग्रहणात् पूर्वं वृत्त एवेति यदुक्तं तदपि चिन्त्यम् ।

किञ्च सत्यव्रतस्य वस्तुतः परभार्याऽपहर्तृत्वे परभार्यापहरणं महानपराध इति तस्मिन्नपरितोषात् पितुरधर्मोत्पत्तिः पितरमप्रबोधयन्तं वशिष्ठं प्रति सत्यव्रतस्य रोषश्चेति द्वयं तत्रैवोक्तं नोपपद्यते । यथा—

तस्मिन्नपरितोषो यः पितुरासीन्महात्मनः ।
तेन द्वादशवर्षाणि नावर्षत् पाकशासनः ॥

तस्मिन् सत्यव्रते । तथा—

ततस्तस्मिंस्तु विषये नावर्षत् पाकशासनः ।
समा द्वादश राजेन्द्र तेनाधर्मेण वै तदा ॥

तथा— पाणिग्रहणमन्त्राणां निष्ठा स्यात् सप्तमे पदे ।
न च सत्यव्रतस्तस्मात्कृतवान् सप्तमे पदे ॥

आनन् धर्मान् वशिष्ठस्तु न मां त्रातीति भारत ।
सत्यव्रतस्तदा रोषं वशिष्ठे मनसाऽकरोत् ॥ ( ह० व० अ० १३।७-८)

सत्यव्रत एव परतः शङ्कुत्रययोगात् त्रिशङ्कुतया ख्यातः । किञ्च तन्मतेऽपि 'करे गृह्य तथा कन्यामि'ति विष्णुधर्मोत्तरवचनेन करग्रहणेनैव कन्यायाः प्रतिग्रहानिष्पत्त्यभिधानात् करग्रहण-पाणिग्रहणयोश्चार्थान्तरत्वम्, पाणिग्रहणेनैव प्रतिग्रहनिष्पत्तेर्न ज्ञानविशेषमात्राद् विवाहनिष्पत्ति-रिति ज्ञेयम्" इत्याह ।

मेधातिथिरपि—चतुर्णामपि वर्णानामित्यस्य (म० स० ३।२०) भाष्ये—'कः पुनरयं विवाहो नाम ? उपायतः प्राप्ताया दारकरणार्थः संस्कारः सेतिकर्तव्यताकः सप्तपदीदर्शनपर्यन्तो पाणि-ग्रहणलक्षणः' इति, पाणिग्रहणिका मन्त्राः' ( म० स० ८।२२६ ) इत्यस्य भाष्ये—

'पाणिग्रहणं विवाहः, दारमन्त्राणां तत्र विद्यमानत्वादि'ति चाऽऽह । कुल्लूकभट्टोऽपि 'पाणिग्रहणिका मन्त्राः' ( म० स० ८।२२७ ) इत्यस्य व्याख्यायां—"वैवाहिका मन्त्रा नियतं निश्चितं भार्यात्वे निमित्तम्, तैर्मन्त्रैर्यथाशास्त्रं प्रयुक्तैर्भार्यात्वनिष्पत्तेः, तेषान्तु मन्त्राणां 'सखा सप्तपदी भव' इति मन्त्रेण कल्पनया सप्तमे पदे दत्ते भार्यात्वनिष्पत्तेः शास्त्रज्ञैर्निष्पत्तिर्विज्ञेया । एवञ्च सप्तपदीदानात् प्राग् भार्यात्वानिष्पत्तेः, सत्यनुशये जह्यादोर्ध्वम्" । एवमाह । तस्मादनयोरपि मते पाणिग्रहणमेव भार्यात्वसम्पादकमिति ।

तस्मादेतेषां विवाहप्रकरणोक्तवचनानां पर्यालोचनया मनुभाष्यादिव्याख्यानञ्चावलोक्य सेतिकर्तव्यताकपाणिग्रहणमेव विवाह इत्यवधार्यते न पुनर्दानग्रहणमात्रं विजातीयज्ञानमात्रं वा विवाह इति । तदत्र भगवन्तोनूचाना॰ प्रमाणम् ।

विवाहभेदानाह मनुः—

ब्राह्मो दैवस्तथैवाऽऽर्षः प्राजापत्यस्तथाऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥

तेषां स्वरूपाण्यप्याह स एव—

आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥
यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते ।
अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते ॥
एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥
सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥
ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥
इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः ॥
हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥
सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः ॥ इति । ३।२७-३४ ।

एतेषां मेधातिथिकृता व्याख्या च—"इदानीं स्वरूपमेतेषामाह—आच्छाद्येति । आच्छादन-

विशेषोऽभिप्रेतः, अन्यस्यौचित्येनैव प्राप्तत्वात्। उत्कृष्टेनाऽऽच्छादनेन यथादेशं यथासम्भवं यथायोग्येन वाससा परिधाप्य। अर्हयित्वा अनेनालङ्करणकटककणिकादिना प्रीतिविशेष-सत्कारविशेषैरर्चनं कृत्वा, एतेनाऽऽच्छादनार्हणेन कन्याया वरस्य वान्यतरसम्बन्धे प्रमाणा-भावात् उभयोपयोगः कार्यः। श्रुतशीलवते, अन्येऽपि स्मृत्यन्तरोक्ता वरगुणा द्रष्टव्याः। युवा धीमान् जनप्रियः यत्नात् परीक्षितपुंस्त्व इति। स्वयं प्रागयाचितः, स्वपुरुषप्रेषणे-राहूय अन्तिकदेशमानाय्य वरम्, यद् दानं स ब्राह्मो धर्मो विवाहः। अविशेषवचनोऽपि धर्मशब्दः पूर्वापेक्षितत्वादस्य तत्पर एव द्रष्टव्यः। अयाचितलाभोऽभ्यर्हणापूर्वको ब्राह्मो विवाह इति लक्षणार्थः। ननु चेदमयुक्तं स्त्रीस्वीकारार्थो विवाह इति यावद् विवाहपर्यन्तं चैतद्दानम्, नाकृते विवाहे दानार्थनिवृत्तिः, स हि तस्याः प्रतिग्रहकालः। न चासति परिग्रहे दानं परिसमाप्यते, न स्वत्वनिवृत्तिमात्रं दानं परस्वत्वापत्तिपर्यन्तं हि तत्, तथाच वक्ष्यति, 'तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे' इति। एवं विवाहकाल एव कन्या दातव्या, तथाच गृह्यकारः, तस्मिन्नेव काले ब्राह्मविवाहे काण्डिकधर्मं दर्शयति, यत्तु प्राग् विवाहाद् दानं तदुपसंवादनवाचनमात्रम्। न हि तस्मिन्नक्रियमाणे अभिप्रेतकाले अवश्यं विवाहनिर्वृत्तिः ; कश्चित् प्रागनिरूपिते न दद्यादपि इतरो वा कदाचिन्न प्रतिगृह्णीयात् तस्मात् प्राग् विवाहादुपसंवादः कर्तव्यः,...ये तु मन्यन्ते यथैव गवादेर्द्रव्यस्यादृष्टार्थतया दीयमानस्य मन्त्रपूर्वकेण प्रतिग्रहेण दानमपि निर्वर्त्तते तेनैवेद-मुक्तं ददातिषु चैवं धर्मेष्विति। एवञ्चेह प्रतिग्रहमन्त्रस्थानीयो विवाह इति। तथाच उपयमनं विवाह इत्येकोऽर्थः। उपयमनञ्च स्वकरणम्, एवं ह स्म भगवान् पाणिनिः स्मरति उपाद् यमः स्वकरणे ( सू १।३।५६ ) इति। अतो विवाहः कन्यास्वीकारार्थः। तद्युक्तम्, स्वीकृताया विवाहो भार्याकरणार्थः। नानेन कर्मणा प्रतिगृह्णीयादिति विधिरस्ति ; न च वैवाहिका मन्त्राः प्रतिग्रहप्रकारकाः। यथा देवस्य त्वा प्रतिगृह्णामीति मन्त्राः। यत्तु स्वकरण इति तन्न विरुद्धम्। विवाहस्याप्यस्ति स्वकरणरूपता। दानेन स्वत्वमात्रे प्रतिपन्ने विवाहेन विशिष्टं स्वत्वं क्रियते। नेयं गवादिद्रव्यवत् स्वं यथेष्टविनियोज्यतया, अपि तु जायात्वेन। विशिष्ट एव हि स्वस्वामि-भावो जायापतिलक्षणसम्बन्धः। तथाच दर्शयिष्यति, मङ्गलार्थं स्वस्त्ययनम्...विवाहेषु प्रदानं स्वाम्यकारणमिति। वितते प्रारब्धे इत्यादि।

कुल्लूकभट्टस्तु—"आच्छाद्येति। आच्छादनमात्रस्यैव औचित्यप्राप्तत्वात् सविशेषवाससा कन्यावरावाच्छाद्य अलङ्कारादिना च पूजयित्वा विद्याचारवन्तमप्रार्थकं वरमानीय तस्मै कन्या-दानं ब्राह्मो विवाहो मन्वादिभिरुक्तः इति व्याचख्यौ।

रघुनन्दनसंगृहीतो विवाहभेदश्च—

"विवाहसम्पादकदानादिभेदाद् ब्राह्मादिभेदः। अत एव—

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम्॥

इति याज्ञवल्क्यवचने स ब्राह्माभिधानो विवाहो यस्मिन्नुक्तलक्षणवराय आहूय यथाशक्त्यलङ्कृता कन्या दीयत इति मिताक्षरा। अत्र यस्मिन्निति ग्रहणे इत्यर्थः।

याज्ञवल्क्यः—

इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने।
स कायः पावयेत् तज्जः षड् वंश्यांश्च महात्मना॥

पुनाति पित्रादीन् पापान्नरकाच्च समुद्धरति। पुत्रादीन् निष्पापान् जनयति आत्मानमपि निष्पापं करोति। सहधर्मं चरतामिति नियमं कृत्वा कन्या दीयते स कायः, कः प्रजापतिर्देवताऽस्येति प्राजापत्यनामक इत्यर्थः।

मनुः—

आच्छाद्य चार्चयित्वा चेति, आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः।

अत्र यद् दानपदं तद् दीयते यस्मै ग्रहणाय इति व्युत्पत्त्या कृत्यल्युटो बहुलम् इति ल्युटा सिद्धमिति ग्रहणपरं न भावसाधनपरं तथात्वे दातुरेव विवाहकर्तृत्वापत्तेः। अत्र प्रत्ययार्थ-ग्रहण-निमित्तीभूत-प्रकृत्यर्थत्यागेनैककर्तृकत्वमाह्वानस्य, स्थितेनेति पदाध्याहारेण वा"। इत्यादि।

अस्य काशीरामकृता टीका—"विवाहसम्पादकेति तथाच आह्वानपूर्वकयथाशक्त्यलङ्कृतकन्यादानसम्पाद्यो विवाहो ब्राह्म इति ब्राह्मलक्षणम्। दानं विना स्वीकारासम्भवाद् विवाहस्य दानसम्पाद्यत्वम्। एवमन्यविवाहे लक्षणमूह्यम्। 'अत एव' दानादिरूपसम्पादकभेदाद् ब्राह्मादिभेदादेव। उक्तलक्षणाय' याज्ञवल्क्योक्तलक्षणविशिष्टाय, एवञ्च दानस्य विवाहसम्पादकतया, विवाहादिभिन्नत्वे तु युटा अनट्प्रत्ययेन सिद्धम्। तथात्वे अत्र तु दानपदस्य भावप्रत्ययसिद्धत्वे। ननु अत्र दानपदस्य ग्रहणपरत्वे एककर्तृकत्वाभावात्, 'आहूये'त्यत्र कथं क्त्वा ? तत्राऽऽह प्रत्ययार्थेति। प्रत्ययस्य अनट्प्रत्ययस्य, अर्थो ग्रहणम् तस्य निमित्तीभूतो यः प्रकृतेर्दाधातोरर्थः, त्यागो दानम् तेन सहेत्यर्थः। अत्रेदं बोध्यम्—विवाहत्वञ्च उद्वहामीत्यनुगतप्रतीतिसाक्षिको जातिविशेषः, स च किं दानत्वस्य व्याप्यः ? उत स्वीकारत्वस्य व्याप्यः ? अत्र प्राञ्चः—'ब्राह्मो विवाह आहूय' इति याज्ञवल्क्यवचनात् यद् दीयते इति व्युत्पत्त्या विवाहत्वव्याप्यस्य ब्राह्मत्वस्य दानत्वव्याप्यत्वसिद्धौ विवाहत्वस्य सुतरां दानवृत्तिताव्याप्यसत्त्वे व्यापकसत्त्वस्याऽऽवश्यकत्वात् दानत्वमादाय साङ्कर्यभिया च पश्चाद् विवाहत्वस्य दानत्वव्याप्यत्वसिद्धिः। वस्तुतस्तु आच्छाद्य चार्चयित्वेत्यादिना मनुना स्फुटतयैव ब्राह्मत्वस्य दानत्वव्याप्यत्वमुक्तम्। न च कन्याया दानकर्ता विवाहकर्तेति प्रयोगः स्यादिति वाच्यम् ? प्रकृते विवाहे कर्तृपदस्य आश्रयमात्रपरत्वेन तथा प्रतीतेर्विवाहत्वावच्छिन्नाश्रयविषयकत्वात्। तादृशाश्रयत्वं च दानकर्तरि स्वीक्रियते, यथा अधिकरणस्वरूपाभाववादिनां मीमांसकानां मते घटवृत्तिपटाभावस्य घटस्वरूपत्वेऽपि पटाभावकर्ता कुलाल इति

न प्रतीतिः, विशिष्टकर्तृताया अतिरिक्तत्वात् तथाऽत्रापीति । किञ्च विवाहाश्रयत्वमत्र उद्देश्यता-सम्बन्धेन तच्च न दानकर्तरि, अपि तु सम्प्रदाननिष्ठमिति । अत एव प्राचीनानां 'शुभविवाहेन दातुमि'ति वाक्यरचनाऽपि सङ्गच्छते । धान्येन धनवान् इत्यादाविव तृतीयाया अभेदार्थकत्वात् । किञ्च याज्ञवल्क्यवचने यस्मिन्निति पूरणेन मनुवचने च दानपदव्युत्पत्त्यन्तरकल्पनेन शाब्दबोधान्तर-कल्पने बहुतरकार्यकारणभावप्रसङ्गाच्चेत्याहुः । स्मार्तास्तु—'अतः परं समावृत्तः कुर्याद् दारपरि-ग्रहम्' इति संवर्त्तवचनस्वरसेन दानकर्त्तुर्विवाहकर्त्तृत्वभिया च, विवाहत्वस्य स्वीकारव्याप्यत्व-मङ्गीचक्रुः, एवञ्च मनुवचने दानपदं दीयते यस्मै ग्रहणायेति व्युत्पत्त्या स्वीकारविशेषपरम्, एवं याज्ञवल्क्यवचने यत्रेति पूरणीयम्; एवं प्राचां मते शुभविवाहेन दातुमिति वाक्ये तृतीयार्थस्य कारणत्वाभेदादिरूपस्य बाधात् शुभविवाहाय दातुमिति वाक्यभेदकल्पनमपीत्याहुः, तच्चिन्त्यम् । यथाश्रुततया सर्वसामञ्जस्ये बहुतरकल्पनाया अन्याय्यत्वात् । केचित्तु—कुमारीपाण्यवच्छेदेन प्रतिग्रहीतृपाणिसंयोगविशेषवृत्तिजातिविशेषो विवाहत्वम्, अत एव सम्प्रदानकर्त्तुर्न विवाहे कर्तृत्वापत्तिः, तादृशसंयोगस्य प्रतिग्रहीतृनिष्ठत्वात्, एवं संयोगस्योभय-निष्ठत्वात् 'कन्यावरयोर्विवाह' इत्यपि सङ्गच्छते । एवं प्राचां शुभविवाहेन दातुमितिवाक्यस्य तृतीयार्थस्य कारणतार्थकतयैवोपपत्तिः, संयोगस्य दानपूर्ववृत्तित्वादिसत्त्वादिति । युक्तञ्चैतत् 'कुमार्याः पाणिं गृह्णीयात् त्रिषु त्रिषूत्तरादिषु' इति पारस्करसूत्रस्वरसेन कुमारीपाणिसंयोग-विशेषस्य विवाहत्वस्वीकारात् । आसुरादावपि तथा संयोगः कल्प्यते । 'अतः परमि'त्यादि-वचनस्थितपरिग्रहादिपदमपि तादृशसंयोगपरम्, इत्यदोषः । ब्राह्मो विवाह इति वचने यत्रेति पूरणीयम्, 'आच्छाद्य चार्चयित्वा च' इति वचने ब्राह्म इत्यस्य ब्राह्मविवाहाद्यनुष्ठानमित्यर्थः इत्याहुः" इति ।

परमत्र रघुनन्दनेन आच्छाद्येत्यादिमनुवचनस्य व्याख्याने कथमीदृशः प्रयासः कृत इति न विद्मः, सर्वत्रैव पाणिग्रहणस्य विवाहलक्षणत्वे कृते न काप्यनुपपत्तिः स्यात्; व्यक्तं महाभारते शकुन्तलोपाख्याने गान्धर्वविवाहानन्तरमपि पाणिग्रहणं शकुन्तलायाः, राक्षसादिनिन्द्यविवाहेऽपि अनन्तरं पाणिग्रहणादेव विवाहनिष्पत्तिः अन्यथा तयोः संग्रहणत्वमेव स्यात्, न विवाहत्वमिति । एवञ्च मनुवचनानामितिकर्तव्यताभेदबोधकतामात्रं विवाहभेदबोधनाय फलतारतम्यबोधनाय चेति न दानकर्त्तुर्विवाहकर्तृत्वापत्तिभिया वैयाकरणदेवानां प्रियेण भवितव्यम्, न हि स्मृतिकाराः सत्यामपि सरलव्याख्यानेनैवेष्टसिद्धौ क्लिष्टकल्पनमुपदिशन्तीति दिक् ।

अथार्हणप्रकरणे यदुक्तं गृह्यान्तरेषु तद् यथासम्भवं सङ्क्षिप्योदाह्रियते—तत्र द्राह्यायण-खादिरच्छन्दोगगृह्याणां प्रायः समानानुपूर्वीकाणि सूत्राणि—मधुपर्कं प्रतिग्रहीष्यन्निदमहमिमामिति प्रतितिष्ठन् जपेदिति । अर्हयन्तं वा । विष्टरपाद्यार्घ्याचमनीयमधुपर्काणामेकैकं त्रिर्वेदयन्त इति । विष्टरौ पाद्यार्घ्याचमनीयमधुपर्का इति । गां चेति । गामानीय । उदञ्चं विष्टरमास्तीर्य वा ओषधीरित्यध्यासीत । पादयोर्द्वितीयया द्वौ चेत् । अपः पश्येद् यतो देवीरिति । सव्यं

पाद्यमवसिञ्चेत् सव्यमिति। दक्षिणं दक्षिणमिति। उभौ शेषेण। अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात्। यशोऽसीत्याचमनीयम्। यशसो यशोऽसीति मधुपर्कम्। त्रिः पिबेद् यशसो महसः श्रिय इति। तूष्णीं चतुर्थम्। भूयोऽभिपाय ब्राह्मणायोच्छिष्टं दद्यात्। गां वेदितानु-मन्त्रयेत मुञ्च गामिति। अमुष्य चेत्यर्हयितुर्नाम ब्रूयात्। एवमयज्ञे। कुरुत इति यज्ञे। आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रिय इति षडर्घ्याः। प्रतिसंवत्सरानर्हयेत्। पुनर्यज्ञ-विवाहयोश्च पुनर्यज्ञविवाहयोश्च। इति।

आश्वलायनगृह्यसूत्राणि च—ऋत्विजो वृत्वा मधुपर्कमाहरेत्। स्नातकायोपस्थिताय। राज्ञे च। आचार्यश्वशुरपितृव्यमातुलानाञ्च। दधनि मध्वानीय। सर्पिर्वा मध्वलाभे। विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते। अहं वर्ष्म सजातानां विद्युतामिव सूर्यः। इदन्तमधितिष्ठामि यो मा कश्चाभिदासतीत्युदगग्रे विष्टर उपविशेत् आक्रम्य वा। पादौ प्रक्षालयीत दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत्। सव्यं शूद्राय। प्रक्षालितपादोऽर्घ्य-मञ्जलिना प्रतिगृह्य। अथाऽऽचमनीयेनान्वाचामति, अमृतोपस्तरणमसीति। मधुपर्कमाह्रिय-माणमीक्षेत, मित्रस्य त्वा चक्षुषा प्रतीक्ष इति। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तदञ्जलिना प्रतिगृह्य, मधु वाता ऋतायत इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य, वसवस्त्वा गायत्रेण छन्दसा भक्षयन्त्विति पुरस्तान्निमार्ष्टि। रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्त्विति दक्षिणतः, आदित्यास्त्वा जागतेन छन्दसा भक्षयन्त्विति पश्चात्, विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्त्वित्युत्तरतः, भूतेभ्यस्त्वेति मध्यात् त्रिरुद्गृह्य। विराजो दोहोऽसीति प्रथमं प्राश्नीयात्, विराजो दोहमशीयेति द्वितीयम्, मयि दोहः पद्यायै विराज इति तृतीयम्। न सर्वम्। न तृप्तिं गच्छेत्। ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेत्, अलाभेऽप्सु। सर्वं वा। अथाऽऽचमनीयेनान्वाचामति अमृतापिधानमसीति। सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति द्वितीयम्। आचान्तोदकाय गां वेदयन्ते। हतो मे पाप्मा पाप्मा मे हत इति जपित्वा ओङ्कुरुतेति कारयिष्यन्। माता रुद्राणां दुहिता वसूनामिति जपित्वा ओमुत्सृजतेत्युत्स्रक्ष्यन्। नामांसो मधुपर्को भवति। इति।

आपस्तम्बगृह्यसूत्राणि च—अथैतदपरं तूष्णीमेव तीर्थे स्नात्वा तूष्णीं समिधमादधाति। यत्रास्मा अपचितिं कुर्वन्ति तत्कूर्च उपविशति यथा पुरस्तात्। एवमुत्तराभ्यां यथालिङ्गं राजा स्थपतिश्च। आपः पाद्या इति प्राह। उत्तरयाऽभिमन्त्र्य दक्षिणं पादं पूर्वं ब्राह्मणाय प्रयच्छेत् सव्यं शूद्राय। प्रक्षालयितारमुपस्पृश्योत्तरेण यजुषात्मानं प्रत्यभिमृशेत्। कूर्चाभ्यां परिगृह्य मृन्मयेनार्हणीया आप इति प्राह। उत्तरयाऽभिमन्त्र्याञ्जलावेकदेश आनीयमान उत्तरं यजुर्जपेत्। शेषं पुरस्तान्निनीयमानमुत्तरयाऽनुमन्त्रयते। दधिमध्विति संसृज्य कांस्येन वर्षीयसा पिधाय कूर्चाभ्यां परिगृह्य मधुपर्क इति प्राह। त्रिवृतमेके घृतं च। पाङ्क्तमेके धानाः सक्तूंश्च।

उत्तराभ्यामभिमन्त्र्य यजुर्भ्यामप आचामति पुरस्तादुपरिष्टाच्चोत्तरया त्रिः प्राश्यानुकम्प्याय प्रयच्छेत्। प्रतिगृह्यैव राजा स्थपतिर्वा पुरोहिताय। गौरिति गां प्राह। उत्तरयाऽभिमन्त्र्य तस्मै वपां श्रपयित्वोपस्तीर्णाभिघारितां मध्यमेनान्तमेन वा पलाशपर्णेनोत्तरया जुहोति। यद्युत्-सृजेदुपांशूत्तरां जपित्वा ओमुत्सृजतेत्युच्चैः। अन्नं प्रोक्तमुपांशूत्तरैरभिमन्त्र्यो ॐ कल्पयतेत्युच्चैः। आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरागतेभ्यः उपतिष्ठद्भ्य एतत् कार्यम्। सकृत् प्रवक्तृ-विप्राय। इति।

लौगाक्षिकाठकगृह्ययोः समानानुपूर्वीकाणि सूत्राणि। तानि तु—षडर्घ्यार्हा भवन्त्याचार्य ऋत्विगराजा विवाह्यः प्रियः स्नातक इति। अथैनमर्हयन्ति। आदौ च कर्मणः। अर्घ्यमुदकं सौषधं दर्भा इति। कंसे चमसे वा दध्यासिच्य मधु च वर्षीयसाऽपिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैः प्रतिपद्यन्ते। मयि दोहोऽसि विराजो दोहः, पाद्यायै विराजो दोहमशीयेत्याह्रियमाणमनुमन्त्रयते। विष्टरोऽसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति। विष्टर आसीनायैकैकं त्रिः प्राह। नैव भो इत्याह न मार्येति। शं नो देवीरित्यपोऽभिमन्त्र्य पाद्याभिः प्रक्षालयते दक्षिणं पादमवनेनिज इदमहमस्मिन् कुले ब्रह्मवर्चसं दधाम्युत्तरं पादमवनेनिज इदमहं मयि तेजो वीर्यमन्नाद्यं प्रजां पशून् ब्रह्मवर्चसं दधामीति। आपोहिष्ठीयाभिरर्घ्यं परिगृह्य सावित्रेण मधुपर्कम्, विष्टरोऽस्यन्तरिक्षमधि-विश्रयस्वेति विष्टरमत्रकृप्योहत्वेत्यवसार्य तच्चक्षुरित्यवेक्ष्य पृथिव्यास्त्वेति विष्टरे निधाय मधु वाता ऋतायते इति तिसृभिः प्रदेशिन्या प्रदक्षिणमालोडयति। यमवस्त्वाऽग्निराजानो भक्षयन्तु पितर-स्त्वा यमराजानो...भक्षयन्त्विति प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं पात्रस्यान्तेषु लेपान् निर्मार्ष्टि। यन्मधुनो...श्रयतामिति मधुपर्कस्य चतुष्प्राश्नात्यङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथममेवमनुपूर्वं सर्वाभि-स्तदवशिष्टं सुहृदे प्रयच्छति। आचामत्यमृतोपस्तरणमसीति। तस्मा असिपाणिर्गां प्राह। तां शास्ति मम चामुष्य च पाप्मानं जहि हतो मे पाप्मा पाप्मानं मे हत ॐ कुरुतेति। चतुरो नानागोत्रान् ब्राह्मणान् भोजयेत्। एष आद्य उपायः। यद्युत्सृजेन्माता रुद्राणामिति जपेत्। तृणान्यत्त्वित्युक्त्वा तामुत्सृष्टां पशुमङ्गं वा (प्रतिनिदधाति)। नामांसो मधुपर्कः स्यादिति ह विज्ञायते। अपि वा घृतौदन एव स्यात्। इति।

वाराहगृह्यसूत्राणि च—षडर्घ्यार्हा भवन्ति ऋत्विगाचार्यो विवाह्यो राजा स्नातकः प्रियश्चेति। अप्राकरणिका नापरिसंवत्सरादर्हयन्ति। अन्यत्र याज्यात् कर्मणो विवाहाच्च न जीवत्पितृकोऽर्घ्यं प्रतिगृह्णीयात्। कांस्ये चमसे वा सदधि मध्वासिच्य वर्षीयसा पिधायाऽऽचमनीयप्रथमैः प्रतिपद्यन्ते। विराजो दोहोऽसीति एकैकमाह्रियमाणं प्रतीक्षते। सावित्रेण विष्टरं प्रतिगृह्य अहं वर्ष्म सदृशानामित्येकस्मिन्नुपविशति। राष्ट्रभृदसीत्याचार्य आसन्दीमनुमन्त्रयते। मा त्वा जोप मित्यन्यतरमधस्तात् पादयोर्विष्टरमुपकर्षति। विष्टरमासीनायैकं त्रिः प्राह। नैव भो इत्याह। मम आर्षेयाय इति श्रुतिः। स्पृशत्यर्घ्यं पाद्येन पादौ प्रक्षाल्य सावित्रेणोभयतो विष्टरं मधुपर्कं

प्रतिगृह्य आदित्यास्त्वा पृष्ठे सादयामीति प्रतिष्ठाप्यावसाय सुपर्णस्य त्वा गरुत्मतश्चक्षुषाऽवेक्षे इत्यवेक्ष्य नमो रुद्राय पात्रसदे इति प्रादेशेन प्रतिदिशं व्युद्दिश्याङ्गुष्ठेनोपमध्यमया च मधुवाता ऋतायत इति तिसृभिः संसृजति। अमृतोपस्तरणमसीत्युपस्तरति, सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति मधुपर्कं त्रिः प्राश्नाति भूयिष्ठम्। सुहृदेऽवशिष्टं प्रयच्छति। अमृतापिधानमसीत्याचामति। असिपाणिर्गां प्राह हतो मे पाप्मेति। ॐ कुरुतेति संप्रेष्यति। चतुरवरान् ब्राह्मणान् नानागोत्रानित्येकैकं पशवङ्गं पायसं वा भोजयेत्। यद्युत्सृजेत् माता रुद्राणामिति ॐ भूर्भुवस्वरोम् इत्युत्सृजतु तृणान्यत्तूदकं पिबतु। अथालङ्करणम् अलङ्करणमसीति यथालिङ्गमङ्गानि संस्पृशति, अथ गन्धाच्छादने वाससी परिधास्ये यशो धास्ये इत्यहतं वासः परिधत्ते। यदि पशुमालभते शं नो मित्र इति पाणी प्रक्षाल्य यथार्थमालभनमित्येके। इति।

बोधायनगृह्यसूत्राणि च—आवेशाघ्यं कुर्यात्। मध्येऽगारस्योदीचीनप्रतिषेवणा एरका उपस्तृणाति। तास्वहतानि बहुगुणान्युत्तरदशानि वासांस्यास्तीर्य तेष्वृत्विजः प्राङ्मुखा उपविशन्ति। उत्तरपूर्वे देशेऽगारस्य प्राक्कूलान् दर्भान् संस्तीर्य तेष्वर्घ्यद्रव्याणि संसादयति। यावन्त ऋत्विजस्तावन्ति कांस्यानि पात्राणि सापिधानानि तावतः कूर्चान्। द्वावन्यौ परिग्रहणीयौ कूर्चौ। दधिमधुघृतमापः पयोवस्त्रयुगानि कुण्डलयुगानि। यस्यै गोः पयश्चमसः स्वगलङ्करणीयश्चेति। पवित्रे कृत्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य कूर्चे कांस्यं निधाय तिरः पवित्रं मध्वानयति। दधि पयो वा द्वितीयं स द्विवृत्। घृतं तृतीयं स त्रिवृत्। यद्द्वितीयं तच्चतुर्थं स चतुर्वृत्। आपः पञ्चमीः स पांक्तः। वर्षीयसा तेजोमयेनापिधाय नानापुरुषा अर्घ्यद्रव्याण्याददते अन्वगनु संव्रजताः। कूर्च इति कूर्चं प्राह। तत् सुकूर्च इतीतरः प्रतिगृह्णाति। तं प्रदक्षिणं पर्यस्योदगावृत्य उपविशति। पुरस्ताद् वैनं प्रत्यञ्चमुपोहते राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषमिति। अथास्मा उदपात्रमादाय कूर्चाभ्यां परिगृह्य पाद्या आप इति प्राह। ता अभिमन्त्रयते आपः पादावनेजनीरिति। दक्षिणं पादं पूर्वं ब्राह्मणाय प्रसारयति। सव्यं शूद्राय। स्त्री प्रक्षालयति पुमानभिषिञ्चति। विपरीतमित्येके। नियमात् पत्नीयजमानौ जहूं धावयतः। अवनेक्तुः पाणी सम्मृशन् मा... महो मयि भगो मयि भर्गो मयि यश इति। अथाप उपस्पृश्य मयीन्द्रियं वीर्यम् इत्युरः प्रत्यात्मानं प्रत्यभिमृशते। अपो व्रीहिभिर्यवैर्वा समुदायुत्य तथैव कूर्चाभ्यां परिगृह्यार्हणीया आप इति प्राह। ता अभिमन्त्रयते आ म आगाद् वर्चसेति। एकदेशमञ्जलावानीयमानमनुमन्त्रयते विराजोऽसीति। अतिशिष्टाः परावीर्निनीयमाना अनुमन्त्रयते समुद्रं वः प्रहिणोमीति। अथ तथैव कूर्चाभ्यां परिगृह्योपस्तरणीया आप इति प्राह। ताः पिबति अमृतोपस्तरणमसीति। त्रिराचामेत् त्रिःपरिमृजेत् द्विरित्येके। आचान्तायापावृत्ताय तथैव कूर्चाभ्यां परिगृह्याघ्यं इति प्राह मधुपर्क इति वा। मधुपर्कं प्रोक्तमनुमन्त्रयते अर्घ्यौ विधार्य इति। समुभाभ्यां हस्ताभ्यां प्रतिगृह्णाति देवस्य त्वेति। तस्मिन्नश्चित् किञ्चिदापतितं स्यात् तदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्यमां दिशं निरस्यति नेष्टा वृक्षिमिति। अथाप उपस्पृश्य

सर्वाभिरङ्गुलीभिः समुदायुत्य प्राश्नाति यन्मधुनो मधव्यमिति । त्रिः प्राश्य त्रिरनुपिबंश्छेषं च कुर्यात् । य आत्मनः श्रेयांसमिच्छेत् तस्मै शेषं दद्यादिति । आचान्तायापावृत्ताय तथैव कूर्चाभ्यां परिगृह्यापिधानीया आप इति प्राह । ताः पिबति अमृतापिधानमसीति । त्रिराचामेत् त्रिः परिमृजेत् द्विरित्येके । आचान्तायापावृत्ताय गौरिति गां प्राह । तामनुमन्त्रयते गौरस्यपहतपाप्माऽपपाप्मानं नुद मम चामुष्य च, इत्युपवेत्तुर्नाम गृह्णाति । नाना महर्त्विग्भ्यो गाः प्राह । एकां होतृकेभ्यः । सर्वेभ्यो वै कामविभवत्वात् । यः प्राह तस्मा उपाकरोत्येकदेशं वपायै जुहोति अग्निः प्रथम इति । एकदेशमुपहरति तत् प्राश्नाति अग्निः...अरिष्टमस्माकं कृणोत्वसौ ब्राह्मणो ब्राह्मणेषु इति । अथ यदुत्स्रक्ष्यन् भवति तामनुमन्त्रयते गौर्धेनुभव्या...ओम् उत्सृजत इति । तस्यामुत्सृष्टायां मेषमजं वा आलभते । आरण्येन वा मांसेन । न त्वेवामांसोऽर्घ्यः स्यात् । अशक्तौ पिष्टान्नं संसिध्येत् । सिद्धे भूतमिति प्राह । तत् सुभूतमितीतरः प्रत्याह । तदभिमन्त्रयते—भूतं सुभूतं सेति । चतुरो नानागोत्रान् ब्राह्मणान् भोजयतेत्येव ब्रूयात् । तेषु भुक्तवत्स्वन्नमस्मा उपहरति । तत् प्राश्नाति विराडसीति । भुक्तवद्भ्यो वस्त्रयुगाणि कुण्डलयुगानि यस्यै गोः पयश्चमसः स्वालङ्करणीयमिति च दद्यात् । एकधनं पष्ठौहीं दम्यावित्येके । प्राङ्मधुपर्कादलङ्करणमेके समामनन्ति । महये-दृत्विजमाचार्यं चाऽऽत्मानं वा एष महयति यः समृत्विजमाचार्यं च महयत्येवमेवं व्रता वा, आत्यन्तिकाः स्युः पतितोऽननूचान इति निमित्तानि । वरणेऽन्याधेयप्रभृतिषु वैवाह्यृत्विजं स्मरेत् । तथैते अर्घ्या ऋत्विक् श्वशुरः पितृव्यो मातुल आचार्यो राजा वा स्नातकः प्रियो वरोऽतिथिरिति । संवत्सरपर्यागतेभ्य एतेभ्य एवं कुर्याद् विवाहे वराय । अथर्त्विग्भ्यः कर्मणि कर्मणि ददाति । इति ।

पारस्करगृह्यसूत्राणि तु—षडर्घ्या भवन्त्याचार्य ऋत्विग् वैवाह्यो राजा प्रियः स्नातक इति । प्रतिसंवत्सरानर्हयेयुः । यक्ष्यमाणास्त्वृत्विजः । आसनमाहार्याऽऽह साधु भवानास्तामर्चयिष्यामो भवन्तमिति । आहरन्ति विष्टरं पद्यं पाद्यार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन । अन्यस्त्रिः त्रिः प्राह विष्टरादीनि । विष्टरं प्रतिगृह्णाति वर्ष्मोऽस्मीति । पादयो-रन्यं विष्टरमासीनाय । सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति । ब्राह्मणश्चेद् दक्षिणं प्रथमं विराजो दोहोऽसीति । अर्घं प्रतिगृह्णात्यापः स्थेति । निनयन्नभिमन्त्रयते समुद्रं व इति । आचामत्या मागन् यशसा संसृजेति । मित्रस्य त्वेति मधुपर्कं प्रतीक्षते ! देवस्य त्वेति प्रतिगृह्णाति । सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने इति । अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति । तस्य त्रिः प्राश्नाति यन्मधु मधव्यमिति । मधुमतीभिर्वा प्रत्यृचम् । पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात् । सर्वं वा प्राश्नीयात् । प्राग्वा सञ्चरे निनयेत् । आचम्य प्राणान् सम्मृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुरिति । आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह । प्रत्याह माता रुद्राणां...वधिष्ट मम चामुष्य च पाप्मानं हनोमीति यद्यालभेत । अथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हत ओम् उत्सृजत तृणान्यत्त्विति ब्रूयात् । न त्वेवामां-

सोऽर्घ्यः स्यात्। अभियज्ञमविविवाहं कुरुतेत्येव ब्रूयात्। यद्यप्यसकृत् संवत्सरस्य सोमेन यजेत कृतार्घा एवैनं याजयेयुर्नाकृतार्घा इति श्रुतेः। इति।

अथ मधुपर्कप्रयोगः—सति सम्भवे पुत्रदारादिभिः सह यजमानो विष्टरौ पाद्यमर्घ्यमाचमनीयं मधुपर्कं वस्त्रयुगलं यथाविभवमाभरणपात्रादिकञ्च समादायार्हणप्रदेशस्योत्तरतो गां बद्ध्वा उपतिष्ठेत। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽर्हणीयो देवता धेनूपस्थाने विनियोगः। अर्हणेति मन्त्रः। ततोऽर्हणीयः तत्र प्रतितिष्ठमानो जपेत्, अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुरर्हणीयो देवता जपे विनियोगः। ॐ इदमहमिति। ततो यजमानो दर्भमयं विष्टरं विष्टरद्वयं वा पूज्याय ॐविष्टरो विष्टरो विष्टरः प्रतिगृह्यताम् इति दद्यात्, विष्टरद्वयपक्षे विष्टराविति त्रिः प्रतिगृह्येताम्। ततः पूजकदत्तं विष्टरं ॐविष्टरं प्रतिगृह्णामीति अर्घ्यः प्रतिगृह्णाति। तं च या ओषधीरिति मन्त्रेणोदगग्रमास्तीर्योपविशेत्। विष्टरद्वयपक्षे एकं पूर्वमन्त्रेणाऽऽस्तीर्य द्वितीयं विष्टरमुत्तरमन्त्रेण पादयोरधस्तात् कुर्यात्। अनयोः प्रजापतिर्ऋषिरनुष्टुप् छन्द ओषधयो देवताः पूर्वविष्टरस्याऽऽसनदाने उत्तरस्य पादयोरधस्तादास्तरणे विनियोगः। ततो मन्त्रौ। ततोऽर्चकः, पादप्रक्षालनार्थमुदकं पाद्यं पाद्यं पाद्यं प्रतिगृह्यतामिति ददाति, ततोऽर्घ्यः अस्य मन्त्रस्य प्रजापतिर्ऋषिर्विराट् छन्द आपो देवताः पाद्यप्रेक्षणे विनियोगः। यतो देवीरिति। ततः पूजकदत्तं पाद्यं गृहीत्वा अनयोर्मन्त्रयोः प्रजापतिर्ऋषिर्निगदोऽर्हणीयश्रीर्देवता सव्यदक्षिणपादप्रक्षालने विनियोगः। सव्यं पाद...दक्षिणं पाद...। ततः शेषेण अस्य मन्त्रस्य प्रजापतिर्ऋषिर्निगदोऽर्हणीयश्रीर्देवता पदद्वयप्रक्षालने विनियोगः। पूर्वमन्य...मन्त्रः। ततो दध्यक्षतपुष्पसंयुतं जलरूपमर्घ्यं पात्रे आदाय, अर्घ्यमर्घ्यमर्घ्यं प्रतिगृह्यतामित्युक्त्वा तेनैव पात्रेणार्घ्यमञ्जलावासेचयेत्, तदर्घ्यमञ्जलिना, अन्नस्येति मन्त्रेण प्रतिगृह्णीयात्। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुरर्घ्यं देवता अर्घ्यप्रतिग्रहणे विनियोगः। ततो मन्त्रः। अर्चकः आचमनीयमाचमनीयमाचमनीयं प्रतिगृह्यतामिति जलं दद्यात् तद्दत्तेनोदकेनार्घ्य आचामेत् यशोऽसीति सकृन्मन्त्रेण द्विस्तूष्णीम्। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुराचमनीयं देवता आचमने विनियोगः। यशोऽसीति। ततः कांस्यपात्रे दधि मधु घृतं संसृज्य संस्थाप्य वर्षीयसा कांस्यपात्रेणापिधाय दद्यादर्चकः—ॐ मधुपर्को मधुपर्को मधुपर्कः प्रतिगृह्यतामिति। अर्घ्यस्तु अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुर्मधुपर्को देवता मधुपर्कप्रतिग्रहणे विनियोगः। ॐयशसो यशोऽसि। ततो हस्ते दत्तं मधुपर्कम् अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुर्मधुपर्को देवता मधुपर्कभक्षणे विनियोगः। ॐयशसो भक्षोऽसि महसो भक्षोऽसि श्रीर्भक्षोऽसि श्रियं मयि धेहीति मन्त्रेण त्रिः पिबेत। तूष्णीं चतुर्थम्, हस्तेनैव मधुपर्कभक्षणमिति शिष्टाः। ततोऽर्घ्यो द्विराचामति। मधुपर्कशेषं ब्राह्मणाय दद्यात्। ततो गौर्गौर्गौरिति नापितो ब्रूयात्। ततोऽर्घ्यः अस्य मन्त्रस्य प्रजापतिर्ऋषिर्बृहती छन्दो गौर्देवता गोमोक्षणे विनियोगः। ॐ मुञ्च गामिति मन्त्रं ब्रूयात्। ततो माता रुद्राणामित्यनेन मन्त्रेण गामनुमन्त्रयते, अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो गौर्देवता गवानुमन्त्रणे विनियोगः। ततो मन्त्रः इति, एवं मधुपर्केणाऽऽचार्यः, ऋत्विजः, समावर्त्तमानन्तरं स्नातकः, राजा, विवाहे वरः, प्रियोऽतिथिश्चेत्येते षट् पूज्याः। इति।

गपि संवत्सराद्दृत्विग्विवाहावागतौ पुन[1]रर्हयेदित्यर्थः। अभ्यासः शास्त्रपरिसमाप्तौ मङ्गलार्थः।

अत्र श्लोका भवन्ति—

[2]प्रथितो लोकशिरसः [3]स्रगिवालङ्कृतिः [4]कृती।
आसीद् वत्स-सगोत्रोऽय[5]'ब्राह्मणो ब्राह्मणाग्रणीः।
व्यासाभिधानश्छन्दोगः साक्षाद् व्यास इवापरः॥
तस्य पुत्रोऽनुरूपोऽभूद् रामदेव इति स्मृतः।
विदितः सर्वलोकैस्तु रामदेव इवापरः॥
महाबलस्तु विख्यातो रामदेवसुतो[6]ऽभवत्।
यस्य कीर्तिमतः कीर्ति [7]म्लानिमद्यापि नच्छति॥
नारायणाख्यस्तस्यापि नारायणपरायणः।
पुत्रो [8]महाबलस्याभूत् सदा स्वाध्यायवत्सलः॥
तेन सन्देहनाशाय कर्मणां तुष्टिकृत् सताम्।
गोभिलाचार्यगीतायाः स्मृतेर्भाष्यमिदं कृतम्॥
तदेतद् [9]विगतद्वेषैर्विप्रै[10]र्मध्यस्थवृत्तिभिः।
कृताग्रहो वि[11]हायाऽऽराद् ग्राह्यं मदनुकम्पया॥
न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥
स्वाभिप्रायेण हि मया किञ्चिदप्यत्र नेरितम्।
ग्रन्थान्तराणि चाऽऽलोच्य निबन्धांश्च पृथग्विधान्॥
यदत्र साधु तत् साधु यच्चासाधु क्वचित् कृतम्।
सतामास्यानु[12]संयोगात् साधु तद् भवति ध्रुवम्(A)॥

A. अत्र यत् परमतानां क्वचिदसाधुत्वं प्रतिपादितं तदपि अन्ततः शास्त्रमर्यादारक्षार्थं साध्वेव जातमिति भावः। असाधोः साधुत्वं साधोरसाधुत्वञ्च पात्रापात्रमुखसंयोगादेव भवतीत्युदाहरत्युपरिष्टात् श्लोकद्वयेन।

1. '-रर्हयेयुरिति' ख। 2. 'प्रथितायाः लोकशिरसः' ख। 3. 'स्रगाद्यालङ्कृतिः' घ। 4. 'कृतः' ख। 5. -ऽस्यां घ। 6. 'भुवि' घ। 7. '-म्लानि-' ख। 8. 'महाबलस्याभूत्' ख। 9. 'विजित-' ख। 10. '-र्माध्यस्थ्य-' घ। 11. '...हाय मं' ख। 12. '-क-' ख।

नदीपतेः पयः पूर्वमस्वादुत्वान्न पीयते ।
बलाहकमुखस्पृष्टं [1]तदेव स्वादुतामियात् ॥
साध्वप्यसाधुतां गच्छेदसतां मुखसङ्गमात् ।
आसाद्याब्धिमपेयं स्यात् सरिदम्भः सुसाध्वपि ॥
अत्र श्लोकसहस्राणि चत्वार्यष्टौ शतानि च ।
श्लोकाः पञ्चदशेतीयं संख्या नारायणोदिता (४८१५) ॥

कुवलयदल-बर्हिणाम्भोद-चन्द्रार्धभृत्कण्ठ-धौतासि-भिन्नाञ्जनालित्विषे कनककमलकेशराभ्योग्रपीताम्बराभासिताङ्गाय भक्तयानताग्रघर्तिविध्वंसिने । सुररिपुनिधनोद्यतारातिवक्षःशिरोमांसमेदोवसाशोणिताक्तोग्रचक्राय पृथ्वीभृते भवजलधितरङ्गलीलाकुलीभूतदृक्श्रोत्रवक्त्रस्य जन्तोः प्लवायाच्युतानन्त-गोविन्दनाम्ने नमः ॥

इति श्रीभट्टनारायणकृतौ गोभिलीयगृह्यसूत्रभाष्ये
चतुर्थप्रपाठकस्य दशमी कण्डिका ।
चतुर्थप्रपाठकः समाप्तः ॥

( सम्पूर्णोऽयं ग्रन्थः )

---

अत्र वृत्तमिदम् अर्णोनामकम् ,
यदिह नयुगलं ततः सप्त रेफास्तदा चण्डवृष्टिप्रपातो भवेद् दण्डकः ।
प्रतिचरणविवृद्धरेफाः स्युरर्णोऽर्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥
इति वृत्तरत्नाकरलक्षणात् ।

विश्वेश्वरकृपालब्धजनुषानन्दकानने ।
स्वकर्मवशतः काशीक्षेत्रे निवसताऽधुना ॥
वशिष्ठगोत्रश्रीकृष्णवेदभूषणसन्ततेः ।
वाचस्पते राममणेर्विद्वद्वर्यस्य सूनुना ॥
सेयत्नं न्यायसाहित्याचार्येऽणार्थानुवर्तिना ।
भट्टनारायणप्रोक्तभाष्यभावप्रकाशिका ॥

---

1. 'तदेतत्' ख ।

